अस्य शास्त्रस्य द्वादशलक्षणीति व्यवहारः। किंच जैमिनिना परिशिष्टतया चत्वारोऽध्याया निर्ममिरे। तद्ग्रन्थस्य "**संकर्षकाण्ड**" इतिव्यवहारः। अत्र चत्वारः पादा विद्यन्ते। सूत्राणां संकलनसंख्या-344, संकर्षकाण्डस्य शाबरं भाष्यं कौमारिलं वार्तिकं च नास्ति। तत्र **गम्भीररायदीक्षितस्य** तनयेन शाक्तशिरोमणिना **भास्कररायदीक्षितेन "भाट्टदीपिका"** नामा टीका रचिता। तेन सहमेलनेन षोडश अध्याया श्चतुष्षष्ठिपादाश्च सन्ति जैमिनीये तन्त्र इत्यवसेयम्। सूत्राणां संकलनसंख्या-3089.

इदंच शास्त्र मुत्तरमीमांसाशास्त्रं चाऽधिकरणपद्धत्या वेदस्थकर्मकाण्डवाक्याना मुपनिषद्वाक्यानां च (यथासंख्यम्) अर्थं विचारयति।

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदु"

रित्य धिकरणलक्षणम्।

पूर्वतन्त्रे प्रत्यध्यायं धर्मकथैवविद्यते-प्रथमाध्याये धर्मप्रमाणम्, द्वितीये धर्माणां परस्परं भेदः, तृतीये किं कर्मकस्य कर्मणोऽङ्गमितयङ्गाङ्गिभावः, चतुर्थे, किं स्वतन्त्रफलसाधनम्, किं वा कर्मसमृध्यर्थमित्यादि क्रत्वर्थपुरुषार्थविचारः, पञ्चमेकस्यकर्मणोऽनन्तरं कि मित्यादि धर्मगतक्रमविशेषविचारः, षष्ठे कस्मिन् धर्मेकोऽधिकारी, कोवा नधिकारीत्याद्यधिकारविचारः, सप्तमे प्रकृतिगतस्य धर्मस्य विकृतावतिदेशः सामान्यतः, अष्टमे स एव विशेषतः, नवमे ऊहः, दशमे बाधः, एकादशे तन्त्रम्, द्वादशे प्रसङ्ग इति।। परिहारार्थं तत्रा धर्मोपि विचारितः। जिज्ञासा सूत्रेपि धर्मकथाऽस्त्येवेति शास्त्रसंगति रवगन्तव्या।

इदंच शास्त्रं त्रयीगतकर्मकाण्डवाक्यविचारपरतया प्रवृत्तमपि वस्तुतः 1.तत्त्वदर्शनम्, 2.क्रतुप्रयोगकल्पः, 3.शाब्दन्यायविरण मिति मूर्ती स्तिस्रो बिभर्ति। इमा स्तिस्रोमूर्तीः शास्त्रतात्पर्यविदः शबरस्वामिनः स्वकीये भाष्ये प्रत्यपीपदन्। विशेषतस्तर्कपादे तत्त्वदर्शननामिकां मूर्तिं बहुधा विस्तारयामासुः।

एतस्या द्वादशलक्षण्या **उपवर्षाचार्यै** र्वृत्ति र्विरचिता। तद्वृत्तेरतिसूक्ष्मतया सूत्रार्थोन ज्ञातुं सुशक आसीत्। अतः सूत्राणामुपरि **श्रीशबरस्वामिभि** र्भाष्यं विरचितम्। तच्च प्रसादगुणयुक्तं सत् सूत्राणामर्थं तत्तदधिकरणेषु प्रतिपादयति। परंतु तद्भाष्यस्या तिगभीरार्थतया न सर्वेषां तदर्थः सुलभ इति पर्य्यालोच्य श्री**कुमारिलभट्टपादा** स्तदुपरि उक्तानुक्तदुरुक्तार्थकथनलक्षणलक्षितं वार्तिकं चक्रिरे। तत्र न केवलं भाष्यनिगूढार्थाः प्रकाशिताः, किंतु भाष्यस्था बहवो विषया निरनुक्रोशं विमृष्टाः। भाष्यानुक्ता अपि बहवो विषयाः स्वातन्त्र्येण निरूपिताः। निरूपितैः सुभगम्भावुकै र्नानापदार्थैः संवलिततया प्राप्तप्रचारं सद् वार्तिकमिदं भाष्यमप्यतिशेते। सर्वेष्वपि शास्त्रेषु भट्टपादादनन्तरं प्रवृत्ता ग्रन्थकाराः स्वोक्तार्थस्य प्रामाण्यसिद्धये वार्तिकग्रन्थ मिममुदाजहृरेव।

भट्टपादै र्वार्तिकग्रन्थ स्त्रेधा विभक्तः।

1.मीमांसायां तर्कपाद इति प्रसिद्धस्य प्रथमाध्यायप्रथमपादस्य विस्तृतव्याख्यारूपं पद्यमयत्वात् "**श्लोकवार्तिकम्**।"

2.प्रथमाध्यायद्वितीयपादमारभ्य तृतीयाध्यायसमाप्तिपर्यन्तस्य भाष्यस्य गद्यमयं व्याख्यानं "**तन्त्रवार्तिकम्**।" अत्रच बहव आन्तरश्लोकाश्च विद्यन्ते।

3.चतुर्थाध्यायप्रभृते द्वादशाध्यायान्तस्य भाष्यस्य विरलव्याख्यानरूपा सूत्रकल्पैर्वाक्यै रचिता "**टुप्टीका**"

भट्टपादानां शिष्याः **प्रभाकरगुरवः**। ते भट्टपादानां सिद्धान्तमतिक्रम्य सूत्रभाष्ययोरुपरि प्रस्थानान्तरं

रचयाम्बभूवुः। **लघ्वी बृहतीचे**ति ग्रन्थद्वयं तैर्विरचितम्। तच्छिष्यः **शालिकनाथः "प्रकरणपञ्चिकायां"** गुरूणां मतं विस्तरेण प्राबोधयत्। तथा भवदेववरदराजादिभि स्तन्मतं विस्तारितम्।

भाट्टमतं गुरुमतं चैकमेव शास्त्रमधिकृत्य प्रवृत्तमपि तत्समन्वयविषये सुतरां विभिन्नाशयकमेव वेदान्तशास्त्रे भामती-विवरणप्रस्थानद्वयमिव दरीदृश्यते। तन्मतभेदस्य सुखेनावबोधनायेयं पट्टिका विन्यस्यते -

| भाट्टमतम् | प्राभकरमतम् |
|---|---|
| प्रथमाध्याये – धर्मप्रमाणनिरूपणम् | विधिवाक्यप्रामाण्यनिरूपणम्। |
| द्वितीये – कर्मभेदः | शास्त्रभेदः |
| तृतीये – शेषशेषिभावः। तत्र प्रकरणं द्विविधं महाप्रकरणमवान्तरप्रकरणञ्चेति | शेषशेषिभावः। अवान्तर प्रकरणं नास्ति। |
| चतुर्थे – प्रयोज्यप्रयोजक भावः | उपादानाख्यप्रमाणगम्यं शेषत्वप्रयुक्त्याधिकारोत्पत्याख्यं चतुष्टयं विषयः। |
| पञ्चमे – अनुष्ठानक्रमः। स च विधेयः। | अनुष्ठानक्रमः, स न विधेयः। |
| षष्ठे – अधिकारनिरूपणम्। | तथा |
| सप्तमे – सामान्यातिदेशः। | तथा |
| अष्टमे – विशेषातिदेशः। | तथा |
| नवमे – ऊहः। | तथा |
| दशमे – बाधः। तत्र बाध्यं पदार्थमतिदेशो विकृतौ प्रकृति तः नैवानयति। | बाधः, बाध्यं पदार्थं प्रकृतितश्चोदको विकृतावानयति। |
| एकादशे – तन्त्रम्। | तथा |
| द्वादशे – प्रसङ्गः। | तथा |
| प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि। | प्रत्यक्षानुमानशब्दोपमानार्थापत्याख्यानि पञ्चप्रमाणानि। |
| संयोगस्संयुक्ततादात्म्यं संयुक्ततादात्म्यतादात्म्यं चेति त्रयः सन्निकर्षाः। | संयोगस्संयुक्तसमवायस्समवायश्चेति त्रयस्सन्निकर्षाः। |
| चक्षुर्घ्राणरसनत्वकछ्रोत्र मनांसि षडिन्द्रियाणि। | तथा |
| अभिहितान्वयवादः। | अन्विताभिधानवादः। |
| शब्दो द्विविधः तत्र वेदशब्दो लौकिकशब्दश्चेत्युभयं प्रमाणम्। | शब्दो द्विविधः। एकस्य पृथक् प्रमाण्यमपरस्यानुमानत्वम्। |
| दशलकारसाधारणस्याऽख्यातस्यार्थी भावना अर्थः। | लिङ्स्थल एव केवलमाख्यातस्य आर्थीभावना अर्थः। |
| शब्दनिष्ठः कश्चनालौकिको व्यापारविशेषो लिङर्थः। | नियोगो लिङर्थः। |
| दृष्टश्रुति भेदेनार्थापत्तिः द्विधा। | श्रुतार्थापत्ति र्नास्ति। |
| द्रव्यगुणकर्मसामान्यशक्त्यभावभेदेन षड्विधः पदार्थः। | द्रव्यगुणकर्मसामान्यशक्तिः सादृश्यसंख्यासमवायभेदेनाष्टविधः पदार्थः। |
| पृथिव्यप्तेजोव्याय्वाकाश कालदिगात्ममनश्शब्दतमांसि द्रव्याण्येकादश। | पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव द्रव्याणि। |

| भाट्टमतम् | प्राभकरमतम् |
| --- | --- |
| वायुः स्पार्शनप्रत्यक्षः। | वायुरनुमेयः। |
| आकाशकालदिशां प्रत्यक्षत्वम्। | आकाशकालदिशामनुमेयत्वम्। |
| आत्मा मानसप्रत्यक्षविषयः। | आत्मा अहं प्रत्ययगम्यः। |
| मनसोऽगुणत्वम्। | तथा |
| शब्दो द्रव्यम्। | शब्दश्चाकाशगुणः। |
| तमो द्रव्यम्। | तमो नास्त्येव। |
| रूपरसगन्धस्पर्शसंख्या परिमाणसंयोग विभागपरत्वा परत्वगुरुत्वद्रवत्वस्नेह बुद्धि सुखदुःखेच्छाद्वेषसंस्कारध्वनिप्राकटच भेदादेकविंशति विधो गुणः। | संख्यायाश्शक्तेश्च न गुणत्वमपि तु पृथक्पदार्थान्तरत्वम्। अन्यत् सर्वं पूर्ववत्। |
| ज्ञानमनुमेयम्। | ज्ञानं स्वयं प्रकाशम्। |
| अन्यथाख्यातिवादः। | अख्यातिवादः। |
| कर्म प्रत्यक्षम्। | कर्म अनुमेयम्। |
| परापररूपं द्विविध सामान्यम्। | परसामान्यं नास्ति। |
| ब्राह्मणत्वादि जातिरस्ति। | ब्राह्मणत्वादि जातिर्नास्ति। |
| प्रागभावप्रध्वंसाभावात्यन्ता भावान्योन्यो भावभेदेनाभावश्चतुर्विधः। | अभावो न पदाथान्तरम्। किन्त्वधिकरणात्मक एव। |

एवं मतद्वयमपि समकालमेव लोके आविरासीत्। तथापि गुरुमतापेक्षया भट्टमतस्यैव आदरः प्रचारश्च बभूव। भट्टमतानुसारेणैव विद्वत्प्रकाण्डै र्बहवो ग्रन्था निर्म्ममिरे।

भट्टवार्तिके श्रीमता **भट्टसोमेश्वरेण न्यायसुधा**नामिका विपुला टीका रचिता। प्रायः कुमारिलभट्टानां वार्तिककाराणां रचनाशैली अतिनिष्ठुरा, दुरधिगमार्थाच। अत स्तन्निगूढार्थसारमुद्धर्तुं महामहोपाध्यायाः सर्वतन्त्रस्वतन्त्रा **यज्ञात्माचार्य**सूनवः श्री **पार्थसारथिमिश्रा** टुप्टीकाया **स्तन्त्ररत्न** नामकं, श्लोकवार्तिकस्य **न्यायरत्नाकर** नामकं च व्याख्यानमकुर्वन्। तन्त्रवार्तिकस्यतु मिश्रमहोदयै व्याख्या रचितान वेति विज्ञातुं न पार्यते। तथा मिश्रमहोदयै जैमिनिसूत्राणामुपरि भाष्यार्थावलम्बनेन वार्तिकार्थनिरूपणपूर्वकं **शास्त्रदीपिका**नामकः स्वतन्त्रो ग्रन्थो व्यरचि। तस्य **श्रीमत्सोमनाथसर्वतोमुखयाजिभिः** प्रथमाध्यायद्वितीयपादप्रभृति यावदन्तं **मयूखमालिका** टीका व्यरचि। प्रथमस्य तर्कपादस्यतु श्रीमाधवात्मज **श्रीरामकृष्णभट्टै र्युक्तिस्नेहपूरणी सिद्धान्त चन्द्रिका** रचिता। तैरेव तस्यां "**चन्द्रिकागूढार्थविवरणं**" नाम व्याख्यानं विरचितम्। तथा पार्थसारथिमिश्रैः "**न्यायरत्नमाला**" नामको ग्रन्थो व्यरचि। अतिविचित्रोऽयं ग्रन्थः। अत्र सप्तप्रकरणानि विराजन्ते– 1.**प्रयुक्तितिलकः**, श्लोकाः 43, 2.**स्वतःप्रामाण्यनिर्णयः**, श्लो-4, 3.**विधिनिर्णयः**, श्लो-3, 4.**व्याप्तिवादः**, श्लो-5, 5.**वाक्यार्थनिर्णयः**, श्लो-42, 6.**नित्यकाम्यविवेकः**, श्लो-13, 7.**अङ्गनिर्णयः**, 38, श्लोकानां संकलन संख्या-148

एवं चतुर्भिर्ग्रन्थरत्नैः कौमारिलं प्रस्थानं सर्वोपादेयं मिश्रमहोदयाः प्रत्यतिष्ठिपन्। तत्र तत्र संन्दर्भेप्राभाकरमत मुपक्षिप्य निरनुक्रोशं निराकुर्वन्।

अन्येषु व्याख्यानेषु सत्स्वपि मिश्रग्रन्था एव भाट्टप्रस्थानस्य सुपरिष्कृतां परेषां दुष्प्रवेशां च सरणिं निरमासिषुः। शास्त्रदीपिकायां तत्तधिकरणरचनया भाट्टसिद्धान्तं मिश्रपादाः प्राबोधिषतेति सार्वलौकिकमेतत्।

अनन्तरं श्रीमान् खण्डदेवोपि भाट्टप्रक्रियामेव व्युत्पादयामास। परंतु खण्डदेवस्यनव्यमार्ग एवभूयान् त्समादरो दृश्यते। यथा सूत्राणां विषये स्वतन्त्रा व्याख्या कृता। भाष्यस्याऽष्टाविंशतिस्थलेषु, वार्तिकस्य चद्वात्रिंशत्स्थलेषु तत्तन्मतमुपेक्ष्य स्वातन्त्र्येण व्याख्या प्रवर्तिता। ग्रन्थविस्तरभया त्सविषयोनेह तन्यते।

अत्रेदं बोध्यम् – भारतीयानां शास्त्रेषु शाब्दबोधप्रक्रियाव्युत्पादनं नाम मुख्योऽवयवः, येन विरहितं तच्छास्त्रं संपूर्णमेव न भवती-ति विदुषां समाजेषु महतीप्रथासमजनि। एनमेवाशयं पुरस्कृत्य न्यायशास्त्रे व्युत्पत्तिवाद-शक्तिवादप्रभृतयो, व्याकरणशास्त्रे वैयाकरणभूषण-लघुमञ्जूषादयश्च शाब्दबोधव्युत्पादनैकताना ग्रन्थाः पण्डितप्रकाण्डै र्व्यरचिषत। एतच्च समनन्तरमेवविस्तरेण प्रदर्शयिष्यते। प्रार्थसारथिप्रभृतिभिः प्राचीनमीमांसकै र्मीमांसाशास्त्रे तादृशोग्रन्थो न निरमायि। तेन मीमांसाशास्त्रं तादृशबोधग्रन्थरूपावयववैकल्येन पूर्णतां न जगाम। एवं स्थिते श्रीमान् खण्डदेवो "भाट्टरहस्य" नामकशाब्दबोधप्रतिपादकग्रन्थनिर्माणेन शास्त्रस्य पूर्णतां प्रापयामास। यद्यपि प्राचीनै स्तत्तदधिकरणरचनावसरे वाक्यार्थनिर्णयाय नामा-ख्यात-वाक्यस्वरूपं धातो राख्यातस्य सुपां कृत्तद्धितादीना मर्थ स्तेषां संबन्ध इत्यादिकं शाब्दबोधोपयोगि पदार्थजातं भावार्थाधिकरण-कर्त्रधिकरण-जञ्जभ्यमानाधिकरण-संमार्गाधिकरणादौ निरूपितं चकास्ति, तथापि शाब्दबोध प्रधानो ग्रन्थः प्रत्येकं विविच्य न तै र्व्यरचि। तादृशो ग्रन्थोनिरमायि खण्डदेवेन। अतः पार्थसारथ्याद्यपेक्षया खण्डदेवस्याऽसाधारणं वैशिष्ट्य मस्त्येव।

एतत्प्रसङ्गेन खण्डदेवग्रन्थान् पश्यामः। श्रीमान् खण्डदेवाचार्यो नव्यन्यायपद्धत्या मीमांसाशास्त्रस्य परिष्करणे प्रथमं स्थानमधितिष्ठति। सर्वतन्त्रस्वतन्त्रेणानेन महानुभावेन ग्रन्थत्रयं व्यरचि – 1. **मीमांसाकौस्तुभः**, 2. **भाट्टदीपिका**, 3. **भाट्टरहस्यं चेति।**

आद्यो जैमिनिप्रणीतस्य पूर्वमीमांसादर्शनस्य दुरूहतमबहुविस्तारगर्भो विस्तृतव्याख्यानरूपः प्रथमाध्याय द्वितीयपादमारभ्य (अर्थवादाधिकरणप्रभृति) तृतीयाध्याय बलाबलाधिकरण समाप्तिपर्यन्तः। अत्र द्वादशस्वध्यायेषु विचारणीयानामर्थाना मावापोद्वापाभ्यां विचार्यव्यवस्थापन मकारि। सर्वतो नवीनोप्ययं ग्रन्थः शास्त्रार्थविनोदरसिकैः सर्वैरप्यादरणीय एव।

द्वितीयः प्रथमाध्यायद्वितीयपादमारभ्य द्वादशाध्यायपर्यन्तोऽष्टा दर्शसहस्र ग्रन्थात्मकः। अत्र हि आचार्यवर्येण शब्दप्रयोगविषयेऽतीव कार्पण्यं प्रकाशितमिति सर्वविदित मेव। इदं च कार्पण्यं ग्रन्थसमापनार्थमेव समादृतम्, न तु स्वभावेन। कौस्तुभस्या परिपूर्णत्वा त्तदाश्रयणस्याऽऽवश्यकता समजनि। नैयायिकादिशैल्या बहुतरन्यायातिदेशादिनाच पूर्वोत्तरपक्षव्यवस्थापनं दीपिकायां यत् कृतं, तेन गम्यते – मीमांसादिसर्वदर्शनमूर्तिस्वरूपा एव खण्डदेवाचार्या-इति।

अस्या व्याख्याचतुष्टयं चकास्ति–

1. भाट्टचिन्तामणिः, श्रीमन्मैसूरूकुट्टिशास्त्रिभिः कृतः।
2. भास्कररायकृता व्याख्या।
3. भाट्टकल्पतरुः, महामहोपाध्याय रामसुब्बशास्त्रिभि र्विरचितः।
4. प्रभावली। एषा खण्डदेवस्यान्तेवासिना शम्भट्टेन रचिता। अत एवानया टीकया-दीपिकायाः साम्प्रदायिकोऽर्थोऽवगम्यते, नान्ययेति न पार्थक्येन वक्तव्यम्। अस्यां न्यायसुधा-शास्त्रदीपिका-तद्व्यानमयूरवमालिका-भाट्टालङ्कार-विधिरसायन-वेदान्तपरिभाषा-दिनिर्णयानां क्वचित्क्वचिद् भाट्टदीपिकाया अपि खण्डनमण्डनादिमुखेन सर्वेषां तत्पूर्वतनानां मीमांसाग्रन्थानां विमर्शः कृतः, अतो वगम्यतेऽस्या गाम्भीर्यम्। न हि भाष्यादिपठनेनापि तथा न्यायस्वरूपावधारणं भवति, यथा प्रभावलीसहित भाट्टदीपिका ध्ययनेनेति सार्वभौममेतत्।

तृतीयः-प्रकृतः शाब्दबोधप्रबोधनैकतानो "**भाट्टरहस्य**" नामकः अत्र मीमांसाशास्त्रप्रमेयस्य धर्मस्य वेदबोधितेष्टसाधनताकत्वरूपं लक्षणं प्रथमतो निरूपितम्। ततो वेदेनेनेष्टसाधनताबोधनप्रकार-प्रतिपादनमुखेन बलवदनिष्टाननुबन्धित्वादिरूपं नैयायिकाभिमतं लिङर्थं सपरिकरं संदूष्य स्वमतेन तं निर्धार्य अन्तेच "तत्सिद्धं लिङादि वाच्या शाब्दी भावना प्राशस्त्यज्ञानाद्यनुगृहीता इष्टसाधनत्वाद्याक्षेपमुखेन मुख्यविशेष्य भूताया माख्यातार्थकृतावन्वेती" तिग्रन्थेन विधिवादः समापितः। अनन्तरं "नन्वाख्यातार्थस्य कृते मुख्यविशेष्यत्वे माना भाव" इत्यादिना प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधवादिनां नैयायिकानां मतमुत्थाप्य बहुना प्रबन्धेन दूषितम्। कर्त्राख्यात इव कर्माख्याते भावाख्याते च भावनाया वाच्यत्वं तन्मुख्यविशेष्यकशाब्दबोधरीतिं च प्राबोधयत्। तत्प्रसङ्गेन मण्डनमिश्र-प्राचीननैयायिक-वैयाकरणानां मतदूषणपूर्वकं धात्वर्थो निरूपितः। व्यापारसामान्यमाख्यातार्थ इति पार्थसारथिमतं दूषयित्वा कृते राख्यातवाच्यत्वं प्रतिपाद्य तत्र धात्वर्थस्य कर्मत्वकरणत्वान्यतर संसर्गेणान्वयप्रकारं साम्प्रदायिकमतेन धातो स्तल्लक्षकत्वं च प्रतिपादितम्। एतावता ग्रन्थेन भावनावादः समापितः। ततः "एवं सुबर्थस्यापि लिङ्गसंख्याभिन्नस्य तस्यामेवान्वयः प्रकारतये" त्युपक्षिप्य प्रथमादीनां सप्तानां विभक्तीनामर्थं पाणिनीयतत्तत्सूत्र वार्तिकव्याख्यानपूर्वकं सोदाहरणं न्यरूपयत्। तावता ग्रन्थः समापितः। एवंच धर्मलक्षणं विधिवादो भावनावादः सुबर्थवादश्चेति मुख्यं विषयचतुष्टयं नैयायिक वैयाकरणमतनिराकरणपूर्वकं भाट्टमतानुसारेण प्रतिपादितं ग्रन्थे स्मिन्नित्यवगन्तव्यम्।

अत्रेदं विचारणीयम् – भाट्टरहस्यग्रन्थः (मूलमात्रम्) सामान्यतः शतपृष्ट (pages) संख्याको दृश्यते। तत्र प्रथमतः पञ्चाशत्पृष्टेषु धर्मलक्षणविधिवादभावनावादानिरूपिताः। तावता मीमांसकसिद्धान्तो निर्गलितो भवत्येव। अतिरिक्तेषु पञ्चाशत्पत्रेषु सप्तानां सुब्वि भक्तीना मर्थोविचारितः। पाणिनिनाऽष्टाध्याय्यां प्रथमाध्यायचतुर्थपादे "कारके" 1-4-23 इत्यधिकारे अपादान-सम्प्रदान-करणा-धिकरण-कर्म-कर्तृसंज्ञा अनन्तरं "कर्मप्रवचनीयाः" 1-4-83 इत्यधिकारे कर्मप्रवचनीयसंज्ञकशब्दांश्च निरूप्य तदुद्देशेन द्वितीयाध्यायतृतीयपादेऽनभिहिताधिकारे द्वितीयादिविभक्तयो विहिताः। श्रीमता सर्वतन्त्र स्वतन्त्रेण महावैयाकरणेन भट्टोजिदीक्षितेन तत्प्रकरणद्वयं तत्रत्यमुख्यवार्तिकानि चैकीकृत्य वैयाकरणसिद्धान्तकौमुद्यां प्रथमाद्वितीयादिक्रमेण सोदाहरणं कारकप्रकरणं (विभक्त्यर्थ) निरमायि। तदुपरि प्रौढमनोरमा-शब्दरत्न-भावप्रकाश-भैरवी-चित्रप्रभा-लघुटिप्पणी-सरला-शब्देन्दुशेखर-गुरुप्रसादप्रभृतयो ग्रन्था अनेके प्रववृतिरे। भट्टोजिदीक्षिता दनन्तकालिकः खण्डदेवोपि वैयाकरण सिद्धान्तकौमुद्युक्तक्रममेवा नु सृत्यप्राय स्तत्रत्यान्येवोदाहरणानि प्रदर्श्य प्रथमादिविभक्त्यर्थान् निरूपयामास। एतावान् भूयिष्ठो व्याकरणशास्त्रार्थः किमर्थमत्र ग्रन्थे श्रीमता प्रदर्शित? इति प्रश्न उदेति। तथा "यज्ज्ञानाज्जैमिनीयोक्तिः स्फुटीभवति तत्त्वतः" इति ग्रन्थारम्भे श्रीमता प्रतिज्ञातम्। व्याकरणशास्त्रार्थपरिज्ञानेन जैमिनीयोक्तेः कियानुपकारो जायत इत्यपि प्रश्न उत्पद्यते, नहि निरूपयुक्तः पदार्थः प्रतिपाद्यते केनापि-

अत्र महद्भिर्यतनीयम्। ममत्वेवं प्रतिभाति – मीमांसाशास्त्रस्य वाक्यशास्त्रमिति व्यवहारः। वाक्यार्थज्ञानंच पदार्थज्ञानाधीनम्। पदं च प्रकृतिप्रत्ययात्मकम्। तच्च व्याकरणाधीनम्। अतः पदवाक्यशास्त्रयोरत्यन्तं संनिहितः संबन्धो वर्तते। श्रुतिलिङ्गादीनां बलाबलविचारावसरे लिङाद्यात्मिकाया विभक्तिरूपायाश्च श्रुतेः प्राबल्यं वाक्यशास्त्रे प्रतिपादितम्। भावार्थाधिकरणे धात्वर्थातिरिक्ताया आख्यातवाच्याया भावनाया अंशत्रयनिरूपणपूर्वक मपूर्वसमर्पकत्वं स्थापितम्। तत्र भावनायां धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेणान्वयः प्रतिपादितः। "दशापवित्रेण ग्रहं संमार्ष्टि"

''पशुना यजेते'' तिवाक्यद्वये ''द्व्येकयोर्द्विवचनैकवचने'' 1-4-22 इतिपाणिनिसूत्रेण एकत्वे एकवचनं विहितम्। तथापि प्रथमवाक्ये एकत्व मविवक्षितं, द्वितीये तद्विवक्षितम्। तृतीयाध्यायचतुर्थपादे कर्त्रधिकरणे ''नानृतं वदे'' दित्यत्रा ख्यातेन भावनाया एव बोधनात्तन्निषेधस्य शुद्धक्रत्वर्थत्वं सिद्धान्तितम्। अनन्तरेजञ्जव्यमानाधिकरणे कर्तृशानजन्तपदघटित वाक्य-प्रकरणाभ्यां मन्त्र जपस्य क्रतु युक्तधर्मत्वं सिद्धान्तितम्। ''क्षौमे वसाना वग्नि मादधीयाता'' मित्यत्र वसानश्च वसानश्चेति सरूपैकशेषः? उत वसानश्च वसानाचेति विरूपैकशेष इति बहुना प्रबन्धेन विचार्य विरूपैकशेषः सिद्धान्तितः। द्वितीये प्रथमपादे संमार्गाधिकरणे ''स्रु चःसंमार्ष्टि'' ''परिधीन् संमार्ष्टि''त्यत्र स्रुगादीनां मुख्यकर्मत्व? मुत गौणकर्मत्वमिति विचारितम्। षष्ठे प्रथमपादे त्रयोदशेनिषादस्थपत्यधिकरणे निषादस्थपतिशब्दे षष्ठीतत्पुरुषः? उत कर्मधारय इति विचार्य ''स्थपतिर्निषादः स्या च्छब्दसामर्थ्या'' दित्यनेन कर्मधारयं सिद्धान्तयित्वा तत्सामर्थ्यान्निषादस्य तद्यागोपयुक्तमन्त्राध्यापनादिकं कर्तव्य मित्युक्तम्। तथा तृतीये चतुर्थपादे इन्द्रपीताधिकरणे तत्पुरुषबहुव्रीह्यो र्लाघवगौरवंविचार्यवृत्तिपदार्थ प्रधानस्य तत्पुरुषस्या संभवादन्यपदार्थप्रधानतया जघन्योपि बहुव्रीहिरेव स्वीकार्य इति सिद्धान्तितम्। तथा ''तद्धितेन चतुर्थ्यावे'' त्यादिना देवताप्रापकप्रमाणेषु प्रबलदुर्बलभावः प्रतिपादितः। तथा द्वितीये द्वितीयपादे पौर्णमास्यधिकरणे ''यत्र तद्धितवृत्तौ समासवृत्तौ वा कारकातिरिक्तसंबन्धेन वृत्ति, स्तत्राऽकृत्वापि भावनासंबन्धं प्रथमतोऽन्योन्यसंबन्धेन वैशिष्ट्ये उच्यमानेपि न वाक्यभेदः। अत एव ''लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति'' ''हिरण्यमालिनः प्रचरन्ती'' त्यादौ प्राप्तप्रचारानुवादेन ऋत्विग्गतलौहित्यविशिष्टोष्णीषविधिः। एतदभिप्रायेणैव चित्राधिकरणे (1-4-3) यदि पञ्चदशाज्यानीति समासः स्यात्ततो न वाक्यभेदोभवे''दिति''पार्थसारथिनोक्त'' मित्यादिना कौस्तुभे वाक्यभेदतदभावौ विस्तरेण विचारितौ। किंच ''विधिनिमन्त्रणे 3-3-161 त्यादिपाणिनिसूत्रावलम्बनेन लिङर्थो विधिः स च प्रवर्तना रूप इति सिद्धान्तः प्रतिपादितो ग्रन्थकृता। तथा द्वितीये प्रथमपादे अपूर्वाधिकरणे ''नचैवमित्यादिना व्यापाररूपाणामप्यपूर्वान्तराणां कल्पनापत्ति माशङ्क्य ''अनेकापूर्वकल्पनाभिया समुदायादिवाक्येषु साधकतमत्वापरपर्यायानन्तरकालीनोत्पादकत्वरूपस्यैव करणत्वस्य विवक्षितत्वात्। अनुशिष्टैव हि तादृशकरणतायां तृतीया पाणिनिनापी त्यादि प्रपञ्चितं भाट्टकौस्तुभे। तथा भावार्थाधिकरणे पश्य मृगोधावतीत्यादौ महाभाष्यकाराभ्युपगतैकवाक्यतायां साधुतापि प्रथमान्तार्थ मुख्यविशेष्यकबोधेनावकल्पत इति ग्रन्थेन महाभाष्यमवलम्ब्य नैयायिकमतं दूषितं कौस्तुभे रहस्यकृता। तत्रैव ''अत एवोक्तं वाक्यपदीये – ''बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यते'' त्यादिना वाक्यपदीय मुदाहृतं श्रीमता। तत्रैव कृतेराख्यातार्थत्वे क्रियतेघटः स्वयमेव चैत्रस्येत्यादौ कर्मकर्तरि ''कर्मवत्कर्मणा तुल्यक्रियः'' 3-1-87 इतिशास्त्रस्याप्रवृत्तिमाशङ्क्य कृञादेरप्युत्पत्त्यादिरूपफललक्षकत्वाङ्गीकारेण कर्मत्वरूपाखण्डोपाधेरविवक्षणा त्कर्तृत्वरूपाखण्डोपाधेरेवौदननिष्ठस्य स्वसमानाधिकरणफलप्रयोजकत्वसंबन्धेन कृतावेवान्वयस्वीकारेण वा न दोष इति समाहितम्। कर्तृवाचके षष्ठी समर्थिता च।

अनया रीत्या बहुषु स्थलेषु शाबरभाष्य-वार्तिक-न्यायसुधा-शास्त्रदीपिका-मयूरवमालिका-भाट्टदीपिका-प्रभावली-कौस्तु भादिग्रन्थेषु पाणिनिकात्यायन पतञ्जलिमुनित्रयविरचितव्याकरण-शास्त्रमवलम्ब्यैवा धिकरणरचनाऽकारि। एतदर्थमेव प्रथमे तृतीयपादे साधुपदप्रयुक्त्यधिकरणे व्याकरणशास्त्रस्य मन्वादिस्मृतीनामिव प्रामाण्यं समुपार्जितं जैमिनीयैः।

अतो मीमांसाशास्त्रार्थविचारणे व्याकरणशास्त्रस्या त्यन्तोपयोगितया तदर्थं पञ्चाशत्पृष्टेषु खण्डदेवेनबहुधा व्याकरणशास्त्रार्थोत्र निरूपितः।

ततःपर मयमपरःप्रश्नो जायते-यत्-वैयाकरणैरेव मुनित्रयोक्तीनां सुविस्तरं बहुधा व्याख्यातत्वेन तदीयग्रन्थाध्ययनादिनैव पूर्वमीमांसाशास्त्रस्यो पकारसंभवात् कावा महानुभावस्य प्रत्येकं तच्छास्त्रार्थप्रदर्शनस्यावश्यकता। यथा जैमिनीयं व्याख्यातृभि र्बहुधा विस्तारितं, तथा पाणिनीयमपि व्याख्यातृभिः स्तनशल्यपरीक्षया विस्तारितमेव-इति।

अत्रेदमवगन्तव्यम्। यत्-हरिहेलाराज कैयटवामनजयादित्यमाधवहरदत्तजिनेन्द्रबुद्धिभट्टोजि-दीक्षितकौण्डभट्टादिभिः सूत्रवार्तिकभाष्याणि यद्यपि सुविस्तरं व्याख्यातानि. परंतु मुनित्रयोक्तीना मर्थान् ते याथार्थ्येन नाऽग्रहीषुरेव। ते यथाश्रुतार्थग्राहिण एवा सन्, मुनिवचनानां निगूढार्थं ते नाज्ञासिषुः। अतो हर्यादिव्याख्यातृपरम्परयाऽऽगतानां व्याकरणसिद्धान्तानां भ्रममूलकत्वा न्न तद्ग्रन्थाध्ययनादिना मीमांसाशास्त्रस्योपकारः संभवतीत्याशयेन मुनित्रयोक्तीनां तत्संमतार्थप्रतिपादनाय श्रीमता तच्छास्त्रार्थविचारः कृतः।

तथाहि वैयाकरणैः "कर्मणिद्वितीया" 2-3-2 इत्यादिषु कर्मणीत्यादीनि फलाश्रयादि धर्मिबोधकतया व्याख्यातानि। तेषां धर्मिपरत्वे श्रीमताऽत्रैव ग्रन्थेदोषाः प्रदर्शिताः। अतः परसमवेत क्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वसमनियतमखण्डोपाधिरूपकर्मत्व एव द्वितीयेति तत्सूत्रार्थो वर्णनीयः। "समर्थः पदविधिः" 2-1-1 इतिसूत्रस्थं भाष्यमप्यस्मदुक्तमेवार्थं द्रढयति। तत्र हि "कष्टं श्रितो भवतीत्यत्र क्रियाकारकयोरभिसंबन्धस्य द्वितीया वाचिका भवती" त्युक्तम्। भाष्ये 'क्रियाकारकयोरभिसंबन्धस्ये' तिशब्देन निरुक्ताखण्डकर्मत्वस्यैवोक्तत्वात्। निरूपकत्वाश्रयत्वाभ्यां क्रियाकारको भयनिष्ठत्वेन तस्य संबन्धत्वाक्षतेः। यथा श्रुतैतद्भाष्यार्थमादाय क्रियाकारकभावसंबन्धो द्वितीयार्थ इति व्याकरणाव्याख्यातारोऽभिप्रयन्ति। तण्डुलं पचतीत्यादि वाक्यजन्यबोधे तत्संबन्धस्या भानात्तस्य तत्त्वं न घटते। अतस्ते भाष्यार्थं सम्यग् नाग्रहीषुरिति स्पष्टमेव।

एवं "कामप्रवेदनेऽकच्चिति" 3-3-153 इति पाणिनिसूत्रं कामप्रवेदने प्रकारान्तरेण गम्यमाने लिङ्स्या, न्न तु कच्चिच्छब्दप्रयोगे, स च सर्वलकारापवाद इति वृत्तिकारै र्व्याख्यातम्। कामो मे भुञ्जीतभवानित्युदाहृतं च। वसतुतस्त्विदं व्याख्यानमयुक्तम्। कामप्रवेदने कर्तव्य र्लिङित्येव सूत्रार्थस्योपपन्नतया 'प्रकारान्तरेणे' त्यस्याध्याहारेण व्याख्याने गौरवात्। किंच "इच्छार्थेषु लिङ्लोटौ" 3-3-157 इति सूत्रं भाष्ये कामप्रवेदने चेत् इच्छार्थेभ्य उपपदेभ्यो गम्यमाने इति व्याख्यातम्। प्रकृतसूत्रविवक्षितार्थस्य निरुक्तभाष्योक्तरीत्या "इच्छार्थेषु" इतिसूत्रेणैव सिद्धतया "कामप्रवेदने" इति सूत्रस्य वैयर्थ्यापत्तिः। पौनरुक्त्यापत्तेः। अत एव मीमांसाभाष्यकारैः प्रकृतसूत्रेण विहितस्य लिङः इच्छार्थकत्वं स्वीकृत्य द्वितीयाध्याये रथन्तरपादे "यदि रथन्तरसामासोमः स्याद् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीया" दित्यत्र यदिशब्दस्य व्यवहितेना न्वयेन यदि ऐन्द्रवायवाग्रान् ग्रहान् ग्रहीतु मिच्छेत् ततो रथन्तरसामनामानं क्रतुं कुर्यादित्यर्थो वर्णितः। यद्यप्यत्र हरदत्तेन पदमञ्जर्यां पौनरुक्त्यं वारितं, तदपिन युक्तमिति रथन्तरपादे कौस्तुभे ग्रन्थकृता प्रपञ्चितम्। नव्यव्याख्यानाश्रयणे तु एतदसंगतिः स्पष्टैव। श्रीमता प्रकृतग्रन्थेपि "यदि शालीन् भुञ्जीत तर्हि दध्युपसिञ्चे" दिति शाबर भाष्योक्तवाक्यमेव गृहीत्वा प्रकृतार्थः स्पष्टीकृतः।

तथा "कर्तृकर्मणोः कृती" 2-3-65 तिसूत्रे कृद्ग्रहणस्य "कृतो ये कर्तृकर्मणी तत्र यथा स्यात्। तद्धितस्य ये कर्तृकर्मणी तत्र माभूत्। कृतपूर्वी कटम्। " भुक्तपूर्वी ओदन" मितिप्रयोजनमुक्तं महाभाष्यकारेण। तत्र कटस्य कृतशब्दार्थेन्वयमाश्रित्य निष्ठान्तेन योगाद् "न लोकाव्यये" 2-3-69 त्यादिना षष्ठीनिषेधादेव कृद्ग्रहणं चिन्त्यप्रयोजन मिति हरदत्तो व्याख्यत्। तमेवा नुरुन्धानो भट्टोजिदीक्षितस्त्त कर्तव्य पूर्वीकटमिति प्रत्युदाहरणं प्रदर्श्य, अन्ततः कृत्येवय था स्या, त्तद्धितार्धिक्ये माभूदिति भाष्याशयमगावगय

पाचकतम इत्यादि तद्धितान्तयोगे षष्ठी भवति वा? न वे? ति भाष्यकारो न निर्णयामास, ताटस्थ्यमेवा वालम्बे, महाकविप्रयोगा अन्वेषणीया इति शब्दकौस्तुभे व्याचष्टे। तथा तत्र कृतशब्दो भाव क्तान्त इति च व्याख्यातारो निरणैषुः। तदेतत्सर्वं भाष्यनिगूढार्थापरिज्ञानमूलकमेव। प्रकृत भाष्यस्य निगूढार्थो ग्रन्थकृता प्रकृतसूत्रार्थविचारावसरे स्पष्टीकृतः। अस्माभिरपि तद्व्याने ग्रन्थकृदाशयो विस्तरेण प्रतिपादितः। विस्तरभयादत्र नेहतन्यते।

एवं "लः कर्मणि च भावेचाकर्मकेभ्यः" 3-4-69 इति पाणिनीयमनुशासनं लकारस्य शक्त्या कर्तृकर्मरूपधर्मिबोधक मिति व्याख्यातम्। तत्त्वत्यन्तमसंगतम्, शक्यतावच्छेदकलाघवा दाख्यातस्य कृतौ शक्ते रवधारितत्वा त्तदनुशासनस्य कर्तृकर्मलक्षणायां तात्पर्यग्राहकताया एवो चितत्वात्। एवं चाख्यातस्य लाघवा त्कृतौ शक्तिः, निरुक्तानुशासनबलेन कर्तृकर्मणो र्लक्षणा।पाचकादिकृदन्तेतु कर्तरि शक्तिः, कृतौ लक्षणेत्येव मुनिवचनानां तात्पर्यम्। अत एव तृतीये चतुर्थपादे कर्त्रधिकरणे "नाऽनृतं वदे" दितिवाक्यविहितानृतवर्जनस्य शुद्धक्रत्वर्थत्वमिति सिद्धान्त उपपद्यते। लस्य कर्त्रर्थकत्वेतु कर्तुः श्रुत्यो पस्थितत्वेन श्रुत्या तस्य शुद्धपुरुषार्थत्वापत्तिः। प्रकणाद्धि ऋत्वर्थत्वम्। तस्माच्च श्रुति र्बलीयसी। अत्र वैयाकरणाः पर्यनुयुञ्जते-आख्यातानुरोधेन लाघवात्कृतामपि कृतिवाचित्वं, कर्तरिलक्षणेत्येवास्तु-इति। तत्तु न सम्यक्-लाघवस्याप्यङ्गनिष्ठस्य दीक्षणीयामुख्यत्वस्येवाङ्गगुणविरोधन्यायेनाऽकिञ्चित्-करत्वात्। अङ्गगुणविरोधन्यायश्च द्वादशे द्वितीयपादे नवमाधिकरणे निरूपितः। किंच प्रधानस्य पुरःस्फूर्तिकत्वेन तत्र शक्तेरव धारितत्वेनाऽनवच्छिन्नायाः शक्ते रयोगादवच्छेदकापेक्षायां तद्गतगौरवस्यो त्तरकालप्रतीतिकत्वेन फलमुखैत्वाच्च। "सत्त्वप्रधानानिनामानी" ति यास्कवचना त्पाचक इत्यादौ धर्मिणः कर्त्रादेः प्राधान्यमवगम्यते।

एव मपादानप्रकरणे "भीत्रार्थानां भयहेतु" 1-4-25 रित्यादिसूत्रोदाहरणेषु बुद्धिकृतविभागादिकमादाय "ध्रुवमपायेऽपादान" 1-4-24 मित्यनेना पादानत्वं संसाध्य "भीत्रार्थाना" मित्यादिसूत्राणि महाभाष्यकारेण प्रत्याख्यातानि। तत्र भट्टोजिदीक्षितो 'वस्तुतस्तु प्रत्याख्यानप्रकारो न युक्तः, धातूनां यथाश्रुतार्थकत्वे षष्ठ्या दुर्वारत्वात्। अनभिधानब्रह्मास्त्रेण समाधान मयुक्तम्। अतोत्र सूत्रवार्तिकमतमेव बलीय इति शब्दकौस्तुभे प्रत्यपीपदत्। वस्तुतस्त्विवदमयुक्तम्, नानाविधानां तत्तज्जातीयकाना मपादानत्वानां व्यापकीभूताखण्डोपाधिरूपापादानत्व एव पञ्चमी। अत एवै वंविधाः प्रयोगाः सर्वे शक्ता एवेत्येतदर्थज्ञापनायैव भाष्यकृतासूत्राणां प्रत्याख्यातत्वात्।

एवं सम्प्रदानसंज्ञासूत्रे पत्येशेते इत्यत्र चतुर्थ्या उपपत्तये "क्रियाग्रहण" मिति वचनं कात्यायनेना रब्धम्। तच्च भाष्यकारेण प्रत्याख्यातम्। "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौचेष्टायामनध्वनी" 2-3-12 तिसूत्रे भाष्यकृता 'क्रियाग्रहण' मितिवचनस्य विधित्वमाश्रितम्। हरिकैयटादिभिस्तु "गत्यर्थकर्मणी" त्यादि सूत्रस्थभाष्यापर्यालोचनया संप्रदानसंज्ञासूत्रस्थयथाश्रुतभाष्यमवलम्ब्य वार्तिकप्रत्याख्यान एव भाष्यतात्पर्य मिति सिद्धान्तं निरूपयामासुः। तदत्यन्तमसंगतमिति प्रकृतग्रन्थे श्रीमता प्रतिपादितम्। तच्चा स्माभि र्विस्तरेण व्याख्यातम्।

एवं "तिङ्समानाधिकरणेप्रथमा" "अर्हाणां कर्तृत्वे" "षष्ठ्यतसर्थप्रत्ययेन" "षष्ठी शेषे" इत्यादीनां व्याख्यातृभिः कृतं विवरणं भाष्यविरुद्धम्। एतच्च मूले स्पष्टं प्रतिपादितम्।

एव मनेकस्थलेषु मुनित्रयासंमतानि तद्विरुद्धानि च व्याख्यानानि हरिकैयटादयः प्रादर्शयन्। अत स्तन्निराकरणेन मुनित्रयवचनानां तत्त्वार्थोवक्तव्य इत्याशयेन खण्डदेवेन स्वातन्त्र्येण व्याकरणशास्त्रार्थः पञ्चात्पृष्टेषु प्रादर्शि। न हि केवलं मीमांसाशास्त्राधिकरणसंगमन लोभेन मुनित्रयवचनाना मर्थो विपर्यस्तः। किंतु निष्पक्षपातेन तेषामर्थो दर्शनीय इत्येवा शयो महानुभावस्य खण्डदेवस्य। अत एव

व्याख्यातृभिर्यत्र योग्यं व्याख्यानं कृतं, तद् आदृतमेव श्रीमता। यथा – स्पृहेरीप्सितः 1-4-66 इत्यस्य न कर्मत्वशेषत्वबाधकत्वम्, 'षष्ठी शेषे' 2-3-50 इत्येवसिद्धे "ज्ञोऽविदर्थस्य करणे" 2-3-51 इत्यादीनि सूत्राणि समासा भावफलकानि, स्वरार्थानि चे त्यादयोऽनेके विषया खण्डदेवेन स्वहस्तीकृताः।

येनैवाशयेन श्रीमता खण्डदेवेना स्मिन् ग्रन्थे पञ्चाशत्पृष्टेषु व्याकरणशास्त्रार्थो विस्तरेण ग्रथितः, तेनैवाशयेन भट्टाचार्यादिभिः व्याकरणशास्त्रार्थो निरूपितः। व्याकरणशास्त्रार्थपरिशीलनेन यथा मीमांसाधिकरणरचनाया उपकारः समजनि न तथा तच्छास्त्रार्थपरिशीलनेन न्याय शास्त्रस्योपकारोऽस्ति, परंतु स्वानुभवं प्रमाणयन्तः प्रमाणपटवो लाघवपक्षपातेन पदशास्त्रार्थ परिशीलने प्रावर्तन्त।

यथा शब्द शास्त्रस्य मीमांसाशास्त्रोपयोगित्वं तथा प्रमाणशास्त्रस्यापि तदुपयोगिता स्ति, परंतु स्वस्व रूपेण नोपयोगिता। यथा तदुपयोगिता, तत्स्वरूपप्रदर्शनाय तर्कपादाभिधः प्रथमाध्यायप्रथमपादो मीमांसकै र्निरमायि। तत्र तार्किकमतापेक्षया पदार्थादिभेदः प्रादर्शि।

**न्यायशास्त्रे प्रौढान् शाब्दबोधग्रन्था** नधिकृत्य किञ्चि त्पश्यामः। भगवानक्ष**पादमहर्षिः** स्वशास्त्रे शब्दः पृथक् प्रमाणम्, शब्दस्या र्थेन संबन्धः सामयिको, न स्वाभाविकः, जात्याकृतिविशिष्टव्यक्तिः पदार्थः, मन्त्रायुर्वेदप्रामाण्यव दाप्तप्रामाण्या त्सर्वस्यापि वेदस्य, प्रामाण्य मित्यादिक मुपदिदेश। वात्स्यायनीये **न्याय भाष्ये उद्द्योतकरीये न्यायवार्तिके वाचस्पतिवि**रचितायां **न्यायवार्तिकतात्पर्यटीकायां** च आकाङ्क्षादिसहकृतानां पदानां पदार्थ स्मरणद्वारा शाब्दबोधात्मकवाक्यार्था वगतिहेतुत्वं स्पष्टं प्रत्यपादि। तथा **न्यायकुसुमाञ्जला वुदयनाचार्या** आख्यातस्य न कर्ता शक्यः, किंत्वनुकूलयत्नः, भावनान्वयिनि प्रथमान्तार्थे आख्यातार्थसंख्याऽन्वेति, मीमांसकोक्तरीत्या नियोगादिक मिष्टसाधनत्वं च न लिङर्थः, किंतु वक्तुरभिप्राय एव। वाक्यार्थज्ञानोपयोगिनी आकाङ्क्षा योग्यता इत्यादिक मर्थजातं नियोजयामासुः।

नव्यन्यायमार्गनिर्मातारः श्रीमन्तो **गङ्गेशोपाध्यायाः** सकलदार्शनिकैराद्रियमाणं "**तत्त्वचिन्तामणि**" नामकं महान्तं प्रबन्धं निरमासिषुः। तत्र प्रत्यक्षानुमानोपमा नशब्दाख्यं खण्डचतुष्टयं चकास्ति। तत्र शब्दानुमानखण्डौ विस्तृतौ। तयोः शब्दखण्डे शाब्दबोधोपयोगिन आकाङ्क्षादयः प्रवर्तक ज्ञानविषयो लिङाद्यर्थः, पदपदार्थयोः संबन्धः, सामान्यतो धात्वर्थः, उपसर्गाणां द्योतकता, समासे एकार्थी भावनिराकरणाय तत्तत्पदार्थान्वयनिरूपणपूर्वकं समासजन्य शाब्दबोधः, तदुपयोगिनो व्युत्पत्तिविशेषाश्च विचारपूर्वकं निरूपिताः।

अनन्तरं **रघुनाथ शिरोमणि भट्टाचार्या** अनुमानान्तं चिन्तामणिं व्याख्याय शब्दचिन्तामणावप्रतिपादितं प्रमेयजात मधिकृत्य **नञर्थवादः, आख्यातवादः, एवकारवाद** इत्यादीन् त्स्वतन्त्रग्रन्थान् वितेनिरे। तेषां **मथुरानाथतर्कवागीशै "रहस्य"** नामकं व्याख्यानं विरचितम्। नञ्वाद शिरोमणे **गदाधरभट्टाचार्यै** र्व्याख्या व्यरचि। एतावता प्रबन्धेन गोतमसूत्रादारभ्य शाब्दबोधविचारः प्रवर्तित एवाऽऽसीत्। परंतु तत्र सूक्ष्मैव शाब्दबोधरीति रस्ति।

गते कियतिकाले **श्रीजगदीशतर्कालङ्कारा** निखिलं शाब्दबोधोपयोगि प्रमेयजातं पाठकानुजिघृक्षया विशदीचक्रुः। तेषां प्रयत्न एव "**शब्दशक्तिप्रकाशिका**" रूपेण परिणतः। एवं हि आभाणकः–

"**जगदीशस्य सर्वस्वं शब्दशक्तिप्रकाशिका**" इति। जगदीशस्ये यं शैली। यत्-कारिकाभि र्लक्षणानि प्रदर्श्य संक्षिप्तया गंभीरया सरण्या कारिकार्थं विवृत्याऽनेकोदाहरणेषु तत्समन्वयप्रदर्शनम्। तत्प्रसङ्गे वैयाकरणान् मीमांसकांश्च निराकरोति। तस्मिन् ग्रन्थे 156 कारिकाः सन्ति। तत्र साकाङ्क्षैः सार्थकशब्दै रनुमितिविलक्षणा शाब्दप्रमितिर्जायते, अर्थात् अनुमानप्रमाणे शब्दो नान्तर्भूतः, किंत्वतिरिक्तः प्रमाणमिति व्यवस्थाप्य सार्थकशब्दभेदानां निरूपणमखेना तिविस्तृता शाब्दपद्धतिः परिष्कृता प्रकाशते। यथा–

सार्थकशब्दस्त्रिविधः। 1. प्रत्ययः, 2. प्रकृतिः, 3. निपातः। प्रकृति र्नामधातुभेदेन द्विविधा। रूढ-लक्षक-योगरूढ-यौगिकभेदाच्चतुर्विधं नाम। रूढस्य 'संज्ञा' इति व्यवहारः। सा च संज्ञा त्रिविधा — 1. नैमित्तिकी, 2. पारिभाषिकी, 3. औपाधिकीचेति। लक्षकं च जहत्स्वार्थाऽजहत्स्वार्थानिरूढाधुनिकादिलक्षणाभेदेना नेकविधम्। योगरूढं सामासिकतद्धितान्तभेदेन द्विविधम्। यौगिकं तु समासतद्धितान्तकृदन्तभेदेन त्रिविधम्। धातुरपि त्रिविधः — परस्मैपदी आत्मनेपदी उभयपदीचेति। प्रत्यय श्चतुर्विधः — 1. विभक्तिः, 2. धात्वंशः, 3. तद्धितः, 4. कृदिति। सुप्तिङ्भेदेन विभक्तिरपि द्विविधा। प्रथमादिभेदेन सुब्विभक्तिः **सप्तविधा।** यद्वा कारकार्था तदितरार्थाचेति द्विविधा। तिङ् लडादिभेदेन दशविधः। उक्तं च "**तिङो दशविधा श्चते**" (आख्यातप्रकरणे 95) इति। धात्वंशस्तु नामप्रकृतिकोधातुप्रकृतिकश्चेति द्विविधः। तद्धितस्तु अपत्याद्यर्थभेदेन बहुविधः।

एवं शब्दशक्तिप्रकाशिकायां विद्यमानो विषयः सामान्यरूपेण प्रतिपादितः। विस्तरभया न्नेह तन्यते। एषा शाब्दपद्धतिः सर्वेषां दार्शनिकानामत्यन्त मुपकरोति।

अत्रेदमवधेयम् — तर्कालङ्कारा व्याकरणशास्त्रप्रसिद्धान् पदार्थान् गृहीत्वा नैयायिकमतानुसारेण शाब्दबोधप्रक्रियामुपपादयामासुः। युक्तं चैतत्। सर्वो हि मनुष्यः स्वाभीष्टमेवार्थं प्रतिपादयति। नैयायिकचूडामणिः खलु जगदीशः। तत्रतत्र सत्यवसरे व्याकरणानुशासनानि प्रदर्शयति। तत्रत्वयं विशेषः, यत्-पाणिनीय व्याकरणस्योत्पत्तेरनन्तर मितराणि व्याकरणानि पाठप्रवचनयो र्दूरी भूतानि। पाणिनीयमेव शब्दसाधुत्वनिर्णयाय लोकै राद्रियते। तावता व्याकरणान्तराणामप्रामाण्यमिति न भ्रमितव्यम्। तान्यपि प्रकृतिप्रत्यय विभागप्रदर्शनेन तदर्थनिरूपणेन च भाषामनुशासत्येव। अनेनैवाशयेन तर्कालङ्कारा न केवलं पाणिनीयान्येव प्रमाणयन्ति, अपितु तदपेक्षयाऽधिकतरां भागुरिस्मृतिं शर्मवर्मकृतकातन्त्रं कौमारं कालापादिकं च प्रदर्शयन्ति। अतो ज्ञायते तर्कालङ्काराणा मनेकव्याकरणेषु पाटव मस्तीति।

क्वचित् सिद्धशब्दनिष्पत्तये स्वातन्त्र्यमप्यवलम्बन्ते। यथा—

"गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक्स्वभेषजै" रित्यादौ

तथा द्वैमातुरः, द्वैमातुरी, षाण्मातुर इत्यादि शब्दनिष्पत्तये—

"संख्याषड्भद्रपूर्वायाडुरण् मातुः स्त्रियां च ङीप्" 122 इति कारिकार्धेन संख्यादिपूर्वका ज्जननीवाचका न्मातृशब्दाद् 'डुरण्' प्रत्ययं स्त्रियां ङीपं च विधत्ते। डित्त्वा ट्टिलोपः। पाणिनिना तु "मातुरुत्संख्यासंभद्रपूर्वायाः" 4-1-115 इति सूत्रितम्। अत्र तु किञ्चिदालोचनीय मस्ति — जगदीशकारिकायां संख्यापेक्षया पृथक् 'षड्' ग्रहणं किमर्थ-मिति। पाणिनिसूत्रे स्थितः "सं" शब्दोपि कारिकायां परित्यक्तः। एव मनेकस्थलेषु स्वातन्त्र्यमाशिश्रियुः। यया कयापि प्रक्रियया सिद्धशब्दान्वाख्यानमेव व्याकरणस्य मुख्यं प्रयोजनम्। अत एव व्याकर्तारो मुनयोपि बहवो दृश्यन्ते।

शब्दशक्तिप्रकाशिकाया व्याख्याद्वयमस्ति। 1. **कृष्णकान्तविद्यावागीश**कृता "**कृष्णकान्तीया**"। एषाऽऽख्यातप्रकरणान्तस्यैवास्ति। तद्धितप्रकरणस्य नास्ति। तस्याऽव्याख्याने "तद्धितस्य न्यायासंवलितार्थकत्वेन विचारविधुरतयाऽतिसुगमतया च तट्टीकाकरणे मदीयप्रवृत्तिर्नोत्पन्ने" ति वचनेन स्वयमेव हेतुं कथयति। तर्कालङ्कारैरपि तद्धितप्रत्ययाः सूक्ष्मरूपेणैव प्रादर्शिषत। 2. **श्रीरामभद्रसार्वभौम**विरचिता "**प्रबोधिनी**"। एषा बहुव्रीह्यन्तस्यैवास्ति। किंच **ढुण्ढिराजशास्त्रिणा** "**विषमस्थल टिप्पणी**" विरचिता।

सर्वैरपि पण्डितैर वश्यपठनीयोऽयं शब्दशक्तिप्रकाशिकाग्रन्थः।

अनन्तरं **श्रीगदाधरभट्टाचार्याः** शाब्दमणिग्रन्थे पक्षधरमिश्रकृतस्य शाब्दमण्यालोकस्य शिरोमणिकृताना माख्यातवादनञ्वादादीनां च व्याख्यानानि विरच्य **व्युत्पत्तिवाद-शक्तिवाद-विधिस्वरूपविचारादी**न् स्वतन्त्रप्रबन्धांश्च निर्माय शाब्दबोधपद्धतिं प्राबोधयन्।

## व्युत्पत्तिवादः

अयं शाब्दबोध प्रक्रियाया अत्यन्तमुपकरोति। तत्र प्रथम मभेदान्वयबोधो भेदान्वयबोधश्चेतिद्विविधोपि बोधः सपरिकरं निरूपितः। भेदान्वयबोधनिरूपणप्रसङ्गे राज्ञः पुरुष इत्यादौ स्वत्वस्य प्रकारतया भान? मुत संसर्गतयेति सुदूरं विचार्य ''तत्रापिन नोविद्वेष इतिदि'' गित्यन्तेन ग्रन्थेन स वादः परिसमापितः।

भेदान्वयविचारप्रारम्भे ''भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचि न्निपातार्थेन च सममेव जायते, न त्वन्येने'' तिग्रन्थेन प्रत्ययजन्योपस्थितेः शाब्दबोधं प्रतिकारणत्वमुक्तम्। तत्प्रसङ्गेन ''प्रत्ययाश्च विभक्तिकृत्तद्धितादिभेदेन नानाविधा'' इत्युत्तरो ग्रन्थ आरब्धः। तत्क्रमेण सुबविभक्तीनां सप्तानामप्यर्थं निरूप्य टाबादिस्त्रीप्रत्ययाना मपत्याद्यर्थकतद्धितप्रत्ययानां चार्थो विचारितः। ततो धातुप्रकृतिकानां लकारकृत्सनादीनां प्रत्ययाना मर्थः प्रतिपादितः। लकारार्थविचारावसरे दशानामपि लकाराणां कालवाचित्वं तदन्वयप्रकारश्च प्रत्यपादि। सूचीकटाहन्यायेन लडादीनामर्थं निरूप्य तन्मध्यस्थयो र्लिङ्लोटो र्विधिरूपार्थवाचकत्वनिरूपणेन ग्रन्थं समप्तिमगमयत्।

अत्र ग्रन्थे निरुक्तदिशा पाणिन्युपदिष्टानां सुबादिप्रत्ययानां नैयायिकमतेनार्थ मुपवर्ण्य तत्रा न्वयप्रदर्शनायाऽनेका व्युत्पत्तीः प्रदर्श्य निष्कृष्टां शाब्दबोधसरणिं प्रत्यपीपदन् भट्टाचार्याः। तत्र द्वितीयार्थनिरूपणावसरे प्राचीननवीनयोर्मतमनुसृत्य विस्तरेण धात्वर्थो निरूपितः। दुह्यादिद्विकर्मक-णिजन्त-सविषयकार्नुमित्यर्थकसन्नन्त धातुयोगे कर्मप्रवचनीययोगे च द्वितीयार्थं निरनुक्रोशं मतान्तराणि निराकृत्य वर्णयामासुः। एवमेवे तरतविभक्त्यन्तस्थलेपि सविमर्शं पदार्थः प्रदर्शितः। अनुमानखण्डे कृत भूरिपरिश्रमैरेव एतद्ग्रन्थार्थोऽवगम्यते, नान्यैः। तादृशी खलु एतद्ग्रन्थनिर्माणपद्धति भट्टाचार्याणाम्। इतरदार्शनिकै भट्टाचार्यादनन्तरकालीनै नैयायिकैश्च क्रियमाणस्य शाब्दबोधविचारस्य एष ग्रन्थः शक्ति वादश्च मूलस्तम्भायेते। अत्र च–

1. अभेदान्वयबोधश्च विरूपोपस्थितयोरेव।
2. आख्यातोपस्थापितद्वित्वादिकं च उभयादिरूपान्वयितावच्छेदाकावच्छिन्न एवान्वेति।
3. आख्यातार्थवर्तमानत्वादे र्नञ्समभिव्याहारस्थलेऽभावांश एवान्वयः।
4. संख्यातिरिक्तविभक्त्यर्थस्य प्रकृत्यर्थविशेष्यतयैव भानम्।
5. नामार्थधात्वर्थयो र्भेदेन साक्षादन्वयोऽव्युत्पन्नः।
6. धातोः कर्मतादिसंबन्धेन क्रियान्वयबोधकत्वम्।
7. उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयः।
8. व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यतादृशधर्मवत्त्वमपि विधेयसंसर्गतया भासते।
9. कर्मत्वान्तरविशेष्यतापन्नकृत्यादौ कर्मत्वस्य संसर्गतया भान मव्युत्पन्नम्।
10. उपलक्षणीभूतधर्मावच्छिन्ने न नञर्था भावान्वयः।

इत्यादयो बहवो व्युत्पत्तयः प्रदर्शिताः।

भट्टाचार्याः प्रायः पाणिनीयमनुशासनमेवाद्रियन्ते। क्वचित् कातन्त्रपरिशिष्टं भागुरिस्मृतिं च प्रदर्शयन्ति। तर्कालङ्कारा इव व्याकरणान्तराणि बाहुल्येन न प्रदर्शयन्ति।

एतादृशस्य ग्रन्थराजस्य बहवो विद्वांसो व्याख्यानानि चक्रुः।

1. **रामरुद्रभट्टाचार्यै** र्निर्मिता रामरुद्रीया व्याख्या। एषा तृतीयाविभक्त्यर्थविचारोपक्रमपर्यन्ता लभ्यते।

2. वैयाकरणमूर्धन्या **जयदेवमिश्रा "जया"** नामिकां टीकां निर्ममिरे। इयं च टीका प्रथमार्थविचारे "राज्ञः पुरुष इत्यादौ प्रत्ययत्वाद्यनुपस्थितिदशायामपी" त्यन्त भागस्यैवास्ति। अनन्तरं द्वितीयार्थनिरूपणान्तभागस्य तत्पुत्रैः **श्रीमदुमेशमिश्रै** र्लघु टिप्पणी निर्मिता।

3. पञ्चनदीयपण्डित **सुदर्शनाचार्यशास्त्रिभिः** प्रणीता **"आदर्श"** व्याख्या। परंतु अस्माद् व्याख्यानाद् यथाभूतमूलार्थो नावगम्यत इति मन्यन्ते विद्वांसः। अपसिद्धान्तोपि प्रदर्श्यत इति च संगिरन्ते पण्डिताः।

4. मैथिल श्री झोपाख्य **धर्मदत्त (बच्चाझा) सूरिभि** र्विरचिता **"गूढार्थतत्त्वालोक"** व्याख्या। इयं मूलग्रन्थादप्यतिप्रौढया रीत्या वर्तते। अस्य व्याख्याग्रन्थस्य पठितारः पाठयितारश्च दुर्लभा एव स्युः, आस्या अतिगंभीरत्वाद् विषयस्य दुर्धरत्वाच्च।

1. किंच भेदान्वयनिरूपणावसरे "राजपुरुष इत्यादिसमासस्थलेतु पुरुषादिपदार्थेनसमं राजादिपदार्थस्य न भेदान्वयबोधः, किंतु तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिक राजादिपदोपस्थाप्य राजसंबन्ध्यादेरभेदान्वयबोध एवेति न कश्चिद् दोष" इति भट्टाचार्यैरुक्तम्। तत्र **बच्चाझा**महोदयैः "राजापुरुषादिसमासस्थले" इति प्रतीकमुपादाय "अयमभिप्राय" इत्यादिना "इत्यलमप्रस्तुतानल्पजल्पनेन" त्यन्तेन महता प्रबन्धेन वैयाकरणसंमतमेकार्थी भावं समूलघातं हत्वा व्यपेक्षावादः स्थापितः। व्यपेक्षावादे वैयाकरणोक्तादोषाः परिहृताः।

2. तथा प्रत्ययभेदनिरूपणावसरे "अत एव यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातं वानास्ति तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्र भावा दसौ मुख्यविशेष्यतयैव भासते" इति भट्टाचार्यैरुक्तम्। तत्र "अत एवे" तिप्रतीकमुपादाय "पर्वतो वह्निमान्" पर्वतेवह्नि रित्युभयत्रैव विधेयत्वनिबन्धनप्राधान्यस्य वह्नावेवानुभूयमानत्वादित्यल" मित्यन्तेन ग्रन्थेन नैयायिकाभिमतः प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः स्थापितः। तत्र सतिसंभवे प्रथमान्तार्थस्य मुख्यविशेष्यत्वम्। यथा चैत्र स्तण्डुलं पचतीत्यादौ। केवलं पचतीतिप्रयोगे आख्यातार्थकृतेरेव मुख्यविशेष्यत्वम्। नञ् पदसमभिव्याहारेतु तदर्थमुख्यविशेष्यक एव बोधः। चैत्रेण सुप्यत इत्यादौ भावाख्यातस्थले धात्वर्थमुख्यविशेष्यक एव सः। नह्यस्माकं सर्वत्राप्यैकरूप्येण प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोध एवेति नियम इति निरूपितम्।

तत्प्रसङ्गेन "भावप्रधानमाख्यात" मिति निरुक्तस्मृत्यवलम्बनेन सर्वत्रापि भावना मुख्यविशेष्यक एव शाब्दबोध इति खण्डदेवेन भाट्टरहस्ये निर्णयकरणावसरे नैयायिकमते आपादितान् सर्वान् दोषान् परिजहार। विस्तरभया न्नेह तन्यते स विषयः।

तथा सर्वत्रापि धात्वर्थमुख्यविशेष्यक एव शाब्दबोध इति वादिनां वैयाकरणानां मतमुपक्षिप्य तत्र दोषान् प्रदर्श्य अन्ततः "तद्वहति रथयुगप्रासङ्ग" 4-4-76 मिति सूत्रस्थ महाभाष्यावलम्बनेन तन्मतं दूषयामास। इमे द्वे अपि क्रोडपत्रतया व्यवहर्तु युज्येते

एवं बहुषु स्थलेषु मतान्तरनिराकरण पूर्वकं नैयायिकमतं सपरिकरं पुपोष।

5. मैथिलै **र्जानकीनाथशर्म**महोदयैः **"प्रकाशा"**ख्या व्याख्या व्यरचि। एषा गूढार्थतत्त्वालोकमेवानुसरति। तत्त्वालोकार्थः संक्षेपेणात्र प्रदर्शितः। एषैव पाठकै राद्रियते। एते बच्चा झा महोदयानां शिष्याः।

# शक्तिवादः

तथा गदाधर भट्टाचार्यैः पदवृत्ति निरूपणाय स्वातन्त्र्येण **शक्तिवादो** निरमायि। अत्र च काण्डत्रयं वर्तते। प्रथमे मीमांसामतनिरासपूर्वकं शक्तिस्वरूपं निरूप्य तज्ज्ञानस्य बोधकारणता प्रत्यपादि। अस्य सामान्यकाण्ड इति व्यवहारः। द्वितीयस्मिन् विशिष्य केषाञ्चित्पदानां शक्तिर्विचारिता–

आकाश, धेनु, पुष्पवन्त (पुष्पवत्) तद्, युष्मद्, अस्मद्, सर्व, किम्, यद्, इदम्, एतद्, अदस्, स्व, एक। एषां विषये दर्शनान्तरीया विप्रतिन्नाः। अत स्तन्निराकरणायप्रायतन्त भट्टाचार्याः। अस्य विशेषकाण्ड इति व्यवहारः। तृतीये जातिर्विशिष्टव्यक्ति शक्तिसिद्धान्तं प्रदर्श्य मीमांसकसाधारणमतं ज्ञानशक्तिमतं भट्टपादमतं श्रीकरमतं मण्डनमिश्रमतं प्राभाकरमतं च निरनुक्रोशं निराचकार। अस्य परिशिष्टकाण्ड इति व्यवहारः। अयं ग्रन्थो व्युत्पत्तिवादादपि दुर वगाहः।

अस्य **हरिनाथीयं** व्याख्यानं प्रधानतया विद्वद्भिराद्रियते। तथा **श्रीरङ्गनाथसूनुना कृष्णभट्टेन मञ्जूषाख्या** व्याख्या रचिता। तस्या **अर्थदीपिके**ति नामान्तरम्। तर्कसिद्धान्त **श्रीमाधवशर्मणा विवृति** नामाटीका व्यरचि। **गोस्वामिदामोदरशास्त्रिणा विनोदिनी** व्याख्या निर्ममे।

एतौ वादग्रन्थौ शाब्दबोधप्रदर्शनेऽत्यन्तं पटिष्ठौ सर्वैरपि दार्शनिकै राद्रियेते।

**श्रीमहादेवपुनता**नामकमहोदयैः **न्यायकौस्तुभो** विरचितः। तत्र खण्डचतुष्ठयं चकास्ति। शब्दखण्डे शाब्दबोधोपयोगिनोऽनेके पदार्था विचारिताः।

**गोकुलनाथोपाध्यायाः पदवाक्यरत्नाकर** नामकं शाब्दबोधग्रन्थं रचयामासुः। तत्र प्रथमं कारिकाभि र्लक्षणानि प्रदर्श्य स्वोपज्ञयाटीकया सविस्तरं कारिका स्ता व्याख्याताः। पदस्वरूपं तज्ज्ञानोत्पत्तिप्रकारं पदस्यार्थे संकेतस्यैवाभिधात्वं संकेतस्य कारणत्वं च प्रतिपाद्य व्युत्पत्तिवादोक्तरीत्या भेदाऽभेदान्वयौ प्रदर्शयामास। ततः प्रथमादीनां सप्तानां विभक्तीनामर्थनिरूपणपूर्वकं शाब्दबोधमुपवर्ण्यग्रन्थं समापयत्। इतरन्यायग्रन्थेष्वचुम्बितः स्फोटवादनिराकरणसिद्धान्तोत्र विशिष्य निरूपितः। अत्र खण्डदेवादिमतं दीक्षितादिवैयाकरणमतं च दूषयित्वा नैयायिकमतं सिद्धान्तितं चकास्ति। पदवाक्यरत्नाकरस्य **यदुनार्थमिश्रैः गूढार्थदीपिका** नामा बृहती व्याख्या व्यरचि। नन्दिनार्थमिश्रैष्टिप्पणी रचिता।

**गोकुलनाथोपाध्याया** मन्तेवासिभिर्मैथिलैः **गिरिधरोपाध्यायै** स्तत्तत्सूत्रवार्तिकार्थनिरूपणपूर्वकं सप्तानां विभक्तीनामर्थविशेषस्य प्रतिपादको **विभक्त्यर्थनिर्णय** नामको ग्रन्थो व्यरच्यत।

सिद्धान्तमुक्तावल्यां श्रीरायनरसिंहशास्त्रिणः प्रभानामां टीकां रचयामासुः। तच्छिष्याः **श्रीपट्टाभिरामशास्त्रिणः "त्रिंशच्छलोकी"** नामकं शाब्दबोधग्रन्थं लोकानुजिघृक्षया रचयांचक्रिरे। तैरेव तस्य टीकापि निरमायि।

तथा श्रीमता**जयन्तभट्टेन न्यायमञ्जरी** रचिता तत्र द्वादशाऽऽह्निकानि सन्ति। तेषां मध्ये तृतीयचतुर्थ पञ्चम षष्ठाह्निकेषु शब्दस्य स्वातन्त्र्येण प्रामाण्यं प्रतिपादितम्। तत्र मीमांसकवैयाकरणमतनिराकरणं निरनुक्रोशं कृतमस्ति। वैयाकरणाभिमतः स्फोटवादः सम्यङ् निरूपितो निराकृतश्च। स्फोटप्रति पादनावसरेऽयंसंग्रहश्लोकः–

"तस्मादेकः क्रमविरहितः कल्पितासद्विभागो
वाक्यस्फोटो जनयतिमतिं तादृशीं स्वाभिधेये।
वर्णा स्त्वेते प्रकृतिलघवः कल्पनैकप्रतिष्ठा
स्तस्मिन्नर्थे विदधति धियंनेत्यलं तत्कथाभिः"।।

स्फोटनिराकरणावसरेऽयं श्लोकः—

"इतिविततयावर्णा एतेधियाविषयीकृतां
दधति पदतांवाक्यत्वं वा त एव च वाचकाः।
न च तदपरः स्फोटः श्रौत्रे विभात्यवबोधने
न च विधिहतो वाच्ये बुद्धिं विधातु मसौक्षमः"।।

इति। तत्र मीमांसकापेक्षयापि वेदस्य प्रामाण्यं प्रतिपादितम्। अयं च जयन्तभट्टो गङ्गेशोपाध्यायेनोपमानखण्डे जरन्नैयायिकत्वेन व्यवहृतः।

किंच वैयाकरणभूषणसारव्याख्यायां काशिकायां हरिरामशास्त्रिणा सुबर्थनिर्णये सारग्रन्थेऽप्रदर्शितेषु केषुचित् स्थलेषु विभक्त्यर्था विचारिताः। स च प्रत्येकं ग्रन्थरूप इवा भाति। तत्र **शाब्दिकरत्नाकरः तार्किकरत्नाकरः तर्करत्नाकरः कारकवाद** इत्यतेबोध ग्रन्था उद्धृताः। परंतु एते नोपलभ्यन्ते।

## शाब्दतरङ्गिणी

अद्यत्वे शाब्दबोधोपयोगी **शाब्दतरङ्गिणी** नामको ग्रन्थराजः श्रीमद्भिः पण्डितराजशास्त्ररत्नाकर इत्यादिबिरुदाङ्कितैः वेपत्तूरि सुब्रह्मण्यशास्त्रिमहोदयै र्व्यरचि। तत्र च षट्तरङ्गाः प्रकाशन्ते। प्रथमे तरङ्गे अभिहितान्वयवादोऽन्विताभिधानवादश्च सिद्धान्तबिन्दुटीका प्रभृतिग्रन्थार्थ विमर्शनपूर्वकं प्रदर्शितः। द्वितीये पदवाक्यप्रमाणसिद्धान्तावलम्बनेनऽभि धावृत्ति र्विचारिता। तृतीये वैयाकरणाभिमत एकार्थीभावो निराकृतः। चतुर्थे वैयाकरणसिद्धान्तलघुमञ्जूषाश्रयणेन लक्षणावृत्ति र्विमृष्टा। पञ्चमे व्यञ्जनावृत्ति र्निरूपिता। साचालङ्कारिकाणा मत्यन्तमावश्यकीति विस्तरेण प्रतिपादितम्। षष्ठे शाब्दबोधप्रक्रिया निरूपिता। तत्र प्रथमं भाट्टमतेन बोधा स्तदुपयोगिनः पदार्थाश्च निरूपिताः। अनन्तरप्राचीनार्वाचीनवैयाकरणमतरीत्या शाब्दबोधो विचारितः। ततः पदवाक्य संमतबोधप्रक्रियानिराकरणेन प्रमाणशास्त्र संमता बोधसरणिः प्रदर्शिता। तत्प्रसङ्गे भाट्टरहस्ये खण्डदेवेन नैयायिकमते प्रदर्शिता दोषाः परिहृताः। अत्र ग्रन्थे लघु भूतयासरण्या सर्वशास्त्रसंमता रीतिः प्रादर्शि। यद्यपि शास्त्रिचरणाः सर्वशास्त्रेषु निष्णाताः, यत्समर्थनीयमितितैर्मन्यते, तत्साकल्येन समर्थयितुं शक्ता एव ते, तादृशं खलु तेषां शास्त्रपाण्डित्यम्, तथापि "प्रयतितंच न्यायवासनया यथामति न्यायसिद्धान्ते वैयाकरणमीमांसकादिभिरुदीरितावद्यानां दूरीकरणे" इति तेषां प्रस्तावन वाक्यशेषानुसारेण नैयायिकमतमेव परमसिद्धान्ततया प्रदर्शयामासुः।

भावनामुख्यविशेष्यकशाब्दबोधनिर्णयाय "भावप्रधान माख्यात" मिति यास्कवचनं प्रमाणयन्ति तन्मतानुयायिनः। परंतु तद्वचनमात्रेण न तन्मतसिद्धिः, यास्केनैव "सत्त्वप्रधानानि नामानि" इति वचनान्तरेण लिङ्गसंख्यान्वययोग्यरूपार्थस्य सत्त्वस्यापि प्राधान्यबोधनात्। अतो "यत्रो भे ते, भावप्रधाने भवतः" इत्यनन्तरं निरुक्तवाक्यं तन्मतोपष्टम्भकतया नागेशभट्टैरुपन्यस्तम्। 'यत्रो भे' इत्यादिनिरुक्तवाक्यार्थपर्यालोचने भावनामुख्यविशेष्यक एव बोधः सर्वैरप्यङ्गीकर्तव्य एव। तच्च निरुक्तवचनं नैयायिकानां सर्वात्मना प्रतिकूलमेव। न केनापि नैयायिकेनै तन्निरुक्तवचनं पर्यालोचितम्। तदपर्यालोचने नैयायिकमतं शिथिलमेवेति न पृथग् विविच्य वक्तव्यम्। एवं स्थिते श्रीसुब्रह्मण्यशास्त्रिचरणैः षष्ठे तरङ्गे (185 पृष्टे) यत्रो भे इति निरुक्तवचनविरोधमाशङ्क्यैवं तत्परिहारः कृतः — वाक्ये ह्याख्यातं प्रधानम्। तदर्थत्वाद्गुणभूतं नाम, तदर्थस्य

भावनिष्पत्तावङ्गत्वात् एवं तावद्वाक्ये आख्यातं प्रधान मिति निरुक्तभाष्य माख्यातार्थनिष्पत्त्यर्थं कारकाणामपेक्षितत्वरूप माख्यातार्थप्राधान्यं बोधयति। किंच तस्य प्राधान्यं विधेयत्वनिबन्धनमपिस्यात्। चैत्रः पचतीत्यादिवाक्यजन्यबोधे पाकानुकूलकृते राख्यातार्थस्य विधेयत्वात्। अत उत्तरग्रन्थपर्यालोचनया आख्यातार्थविशेष्यकत्वं वाक्यजन्यबोधस्य न सिध्यति" इति।

एते शास्त्रिचरणा इदानीं सुखं जीवन्ति। एतादृशानेकग्रन्थनिर्माणेन पण्डितलोकोपकाराय आयुरारोग्यादिकं दत्त्वा शास्त्रि चरणान् रक्षत्विति भगवन्तं प्रार्थये।

अत्रायमर्थो विचारणीयः। यत्-क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चे" ति शास्त्रज्ञैराश्रीयते। किमत्र प्रमाणम्? कश्चार्थः? किं वा तस्य प्रयोजन मिति पर्यालोचनीयम्। क्रिया विशेषणानां कर्मत्व" मितिवचनं वृत्तिकारोपज्ञमिति प्रौढमनोरमायां दीक्षितैरुक्तम्, अत्र क्रियाशब्दः क्रियतेऽसाविति कर्मव्युत्पत्त्या फलपरः, तथाच धात्वर्थफलेऽभेदेन विशेषणानां कर्मसंज्ञेति तदर्थः। इदं च "कर्तुरीप्सिततमं कर्म" 1-4-49 ति सत्राल्लभ्यते। तथाहि-सूत्रे कर्तुरित्यत्र "क्तस्य च वर्तमाने" 2-3-67 इति कर्तरि षष्ठी। ईप्सिततममित्यत्र आप्नोतेः सन्नन्तात्कर्मणि "मतिबुद्धिपूजार्थेभ्यश्चे" 3-2-188 ति वर्तमाने क्तः, ततः प्रकर्षे तमप्। मतिबुद्धीत्यादिसूत्रे मतिशब्द इच्छापरः, बुद्धेः पृथगुपादानात्। क्तप्रत्ययोपात्तं वर्तमानत्वं ने हविवक्षितम्। तेन कटं कृतवान् कटं करिष्यतीत्यादि सिध्यति। अत्र आप्नोतेः संबन्धमात्रमर्थः, न तु व्याप्तिः, साहि अवच्छेदकावच्छेदेन संबन्धः, सेनया ग्रामो व्याप्त इत्यादौ तथा प्रतीतेः, सन स्तमपश्चाऽर्थोऽविवक्षित एव। तथाच ईप्सिततमर्मित्यस्य संबद्धमित्यर्थः। आप्नोत्यर्थस्य करणाकाङ्क्षायां सूत्रोपात्तकर्तृपदार्थविशेषणीभूतफलानवच्छिन्नव्यापारोऽन्वेति। संबन्धश्चात्र जान्यतारूपो जान्याश्रयतारूपश्च गृह्यते। लक्ष्यानुसारात्। करणादिसंज्ञान्तरविधानसामर्थ्याच्च। एवं च कर्तुः = कर्त्रा, स्वनिष्ठ (फलानवच्छिन्न) व्यापारेण जन्यत्व जन्याश्रयत्वान्यतरसंबन्धेन संबद्धं कारकं कर्मसंज्ञं स्यादिति सूत्रार्थः संपद्यते। तेन (प्रथमसंबन्धमादाय) कर्तृनिष्ठव्यापारजन्यस्य विक्लित्त्यादेः फलस्य, (द्वितीयसंबन्धमादाय) तादृशव्यापारजन्यविक्लित्त्याद्याश्रयस्य तण्डुलादेश्च कर्मत्वं सूत्रेण सिध्यति। स्पष्टश्चायमर्थः शब्दरत्नव्याख्याने भावप्रकाशे। "अनुग्वलं गामी" 5-2-15 इति सूत्रे मनोरमायामपि प्रकृत्यर्थभावनामात्रं प्रतिविक्लित्त्यनुकूलव्यापारसंपूर्णप्रकृत्यर्थं प्रति च कर्मत्व मिति रीत्या द्वेधा कर्मत्वं प्रतिपादितम्।

यत्तु – अप्नोत्यर्थस्य करणाकाङ्क्षायां करकाधिकारा द्धात्वर्थव्यापारस्य करणत्वेनान्वयः। स च धात्वर्थो व्यापारमात्रमिति संकोचे मानाभावा त्फलावच्छिन्नव्यापाररूपसंपूर्णधात्वर्थ एव। एवं च फलस्य कर्मत्वं सूत्राक्षरमर्यादया न लभ्यते-इति,

तन्न, प्रकरणाच्छ्रुतेर्बलवत्त्वेन प्राकरणिककारकाधिकारा त्तादृशार्थकल्पनापेक्षया श्रौत सूत्रोपात्तकर्तृपदार्थविशेषणीभूतफलानवच्छिन्नव्यापारस्यैव करणत्वेनान्वयमाश्रित्य निरुक्तार्थस्वीकारस्यैव युक्तत्वात्। नच विक्लित्त्यादेः फलस्यनिरुक्तरीत्या क्रियया ईप्सितत्वेपिकारक कत्वाभावा त्कथं कर्मत्वमिति वाच्यम्। फलस्यापि क्रियाजनकत्वेन कारकत्वात्, तज्ज्ञानपूर्वकं क्रियोत्पादनात्। एवं च ज्ञानगतजनकत्वस्य फले आरोपात् तस्य कारकत्वं निराबाधमेव। स्पष्टंचेदं सुबर्थवादे मञ्जूषायाम्। धात्वर्थफलस्य कर्मत्वे तत्समानाधिकरणस्य स्तोकादेरपि कर्मत्वात् स्तोकं पचतीत्यादौ द्वितीयासिद्धिः प्रयोजनम्। कर्मत्वादीनामिव तत्सामानाधिकरण्यस्यापि द्वितीयादिप्रयोजकत्वं कटं भीष्मं कुर्वित्येतदुपपादनावसरे अनभिहितसूत्रे भाष्ये स्पष्टम्। "कट एव कर्म

तत्सामानाधिकरण्याद्भीष्मादिभ्योपि द्वितीये'' ति तत्र भाष्यम्। ''कर्तुः क्रियया आप्तुमिष्टतमंकारकं कर्मसंज्ञं स्यादिति सिद्धान्तकौमुदीग्रन्थस्यापि द्वेधाकर्मत्वप्रतिपादन एव तात्पर्यम्। एषा रीतिः सकर्मकधातुस्थल एवेति न पृथग् विविच्य वक्तव्यम्। अकर्मक धातुस्थले निरुक्तरीत्याफलस्य कर्मत्वासंभवा-तत्समानाधिकरणे प्रथमैव, न द्वितीया, सकर्मकस्थलेपि व्यापार विशेषणात्तु प्रथमैव। धात्वर्थस्य करणत्वेनान्वयेतु तत्समानाधिकरणे तृतीयैव, यथा-तृप्तिकामः स्तोकेनौदनं पचतीत्यादौ। तृप्तिविषयकामनावत्कर्तृकः स्तोकविक्लित्तिकरणक ओदनकर्मकः पाक इति तत्र बोधः। स्पष्टंचेदं ''सामान्ये नपुंसक'' मित्यत्र तत्पुरुषशेखरे। एवं भट्टोजिदीक्षितमतानुसारेण ''क्रियाविशेषणानांकर्मत्व'' मित्यर्थः कर्मसंज्ञाविधायकसूत्राक्षरमर्यादया लब्ध इत्यवगन्तव्यम्। तन्मते कर्मसंज्ञासूत्रे कर्तु रित्यस्य सत्त्वात्।

कर्मसंज्ञासूत्रे कर्तृग्रहणं प्रत्याख्यातमितिवदतो नागेशस्य मतेतु ''क्रियाविशेषणानां कर्मत्व'' मित्यस्यो पपत्ति रेवम् – इययेत्यादौ इण् धातो रेकाच्त्वव्यपदेशवद् विक्लित्त्यादेः फलस्यापि व्यपदेशिवद्भावेन (व्यपदेशिवदेकस्मिन्निति परिभाषया) फलाश्रयत्वा त्कर्मत्वम्। प्रयोजनं तु पूर्वोक्तमेव।

ननु स्तोकं पचतीत्यत्रा सहायत्वेन व्यपदेशिवद्भावेपि स्तोकं तण्डुलं पचतीत्यादौ मुख्य धर्मवतः फलाश्रयस्य तण्डुलादेः समभिव्याहारस्य सत्त्वा त्ससहाये व्यपदेशिवद्भावा भावा त्कथं कर्मत्वमिति चेत्, न कालिकसंबन्धेन फलाश्रये कर्मत्ववारणाय फलतावच्छेदकसंबन्धेन फलाश्रयस्य कर्मत्वस्य वक्तव्यतया फलस्य कर्मतायाः प्रामाणिकतया तन्निर्वाहकोपायान्तराभावेन तादात्म्यस्यापि फलतावच्छेदकसंबन्धत्वस्वीकारेण स्तोकं तण्डुलं पचतीत्यादावपि फलतावच्छेदकीभूततादात्म्य संबन्धेन फलाश्रयस्यान्यस्या भावेना सहायतया व्यपदेशिवद्भावस्य सुवचत्वात्। नचैवं व्यपदेशिवद्भावस्यैवानावश्यकत्वेने दमयुक्तमिति वाच्यम्। तस्य 'क्रियाविशेषणानां कर्मत्व' मित्यादिप्रमाणबला त्तादात्म्यस्यापि फलतावच्छेदकसंबन्धत्वं स्वीकार्यमित्येतत्तात्पर्यकत्वेनादोषात्।

नचे प्सिततमशब्दा त्फलाश्रयत्वेनो द्देश्यत्वं कर्मत्वमित्यर्थलाभेन कालिकसंबन्धेन फलाश्रये उद्देश्यत्वा भावेनैव वारणसंभवा त्फलतावच्छेदक संबन्धनिवेशस्यावश्यकतैव नास्तीति वाच्यम्। फलाश्रयत्वेन कर्तुरिच्छाविषयस्यैव कर्मत्वेन फले फलाश्रयत्वप्रकारकज्ञानं मेजायतामितीच्छाविषयत्वस्य फलेपिसत्त्वेन तस्य कर्मत्वस्य सुवचत्वात्। तादृशेच्छाजन्यस्य फले फलाश्रयत्वप्रकारकज्ञानस्या हार्यत्वाद् ''व्यपदेशिवद्भावेने'' तिनागेशेनोक्तम्।

यद्वा व्द्यादिशब्दवाच्यसमूहरूपसंख्यायाः समूहत्वेन रूपेणा धारताया, द्वित्वत्वादिना धेयतायाश्च स्वीकारवद् विशेषणवृत्तिस्तोकत्वादिधर्मपुरस्कारेणा श्रयताया विशेष्यवृत्तिविक्लित्तित्वरूपधर्म पुरस्कारेणा धेयतायाश्च सुवचत्वेन फले कर्मत्वं सूपपादम्। ईदृशाधर्मभेद प्रयुक्ताश्रयाश्रयिभावप्रतिपादनतात्पर्यकमेवात्र व्यपदेशिवद्भावप्रतिपादनं नागेशस्य। ''व्यपदेशिवदेकस्मि'' न्नितिपरिभाषा ''आद्यन्तवदेकस्मि'' न्निति 1-1-21 सूत्रस्थभाष्यारूढा।

एवं च ''क्रियाविशेषणानां कर्मत्व'' मित्यस्य दीक्षितनागेशमतद्वयेप्यनुशासनमूलकत्वा दनुशासनत्वव्यवहारो युज्यत एव। अत एव महानु भावैः सर्वतन्त्रस्वतन्त्रै र्गदाधरभट्टाचार्यै र्व्युत्पत्तिवादे ''क्रियाविशेषणानां कर्मत्व **मित्यनुशासना''** दित्युक्तम्। तत्र तत् कात्यायनस्य वार्तिकमिति तद्व्यातारो भ्राम्यन्ति।

एवं च निरुक्तरीत्या फलविशेषणानां कर्मत्वाद् द्वितीयान्तत्वमेव। अस्यकर्मत्वादेव सकृत् लुनाते इत्यर्थके सकृल्ल्वावित्यादौ कारकपूर्वकत्वाद् ''ओः सुपी'' 6-4-83 त्यनेन यणसिद्धिः। अन्यथा

''गतिकारकेतरपूर्वपदस्य यण् नेष्यते'' इति वचनात् स न सिध्येत्।

नचैवं क्रियाविशेषणस्य कर्मत्वे स्तोकं तण्डुलश्चैत्रेण पच्यत इत्यत्र स्तोके कर्मणि लकारः, स्तोकमोदनस्य पाक इत्यत्र स्तोके कर्मणि ''कर्तृकर्मणोः कृती'' ति षष्ठी च स्यादिति दर्शनान्तरीयोक्तं युक्तम्। कर्तृसाहर्येण धात्वर्थे भेदेनान्वयिन्येव कर्मणि लकारषष्ठ्योः प्रवर्तनेनादोषात्।

केचित्तु – ''तत्प्रत्यनुपूर्व मीपलोमकूलम्'' 4-4-28 इतिसूत्रेण प्रति अनुपूर्वकाद् ईप-लोम-कूलात् क्रियाविशेषणा त्कर्मद्वितीयान्ताद् वर्तत इत्यर्थे ठक् विधीयते। प्रतिकूलं वर्तते-प्रातिकूलिक इत्यादीन्युदाहरणानि। वर्तत इत्यकर्मक धातुना योगे तदित्यस्य द्वितीयान्तत्वमनुपपन्न मिति कृत्वा तेन ततो ठग्विधान मनुपपन्नं सत् क्रियाविशेषणानां कर्मत्वं नपुंसकत्वं चे'' तिज्ञापयति। सैवसीरदेवेन परिभाषावृत्तौ परिभाषात्वेन पठिता। एनामेव प्रक्रियां विभक्त्यर्थनिर्णयादिग्रन्थेषु नैयायिका आद्रियन्ते। अस्या ज्ञापकसिद्धत्वेन ''ज्ञापकसिद्धं न सर्वत्रे'' तिपरिभाषाश्रयणेन क्वचिदप्रवृत्त्या न तत्कर्मणि लकारषष्ठ्या-वित्यभिप्रयन्ति।

परंतु तन्न सम्यक्। ''तत्प्रत्यनुपूर्व'' मितिसूत्रे तदित्यस्य प्रथमान्तताया एव तद्धितशेखरे स्पष्टंप्रतिपादितत्वेन तस्य निरूक्तार्थ ज्ञापकत्वायोगात्। तत्सूत्रेण तदर्थज्ञापनस्य भाष्यानारूढत्वाच्च। नच तत्सूत्रे वामनहरत्ताभ्यां तदित्स्य द्वितीयान्तत्वप्रतिपादना दस्मदुक्तं युक्तमेवेति वाच्यम्। तदुक्तेरपि निरुक्तरीत्याऽयुक्तत्वेन तस्य त्वन्मतोपष्टम्भ कत्वायोगात्, ''बाधेऽदृढेऽन्यसाम्यात्किं, दृढे न्यदपि बाध्यत।'' मितिन्यायात्। ''क्रियाविशेषणत्वाद् द्वितीये'' ति प्रकृतसूत्रस्थकौमुदीग्रन्थस्तु हरदत्ताद्यनुरोधेनैव। तन्मते अकर्मकधातुस्थलेपि फलव्यापारयो र्धात्वर्थत्वेन फलसामानाधिकरण्याद द्वितीयेत्यभिमानः। अकर्मक धातुस्थले कर्मत्वस्य प्रसक्तेरेवाभावात्। स्पष्टंचेदं सर्वं ''पूजना त्पूजितमनुदात्तम्'' 8-1-67 इतिसूत्रे भाष्यप्रदीपोद्द्योतेषु। निरूपितं चैतदस्माभि र्मदीयभूषणसार व्याख्यायां तत्त्वदर्शिन्यां, मञ्जूषाव्याख्याने नागेशभावप्रकाशे च। विस्तरभयान्नेह तन्यते।

**व्याकरणशास्त्रे शाब्दबोधग्रन्थाः।** शाब्दबोधप्रक्रियोपयोगिनः पदार्थाः पाणिनीय एव प्रादर्शिषत। तदर्थमेव खलु तत्प्रवृत्तम्। तत्र च सनादयः 12, विकरणाः 23, लकाराः 10, तिङः 18, कृतः प्रायेण 100, सुपः 21, टाबादिस्त्रीप्रत्ययाः 9, तद्धिताः प्रायेण 200 इत्यष्टविधाः प्रत्यया स्तृतीयचतुर्थपञ्चमाध्यायेषु त्रिषु इच्छा दितत्तदर्थेषु विहिताः। शास्त्रस्य इदमध्यायत्रयमेव जीवभूतम्। एतदेव तार्किकाणां मीमांसकानां च शाब्दबोधप्रक्रियोपयोगी त्यत्र न कस्यचिद्विप्रतिपत्तिः। नैयायिकमीमांसकवैयाकरणानां त्रयाणामपि शब्दखण्डेऽधिकारस्य समानत्वा त्तार्किकमीमांसकैरप्येतदादृत मित्यत्र न महदाश्चर्यम्। तत्र प्राथमिकाः पञ्च प्रत्यया धातूद्देशेन, तत स्त्रयः प्रातिपदिकोद्देशेन च विहिताः। प्रकृतिप्रत्ययसंयोजनेन साधुशब्दनिष्पत्तयेऽपेक्षितानि कार्याणि अतिरिक्तेऽध्यायपञ्चके कथितानि।

अत्रच व्याकरणेऽष्टौ पदार्था विचारिताः।

| | | |
|---|---|---|
| शब्दद्वयम् – | 1, लोकेऽर्थबोधकः (पदं वाक्यं वा) | |
| | 2, तदधिगमाय कल्पितः (प्रकृति-प्रत्ययरूपः) | |
| अर्थद्वयम् – | 1, पदार्थो वाक्यार्थो वा। | |
| | 2, कल्पितशब्दस्यार्थः। | |
| संबन्धद्वयम् – | 1, योग्यता | |
| (शब्दार्थयोः) | 2, कार्यकारण भावः। | |

प्रयोजनद्वयम् – 1. अर्थबोधः।
2. धर्मः।

**8**

एतच्च "सिद्धे शब्दार्थसंबन्धे लोकतो र्थप्रयुक्ते शब्दप्रयोगेशास्त्रेण धर्मनियमो यथालौकिकवैदिकेषु" इति प्रथमवार्तिकेन कात्यायनेन प्रतिपादितम्। एतद्वार्तिकं निरुक्तपदार्थाष्टकं प्रतिपादयतीति वाक्यपदीये प्रथमकाण्डे 24, 25 श्लोकाभ्यां भर्तृहरिः प्रावोचत्। एवं च निरुक्तपदार्थाष्टकं प्रत्यक्षाद्यनुपलब्धिपर्यन्तानि षट् प्रमाणानि च गृहीत्वा साधुशब्दान्वाख्यानाय व्याकरणं प्रवृत्तम्।

**भर्तृहरिणा** महाभाष्यस्योपरि **वाक्य पदीयनामकं** पद्यरूपं व्याख्यानं विस्तृतं निरमायि। तत्र च भाष्यस्य प्रतीक मधृत्वैव तदर्थो विचारितः। स च विचारो न प्रक्रिया भागस्य, किं त्वार्थिकांशस्य। समनन्तरप्रदर्शितपदार्थाष्टकमेव वाक्यपदीयं विचारयति। उक्तं च तृतीयकाण्ड व्याख्या प्रारम्भे हेलाराजेन "पदार्थाष्टकविचारपर त्वाद्वाक्य पदीयस्ये" ति।

अत्र काण्डत्रयं वर्तते। 1. ब्रह्मकाण्डम्। 2. वाक्यकाण्डम्। 3. पदकाण्डं चेति। व्याकरणस्य परमप्रयोजनं धर्मः। सचान्ततो मोक्षरूपः। स च ब्रह्मभाव एव। अतः-

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।

इति प्रधानप्रयोजनप्रतिपादनमुखेन व्याख्यान मारब्धं भर्तृहरिणा। अत एवास्य ब्रह्मकाण्ड इति व्यवहारः। अत्र शब्दा दर्थावबोधरूपं धर्मरूपं च प्रयोजनद्वयं प्रतिपादितम्। अर्थावगमकश्च शब्दः स्फोटरूप एव, न वैरवीरूप इति सिद्धान्तयित्वा अन्तेऽपभ्रंशानामपि वाचकत्वं प्रतिपादितम्। अत्र 155 श्लोकाः सन्ति।

द्वितीयकाण्डे लोकेऽर्थावबोधकः पदरूपोऽन्ततो वाक्यरूपः शब्दः, तत्प्रतिपाद्यो र्थश्चेति पदार्थद्वयं विचारितम्। अत एवास्य वाक्यकाण्ड इति व्यवहारः। अत्र 485 श्लोकाः सन्ति।

प्रकृतिप्रत्ययरूपः शब्दः कर्मकरणादिरूप स्तदर्थः शब्दार्थयो र्योग्यता-कार्यकारण भावरूपसंबन्धद्वय मित्येत त्पदार्थ चतुष्टयं तृतीयस्मिन् काण्डे प्रदर्शितम्। अत एवास्य पदकाण्ड इति व्यवहारः। इदमेवकाण्डं व्याकरणशास्त्रप्रक्रियाया दर्शनान्तरीयशाब्दबोधप्रक्रियायाश्च मूलस्तम्भायते। न हि जैमिनिना गोतमकणादाभ्यां वा प्रत्ययाना मर्था विचारिताः। तच्छास्त्रस्य तत्रा व्यावृतत्वात्। एकस्य वाक्यशास्त्रत्वा, दन्यस्य प्रमाणशास्त्रत्वात्। शब्दखण्डे शास्त्रत्रयज्ञानामप्यधिकारः समान इति समनन्तरमेवोक्तम्। एतस्मादेव शास्त्रात्पदार्थान् गृहीत्वा स्वस्वमतानुसारेण बोधप्रक्रिया मुपपादयामासुर्दर्शनान्तरीयाः।

अत्र च काण्डे जाति-द्रव्य-संबन्ध-भूयोद्रव्य-गुण-दिक्-साधन-क्रिया-काल-पुरुष-संख्यो-पग्रह-लिङ्ग-वृत्तिरूपा श्चतुर्दश समुद्देशाः (प्रकरणानि) सन्ति। "लक्षणसमुद्देशनामकं प्रकरणान्तरमपि हरिणा विरचितम्। परंतु पाठकानां दुरदृष्टव शात्तद्विनष्ट" मिति द्वितीयकाण्डे पुञ्जराजो ब्रवीति। तत्र श्लोकानां संकलनसंख्या-1324। तथाच–

प्रथमकाण्डे – 155
द्वितीयस्मिन् – 485
तृतीयस्मिन् – 1324
श्लोकानां संकलनसंख्या – 1964

अत्र किञ्चिदवधेयम् – मुनित्रयोक्तिषु द्रव्यगुणादयः शब्दाः प्रयुक्ताः। यथा – ''किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे'' 5-4-13 ''पूरणगुण'' 2-2-11 ''तस्य भावस्त्वतलौ'' 5-1-119 इतिसूत्रे ''यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेश स्तदभिधानेत्वतला'' विति वार्तिकम्। द्रव्यगुणादिशब्दश्रवणे प्रसिद्धिवशा त्कणादपरिभाषिता एव बुध्यारूढा भवन्ति। पृथिव्यादीनि नव द्रव्याणि रूपरसादय श्चतुर्विंशति र्गुणाश्च तत्र प्रतिपाद्यन्ते। गुणाश्रयत्वं द्रव्यत्वं क्रियानाश्रयत्वं गुणत्व मिति च तल्लक्षणमुक्तम्। तद्रीत्याश्रयणे ''किमेत्तिव्यये'' त्यादिसूत्रे उन्नते प्रदेशे विद्यमानो वृक्ष इत्यर्थस्य उच्चैस्तमां तरु रित्यस्योदाहरणत्वम्, उन्नतो वृक्ष इत्यर्थकस्य उच्चैस्तम स्तरु रित्यस्य प्रत्युदाहरणत्वं च न संगच्छेत। उन्नतस्य भूप्रदेशस्य तादृशवृक्षस्य चोभयोरपि कणादपरिभाषया द्रव्यत्वेनो भयत्रापि द्रव्य प्रकर्षस्य सत्त्वात्तयो रुभयोरपि प्रत्युदाहरणत्वमेव स्यात्। अनेन च सूत्रेण अद्रव्य प्रकर्षे आमु स्तद्धितप्रत्ययो विधीयते। अतः काणादपरिभाषां परित्यज्य वाक्यपदीये पार्थक्येन द्रव्यलक्षणमुक्तम्–

''वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते। द्रव्यमित्युच्यते सोर्थो, भेद्यत्वेन विवक्षितः'' इति। इदं तदित्यादिसर्वनामपरामर्शयोग्य मित्येकं द्रव्यलक्षणम्। ''अत इति यत्प्रतीयते तद् द्रव्य'' मिति निरुक्तोक्तेः। ''भेद्यत्वेन विवक्षित'' इत्यनेन लक्षणान्तरमुक्तम्। किञ्चिन्निरूपितविशेष्यत्वेन विवक्षितोर्थो द्रव्यमिति तदर्थः। प्रकृते उन्नतेदेशे इत्यर्थे उच्चैश्शब्दस्या धिकरणशक्तिप्रधानत्वेन संबन्धस्य विशेष्यत्वाद् देशस्य तत्र विशेषणत्वेन निरुक्तरीत्या लक्षितं द्रव्यत्वं नास्ति। अत एव सर्वनामपरामर्शयोग्यत्वं द्रव्यत्व मित्यपि प्रकृते न लगति, सर्वनाम्ना मुत्सर्गतः प्रधान परामर्शित्वात्। अतो द्रव्यप्रकर्षाभावा न्निरुक्तर्थे आमुः प्रवर्तते। उन्नतस्तरु रित्यर्थेतु तस्य विशेष्यत्वेन द्रव्यत्वा त्प्रकृतनिषेधा दामुर्न प्रवर्तते। अत्र दर्शने विशेष्यत्वेन विवक्षिताः सर्वे पदार्था द्रव्याण्येव। एवं चात्र परकीयं द्रव्यलक्षणं न स्वीकार्यम्। यत्रतु परकीयद्रव्यलक्षणस्वीकारे न शास्त्रासंगतिः, तत्र तदपि स्वीक्रियत एव। यथा – ''विप्रतिषिद्धं चानधिकरणवाची'' 2-4-13 त्यादौ। अत्राधिकरणशब्दः कणादपरि भाषितद्रव्यबोधकः। शीतोष्णे उदके स्त इत्यत्र न एकवद्भावः। स्पष्टंचेदं हेलाराजीये।

तथा त्वतल्विधायके ''यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेश'' इत्यादिकात्यायनवचनस्य घटस्य भावो घटत्वम्, रूपस्यभावो रूपत्वमित्यादीन्युदाहरणानि वक्तव्यानि। तत्र यद्यपि घटो द्रव्यं, तथापि तद्वृत्ति घटत्वं तु न गुणः, रूपं द्रव्यमपि न, तद्वृत्ति रूपत्वं गणोपिन। अत एतद्वार्तिकं कणादपरिभाषितपदार्थस्वीकारे सर्वथाऽसंगतमेव। अतो गुणलक्षण मप्यन्यदुक्तं भर्तृहरिणा–

संसर्गि भेदकं यद्यत् सव्यापारं प्रतीयते।
गुणत्वं परतन्त्रत्वा त्तच्च शास्त्रे उदाहृत''

मिति। एवं चा प्रधानत्वं गुणत्वमिति स्वीकार्यम्। एतदेव लक्षणं ''गुणानां च पदार्थत्वादसंबन्ध'' इत्यादौ मीमांसकैरपि स्वीकृतम्। तथाच यद्विशेष्यत्वेन विवक्ष्यते तद् द्रव्यम्, यद्विशेषणत्वेन विवक्ष्यते स गुण इत्यर्थस्य लाभेन रूपस्य विशेष्यत्वेन विवक्षणाद् द्रव्यत्वम्, घटत्वरूपत्वादे र्विशेषणत्वेन विवक्षायां गुणत्व मिति स्वसिद्धान्तरीत्या तेषां वार्तिको दारणत्वं संगच्छते।

एवंरीत्या चतुर्दशसमुद्देशेषु व्याकरणशास्त्रीयप्रक्रियानिर्वहणाय मुनिवचनोन्नीतन् पदार्थान् प्रादर्शयद् भर्तृहरिः।

भर्तृहरिणा स्वग्रन्थस्य स्वेनैव वृत्तिरपि विरचिता। सापि प्रथमकाण्डस्यैवा स्ति। द्वितीय काण्डस्य **पुञ्जराजस्य** व्याख्या, तृतीयकाण्डस्य **हेलाराजस्य** व्याख्या चो पलभ्यते। श्रीमद्भिः **रघुनाथशर्मभिः** सविशेषं व्याख्यानसहितस्य वाक्यपदीयस्य **अम्बाकर्त्री**नामा व्याख्या निर्मिता। एनमेव वाक्यपदीयग्रन्थमाधारीकृत्य जैयटात्मजः **कैयटो महाभाष्यस्यो**परि **प्रदीपं** नाम व्याख्यान मकरोत्। तत्र स्वव्याख्याने "तदुक्तं हरिणे" त्यादिना हरिग्रन्थं प्रमाणतया प्रादर्शयत्। ग्रन्थारम्भे कैयट एव मवीवदत्—

"भाष्याब्धिः क्वातिगम्भीरः क्वाहं मन्दमतिस्तथा।
छात्राणा मपहास्यत्वं यास्यामि पिशुनात्मनाम्।।
तथापि **हरिबद्धेनसारेण ग्रन्थसेतुना।**
क्रममाणः शनैः पारं तस्य प्राप्तास्मि पङ्गुवत्।।

इति।

वैयाकरणै रादृतस्य शाब्दबोध विचारस्या यमेवादिमोग्रन्थः। एष च भाष्यस्य व्याख्यारूप इति प्रागेवा वोचाम। अत्र च प्रकृत्यर्थस्य प्रत्ययार्थेनाान्वयप्रकारं विशिष्टबोध स्वरूपं च न प्रादर्शयत्। तत्तु नव्यन्याय वासनावासितान्तःकरणै र्भट्टोजिदीक्षितादिभिः कृतम्। पदार्था स्त्वेतदुपज्ञमेव। तृतीयकाण्डे सप्तमः साधनसमुद्देश आधुनिकैः सर्वैरप्याद्रियमाणस्य विभक्त्यर्थविचारस्य जीवातुः। एतदेवाधारीकृत्य भट्टाचार्यप्रभृतिभिः कर्मादीनां भेदः प्रादर्शि।

एवं मुनित्रयग्रन्थानाधारीकृत्य भर्तृहरिणा वैयाकरणसिद्धान्ताः प्रतिपादिताः। एवं सत्यपि दर्शनान्तरीया विकल्पग्रस्तचित्ततया तान् न सम्यगधिगन्तुमीशते, प्रत्युत दूषयन्ति च अत स्तन्मतनिराकरणपूर्वकं वैयाकरणसिद्धान्तप्रतिष्ठापनस्याऽऽवश्यकता समजनि। तदर्थमेव प्रायतन्त दीक्षितकौण्डभट्टादयः।

श्रीमता सर्वतन्त्रस्वतन्त्रेण भट्टोजिदीक्षितेन अष्टाध्यायीक्रमं विहाय सुखेन साधुशब्दनिष्पत्तिपरिज्ञापनाय तत्तत्प्रकरण विभागपूर्वकं वैयाकरणसिद्धान्तकौमुदी रचिता। पाणिने रष्टाध्यायीमेवानेन कौमुदीरूपेण विपर्यणमयत्। सा च निर्माणरीति रतिगंभीरा, परं त्वत्राप्रस्तुतत्वा न्न प्रस्तूयते। अत्रापि शाब्दबोधरीतिः प्रादर्शि। यथा — "अर्थग्रहणं किम्? वृत्तावर्थान्तरोप संक्रान्ते माभूत्" "कृति किम्? तद्धिते माभूत्-कृतपूर्वी कटम्" (वाग्रहणात्) पक्षे षष्ठीसमासः "महाविभाषया वाक्यमपि" "एष्वर्थेषु द्योत्येषु वाच्येषु वा" "भावे 3-3-18 सिद्धावस्थापन्नो धात्वार्थो भावः, पाकः पाकौ" इत्यादिषु। कौमुद्याः "**प्रौढमनोरमा**" स्वैरेव व्यरचि। तत्र प्राचीनानां बहूनि मतानि निराकृतानि। सा च संपूर्णा। तथाऽष्टाध्यायीक्रममनुसृत्य भाष्यकैयटयोरुपरि पदार्थविमर्शनबहुलः **शब्दकौस्तुभो** निरमायि। स त्वसंपूर्णः, तृतीयाध्यायान्त एवास्ति। तत्र पस्पशाह्निके वैयाकरणानां परमसिद्धान्तभूतः स्फोटवादः सपरिकरं न्यरूपि।

अत्रेदमवगन्तव्यम्-नैयायिकैर्मीमांसकैश्च स्वीयप्रबन्धेषु तत्तत्संदर्भे वैयाकरणमतमवतार्य दूषितम्। तदसहमानो भट्टोजिदीक्षितो मनोरमायां शब्दकौस्तुभेच "लःकर्मणि" 3-4-67 "भावे" 3-3-18, "नञ्" 2-2-6 "स नपुंसकम्" 2-4-17 "कर्तुरीप्सिततमं कर्म" 1-4-47 इत्यादिसूत्रव्याख्यावसरे परमतं दूषयित्वा वैयाकरणसिद्धान्तं प्राबोधयत्। लकारस्य कर्तृकर्मरूपो धर्म्येव शक्योर्थः, न कृतिः।

फलव्यापारौ धात्वर्थः, आख्यातार्थत्वेन पराभिमता कृतिरपि धातुशक्यैव। नञ आरोपितत्वद्योतकत्वम्। समासादिवृत्तौ जहत्स्वार्थारूप एकार्थी भाव एव स्वीकार्यः। बोधकतैव शक्तिः, नतु नैयायिकाभ्युपगत ईश्वरसंकेतः, अपभ्रंशा अपि शक्ता एव। सर्वत्रापि धात्वर्थमुख्यविशेष्यक एव शाब्दबोधः। परमसिद्धान्ते स्फोटशब्द एवा वशिष्यते, स च निर्गुणब्रह्मरूपः। प्रक्रियांशस्त्वविद्याविजृम्भणमात्र मित्यादयः स्वसिद्धान्ता स्तत्रतत्र विप्रकीर्णतया बाहुल्येन दीक्षितेन प्रादर्शिषत। "परमतमप्रतिषिद्धमनुमतं भवती" तिन्यायमनुसृत्य सर्वत्रापि परमतनिराकरणपूर्वकमेव स्वसिद्धान्तं न्यरूपयत्। एवं मनोरमाशब्द कौस्तुभयोः प्रतिपादितस्य पदार्थजातस्य विप्रकीर्णत्वा द्गुरुभूतत्वाच्च दुर्धरतया व्युत्पित्सूना मुपकारो न भवेदित्याशयेन संक्षेपेण तत्पदार्थजातं दिदर्शयिषुः चतुस्सप्ततिश्लोकात्मकं "**वैयाकरण मतोन्मज्जन**" नामकं शाब्दबोधप्रक्रिया प्रदर्शनपरं ग्रन्थं प्रणिनाय। निरुक्ताशय एव

"फणि भाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्र निर्णीत एवार्थः संक्षेपेणेहकथ्यते"।

इति प्रथमश्लोकेनाभिव्यज्यते। तत्र धात्वर्थ-लकारार्थ-सुबर्थ-नामार्थ-समासशक्ति-शक्ति-नञर्थ –निपातार्थ-त्वादिभावप्रत्ययार्थ-देवताप्रत्ययार्था-भेदैकत्वसंख्या-संख्याविवक्षा-क्त्वाद्यर्थ-स्फोट निर्णया श्चतुर्दश (प्रकरणानि) सन्ति। भट्टोजिदीक्षितेन प्रदर्शिता मेनामेव रीतिमाश्रित्य श्रीमान् खण्डदेवोपि स्वीय भाट्टदीपिका-कौस्तुभयो स्तत्रतत्र विप्रकीर्णतया बाहुल्येन च विचारितान् शाब्दबोधप्रकारा न र्थिजिगांसूनां सुखेना व बोधनाय स्वातन्त्र्येण भाट्टरहस्यं निर्ममे। खण्डदेवः स्वग्रन्थेषु नव्यवैयाकरणमतत्वेन दीक्षिताशयमेव प्रत्यपीपदत्। तद्ग्रन्थार्थश्च पूर्वमेव निरूपितः।

भट्टोजिदीक्षितः स्वीयशाब्दबोधप्रक्रिया ग्रन्थस्य प्रामाण्यसंपादनाय वाक्यपदीयात् 1. "आख्यातशब्दे", 2. "साध्यत्वेन क्रियातत्र", 3. "अविग्रहा गतादिस्था", 4. भेद्यभेदक, 5. आख्यातं तद्धित, 6. इन्द्रियाणां स्वविषयेषु, 7. असाधुरनुमानेन, 8. संबन्धिशब्दे, 9. पदेन वर्णाः, 10. अनेक व्यक्ति, 11. सत्यासत्यौ तु यौ भागौ। इत्येकादश श्लोकान् स्वग्रन्थ माननिनाय। तथा भट्टपादानां तन्त्रवार्तिकात् (भावार्थाधिकरणे) "अस्त्यादावपिधर्म्यंशे" इत्यादिश्लोकमप्यानिनाय। भट्टवार्तिके "अस्त्यादावपि कर्त्रंशे" इति पाठः। एष महानुभावः श्रीमच्छङ्कर भगवत्पाद भाष्याब्धेः "**तत्वकौस्तुभ**नामक" मद्वैतग्रन्थ मुद्दधार। तदुपरि व्याकरणमिति पौरुष नाम भार्गिभः **श्रीमुष्णं सेतुमाधवाचार्यै** द्वैतपण्डितै **स्तत्त्वकौस्तुभकुलि**शनामको ग्रन्थो दीक्षितग्रन्थखण्डनपरो निरमायि। अस्माभिः सेतुमाधवप्रदर्शितदूषणपरिहारपूर्वकं दीक्षितग्रन्थः समर्थितः। मदीयग्रन्थस्य "कुलिशप्रतीकार" इति नाम।

सोऽयं महानुभावः स्वज्येष्ठभ्रातृ रङ्गोजिभट्टस्य तनूजन्मने सर्वतन्त्रस्वतन्त्राय श्रीमते **कौण्डभट्टाय** स्वसिद्धान्तान् त्साकल्येनो पदिदेश। कौण्डभट्टोपि पितृव्योपदिष्टान् पदार्थानाकलय्य वैयाकरणमतोन्मज्जनस्य "**वैयाकरणभूषण**" नामकं महान्तं व्याख्याग्रन्थमरीरचत्। तत्रादौ तेनैवं प्रतिज्ञातम्–

"पाणिन्यादिमुनीन् प्रणम्यपितरं रङ्गोजि भट्टाभिधं द्वैतध्वान्तनिवारणैकफलिकां पुम्भाववाग्देवताम्। डुण्ढिं, गोतमजैमिनीयवचनव्याख्यातृभिर्दूषितान् सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचोदूषये" इति। एवं प्रतिजानतो भट्टस्यायमाशयः। यत्, न्यायतन्त्रे सूत्रभाष्यवार्तिकग्रन्था अस्माक मनुकूलाः,परंतु तद्व्याख्याता **केवलं** वैयाकरणमतदूषणाभिनिवेशेनैव तत्खण्डनाय प्रववृतिरे। तथा पूर्वतन्त्रे जैमिनीयसूत्राण्य स्मत्सिद्धान्तस्यानुकूलान्येव। भाष्यकारप्रभृतयः सर्वेपि

अस्मत्सिद्धान्त **स्वरूपमनाकलय्य तदन्यथैव** गृहीत्वा तद्दृष्टचैव जैमिनिसूत्राणिव्याचचक्षिरे। जैमिनिसूत्राणि व्याकरणसिद्धान्तानुसारेणैव सुयोजानि भवन्ती-ति। निर्व्यूढाचेयं प्रतिज्ञा कौण्डभट्टेन वैयाकरणभूषणे। तदनन्तरकालिकेन नागेशभट्टेनापि सा प्रतिज्ञा मञ्जूषायां सुष्टु परिपालिता। समनन्तरमेवैन मर्थं सूक्ष्मरूपेण प्रदर्शयिष्यामः।

भूषणग्रन्थस्यातिविस्तृततयाऽस्मत्सिध्दान्ता **जिज्ञासुभि रनायासेन न सुज्ञेयाःस्युरित्याशयेन** कौण्डभट्टेनैव भूषण ग्रन्थस्य सारांशं प्रतिपिपादयिषता **भूषणसार**नामको ग्रन्थो निरमायि। तन्नामैव कथयति – एतन्मूलभूतं भूषण मस्ती-ति। सारग्रन्थ एवाधुना पाठ्यप्रणाल्यां सर्वत्रापि प्रचलति, तत्र लाघवमेवा साधारणं कारणम्। भूषणग्रन्थो न कस्यापि दृष्टिपथ मवततार, गौरवमेव तत्रहेतुः। लाघवपक्षपातिनः खलु सर्वे जनाः। अत एव विद्वद्भिः सारग्रन्थस्यैवो परि टीका रचिताः।

1. दर्पणम् – हरिवल्लभकृतम्।
2. काशिका – हरिरामदीक्षितकृता।
3. परीक्षा – भैरवमिश्रकृता।
4. प्रभा – पञ्चोलि बालकृष्णविरचिता।
5. सरला – नेने गोपालशास्त्रिकृता।
6. भूषणसार व्याख्या – कृष्णमित्रकृता।

एवमन्या अपि काश्चन शाङ्करीप्रभृतयः सन्ति टीकाः। परं त्वेताः सर्वाः**सारग्रन्थार्थमनाकलय्यैव** प्रवृत्ताः। अतो स्माभिः सर्वाष्टीकाः पर्यालोच्य सारग्रन्थार्थनिर्णायिका **तत्त्वदर्शिनी** नामिका विपुला टीका व्यरचि, प्रकटीकृताच। तत्रास्माभिरेवं प्रतिज्ञातम्—

"विमृश्य प्राक्तनीष्टीकाः प्रमादां स्तास्ववेक्ष्य च।
व्याख्यां भूषणसारस्य कुरुते तत्त्वदर्शिनीम्।।
हरिवल्लभपञ्चोलि भैरवै हरिशास्त्रिणा।
कृष्णमित्रेण विदुषा नेने गोपालशास्त्रिणा।।
व्याख्या निर्ममिरे बह्वयः पदार्थप्रतिपादिकाः।
सारग्रन्थार्थजिज्ञासोः साहाय्यं ताः प्रकुर्वते।।
प्रागगृह्णामहमपि पदार्थं तत एव हि।
स्वोत्प्रेक्षितार्थानुगुणं सारं ते किं त्वयूयुजन्।।
न तत्त्व मग्रहीषुस्ते मूलग्रन्थानवेक्षणात्।
मूलग्रन्थानवेक्ष्याहं सारतत्त्वं निरूपये।।।

इति। एषा च प्रतिज्ञा मदीयतत्त्व दर्शिन्यां साकल्येन निर्व्यूढा। जिज्ञासुभिस्तत एवा वगन्तव्यम्। विस्तरभया न्नेह तन्यते।

दीक्षितकौण्डभट्टयो स्तत्रतत्राभिप्रायो भिद्यते—

1. "स्वतन्त्रः कर्ता" 1-4-54 इत्यत्र स्वातन्त्र्यं धातूपात्तव्यापाराश्रयत्व मिति कौण्डभट्टः। प्रधान धात्वर्थाश्रयत्वं स्वातन्त्र्यमिति दीक्षितः। अनयोः कर्मकर्तरि भेदो वर्तते।

2. आरोपितत्त्वं नञ्द्योत्य मित्येव मुख्यसिद्धान्तः। "अभावो वा तदर्थोस्तु" इति कारिका परमतप्रदर्शनपरेति दीक्षिताशयः। आरोपितत्वं नञ्द्योत्य मिति न सिद्धान्तः, किंतु नञ् अभावार्थक एव। एतदर्थप्रतिपादनपर एव "अभावां वा तदर्थोस्तु" इत्यादिः श्लोक इति कौण्डभट्टाशयः। वस्तुतस्तु

कौण्डभट्टोक्तं भाष्यविरुद्धम्। नैयायिकवासनारासितान्तःकरणतया तेन तथा प्रतिपादितम्। अत स्तन्नादरणीयम्। दीक्षितोक्तमेव भाष्यसंमतम्। एतच्च विस्तरेण मदीयतत्त्वदर्शिन्यां भूषणसारव्याख्यायां नञर्थनिर्णये प्रत्यपादि।

3. वर्णाः स्फोटानतिरिक्ता इति कौण्डभट्टः। वर्णातिरिक्त एव स्फोट इति दीक्षितः। एतच्च कौण्डभट्टेनैव भूषणसारे स्फोटनिर्णये स्पष्टं प्रतिपादितम्। वस्तुतस्तु दीक्षिताशय एव भाष्यसंमत इत्यलमतिविस्तरेण।

ततो भूषणग्रन्थोऽपि नैयायिकमीमांसकैर्दूषितः। अत स्तद्भूषणसंरक्षणाय सर्वतन्त्र स्वतन्त्रेण **नागेशभट्टेन वैयाकरणसिद्धान्तलघुमञ्जूषा** व्यरचि। तत्र दर्शनान्तरीयसिद्धान्ताः समूलकाषं कषिताः। महाभाष्यमवलम्ब्य व्याकरणसिद्धान्ताः स्पष्टं प्रतिपादिताः। सोऽपिभूयान् ग्रन्थः। तस्या नागेशस्यान्तेवासिना वैद्यनाथेन **कला**नामा टीका व्यरचि। कृष्णमित्रपण्डितेन कृदर्थविचारान्तमञ्जूषायाः **कुञ्चिका** टीका रचिता। सभापतिशर्मोपाध्यायै राधुनिकै राकाङ्क्षावादान्तभागस्य **रत्नप्रभा**नामा व्याख्या रचिता। कला कुञ्चिका च सूक्ष्मरूपेणैव वर्तेते। यादृशी व्याख्यामञ्जूषया अपेक्षिता, तादृशी टीका कापि नासीत्। एतदाशयेना स्माभि **नागेश भावप्रकाश**नामिका बृहती टीका निर्मिता। (Published with the financial assistance from the Ministry of Education, Government of India) तत्र दर्शनान्तरीयविषया यावन्तोऽपेक्षिता, स्ते सर्वेत्र संयोजिता अस्माभिः। महाभाष्याद्याकरग्रन्थान् परिशील्यतदर्थसंयोजनमपि कृतम्।

अयं सर्वतन्त्र सवतन्त्रः। सर्वेष्वपि शास्त्रेषु निगूढं पदार्थं परिशील्य तत्तच्छास्त्रव्याख्यातृणामुपरि सप्रमाणं दोषान् प्रदर्श्य स्वयं तत्तच्छास्त्रसमन्वयं सप्रमाणं करोति। यथा – वेदाध्ययनं "स्वाध्यायोऽध्येतव्य" इति विधिप्रयुक्तं न भवति, किंतु "अष्टवर्षं ब्राह्मण मुपनयीत, तमध्यापयीते" ति विध्यन्तर प्रयुक्त मिति प्राभाकरमतमयुक्तं नित्या नित्यसंयोगविरोधादिति पञ्चपादिका विवरणे प्रतिपादितम्, तन्नयुक्तम्, अत्र तन्न्यायस्या प्रसरात्, किंच तन्न्यायस्य तदुक्तार्थकत्वमपि न घटते इति सप्रपञ्च मुपपाद्य "सर्वापेक्षाच यज्ञादिश्रुतेरश्ववत्" 3-4-26 इतिव्याससूत्रस्थं श्रीमच्छङ्करभगवत्पादानां भाष्य मवष्टभ्य तन्न्यायस्य निष्कृष्ट मर्थं सोदाहरणं दर्शयामास तिङर्थवादमञ्जूषायाम्। एवमनेके सहस्रशो विषयाः शास्त्रान्तरीया नागेशेन समूलं निराकृताः। न्यायसूत्र-भाष्य-वार्तिकग्रन्थेभ्यः कारक माख्यातवाच्यमिति, तस्य विशेषणत्व मिति च लभ्यत इति निरूप्य "एवं च कृति वाच्या, प्रथमान्तविशेष्यको बोध" इति अर्वाचां शुष्कलाघवत कैकशरणानां कुकल्पनाविलसित" मिति नव्यतार्किकान् दूषयति। एवं जैमिनिसूत्राणां स्वमतानुकूलत्वं प्रदर्श्य शबरादीन् निन्दति।

किंच "समर्थः पदविधि" 2-1-1 रितिसूत्रे समर्थशब्दार्थः "पृथगर्थानामेकार्थी भावः समर्थवचन" मित्यनेन कात्यायनेन प्रदर्शितः। "पृथगर्थानां पदानां मेकार्थी भावः समर्थ इत्युच्यते। क्व पृथगर्थानि? क्व वा एकार्थानि? वाक्ये पृथगर्थानि – राज्ञःपुरुष इति। समासे एकार्थानि – राजपुरुष इति। भेदसंसर्गौ **सामर्थ्य**" मितितत्र भाष्यम्। अनेन राजपुरुष इत्यादौ राजपदसहचरितं पुरुषपदं राजान्यस्वामिकत्वाभाववद्राजसंबन्धवत्पुरुषे शक्त मित्येतादृश मेकार्थी भावस्वरूपं निर्धारितं भवति। एवं च राजपुरुष इति समासपदा द्राजान्यस्वामिकत्वाभाववद्राजसंबन्धवान् पुरुष इति बोधो जायते। सचैकार्थी भावरूपशक्ति लभ्य एव। एवं स्थिते 'राजपुरुष इत्यादौ राजपदस्य तत्संबन्धिनि लक्षणाश्रयणेन तदर्थस्य पुरुषेऽभेदेना न्वयस्वीकारेण राजसंबन्ध्यभिन्नः पुरुष इत्यवयवशक्तिग्रहेणैव

बोधोपपत्त्या समासे एकार्थी भावो न स्वीकार्य इति वदतां नैयायिकादीनां निर्णयो निमित्तादपराद्धेषो र्धानुष्कस्य वल्गित मनुकरोतीति स्पष्टमेव। वैयाकरणाभ्युपगतस्य बोधस्य नैयायिकादिभिर प्रतिपादितत्वात्। तदभिमतस्यैवार्थस्याऽन्यथासंपादन एव तन्निराकरणसंभवात्। अन्यथा "काकस्य कार्ष्ण्याद् धवलः प्रासाद" इत्यभियुक्तोक्ते स्तेविषया भवेयुः।

अयमत्र प्रश्नो जायेत – एकार्थी भावस्य स्वीकारे तत्पुरुषा त्कर्मधारयोऽन्तरङ्ग इति सिद्धान्तो भज्येत। तत्पुरुषे पूर्वपदे लक्षणास्वीकारेण तत्प्रयुक्तं गौरवं तत्र, कर्मधारयेतु लक्षणाया अप्रसरा च्छक्यार्थमात्रस्यैव ततो बोधात्तस्य बलवत्त्वेनान्तरङ्गता। यदाहुः–

"निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम्।
कर्मधारयपक्षे तु न काचिदपि लक्षणा।।

निषाद एव स्थपति रतः श्रुत्या प्रतीयते" इति। समासशक्तिस्वीकारे तत्पुरुषसमासेनापि शक्त्यैवार्थबोधना दुभयोरपि समासयो स्तुल्यत्वा त्प्रबलदुर्बलभावस्या भावा त्तदाश्रयणेन प्रवृत्तस्य निषादस्थत्यधिकरणस्यो (6-1-51-52— च्छेदः। एवं निषादस्थपतिशब्दे बहुव्रीहि स्वीकारेपि तस्य शक्त्यार्थबोधकत्वा त्तदाश्रयणेनापि "ऐन्द्रं वास्तुमयं चरुं निर्वपे" दिति प्रकृत्य श्रुताया "एतया निषादस्थपतिं याजये" दितिश्रुते स्त्रैवर्णिकविषयतया संगता वधिकरणविरोधः स्पष्ट एव। एकार्थी भावानङ्गीकारे तु निरुक्तरीत्या लाघवा त्कर्मधारय स्यैव स्वीकार्यतया श्रुत्यर्थस्या नुपपन्नतया तत्संग **मनाय** तदारम्भः संगच्छते इति

अत्रेदं समाधानम् – स्वघटकपदघटित वाक्यदृष्टार्थमात्रविषयकतत्पुरुषीयशक्तिग्रहापेक्षया बहुव्रीहिसमासघटकपदसमुदायीयशक्तिग्रहस्य स्वघटकपदघटितवाक्यदृष्टार्थातिरिक्तार्थविषयकत्वेन बहिरङ्गत्वं बहुव्रीहेः। कर्मधारयसंज्ञकपदसमुदायजन्यशक्तिग्रहापेक्षया षष्ठीतत्पुरुषसंज्ञकतज्जन्यशक्तिग्रहस्य षष्ठ्याद्यर्थरूपाधिकविषयत्वेन गुरुत्वम्। अनया रीत्या त्रयाणामपि समासानामन्तरङ्गबहिरङ्ग भावः स्पष्ट एव। उक्तं च वैयाकरणमतोन्मज्जने दीक्षितैः–

"पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम्।।

इति। तथाच निषादस्थपति शब्दस्य शक्त्यात त्तदर्थबोधकत्वेपि समासभेदेन नानार्थकत्वेन कस्मिन्नर्थे तात्पर्यमिति संदेहे शक्तिग्रहलाघवानुरोधा त्कर्मधारये तात्पर्यं कल्प्यते, संभवति सामानाधिकरण्ये वैयधिकरण्यस्या न्याय्यत्वात्। तथाच कर्मधारये निषादस्याध्ययनसिद्धाया विद्याया आधानसिद्धाग्निमत्त्वस्य चा भावेपिशास्त्रप्रमाण्या त्तन्मात्रोपयोगिमन्त्रा स्तेनाध्यापनीया इति लभ्यते। एतदाशयकमेव निषादस्थ पत्यधिकरणम्, "स्थपति निषादः स्याच्छब्द सामर्थ्यात्" इति खलु जैमिनेः सूत्रम् (6-1-51-52) निषादस्थ पतिशब्दस्यान्तरङ्गत्वेन निषादरूपस्थपत्तौ शीघ्रोपस्थितिजनकत्वानुकूला त्सामर्थ्या च्छक्तिरिति तत्सूत्रार्थः। युक्तं चैतद् व्याख्यानम्। अन्यथाऽरुणाधिकरणे भट्टपादै र्बहुव्रीहौ शक्तिस्वीकारेण निषादस्थपतिशब्दस्य तत्रा लाक्षणिकत्वेन बहुव्रीह्य भावस्य सूत्रतोऽलाभेन तदधिकरणासंगतिः स्पष्टैव। अस्मदुक्तरीत्यातु निरुक्तरीत्या बहुव्रीहि समासस्य गुरूभूतत्वा त्तदनाश्रयणस्य सूत्रतो लाभेन तत्संगतिः स्पष्टैव। एवं च 'शब्दसामर्थ्या' दित्यस्य निषादशब्दस्य निषादबोध एव सामार्थ्यात् = शक्तेः। षष्ठीसमासेतु पूर्वपदस्य लक्षणेति न तस्य ग्रहणं, जघन्यत्वा दितिशबरस्वामिकृतं व्याख्यानमेव सूत्राननुगुणमिति स्पष्टमेव। अस्मद्रीत्या बहुव्रीहिव्यावृत्तेरपि सूत्रतो लाभेन तदधिकरणं सुसंगतं भवति।

अत्राधुनिकाः केचन मीमांसका एवं प्रत्यवतिष्ठन्ते—

''पदेन वर्णाविद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदाना मत्यन्तं प्रविवेको न कश्चन''

''निरस्तभेदं पदतत्त्वमेतत्'' (स्फोटसिद्धि-36 श्लो.) इति च सिद्धान्तमातस्थुषां पदघटकवर्णानामिव समासघटकपदानामनर्थकत्वे उपवर्णितः परिहारः कथं घटता मिति विचारयन्तु सुधियः। एतेन ''पर्यवस्यच्छाब्दबोध'' इत्यादि भूषणसारवचनं प्रत्यूढ-मिति।

अत्रेदं समाधानम् — वैयाकरणानां मते अखण्डं वाक्यमेव वाचकम्, न तत्र पदानि, तेषु च वर्णान सन्त्येव। अयमेव मुख्यः सिद्धान्त स्तेषाम्। परंतु व्याकरणस्य शब्दसाधुत्वप्रतिपादनाय प्रवृत्ततया वाक्यानामानन्त्या त्प्रतिवाक्यं संकेतग्रहासंभवात्तदन्वाख्यानस्य लघुनोपायेनाऽशक्यत्वा च्छास्त्रकाराः कल्पनया वाक्या त्पदानिप्रविभज्य पदेपि प्रकृतिप्रत्ययविभागकल्पनेन शास्त्रीयप्रक्रिया मुपपादयामासुः। तथाच ''विभाषा सुपो बहुच् पुरस्तात्तु'' 5-3-68 इति सूत्रे कैयटः ''अन्वयव्यतिरेकाभ्यां प्रकृति प्रत्ययाना मिहशास्त्रेऽर्थवत्तापरिकल्पना'' दिति। अर्थवत्सूत्रे 1-2-45 भाष्यकैयटयोरपि स्पष्टमेतत्। एवं चा खण्डस्फोटपक्षस्य मुख्यसिद्धान्तत्वेपि निरुक्तरीत्या कल्पनादशायां समासघटक पदानामप्यर्थवत्त्वसंभवा ''त्पर्यवस्यच्छाब्दबोधे'' त्यादि दीक्षितोक्तः परिहारः सुघट एव। एवं स्थिते वैयाकरणानां मुख्यसिद्धान्तपक्षमाश्रित्य तैरेव स्वीकृतायां कल्पनादशायां दूषणोद्भावनमाधुनिकमीमांसकाना मयुक्तमेव। अवस्था भेदेन तयो र्विरोधाभावात्। यथा सत्यज्ञानानन्दरूपस्या द्वितीयस्य ब्रह्मण एव पारमार्थिक सत्यत्वमिति परमसिद्धान्त मातस्थुषां निर्गुणब्रह्मवादिनां मविद्यादशायां प्रमाणप्रमेयादिव्यवहारा, स्तद्वस्माकमपीति न कोपि दोषः। अत एव ''तदस्या स्त्यस्मिन्निति मतुप्'' 5-2-82 इतिसूत्रे द्विगुबहुव्रीह्यो रन्तरङ्गबहिरङ्गभावविचारो महाभाष्यकारस्य संगच्छते। अत एवा वयवशक्तिसाचिव्येन समुदायशक्ति राश्रीयते, तेन नित्यं यद् घटत्वं तद्वान् घट इत्यर्थाभिप्रायेण नित्यघट इत्यादिसमासस्यैकार्थीभावेनापि न साधुत्वम्। एवं च निरुक्तरीत्या जैमिने र्निषादस्थपत्यधिकरण मस्मत्प्रदर्शितरीत्यैव सुघटनीयम्, न तु मीमांसाभाष्यकारादिप्रदर्शितरीत्या। एवमेव जैमिनिमहर्षिणा प्रदर्शितः श्रुतिलिङ्गवाक्यादीनां बलाबलविचारोपि कल्पितप्रकृतिप्रत्ययविभागमादायैव संगमनीयः। तस्यामेवावस्थायां प्रतिनिधेः श्रौतत्व मित्यादयो व्यवहाराः सूपपादाः। स्पष्टमधिकं शक्तिवादमञ्जूषायाम्।

किंचेदमप्यवगन्तव्यम् — ''नानृतं वदे'' दितिश्रुतिचोदितस्यानृतवर्जनस्य (दर्शपूर्णमासप्रकरणे) शुद्धक्रत्वर्थत्वसिध्द्यर्थं जैमिनीयव्याख्यातृभि राख्यातस्य कर्तृवाचित्वं निरस्य भावनावाचित्वं स्वीकृतम्। कर्तुर्वाच्यत्वे श्रुत्या पुरुषार्थत्वमेव स्यात्, प्रकरणाद्धि क्रत्वर्थत्वम्। तस्य च श्रुत्यपेक्षया दौर्बल्यं स्पष्टमेवेति तैर्निर्णीतम्।

तत्तु न युक्तम् — कर्तुराख्यात वाच्यत्वेपि तस्यगुणभूतत्वात्तेन निषेधस्य संबन्धाभावाच्छुद्धक्रत्वर्थत्वसिद्धान्तस्यो पपन्नत्वात्। किंच मीमांसकैर्भावनाया स्तिङ्वाच्यत्वं कर्तुर्लक्ष्यत्वं च स्वीकृतम्। तद्रीत्याश्रयणे प्रकरणोपस्थाप्यार्थापेक्षया श्रुत्युपस्थापित भावना लक्षितकर्तुः प्रथमत उपस्थित्या तस्य पुरुषार्थत्वमेव सिध्यति, प्रथमत उपस्थितत्वमेवहि श्रुतेर्बलवत्त्वे बीजम्। अतो भावनाया धातुवाच्यत्व माख्यातस्य कर्तृवाचित्वं चाश्रित्य श्रुतिप्रकरणाभ्या मनृतवर्जनस्य क्रतुयुक्तपुरुष धर्मत्वमेव युक्तम्। विरोध एव श्रुत्यादीनां बलाबलविचारस्य पवृत्तेः। अन्यथा ''जञ्जभ्यमानो ब्रूयान्मयिदक्षक्रतू'' इत्यत्र कतावपि जाञ्जाभ्यमानपुरुषसत्त्वा दविरुद्धाभ्यां कर्तृशानजन्तघटितवाक्यप्रकरणाभ्यां पुरुषसंस्कार मुखेन क्रतुयुक्तपुरुषधर्मत्वसिद्धान्तस्त्वदीय

उच्छिद्येत। किंच "अकर्म क्रतुसंयुक्तं संयोगा न्नित्यानुवादः स्यात्" 3-4-18 इति कर्त्रधिकरणे जैमिनेः पूर्वपक्षसूत्रम्। क्रतुसंयुक्तं = क्रतुप्रकरणपठितम्। अकर्म = कर्मनिषेधकं 'नानृतं वदे' दिति वाक्यम्। संयोगात् = (अनारभ्या धीतेन 'नानृतं वदे' दिति स्मार्तवाक्येन) समानानुपूर्वाकत्वात्। नित्यानुवादः = नित्यस्य स्मार्तनिषेधस्यानुवादः, स्यादितिति तत्सूत्रार्थः। तथाच क्रतावप्यनृतवदने वासोविपरिवर्तनादिकं स्मार्तमेव प्रायश्चित्तं, न तु श्रोत मिति तदाशयः। ततो "विधिर्वासंयोगान्तरा" 3-4-19 दिति सिद्धान्तसूत्रम्। संयुज्यते कारणमनेनेति करणव्युत्पत्त्या संयोगशब्दः प्रयोजनपरः। अन्यः संयोगः संयोगान्तरम्। मयूरव्यंसकादित्वात्समासः। सूत्रे वाशब्द एवार्थे। तथाच समानाकारत्वेपि प्रयोजनान्तरसत्त्वात् श्रुतिवाक्यं विधिरेव, न स्मार्तस्यानुवाद इति सूत्रार्थः। तथाच "भूर्भुवः स्व स्वाहे त्याहवनीये जुहोती" ति यज्ञाङ्ग भेषनिमित्तक माहवनीयहोमरूपं श्रौतमेव प्रायश्चित्त मिति तद्भावः। एवं चात्र जैमिनीये सूत्रे कर्तुर्वाच्यत्वावाच्यत्वप्रसक्तेरभावा त्तदवलम्बनेन व्याख्यातृणा मधिकरणरचनाऽयुक्तैव। अत एव वार्तिकव्याख्याता भट्टसोमेश्वरोपि तस्य क्रतुयुक्तपुरुषधर्मत्वमेव साधुमेने। अत्र भट्टपादैः संभवमात्रेणा नेके व्याख्याप्रकाराः प्रदर्शिताः। तत्र निर्भरो नास्त्येवेत्यलम्। एवं भावार्थाधिकरणारुणाधिकरणादिसमन्वयविषये वैयाकरणप्रदर्शितरीतिरेव साधीयसी, न शबरादिकृता सरणिः। फलसंबन्ध एकस्य पदस्य? उतानेकस्येति संदिह्य लाघवा देकस्यैवेति उत्सूत्रे प्रतिपदाधिकरणे निर्णीतम्। यदा एकस्य, तदा किं धात्वर्थस्य? उत उपपदार्थस्येति विचारे धात्वर्थस्यैव फलसंबन्ध इति सिद्धान्तप्रतिपादकं भावार्थाधिकरणे जैमिनेः सूत्रम्—

"भावार्थाः कर्मशब्दा स्तेभ्यः क्रिया प्रतीयेतैषह्यर्थो विधीयते" इति। कर्मशब्दाः = यजेतदद्याज्जुहुयादित्यादयः, ते भावार्थाः = प्राधान्येन क्रियार्थाः। क्रियाप्रधानमाख्यातम्" "भावप्रधान माख्यात" मित्युक्तेः, अत स्तेभ्यः क्रिया प्राधान्येन प्रतीयेत हि, प्राधान्यादेव एषोर्थः क्रियारूपः सर्वत्र विधीयते, न नामार्थः। तस्याश्च शीघ्रनाशित्वाद् द्वारमपूर्व स्वीकार्य मिति तदर्थः। नह्यनेन सूत्रेण भावनायाः प्रत्ययार्थत्वं, न धात्वर्थत्वमित्यर्थः स्पृश्यते। अत्र भट्टपादाः पौढिवादेनैव प्राधान्यादियुक्तिभि र्भावनायाः प्रत्ययार्थत्व मुत्सूत्र मेवोक्तवन्तः। अतस्त न्न श्रद्धेयम्। भट्टपादादीनां "प्रधानोपसर्जने प्रत्ययप्रकृत्यर्थौ" इति पणिनेः पूर्वेषां मुनीनांवचनं मूलम्। एतत्फलितार्थकथनमेव "प्रत्ययार्थः प्रधान" मित्युद्घोषः। वस्तुतस्तु प्राचीनानांवचनं पाणिनिना प्रत्याख्यातम्। तथाहि — "प्रधानप्रत्ययार्थव चनमर्थस्यान्यप्रमाणत्वात्" 1-2-56 इति पाणिनीयं स्मरणम्। अत्र "तदशिष्यं संज्ञाप्रमाणत्वा" 1-2-53 दिति सूत्रात् अशिष्य मित्यनुवर्तते। प्रत्ययार्थः प्रधान मितिवचनम्, अशिष्यं = नकार्यम्, कुतः? अर्थस्य विशेष्यत्वादिना बोधस्य अन्यप्रमाणत्वात् = तत्तद्व्युत्पत्त्यनुसारित्वा दिति तदर्थः। लोकव्यवहाराणामेव तत्र प्रमाणत्वं, नतुतदंशे शास्त्रव्यापार इति तद्भावः। एतेन — वैयाकरणै र्धात्वर्थमुख्यविशेष्यकशाब्दबोधं समर्थयद्भिः परिशीलनीयं "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वा" दितिपाणिनीयं स्मरणम्। इदं च सूत्रं धात्वर्थमुख्यविशेष्यकशाब्दबोधवादिनां वैयाकरणानां प्रतिकूलमेव। भूषणसारादौ कृतं व्याख्यान मुयुक्तम्। अस्मिन् सूत्रे नञोऽभावात्। यद्वा अध्याहार्यम्। अथवा "लिङ्गमशिष्यं लोकाश्रयत्वा" दितिपूर्वसूत्राद् 'अशिष्य' मिति पदमनुवर्तनीयमितिकियतीक्लिष्टकल्पनाशाब्दिकाना-मिति लिखन्तः केचनाधुनिक मीमांसकाः परास्ताः। किंच "लिङ्गमशिष्य" मितिवचनं न पाणिनेः, किंतु भाष्यकारस्य। एवं चातिदुर्बलं निस्सार मत एव पाणिनिना प्रत्याख्यातं 'प्रत्ययार्थः प्रधान' मितिवचनमेवाधारीकृत्य भावनायाः प्रत्ययवाच्यत्वं प्रति पादयन्तः शबरादयो मीमांसक का उपेक्ष्या एव।

तथा अरुणाधिकरणे अर्थैकत्वे द्रव्यगुणयोरैककर्म्या न्नियमः स्यात्" 3-1-12 इति जैमिनेः सिद्धान्तसूत्रम्। "अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाती" तिश्रुति रस्याधिकरणस्य विषयः।

द्रव्यगुणयोः = द्रव्यगुणवाचकशब्दयोः, अर्थैकत्वे = परस्परमभेदान्वयेनैकार्थबोधकत्वे सति, ऐककर्म्यात् = विशिष्टैकस्यैकक्रियासंबन्धात्, नियमः = परस्परावच्छेदरूपो नियम इति तदर्थः। लोकसिद्धाया आरुण्यविशिष्टैकहायन्याः क्रयणरूपक्रियानुवादेन विधाना न्न वाक्यभेदः। गुणवचनानां संनिहितविशेषपरत्वं तद्गतलिङ्गादिग्राहित्वं चेत्येष ह्येतदधिकरण सिद्धान्तः। एवं सिद्धान्तसूत्रार्थौपपत्तौ तत्र द्विस्त्रिश्चतुर्बोधाश्रयणेन तत्संगमनं नव्यमीमांसकाना मयुक्तमेव। न चैवं कारकाणां भावनान्वयनियमहानिरिति वाच्यम्। साक्षात् क्रियाजनकानां साक्षादेव भावनान्वयः, इतरद्वारा तज्जनकानांतु तदन्वयद्वारक एव तदन्वय इति नियमेन तदहानेः। एतेन 'गुणानां च परार्थत्वादसंबन्धः समत्वा' दिति न्यायविरोधो विशेषणविशेष्ययोः परस्परान्वये'' इत्यपास्तम्। उक्तरीत्या समत्वा भावात्। एषैव रीतिर्युक्ता, अन्यथाऽनेकज्ञानकल्पने गौरवात्, अननु भवाच्च। अतोविशेषणविशेष्ययोः परस्परमन्वयं स्वीकृत्य विशिष्टस्य भावनान्वयो युक्तः। अत एव ''तत्पुरुषे'' तुल्यार्थतृतीया सप्तम्युपमानाव्ययद्वितीयाकृत्याः'' 6-2-2 इति सूत्रस्थभाष्यसंमतः परमेण कारकेणकृतं-परमकारकेण कृतमिति परिनिष्ठतविभक्त्या समास उपपद्यते। अन्यथा विशेषणविशेष्ययोरुभयोरपित्वद्रीत्या करणत्वेन क्रियायामन्वयेन परस्परमनन्वयेन सामर्थ्याभावा त्तदनुपपत्तिरेवेत्याद्यन्यत्र स्पष्टम्।

किंचेदमवश्यमवगन्तव्यं विद्वद्भिः-यत् लःकर्मणि च भावे चाकर्मकेभ्यः'' 3-4-67 इतिसूत्रेण लकाराः कर्तृकर्मणोः शक्ता इति स्पष्टमेव ब्रवीति पाणिनिः, ''प्रधानेकर्तरि लादयो विधीयन्ते'' ''गौणे कर्मणिदुह्यादे'' रित्यादि भाष्यवार्तिककारौ वदतः। एवं च तिङां धर्मिबोधकत्वमेव मुनित्रय संमतम्। एवं सुप्स्वपि, अत एव ''कर्मणि द्वितीया'' 2-3-2 इत्यादि पाणिनेरनुशासनं भाष्यकृता धर्मिबोधकतापरतयैवव्याख्यातम्। एनं मुनित्रयसंमतमर्थ मपलप्यकृतिराख्यातार्थ इति वदन्ति नैयायिकाः। तेषा मयमाशयः — कर्तरि शक्तौ कर्तृत्वं शक्यतावच्छेदकम्। कर्तृत्वं च कृत्याश्रयत्वम्। सा च कृतिरेव। एवं च कृतीनां नानात्वाच्छक्यतावच्छेदकानन्त्यम्। अतः शक्तेरेकत्वं न सिध्यति। अतो वैयाकरणमत मयुक्तम् कृतेर्वाच्यत्वे कृतित्वं शक्यतावच्छेदकम्। तच्चैकं जातिरूप मिति लाघव-र्मिति। नव्यमीमांसका अप्येवमेवाशेरते।

तदयुक्तम्, पदार्थेऽनिर्णीते लाघवगौरवविचारस्यावश्यकतया प्रकृते महर्षिभिः पदार्थस्य निर्णीतत्वा त्तद्विचारस्या प्रसरात्। अतोऽत्र न्यायो दुर्बलः। किंच यद्रूपेण लघुगुरुरूपानादरेण लक्षणा स्वीक्रियते, तद्रूपं लक्ष्यतावच्छेदकम्। यथा गङ्गायां घोष इत्यादौ गङ्गातीरत्वेन लक्षणाग्रहे गङ्गातीरत्वम्। तथाच यथा लक्ष्यतावच्छेदकत्वस्य गुरुणि स्वीकार, स्तथा शक्यतावच्छेदकत्वस्यापि गुरुणि स्वीकारे बाधका भावः। किंच चैत्रः पचतीत्यादा वाख्यातस्य कर्तरि लक्षणा स्वीकृता मीमांसकैः। तत्र कृते र्लक्ष्यतावच्छेदकत्वव दस्मन्मते तस्याः शक्यतावच्छेदकत्वं निराबाधमेव। गुरुधर्मस्य शक्यतावच्छेदकत्वं न, लक्ष्यतावच्छेदकत्वं त्वस्त्येवेत्यत्र बीजाभावात्। वृत्तिज्ञानकार्यतावच्छेदकत्वस्य शाब्दत्वस्यो भयत्रापि तुल्यत्वात्।

किंच यो धर्मो न न्यूनवृत्ति र्नाप्यधिकदेशवृत्तिश्च तस्या वच्छेदकत्वं स्वीक्रियते। तेन नीलघट इत्यत्र नीलघटत्वं नावच्छेदकम्। तस्य पीतघटादाव भावेन न्यूनवृत्तित्वात्। घटवृत्त्यपिद्रव्यत्वं न तदवच्छेदकम्। तस्य पटादावपि सत्त्वेना धिकदेशवृत्तित्वात्। किंतु घटत्वमेव तदवच्छेदकम्। लघुधर्मस्या प्यतादृशस्य नावच्छेदकत्वम्। गुरोरपि तादृशस्यधर्मस्य तत्त्व मस्त्येव। एवं च तादृशोधर्मो लघुर्वा भवतु गुरुर्वा, परंतु तस्यावच्छेदकत्वमस्त्येव। भवद्भिरेव तथा निर्वचनात्। स्पष्टमधिकं तिङर्थवादमञ्जूषायां तदव्याख्याने ऽस्मदीये नागेशभावप्रकाशेच।

किंचा स्तुवा संभवति लघु गुरौनावच्छेदकत्वमिति नियमः। परंतु यत्र लघुगुरुरूपाभ्यां बोधोनिर्विवाद स्तत्रैव लघुधर्मावच्छिन्ने शक्तिः, गुरुधर्मावच्छिन्ने लक्षणा। यथा कम्बुग्रीवादिमा नित्यत्र कम्बुग्रीवादिमत्त्वेन घटत्वेन च रूपेण बोधस्य निर्विवादत्वात्तत्र कम्बुग्रीवादिमत्त्वापेक्षया लघुरूपत्वेन घटत्वावच्छिन्नेशक्तिः, कम्बुग्रीवादिमत्त्वेन बोधस्तु लक्षणया। पाचतीत्यादावाख्यातस्थले कृतिबोधस्तु सविवादः, धातुत एव तल्लाभात्। वैयाकरणमते कृतेरपिधातुवाच्यत्वात्। एवं च पचतीत्यादौ प्रत्यया त्कृतित्वेन कृतिबोधस्य विवादग्रस्ततयाऽत्र 'संभवति लघा' विति नियमस्याप्रवृत्त्या गुरुधर्मेप्यवच्छेदकत्वं निराबाधमेव।

किंचेदं गुरुतरभारोत्तोलनमिवशरीरस्यचित्तस्य वा नःखेदजनकम्। कर्तृपदे कृत्याश्रये शक्तिग्रहेण तत्र तादृशगौरवस्याननु भवात्। पचतीत्यत्र दर्शनान्तरीयमते कृतिर्विशेष्या, वैयाकरणमते सा विशेषणभूता। विशेष्यस्यानेकत्वेपि यथा न खेद, स्तथा विशेषणभूताया अवच्छेदिकाया अनेकत्वेपि न खेदः, कृतित्वेना नुगमः क्रियत इति चे, त्तावतापि विशेष्यभूतानां कृतीनां नानात्वं नापगतमेव। किंतु वाचोयुक्तिरेवावशिष्यते। अतः शक्यतावच्छेदकगौरवा त्कर्ता न वाच्य इति न कदापि वक्तव्यम्।

अत्र दर्शनान्तरीयाः प्रत्यवतिष्ठन्ते – पचतीत्यत्र पच् धातुः प्रकृतिः, आख्यातं चेति भागद्वय मस्ति। तस्य च पाकं करोतीति विवरणं दृश्यत इत्यत्र न कस्यापि विप्रतिपत्तिः। तत्र पाकमित्यनेन प्रकृत्यर्थः करोतीत्यनेन प्रत्ययार्थश्च विव्रियत इत्यपि निर्विवादम्। करोतिश्च यत्नार्थकः। एवं च यत्नार्थककरोतिना विव्रियमाणस्या ख्यातस्यापि यत्नवाचित्वम्। यत्नस्यापि धात्वर्थत्वे पाकमित्यनेनैव यत्नस्यापि विवरणसंभवा त्पार्थक्येन करोतिना विवरण मसंगतं स्यात्। अतः पृथक् करोतिना विवरणादाख्यातस्य यत्नवाचित्वा त्तदनुरोधेन "लःकर्मणी" त्यादिपाणिन्यनुशासनमपि तत्परतयैव व्याख्येयम्, कर्मणि = कर्मत्वे, कर्तरि = कर्तृत्वे लकारा इति तदर्थः। धर्मिबोधकस्यापि धर्मपरतया व्याख्यानं "द्व्येकयो र्द्विवचनैकवचने" 1-4-22 इत्यादौ शाब्दिकैरपि स्वीकृतमेवे-ति,

तत्तु अत्यन्तमसंगतम्। यत्नस्य धातुवाच्यत्वेपि पृथक् करोतिना विवरणस्य सूपपादत्वात्। पचतीत्यत्र फलव्यापारकृतिरूपाणामर्थानां मध्ये फलानुकूलफूत्कारादिव्यापारस्य पाक मित्यनेन कृतिरूपार्थस्य करोतिना च विवरणे बाधका भावात्। एकशब्दोपात्तानामर्थाना मेकेनैव शब्देन विवरणं कार्यमिति नियमा भावात्। तथाङ्गीकारेतु त्वन्मतेपि तथाविवरणस्या नुपपत्तिरेव। त्वद्रीत्या तिङर्थानां कालसंख्याकृतीनां मध्ये कृतेः कृञ् धातुना कालसंख्ययो स्तिप्रत्ययेन च विवरणा त्तदसंगतिः स्पष्टैव। किं चैकशब्दोपात्तानामर्थाना मेकेनैव शब्देन विवरणं कार्यमिति स्वीकारे प्रत्ययार्थः प्रत्ययेन, प्रकृत्यर्थः प्रकृत्यैव च विवरणीय इति नियमस्यापि न्याय्यतया प्रकृतिभूतकृञा विवरणा त्कृतिः प्रकृत्यर्थ इत्यस्मत्पक्ष एव सिध्यति। कृतेः प्रकृतिवाच्यतां बोधयितुमेव प्रकृतिभूतकृञा विवरणं क्रियते। नह्येवं प्रत्ययार्थस्यैव कृञाविवरण मित्यत्रासाधारणं प्रमाणं तव मतेऽस्ति। सर्वै राद्रियमाणे विवरणे करोतीत्यत्र कर्तृवाचकस्य तिङः सत्त्वेन तेनाप्यस्मत्पक्षसिध्द्या पारिशेष्या त्कृते र्धात्वर्थत्वमेव सिध्यति।

एवं च शक्यतावच्छेदकलाघवा द्यत्नार्थककरोतिना पृथग् विवरणाच्चाऽऽख्यातार्थः कृतिरेव। न कर्तृकर्मरूपो धर्मीत्यादिकं वदतां वचनप्रागल्भ्यं शिष्यदन्ध्रणमात्रमेव, न प्रमाण बद्धमित्यलमतिविस्तरेण।

एतावता प्रबन्धेन "गोतमजैमिनीयवचनव्याख्यातृभि र्दूषितान् सिद्धान्तानुपपत्तिभिः प्रकटये। तेषां वचो दूषये" इति कौण्डभट्टप्रतिज्ञा भूषण-मञ्जूषाग्रन्थावलम्बनेना स्माभिः प्रादर्शि।

वैयाकरणनागेशो निष्पक्षपातं शास्त्रार्थप्रत्यपीपदत्। यश्चार्थः परैः प्रतिपादितोपि युज्यते यदि तमर्थं सानन्दं परिगृह्णाति। यथा–

1. सर्वै दार्शनिकै राख्यातार्थसंख्यायाः कर्तृकर्मणो रन्वय आश्रीयते। तेच कर्तृकर्मणी वैयाकरणमते आख्यातवाच्ये, न्याये ते प्रथमान्तपदोपस्थाप्ये। सर्वतन्त्रस्वतन्त्रेण श्रीमता खण्डदेवेनतु चैत्रः पचतीत्यादौ कर्त्राख्यातस्थले आख्यातार्थसंख्यायाः स्वाश्रयसमवेतत्व संबन्धेन, पच्यते तण्डुलश्चैत्रेणेत्यादौ कर्माख्यातस्थले स्वाश्रयभूतकर्मवृत्तिफलप्रयोजाकत्वसंबन्धेना ख्यातार्थकृतावेवान्वयः प्रतिपादितः। एनमर्थं युक्ततमं मन्वानो नागेश भट्टोपि लघुमञ्जूषायां तिङर्थवादे दीक्षितादिमतेन संख्यायाः कर्तृकर्मणोर न्वयं प्रतिपाद्य ''परेतु लःकर्मर्णणीत्यनेनैकवाक्यता'' इत्यादिना महता प्रबन्धेन संख्याया भावनायामेवान्वयं निरूपयामास। तदुपष्टम्भकतया महाभाष्यकैयटहरिपुञ्जराजग्रन्थान् प्रादर्शयत्। सा च कृतिः खण्डदेवमते आख्यातवाच्या, नागेशमतेतु धातुवाच्येतित्वन्य देतत्।

2. गदाधरभट्टाचार्यप्रभृतिभि र्लिङादे रिष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्व चार्थ इति प्रतिपादितम्। दीक्षितकौण्डभट्टादिभि रिष्टसाधनत्वमेव लिङर्थः, नान्यादिति निरूपितम्। श्रीमान् खण्डदेवस्तु प्रवर्तना लिङर्थः, तयाच यागादाविष्टसाधनत्वमनुमीयते। भवति हि ''अयमत्र प्रवर्तातामित्याकारकाप्तेच्छोविषयत्व मिष्टसाधनत्वव्याप्यम्। अत स्तया तदनुमानम्। तथाच प्रवर्तनाया विधिस्थले आख्यातार्थकृतौ स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्यत्वसंसर्गेणान्वयः। ''न कलञ्जं भक्षये'' दित्यादि निषेधस्थलेतु लिङर्थस्य स्वविषयकज्ञानविशेषजन्यानुमितिजन्यस्व निरूपितकारणतावच्छेदकीभूतसंबन्धनाशकालीना भावप्रतियोगित्वसंसर्गेणा ख्यातार्थकृतावन्वय इति प्रतिपादयामास। नागेशोपि लघुमञ्जूषायां लिङर्थनिरूपणावसरे प्रवर्तनाया लिङर्थत्वं तया च स्वेविषये इष्टसाधनत्वाद्याक्षेपः, ततः प्रवृत्ति रित्यादिना दीक्षितमतनिराकरणपूर्वकं खण्डदेवमेवानुससार। खण्डदेवोक्तेष्वर्थेषु केषुचिद् विप्रतिपद्यते नागेश। तत्प्रदर्शनं तु ना स्मद्व्यापारविषयः।

एवं गदाधर भट्टाचार्यैः प्रदर्शितार्थेष्वपि एषैव रीति र्नागेशस्य। यथा –

1. द्वितीयार्थनिरूपणे मासमधीते इति वाक्यार्थनिरूपणे व्युत्पत्तिवादोक्तस्यार्थस्य सारं वर्णयति – व्यापकत्वं द्वितीयार्थः। तत्त्वं च त्रिंशत्त्ववन्निष्ठप्रतियोगिव्यधिकरणात्यन्ता भावप्रतियोगितानवच्छेदकावछिन्नत्वम् –

2. शक्तिवादे भट्टाचार्यै र्विशेषकाण्डे सर्वतद् इत्यादीनां केषाञ्चित्पदानां विशिष्य शक्ति र्विचारिता। तदीयां सरणिमाश्रित्य लघुमञ्जूषायां प्रातिपदिकार्थविचारे तेषामर्थो विचारितो नागेशेन। भट्टाचार्योक्तिष्वपि कासुचिद्विप्रतिपद्यते नागेशः।

एवमस्माभिः पदवाक्यप्रमाणशास्त्रेषु शाब्दबोधप्रक्रिया प्रतिपादका गन्थाः प्रादर्शिषत। तत्तच्छास्त्रार्थप्रदर्शनावसरे तत्तद्भूमिकां धृत्वैव स्वमतिशोधनं परमं प्रयोजनमभिसंधाय मया तत्रत्योविषयः सूक्ष्मरूपेण प्रदर्शितः। एषां शास्त्राणां मध्ये ''इदमेव श्रेष्टं नान्य'' दिति तुनकेनापि वक्तुं पार्यते। महानुभावैः खलु तानि निर्मितानि लोकानुजिघृक्षया। परंतु सर्वैरपि सर्वेष्वपि शास्त्रेषु ज्ञानं सम्पादनीयमेव, विना परस्परसाहाय्य मेकैकं शास्त्रं पदार्थनिर्णयाय न प्रभवतीति सार्वजनीनमेतत्। उक्तं च भर्तृहरिणा–

''प्रज्ञा विवेकं लभते भिन्नै रागमदर्शनैः।
कियद्वा शक्यमुन्नेतुं स्वतर्कमनु धावता''

– अनुपासितवृद्धानां विद्यानातिप्रसीदति इति''। सर्वैरपि पण्डितैः ''पदवाक्यप्रमाणपारावारपारीण'' बिरुदभाग्भि र्भवितव्यमित्याकाङ्क्षे।

एवंच भारतीयानां शास्त्रेषु शाब्दबोध प्रक्रियाप्रतिपादनं नाम मुख्योऽवयव इति पण्डितसमा जेषुयाप्रथा समजनि, ता मादाय तादृशग्रन्थनिर्माणेन पूर्वमीमांसाशास्त्रस्य पर्णत्वं समपादयत् खण्डदेवः। एतदेव वैशिष्टचं पार्थसारथ्याद्यपेक्षया खण्डदेवस्येति प्रागेवा वोचाम। तन्न विस्मर्तव्यम्।

अत्रेदं बोध्यम् – अस्य ग्रन्थस्य ''भाट्टरहस्य'' मित्येवनाम। अत एव ''उद्वीक्ष्यतां भाट्टरहस्यसारः'' इति ग्रन्थान्ते खण्डदेवोक्तिः संगच्छते। अत एवार्थवादाधिकरणादौ शम्भुभट्टैः ''इत्युक्तं गुरुचरणै र्भाट्टरहस्ये'' इत्यनेकश उक्तम्। प्रारम्भेच ''रहस्यं भट्टतन्त्रस्य'' इत्युक्तंग्रन्थकृता। तत्र भट्टपादानां तन्त्राख्यस्य मीमांसाशास्त्रस्य रहस्य मित्यर्थः। तावताऽस्य भाट्टतन्त्ररहस्य मिति नाम कृतमिति नैव वक्तुं पार्यते। विद्वल्लोकेपि ''भाट्टरहस्य'' मित्येव प्रसिद्धो व्यवहारोस्य ग्रन्थस्य। अन्यथा भाट्टदीपिकापि 'भाट्टतन्त्रदीपिकाशब्देन व्यवह्रियेत। एतेन सरस्वतीभवनस्थेन 2945 संख्यासहिते हस्तलिखिते पुस्तके भाट्टतन्त्ररहस्य मिति नाम उल्लिखितम्। अत स्तदेवास्य नाम-इत्याधुनिकाः परास्ताः। हस्तलिखितपुस्तकपाठापेक्षया अस्मत्प्रदर्शितार्थस्य युक्तत्वात्। अत आधुनिकैः कैश्चन मीमांसकविद्वद्भिः ''भाट्टतन्त्ररहस्य'' नाम्ना प्रकाशन मस्यायुक्तमित्यलम्।

अस्माभि र्भाट्टरहस्यं गुरुचरणानां ताता सुब्रह्मण्यशास्त्रिणां सविधे मञ्जूषादिभिः सह पठितम्। तत्समये ग्रन्थेस्मिन् व्याख्याया अभावेपि गुरूणां कृपया एतद्ग्रन्थार्थः मयि सम्यक् संक्रान्तः। तेषां शिक्षणवशेन बहुधा मननेन दृढीकृत श्च। मयागृहीतोर्थः स्वमतिशोधनाय ग्रन्थरूपेण स्थापनीय इति तत्काल एवा स्माकं मनीषा समजनि। परंतु मध्येमध्ये भूषणसार मञ्जूषादे र्व्याख्यानकरणस्यावश्यकता बभूव। तद्व्यापारानन्तरं पुनरपि भाट्टरहस्यव्याख्यानाय प्रवृत्तोस्मि। एतत्परिशोधनाय मया ग्रन्थत्रयं सुमुपलब्धम् –

1. **श्रीकांचीप्रतिवादिभयंकर अनन्ताचार्येण** A.D. 1900 संवत्सरे प्रकाशितम्। इदं च बहुषुस्थलेषु ग्रन्थपातेनाशुद्धम्।

2. **अनन्ताचार्येणैव** पुनरपि मुद्रितम्। अस्मिसंस्करणे केषुचित् स्थलेषु लघ्वी टिप्पणी संयोजिता। इदमपि ग्रन्थपातेना शुद्धमेव।

3. मीमांसारत्न ''**अं सुब्रह्मण्यशास्त्रिभिः**'' प्रकाशितम्। अत्र शास्त्रिचरणैः ''**विषम ग्रन्थिभेदिनी**'' नामिका टिप्पणी रचिता। 75 पृष्टै र्महती भूमिका च निर्मिता। परंतु भूमिकायां केचन विषयाः प्रतिपादिताः। तेतु न सुघटाः – एवं तै र्लिखितम् –

''आश्रये तु तिङः स्मृता इति वदतां वैयाकरणानां मते धात्वर्थविशेष्यःआख्यातार्थः कर्ता। पचति व्रजतीति प्रयोग स्तन्मते आपादयितुं शक्यते। पाककर्ता व्रजनाश्रय इति बोधस्य तन्मते संभवात्। अतः शाब्दिकानां मते पचति व्रजतीति प्रयोगापत्तिः कथं वारयितुं शक्यते?-इति

शाब्दिकानां मतेऽयं तदापत्ति वारणोपायः यत् ''आश्रयेतु तिङः स्मृताः'' इति सिद्धान्तं प्रतिपादयता दीक्षितेनैव ''तिङर्थस्तु विशेषण'' मित्युपसंहारे आख्यातार्थस्य कर्तुर्धात्वर्थव्यापारे विशेषणत्वं प्रतिपादितम्। अतो नेयमापत्तिः। एवं चोत्तरवाक्यं जानन्तोपि ते मीमांसका स्तदप्रदर्श्य केवलं ''आश्रयेतु तिङःस्मृताः'' इति पूर्ववाक्यं प्रदर्श्य परमते तदवलम्बनेन दोष मुद्भावयन्ति। केयं प्रतारणेत्यत्र पण्डिताः प्रमाणम्।

किंच ''आख्यातवाच्या आर्थी भावना'' साचकर्तारं विनाऽनुपपन्ना सती तमाक्षिपति। आक्षिप्तस्य कर्तुः शाब्दत्वसिद्धये आख्यातस्य कर्तरि निरूढलक्षणामभ्युपगच्छतां भाट्टमीमांसकानां मते पचति व्रजतीति प्रयोगो नापादयितुं शक्यते, यतो हितैः कर्तु र्भावनाविशेषणतया भान मङ्गीक्रियते। किंच विषयेऽस्मिन् तार्किका अस्मदनुकूला एवेति लिखन्ति।

तदत्यन्तमसंगतम् – भावनाया आख्यातवाच्यत्वस्यैवासिद्धेः। किंच कर्तरि लक्षणाभ्युपगमे तस्यैव भावनापेक्षया प्राधान्यापत्त्या तन्मते स प्रयोगोदुर्वारः। लक्षितस्य कर्तु र्भावनायां प्रकारत्व मितितु रिक्तं वचः। लक्ष्यार्थस्य शक्यार्थे विशेषणतायाः क्वाप्यदृष्टचरत्वात्। गङ्गादिपदशक्यस्य तल्लक्ष्ये विशेषणताया एव दर्शनात्। व्युत्पत्त्यन्तरकल्पनेतु गौरवम्। अतो मीमांसकमत एव तत्प्रयोगापत्ति र्वज्रलेपायते। तदनुसारिणो नैयायिका अप्ययुक्ताभिधायिन एव। एवं च नैयायिकान् साक्षित्वेन प्रदर्शनं "बाधेऽदृढेन्य साम्यात्किं, दृढे न्यदपि बाध्यता" मितिन्यायस्य विषयो भवत्येव। किञ्च नैयायिकान् साक्षित्वेन ग्रहणमयुक्तं तन्मते कृतेराख्यातार्थत्वेन तस्याः प्रथमान्तार्थेऽन्वयाङ्गीकारेण पाककृत्याश्रये व्रजन कृत्याश्रयस्याबाधितत्वेन तत्प्रयोगापत्तेस्तन्मते दुर्वारत्वात्। अत एव खण्डदेवेनापि तत्प्रयोगापत्तिर्दत्ता तन्मत इत्यलम्।

एव मनेकेषु वैयाकरण सिद्धान्तेषु दोषा भासान् प्रदर्शयामासुः। तेच सुपरिहरा एवेति सुधीभिराकलनीयम्।

परंतु मूले तत्रतत्र ग्रन्थस्य पातेन तत्संस्कृतो ग्रन्थोप्यशुद्ध एव। तथापि तत्तदधिकरणप्रदर्शनेन तत्रतत्र ग्रन्थार्थ प्रदर्शनेन च पाठकाना मुपकारो भवत्येव।

एवं स्थितेऽस्मत्संनिहितबन्धुभि र्न्यायवेदान्तपण्डितैः श्री गंटि सूर्यनारायणशास्त्रिभि र्वाराणस्यां महामहोपाध्याय-शास्त्ररत्नाकर-पण्डितसार्वभौम-मीमांसाकेसरि श्री वेङ्कटसुब्रह्मण्यशर्मणां चिन्नस्वामिशास्त्रिसमाह्वयानां सविधे पूर्वमीमांसाशास्त्र मधीतम्। तत्समये चिन्नस्वामिशास्त्रिभिरनन्ताचार्यसम्पादितं भाट्टरहस्यं स्वगुरुपरम्परानुसारेण संशोधितम्। अस्मद्भाग्यवशेन संशोधितः स ग्रन्थो स्माभिर्लब्धः। तथा श्रीशृङ्गेरीसंस्थान विद्वद्भिः वि-एस्. रामचन्द्रशास्त्रि महोदयैः स्वगुरुभिः संशोधितो ग्रन्थो मह्यं दत्तः। तथा स्मद्गुरुचरणैः पाठनकालेपि एष ग्रन्थः संशोधितः। एवंरीत्या बहुभि र्बहुधा संशोधितस्यास्य मूलग्रन्थस्य निजं स्वरूपं दोषराहित्येन निर्णीय गुरूणां कृपया भाट्टदीपिका – तद्व्याख्यान – भाट्टकौस्तुभव्युत्पत्तिवादशक्तिवादाख्यातवादशिरोमणि मञ्जूषाशाब्दतरङ्गिणी प्रभृति बहुग्रन्थ समीक्षणेन सुहृदां साहाय्येन महता प्रयत्नेन चास्माभि र्भाट्टरहस्ये "खण्डदेवप्रकाशो" व्यरचि।

**एतद्ग्रन्थमुद्रणाय MINISTRY OF EDUCATION द्रव्यसाहाय्यमकरोत्। तथा वेङ्कटेश्वरस्वामिकृपया ति.ति-देवस्थानकार्यनिर्वाहकै र्द्रव्यं दत्तम्। तथा श्रीश्रीश्रीजगद्गुरु श्रीमदभिनवविद्यातीर्थमहास्वामिभिस्तत्करकमलसंजातश्रीजगद्गुरु श्री भारती तीर्थस्वामिभि र्मत्कृतिस्वीकारपूर्वक धनमदायि। तथा एतैः द्रव्यं दत्तम्ः—**

Veda Sastra Parishad: 1. Hota Srinivasa Sastry

2. Remalla Suryaprakasa Sastry

Rotary Club: 3. Chebeyam Venkata Ramayya (Advocate)

4. Alamuri Parthasarathi Swamy
(Chiratapudi)

5. Karra Eswara Rao (Guntur)

6. Sitamma Suryanarayana Yugandhara Lakshmi Trust, (Guntur)

मत्प्रार्थनामङ्गीकृत्य आंग्लभाषायाम् Introduction लेखनेन मामानन्दयितृभ्यः श्री K. T. पाण्डुरङ्गीमहोदयेभ्यः कृतज्ञता मावेदयामि।

किंच मदीयग्रन्थविषये 'महोपकारस्मृतिं लिलिखुः श्रीविश्वनाथ गोपालकृष्णशास्त्रिणः। एते घनालङ्कार-घनचक्रवर्ति-वेदविद्यावाचस्पति-वेदसम्राडित्यादिबिरुदावलीविराजमानामानां कृष्ण यजुर्वेदेऽनन्ययालङ्कारस्यो दाहरणभूतानां श्री विश्वनाथजगन्नाथघनपाढिनां पुत्रा ''प्रवर्तितो दीप इव प्रदीपा'' दिति कालिदासोक्तिं सफलयन्ति। गोपालकृष्णशास्त्रिणो मन्निकटे भाष्यान्तं व्याकरण मधीत्य न्यायवेदान्तशास्त्रपारदृश्वनां श्री गोडासुब्रह्मण्यशास्त्रिणां समीपे नव्यन्यायशास्त्र मवयवान्त मपाठिषुः। एतेषां शास्त्रद्वयेपि पाण्डित्य मनितरसाधारणं संजातं पितृपादानां तपःप्रभावात्। वाक्यार्थसभासु शास्त्रद्वयेऽपि वाक्यार्थकरणे पाटवं चाधिकं समुपार्जितम्। क्रोडपत्रैःसह न्यायशास्त्रं स्वायत्तीचक्रुः शास्त्रिणः। एतेषां शास्त्रपाण्डित्यं सौशील्यं सत्प्रवर्तना माश्रितवात्सल्यं चेत्यादिसुगुण सम्पद माकलय्य श्रीगौतमीविद्यापीठसंस्कृतकलाशालाकार्यनिर्वाहकाः कलाशालाध्यक्ष्ये नियोजयामासुः। तैर्निक्षिप्तं महान्तं कार्यभारं यथाकालं यथावत् निर्वर्तयन्त एते ''अधृष्यश्चाभिगम्यश्च यादोरत्नै रिवार्णव'' इति महाकवे र्वचनस्यो दाहरणतामाप्नुवन्ति। सकलक्षेमस्थैर्यविजयाभयायुरारोग्यैश्वर्य प्रदानेनैनान् भगवान् पार्वतीपती रक्षत्वित्याशी राशासे।

एतद्ग्रन्थपरिशीलने proof पत्रशोधने च ममात्यन्त मुपचक्रतु र्ममान्तेवासिनौ 1. K. V. सोमयाजी, 2. Ch. S. S. नरसिंहमूर्तिश्च, अनयो रभिलषतार्थप्रदानेन श्रीवेङ्कटेश्वरोऽनुगृह्णात्वित्यभ्यर्थये भगवन्तं वेङ्कटनायकम्।

कालमनतिक्रम्य सकाले शोभनमुद्रणेन ग्रन्थस्य समाप्तिं प्रापितानां श्रीमति प्रिंटर्स् महोदयानां R. रामभद्रन् सहृदयाना मभिनन्दनं निवेदयामि।

अयमपरोविषयो वगन्तव्यः – स्वल्पे काले मुद्रणं सुन्दरं यथा स्यादिति चिन्ताक्रान्तोऽभवमहम्। तत्समये मम (Sister-in-law's son) चि. गन्नवरपु भास्कर रायः श्रीमति प्रिंटर्स् R. रामभद्रमहोदयान् प्रदर्श्य मम उपघ्न आसीत्। तस्मै सकल श्रेयांसि श्रीशः प्रदाय रक्षत्वित्याशीराशाशे। तद्गृहे ममानुकूलं भोजनवसत्यादिकं सुष्ठुकल्पितवत्या मम स्नुषायाः चि सौ चन्द्रकलायाः सौभाग्यायुरारोग्याविच्छिन्नसंतत्यादिकं चन्द्रकलावतंसो ददात्विति पुनरप्याशीराशासे।

एवं
खण्डदेवभावप्रकाशकारः
पेरि सूर्यनारायण शास्त्री

राजमहेन्द्रवरम्
18.3.83

अथ वैयाकरणानां मीमांसकानां नैयायिकानाञ्च बोधानुबन्धिनः सिद्धान्तभेदाः प्रदर्श्यन्ते।

**वैयारणासिद्धान्ता एते—**

1. धात्वर्थमुख्यविशेष्यकः शाब्दबोधः।
2. सकर्मकाणामिवाकर्मकाणामपि धातूनां फलव्यापारो भयार्थता।
3. कर्तृकर्मादयो धर्मिणः प्रत्ययवाच्याः।
4. लडाद्यर्थकालो धात्वर्थभावनान्वयी।
5. समासे एकार्थीभावः।
6. बोधकत्वं शक्तिः न संकेतः।
7. अपभ्रंशा वाचकाः।
8. लक्षणाख्यं वृत्त्यन्तरं नास्ति।
9. प्रादीनां चादीनाञ्च वैषम्यं नास्ति।
10. वाक्यार्थबोधकः स्फोटः।

**नैयायिकसिद्धान्ताः—**

1. प्रायः प्रथमान्तार्थमुख्यविशेष्यको बोधः।
2. सकर्मकाणामेव धातूनां फलव्यापारोभयार्थकता, नाकर्मक धातूनाम्।
3. कर्तृत्वकर्मत्वादि धर्म एव प्रत्ययवाच्यः, न धर्मी।
4. आख्यातार्थकाल, आख्यातार्थकृत्यन्वयी, यत्राख्यातेन कृतेर्न बोधः, तत्र जनाति, नश्यतीत्यादौ धात्वर्थान्वयी।
5. समासे वाक्यवत् व्यपेक्षैव, नैकार्थी भावः।
6. ईश्वरसंकेतः शक्तिः।
7. अपभ्रंशा न वाचकाः।
8. लक्षणा वृत्त्यन्तरम्।
9. प्रादयो द्योतकाः, चादयो वाचकाः।
10. स्फोटो न प्रमाणसिद्धः।

**मीमांसकसिद्धान्ताः—**

1. आख्यातवाच्यार्था भावनामुख्यविशेष्यकः शाब्दबोधः।
2. आख्यातार्थः काल-संख्यादिकमपि भावनायामेवान्वेति।
3. धात्वर्थस्यापि कारकत्वम् क्वचित्तस्य क्रियात्वव्यपदेशः लाक्षणिकः गौणो वा।
4. आख्यातवाच्या भावना। कर्तरि निरूढलक्षणा।
5. समासे शक्तिर्नास्ति, बहुव्रीहौ परं शक्तिरिति कौमारिलमतनुगाः केचित्।
6. कर्तृत्वकर्मत्वादिकमखण्डोपाधिरूपम्, लाघवात्।
7. प्रत्याय्य – प्रत्यायकभावरूपाऽभिधा शक्तिः, सा च पदार्थान्तरम्।
8. शक्तिः, लक्षणा, गौणी चेति तिस्रो वृत्तयः, व्यञ्जना नास्ति।
9. तत्तत्फलावच्छिन्नव्यापारवृत्तिपाकत्व – यागत्वादिकं तत्तद्धातुशक्यतावच्छेदकम्।
10. प्रादीनाम्, चादीनाञ्च द्योतकत्वम्, वाचकत्वं वेत्यत्र नाग्रहः।
11. वर्णात्मकं पदम् पदात्मकं वाक्यम्, न तु स्फोटः।

# शाब्दविचारोपयोगिनां मौलिकानां शास्त्रार्थानां तत्तन्मतभेदसूची

| शास्त्रार्थः | वैयाकरणाः | | मीमांसकाः | | नैयायिकाः | इतरे |
|---|---|---|---|---|---|---|
| | प्राचीनाः | नवीनाः | भाट्टाः | प्राभाकराः | | |
| 1. वाक्यार्थ बोधे कारणम् | स्फोटः | स्फोटः | पदैरभिहिताः पदार्थाः। | अन्वितार्थे शक्तानि पदानि। | तत्तत्स्वार्थे शक्तानि पदानि आकाङ्क्षादि सहकारेण पदार्थ स्मृति द्वारा वाक्यार्थ बोधे कारणम्। | — |
| 2. शक्तिः (अभिधा) | शब्दगतमनादि बोधकत्वं बोधजनक तावच्छेदकविषयिताकत्वे पर्यवसितम् | शब्दार्थतादात्म्ये नोपकृतः वाच्यवाचक भावाख्यः अतिरिक्तः सम्बन्धः। तादात्म्यस्यापि शक्त्युपकारकत्वात्। | पदपदार्थयोः स्वाभाविकः संबन्धः नित्यः। | पदानामर्थबोधे सामर्थ्यम्। पदानां स्वार्थे जातौ स्मारकशक्तिः। अन्वितेऽर्थे आनुभाविकी शक्तिः। | अवश्यज्ञेयः समयः संकेतः। नित्यः ईश्वरसंकेतः शक्तिः अनित्यः आधुनिकसंकेतः परिभाषा। संकेतः इच्छा | बोधानुकूलशक्तिमत्पदस्य ज्ञानं संस्कारो वा अभिधा इति काव्य प्रदीपकाराः। शक्त्या प्रतिपादकत्वमभिधेति वृत्तिवार्तिककृतः। |
| 3. एकार्थी भावः | समासे जहत्स्वार्थारूप एकार्थीभावः। व्यपेक्षा रूपा अजहत्स्वार्था वाक्य एव। | एकार्थीभावे जहत्स्वार्था, अजहत्स्वार्था चेति पक्षद्वयम्। व्यपेक्षावादो वाक्ये। | वाक्ये इव समासेऽपि व्यपेक्षैव, नैकार्थीभावः। | — | शक्तिःपदमात्रवृत्तिः, समासे पदसमुदाये न शक्तिः। | — |
| 4. लक्षणा | सर्वे सर्वार्थवाचकाः। लक्षणावृत्तिर्नास्ति। प्रयोगप्राचुर्यतद भावाभ्यां शक्तिरिति लक्षणेति च व्यवहारः। | सर्वेषां शब्दानां सर्वार्थवाचकत्वात् शक्यत्वेन प्रसिद्धान्य बोधौपयिकः व्यक्ति विशेष बोधौपयिकश्च शक्तिविशेषः | वाक्यार्थबोधानुकूलः पदार्थसंबन्धः। अन्वय निष्ठं पदार्थप्रति योगिकत्वं लक्षणेति, वाक्यार्थः लक्ष्यः इत्युच्यते। | वाक्यार्थान्वयिगत पदार्थसंबन्धः। वाक्येऽपि लक्षणास्ति। | शक्यसम्बन्धः। पदमात्रवृत्तिः। | अर्थगतः बोधानुकूलः शब्दे आरोप्यते। लक्षणा आरोपिता क्रिया इति काव्यप्रकाशकाराः मुख्यार्थ संबन्धेन प्रतिपादकत्वमिति वृत्ति वार्तिककाराः। शक्यादशक्योपस्थितिरिति अशक्ये तात्पर्यमिति च नैयायिकैकदेशिनः। |
| 5. लाक्षणिक बोधः। | — | शक्यतावच्छेदक गङ्गात्वादि लक्ष्य तीरादि बोधः आहार्यारोपः। | — | — | पदात् लक्ष्यतावच्छेदकः रुपेणोपस्थितस्य तेनैव रूपेण शाब्दबोधः | लक्षणया तीरत्वेनोपस्थितस्य गङ्गात्वेन शाब्दबोध इति रस गङ्गाधरकाराः। |

| | | | | | | |
|---|---|---|---|---|---|---|
| 6. व्यञ्जना | | शब्दतदर्थादि साधारणः व्यापारविशेषः। | | व्यङ्ग्याभिमतेऽपि शब्दस्याभिधैव इषोरिव दीर्घदीर्घतरो व्यापारः। | शक्त्या, लक्षणया, मनसा वा व्यङ्ग्याभिमतस्यार्थस्य प्रतीतिः। न व्यञ्जना वृत्तिरस्ति। | काव्यजीवातुरसप्रतीतये शब्दार्थ साधारणी व्यञ्जना आवश्यकीति आलङ्कारिकाः। |
| 7. सुबर्थः | आश्रयः, अवधिः उद्देश्यः सम्बन्धश्च। अभेदेन प्रकृत्यर्थान्वितः सुबर्थः धात्वर्थेऽन्वेति। शक्तिपक्षे आश्रयत्वादिकं सुबर्थः। | अखण्डकर्मत्वादमान् विशेषण विशेष्यभावश्च द्वितीयादिद्योत्यः। पञ्चकं प्रातिपदिकार्थः। कर्मीभूत ग्रामादिः सुबन्तार्थः धात्वर्थान्वयी। | अखण्डं कर्मत्वादिकं सुबर्थः। तत्रैव सुबर्थ संख्या अन्वेति। सुबर्थः परम्परासम्बन्धेन भावनायामन्वेति। | – | कर्मत्वाधेयत्वपर्यवसितं द्वितीयार्थः साक्षात्संबन्धेन धात्वर्थफलान्वयी। सुबर्थ संख्या प्रकृत्यर्थे विशेषणम्। | – – |
| 8. धात्वर्थः | फल, व्यापारश्च पृथक् धात्वर्थः। | फलावच्छिन्न व्यापारः व्यापारावच्छिन्न फलं वा धात्वर्थः। | फलावच्छिन्न व्यापारः धात्वर्थः कृतिर्न धात्वर्थान्तिभूता। | फलमात्रं धात्वर्थः। विध्यतिरिक्तस्थले लडादौ कालः संख्या चाख्यातार्थः। | सकर्मकधातूनां फलावच्छिन्न व्यापारोऽर्थः। फलं व्यापार श्चार्थः इति खण्डशक्तिपक्षः। कृतिः न धात्वर्थः। अकर्म काणां व्यापारमात्रमर्थः। | फलमात्रं धात्वर्थः इति मण्डनमिश्राः। व्यापारमात्रं धात्वर्थ इति प्राचीन नैयायिकाः। |
| 9. तिङर्थः | आश्रयः। धात्वर्थे विशेषणम्। | अखण्डकर्तृत्वादि शक्तिमान्। | कृतिः भावना धात्वर्थस्य विशेष्यभूता। निरूढालक्ष्यः अखण्डकर्तृत्वादिमानपि भावनायमन्वेति। | – निरूढलक्ष्यः प्रथमान्तार्थे | कृतिः शक्यार्थः। आश्रयत्वं प्रतियोगित्वञ्च विशेषणम्। | व्यापारः इति मण्डनमिश्राः |
| 10. लकारार्थकालः | धात्वर्थान्वयी | | तिङर्थभावनान्वयी। | – | तिङर्थकृतौ, आश्रयत्वादेः तिङर्थतास्थले धात्वर्थे चान्वेति। | – |
| 11. लिङर्थः | इष्टसाधनत्वम् | प्रेरणात्वरूपा खण्डधर्मवान्। | प्रवृत्यनुकूलो व्यापारः प्रवर्तना। | नियोगः | बलवदनिष्टाननुबन्धित्व सहितमिष्टसाधनत्वं कृतिसाध्यत्वञ्च। | – |
| 12. वाक्यार्थबोधे मुख्यविशेष्यः। | तिङन्ते सर्वत्रापि व्यापार। मुख्यविशेष्यकबोधः, कर्म कृदन्तस्थले फल विशेष्यक बोधः। नञ्समभिव्याहारे नञर्थाभावविशेष्यक बोध इति कौण्डभट्टः, तन्मते अभावो नञर्थः | कर्त्राख्याते व्यापार विशेष्यक बोधः। कर्माख्याते फलविशेष्यक बोधः। नञ्समभिव्याहारे दीक्षितनागेशयोः मते व्यापारमुख्यविशेष्यक एव बोधः, आरोपितत्वं नञर्थः। | आख्यातार्थ भावना। | – | प्रायः प्रथमान्तार्थः। क्वचित् निपातार्थः, अन्यत्र धात्वर्थः, अपरत्र आख्यातार्थश्च। | |

श्री गणेशाय नमः

**श्रीखण्डदेवप्रणीतम्**

# भाट्टरहस्यम्।

''खण्डदेव भावप्रकाश'' व्याख्या सहितम्

**स्मृत्वा स्मृत्वा मुरारातिं तत्प्रसादावलम्बनात्।**
**रहस्यं भट्टतन्त्रस्य विशदीकर्तुमीश्महे।।1।।**
**यज्ज्ञाना ज्जैमिनीयोक्तिः स्फुटीभवति तत्त्वतः।**
**तद्रहस्यं खण्डदेवः प्रकाशयितु मुद्यतः।।2।।**

---

श्री गुरुभ्यो नमः

पेरि सूर्यनारायण शास्त्रिणा विरचितः

## खण्डदेवभावप्रकाशः

**प्रथमो भागः**

श्रुत्यन्तगम्यं सर्वस्य हेतुं मायिन मीश्वरम्।
सत्यज्ञानानन्दरूपं ध्यायामि ब्रह्म निर्गुणम्।।1।।

श्रीमेधादक्षिणामूर्तिं वटमूलनिवासिनम्।
जगतः प्रकृतिं वन्दे मायिनं विभुमीश्वरम्।।2।।

कामान् संपूरयिष्यामि मच्छिष्याणां कलौ युगे।
इति प्रतिज्ञां कुर्वन्तं वेङ्कटेश्वरमाश्रये।।3।।

चन्द्रशेखरभारत्या हस्ताज्जातान् सुधीमणीन्।
अभिनवविद्यातीर्थान् प्रणमामि सदा गुरून्।।4।।

विद्यातीर्थकरोद्भूतं प्रमाण-पद-भूषणम्।
मीमांसाद्वयनिष्णातं भारतीतीर्थ माश्रये।।5।।

वन्दे भिनवविद्या श्री भारतीतीर्थरूपिणौ।
शृङ्गेरीदक्षिणाम्नाय शारदा पीठनायकौ।।6।।

तुङ्गातरङ्गिणीतीरपूताश्रमनिवासिनोः।
वेदाशास्त्रसमुद्धर्त्रोः स्वामिनो रस्तु मङ्गलम्।।7।।

आर्यः प्रसादो[1] धर्मात्मा वेङ्कटेश्वर सत्प्रभोः।
स्तुत्यस्य कृपयां भूयाद्भाजनं सर्वसम्पदाम्।।8।।

स्वतन्त्र भारतो देशो गान्धिनाक्षमयाऽऽर्जितः।
नेहूबहद्दुरुशास्त्रिभ्यां लालितः परया मुदा।।9।।

इन्दिरागान्धिबाहुभ्यां पाल्यमानो निरीतिकम्।
चैनाभिजनयोधानां जेता संग्राम मूर्धसु।।10।।

[1] Sri P. V. R. K. Prasad, I.A.S., Executive Officer, T. T. Devasthanams, TIRUPATI, A. P

वेदशास्त्र पुराणानामाकरः शुभकर्मणाम्।
धर्मेण रक्षन् जयतु प्रजाः शास्त्रा भिवर्धकः।। 11।।

गौतमान्वयसंभूतः पेरि वंशाब्धि चन्द्रमाः।
सर्वेश्वरसुतोधीरः सोमदेव्यास्तु गर्भजः।। 12।।

सोमदेवीसमाश्लिष्टवामाङ्गो बहुशास्त्रवित्।
जैमिनीये च काणादे पाणिनीये सुविस्तृते।। 13।।

शब्दखण्डे बहुविधे कृत भूरिपरिश्रमः।
पदवाक्यप्रमाणज्ञः सूर्यनारायणः सुधीः।। 14।।

रहस्यं भट्टतन्त्रस्य विवृणोति यथा मति।
यद्यप्यत्यन्तगम्भीरः खण्डदेव वचःक्रमः।। 15।।

तथापि महतो यत्नाद् बहुग्रन्थ समीक्षणात्।
गुरुपादाम्बुजध्यानसलब्धज्ञानवैभवात्।। 16।।

खण्डदेवकृतिं गुर्वीं विशदीकर्तुमीश्महे।
मुदं तनोतु विदुषां प्रकाशः कृपया हरेः।। 17।।

मीमांसकमते विध्यर्थाख्यातार्थ धात्वर्थ सुबर्थ निरूपण पूर्वकं भाट्टमतसम्बन्धि शाब्दबोध प्रक्रिया व्युत्पादनपरं भाट्टरहस्य नामकं प्रकरणमारभमाणः श्रीमान् खण्डदेवो निर्विघ्न परिसमाप्तये कृतस्य श्री कृष्ण स्मरण रूपस्य मङ्गलस्य शिष्या अप्येवं कुर्युरिति शिष्य शिक्षायै निबन्धनं कुर्वंश्चिकीर्षितं प्रतिजानीते **स्मृत्वा स्मृत्वेति** पुनः पुनः स्मृत्वेत्यर्थः। स्मृधातोः समान कर्तृकयोः पूर्वकाले आभीक्ष्ण्ये क्त्वा, द्विर्भावश्च, मुरारातिं = मुरस्या सुरस्य, अरातिं = शत्रुं श्री कृष्णम्, तत्प्रसादावलम्बनात् = श्री कृष्णानुग्रह धारणात्। प्रभाकरमत व्युदासायाह **भट्टेति** कुमारिलभट्टसिध्दान्तप्रतिपादक पूर्वमीमींसाशास्त्रस्य, रहस्यं = निगूढमर्थम्। अत एवाह – **विशदीकर्तुमिति** अविशदं विशदं कर्तुं। निगूढं स्थित एवार्थो जिज्ञासूनां स्पष्टप्रतिपत्त्यर्थं विशदीक्रियते, नेयं स्वकपोलकल्पनेत्याशयः। ईश्महे = समर्था भवामः।[1] अत्र ग्रन्थे विशदीकरिष्यमाणं रहस्यमेतत् - यत्- लोकवेद साधारण्येन लिङर्थः प्रवर्तना, तया इष्टसाधनत्वादिकमनुमीयते। विषयिताविशेषो लिङादिपदशक्यतावच्छेदकः। कृतिमुख्यविशेष्यकत्वमेव भट्टसंमतम्। लक्षणावृत्यतिरिक्ता गौणी। आख्यातस्य कृतिवाचकत्वम्। तत्र कर्त्रादौ लक्षणा, कर्माख्यतस्यापि भावनावाचकत्वम्, कारकाणां भावनायामेवान्वयो न धात्वर्थे। धात्वर्थस्य कर्मत्वकरणत्वान्यतर संबन्धेन भावनायामन्वयः। आख्यातस्य करोति समानार्थकतया तदर्थ भावनाया अपि एक कर्मकत्वनियमः, अत एवोद्देश्यानेकत्वप्रयुक्तवाक्यभेदो न, धातुः सकर्मको वा अकर्मको वा भवतु। आख्यतवाच्या भावना तु नित्यं सकर्मिका। नामार्थानां भावनायामेवान्वयः, न तु तेषां परस्परमन्वयः, शेषषष्ठचर्थस्यापि भावानायामेवान्वयः। दम्पत्योः कर्तृत्वमखण्डोपाधिरूपम्। भावाख्या तस्यापि कृतिबोधकत्वम्। ज्ञाधातोर्ज्ञानजन्या ज्ञेयनिष्ठा ज्ञातता फलमर्थः, तदाश्रयत्वेन घटादीनां मुख्यमेव कर्मत्वम्। "सुब्विभक्तौ न लक्षणे" त्यस्य न सार्वत्रिकत्वम्, कारकाणां निपाततद्धित बोध्यार्थेप्यन्वय इत्यादि।

एतद्रहस्य ज्ञानादेतन्मूलभूतं जैमिनीयं शास्त्रं सुज्ञातं भवतीत्याह – **यज्ज्ञानादिति** यद्रहस्य

[1] अत्र "रहस्यं भट्टतन्त्रस्ये" त्युक्तिमात्रेणास्य ग्रन्थस्य नाम "भाट्टतन्त्ररहस्य" मित्यर्थो न लभ्यते, किं त्वस्य "भाट्टरहस्य" मित्येव, भाट्टदीपिकाव्याख्याने पण्डितलोके च तेनैव नाम्नाऽस्य प्रसिद्धिः। अन्यथा भाट्टदीपिका ग्रन्थोपि भाट्टतन्त्रदीपिकाशब्देन व्यवह्रियते।

ज्ञानादित्यर्थः। जैमिनीयोक्तिः = द्वादशलक्षणी, तत्त्वत = याथार्थ्येन। **खण्डदेव इति।** स्वनामोत्कीर्तनं कीर्त्यर्नवन्यर्थम। न च "आत्मनामगुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामो न गृह्णीयाज्ज्येष्ठा पत्यकलत्रयो" रिति स्मृतिविशेधादिदमयुक्तमिति वाच्यम्। "श्राध्देविवाहे सङ्कल्पेऽथापत्कालादिष क्वचित्। स्वनामग्रहणं कुर्वन् श्रेयस्कामो प्युदोषभागि ति तदपवादस्मृत्यन्तरे आदिपदेन प्रतिज्ञायाः संग्रहेण प्रतिज्ञावाक्यधटकतया स्वनामग्रहणे दोषाभावात्। स्पष्टमधिकमन्यत्र।[2]

भट्टतन्त्रार्थावबोधनोपयोगिनो निगूढाः पदार्था विषयाः, तज्ज्ञाने जैमिनिप्रतिपादितानुष्ठानोपयोगि धर्माधर्मज्ञानं प्रयोजनम्। तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावः संबन्ध इत्यनुबन्धचतुष्टय मनेन श्लोकद्वयेन बोध्यते।।

**तत्रतावद् द्वादशलक्षण्यां धर्माधर्माविव जैमिनिनाऽनुष्ठानोपयोगितया विचारितौ। यद्यपि धर्माधर्मा वदृष्टविशेषात्मकौ, न क्रियारूपौ। अत एव** "धर्मः क्षरति कीर्तना" **दित्यादौ वैशेषिकतन्त्रे च** क्रियाजन्यादृष्टे **धर्माधर्म शब्दप्रयोगः, तथापि** "धर्मस्त्वनुष्ठितः पुंसा" **मित्यादौ तज्जनकविहितनिषिद्धक्रियादावपि तच्छब्दप्रयोगात् ताविह प्राधान्येन विचार्येते।**

प्रतिज्ञातं रहस्यार्थं निरूपयन् पूर्वमीमांसाशास्त्रस्य प्रमेयभूतौ धर्माधर्मौ विचारयति - **तत्रेति** प्रतिज्ञातार्थ सम्बन्धिन्यामित्यर्थः, तावदिति निपातो वाक्यालङ्कारे, **द्वादशलक्षण्यामिति,** मीमांसाशास्त्रे लक्षणशब्दः प्रमाणाध्याययोर्दृष्टः— यथा - "चोदनालक्षणोऽर्थो धर्मः" "अथातः शेषलक्षण" 3-1-1 मित्यादौ। प्रकृतेऽध्यायपरः, द्वादशानां लक्षणाना = मध्यायानां समाहारः, द्वादशलक्षणी = द्वादशाध्यायी, तस्यां पूर्वमीमांसायामित्यर्थः, **धर्माधर्माविति** यद्यपि पारमार्षं सूत्रम्। "अथातो धर्मजिज्ञासे" ति धर्मपदघटितमेव, तथापि तत्रत्यं धर्मपदमधर्ममप्युपलक्षयति, अन्यथा धर्ममात्रस्यैव विचारविषयत्वे निषेधाध्यनज्ञादीनां तदविषयत्वात्तदध्ययनस्यादृष्टार्थत्वमेवापद्येत उभयोरपि विचारविषयत्वे तु विधिसंनिहितार्थवादादीनां विध्येकवाक्यतया धर्मविचारोपयोगसंभवेन तदध्ययनस्य दृष्टार्थत्वमिव निषेधाद्यध्ययनस्यापि दृष्टार्थत्वं सेत्स्यति, अत एव षष्ठाद्यध्यायेषु "न कलञ्जं भक्षये" दित्यादि निषेधवाक्यार्थविचारोपि संगच्छते। शास्त्रदीपिकायां पार्थसारथिमिश्रा "धर्मग्रहणं चोपलक्षणार्थम् - अधर्मस्यापि हानाय जिज्ञास्यत्वात् - अकारप्रश्लेषेण वा सूत्रमधर्मजिज्ञासायामपि व्याख्येयमित्याहुः। अत्र द्वितीयपक्ष एव मिश्राणां संमत इति प्रभावली ग्रन्थतोऽवगम्यते, मूले "तत्र तावद् द्वादशलक्षण्यां धर्माधर्माविवे" त्येव शब्दपाठो दृश्यते, परंतु एवशब्दरहितः पाठ इति प्रभावलीतः प्रतीयते, तत्रहि - एतदभिप्रायेणैव "तत्र द्वादशलक्षण्यां धर्माधर्मौ विचारिता" वित्युक्तं पूज्यपादैर्भाट्टरहस्ये" इत्युक्तम्। **अनुष्ठानोपयोगितयेति** अनुष्ठानोपयोगि विचार इति भावः, **विचारिताविति** प्रथमाध्याये धर्मप्रमाणम्। द्वितीये धर्माणां परस्परं भेदः। तृतीये किं कर्म कस्यकर्मणोऽङ्ग मित्याङ्गाङ्गिभावः, चतुर्थे किं स्वतन्त्रफलसाधनम्। किं वा कर्मसमृध्धर्थमित्यादि क्रत्वर्थ पुरुषार्थविचारः, पञ्चमे कस्य कर्मणोऽनन्तरं किमित्यादि धर्मगत क्रमविशेषविचारः, षष्ठे कस्मिन् धर्मे को ऽधिकारी, को वाऽनधिकारी त्याद्यधिकारि विचारः, सप्तमे धर्मस्य प्रकृति गतस्य विकृतावतिदेशः सामान्यतः, अष्टमे स एव विशेषतः, नवमे ऊहः दशमे बाधः, एकादशे तन्त्रम्, द्वादशे प्रसङ्ग इत्येवं सर्वेष्वप्यध्यायेषु धर्मकथैव विद्यते, जिज्ञासासूत्रेपि साऽस्त्येवेति शास्त्रसङ्गतिर्बोध्या, एवं च "अथातो धर्मजिज्ञासे" 1-1-1 त्युपक्रम्य "अन्वाहार्ये च

[2] यज्ज्ञाना दित्या दिर्द्वितीयश्लोकः श्रीकांची प्रतिवादिभयङ्करम् अनन्ताचार्यैः परिशोधिते भाट्टरहस्य ग्रन्थे नास्ति, परंतु मीमांसारत्न अव सुब्रह्मण्यशास्त्रिमहोदयैः संपादिते भाट्टरहस्ये समुपलभ्यते, युज्यते चाय श्लोक इत्यस्माभिरपि संनिवेशितो व्याख्यातश्चेति बोध्यम्।

दर्शनात्'' 12-4-47 इत्यन्तेन ग्रन्थेन निरुक्तरीत्या महर्षिणा तौ विचारितौ। तथा चाधिकरणमालायां श्लोकौ—

''धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः।
प्रमाण भेद-शेषत्व-प्रयुक्ति- क्रमसंज्ञकाः।।
अधिकारो - तिदेशश्च सामान्येन - विशेषतः।
ऊहो-बाधश्च - तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्'' इति।।

तथा च पूर्वमीमांसायां द्वादश 12 अध्यायाः, षष्टिः 60 पादाः, 895 अधिकरणानि, 2745 सूत्राणि च सन्ति। एतत्सर्वं द्रव्यगुण क्रियादिरूपधर्मविचारकमिति बोध्यम्। **यद्यपीति** वेदविहितनिषिध्दकर्म जन्यादृष्टपरत्व धर्माधर्मशब्दयोः स्मृतिषु दृष्टम्। तदे तद्ग्रन्थोत्थितिमूलम् अदृष्टविशेषात्मकौ = यागादि क्रियाजन्यशक्तिविशेषात्मकापूर्वपरौ। न क्रियारूपौ = न क्रियादिरूपौ। तथाच = अनुष्ठानोपयोगितया विचारिता, वित्ययुक्तमिति भावः। अत एव = धर्माधर्मशब्दयोरदृष्ट विशेषात्मकत्वादेव। **धर्मः क्षरतीति** अस्य च—

''कर्मनाशाजलस्पर्शात् करतोयाविलङ्घनात्।
गण्डकी बाहुतरणा'' दिति पूर्वचरणत्रयं बोध्यम्।।

कर्मनाशाप्रभृतयो नदीविशेषाः, तेषां यथाक्रमं करस्पर्शाद्विलङ्घनाद्बाहुतरणोद् धर्मः क्षरति, तथा मयैष धर्मः कृत इत्यादिरीत्या कीर्तना = दुच्चारणादपि धर्मः क्षरतीति तदर्थः। इत्यादावित्यादिपदेन ''प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि'' इत्यादेर्ग्रहणम्। **वैशेषिकतन्त्रे इति** काणादे इत्यर्थः। यदाहुः - ''धर्माधर्मावदृष्टं स्या'' दिति। अयमर्थः- यागादिव्यापारतया धर्मः (अपूर्वम्) कल्प्यते। अन्यथा यागादीनां चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वं न स्यात्। उक्तं चाचार्यैः कुसुमाञ्जलौ ''चिरध्वस्तं फलायालं न कर्माऽतिशयं विने'' ति, चिरकाले नष्टं कर्म, अतिशय = मपूर्वं विना, फलाय फलजननाय नालं = न समर्थमिति तदर्थः। यागादिसत्कर्मभ्यो धर्मः, निषिद्ध कलञ्जभक्षणादितोऽधर्मश्च सम्पद्यते, तौ चापूर्वरूपौ, न क्रियादिरूपाविति। तदाह- **क्रियाजन्यादृष्टे इति** वेदविहितनिषिद्ध क्रियाजन्येऽपूर्वरूपेऽर्थे इत्यर्थः। अयमर्थः- धर्मोऽपूर्वमेव, न यागादि क्रियारूपः, अन्यथा कर्मनाशाजलस्पर्श कीर्तनादिना धर्मस्य नाश्यत्वं न स्यात्, न हि तेन यागादेर्नाशः प्रतिबन्धो वा कर्तुं शक्यते, जलस्पर्शादितः पूर्वमेव यागादेरुत्पन्नत्वात्,[1] योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्न गुणनाश्यत्वादिच्छात्मकयागस्य तृतीयक्षण एव नष्टत्वात्।[2] तस्याशुविनाशित्वेन नाशकारणानपेक्षत्वाच्च, अधर्मोऽपि अपूर्वमेव, अन्यथा प्रायश्चित्तादिना तस्य नाश्यत्वं न स्यात्। न हि तेन ब्रह्महत्यादीनां नाशः प्रतिबन्धो वा विधातुं शक्यते। अतो भवत्संमतधर्माधर्मासिद्धिरिति। न चाऽपूर्वात्मक धर्माधर्माविव गृह्येताम्। अत एव जैमिनिना ''चोदना पुनरारम्भः'' 2-1-6 इत्यधिकरणे तत्साधितम्। आरभ्यत इत्यारम्भः = अपूर्वम्। तत्पुनर्यागेनोत्पाद्यते, यतो याग स्वर्ग साध्यसाधनभावो वाक्येन चोदनेति तत्सूत्रार्थ इति वाच्यम्। प्रत्यध्यायेऽपूर्वस्य विचाराभावेन तद्विचारस्य शास्त्रप्रतिज्ञा विषयत्वा योगादिति बोध्यम्। स्वोक्तार्थोपष्टम्भकतया भागवतवचनं दर्शयति **धर्मस्त्वनुष्ठितः पुंसामिति।** अस्यावशिष्टो भागः—

विष्वक्सेनकाथासु यः।

[1] नैयायिकमतेन चेदम्।

[2] इदं भाट्ट कौस्तुबानुसारेण।

''नोत्पादयेद्यदि रतिं श्रम एव हि केवल'' मिति, आदिपदेन - ''धर्मं चरति'' 4-4-4 इति पाणिनिस्मृतेः

''इज्या चारदयाहिंसादानस्वाध्याय कर्मणाम्''।

अयं तु परमो धर्मो यद्योगेनात्म दर्शनम्।।

इतिस्मृतेः ''धर्मं चरे'' त्यादि श्रुतेश्च ग्रहणम्। इज्याचारेत्यादिस्मृतिवचने ''एषां मध्येऽयं परमो ब्राह्मण'' इत्यत्र षष्ठयन्तपदनिर्दिष्टानां ब्राह्मणत्ववदिज्यादिनां धर्मत्वं स्पष्टं प्रतीयते, धर्मं चर, धर्मस्त्वनुष्ठित इत्यादि श्रुति स्मृतिभ्यः क्रियादिकस्य धर्मत्वमिति स्पष्टमेवावगम्यते। तदाह - **तज्जनकेति** - अपूर्वजनकं यद् विहितनिषिद्ध क्रियादिकं तत्रापीत्यर्थः, आदिना द्रव्यगुणादीनां ग्रहणम्, तच्छब्द प्रयोगात् = धर्मा धर्मशब्द प्रयोगात्। तौ = क्रिया द्रव्यादिरूप धर्माधर्मौ। इह = द्वादशलक्षण्याम्। **प्राधान्येनेति** तेनापूर्वस्याभ्यनुज्ञा विधि विषयादीनां च विचारेपि न प्रतिज्ञाहानिः। **विचार्येते इति** उक्तं च चोदनासूत्रे वार्तिककारैः—

''द्रव्यक्रियागुणादिनां धर्मत्वं स्थापयिष्यते'' इति। एवं च द्वादशलक्षण्यां क्रियादिकमेव विचार प्रतिज्ञाविषयः प्राधान्येन, युक्तं चैतत् - स्वरूपभेदप्रमाणे च प्रथमाध्यायद्वयेन, तृतियादिभिश्च तत्साधनादीनि निरूप्यन्त इति सर्वमपि शास्त्रं जिज्ञासापरिकर एवेति बोध्यम्।।

## (धर्मलक्षण विचारः)

**अथ किं नाम धर्मत्व, मधर्मत्वं वा। नतावत् विहित क्रियात्वम्'' निषिद्धक्रियात्वं वा तत्, विहितनिषिद्धद्रव्यादौ तदनापत्तेः। तथात्वे फलार्थ गुणानुष्ठातृणां यज्ञे रजताद्यनुष्ठातृणां च 'धार्मिकोऽधार्मिक' इति व्यवहारा भावप्रसङ्गात्। इन्द्रियकामाद्यधिकरणादौ शास्त्रसङ्गत्य-नापत्तेश्च। तस्य धर्मत्वाभावे तज्जन्यादृष्टस्य धर्मत्वाभावेन कीर्तननाश्यत्वानापत्तेश्च। नापि क्रियात्व रहितं तत्। विवाहार्था नृतवदनादा वभ्यनुज्ञाविधिविषये धर्मत्वापत्तेः, षोडशिग्रहणेऽधर्मत्वापत्तेश्चे ति चेत्।**

धर्माधर्मौ लक्षयितुं पृच्छति - **अथेति** पृच्छयत इति शेषः, **विहितेति** ''सोमेन यजेते'' ति श्रुतिविहिता यागाक्रिया, तत्त्वम्। एवं ''न कलञ्जं भक्षये'' दित्यनेन भक्षणक्रिया निषिद्धा, तत्त्वम्। तत् = धर्मत्वमधर्मत्वं च, तद् दूषयति - **विहितनिषिद्धद्रव्यादाविति** ''दध्नेन्द्रियकामस्ये'' त्यादिना विहिते दध्यादिके द्रव्ये ''बर्हिषि रजतं न देय'' मित्यादिना निषिद्धे रजतादि द्रव्ये चेत्यर्थः, आदिना गुणादीनां ग्रहणम्। **तदनापत्तेरिति,** धर्मत्वाधर्मत्वानापत्तेरित्यर्थः। न चेष्टापत्तिः, ''द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते'' इति वार्तिकविशेधात्। तथात्वे = तत्र धर्मत्वाधर्मत्वाभावे, **फलार्थेति** फलोद्देशेन विहितानां गुणानां = दधिगोदोहनादी नामनुष्ठातृणामित्यर्थः। **रजतादीति** ''बर्हिषि रजतं न देय'' मिति श्रुतिः। अत्र च ''यथाश्रद्धं दक्षिणां ददाती'' ति विधिप्राप्ते यज्ञसंबन्धि दक्षिणादाने दक्षिणात्वेन प्राप्तरजतकरणत्वं क्रतुवैगुण्य जनकमित्याक्षिप्यते, होमे दधिकरणत्वस्येन्द्रिय फलजनकत्ववत्। तेन दध्यादौ धर्मत्व व्यवहारात् रजतादिद्रव्येऽधर्मत्व व्यवहारः। निषिद्ध क्रियात्वम धर्मत्वमिति लक्षणमत्राव्याप्तं स्यात्। तथा च तदनुष्ठातरि धार्मिकः अधार्मिक इति व्यवहारभाव प्रसङ्ग इति भावः, **धार्मिक इति**, धर्मं चरतीति धार्मिकः, ''धर्मं चरति''— 4-4-41 इति ठक्, **अधार्मिक इति,** धर्मं चरतीति धार्मिकः, न धार्मिकः अधामिकः, अधर्मं चरतीत्यर्थे तु आधर्मिक इति स्यात्।[1] शास्त्रकृद्व्यवहारोपि विरुध्यते इत्याह -

[1] अत्र ''तथात्वे फलार्थ गुणानुष्ठातृणां यज्ञे रजताद्यनुष्ठातृणां च धार्मिकः, अधार्मिक इति व्यवहाराभाव प्रसङ्गात्'' इति पाठः प्रामाणिकैः परिगहीतः। तं पाठमाश्रित्यास्माभिर्व्याख्यातम्। अथवादाधिकरणे दीपिका व्याख्याने प्रभावल्यां न ''न हि

**इन्द्रियकामेति**, द्वितीयाध्याय द्वितीयपादे एकादशमिन्द्रिय कामाधिकरणम्। तत्र द्रव्यस्य धर्मत्वं प्रतिपादितम्, आदिपदेन अरुणाधिकरणादेर्ग्रहणम्। तत्र गुणादेस्तत्त्वं प्रतिपादितम्। निरुक्तधर्मलक्षणाश्रयणे दध्यादीनाम क्रियात्वात्तत्र धर्म विचारपर शास्त्रसंगतेरनापत्तिरित्यर्थः, दोषान्तरमाह - **तस्येति**, द्रव्यादेरित्यर्थः। प्रकारान्तरं निराकरोति - **नापीति क्रियात्वेति** वेदविहितत्वं धर्मत्वम्। तन्निषिद्धत्वमधर्मत्वम् - अतो न कोपि दोष इति भावः। **विवाहार्थेति** "**ना**ऽनृतं वदे" दिति श्रुतिरनृतवदनस्यानिष्ट साधनत्वमवगमयति, "विवाहेऽनृतं वदे" दिति वचनं विवाहसंघटनायानृतं बोधयति, तत्रेत्यर्थः, आदिना "न दीक्षितस्यान्नमश्नीया" दिति निषेधोत्तरं पठितेन "वपायां हुतायां दीक्षितस्यान्नमश्नीया" दिति वचनेन बोधितस्य वपाहोमोत्तर दीक्षितान्नभोजनस्य ग्रहणम्। **अभ्यनुज्ञाविधीति** प्रमाणान्तर प्रतिपन्नानिष्ट साधनत्वस्य तदभावाव धारणमात्र फलको विधिरभ्यनुज्ञा विधिः। "नाऽनृतंवदेत्" "न दीक्षितस्यान्न" मित्येताभ्यामनृतवदन दीक्षितान्नभोजन योरनिष्ट साधनत्वं प्रतिपाद्यते तत्र विवाहार्थानृतवदन वपाहोमोत्तर दीक्षितान्न भोजन विधिनाऽभ्यनुज्ञाविधिनाऽनिष्ट साधनत्वा भावमात्र माक्षिप्यते। न त्विष्टसाधनत्वम्, निरूपयिष्यते चेदं "तृप्तिकामः कलञ्जं भक्षयें" दिति लौकिकवाक्यस्य प्रामाण्यनिराकरणावसरे ग्रन्थकृतैव। एवं च विवाहार्थानृत वदनवपाहोमोत्तर दीक्षितान्न भोजनादीना न धर्मत्वम्, नाप्य धर्मत्वमिति सिद्धान्तः। परंतु वेदविहितत्वं धर्मत्वमित्युक्ते तेषामपि धर्मत्वापत्तिरिति भावः, तदाह - **धर्मत्वापत्तेरिति** षोडशिग्रहणेऽधर्म लक्षणमतिव्याप्त मित्याह - **षोडशिग्रहणस्ये ति अधर्मत्वापत्तेरिति** "नातिरात्रे षोडशिनं गृह्णाति" ति वेदनिषिद्धत्वात्तत्वापत्तिः।

**न, वेदबोधितश्रेयस्साधनताकत्वं धर्मत्वम्, तद् बोधितानिष्ट साधनताकत्व मधर्मत्व मित्येव तल्लक्षणोपपत्तेः। ज्योतिष्टोमकलञ्जभक्षणादीनां ही ष्टानिष्ट साधनता वेदबोधितेति तत्र लक्षणसमन्वयः। अत्र वेदबोधितत्वं ब्रह्मस्वर्ग नरकादावपीत्युत्तरदलम्। अन्नविष भक्षणादे रिष्टानिष्ट साधनत्वेपि तस्य वेदबोधितत्वा भावा दाद्यम्।**

**श्येनेचेष्टसाधनताया एव वेदबोधितत्वाद्धर्मत्वमेव। अनिष्टजनकत्वं तु श्येनफलस्य वैरिमरणानु कूलशस्त्रघातादिरूप हिंसात्मकाभिचारस्यैव। तस्यैव च वेदबोधितानिष्ट साधनताकत्वा दधर्मत्वम्, न तु श्येनस्येति व्यक्तं चतुर्थे।**

**वेदबोधितेति** वेदबोधिता श्रेयस्साधनता यस्य, तद्भावः। अत्र वेदपदेन पारायणविधाविव मन्त्र ब्राह्मणग्रन्थस्य न ग्रहण मसंभवापत्तेः, तेन कस्यापि यागादेः श्रेयस्साध नत्वाबोधनात्। नापि तदन्तर्गत वाक्यानां ग्रहणम्। लिङ्गादिकल्प्य श्रुतिवाक्य प्रतिपाद्ये धर्मत्वानापत्तेः, अतोऽपौरुषेयवाक्यस्य ग्रहणम्, धर्मलक्षणप्रतिपादकं पारमर्षं सूत्रम् तथा च "चोदनालक्षणोऽर्थोधर्मः" इति, सूत्रे चोदनाशब्देन प्रवर्तकत्वपर्याप्त्यधिकरण मन्त्रार्थ वादनामधेयोपेत विधिवाक्यानां ग्रहणम्, तेन सर्वोपि वेदश्चोदनापदेन गृह्यते, युक्तं चैतत्, जिज्ञासासूत्रे धर्म प्रमाणमात्रस्य प्रतिज्ञातत्वात्। "वेदोऽखिलो धर्ममूल" मिति गोतमस्मृतेश्च। अर्थ्यते = फलसाधनत्वेन प्रार्थ्यतेयः सो = र्थः। लक्षणशब्दः प्रमाणपरः, तथा च चोदना प्रमाणकोऽर्थो धर्मः, चोदना (वेद) प्रमाणकेष्टसाधन ताक इति सूत्राक्षरमर्यादालब्धमर्थमादाय प्रकृतलक्षणं कृतम्। पार्थसारथि मतानुयायिनस्तु "चोदना चोपदेशश्च विधिश्चैकार्थवाचिन" इति वचनबलात्सूत्रे चोदनाशब्दः केवलविधिपरः, तेन विधितात्पर्य विषयीभूतेष्ट साधनताकत्वं धर्मत्वमिति सूत्राल्लभ्यते इत्यभि प्रयन्ति, तन्न चारु, लौकिकचोदनाविषयीभूतेष्ट साधनताके भोजनादावतिव्याप्तेः, न च लौकिकलिङादि प्रयोगेऽज्ञात ज्ञापकत्वा भावान्न विधित्वमिति विधिपदेन तद्व्यावृत्तिरिति वाच्यम् तथापि मन्त्रार्थवाद मूलकेष्ट साधनताबोधविषयेऽर्थवादानामेव प्रमाणत्त्वात्तन्मते तत्साधारण लक्षणाभाव

प्रसङ्गात्। अतस्तत साधारण्यलाभाय वेदपदघटितमेव लक्षणं युक्तम्। तदेतत्सर्वमभिप्रेत्याह **इत्येव तल्लक्षणोपपत्तेरिति** एवशब्देन विधिघटितलक्षणस्य व्यावृत्तिः, लक्ष्ये लक्षणं योजयति - **ज्योतिष्टोम-कलञ्जेति लक्षणसमन्वय इति** ज्योतिष्टोमे धर्मलक्षणस्य कलञ्ज भक्षणेऽधर्मलक्षणस्य च समन्वय इत्यर्थः। इष्टसाधनताकत्वे तिदलस्य प्रयोजनं दर्शयति - **अत्रेति** - लक्षणे इत्यर्थः। **उत्तरदलमिति**, ब्रह्मस्वर्ग नरकादी नामिष्टानिष्टरूपत्वेन तत्साधनत्वाभावात्तत्र नातिव्याप्तिरिति भावः, वेदबोधितेति-दलस्य सार्थक्यं दर्शयति - **अन्नविषभक्षणेति - आद्यमिति**, अन्नविषभक्षणादौ तृप्तिमरण रूपेष्टानिष्ट साधनत्वसत्त्वात्तत्र "धर्मत्वा धर्मत्ववारणाय" वेदबोधितें ति प्रथमदलम्, तत्साधनत्वस्य लोकत एवावगतत्वान्न दोष इति भावः।

"श्येनेनाभिचरन् यजेते" ति वेदविहितश्येनस्य वैरिमरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वाद धर्मत्वमिति केचन वदन्ति, तद् दूषयति, **श्येने चेति** नन्वेवं तस्यानिष्टजनकत्वव्यहारानुपत्तिरित्यतआह **अनिष्टजनकत्वं त्विति - चतुर्थे इति** चतुर्थाध्याय प्रथमपादे "यस्मिन् प्रीतिः पुरुषस्ये" त्यधिकरणे द्वितीयवर्णके व्यक्तम्। तत्र हि "प्रयोजनम्" पूर्वपक्षे श्येनफलस्याभि चारस्य विधेयत्वान्निषेधाविषयत्वम् सिद्धान्ते तु रागप्राप्तत्वान्न हिंस्यादिति निषेधविषयत्वम्। न च हिंसा शब्दस्य मरणानुकूल व्यापारवाचित्वात्तस्य च वैरिमरणाख्याभिचार फलकश्येनरूपस्य विहितत्वात्कथं निषेधविषयत्वमित्ति वाच्यम्। "अभिचरन् यजेते" ति सामानाधिकरण्यात् श्येनसमानकर्तृकत्वावगतेर भिचारपदस्य मरणानुकूल श्येनकर्तृ निष्ठ विषदानादिरूपव्यापार वाचित्वावगतेस्तस्यैव श्येनफलत्वावसायाद् रागप्राप्तस्य तस्य निषेधविषयत्वोपपत्तेः। एवं चावश्यं श्येनेन विषदानाद्युत्पत्तिः, तेन वैरिमरणम्। न तु श्येनेनैव सा क्षादिति बोध्य मित्युक्तम्।

**यत्रतु 'वैरिमरणकामो यजेते' त्येवं विधिः, तत्रापि विधिना इष्टसाधनताबोधना द्यागादेर्धर्मत्वमेव। नच तत्र यागस्यैव मरणानुकूल व्यापार त्वेन हिंसात्वात् "न हिंस्या" दिति निषेधविषयत्वम्, निषेधस्य रागप्राप्त हिंसोपजीवनेना प्युपपत्तौ विहितेऽप्रवृत्तेः। नचैवं तादृशस्थले श्येनवत्परम्परयापि प्रत्यवायनुत्पत्तेः शिष्टानां तत्र निष्कम्पं प्रवृत्त्यापत्तिः, "परस्यो त्सादनार्थं वातत्तामस मुदाहृत" मित्यादिवाक्यपर्यालोचनया अभिचारजनकश्येनव दभि-चारस्यापि कर्मण स्तामसत्वेन निन्दितत्वा त्तदुन्नीतनिषेधबलेन फलार्थं विहितस्यापि तस्या निष्टजनकत्वेना धर्मत्वास्यापि सत्त्वा त्तदनापत्तेः। अत एव धर्मत्वा धर्मत्वयो रुपाधिरूपत्वा त्साङ्कर्येप्यदोषः।**

अभिचारजनक श्येनादाविव यत्रापि साक्षाद् "वैरिमरणकामो यजेते" त्येवमभिचार रूपयागस्यैव विधिस्तत्राप्येषैव रीतिः, नतु यागस्याधर्मत्वमित्याह — **यत्र त्विति** — साक्षादभिचाररूप यागविषये इत्यर्थः। पूर्वपक्षी स्वाशयं विशदयति **न चेति मरणानुकूलेति** — "वैरिमरणकाम" इति स्पष्टमुक्तत्वादिति भावः। समाधत्ते — **निषेधस्येति**, न हिंस्यादिति निषेधस्येत्यर्थः। एवं = तादृशयागस्यापि धर्मत्वे। **निष्कम्पं प्रवृत्यापत्तिरिति**, न चेष्टापत्तिः, आचारविरोधात्, अत एव शिष्टाना" मित्युक्तम्। समाधत्ते — **परस्येति** भगवद् गीतायां सप्तदशेऽध्याये एकोनविंशः श्लोकोयम्, अस्य पूर्वार्धम् — "मूढग्राहेणात्मनो यत्पीडया क्रियते तपः" इति। ननु गीतावाक्ये उत्सादनशब्दस्य करणल्युडन्ततया परोत्सादनानुकूल-व्यापारस्यैव तद्बोध्यतया तदर्थ- कर्मणः श्येनादेरेव तामसत्वं प्रतीयते, न तु साक्षादभिचार रूपस्य यागस्येत्यत आह — **अभिचारजनकश्येनवदिति** — अभिचारजनक श्येनादेस्तामसत्वकथनेऽर्थादेव साक्षादभिचार रूपस्य यागस्य कर्मणस्तामसत्वं कौमुतिकन्यायेन सिध्यतीत्याशयः। तदाह —

फलार्थगुणानुष्ठातृणां यज्ञे रजताद्यनुष्ठातृणां च धार्मिकोऽधार्मिक इति व्यवहाराभाव इत्युक्तं भाट्टरहस्ये पञ्चपादे" इति निर्मिताः शम्भुभट्टैः। प्रभावली पाठ एव सर्वत्र भाट्टरहस्यग्रन्थेषूपलभ्यते।

**अभिचारस्यापि कर्मणस्तामसत्वेनेति,** न च तपसस्त्रैविध्य प्रतिपादनपरस्य गीतावचनस्य कथं श्येन यागविषयत्वमिति वाच्यम्, तपसस्तामसत्वकारणस्य परपीडाजनकत्वस्य तपसीव तथाविध यज्ञदाना-दावपि सत्त्वेन तस्य श्येन विषयत्वोपपत्तेः, **अधर्मत्वस्यापि सत्त्वादिति,** न च "नाभिचरित वै" इति निषेधात्साक्षादभिचारस्य निषेधाद- त्राभिचारस्य फलत्वाद्विकल्प एव स्यादिति वाच्यम्। तामसत्वेन निन्दितत्वेनातुल्य बलत्वात्। प्राचीनकर्मानुरोधेन रागद्वेषयो- रुत्पत्योभयोपपत्तेः। एवं चाधर्मत्व व्यधिकरणधर्मत्वमेव शिष्ट प्रवृत्ति प्रयोजकमिति फलितम्, तदनापत्तेः = शिष्टानां तत्र निष्कम्पं प्रवृत्यनापत्तेः। अत एव = श्येने धर्मत्वाधर्मत्वयो- रुभयोरपि सिद्धत्वादेव।

**यत्तु धर्मलक्षणे बलवदनिष्टाननुबन्धित्वस्यापि प्रवेशात् श्येनादौ चतदभावान्न धर्मत्वमिति, तन्न तत्प्रवेशे प्रयोजनाभावात्। अनिष्टगत द्वेषौत्कटय रूपस्य बलवत्त्वस्य प्राचीन कर्मा धीनतयोक्तविधाननुबन्धित्वस्य श्येनेपि कदाचित्संभवाच्च, इतरथा श्येने सामग्रयभावेन प्रवृत्त्यनापत्तेः। किञ्च श्येनादौ धर्मत्वाभावे ता मसधर्मत्वकथनानुपपत्तिः। अत उक्तलक्षणयो र्युक्त स्तत्रापि समन्वयः।**

**अभ्यनुज्ञाविधिना च दोषा भाव मात्रस्यैवा क्षेपा दिष्ट साधनतानाक्षेपेण रागप्राप्तेष्ट साधनताकस्या प्यनृतवदनस्य वेदबोधितेष्ट साधनताकत्वा भावा न्न धर्मत्वापत्तिः।**

**यत्त्विति** अयमाशयः – चोदनासूत्रे अर्थपदं बलवदनिष्टाननुबन्धित्वपरम्, श्येनफलस्य शत्रुवधस्य नरकजनकत्वेनानर्थकत्वात् श्येनोपि तद्द्वाराऽनर्थ एव, तस्यापि शत्रुवध द्वारा नरकजनकत्वात्, एवं च बलवदनिष्टाननु बन्धित्व घटितमेव धर्मलक्षणं निर्वाच्यमिति। तदभावात् = बलवदनिष्टाननु-बन्धित्वस्या भावात्। लक्षणे बलवद- निष्टाननुबन्धित्वस्य प्रवेशेपि श्येनस्य धर्मत्वमनिवार्यमित्याह – **अनिष्ट गतेति** – अयमर्थः – बलवदनिष्टत्वस्य बोधने ज्योतिष्टोमकलञ्जभक्षणादौ नैयत्येन प्रवृत्यप्रवृत्योर दर्शनादनिष्टे बलवत्वमेतादृशं स्वीकार्यम्। तच्च प्राचीन कर्माधीनम् – तथाच प्राचीनाशुभकर्मवशात् श्येनेपि बलवदनिष्टाननु बन्धित्वस्य संभवात्त्वद्रीत्यापि तत्र धर्मत्वं सिध्यति, अतो धर्मलक्षणे तत्प्रवेशे फलाभाव एव-इति। तदेव द्रढयति – **इतरथेति** तत्र तदसंभवे इत्यर्थः। सामग्रयभावेन = त्वदुक्त बलवदनिष्टाननु बन्धित्वरूप सामग्रय भावेन, अनिच्छतापि तत्र धर्मत्वमभ्युपेयमित्याह – **किञ्चेति** स्वसिद्धान्तं निगमयति **अत इति समन्वय इति** एवं चोपाधिरूपयो-र्धर्मत्वाधर्मत्वयोरेक श्येनादावङ्गीकारे बाधकाभावाद् विधिसार्थक्याय नरकन्यूनत्वस्य च कल्पना न्निरुक्तलक्षणद्वयानुसारेण धर्मत्वमधर्मत्वं च श्येनादौ सिध्यतीति बोध्यम्।

अभ्यनुज्ञाविधि विषयस्य विवाहार्थानृतवदनादे र्धर्मत्वापत्ति वारयति – **अभ्यनुज्ञा विधिना चेति** "विवाहेऽनृतं ब्रूयात्" "वपायां हुतायां दीक्षितस्यान्न- मश्नीया" दित्यादिनेत्यर्थः, **दोषाभावेति** उपपादितं चैतत्प्राक्। **न धर्मत्वापत्तिरिति** नाप्यधर्मत्वं सिद्धान्ते।।

**षोडशिग्रहणे च निषेधेन नाऽनिष्टसाधनत्वाक्षेपः, प्रमाणाभावा, द्गौर वाच्च। अपि त्वेतदभावे पीतराङ्गैः क्रतु महोपकारसिद्धिमात्रस्यैव, तावन्मात्रेणैव पुरुषस्य निवृत्त्युपपत्तेः। अत एव तत्र प्रवृत्यर्थं विधिना फलाधि क्याक्षेपः। अत स्तत्रापि नाऽधर्मत्वापत्तिः।**

ननु "न कलञ्जं भक्षये" दित्यत्रेव "नातिरात्रे षोडशिनं गृह्णाती" त्यत्रापि लिङर्थ प्रवर्तनयाऽनिष्ट साधनत्वस्या क्षेपात्तत्राप्य धर्मत्वापत्ति, रित्यत आह – **षोडशिग्रहणे चेति प्रमाणाभावादिति** विधिना तत्रेष्टसाधनत्वस्य प्रमितत्वेन तदविरोधाय निषेधेनानिष्ट साधनत्वं नानुमीयते, कलञ्जभक्षणस्य तु

रागतः प्राप्तत्वेन श्रुत्या तत्र तत्त्वमनुमातुं शक्यते। एतदभावेपि = षोडशि- ग्रहणाभावेपि। **निवृत्युपपत्तेरिति,** एवं च निषेधेन षोडशिग्रहणे इष्ट साधनत्वाभावे ज्ञाते प्रवृत्तिकारणी भूतज्ञानस्याभावादेव प्रवृत्ति प्रतिबन्धे- ऽर्थात् पुरुषः षोडशिग्रहणान्निवर्तते। अत एव = षोडशिग्रहणा-न्निवृत्तेरेव तत्र = षोडशिग्रहणें, **फलाधिक्याक्षेप इति** षोडशि विधि साफल्याय तदाक्षेप इत्यर्थः। एवं च विधिवाक्ये निषेधवाक्ये च प्रत्येकमनुमान द्वयं फलति। 1. षोडशिग्रहण मति रात्रोपकार जनकम्, प्रवर्तना विषयत्वात् – 2. षोडशिग्रहणं फलबाहुल्य जनकोपकार जनकमभ्यनुज्ञा विधिविषयभिन्नत्वे सति निषेध्यत्व समानाधिकरण विधेयत्वात्। 1. षोडशिग्रहणमति रात्रानुपकारकम्, निवर्तना विषयत्वात्, 2. अतिरात्रापूर्व साधनीभूत षोडशिग्रहण जन्योपकारः षोडशिग्रहणभिन्नेतराङ्ग जन्यः, षोडशिग्रहणाजन्यत्वे सति प्रधानो- पकारत्वात् इति, स्पष्टंचेदं चतुर्थे शम्भुभट्टस्य प्रभावलीग्रन्थे। एतच्च नञ् घटितविधिवाक्यार्थ विचारावसरे विस्तरेण निरूपयिष्यामः। अतः = तत्रानिष्ट साधनत्वानाक्षेपात्। **ना धर्मत्वापत्तिरिति,** निषेध्यत्वेपि नाधर्मत्वापत्ति- रित्यर्थः।

**वेदबोध्यत्वं च वेदातिरिक्तप्रमाणेन स्वातन्त्र्येणाऽबोध्यत्वे सति वेदबोध्यत्वम्। तेन तत्त्वसाक्षात्काररूप ब्रह्मज्ञानस्य ब्रह्मविषयक सविलासाज्ञाननिवृत्तिरूपमोक्ष जनकत्वस्य प्रमाणान्तरसिद्धस्यो पनिषद्बोध्यत्वेपि न तस्य धर्मत्वापत्तिः।**

**यदापि प्रपञ्चस्य सत्यत्वेन नाऽज्ञानकार्यत्वम्। मोक्ष श्चैकविंशतिदुःखध्वं सादिरूप स्तत्त्वज्ञानप्रयोज्य इति मतमपि प्रामाणिकम्, तदा मोक्षजनकत्वस्य प्रमाणान्त रागम्यत्वा त्तत्र धर्मत्व परिहारार्थं वेदबोधितत्वं विहाय विधिबोधितत्वं देयम्। ज्ञानस्य प्रमाणवस्तु परतन्त्रत्वेन प्रवर्तनाविषयत्वाभावा न्न विधिबोध्यत्वम्।**

ननु "तरति शोक मात्मवि" दित्यादिवाक्य जन्य शोकशब्दवाच्या विद्यानिवृत्ति साधने आत्मज्ञाने "अग्निर्हिमस्य भेषज" मिति वेदवाक्यजन्य हिमनिवृत्तिजनकेऽग्नौ च त्वदुक्त धर्मलक्षणस्याति व्याप्तिरित्याशङ्कां परिहर्तुमाह – **वेदबोध्यत्वं चेति – वेदातिरिक्त प्रमाणेनेति,** एवं च वेदजन्याज्ञात ज्ञानरूपाबाधित प्रतीति विषयत्वं तत्त्वमिति फलति। आपातप्रतिपन्नेष्टानिष्ट साधनत्वस्यापि वेदबोधितत्वात्तत्रा तिव्याप्तिवारणाया बाधितेति, **ब्रह्मविषयकेति** तद्विषयक कार्याज्ञान निवृत्तिरूपेत्यर्थः। **प्रमाणान्तरेति,** प्रत्यक्षप्रमाणसिद्धस्येत्यर्थः, **उपनिषदिति** "तरतिशोकमात्मवित्" "अग्निर्हिमस्य भेषज" नित्याद्युप- निषदादि बोध्यत्वेपीत्यर्थः। तस्य = आत्मज्ञानाग्न्यादेः।

एवं मुख्यसिद्धान्तभूतमज्ञान निवृत्तिरूप मोक्ष प्रतिपादकमद्वैत शास्त्रमाश्रित्य दत्तामापत्तिं परिहृत्य नैयायिकमते तां परिहर्तुमुपक्रमते – **यदापि प्रपञ्चस्य सत्यत्वे नेति** तन्मते जगतो मिथ्यात्वं नाभ्युपेयते, किन्तु सत्यत्वमेव अत एवाह – **ना ज्ञानकार्यत्वमिति एकविंशति दुःखेति** शरीरम्, षडिन्द्रियाणि षड् विषयाः, षड्बुद्धयः, सुखम्, दुःखं चेति दुःखान्येकविंशतिः, आत्यन्तिको दुःखध्वंसोऽपवर्गः, यदाहुः – "दुःखध्वंसं गोतमो मोक्षमाहे" ति। **प्रमाणान्तरागम्यत्वादिति** निरुक्तरीत्या वेदबोध्यत्वस्य निर्वचनेपि आत्म- ज्ञाने धर्मत्वमति प्रसक्तमेवेति भावः, अतस्तद्वारणायाह – **विधिबोधितत्वं देयमिति** विधिपदघटितं धर्मत्वं निर्वाच्यमिति भावः, तावतापि कथं तद्वारण, मत आह – **ज्ञानस्येति प्रमाणेति,** चक्षुरादि प्रमाणपरतन्त्रं ज्ञानम्, किन्च यथावस्तु जायमानत्वाज्ज्ञानं वस्तुतन्त्रम्, न पुरुषतन्त्रम्, उपासनादि तु पुरुषेण कर्तुमकर्तुमन्यथाकर्तुं वा शक्य, मतस्तत्र पुरुष प्रयत्नः सार्थकः। तदाह – **प्रवर्तनाविषयत्वा भावादिति** 'यदा-तदा' इति मतमपि प्रामाणिक" मित्यनेमा- रुचिः सूचिता। तद्बीजं त दूषणासहत्वम्, तच्च भगवत्पादैः शारीरक भाष्ये विस्तरेण प्रतिपादितम्, विस्तरभयान्नेह तन्यते, तत्त तत एवावगन्तव्यम्।

**वस्तुतस्तु "अयं तु परमो धर्मो यद्योगेनात्म दर्शन" मित्यादौ ज्ञानेपि धर्मशब्दप्रयोगा त्तस्य धर्मत्वेपि न क्षति। न च तत्रत्यधर्मशब्दो ध्यानक्रियापरः, लक्षणायां प्रमाणाभावात्। ध्याने चित्तवृत्तिनिरोध रूप मुख्य योगजन्यत्वासंभवाच्च। उपासनादिवच्च ज्ञानस्य धर्मत्वेपि ब्रह्मणो वेदबोधितश्रेयस्त्वा वच्छिन्नसाधनकत्वा भावेन कर्मत्वाभावा ध्दर्ममीमांसातो ब्रह्ममी- मांसाया भेदोप पत्तिः।**

वस्तुतस्तु तत्वज्ञानस्या लक्ष्यत्वमप्रामाणिकम्। तत्रापि धर्मत्वस्य सर्वसंमतत्वात्, किंच विधिपदघटित धर्मलक्षणे न युक्तम्। तत्र दोषाणां पूर्वमेवोप न्यास्ता दित्याशयेनाह - **वस्तुतस्त्विति,** याज्ञवल्क्य स्मृति मुदाहरति - **अयं तु परमो धर्म इति,** अस्य पूर्वार्धम्-

"इज्याचार दयाऽहिंसादानस्वाध्यायकर्मणाम्" इति। आत्मदर्शन मित्यत्र दर्शनशब्दो भावल्युडन्तो ज्ञानपरः। आत्मदर्शनम् = आत्मज्ञानम्। परमः = उत्कृष्टः, धर्म इति तदर्थः, तदाह - **ज्ञानेपीति** - दर्शनशब्दः करणल्युडन्त इत्याशयेन शङ्कते **नचेति** पश्यन्त्यनेनेति दर्शनम्। दर्शन (ज्ञान) साधनमित्याशयेनाह - **ध्यानक्रियापर इति** तथा च सविकल्पकसमाध्यन्तेन योगेन आत्मदर्शनसाधनभूतो निर्विकल्पकसमाधिरेवात्म दर्शन शब्देनाभिधीयते, अतस्तस्यैव धर्मत्वं नात्मज्ञानस्येति भावः, तद् दूषयति - **लक्षणायामिति मानाभावादिति** निर्विकल्पकसमाध्यन्तयोग एव योगशब्देन बोध्यते। तादृशयोग-शब्दस्य ध्यानपरत्वे लक्षण स्वीकार्या। तत्र प्रमाणं प्रयोजनं वा नास्तीति भावः, वस्तुतो ध्याने योगजन्यत्वमेव न संभवतीत्याह - **ध्याने इति** "योगश्चित्त वृत्ति निरोधः" इति पातञ्जलसूत्रादाह - **चित्तवृत्ति निरोधेति मुख्ययोगेति** क्रियात्वावच्छिन्न प्रतियोगिताक ध्वंसेन क्रियारूप ध्यानस्यानुत्पाद-नादित्यर्थः। न च ध्यानातिरिक्त क्रियात्वावच्छिन्न ध्वंसो गृह्यत इति वाच्यम्, संकोचकाभावात्, संकोचकसत्वेऽ मुख्यतापत्तेः, एतदाशयेनैवोक्तम्, – मुख्येति। ननु ब्रह्मज्ञानस्य धर्मत्वे ज्ञानविषयी भूत ब्रह्मणोपि धर्मत्वापत्तिः, किं च ब्रह्मणोपि जगत्कारणत्वेन श्रेयस्साधनत्वात् = यतो वेत्यादि वेदैकगम्यत्वात्तत्र धर्मत्वापत्तिः, न चेष्टापत्तिः, पूर्वोत्तरमीमांसयो रुभयोरपि धर्मबोधकत्वादेक शास्त्रत्वा पत्ते, रित्यत आह - **उपासनादिवच्चेति,** उपासनानां धर्मत्वेपि विचार्य तावच्छेदक किञ्चिद्रूपभेदमादाय कर्मकाण्डादुपासना काण्डस्य भेदः स्वीक्रियते, तद्वदित्यर्थः, **वेद बोधितेति** तच्छ्रेयस्त्वावच्छिन्न कार्यतानिरूपित कारणत्वा भावे नेत्यर्थः, असाधारणकारणत्वाभावेनेति यावत्। **भेदोपपत्ति रिति** एवं च ज्ञानस्य धर्मत्वेपि प्रतिपाद्यस्य ब्रह्मणो धर्मत्वाभावेन धर्म ब्रह्मबोधकत्वेन तयोर्भेद उपपद्यत इति भावः। एवं च ब्रह्मणो धर्मत्वं निराकृतम्।

**अस्तु वा ब्रह्मणि धर्मलक्षणातिव्याप्ति परिहारार्थं पुरुषकृतिव्याप्यत्वं वेदबोधित श्रेयस्साधनताकत्व विशेषणम्। गुणस्यापि चा श्रयविशिष्टस्य कृतिसाध्यत्वा न्ना व्याप्तिः। ज्ञानस्यापि च स्वरूपेण कृतिसाध्यत्वाभावेपि सम्यग्जरणादिव त्तदनुकूलमनः प्रणिधानादेः कृतिव्या प्यत्वेन परम्परया तदाविष्टस्य कृतिव्याप्यत्वो पपत्तेर्नाव्याप्तिः। अत एव "आत्मावा अरे द्रष्टव्य" इति विधि प्रत्ययो प्येतदभिप्रायक इत्यप्येतन्मते सुवचम्। असाधरणी वा कारणतालक्षणे प्रवेशनीया।**

**तत्तल्लक्षणमेव धर्मा धर्मपदशक्यतावच्छेदकम्। तस्य च क्रियाजन्या दृष्ट साधारण्येनैकयैव शक्तया धर्माधर्मशब्दौ क्रियातज्जन्यादृष्टपरा वितिसंक्षेपः।**

**(इति धर्मलक्षणविचारः समाप्तः)**

ननु अखण्डाकार वृत्ति प्रतिबिम्बितं ब्रह्मैव अज्ञान तत्कार्यनाशकमिति वेदबोधित तादृशेष्ट साधनत्वात्तत्र लक्षणस्यातिव्याप्तिरेव, एवं च ज्ञायमान ब्रह्मणो मोक्षासाधारण कारणत्वाद्दोषतादवस्थ्यमेवे, त्यत आह - **अस्तुवेति पुरुषकृतिव्याप्यत्वमिति,** कृतिनिरूपित विधेयतावत्वमित्यर्थः। पुरुषपदमुपलक्षणम्। नन्वेव दधिगोदोहनादेः पुरुषकृति साध्यत्वाभावात्तत्र लक्षणस्याव्याप्ति रित्यत आह - **गुणस्यापीति**, दधिगोदोहनादेरित्यर्थः, **आश्रयविशिष्टस्येति** - होमप्रणयनादि क्रियाविशिष्ट- स्येत्यर्थः, नन्वेवमपि ज्ञानेऽ व्याप्तिरे वेत्यत आह - **ज्ञानस्यापीति सम्यग्जरणादिवदिति** सम्यग्जरणे "मा मे वाङ् नाभिमति गाः" इति मन्त्रो विनियुज्यते, तत्र सम्यग्जरणस्य जाठराग्निबलेन स्वय जायमानस्यास्मत्कृति व्याप्यत्वाभावेपि तदनुकूलवामभागशयनादेः प्रयत्नसाध्य त्वात्तद्विशिष्टस्य तस्य कृतिव्याप्यत्वम्, तत्र मन्त्रविनियोगश्च तद्वदित्यर्थः, **तदनुकूलेति**, आत्मज्ञानानुकूलेत्यर्थः, तदाविष्टस्य = मनः प्रणिधान-विशिष्टस्य ज्ञानस्य, अत एव = ज्ञानस्य धर्मत्वादेव **द्रष्टव्य इति** कृतिसाध्य इति तदर्थः। **विधिप्रत्यय इति** लक्षणया विधिबोधकः प्रत्यय इत्यर्थः। तव्यदादिकृत्य प्रत्ययाना ग्रन्थकर्तृमते प्रैषार्थकतया विधौ शक्तेरभावात्। एतदभिप्रायकः = ज्ञानस्य धर्मत्वाभिप्रायकः।

एवं धर्माधर्मौ लक्षयित्वा शक्यतावच्छेदकं निरूपयति **तत्तल्लक्षणमेवेति - क्रिया - तज्जन्यापूर्वपरा-विति** एतदाशये नैव "तज्जनकविहित निषिद्ध क्रियादावपि तच्छब्द प्रयोगात्" इत्युक्तं ग्रन्थकृता "यद्यपि धर्माधर्मावदृष्ट विशेषात्मकौ" इत्याशयो न निराकृतः। तमभ्युपेत्य यागादीनामपि धर्मत्वं प्रतिपादितम्।

वस्तुतस्तु धर्मशब्दस्य यागादि क्रियादावपूर्वे च प्रयोगसत्वेपि नोभयत्र शक्तिः, गौरवात्, अपि तु भाष्य वार्तिक शास्त्र दीपिकादिबहुग्रन्थस्वारस्यादापामर प्रसिद्धेश्च यागादावेव शक्तिः, तज्जन्येऽपूर्वे प्रयोगस्तु लक्षणया, प्रकृतग्रन्थकृतोप्य त्रैव तात्पर्यम्। अत एवार्थ वादाधिकरणे "इज्याचारे" त्यादिस्मृतौ एषां मध्येऽयं परमो ब्राह्मण, इत्यत्र षष्ठ्यन्त पदनिर्दिष्टानां ब्राह्मणत्व वदिज्यादीनां धर्मत्वप्रतीतेरदृष्टे च विहितनिषिद्ध धर्माधर्मरूप पदार्थजन्यत्वसम्बन्धेन लक्षणयापि प्रयोगोपपत्तेर्नादृष्ट वाचि धर्माधर्म पदम्, अपि तु "तज्जनकविहितनिषिद्ध क्रियागुण द्रव्यादिष्वेव शक्त" मिति भाट्टदीपिकाव्याख्याने प्रभावल्यां शम्भुभट्टैरुक्तमिति दिक्।।

"तत्तल्लक्षणमेव धर्माधर्म पद शक्यतावच्छेदक" मिति ग्रन्थात्प्राक् "असाधारणी वाकारणता लक्षणे प्रवेशनीया" इति ग्रन्थभागः समुपलभ्यते। "ब्रह्मणोवेदबोधितश्रेयस्त्वावच्छिन्नसाधनकत्वा भावेने" तिपूर्वोक्तार्थ एवानेन विव्रियत इति केचिद् व्याचक्षते। वस्तुतस्तु अत्रा संलग्नकोऽयं ग्रन्थ इत्यभियुक्ताः। तद्ग्रन्थोप्यादरणीय इत्याग्रहेत्वेवं व्याख्येयम् असाधारणकारणत्वं च श्रेयस्त्वावच्छिन्नकार्यतानि रूपित कारणताश्रयत्वं नतुश्रेयः साधनत्वमात्रम् एवं च ज्ञाने धर्मे च उपपत्तिः। ब्रह्मणो मोक्षत्वावच्छिन्न कार्यतानिरूपित कारणताश्रयत्वान्नतिव्याप्ति – रिति

इति धर्मलक्षणविचारः समाप्तः।।

# अथ विधिवादः

**ननु करणत्वबोधक शब्दाभावात् "यजेत स्वर्गकामः" इत्यादौ कथं यागगत श्रेयस्साधनत्वस्य वेदबोध्यत्वम्? कश्च वा विधिः? यद्बोध्यत्वं श्रेयस्साधनत्वस्येति चेत्।**

गते ग्रन्थे पूर्वमीमांसा शास्त्र प्रमेयस्य धर्मस्य वेदबोधित श्रेयस्साधनताकत्वं लक्षणं प्रदर्श्य वेदेनेष्ट साधनताबोधन प्रकारप्रतिपादन मुखेन बलवद निष्टाननुबन्धित्वं, कृतिसाध्यत्वमिष्ट साधनत्वं च लिङर्थ इति नैयायिकमतं दूषयितुं स्वमते तं निर्धारयितुं चोपक्रमते – **ननु करणत्वेति** करणत्वबोधकश शब्दस्तृतीया विभक्तिः। "कर्तृकरणयोस्तृतीये" 2-3-18 त्यनुशासन बलात्। नहि यजेतेत्यत्र यागगतसाधनत्व बोधकस्तादृशः शब्दोऽस्ति। ज्योतिष्टोमेनेत्यत्र तृतीया तु यागीयकरणत्वं बोधयितुं नेष्टे इति भावः। तदेतदाह - **कथं यागगतेति** तथाच वेदबोधित श्रेयस्साधनताकत्वमिति धर्मलक्षणमत्रा-व्यप्तमिति भावः। विधिबोधित श्रेयस्साधनताकत्वमिति विधिपदघटित धर्मलक्षणाश्रयणेनाह - **कश्चात्र विधिरिति** विधिबोधक शब्दः क इत्याशयः, तदभावे लक्षणस्या संभव एवेति भावः।

## (तार्किकमतम्)

**अत्र तार्किकाः। – लिङादि श्रवणोत्तरं प्रवृत्ति दर्शनात्प्रवृत्तिसामग्री जननद्वारा लिङादि ज्ञानस्य प्रवृत्ता वुपयोग इति तावदविवादम्। तत्सामग्री च कृतिसाध्यत्व प्रकारकेच्छारूपा चिकीर्षा। तस्याश्च स्वरूपसत्याः कारणत्वा, त्तत्र लिङादि ज्ञानस्या नुपयोगेपि चिकीर्षाकारणी भूतज्ञाने तदुपयोगः कल्प्यते। तच्च बलवदनिष्टाननु बन्धित्वज्ञानं कृतिसाध्यत्वज्ञानम्, इष्टसाधनत्वज्ञानं च। अन्यतमा भावे इतरद्वय सत्त्वेपि मधुविषसंपृक्तान्न भोजने चन्द्रस्पर्शे मण्डलीकरणादौ च प्रवृत्त्यदर्शनात्। अतो लिङादि ज्ञानेन त्रितयज्ञान जनना ल्लिङादेर्बल वदनिष्टाननु बन्धित्वे कृतिसाध्यत्वे इष्टसाधनत्वे च शक्तिः। तत्रापि विशेषणविशेष्य भावे विनिगमनाविरहा त्प्रत्येकं शक्तिः। पुष्पवन्त शब्दवच्च व्युत्पत्तिवैचित्र्या द्युगप दर्थत्रयस्यापि बोधः।**

इष्टसाधनत्वादिकं लिङर्थः, स एव विधिः, तस्य च धात्वर्थे यागादावन्वयः। तेन इष्टसाधनी भूतयागानुकूलकृतिमान् स्वर्गकाम इति बोधो जायते। अतो यागगत श्रेयस्साधनताकत्वस्य वेद बोध्यत्व लाभ इति नैयायिका आशेरते। तन्मतं दूषयितुमनुवदति - **अत्र तार्किका इत्यादिना - आस्ति कानामप्रवृत्तेरित्याहुरित्यन्तेन ग्रन्थेन।** भूमिकामारचयति **लिङादीति** आदिना लेटो लोटश्च ग्रहणम्। पचेत्। पचाति, पचतु इत्यादि लिङादि घटित शब्द श्रवणोत्तरमित्यर्थः। का सा सामग्रीत्यत आह **तत्सामग्री चेति कृतिसाध्यत्वेति** यागो मत्कृति साध्यो भवतु। इत्येवं रूपेत्यर्थः। तर्हिसा लिङादि शक्या? नेत्याह – **स्वरूपसत्याः कारणत्वादिति अनुपयोगेपीति** प्रवृत्तिकारणी भूतसामग्री चिकीर्षा, तदुपस्थित्यर्थं लिङ्प्रयोक्तव्यः। परन्तु सा स्वरूप सती कारणमिति कृत्वा तदुपस्थापनाय लिङादि ज्ञानं नोपयुज्यत इति भावः। तर्हि इच्छायाः क्व उपयोग इत्यत आह - **चिकीर्षा कारणी ति बलवद निष्टेति** इदं बलवदनिष्टाननुबन्धीति ज्ञानमित्यर्थः। इष्टोत्पत्तिनान्तरीयक दुःखाधिकदुःखा जनकत्वमिति यावत्। **कृतिसाध्यत्वेति** इदं मत्कृतिसाध्यमित्याकारकं **ज्ञानमित्यर्थः**। त्रयाणामपि प्रवृत्ति जनकत्वमुपपादयति **अन्यतमाभावे इति मधुविषेति** तादृशमन्नं तृप्तिरूपेष्ट जनकं, मत्कृतिसाध्यं चेति ज्ञानद्वय सत्वेपि मरण रूपबलवदनिष्टानु बन्धित्व ज्ञानसत्वाच्चि कीर्षा भावान्न प्रवृत्तिरिति भावः। **चन्द्रस्पर्शे इति** चन्द्रस्पर्शो बलवदनिष्टाननु बन्धी, ग्रीष्मे शैत्यरूपेष्टसाधनं चेति ज्ञानद्वयसत्त्वेपि अयं मत्कृतिसाध्यो न भवतीति

ज्ञानसत्वान्न तत्र प्रवृत्तिरिति भावः। **मण्डलीकरणेति** मण्डलीकरणं नाम बौद्धानां कश्चिचदाचारः। तेहि मण्डलाकारेणोपविश्य कमपि विषयं संभूयालोचयन्ति। आस्तिकानां तत्रेतर ज्ञानद्वयसत्त्वे पीष्टसाधनता ज्ञानभावान्न प्रवृत्तिरिति भावः। प्रकृतोपयोगमाह **अत इति** लिङादिज्ञानस्य निरुक्तज्ञानत्रये उपयोगित्वादित्यर्थः। यज्ज्ञानं यतो जायते तत्र तस्य शक्तिरित्यभियुक्तव्यवहारादाह – **लिङादिज्ञानेनेति कृतिसाध्यत्वे इति** वस्तुतस्तु कृतिसाध्यत्वस्य लिङर्थत्वं न स्वीकार्यम्। तदनङ्गीकारेपि कृतेराख्यात सामान्यार्थतया विधिप्रत्ययस्यापि तदर्थकतया पचेतेत्यादौ कृतेः पाकानुकूलत्व भानस्यावश्यकतया-ऽर्थात्पाकादावपि कृतिसाध्यत्वभानात्। स्पष्टं चेदं नैयायिकग्रन्थेषु। एनमेवाशयमादाय "नापि कृति साध्यत्वम्, तस्य भवन्मते पाकानुकूलत्वस्य कृतौ भाने" इत्यादिना कृतिसाध्यत्वस्य लिङर्थत्वं निरा करिष्यति ग्रन्थकृत्। **इष्टसाधनत्वे इति** ओदन कामः पचेत, "स्वर्गकामो यजेतेत्यादावोदनस्वर्गादि रूपफलसाधनत्वं पाकयागादिक्रियायामवगम्यते। तादृशफलानां तत्तद्रूपेण लिङादिशक्यतावच्छेदक कोटि प्रवेशे शक्त्यानन्त्यम्, सर्वसाधारण्येन व्युत्पत्तेरनुदयेनापूर्वफल साधन बोधानिर्वाहश्च, अत इष्टत्वेन तेषामनुगमः। इष्टत्वं च समभिव्याहृत पदोपस्थापितकामना विषयत्वम्, अतः स्वर्गकामः पचेतेत्यादौ शक्तिभ्रमशून्यस्य न ओदनादि साधनत्वधीः, न वा तत्तात्पर्येण तथा प्रयोग इति बोध्यम्। बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्ट कृतिसाध्यत्वे लिङादीनामेकैव शक्तिरिति वदन्ति केचित्। अन्ये तु कृतिसाध्यत्वे बलवदनिष्टाननुबन्धित्वविशिष्टेष्ट साधनत्वे च लिङश्शक्तिरिति वदन्ति। तत्सर्वमप्ययुक्तमित्याह – **तत्र चेति** लिङादीनां शक्तिविषये इत्यर्थः। **प्रत्येकमिति** एकस्मिन्नेकस्मिन्निति प्रत्येकम्। यथार्थे वीप्सायामव्ययीभावः। त्रिषु शक्तित्रयं स्वीकृत्य क्वचित्कस्यचित्, क्वचित्कस्य चिदर्थस्य बोध इत्यङ्गीकार्यम्। अत एव "न कलञ्जं भक्षये" दित्यत्र बलवदनिष्टाननुबन्धित्वस्यैव बोधः, श्येन वाक्ये तदतिरिक्तार्थद्वयस्य बोधः सर्वानुभव सिद्धस्संगच्छते। अन्यथा तदसंगतिस्स्पष्टैव। सतिसंभवेऽर्थत्रयस्यापि बोधः। यथा – सोमेन यजेतेत्यादाविति बोध्यम्। नन्वर्थत्रये प्रत्येकं शक्ति स्वीकारे लिङादिभ्यस्तस्य युगपद्बोधानापत्तिः। अनेकार्थकशब्दानामेकस्मिन् प्रयोगे संयोग विप्रयोगादिभिः सशङ्ख चक्रो हरिरित्यादाविवैकार्थ बोधकत्वनियमनात्। "अनेकार्थक- शब्दनामेकार्थ बोधकत्वनियमः, "सकृदुच्चरितन्याया" दिति केषाञ्चिदुक्तिस्तु न समीचीना। क्रियाभ्यावृत्तिगणने इत्यधिकारे एक शब्दात्सुच्प्रत्ययः, एक शब्दस्य सकृदादेशश्चेत्यर्थकेन "एकस्य सकृच्च" 5-4-19 इति सूत्रेण निष्पन्नस्य सकृच्छब्दस्य एकमित्यर्थकत्वाभावेन तन्न्यायस्य सकृदुच्चरितश्शब्दः सकृत् = एकमर्थं बोधयतीत्यर्थकत्वायोगात्। तत्सूत्रबलेन सकृदुच्चरितश्शब्दोऽर्थं सकृदेक वारमेव बोधयतीत्यर्थस्यैव ततो लाभाच्च, सच बोध एकार्थविषयकोऽनेकार्थविषयको वेतित्वन्यदेतत्। गङ्गायां मीनघोषौ स्त इत्यादावनेकार्थस्य युगपदुपस्थितेरित्यत आह – **पुष्पवन्तशब्दवदिति** अयमर्थः – पुष्पवन्तपदाच्चन्द्र-त्वावच्छिन्नविषयक सूर्यत्वावच्छिन्नविषयक शाब्दबोधो भवत्वित्याकारक एव पुष्पवन्त पदे भगवत्संकेतः। केवल चन्द्रत्वाद्यवच्छिन्न विषयक बोधश्च न तज्जन्यत्वेन तद्विषयः। अतस्तस्माच्छब्दान्न केवल चन्द्रत्वादिप्रकारको बोधः। शक्तिज्ञानं च चन्द्रसूर्यो भयं संबन्ध[1] विशेषेण पुष्पवन्तपदवदित्याकारकम्। उभयविषयत्वावच्छिन्नाया बोधनिष्ठसंकेत विषयताया ऐक्याच्छक्तेरे-कत्वम्। अतः पुष्पवन्त पदं न नानार्थकम्। तथाचमरसिंहः – "एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरा" विति। सूर्या चन्द्र मसावेकशक्त्या पुष्पवन्तपदप्रतिपाद्याविति तदर्थः। उद्देश्यता-

[1] संबन्धविशेषेण = चन्द्रत्वावच्छिन्न विषयताक सूर्यत्वावच्छिन्न विषयताक बोधत्वपर्याप्तावच्छेदकताका स्वजन्यत्वप्रकारता-निरूपिता या विशेष्यता तन्निरूपित विषयतानिरूपित वृत्तित्वविषयता निरूपित तन्निरूपितत्वसंबन्धावच्छिन्न विषयता संबन्धेन।

वच्छेदकावच्छेदेन विधेयान्वये तात्पर्याच्चन्द्रत्व सूर्यत्वयोरेकशक्त्य धीनप्रतिपत्ति विषयता- वच्छेदकत्व लाभान्न पुष्पवन्तपदान्ननार्थक पदादिव न तादृशैकधर्ममात्रप्रकारको बोधः। नानार्थकेतु शक्ति भेदादेक धर्ममात्रप्रकारको बोध इति विशेष, तद्वदिति। एवं वृषाकपी, वृषाकपायी पपीरित्यादावपि बोध्यम्। "हर्रविष्णू वृषाकपी" "वृषाकपायी श्रीगौर्यो"रित्यमरकोशः। "पपीः स्याच्चन्द्रसूर्ययोरिति कोशश्च। एतत्सर्वमभिप्रेत्याह– **वैचित्र्यादिति** भगवत्संकेतशक्ति ग्रहादि वैचित्र्यादित्यर्थः। युगपदर्थत्रयस्यापि बोधः = सोमेन यजेतेत्यादौ विधिस्थले।

"पुष्पवन्तावित्यत्र प्रकृतिस्तान्ताऽदन्तावे"ति वैयाकरणसिद्धान्तलघुमञ्जूषायां द्वन्द्वप्रकरणे वैयाकरण नागेशः। तत्रेयमुपपत्तिः – पुष्पविकसने इति दैवादिकाद्धातोर्भावे घञ्। पुष्पौ = विकासः, प्रकाशश्च। पुष्पौ अनयोः स्तः = पुष्पवन्तौ। "तदस्यास्त्यस्मिन्निति मतुप्" 5-2-94 इति मत्वर्थीयो मतुप्। एकयोक्त्येत्यादि कोशबलादस्य द्विवचनान्तत्वस्यैव लाभात्प्रत्येकं पुष्पवानिति न प्रयोक्तव्यम्। अकारान्तोऽप्ययम्– अव रक्षणे इति भौवादिकादधातोरौणादिको झच् कृत्प्रत्ययः। चकारश्चित्स्वरार्थः। अव् + झ इति स्थिते "झोऽन्तः" 7-1-3 इति सूत्रेण झस्य अन्तादेशः अव् + अन्त = अवन्त इति जाते तस्य पुष्प शब्देन षष्ठीसमासः। शकन्ध्वादित्वात्पररूपे सुपि द्विवचने पुष्पवन्तौ। ननु उणादिसूत्रेषु अव धातोर्झच्प्रत्ययस्य विधायकं नोपलभामहे। सत्यम् – "जॄ विशिभ्यां झच्" इति तृतीयपादे औणादिकं सूत्रम्। जरन्तो = महिषः। वेशन्तः = पल्वलमिति तदुदाहरणम्। "कृत्यल्युटो बहुल" 3-4-113 मिति सूत्रे बहुल ग्रहणात्प्रकृत सूत्रनिर्दिष्ट धात्वपेक्षयेतरस्मादवतेरपि झचः प्रत्ययस्य प्रवृत्तिः। तथाच "रविशशिनौ पुष्पवन्ताख्या"विति नाममाला। "पुष्पवन्ताभ्यां, पुष्पवन्तयोरित्यादीति तदव्याख्यातारः। स्पष्टञ्चेदं मञ्जूषा व्याख्याने वैद्यनाथीयकलायाम्।" प्राक्प्रत्यग्धरणी धरशिखरस्थित पुष्प- "वन्ताभ्यामिति महाकविप्रयोगोप्यत्र मानमिति दिक्।

**अन्वय श्चास्य योग्यताबलाद्धात्वर्थे यागादावेव। "न कलञ्जं भक्षये"दित्यादौ च नञर्थेऽभावे। सोपि न त्रितयस्यापि, कलञ्जभक्षणस्य कृतिसाध्यत्वादिष्ट साधनत्वाच्च। अपि तु बलवदनिष्टाननुबन्धित्वस्यैव। अत एव तस्मिन् बलवदनिष्टाननुबन्धित्वाभावो बलवदनिष्टानुबन्धित्वं निषेधेन बोध्यत इति कारणाभावा तत्रा प्रवृत्तिः। तस्य चाधर्मत्वं, यागादेश्च धर्मत्वम्।**

**श्येनादौ च कृतिसाध्यत्वेष्टसाधनत्वयो रेवान्वयः, न तु बलवदनिष्टाननुबन्धित्वस्य, प्रमाणान्तरेण तत्फलस्या भिचारस्य नरकसाधनत्वावगमेन तस्य नरक प्रयोजकत्वरूपबलवद- निष्टानुबन्धित्वात्। अत स्तत्राऽऽस्तिकाना मप्रवृत्ति – रित्याहुः।**

ननु लिङर्थस्य समानपदोपात्तत्वप्रत्यासत्त्या तदर्थकृतावन्वयापत्तिरत आह – **अन्वयश्चेति** योग्यता बलात् = यागादावेवेष्टसाधनत्वादिसंभवात्। यागादावेवेत्येव शब्देन लिङर्थकृते व्यावृत्तिः। निषेधवाक्येषु तदन्वयं निरूपयति – **न कलञ्जमिति** योग्यता बलादेवाह – **नञर्थेऽभावे इति** लिङ इष्टसाधनत्वाद्यर्थत्रये प्रत्येकं शक्ति स्वीकारादाह – **न त्रितयस्यापीति** नञर्थाभावे त्रितयस्यापि नान्वय इत्यर्थः। **इष्टसाधनत्वाच्चेति** निषिद्धेपि कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वस्य कृतिसाध्यत्वस्य च सत्वेन तदभावस्य नञा बोधने तद्वाक्यप्रामाण्यानुपपत्तिरिति भावः। **बलवदनिष्टाननुबन्धित्वस्यैवेति** तस्य तत्रान्वये तस्यैवाभावो बलवदनिष्टनरकाद्यनुबन्धिनि तत्तत्कर्मण्यबाधितो बोध्यत इति तत्प्रामाण्योप- पत्तिरिति भावः। तदेतदाह – **अत एवेति** तावन्मात्रस्यैव तत्रान्वयस्वीकारादेवेत्यर्थः। तस्मिन् = कलञ्ज भक्षणादौ। **बलवदनिष्टाननुबन्धित्वाभाव इति** बलवदनिष्टाननुबन्धित्वस्य लिङर्थस्य नञर्थो

भावेऽन्वयात्तदभावबोधसिद्धिः। तत्फलितार्थमाह — **बलवदनिष्टानुबन्धित्वमिति कारणाभावात्** = बलवदनिष्टाननुबन्धित्व ज्ञानरूपकारणा भावात्। प्रकृतार्थमाह — **तस्य चाधर्मत्वमिति धर्मत्वमिति** लिङर्थस्येष्टसाधनत्वस्य धात्वर्थे यागादावन्वयेन यागगतश्रेयस्साधनताकत्वस्य वेदबोधितत्वात्तस्य तत्त्वमिति भावः।

श्येनादौ बलवदनिष्टाननुबन्धित्वस्य बाधितत्वात्तदतिरिक्तार्थद्वयस्यैवान्वय इत्याह — **श्येनादाविति** "श्येनेनाभिचरन् यजेतेत्यादावित्यर्थः। श्येनशब्दस्तद्व्यपदेशात्कर्मनामधेयम। प्रमाणान्तरेण = "अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहती"ति प्रायश्चित्तबोधकस्मृतिरूप प्रमाणान्तरेण। यद्वा प्रमाणान्तरेण = "मा हिंस्या त्सर्वाभूतानी"ति श्रुतिरूपप्रमाणेन। अतः = तस्य बलवदनिष्टानुबन्धित्व-ज्ञानात्। अप्रवृत्तिः = श्येनादौ।

## (तार्किकमतखण्डनम्।)

**तन्न, शक्तित्रयकल्पने गौरवात्। बलवदनिष्टानुबन्धित्वज्ञानाभावमात्रेणे ष्टसाधन-ताज्ञानादिनैव प्रवृत्ते रानुभविकत्वाच्च। अतो बलवदनिष्टानुबन्धित्व ज्ञानं प्रतिबन्धकम्, तदभावश्च स्वरूपसन्नेव कारणम। अतश्च तत्रे च्छावदेव लिङादेरनुपयोगा न्न तस्य तद्वाच्यत्वम्।**

तार्किकमतं दूषयति — **तन्नेति गौरवादिति** त्वन्मतरीत्यापि त्रितये शक्तिर्नकल्प्या। बलवदनिष्टा-ननुबन्धित्वरूपार्थपरित्यागेनेतरार्थद्वये शक्तिस्वीकरेपि क्षतिविरहादित्याशयः। तदेवोपपादयति **बल-वदनिष्टानुबन्धित्वेति इष्टसाधनता ज्ञानादिनैवेति** आदिना कृतिसाध्यत्वस्य ग्रहणम्। एव शब्देन बलवदनिष्टाननुबन्धित्वस्य व्यावृत्तिः। अतः = तावन्मात्रेण प्रवृत्तेस्सिद्धथ्वात्। **कारणमिति** तथाच बलतदनिष्टाननुबन्धित्वज्ञानं न प्रवृत्तौ कारणम्। बलवदनिष्टानुबन्धित्वज्ञानं प्रवृत्तिप्रतिबन्धकम्, तदभावः स्वरूपसन्नेव प्रवृत्तौ कारणमिति भावः। ततः किमायातमित्यत आह — **अतश्चेति** तस्य स्वरूपसतःकारणत्वादित्यर्थः। तत्र = तादृशज्ञानाभावे 'इच्छावदेव ='**इच्छायामिव**' तादृशज्ञानभाव प्रतिपादनाय लिङादिः प्रयुज्यते, स्वरूपेण सतैव तेन प्रवृत्तिसंभवे तज्ज्ञापकलिङादेरनुपयोग एवेति भावः। तदेतदाह — **लिङादेरनुपयोगादिति** तस्य = बलवदनिष्टाननुबन्धित्वस्य। तद्वाच्यत्वम् = लिङादिवाच्यत्वम्।

**किंचैवं १. नञ्समभिव्याहृत लिङर्थबलवदनिष्टाननुबन्धित्व प्रकारक शाब्द बोधे नञ्पद-जन्यो पस्थितिः कारणम्, २. नञ् समभिव्याहृतबलवदनिष्टाननुबन्धित्वातिरिक्त लिङर्थ प्रकारक शाब्दबोधे धातुजन्योपस्थितिः कारणम्, ३. नञसमभिव्याहृतलिङर्थ प्रकारक शाब्द बोधे धातुजन्यो पस्थितिः कारणम्, ४. लिङ्समभिव्याहृतनञर्थ प्रकारक शाब्द बोधे प्रथमान्त पदजन्योपस्थितिः कारणम्, ५. लिङ्समभिव्याहृतनञर्थ प्रकारक शाब्द बोधे धातुजन्यो पस्थितिः कारणम्, ६. नञसमभिव्याहृताख्यातार्थ कृति प्रकारक बोधे प्रथमान्त पदजन्यो पस्थितिः कारणम्, ७. नञ्समभिव्याहृताख्यातार्थकृति प्रकारक शाब्द बोधे नञ्पदजन्यो पस्थितिः कारणमिति सप्त कार्यकारण भावाः।**

किञ्च लिङादीनामर्थत्रये शक्तित्रयकल्पने तत्तत्समभिव्याहारात्तत्तद्व्युत्पत्तिवशाच्च विभिन्न शाब्दबोधोदयात्तदनुरोधात्तव मते कार्यकारणभाव सप्तक कल्पना गौरवं प्रसज्यते, इत्याह — **किंचेति** एवं = शक्तित्रयस्वीकारे। ।'न कलञ्जं भक्षयेदित्यादौ लिङर्थबलवदनिष्टाननुबन्धित्वप्रकारक नञर्थाभाव

विशेष्यक शाब्दबोधोदयात्तदनुरोधेनैकः कार्यकारण भावः कल्प्य इति दर्शयति। १. **नञ्समभिव्याहृतेति नञ्पदजन्येति** तथाच नञ्समभिव्याहृत लिङर्थ बलवदनिष्टाननुबन्धित्वनिष्ठ प्रकारता निरूपित विशेष्यता संबन्धेन जायमानशाब्दबोधे नञ्पद जन्योपस्थितिः कारणमिति स्वीकार्यम्। तत्रैव बलवदनिष्टाननुबन्धित्वातिरिक्तलिङर्थेष्टसाधनत्वादि प्रकारक धात्वर्थविशेष्यक शाब्दबोधोदयादन्योपि कल्प्य इत्याह – २. **नञ्समभिव्याहृतेति** नञोऽसमभिव्यहारे यजेतेत्यादितो भवदुक्तलिङर्थत्रय प्रकारक धात्वर्थविशेष्यक शाब्दबोधोदयात्तदनुरोधेनान्योपि कल्प्य इत्याह – ३. **नञसमभिव्याहृत लिङर्थेति** न पचति चैत्र इत्यादौ लिङतिरिक्त लकारसमभिव्याहृत नञ्समभिव्याहारे पाकानुकूल कृत्यभाववांश्चैत्र इति नञर्थप्रकारक प्रथमान्तार्थ विशेष्यकबोधोदयादन्योपि स्वीकार्य इत्याह – ४. **लिङसमभिव्याहृतेति** तदतिरिक्त लकारसमभिव्याहृतेत्यर्थः। "न कलञ्जं भक्षये"दित्यत्र बलवदनिष्टाननुबन्धित्वस्य लिङर्थस्य नञर्थाभावे तस्य च धात्वर्थभक्षणादावन्वयेन तादृशाभाववद् भक्षणामिति नञर्थाभाव प्रकारक धात्वर्थविशेष्यकबोधादन्योपि कल्पनीय इत्याह – ५. **लिङ्समभिव्याहृतनञर्थेति** चैत्रःपचतीत्यादौ पाकानुकूलकृतिमाँश्चैत्र इत्याख्यातार्थकृतिप्रकारक प्रथमान्तार्थविशेष्यक शाब्दबोधो दयादन्योपि कल्पयितव्य इत्याह – ६. **नञसमभिव्याहृताख्यातार्थेति** न पचति चैत्र इत्यत्रा ख्यातार्थकृतेर्नञर्थाभावे प्रकारतयान्वयात्पाकानुकूलकृत्यभाव इति बोधोदयात्तदनुरोधेनान्योपि कार्यकारणभावोऽङ्गीकार्य इत्याह – ७. **नञ्समभिव्याहृताख्यातार्थेति** आख्यातार्थकृतिप्रकारक नञर्थाभावविशेष्यकबोधे नञ्पदजन्योपस्थितिःकारणमिति स स्वीकार्य इति भावः। **सप्तेति** "नकलञ्जं भक्षयेदित्यत्र संपूर्ण बोधसिद्धये प्रथम-द्वितीय-पञ्चमास्त्रयः, न पचतीत्यत्र तत्सिद्धये चतुर्थसप्तमौ द्वौ, नञोऽसत्वे यजेतेत्येतदर्थं तृतीयः, नञोऽसत्वे लिङतिरिक्त लकारे पचतीत्यादौ षष्ठ इत्याहत्य सप्त कार्यकारण भावाः। संक्षेपेण वक्तव्यत्वे नञ्समभिव्याहारे तत्पञ्चकम्, तदभावे लिङो विषये एकः। तदतिक्तिलकारे एक इति ते सप्त कल्प्याः, अतोऽतीव गौरवमिति भावः।

**किंचैवं बलवदनिष्टननुबन्धित्वरूपलिङर्थस्यैव नञ् समभिव्याहारसत्त्वे तत्रान्वयः, तद्भिन्नलिङर्थस्य तु सर्वत्र धात्वर्थ एव, नञोऽसत्त्वे धात्वर्थ इति गुरुभूताने कसमभिव्याहार ज्ञानकार्य कारण भावकल्पनापत्तिः।**

**एवं घटो नास्ति, न पचति चैत्र इत्यादौ लिङादिसमभिव्या हाराभावे नञर्थस्या भावस्याऽऽश्रये प्रथमान्त पदोपस्थाप्ये न्वयः, लिङादिसमभिव्याहारसत्त्वे तु धात्वर्थ एवेति व्युत्पत्त्यनेकत्वम्।**

**तथा ख्यातार्थस्य कृत्यादे र्नञोऽसत्त्वे आश्रयता संबन्धेन प्रथमात्तपदोपस्याप्ये, तत्सत्त्वे तदर्थे प्रतियोगितासंबन्धेनेति सप्त गुरुभूताः कार्यकारण भावाः "नातिरात्रे षोडशिनं गृहणाती" त्येतदर्थ मन्योपि।**

एतानेवोपपादयति – **किञ्चैवमित्यादिना सप्त गुरुभूताः कार्यकारणभावा इत्यन्तेन ग्रंथेन।** एवञ्चायं ग्रन्थः पूर्वोक्तार्थसमर्थन पर एव, नतु कार्यकारणभावान्तरप्रदर्शनपर इतिबोध्यम्। क्वचित्पुस्तके "किञ्चैवमिति" पाठो नास्त्येव। **समभिव्याहारज्ञानेति** तज्ज्ञानस्यापि कारणत्व- स्वीकारात्तदानन्त्येन कार्यकारणभावानन्त्यापत्तिरिति भावः। विहितनिषेधस्थलेऽन्योपि कार्यकारण- भावः स्वीकार्य इत्याह – **नातिरात्रेति अन्योपीति** विध्युत्तरनिषेधवाक्यस्थ लिङर्थेष्टसाधनत्वप्रकारक शाब्दबोधं प्रति धात्वर्थान्वितनञ्पदजन्योपस्थितिः कारणमित्यन्योपि कार्यकारणभावस्स्वीकार्यः। तथाचनैयायिकमते कार्यकारणभावाष्टकस्वीकाररूपं गौरवमित्येतत्प्रघट्टकार्थः।

**अस्मन्मते तु वक्ष्यमाणरीत्या विध्यर्थस्य नञोऽसत्त्वे प्रयोज्यत्व संसर्गेण, नञर्थस्य सर्वत्र प्रतियोगितासंसर्गेण – प्रथमान्तार्थस्य चाधेयत्वसंसर्गेणा ख्यातार्थकृतौ, इति च त्वारो, वक्ष्यमाणरीत्या एक एव वेति लाघवम्।**

ननुभवन्मतेपि तत्तत्समभिव्याहारज्ञानस्य कारणत्वकल्पनावशात्तदानन्त्यतादवस्थ्यमित्यत आह – **अस्मन्मतेत्विति** अयमर्थः – अस्मन्मते इष्टसाधनत्वादित्रिके न लिङश्शक्तिः। किन्तु प्रवर्तनायाम्। सा च व्यापाररूपा। व्यापारस्याख्यातार्थकृतावन्वयः। तत्र च स्थलभेदेन चत्वार एवं कार्यकारणभावाः। अन्तत एक एव वेति महल्लाघवमिति। तदाह – **वक्ष्यमाणरीत्येति** "तदयमत्रक्रमः" इत्यादिवक्ष्यमाणरीत्येत्यर्थः। विध्यर्थस्य = व्यापारस्य। प्रयोज्यत्वसंसर्गेण =स्वविषयकज्ञानविशेष-जन्यानुमितिप्रयोज्यत्वसंसर्गेण तथाच निरुक्तसंसर्गेण लिङर्थव्यापारप्रकारक शाब्दबोधं प्रति विशेष्यता संबन्धेनाख्यातपदजन्य कृत्युपस्थितिःकारणमित्येकः कार्यकारणभावः। तत्सत्त्वे = नञःसत्वे। **स्वप्रयोज्येति** स्वविषयकज्ञानविशेषजन्यानुमितिजन्यस्वनिरूपित कारणतावच्छेदकीभूतसंबन्धनाश-कालीनाभाव प्रतियोगित्वसंसर्गेणेत्यर्थः। निरूपयिष्यते चेदमुपरिष्टात्। ननु भवदुक्तिः कम्बल्यां भुञ्जानस्य लोम गणना कथामनुकरोति। मम मतेष्टौ, तव मते चत्वारः, किमत्र लाघवमित्यत आह – **एक एव वेति** निपातोप सर्गप्रातिपदिकातिरिक्तशब्दगम्यो यः सबुपात्त लिङ्गसंख्या व्यतिरिक्तोऽर्थः, तत्प्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति लिङ्गानन्वयि भावना विशेष्यता संबन्धेनाख्यातपदजन्योपस्थितिः कारणमित्येक एव सः।

**किंच "न कलञ्जं भक्षये" दित्यत्र भक्षणे बलवदनिष्टानुबन्धित्वबोधेपि इष्टसाधनत्वस्यापि विधिना बोधितत्वा त्तस्य च लोकावगततृप्ति मादाय निर्वाहे वैयर्थ्याप त्ते, भवन्मते विश्वजिन्न्यायेन स्वर्गकल्पनापत्तिः। तदधिकस्यैव नरकस्य कल्पना न्न बलवदनिष्टानुबन्धित्व विरोधः। अत एव यत्र कृतिसाध्यत्वबोधे न कथञ्चिदपि वैयर्थ्यपरिहार, स्तत्र लोकसिद्धानुवादकत्वमपि नानुपपन्नम्।**

अर्थत्रये लिङश्शक्तिः। न कलञ्जमित्यादौ बलवदनिष्टाननुबन्धित्वस्यैव नञर्थेऽन्वयः नान्यद्वयस्य। श्येनवाक्येतु बलवदनिष्टाननुबन्धित्वातिरिक्तस्यार्थद्वयस्यैवान्वय इति नैयायिकैर्व्यवस्था कृता। तत्र न कलञ्जमित्यत्र कृतां व्यवस्थां दूषयति। **किञ्चेति** तदुक्तरीत्यैवाह – **बलवदनिष्टाननुबन्धित्व बोधेपीति** विधिप्रत्ययबोधितस्येष्टसाधनत्वस्य धात्वर्थेऽन्वयस्वीकारादाह – **इष्टसाधनत्वस्यापीति** तद्बोधोऽस्माकमिष्ट एवेत्यत आह – **तस्येति** यागादाविष्टसाधनत्वस्येत्यर्थः। **वैयर्थ्यापत्तेरिति** अनधिगतार्थबोधकत्वे एव वेदस्य प्रमाणत्वादिति भावः। **भवन्मते इति** वैयर्थ्यपरिहाराय "सस्स्वर्गस्स्यात्सर्वान्प्रत्यविशिष्टत्वा" 4-3-15 दिति चतुर्थाध्याय तृतीयपाद सप्तमाधिकरणन्यायेन स्वर्गफलकल्पनापत्तिः। नचेष्टापत्तिः, अपसिद्धान्तात्। ननु प्रत्यक्षश्रुत्या बलवदनिष्टानुबन्धित्व-बोधनात्तद्विरोधान्न स्वर्गकल्पनेत्यत आह – **तदधिकस्यैव नरकस्येति** विश्वजिन्न्यायकल्पितात् सवर्गादधिकस्यैव नरकस्य कल्पनान्न श्रुतिविरोध इति भावः। यत्तु – इष्टसाधनत्वांश इव लिङर्थकृतिसाध्यत्वांशेपि लोकावगतत्वा द्वैयर्थ्यपरिहाराय विश्वजिन्न्यायेन स्वर्गकल्पनापत्ति – र्गिति, तद् दूषयति "**अतएवेति** अत एवेत्यस्यार्थं विशदयति – **यत्रेति** 'सोमेन यजेत' व्रीहीन् प्रोक्षती "त्यादा वित्यर्थः"। कृतिसाध्यत्वबोधे – लिङादिभिस्तद्बोधने। कथञ्चिदपि = केनापिप्रकारेण – **नवैयर्थ्यपरिहार इति** प्रत्ययबोध्यस्य कृतिसाध्यत्वस्य लोकत एवावगत्या तस्य तद्बोधने प्रयोजनाभावा त्प्राप्तवैयर्थ्यस्य परिहारोनेत्यर्थः। **नानुपपन्नमिति** एवं च कृतिसाध्यत्वांशे लिङो लोकसिद्धार्थानुवाद-कत्वमेव एतच्चो भय वादिसंमतमेव अतस्तदंशे स्वर्गकल्पना न कार्या। परंत्विष्टसाधनत्वांशे "न कलञ्ज" मित्यत्रतत्कल्पना नैयायिकमते आपद्यत इति भावः।

**किंच यदित्रितयमपि लिङर्थ, स्तदाश्येने बलवदनिष्टाननुबन्धित्वस्य कुतो न बोधः? बाधा, दितिचेत्। कोऽयं बाधोनाम, 'श्येनफलस्याभिचारस्य हिंसात्वेन "न हिंस्या" दिति निषेधविषयत्वमेव बाधक, मिति चेत्, तस्य सामान्यशास्त्रत्वेन रागप्राप्तहिंसोपजीवनेनापि चरितार्थतया यागीयपशुहिंसायामिव 'श्येने बलवदनिष्टाननुबन्धित्वस्य विशिष्य विधिप्रमि-तत्वेन तन्निर्वाहार्थं 'श्येनेप्यप्रवृत्तेः। कथञ्चितप्रवृत्ता व प्यभिचारजन्यनरकस्याधिकत्वा कल्पनेनो भयोपपत्ते 'श्च।**

द्वितीयां व्यवस्थां दूषयति – **किञ्चेति** प्रमाणान्तरेण 'श्येने नरकसाधनताज्ञानात्तत्र बलवदनिष्टाननु-बन्धित्वस्य बाधितत्वान्न तस्य तत्रान्वय इति नैयायिकोक्तौ पर्यनुयुङ्क्ते – **कुतो न बोध इति** परेषामाशयं तैरेव प्रकाशयितुमाह – **कोयं बाधो नामेति** हिंसात्वेन = प्राणावियोगानुकूलत्वाद्धिंसात्वेन। **बाधकमिति** 'श्येनेपि बलवदनिष्टाननुबन्धित्वबोधने "न हिंस्यादित्यनेन तस्यानिष्टानुबन्धित्व बोधनाद्विरुद्धार्थ-बोधकता 'श्येन वाक्यस्य प्रसज्येत। अतस्तत्र तदबोधनमेवेति भावः। तस्य ="न हिंस्यात्सर्वाभूतानीति निषेधस्य। सर्वसंप्रतिपन्नमर्थं दृष्टान्तयति – **यागीयपशुहिंसायामिवेति**" अग्नीषोमीयं पशुमाल-भेतेत्यनेन पशुहिंसा बोधिता। उभयोरपि श्रौतत्वेनाविरोधाय वेदविहितहिंसातिरिक्तहिंसा परत्वं निषेधवाक्यस्य स्वीक्रियते। निषेधस्तु रागप्राप्तहिंसाविषयकतया चरितार्थः, तद्वदत्रापीति भावः। तन्निर्वाहार्थं = विधिबोधितेष्टसाधनता निर्वाहार्थम्, अप्रवृत्तेः = "न हिंस्यादिति सामान्यशास्त्रस्य। **कथञ्चित्प्रवृत्तावपीति** 'श्येनफलस्याभिचारस्य रागप्राप्तत्वान्न"हिंस्यादिति निषेध विषयत्वमेव। तस्या विहितत्वात्तदतिरिक्ततया निषेधस्य संकोचो न कर्तव्य एव। स्पष्टं चेदं चतुर्थे "यस्मिन् प्रीतिः पुरुषस्ये 4-1-2 त्यधिकरणे भाट्टदीपिकायाम्। उभयोपपत्तेः = बलवदनिष्टाननुबन्धित्वेष्टसाधनत्व रूपोभयोपपत्तेः।

**किंच बलवदनिष्टाननुबन्धित्वं न तावदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्, विधित स्तज्ज्ञानसत्त्वेपि स्वद्रव्यव्ययद्वेषवतोऽलसस्य च यागादौप्रवृत्त्यदर्शनेन तज्ज्ञानस्य प्रवृत्तिं प्रत्यकारणत्वात्। इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वस्य निषेधशास्त्रतः कलञ्ज-भक्षणादौ ज्ञानेपि रागिणः प्रवृत्तिदर्शनेन तज्ज्ञानस्य न प्रवृत्तिप्रतिबन्धकत्व मपि। अतोऽनिष्टे बलवत्त्वम् – उत्कटद्वेषविषयत्वम्। औत्कट्यं च जातिविशेषः फलैकोन्नेयः। तादृशद्वेषश्च प्राचीनकर्मानुरोधेन। अतश्च यागादिजन्येपि दुःखे यदा प्राचीनाशुभकर्मवशा- दुत्कटोद्वेषस्तदा तस्य बलवदनिष्टानुबन्धित्वज्ञानसत्त्वात्तत्रा प्रवृत्तिः। यदातु प्राचीनशुभकर्म- वशान्नोत्कटो द्वेष, स्तदा तस्य [1] बलवदनिष्टानुबन्धित्वज्ञानाभावसत्त्वात्प्रतिबन्धकाभावेन तत्र प्रवृत्तिश्च**

**एवं कलञ्जभक्षणादौ 'श्येने च प्राचीनकर्मवशेनैव प्रवृत्त्यप्रवृत्ती कादाचित्के उपपादनीये। अतश्च यागादौ नैयत्येन बलवदनिष्टाननुबन्धित्वस्य विधिना बोधयितुमशकयत्वात् कलञ्जभक्षणादौ च नैयत्येन तदभावस्य नञाबोधयितुमशक्यत्वाच्च नतत्र लिङादे 'श्शक्तिः।**

सर्वोऽयं विचारोऽर्थत्रयस्य लिङ्वाच्यत्वमभ्युपेत्य कृतः। वस्तुतस्तस्य तद्वाच्यत्वं नैव घटत इत्याह – **किञ्चेति** प्रथमतो बलवदनिष्टाननुबन्धित्वस्य तद्वाच्यत्वं निराकरोति – **बलवदनिष्टाननुबन्धित्व-मित्यादिना अतो न तावद्बलवदनिष्टाननुबन्धित्वं लिङर्थ इत्यन्तेन ग्रन्थेन।** बलवदनिष्टाननुबन्धित्वं निर्वक्तुमशक्यम्। निर्वचनेपि तस्य प्रवृत्त्यजनकत्वान्न लिङ्वाच्यत्वमित्याह – **न तावदिष्टोत्पत्तीति**।

[1] विशेषणाभाव प्रयुक्त विशिष्टाभावसत्त्वा दितिपाठान्तरम्।

**नान्तरीयकेति।** अन्तरशब्दो गहादिगणे पठ्यते। ततो भवार्थे "गहादिभ्यश्च" 4-2-138 इति सूत्रेण छप्रत्ययः। अन्तरशब्दो विनार्थे वर्तते, अन्तरे भवमन्तरीयम्। तेन नञः समासे नान्तरीयम्। "भावे 3-2-18 इत्यादिसूत्रेषु "नान्तरीयकत्वा"दिति महाभाष्यकार वचनप्रामाण्यात्पृषोदरादिपाठस्वीकारान्नलोपाभावेततः स्वार्थे कन्प्रत्ययः। एवञ्च यद्विना यन्न भवति तन्नान्तरायकमिति तदर्थः पर्यवस्यति। स्पष्टञ्चेदं "भावे" इति सूत्रे प्रदीपोद्योतयोः। अवश्यं भावीति तदर्थः पर्यवस्यति। **दुःखा जनकत्वमिति** अयमर्थः — "ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ लिङ्श्रवणे निरुक्तदुःखाधिक- दुःखाऽजनकत्व ज्ञाने जातेपि स्वीयधनव्ययमसहिष्णुरलसश्च यागे न प्रवर्तते। सर्वानुभवसिद्धमेतत्। अतस्तज्ज्ञानस्य प्रवृत्त्यजनकत्वात्तस्य लिङ्वाच्यत्वं न घटते। तथा "न कलञ्जं भक्षये"दित्यादि निषेधेभ्यः कलञ्जभक्षणादे रनिष्टसाधनत्वावगमेपि रागिणस्तत्र प्रवर्तन्त एव। एतदपि सर्वानुभवसिद्धम्। अतस्तयोः प्रवृत्त्यप्रवृत्तिजनकत्वाभावान्न लिङ्वाच्यत्व — मिति। तदाह **विधितस्तज्ज्ञान सत्त्वेपीति** निषेधवाक्येष्वाह **इष्टोत्पत्तीति** एवञ्च विधिनिषेधवाक्यार्थेषु केचित्प्रवर्तन्ते, केचन न प्रवर्तन्ते, न तादृशी प्रवृत्त्यप्रवृत्ती भवन्मते घटेते। कादाचित्कयोस्तयोः स्वयमुपपत्तिं दर्शयति — **अत इति** प्राचीनाशुभकर्मवशादिति पाठः।

निषेधांशे आह — **एवं कलञ्जभक्षणादाविति** नैयायिकमतदूषणं संगृहणाति **अतश्च यागादाविति।**

**यत्तु — बलवदनिष्ठाननुबन्धित्वस्य विध्यर्थत्वाभावे ।तृप्तिकामः कलञ्जंभक्षये' दिति लौकिकवाक्यस्य प्रामाण्यापत्तिः। बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिरूप-विध्यर्थस्य तत्रा बाधात्। अस्मन्मते तु बलवदनिष्टानुबन्धित्वस्य तत्र श्रुतिबोधितत्वा दप्रामाण्योपपत्ति — रिति,**

**तन्न, बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिविध्यर्थवादिनां मते तदापत्तावपि, प्रवर्तनाविध्यर्थवादिमते तदनापत्तेः। तथाहि — नञोऽसत्त्वे वक्ष्यमाणाप्रवर्तना प्रयोज्यत्व-संसर्गेणा ख्यातार्थे कृता वन्वेतीति वक्ष्यते, तच्च प्रयोज्यत्वं स्वविषयकज्ञानजन्यानुमिति प्रयोज्यत्वमिति च। तद्यत्र प्रमाणान्तरेण यागादाविष्टसाधनता न बुध्यते, तत्रेष्टसाधनत्वस्यैव प्रवर्तनाज्ञाना दनुमितिः। यत्रतु तत् प्रमाणान्तरेणावगतम्, निषेधेन च तस्या निष्टसाधनत्वमपि, यथा दीक्षितान्नभोजनस्य, "न दीक्षितस्या न्न मश्नीया" दिति निषेधात्, तत्र "हुतायां वपायां दीक्षितस्या न्न मश्नीया"दिति पुनर्विधि रनिष्टसाधनत्वाभावस्यैवाऽऽक्षेपकः, नत्विष्ट-साधनत्वस्य, तस्य प्रमाणान्तरसिद्धत्वेन सिषाधयिषाभावेना नुमित्यनुत्पत्तेः। अनिष्ट-साधनत्वाभावज्ञानस्यापि स्वविषयविशेष्यकानिष्टसाधनत्वज्ञानेऽप्रामाण्यनिश्चायकतया प्रवृत्तावुपयोगः। प्रवृत्तौ ह्यप्रामाण्यज्ञानानास्कन्दितानिष्टसाधनताज्ञानमेव द्वेषबलवत्तादशायां प्रतिबन्धकम्। अतश्च तेना प्रामाण्यनिश्चये विशिष्टाभावसम्पादकतया तस्य प्रवृत्तावुपयोगः सुलभ एव, अतश्च निषेध विषयविषयकेण विधिना भ्यनुज्ञाविधिरूपेण स्वविषयेऽनिष्ट-साधनत्वा भावस्यैवा क्षेपा, त्तस्य च लौकिकवाक्ये प्रत्यक्षश्रुतिविरोधेन बाधितत्वा दप्रामाण्योपपत्तिः। अतो न तावद्बलवदनिष्टाननुबन्धित्वं विध्यर्थः**

नैयायिकः पर्यनुयुङ्क्ते — **यत्त्विति प्रामाण्यापत्तिरिति** अयमर्थः — बलवदनिष्टाननुबन्धितवस्य लिङवाच्यत्वे कृतिसाध्यत्वेष्टसाधनतवयोः कलञ्जभक्षणादौ सत्त्वेनाबाधितार्थबोधकत्वात् "तृप्तिकामः कलञ्जं भक्षयेदिति वाक्यस्य प्रामाण्यं प्रसज्येत। अतस्तदपि तद्वाच्यमिति स्वीकार्यम्। तथा सति

प्रत्यक्षश्रुत्या तद्भक्षणे बलवदनिष्टानुबन्धित्वबोधनात्तद्विरुद्धार्थबोधकत्वा न्निरुक्त लौकिक वाक्यस्या प्रामाण्यमुपपद्यत – इति। तदाह – **बलवदनिष्टेत्यादिना** अस्मन्मते तु = बलवदनिष्टाननुबन्धित्वमपि लिङर्थ इति वदतां नैयायिकानां मते तु।

परैरुद्भावितामापत्तिं वारयति – **तन्नेति** बलवदनिष्टाननुबन्धित्वातिरिक्तस्येष्टसाधनत्वादेर्लिङर्थत्वमभ्युपगच्छतां मते "तृप्तिकामः कलञ्जं भक्षये"दिति लौकिकवाक्यस्य प्रामाण्यमापद्यते, अस्मन्मते नैयायिकोक्तमर्थत्रयमपि न लिङर्थत्वेनाभिमतम्। किन्तु लोकवेदसाधारण्येन प्रवर्तना तत्त्वेनाभिमता, अतोनिरुक्तवाक्यस्य प्रामाण्यं वार्यते इत्याशयेनाह – **बलवदनिष्टाननुबन्धित्वातिरिक्तेति** – तदापत्तावपि = अबाधितार्थ बोधकतया लौकिकवाक्यस्य प्रामाण्यापत्तावपि, प्रवर्तनाविध्यर्थवादिमते = लोकवेदसाधारण्येन प्रवर्तना विधि प्रत्ययार्थ इति वादिनो ममते, तामेवोपपादयति – **तथाहीत्यादिना – बाधितत्वादप्रामाण्यो पपत्तिरित्यन्तेन ग्रन्थेन**, इष्टसाधनत्वादिकं न लिङर्थः, किंतु "विधि निमन्त्रणे" 3-3-161 त्यादिपाणिन्यनुशासनबलात्प्रवर्तना तदर्थ इति वक्ष्यमाणसिद्धान्तानुसारेणाह – **वक्ष्यमाणा प्रवर्तनेति** तर्हि यागादौ सर्वानुभसिद्धेष्टसाधनत्वाद्यवगतिः कथ मित्यत आह – **तच्च प्रयोज्यत्वमिति स्वविषयकेति** स्वं =लिङर्थप्रवर्तना, तद्विषयकं ज्ञानं यागो विषयतासंबन्धेन प्रवर्तनावानिति पक्षधर्मताज्ञानम्, तज्जन्या अनुमितिः =याग इष्टसाधनमित्यनुमितिः, तत्प्रयोज्यत्वं कृतौ इति च = इति च वक्ष्यते तथा चास्मन्मते लिङर्थ प्रवर्तनया इष्टसाधनत्वादिकमनुमीयते इति भावः, तत् = तस्मात् निरुक्तार्थस्वीकारात्। प्रमाणान्तरेण =प्रत्यक्षादिना। इष्टसाधनत्वस्यैवेत्येवशब्देन समनन्तरवक्ष्यमाणरीत्याऽनिष्टसाधनत्वाभावस्य व्यावृत्तिः, **अनुमितिरिति** अयमत्र प्रयोगः – याग इष्टसाधनम्, अयमत्र प्रवर्ततामित्याकारकाप्तेच्छाविषयत्वात्, भोजनादिक्रियान्तरवदिति–, एवं स्वसिद्धान्तं संक्षेपेण प्रदश्र्थ "यत्रेष्टसाधनतानबुध्यते" तत्र "इष्टसाधनत्वस्यैवानुमितिः" इत्युपक्षिप्तं साकाङ्क्षमर्थं प्रकृतोपयोगितया विशदयति – **यत्र त्विति** तत् = इष्टसाधनत्वं तृप्त्यादीष्टसाधनत्वम्, प्रमाणान्तरेण = प्रत्यक्षादिना लोकतः, अत्र विषये विशेषमाह – **निषेधेन चेति** तस्य =इष्टस्य, अनिष्टसाधनत्वमपि = अवगतम्। तादृशमर्थं प्रदर्शयति – **यथा दीक्षितेति** तत्र = दीक्षितान्नभोजने, **अनिष्टसाधनत्वाभावस्यैवेति** निषेधवाक्याद्दीक्षितान्नभोजनेऽनिष्टसाधनत्वमवगम्यते, अतस्तदविरोधाय निषेधोत्तरविधिस्तद्भोजनेऽनिष्टसाधनत्वाभावमात्रमवगमयति, न त्विष्टसाधनत्वमिति भावः, आक्षेपकः = अनुमापकः, एवशब्दव्यावर्त्यं दर्शयति – **न त्विष्टसाधनत्वस्येति** उभयोर्वाक्ययोरपि श्रौतत्वात्तयोः प्रामाण्यसम्पत्तये एषैव रीतिर्युक्तेति भावः। तस्य = इष्टसाधनत्वस्य, **प्रमाणान्तरेति** रागादिना लोकसिद्धतयेत्यर्थः – सिद्धिसत्वेपि सिषाधयिषायामनुमितिरुत्पद्यते, साप्यत्र नास्तीत्याह – **सिषाधयिषाभावेनेति** सिषाधयिषाविरहरूपविशेषणाभाव प्रयुक्त विशिष्टाभावाभावान्नेष्ट साधनत्वानुमितिरिति भावः। अभ्यनुज्ञा विधिना तादृशाभावबोधने प्रयोजनं दर्शयति – **अनिष्टसाधनत्वाभावेति स्वविषयेति** – स्वं = "वपायां हुताया" मित्यभ्यनुज्ञावाक्यजन्यज्ञानम्, तद्विषयः = दीक्षितान्नभोजनम्, तद्विशेष्यके अनिष्टसाधनत्वज्ञाने इत्यर्थः, अनिष्टसाधनं दीक्षितान्नभोजनमित्याकारके निषेधवाक्यजन्यज्ञाने इति यावत्। विधिनिषेधयोरुभयोरपि दीक्षितान्नभोजनमेव विषयः। **अप्रामाण्यनिश्चायकतयेति**, उभयोरपि श्रौतत्वादन्यतरस्य वैयर्थ्यपरिहारार्थं विधिवाक्यजन्यज्ञानं निषेधवाक्य जन्यज्ञानेऽप्रामाण्यं निश्चिनोतीति भावः, प्रवृत्तौ = वपाहोमोत्तरदीक्षितान्नभोजने प्रवृत्तौ। ननु प्रतिबन्धकस्यानिष्टसाधनताज्ञानस्य सत्त्वात्कथं प्रवृत्तिरित्यत आह – **प्रवृत्तौहीति** अप्रामाण्यज्ञानेनाऽनास्कन्दितं यद् अनिष्टसाधनताज्ञानं, तदेव प्रवृत्तौ प्रतिबन्धकम्। तथाचऽप्रामाण्यज्ञानाभाव विशिष्टा निष्टसाधनता ज्ञानं प्रवृत्तिं प्रतिबध्नाति। प्रकृते निषेधोत्तरविधिवाक्यजन्यज्ञानं निषेधवाक्यावगतानिष्टसाधनता ज्ञानेऽप्रामाण्यज्ञानं (दीक्षितान्नभोजनमनिष्टसाधनमिति ज्ञानमप्रमा) संपाद्य विशिष्ट प्रतिबन्धकाभावं सम्पादयति, अतः

प्रवृत्तिर्निराबाधेत्याशयः, प्राचीनकर्मानुरोधेनाह – **द्वेषबलवत्तेति** फलितार्थमाह – **अतश्चेति** –निरुक्तार्थसिद्धेरित्यर्थः। तेन = विधिवाक्यजन्यज्ञानेन। अप्रामाण्यनिश्चये = निषेधवाक्यावगतानिष्ट-साधनताज्ञानेऽप्रामाण्यनिश्चये विशिष्टाभावसम्पादकतया = अप्रामाण्यज्ञानाभावरूपविशेषणाभाव प्रयुक्तविशिष्टाभाव सम्पादकतया, अप्रामाण्यज्ञानाभावो विशेषणम्। तस्य = विधिवाक्यावगतानिष्ट-साधनत्वाभावज्ञानस्य प्रवृत्तौ = वपाहोमोत्तरदीक्षितान्नभोजने प्रवृत्तौ, एवं च दीक्षितान्नभोजनस्य वेदबोधितानिष्टसाधनताकत्वाद धर्मत्वमेव, वपाहोमोत्तर दीक्षितान्नभोजनस्य वेदबोधितेष्टसाधनता-कत्वाभावान्न धर्मत्वम्, नाप्यधर्मत्वम्, अधर्मलक्षणाक्रान्तत्वाभावात्, प्रयोज्यस्य रागसत्वे तद्भोजने प्रवृत्तिः, अन्यथा तु न। "नानृतंवदेत्" "विवाहेऽनृतं वदेत्" इति वाक्यद्वयविषयभूतानृतवदनेप्येषैव रीतिराश्रयणीया, प्रतिपादिता च ग्रन्थकृता धर्माधर्मलक्षण- कथनावसरे। यदर्थं दीक्षितान्नभोजनविचारः प्रक्रान्तस्तत्प्रयोजनमाह – **अतश्चेति**, यद्वा एवमवतरणीयम् – ननु दीक्षितान्नभोजनोपन्यासस्तव प्रतिकूल एव, तद्वाक्यद्वयदृष्टान्तेन "न कलञ्जं भक्षयेत्" "तृप्तिकामः कलञ्जं भक्षये"दिति वाक्यद्वयस्यापि प्रामाण्यापत्तेर्दुर्वारत्वा दित्यत आह – **अतश्चेति** – निषेधोत्तरविधिसत्तास्थले निरुक्तरीतेरेवाश्रयणीयत्वादित्यर्थः। उक्तमर्थं संक्षेपेण दर्शयति – **निषेधविषयेति** निषेधविषयः = दृष्टान्ते दीक्षितान्नभोजनम्, दार्ष्टान्तिके कलञ्जभक्षणम्। तद्विषयको विधिः = "वपायां हुतायां दीषितस्यान्नमश्नीया"दिति "तृप्तिकामः कलञ्जं भक्षये"दिति च, तेनेत्यर्थः, **अभ्यनुज्ञाविधीति** – प्रमाणान्तर प्रतिपन्नानिष्टसाधनत्वस्य तदभावावधारणमात्रफलको विधिरभ्यनुज्ञा विधिः, तद्रूपेणेत्यर्थः। स्वविषये = दीक्षितान्नभोजने कलञ्जभक्षणे च, एवं दीक्षितान्नभोजन कलञ्जभक्षणयोरुभयोरपि साम्यं प्रदर्श्य कलञ्जभक्षणे तदन्नभोजनापेक्षया भेदं प्रदर्शयन् "तृप्तिकामः कलञ्ज"मिति वाक्यस्याप्रामाण्यं निरूपयति – **तस्य चेति**, अनिष्टसाधनत्वाभावस्येत्यर्थः। अस्य "बाधितत्वा" दित्यत्रान्वयः, लौकिकवाक्ये = तृप्तिकामः कलञ्जं भक्षये" दित्यादितद्वाक्ये, प्रत्यक्षश्रुतिविरोधेन = कलञ्जभक्षणेऽ-निष्टसाधनत्वबोधक "न कलञ्जं भक्षये"दिति प्रत्यक्षवेदवाक्य विरोधेन **बाधितत्वादिति**, एवं च दीक्षितान्न भोजनविषयक विधिनिषेध वाक्ययोरुभयोरपि श्रुतिरूपत्वेन निरुक्तरीत्योभयोरपि प्रामाण्यं सेत्स्यति, कलञ्जभक्षणविषयक विधिनिषेधवाक्ययोर्मध्ये विधिवाक्यस्य लौकिकत्वेन तस्य प्रत्यक्ष-श्रुतिविरोधेन बाधितार्थ बोधकत्वा दप्रामाण्यं निराबाधं सिध्यतीति भावः। तदाह – **अप्रामाण्योपपत्ति-रिति** "तृप्तिकामः कलञ्जं भक्षये"दिति लौकिकवाक्यस्य तत्त्वोपपत्तिरित्यर्थः। एवं च निरुक्तलौकिकवाक्यस्य प्रामाण्यवारणार्थमपि बलवदनिष्टाननुबन्धित्वस्य लिङ्वाच्यत्वं प्रत्याशान कार्या तार्किकैरित्येतत्प्रघट्टकार्थः। बलवदनिष्टाननुबन्धित्वं न लिङर्थ इति प्रक्रान्तमर्थमुपसंहरति – **अतो न तावद् बलवदनिष्टाननुबन्धित्वं लिङर्थ इति।।**

## (कृतिसाध्यत्वस्य लिङर्थत्वनिराकरणम्।)

**नापि कृतिसाध्यत्वम्, तस्य भवन्मते पाकानुकूलत्वस्य कृतौ भाने समानसंवित्संवेद्यतया पाकेपि कृतिसाध्यत्वस्य भानोपपत्ते रन्यलभ्यतया लिङादिवाच्यत्वानुपपत्तेः। अस्मन्मतेपि प्रवर्तनाक्षे-पादेवेष्टसाधनत्वादिवद्भानोपपत्ते रन्यलभ्यत्वम्। अतः परिशेषादिष्टसाधनत्वमेव लिङाद्यर्थ इति वक्तव्यम्।**

**इष्यते च कैश्चिदाधुनिकै रिदमेव। नञ्समभिव्याहारस्थले त्वनिष्टसाधनतायां लिङो लक्षणा। अतो लिङादे रिष्टसाधनत्वमेवार्थ – इति।**

तार्किकैः प्रदर्शितानां त्रयाणां लिङर्थानां मध्ये बलवदनिष्टाननुबन्धित्वस्य लिङ्वाच्यत्वं निरस्य

कृतिसाध्यत्वस्यापि तत्त्वं निराकरोति — **नापि कृतिसाध्यत्वमिति** तदपि न लिङर्थ इत्यर्थः। तस्य = कृतिसाध्यत्वस्य। अस्य लिङादिवाच्यत्वानुपपत्तेरित्यत्रान्वयः। ननु तस्य तत्त्वाभावे तद्भानं कथमित्यत आह — **भवन्मते इति** नैयायिकमते इत्यर्थः। कृतौ = आख्यातार्थकृतौ। **भाने इति** धात्वर्थस्य पाकस्याख्यातार्थकृतावनुकूलतासंबन्धेनान्वयात्कृतौ तद्भाने इत्यर्थः, **समानसंविदिति** पाकानुकूलत्वस्य कृतौ भाने कृतिसाध्यत्वं पाके भासत इति भावः, तदाह — **पाकेपि कृतिसाध्यत्वस्य भानोपपत्तेरिति, अन्यलभ्यतयेति,** अनन्यलभ्यः शब्दार्थः इति न्यायादिति भावः। तथा च समानसंवित्संवेद्यं कृतिसाध्यत्वमादाय चन्द्रमण्डलग्रहणादौ प्रवृत्तिर्वार्यत इति भावः। ननु भवन्मते तद्भानं कथमत आह — **अस्मन्मतेपीति प्रवर्तनाक्षेपादेवेति** लिङ्वाच्य प्रवर्तनयाऽनुमानादेवेत्यर्थः। उपपादयिष्यते चेदं "ततश्च तस्मिन् हेतौ क्रियान्तरदृष्टान्तेन इष्टसाधनत्वकृतिसाध्यत्वयोर्व्याप्ति स्मरणादुभय विषयिणी अनुमिति-रुत्पद्यते" इति ग्रन्थेन। अतः = बलवदनिष्टाननुबन्धित्व कृतिसाध्यत्वयोर्लिङादिवाच्यत्वायोगात् **वक्तव्यमिति** लिङाद्यर्थो यदि वक्तव्य स्तदा तदेव तदर्थ इति वक्तव्यम्, न तु सिद्धान्त इति भावः। तत्रान्येषां संवादं दर्शयति — **इष्यतेचेति** कैश्चित् = मण्डनमिश्रैः। आधुनिकैः = पार्थसारथिमिश्र — भट्टोजिदीक्षित — कौण्डभट्टादिभिः। इदमेव = इष्टसाधनत्वमेव, नवीनतार्किकमतेनाह — **नञ्समभिव्याहारेति** "न कलञ्जं भक्षये" दित्यादावित्यर्थः, **लक्षणेति,** तत्र नञ् तात्पर्यग्राहकमिति भावः, इष्टसाधनत्वमेवेत्येव शब्देन बलवदनिष्टाननुबन्धित्व कृति साध्यत्वयोर्व्यावृत्तिः।

**तदपि न, तथात्वे इष्टसाधनत्वज्ञानादेव प्रवृत्तेः — आचार्यप्रेरितो हं गामानयामि" त्याचार्यादेः प्रवर्तकत्वव्यवहारानानुपपत्तेः। न च प्रवृत्तिजनकेष्टसाधनताबोधकलिङुच्चारयितृत्वा त्तस्य प्रवर्तकत्वव्यवहारः, तथात्वे राज प्रेरितपदाते स्तादृशलिङुच्चारयितृत्वेन प्रवर्तकत्वापत्तौ पदातिप्रेरितो हं न गा मानयामि, किंतु राजप्रेरित 'इति पदातौ प्रवर्तकत्वाभावव्यवहारानु-पपत्तेः'।**

एवं हि इष्टसाधनत्वं लिङाद्यर्थ इति सिद्धान्त इति भ्राम्येयुः, तन्माभूदित्याह - **तदपि नेति,** तदपि = इष्टसाधनत्वमपि, न लिङाद्यर्थः। तथात्वे = तस्य लिङर्थत्वे। **इष्टसाधनत्वेति** तस्य लिङर्थत्वे तज्ज्ञानादेवं चैत्रादेः प्रवृत्तेरित्यर्थः **आचार्यप्रेरित इति** चैत्र। गामानयेत्याचार्येण प्रेरितश्चैत्रो गामानयति, तदा केन प्रेरितो भवान् गामानयतीति परेण पृष्टश्चैत्र एवं प्रतिवक्ति, आचार्यप्रेरितोहं गामानयामीति अस्माद् व्यवहारादाचार्यस्य प्रवर्तकत्वं स्पष्टं प्रतीयते। भवदुक्तरीत्या तु आचार्यप्रयुक्तवाक्ये लोटः सत्त्वात्तदर्थेष्ट साधनताज्ञानस्यैव **प्रवर्तकत्वलाभान्निरुक्तलोकव्यवहारो** नोपपद्येत। यज्ज्ञानात्प्रवृत्तिस्तस्यैव शब्द-वाच्यत्वस्यन्याय्यत्वदिति भावः। तदाह — **आचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तेरिति** लोडादेरेव प्रवर्तकत्वलाभादाचार्यादेस्तादृश व्यवहारानुपपत्तिरित्यर्थः, **न चेति** अयमर्थः — इष्टसाधनत्वमेव लिङाद्यर्थः, तज्ज्ञानादेव चैत्रादेर्गवानयनादौ प्रवृत्तिः आचार्यादेः प्रवर्तकत्वव्यवहारस्तु तादृश लिङाद्युच्चारयितृत्वादिति, तदेतदाह — **प्रवृत्तिजनकेति,** गवानयनादिरूपचैत्रीय प्रवृत्तिजनकं यदिष्ट-साधनताज्ञानं, तद्वाचको यो लिङादि स्तदुच्चारयितृत्वादित्यर्थः। तस्य = आचार्यादेः, **प्रवर्तकत्वव्यवहार इति** तथाचेष्टसाधनत्वस्य लिङाद्यर्थत्वेपि तद्व्यवहारोपपत्ते र्न तद्विरोध इति भावः, तद्दूषयति, **तथात्वे इति** तादृशलिङुच्चारयितृत्वेनाऽचार्यादेः प्रवर्तकत्वस्वीकारे इत्यर्थः, **राजप्रेरितेति** "प्रजाभ्यः करादिकं गृह्णन्त्विति राजा पदातीन् प्रेरयति तदनुसारेण" प्रजाः करं दद्युः, राज्ञे यद्देयं तद्ददतु" इति पदातय उद्घोषयन्ति, निरुक्तरीत्याश्रयणेतादृश लिङाद्युच्चरयितृत्वात्पदातिष्वपि प्रवर्तकत्वापत्तिरिति भावः, नन्विष्टापत्तिरेव तत्रेत्यत आह — **पदाति प्रेरितोहं न गामानयामीत्यादि प्रवर्तकत्वाभावेति,** विरुद्धव्यवहार दर्शनात्तत्र नेष्टापत्तिः कर्तुं शक्यत इति भावः।

**अथ अन्याप्रेरितत्वे सति तादृशलिङुच्चरयितृत्वं प्रवर्तकत्वम्, तथात्वे पिशुनप्रेरिते राज्ञि प्रवर्तकत्वानापत्तेः, अत श्चैतादृशव्यवहारबलात् प्रवृत्ति कारणीभूत ज्ञानविषयीभूतेच्छा-श्रयत्वेनैव राजादेः प्रवर्तकत्वं वाच्यम्, न चेच्छाया लिङादिवाच्यत्वाभावेपि ज्ञानं संभवति, विषयविशेषस्ये ष्टसाधनत्वेपि परेच्छाविषयत्वाभावेन व्यभिचारा दिष्टसाधनत्वस्यानुमाप-कत्वानुपपत्तेः।**

**अतः परिशेषाल्लिङादिवाच्यैव सा, तथाच प्रवृत्तिविषये यागादा विष्टसाधनत्वादेरनुमानेनैव बोधोपपत्ते र्न पुन र्वाच्यत्व कल्पनावसरः। भवति हि 'अयमत्र प्रवर्तता' मित्याकारकाप्तेच्छा विषयत्व मिष्टसाधनत्वव्याप्तम्। अत स्तेन तदनुमानम्।**

एतन्मति प्रसङ्गं वारयितुं शङ्कते **अथेति अन्याप्रेरितत्वे सतीति** पदातौ राजरूपान्यप्रेरितत्वस्य सत्त्वान्न तत्र तादृश लिङुच्चार्रयितृत्वेपि प्रवर्तकत्वव्यवहारः, राज्ञि अन्या प्रेरितत्वस्य सत्वात्तत्र तद्व्यवहार- श्चोपपद्यत इति भावः। तद् दूषयति – **तथात्वे इति** अन्याप्रेरितत्वे सतीति विशेषणदाने इत्यर्थः, **पिशुनप्रेरित इति** रहसि पिशुनः, "एनं दण्डय, अस्माद्धनमपहारय" इत्यादि राज्ञे उपदिशति तदधीनो राजा तदर्थं भृत्यान् प्रेरयति, तत्र राज्ञि प्रवर्तकत्वव्यवहारः सर्वसंमतः, निरुक्तविशेषणदाने तु राज्ञि अन्यप्रेरितत्वस्य सत्त्वात्प्रवर्तकत्वानापत्तिरिति भावः। अतश्च = तादृशलिङाद्युच्चार्रयितृत्वम्, अन्याप्रेरितत्वे सति तत्वमिति वा प्रवर्तकत्वस्य निर्वक्तुमशक्तेश्च। **एतादृशेति**, आचार्यप्रेरितोहं गामानयामीति सार्वजनीनव्यवहारेत्यर्थः। **प्रवृत्तिकारणीभूतेति** गवानयनादि विषयकप्रवृत्तेः कारणीभूतं यद् ज्ञानं गवानयनमिष्टसाधनमिति ज्ञानं, तद्विषयीभूता या इच्छा गवानयनं भवत्वितीच्छा, तदाश्रयत्वेनैवेत्यर्थः, एवशब्देन प्रकारान्तरस्य तादृशलिङुच्चारयितृत्वादेर्व्यावृत्तिः, **प्रवर्तकत्वं वाच्यमिति** प्रवर्तकत्वमेतदेवेति स्वीकार्यम्, तथा चेच्छाज्ञानार्थं तस्या लिङादिवाच्यत्वमावश्यकमिति भावः, **न चेति** अयमर्थः – इष्टसाधनत्वमेव लिङर्थः, तेन च इच्छाऽनुमीयते, अयमत्र प्रयोगः, यागगवानयनादिकमिच्छा-विषयः, इष्टसाधनत्वादिति, तथा चानुमितेच्छाश्रयत्वेन राजादेः प्रवर्तकत्व व्यवहारोपपत्या न तदनुरोधेनेच्छाया लिङादिवाच्यत्वं स्वीकार्य-मिति। इच्छायाः = राजादेः प्रवर्तकत्वव्यवहार प्रयोजकेच्छायाः, **लिङादीति**, आदिना लोडादेर्ग्रहणम्। ज्ञानं = तादृशेच्छाज्ञानम्। संभवति = लिङ्वाच्येष्टसाधनानुमानात्संभवति, समाधत्ते - **विषयविशेषस्येति**, मैत्रादि भोजनादेरित्यर्थः **परेच्छेति** चैत्रादिपरेच्छाविषयत्वाभावेनेत्यर्थः, **व्यभिचारादिति** साध्याभाववद्वृत्तित्वेनेष्टसाधनत्वरूपहेतोर्व्यभि-चारादित्यर्थः, **अनुमापकत्वेति**, इच्छानुमापकत्वानुपपत्तेरित्यर्थः, चैत्रादियः परः तदिच्छा विषयत्वा-भाववति मैत्रभोजनादौ इष्टसाधनत्वस्य सत्त्वात्तद्रूपहेतुर्व्यभिचारी, यथा धूमवान् वह्नेरित्यत्र धूमाभाववदयोगोलकवृत्तित्वाद्वह्निर्व्यभिचारी, अतस्तेन इच्छा नानुमातुं शक्यत इति भावः।

स्वसिद्धान्तमाह - **अत इति** इष्टसाधनत्वस्य लिङ्वाच्यत्वमाश्रित्य तेनेच्छाया अनुमातु मशक्यत्वादित्यर्थः। सा = राजादेः प्रवर्तकत्वप्रयोजिका इच्छा। नन्वेवमिष्टसाधनत्वस्य भानं कथ मित्यत आह - **तथा चेति** इच्छाया लिङादिवाच्यत्वे चेत्यर्थः, प्रवृत्ति विषयभूते = प्रवृत्तौ विषयभूते, इष्टसाधनत्वादेरित्यादिपदेन कृतिसाध्यत्वस्य ग्रहणम्। **अनुमानेनैवेति** अयमर्थः – भवदुक्तरीत्या लिङ्वाच्येन इष्टसाधनत्वेन इच्छा नानुमीयते, मत्पक्षे तु तद्वाच्यया इच्छया तदनुमीयते, यत्र यत्रेच्छाविषयत्वं, तत्रेष्टसाधनत्वमिति व्याप्तिज्ञानादिष्टसाधनत्व व्याप्येच्छा विषयत्ववान् यागादिरिति परामर्शाच्च याग इष्टसाधनमित्यनुमिति रुत्पद्यते इति, **न पुनर्वाच्यत्वेति** तथाच यागादाविष्ट-साधनत्वधियोऽनुमितत्वमेव, न तु शाब्दत्वमिति भावः। इच्छाविषयत्वमात्रं न हेतुः, समनन्तरवक्ष्य-माणरीत्या तस्य व्यभिचारादित्याशयेनाह - **भवति हीति अयमत्रेति** यजमानो यागे प्रवर्ततामित्याकारिका

या प्रवर्तकाप्तेच्छा तद्विषयत्वमित्यर्थः। अतः = तादृशेच्छाविषयत्वस्येष्टसाधनत्वव्याप्तत्वात्। तेन = इच्छारूपेण लिङाद्यर्थेन तदनुमानम् = इष्टसाधनत्वानुमानम्।

## (हेतुघटकदलानां प्रयोजनकथनम्।)

**अत्रा सुखे सुखत्वभ्रमेणा सुखएव सुखं मे जायता' मितीच्छाविषयत्वसत्त्वेपीष्टसाधनत्वाभावा त्तत्र व्यभिचार वारणाय हेता वाकारकपर्यन्तानुधावनम्। प्रतारक- तादृशेच्छाविषये व्यभिचार वारणाय 'आप्ते'ति। अत्र चेच्छाविषयत्व मिच्छाविषयी भूतप्रवृत्तिविषयत्वं बोध्यम्। तेन प्रवृत्तौ तदाश्रये पुरुषे वा इच्छाविषये इष्टसाधनत्वाभावेपि न व्यभिचारः। यागादावेव च हेतुसत्त्वा दिष्टसाधनत्वानुमानम्।**

इच्छाया "अयमत्र प्रवर्तता" मित्याकारकत्वप्रदर्शनस्य फलमाह - **अत्रेति** अनुमान इत्यर्थः, **असुख एवेति** वस्ततोऽसुखे कस्यचित्सुखत्वभ्रमो जातः, ततः "सुखं मे जायता" मितीच्छा जाता, परंतु तत्रेष्टसाधनत्वं नास्ति, साध्यत्वं त्विष्टसाधनत्वस्य। तथा चेष्टसाधनत्वाभाववति असुखे इच्छाविषयत्वस्य हेतोः सत्त्वाद् व्यभिचारः स्यात्, अतस्तद्वारणाय एतादृशाकारकत्वमिच्छायाः स्वीकार्यम्। प्रकृते च इच्छा "अयमत्र प्रवर्तता" मित्याकारिका न, किंत्वन्यादृशी "सुखं मे जायता" मित्याकारिका, अतो न व्यभिचारः, आकारकपर्यन्तं परित्यज्य इच्छाविषयत्वस्यैव हेतुत्वे निरुक्तरीत्या व्यभिचारः स्यादिति भावः, हेतोः साध्याभाववद्वृत्तित्वं दर्शयति — **इच्छाविक्षयत्वसत्त्वेपीष्ट साधनत्वाभावादिति पर्यन्तानुधावनमिति** इच्छाविषयत्वादित्येतावन्मात्रं हेतुमप्रदर्श्य इच्छायां आकारकपर्यन्तं विशेषणमुपात्तमिति भावः, आप्तेति विशेषणस्य फलमाह — **प्रतारकेति** प्रतारकः = वञ्चकः। धनिकस्य सकाशाद्धनादिकमपहर्तुकामः प्रतारकः भोः त्वं ग्रामं गच्छ, तत्र तवाभिमतंकार्यं सिध्यतीति प्रेरयति, वस्तुतो ग्रामगमनं धनिकस्य नेष्टसाधनम्, तथापि तादृशे ग्रामगमने 'अयमत्र प्रवर्तता" मित्याकारकेच्छाविषयत्वसत्वात् व्यभिचारः स्यात् अतः आप्तेति तल्लक्षणं तु अनुपदं वक्ष्यति, तादृशेच्छाविषये = अयं धनिको ग्रामगमने प्रवर्ततामित्याकारकेच्छाविषये ग्रामगमनादौ, **व्यभिचारेति** इष्टसाधनत्वाभाववति ग्रामगमने तादृशेच्छाविषयत्वस्य सत्वाद् व्यभिचारः, तद्वारणायेत्यर्थः, नन्वेवमपि व्यभिचार एव, इष्टसाधनत्वा भाववन्यां प्रवृत्तौ तदभाववति प्रवृत्याश्रये पुरुषे च निरुक्तेच्छाविषयत्वस्य सत्त्वादित्यत आह — **अत्र चेति** प्रकृतहेतुघटकं चेत्यर्थः, **इच्छाविषयभूतेति** निरुक्तेच्छाविषयीभूता या प्रवृत्ति स्तद्विषयत्वमित्यर्थः, तत्त्वं न प्रवृत्तौ नापि तादृशे पुरुषे, किंतु यागादावेव, अतो न व्यभिचार इति भावः, तदाह — **तेनेति** निरुक्तार्थस्वीकारेणेत्यर्थः, तदाश्रये = प्रवृत्याश्रये, पुरुषे वा = पुरुषे च। उभयोर्विशेषण"मिच्छाविषये" इति, **यागादावेवेति** एवशब्देन प्रवृत्यादेर्व्यावृत्तिः" यागादौ तादृशेच्छाविषय प्रवृत्तिविषयत्वसत्त्वात्तेन तत्रेष्टसाधनत्वमनुमीयत इति भावः,

## (हेत्वसिद्धिशङ्का, तन्निरासश्च)

**अत्र च यद्यपि वक्ष्यमाणरीत्या व्यापारत्व, मिच्छात्वमेव वा लिङादिपदशक्य तावच्छेदकं, तथापि तेन रूपेणोक्तविधेच्छाया एव लिङादिपदाद्बोधः, तत्तद्धातुप्रत्ययादिसमभिव्याहारस्य नियामकत्वात्। भवतिहि 'मृदस्ति पात्रं करिष्यामि'त्यादौ पात्रत्वेन सामान्यरूपेण मृन्मयपात्रविषयको बोधः, समभिव्याहारात्। प्रवृत्तिसामर्थ्याच्च प्रवृत्याश्रयस्य पुरुषस्य बोधः। वचनेङ्गितादिना चा त्पत्वे वगते इच्छायामाप्त निष्ठत्वस्य समानसंवित्संवेद्यतया यागादौ तादृशेच्छाविषयप्रवृत्तिविषयत्वस्य बोध इति न हेत्वसिद्धिः। तेनोक्तविधसामग्र्या हेतुज्ञाने जाते**

**इष्टसाधनत्वाद्यनुमानं सुलभमेव। अतश्चान्यलभ्यत्वा दिष्टसाधनत्वादे र्न लिङादिवाच्यत्वम्।**

एवं व्यभिचारवारणेपि हेत्वसिद्धिः प्रसज्यत इत्याक्षिपति, **अत्र चेति** लिङर्थविषय इत्यर्थः, वक्ष्यमाणरीत्या = ''अपि तु लोकवेदसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम् ''वस्तुतस्तु इच्छात्वं जातिरेव लिङादिशक्यतावच्छेदिका'' इति ग्रन्थेन वक्ष्यमाणरीत्या। **शक्यतावच्छेदकमिति** — अयमर्थः — व्यापारत्वेनरूपेण इच्छात्वेन रूपेण वाऽऽख्यातेन इच्छा बोध्यते, तेनेच्छाया एवाख्यातार्थतया इच्छाविषयत्वमेवेष्टसाधनत्वानुमाने हेतुःस्यात्, न तु त्वदुक्तरीत्या ''अयमत्र प्रवर्तता'' मित्याकार-काप्तेच्छा विषयत्वम्, तथा च भवदुक्तहेत्वसिध्द्या यागादाविष्टसाधनत्वानुमित्यनिर्वाह — इति, हेत्वसिद्धिं परिहरति — **तथापीति** तेन रूपेण सामान्यरूपेणेच्छाया लिङर्थत्वेपीत्यर्थः तेन रूपेण = व्यापारत्वेन रूपेण इच्छात्वेन रूपेण च, व्यापारत्वेन व्यापारस्य वाच्यत्वेपि तस्य, चैत्र प्रेरितोहं पचामीत्यादिव्यवहार-वशादिच्छारूपत्वमवगम्यते, एतच्च समनन्तरमेव वक्ष्यति। उक्तविधेच्छाया एव = अयमत्रप्रवर्तता मित्याकारकाप्तेच्छाया एव, एव शब्देन इच्छा सामान्यस्य व्यावृत्तिः, **लिङादिपदाद्बोध इति**, अतो न हेत्वसिद्धिरिति भावः, प्रत्ययाद् विशेषरूपेण बोधे नियामकमाह — **तत्तद्धात्विति** यजेत दद्यात् जहुयादित्यादौ यज्यादि समभिव्याहारस्येत्यर्थः। अत्रार्थे सम्प्रतिपन्नं दृष्टान्तमाह — **भवतिहीति**, अस्य ''मृन्मयपात्रविषयको बोध इत्यत्रान्वयः, **सामान्यरूपेणेति**, पात्रशब्दात्पात्रत्वरूप सामान्य धर्मा-वच्छिन्नस्य पात्रस्य बोधेपि मृच्छब्दसमभिव्याहारान्मृन्मय पात्रविषयको बोधस्तद्वदिति भावः, यथावा वैयाकरणमते राजपुरुष इति समासपदे विशिष्टशक्तिबलाद्राजशब्दसमभिव्याहारे पुरुषपदात्पुरुषत्वेन रूपेण राजान्यस्वामिकत्वा भाववद्राजसंबन्धवत्पुरुषव्यक्ति बोधस्तद्वत्, अयमिति पुरुषविशेषलाभोपायं दर्शयति — **प्रवृत्तिसामर्थ्यादिति** लिङादिश्रवणे ''अयं मां प्रवर्तयती''ति व्यवहारबलेन प्रवर्तनाऽऽनुभ-विकी, तत्सामर्थ्यादित्यर्थः। **प्रवृत्याश्रयस्येति** प्रवृत्तिप्रयोज्य प्रवर्तनाश्रयस्य प्रयोजकस्येत्यर्थः। आप्तेत्यर्थलाभ माह - **वचनेङ्गि तादिनेति** इच्छायामाप्तनिष्ठत्वमुपपादयति, **इच्छायामिति समानसंविदिति** इच्छाश्रये आप्तत्वावगमे इच्छायामाप्तनिष्ठत्वमर्था त्सिध्यतीति भावः, एवं पदार्थ जातस्य लाभोपायं प्रदर्श्य प्रकृते योजयति, **यागादाविति तेन** = समभिव्याहारवशेन, उक्तविधसामग्र्या = धात्वर्थ प्रवृत्याश्रयाप्तनिष्ठेच्छादिरूपसामग्र्या, **हेतुज्ञाने** = अयमत्र प्रवर्ततामित्याकारकाप्तेच्छा विषयप्रवृत्तिविषयत्व रूपहेतुज्ञाने, इष्टसाधनत्वानुमानं = यागादौ, नैयायिकमतदूषणमुपसंहरति **अतश्चेति** निरुक्तार्थस्वीकारस्य युक्तत्वादित्यर्थः, अन्यलभ्यत्वात् = अनुमानलभ्यत्वात्।

## (इष्टसाधनत्वस्य लिङर्थत्वेऽतिप्रसक्तिः।)

**किंच भवन्मते येनस्वत एव पाकादाविष्टसाधनत्वादि बुध्द्वा प्रवृत्तम्, तस्य पाकवर्तमानता-दशायां 'चैत्रः पचे' दितिप्रयोगापत्तिः। इष्टसाधनत्वादिविशिष्टपाकानुकूलकृतिमत्त्वस्य चैत्रेऽबाधितत्वात्। चैत्रः पचतीतिवत् वर्तमानत्वा बोधेपिक्षतिविरहात्। मन्मेतेत् तादृशप्रवृत्तेः प्रेरणाप्रयोज्यात्वाभावा द्विषयबाधेनाऽप्रामाण्योपपत्ति स्तादृशप्रयोगस्येति वैषम्यम्।**

नैयायिकमते दोषान्तरमाह - **किंच भवन्मत इति** येन = पुरुषेण, स्वत एव = पचेत्यादिशब्दप्रयोगाभावेपि **प्रवृत्तमिति।** पाककरणे प्रवृत्तमित्यर्थः। तस्य = पुरुषस्य, तस्यानिष्टत्वादाह - **प्रयोगापत्तिरिति इष्टसाधनत्वादीति** नैयायिकमते लिङ्वाच्यस्यार्थत्रयस्य धात्वर्थपाकादौ तस्यानुकूलतासंबन्धेना-ख्यातार्थकृतौ, तस्याश्चाश्रयतासंबन्धेनान्याविशेषणीभूत प्रथमान्तपदोपस्थाप्येन्वयः, इष्टसाधनत्वादि-विशिष्टो यः पाकः तदनुकूला या कृतिस्तद्वत्त्वस्य चैत्रेऽबाधित्वादबाधितार्थ बोधकत्वात्तत्प्रयोगस्य

प्रामाण्यापत्तिरिति भावः, नन्वेवं चैत्रः पचतीत्यत्रेव चैत्रः **पचेदित्यत्रापि वर्तमानताकृतौ** भासेत, तदभानान्न तत्प्रयोग इत्यत आह - **चैत्रः पचतीति वदिति क्षतिविरहादिति** कृतौ वर्तमानत्वस्याभानेपि निरुक्तरीत्याऽबाधितार्थबोधकत्त्वात्तत्प्रयोगापत्तिर्न निवार्यत इति भावः, ननु भवन्मतेप्येतद्दोषतादवस्थ्य, मत आह — **मन्मतेत्विति**, तादृश प्रवृत्तेः = पचेत्यादिशब्दप्रयोगं विनापि इष्टसाधनत्वज्ञानेन स्वत एव पाकादौ प्रवृत्तेः, **प्रेरणाप्रयोज्यत्वाभावादिति** अस्मन्मते प्रेरणालिङर्थः, तस्याश्च स्वज्ञान विशेषजन्यानुमितिप्रयोज्यत्व संसर्गेणाख्यातार्थकृतावन्वयः, निरुक्तस्थले प्रवृत्तौ प्रेरणाप्रयोज्यत्वंनास्ति, स्वत एव चैत्रादेः प्रवृत्तेरिति भावः, तदाह - **विषयबाधादिति**।

## (प्रेरणावादिमतेऽतिप्रसक्ते रुद्भावनं तद्वारणं च।)

**ननु भवन्मतेपि यत्रान्यप्रेरणया चैत्रस्य प्रवृषि, स्तत्र पाकवर्तमानतादशायां 'चैत्रः पचे' दिति प्रयोगस्य प्रामाण्यापत्तिः, पाकानुकूलाया श्चैत्रनिष्ठप्रवृत्तेः प्रेरणाप्रयोज्यत्वस्याबाधात्। वस्तुतस्तु स्वतस्सिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तेरपि प्रेरणाप्रयोज्यत्वस्वरूपयोग्यतया प्रेरणाप्रयोज्यत्वात्तत्रापि चैत्रः पचेदिति प्रयोगापत्ति रनिवार्यैव, न हि तत्र फलोपहितप्रयोज्यत्वविशिष्टा कृतिः शाब्दबोधेभासते। बहुशः शाब्दबोधेप्यालस्यादिना प्रवृत्त्यनुत्पत्ते रितिचेत्।**

नैयायिकः पर्यनुयुङ्क्ते, **नन्विति** भवन्मतेपि = प्रेरणाया निरुक्तसंसर्गेणाख्यातार्थकृतावन्वयं स्वीकुर्वतो भवतो मतेपि, स्वतः प्रवृत्तिस्थलवारणायाह **अन्यप्रेरणयेति**, अनेन चैत्रप्रवृत्तेः प्रेरणाप्रयोज्यत्वादापादनस्यावकाशं दर्शयति। किंच स्वतः सिद्धप्रवृत्तिमादाय मन्मते पचेदिति प्रयोगस्य प्रामाण्यं भवताऽऽपादितम्। तदापादनं भवन्मतेपि समानमेवेत्याह — **वस्तुतस्त्विति** ननु तादृशप्रवृत्तेः प्रेरणाप्रयोज्यत्वा भावात्तदापत्तिर्वारितैवेत्यत आह — **प्रेरणाप्रयोज्यत्वेति** प्रेरणा प्रयोज्यतावच्छेदक धर्मवत्वं स्वरूपयोग्यत्वम् यथा अरण्यस्थस्यापि दण्डस्य स्वरूपयोग्यतया घटकारणत्व, तथा निरुक्तप्रवृत्तेरपि प्रेरणायाः स्वरूपयोग्य तया प्रयोज्यत्वमविरुद्धमिति भावः, ननु प्रवृत्तेः फलोपहितप्रेरणा प्रयोज्यत्ववैशिष्ट्यस्वीकारान्न दोषः, अव्य वहितोत्तरत्वसंबन्धेन प्रेरणाविशिष्टत्वं प्रेरणाफलोपहितत्व, मित्यत आह — **न हीति — फलोपहितेति** फलोपहिता या प्रेरणा तत्प्रयोज्यत्वविशिष्टेत्यर्थः। शाब्दबोधेपि = सामग्रीवशाच्छाब्दबोधे जातेपि, प्रवृत्यनत्पत्तेः = प्रवृत्तेरनुदयात्, अतः स्वरूपयोग्यत्वस्यैव निवेशनीयत्वादुक्तदोषतादवस्थ्यमिति भावः।

**न, प्रवृत्तित्वावच्छिन्नं प्रति न प्रेरणायाः प्रयोजकता, व्यभिचारात्, अपितुप्रेरणोत्तरप्रवृत्तित्वावच्छिन्नं प्रति, "इयं प्रवृत्तिः प्रेरणाप्रयोज्या इयं न, किंतु स्वत एव" इत्यादि सार्वलौकिकव्यवहारात्।**

समाधत्ते **नेति** वस्तुतस्त्वित्यादिनोक्तं द्वितीयदोषमुद्धरति - **प्रवृत्तित्वावच्छिन्नं प्रतीति अपित्विति** अव्यवहितोत्तरत्वसंबन्धेन प्रेरणाविशिष्टप्रवृत्तिं प्रति प्रेरणाकारणमिति विशिष्यैव कार्यकारणभावः स्वीक्रियते, तेन स्वाभाविक प्रवृत्तिस्थले न व्यभिचारः। तस्याा प्रेरणा कार्यतावच्छेदकानाक्रान्ततया नोक्तापत्तिरिति भावः, उक्तर्थे व्यवहार प्रमाणयति - **इयं प्रवृत्तिरिति सार्वलौकिकेति** सर्वस्मिन् लोके विदित इत्यर्थः।

## (अत्रैव प्रकारान्तरवर्णनम्।)

**यद्वाप्रेरणाप्रयोज्यतावच्छेदकतया सिद्धंप्रवृत्तित्वव्याप्यं धर्मान्तरमेवेत्यपि वक्तुंशक्यम्। अत**

**एव तत्प्रयोजकतावच्छेदक तया प्रेरणात्व मखण्डो धर्मो लोकवेदसाधारण इत्यपि वक्ष्यते। तस्य च प्रवृत्तित्वव्याप्यधर्मस्य लिङादिसमभिव्याहारस्थले लक्षणयाऽऽख्याता द्बोधः। सामान्य-धर्मेणैववा प्रेरणाप्रयोज्यव्यक्तयपस्थिति रित्याद्यन्यदेतत्। सर्वथा स्वतः सिद्धेष्टसाधनता-ज्ञानजन्यप्रवृत्तिं प्रति न प्रेरणायाः स्वरूप योग्यतयापि प्रयोजकत्वमिति नतादृशप्रवृत्तिमति लिङादिमद्वाक्यप्रयोगापत्तिः।**

स्वतः सिद्धप्रवृत्तौ प्रेरणा प्रयोज्यत्वस्वरूपयोग्यतामङ्गीकृत्य समाहितम्, वस्तुतस्तत्र तत्स्वरूपयोग्यता या एवाभावान्नतत्प्रयोगापत्तिरित्याह **यद्वेति** अयं भावः — निखिल प्रवृत्तिनिष्ठ प्रवृत्तित्वापेक्षया लिङ्बोध्य प्रवृत्तिनिष्ठ प्रवृत्तित्वं भिन्नं धर्मान्तरमेव, अतो न स्वतः प्रवृत्तिस्थले निरुक्त प्रवृत्तिबोधक लिङ्घटित प्रयोगः, तत्रत्य प्रवृत्तेः प्रेरणाप्रयोज्यत्वस्वरूपयोग्यताया अभावादिति। अतिरिक्त धर्मान्तरं प्रमाणयति - **प्रेरणाप्रयोज्यतावच्छेदक तया सिद्धमिति** प्रेरणानिष्ठ प्रयोजकतानिरूपित प्रयोज्यतावच्छेदकतया सिद्धमित्यर्थः. कार्यतावच्छेदकतया सिद्धमिति यावत्। प्रवृत्तित्वव्याप्य = प्रवृत्तिसामान्यनिष्ठ प्रवृत्तित्वव्याप्यम्, अत एव = तादृशप्रवृत्तित्वव्याप्यस्य धर्मान्तरस्य सत्वादेव, **तत्प्रयोजकतेति** — तादृश धर्मान्तरनिष्ठ प्रयोज्यतानिरूपक प्रयोजकतावच्छेदकतयेत्यर्थः। कारणतावच्छेदकतयेति यावत्। वक्ष्यते = अथवा लोकवेद साधारणः पूर्वोक्तविधया प्रवृत्तिविशेषप्रयोजकतावच्छेदकतया सिद्धो व्यापारत्व-रूपोऽखण्डधर्म एवानति प्रसक्तो लिङादिशक्यतावच्छेदकः इति ग्रन्थेन, तस्य च = निरुक्तरीत्या सिद्धस्य। प्रवृत्तित्वव्याप्यधर्मस्य = प्रवृत्तिविशेषनिष्ठ धर्मस्य, ननु प्रवृत्तिसामान्यबोधकादाख्याताद्विशेषोपस्थितिः कथमित्यत आह — **लिङादिसमभिव्याहारे इति**, सामान्यबोधकशब्दस्य विशेषबोधकत्वं लक्षणयेति सिद्धान्तादाह — **लक्षणयेति** वस्तुतो नात्र लक्षणया विशेषार्थप्रतीतिः लिङ्रूपशब्दविशेष समभि व्याहारादेव तत्प्रतीतिः, यथा मृदस्ति पात्रं करिष्यामी त्यत्र मृच्छब्दसमभिव्याहारान्मृन्मयपात्रविषयको बोध इत्याशयेनाह — **सामान्यधर्मेणैव वेति** प्रवृत्तित्वसामान्यधर्मरूपेण प्रवृत्तिविशेषोपस्थितिरिति भावः, तदाह — **प्रेरणाप्रयोज्य व्याक्तयुपस्थितिरिति** तत्प्रयोज्यप्रवृत्याश्रयव्यक्ति विशेषोपस्थितिरित्यर्थः, **अन्यदेतदिति** प्रवृत्तिविशेषोपस्थितिर्येनकेनापि प्रकारेण भवतु, तत्र नास्माकं विवादः, लिङ्समभिव्याहारे प्रवृत्तिविशेष एव बोधविषय इत्यवश्यमभ्युपेयमिति भावः, एवमतिरिक्तं धर्मान्तरं प्रसाध्यस्वतः सिद्धप्रवृत्तिस्थले लिङन्तप्रयोगाभावमपपादयति **सर्वथेति — प्रयोजकत्वमिति** लिङ्बोध्यप्रवृत्यपेक्षयास्वतः सिद्धप्रवृत्तेर्भिन्नतया तत्र प्रेरणायाः स्वरूपयोग्यतयापि न प्रयोजकत्वमिति भावः, तादृशप्रवृत्तिमति = पचेत्यादि शब्दप्रयोगं विना स्वतः सिद्धपाकप्रवृत्तिमति, **लिङादीति** पचेत्यादिलिङन्तघटितवाक्य — प्रयोगस्यापत्तिर्नेत्यर्थः।

### (प्रेरणाप्रयोज्य प्रवृत्तिवर्तमानतादशायां पचेदितिप्रयोगवारणम्।)

**प्रेरणाप्रयोज्यप्रवृत्तिवर्तमानतादशायां तु प्रयोगापत्तिरेवं निवार्या, ना स्माभिः प्रेरणाया विषयतासंबन्धेनैव प्रवृत्तावन्वय इत्युच्यते, न वा प्रेरणा विषयीभूतप्रवृत्तिविषयत्वेन यागादौ, येन तादृशप्रयोगापत्तिः शङ्कयेत, 'किं त्वत एव साक्षात्संबन्धपरित्यागेन स्वज्ञानजन्यानुमिति-प्रयोज्यत्वसंसर्गेणाऽऽख्यातार्थप्रवृत्तौ प्रेरणायाः प्रकारत्वम्। अस्तिहि प्रेरणाज्ञानजन्येष्ट-साधनत्वाद्यनुमितेः प्रवृत्तिं प्रति जनकत्वात्प्रयोजनकत्वम्। उपपादयिष्यते चेद मुपरिष्टात् 'तत्प्रेरणाज्ञानं स्वप्राक्कालीन - स्वज्ञानोपधेयमेव स्वरूपेण तद्व्यक्तित्वेन संसर्गमध्ये निवेश्यते। प्रथम स्वपदं तत्तत्प्रवृत्तिव्यक्तिपरम्' द्वितीयस्वपदं तत्तल्लिङादि व्यक्तिपरम्। तेन तत्तत्प्रवृत्तिप्रागभावकाले यल्लिङादिपदज्ञानं, तेनोत्पादितं यत्प्रेरणाज्ञानं — तज्जन्येष्ट-**

**साधनत्वानुमिति प्रयोज्यत्वस्वरूपयोग्यत्वं संसर्ग इति फलितार्थः। अतश्च प्रवृत्तिवर्तमानता-दशाया मनेन संसर्गेण प्रेरणावत्वस्य प्रवृत्तौ बाधा न्न तादृशप्रयोगापत्ति रस्मन्मते। अन्यदीयप्रेरणाप्रयोज्यप्रवृत्तिप्राक्काले ऽन्यदीय लिङन्तप्रयोगस्तु राजप्रेरितप्रवृत्तिप्राक्काले पदात्यादी ना मन्येषा माप्तादीनां च लिङन्तप्रयोगदर्शना दिष्टापत्त्यैव नापादनीयः। संभवति हि तत्र राजप्रेरणा मादाय प्रयोगः, अन्यदीयप्रेरणा मादाय च, तज्ज्ञानजन्यानुमितेरपि प्रवृत्तिस्वरूपयोग्यत्वात्।**

**अतः सिद्धं न तार्किकरीत्या इष्टसाधनत्वादे र्लिङाद्यर्थत्वम्, अपितु पूर्वोक्तरीत्या प्रवर्तकेच्छाया एव।**

''वस्तुतस्त्वित्यादिना प्रदर्शितां द्वितीयामापत्तिद्वेधा समाधाय अन्यप्रेरणया प्रवृत्तौ पाकवर्तमानता दशायामपि पचेदिति प्रयोगः स्यादिति प्रथमामापत्तिं परिहर्तुमुपक्रमते – **प्रेरणाप्रयोज्येति** एवम् = समनन्तरवक्ष्यमाणरीत्या। तामेव रीतिं दर्शयति - **नास्माभिरित्यादिना न तादृश प्रयोगापत्तिरित्यन्तेन ग्रन्थेन, विषयतासंबन्धे नेति,** तेन संबन्धेन प्रेरणावती प्रवृत्तिरिति तदा बोधः, **प्रेरणाविषयीभूतेति** प्रेरणाया विषयीभूता या प्रवृत्तिस्तद्विषयत्वं यागे अनेन संबन्धेनापि नान्वय इत्यर्थः, येन = निरुक्तसाक्षात्संबन्धद्वयाङ्गीकारेण। एव शब्दव्यावर्त्यं प्रकृतोपयोगिनं परंपरासंबन्धं दर्शयितुमुपक्रमते – **किं त्विति** अत एव = निरुक्तप्रयोगापत्तेरेव **साक्षात्संबन्धेति** विषयत्व प्रेरणाविषयी भूत प्रवृत्तिविषयत्वरूप साक्षात्संबन्धद्वयपरित्यागेनेत्यर्थः, प्रकृतापत्तिवारणोपयोगिनं परंपरासंबन्धं निर्दिशति – **स्वज्ञानजन्येति** स्वज्ञानं = विषयतासंबन्धेन अयमत्र प्रवर्ततामितिच्छारूपप्रेरणाज्ञानम् इष्टसाधनत्व-व्याप्यविषयतासंबन्धेन तादृशेच्छावान् याग इति परामर्शरूपज्ञानमिति यावत् तज्जन्याया अनुमितिः = याग इष्टसाधनमिति, तत्प्रयोज्यत्वं प्रवृत्तौ, अनुमितेः प्रवृत्तिप्रयोजकत्वं दर्शयति **अस्तिहीति प्रयोजकत्वमिति**, तस्याः प्रवृत्तिप्रयोजकत्वे सिद्धे तत्प्रयोज्यत्वस्य प्रवृत्तौ सत्त्वाल्लक्षणसमन्वयः स्पष्ट एवेति भावः, उपरिष्टात् = वस्तुतस्तु लोकेपि चेच्छायाः स्वरूपेण प्रवृत्तिं प्रतिकारणत्व, मित्यादि संदर्भे ''प्रवृत्तिसाधनी भूतेष्टसाधनत्वाद्यनुमापकतया'' इत्यादि ग्रन्थेन। तावतापि निरुक्तापत्तेरनिवारणात्स्वाशयं विशदयति - **तत्प्रेरणा ज्ञानमिति** स्वज्ञानोपधेयमेव = स्वज्ञानजन्यमेव, फलितार्थमाह – **तेनेति तत्तत्प्रवृत्तीति** चैत्रादि तत्रत्प्रवृत्तीनां प्राक्काले लिङादिप्रयोगात्तज्ज्ञानोत्पादितेन प्रेरणाज्ञानेनानुमितेष्ट साधनतानुमिति-प्रयोज्यत्वस्य प्रवृत्तौ सत्त्वाल्लक्षणसमन्वयः। **प्रवृत्तिवर्तमानतादशायामिति** पचेत्यादिशब्दश्रवणानन्तरं जायमानप्रवृत्तेर्वर्तमानतादशायामित्यर्थः **'प्रवृत्तौ बाधादिति'** प्रेरणा ज्ञानोत्पादक लिङादिज्ञानस्य तत्प्रवृत्तिप्रागभावकाले ऽसत्त्वात्तत्र प्रेरणावत्वस्य बाधः, तत्र हि प्रवृत्ति समकाल एव लिङादिज्ञान, मतो नोक्तापत्तिरिति भावः। नन्वेवं चैत्रेण पचेति लिङन्ते प्रयुक्ते तत्प्रयोज्यप्रवृत्ति प्राक्काले ऽन्येनापि पचेति लिङन्तः प्रयुज्येतेत्याशङ्कय इष्टापत्या परिहरति **'अन्यदीयेति'** इष्टापत्तावनुभवं प्रमाणयति – **राजप्रेरितेति** तदेवोपपादयति **संभवति हीति** तार्किकमतखण्डनमुपसंहरति, **अतः सिद्धमिति** स्वमतं स्थापयति **अपित्विति** पूर्वोक्तरीत्या = अत श्चैतादृशव्यवहार बलात्प्रवृत्तिकारणीभूतेच्छाश्रयत्वेनैव राजादेः प्रवर्तकत्वं वाच्यमित्यादि पूर्वोक्तरीत्या।

**(प्रेरणावादे पाणिनिसंमतिप्रदर्शनम्, इतरलिङर्थानां विवरणं च।)**

**''विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्'' 3-3-161 ''लोट् च'' 3-3-162 छन्दसि ''लिङर्थेलेट'' 3-4-7 इत्यादिपाणिन्यनुशासनादप्ययमेवार्थो विज्ञायते। विधिः = निकृष्टस्य प्रेरणम्। निमन्त्रणम् = अनिष्टजनकीभूताकरणप्रतियोगित्वानुमापकप्रवर्तकेच्छा। यथा –**

**श्राद्धादौ दौहित्रादेः प्रवर्तनम्। तत्र प्रमाणान्तरेणा भोजने प्रत्यवायावगमात्। अत एव विधिस्थल इवा ग्रिमयोरपि च लाघवा दिष्टसाधनत्वानुमापकत्वमेव। कृतिसाध्यत्वानुमापकत्वं सर्वत्रैव। मास्तुवा तत्। आमन्त्रणम् = कामचारानुज्ञा। तत्र प्रेरकस्याऽऽग्रहाभाव मात्रम्। अन्यत्र सर्वत्राऽऽग्रहोप्यधिकोभासते। अधीष्टम् = सत्कारपूर्वक मुत्तमं प्रति प्रेरणम्। एतेषु चतुर्षु प्रवर्तनात्वस्यै कस्यानुगतत्वा त्तेनैव रूपेणै कैव शक्तिः, अन्यां शस्यत् प्रमाणान्तरलभ्यत्वा न्न शक्यत्वम्। संप्रश्न प्रार्थनयो स्त्वतिरिक्तैव शक्तिः, "किं त्वमधीयीथाः, भवति मे प्रार्थना वेद मधीयीयेत्यादौ, तत्र प्रवर्तनात्वाभावात्। आनुशासनिकीवानिरूढलक्षणा" "हेतुहेतु मतोर्लिङ्" 3-3-156 "कामप्रवेदनेऽकच्चिति" 3-3-153 इत्याद्यनुशासनेनेव हेतुत्वादौ। प्रचुरप्रयोगेण प्रवर्तनात्वस्यैव शकयतावच्छेदकत्वात्।**

स्वसिद्धान्तं पाणिन्यनुशासनेन भूषयति - **विधिनिमन्त्रेणेति** "लिङर्थे लेडि"त्यत्र "छन्दसि लुङ्लिटः" 3-4-6 इति सत्राच्छन्दसीत्यनुवर्तत इत्याह - **छन्दसिलिङर्थे लेडिति** अयमेवार्थः = न तार्किकरीत्या इष्टसाधनत्वादेर्लिङाद्यर्थत्व, मपि तु प्रवर्तकेच्छाया एवेत्ययमेवार्थः, तमेवार्थं व्याचष्टे – **विधिः = निकृष्टस्य प्रेरणमिति** तथा च प्रकृतसूत्रे महाभाष्यकारः "विधिर्नाम प्रेरण" मिति, "भृत्यादेः कस्यांचित्क्रियायां नियोजनमित्यर्थ" इति कैयटः। स्वसमानोत्तमयोः प्रवर्तनायामतिव्याप्तिवारणाय "निकृष्टस्येति"। तत्त्वं च ज्ञाप्यत्वेन विवक्षितत्वम्, तेन स्वापेक्षयाधिकवयस्कभृत्यादिप्रेरणायाः संग्रहः, विधिरेवाज्ञेत्युच्यते, अप्रवृत्तप्रयोज्यस्य तदभिलषिताज्ञातोपाय प्रवर्तनोपदेशः यथा "स्वर्गकामो" यजेतेत्यादिः। यथा वा अनेन पथा याही, त्याप्तवचः, सोपि विधिरेव, **निमन्त्रण = मनिष्टेति** अनिष्टजनकीभूतं यदकरणं भोजनाद्यकरणं तत्प्रतियोगित्वेत्यर्थः, अनिष्टं चात्र प्रत्यवायः। तथा च प्रकृतसूत्रे भाष्यम्" यन्नियोगतः कर्तव्यं तन्नियन्त्रणम्, किं पुनस्तत् हव्यम्, कव्यं च। ब्राह्मणेन सिद्धं भुज्यतामित्युक्ते अधर्मः प्रत्याख्यात्, रिति। **प्रवर्तकेच्छेति**, एतेन (भाष्ये) नियोग इष्टसाधनताज्ञान, मिति परास्तम्, "हेतुमति चे" 3-1-26 ति सूत्रस्थ लिङ्णिचोः पर्यायत्वाशङ्कापरभाष्यविरोधापत्तेश्च, णिच इष्टसाधनत्वार्थकत्वस्य कस्याप्यसंमतत्वेन तद्भाष्यविरोधस्य दुष्परिहरत्वात्। "अधर्म" इति भाष्यप्रतीकमुपादाय" यदान्यो ब्राह्मणो भोक्ता न लभ्यते, तदा दौहित्रादिर्भोजयितव्यः, तस्य च प्रत्याख्यानेऽधर्म इति कैयटः, हरदत्तादयोप्येवम् – तदाह – **यथा श्राद्धादौ दौहित्रादेः प्रवर्तनमिति** वस्तुतस्त्विदमयुक्तम्, तदर्थस्वीकारे बीजाभावात्, भाष्याननुगृहीतत्वाच्च। सामान्यत एव ब्राह्मणस्य श्राद्धादि निमन्त्रण प्रत्याख्यानेऽधर्मत्वस्य स्मृतिषु स्मरणाच्चेति बोध्यम्। तत्र = श्राद्धादौ। अभोजने = निमन्त्रितस्याभोजने, अत एव = निमन्त्रणस्य प्रवर्तकेच्छारूपत्वादेव। विधेस्तद्रूपत्वादाह - **विधिस्थल इवेति** अग्रिमयोरपि = निमन्त्रणापेक्षयाऽग्रिमयोरामन्त्रणाधीष्टयोरपि, अनुमापकत्वमेव = नत्विष्ट-साधनत्वरूपत्वम्। सर्वत्रैव = प्रार्थनान्तेषु सर्वेष्वपि। मास्तु वा तत् = फलाभावात्, आमन्त्रणे कामचारः इति भाष्यमवलम्ब्याह – **आमन्त्रणं = कामचारानुज्ञेति** कामचारश्च प्रवर्त्यस्यैव, प्रवृत्तस्य प्रयोज्यस्य निवृत्तिप्रतिबन्धेन तद्धिते प्रवर्तकोक्तिरनुज्ञा, आरब्धंकुरु, इत्येवं रूपा, तथा कुरुष्व यथा हित मित्युक्तिरप्यनुज्ञैव एतत्सर्वस्याप्यु पलक्षणं सूत्रे आमन्त्रणपदम्, आमन्त्रणे विशेषमाह – **तत्रेति** आमन्त्रणे इत्यर्थः। "अधीष्टं नाम सत्कारपूर्विका व्यापारणे" ति महाभाष्यादाह – **अधीष्टं = सत्कारपूर्वकमिति** अधिपूर्वादिच्छतेर्भावेक्तः। अधीष्ट इति पुंलिङ्ग पाठोऽपपाठः **उत्तमं प्रतीति** यथा – माणवक मध्यापये "ति, एषैवाभ्यर्थना, प्रार्थना तु स्वाभिलषितवस्तुदानादि प्रवर्तकोक्तिरिति शाब्दिकाः"। तदयुक्तमिति खण्डदेवाशयः। नन्वेवं लिङादीनामनेकार्थकतापत्तिरत आह – **एतेषु चतुर्ष्विति** विधिनिमन्त्रणा-मन्त्रणाधीष्टेष्वित्यर्थः। तेनैवरूपेण = प्रवर्तनात्वेनैवरूपेण, **एकैव शक्तिरिति** अतो लिङादेर्नानेकार्थकर्तेति

भावः। अन्यांशस्य = प्रवर्तनातिरिक्तस्योत्कर्षापकर्षावश्यकत्वकामचाराद्यंशस्य। **प्रमाणन्तरेति** प्रकरणधर्म शास्त्रादिना लभ्यत्वादित्यर्थः, एवं च प्रवर्तनाया एव लिङाद्यर्थत्वं सिद्धम्, अत एव भगवान् पाणिनिर्विधिपदार्थं तद्विशेषनिमन्त्रणादिभिर्व्याख्यातवान्। भर्तृहरिणापि तथैव व्याख्यातम्—

अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ्विधातव्यः किं भेदस्य विवक्षया।।
न्यायच्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतम्।। इति

विध्यादिषु चतुर्षु प्रवर्तनाया अनुगतत्वात्तद्बोधक विधिग्रहणेनैव सिद्धे निमन्त्रणादिग्रहणं व्यर्थमिति प्रथमकारिकाया आशयः, शब्दशक्तिविशेषप्रतिपादनार्थं प्रपञ्चार्थं वा तद्ग्रहणमिति द्वितीयकारिकाया आशयः, आदितः = आदौ, सार्वविभक्तिस्तसिः, 'राज्ञा प्रवर्तितोह''मित्यादि व्यवहारात्प्रवर्तना पुरुषनिष्ठा, सा लिङ्शक्येति सूत्र भाष्य वाक्यपदीयसंमतम्। न हीष्टसाधनत्वं तद्बोधो वा प्रवर्तकपुरुषनिष्ठः तज्ज्ञापनस्य तन्निष्ठत्वेपि न तदिष्टसाधनत्वेन नापि तच्छक्यत्वेन नैयायिकसंमतम्, तज्ज्ञानानुकूल-व्यापारस्या स्मदुक्तातिरिक्तस्याभावाच्च, एवं च "विधि निमन्त्रेणे" त्यादि पाणिन्यनुशासनादपि प्रवर्तकेच्छाया एव लिङाद्यर्थत्वं, न तार्किकोक्तरीत्या इष्टसाधनत्वादेरिति स्पष्टमेवावगम्यत इति भावः। ननु चतुर्षु प्रवर्तनात्वस्यानुगतत्वादिति चतुर्ग्रहणमयुक्तम्, प्रार्थनेपि तत्सत्वात्, इत्यत आह — **संप्रश्न प्रार्थनयोस्त्विति** — संपश्नः = संप्रधारणम्, विचारः तद्वा कर्तव्यमेतद्वा कर्तव्य मित्येवंरूपः, **किं त्वमधीयीथा इति** त्वं किम् अधीयीथाः व्याकरण, मुत तर्क? मिति तदर्थः। प्रार्थनायामुदाहरति **भवति मे प्रार्थनेति** नन्विदमयुक्तम्, तत्रापि प्रवर्तनात्वस्यानु भवसिद्धत्वात् अत एव "चतुर्णामादितः कृत" मिति वाक्य पदीये "चतुर्णा मित्युपलक्षणं प्रार्थनस्यापि"ति वैयाकरणै र्व्याख्यात मित्यत आह — **आनुशासनिकी वा निरूढलक्षणेति** अनुशासनं विना निरूढलक्षणाया आश्रयणायोगस्य द्वितीयार्थनिर्णये वक्ष्यमाणत्वादुक्तम् — आनुशासनिकीति प्रार्थनेषु लिङित्यनुशासनमूलिकेत्यर्थः, शक्तितुल्यत्वात् निरूढलक्षणेत्युक्तम्, एवं च लिङादीनां प्रवर्तनात्वमेव शक्यतावच्छेदकम्, प्रार्थनाबोधकत्वं तु लक्षण यैव, तत्रैव तात्पर्यग्राहकं पाणिनीयमनुशासनम्, तत्र दृष्टान्तमाह — **इत्याद्यनुशासनेनेव हेतुत्वादाविति** नैयायिक समतत्वादस्य दृष्टान्तत्वम्, ननु शक्तिरेवास्तु अत आह **प्रचुर प्रयोगेणेति** एकशक्यतावच्छेदकालाभस्तत्र बीजमिति द्वितीयाप्रकरणे "अकथितं चे" ति सूत्र व्याख्यावसरे स्पष्टं भविष्यति। प्रवर्तनात्वस्यैवेत्येव शब्देन प्रार्थनत्व हेतुहेतुमद्भावादेर्व्यावृत्तिः।

**प्रवर्तनात्वं च प्रवृत्त्यनुकूलव्यापारत्वम्। अनुकूलत्वं च जनकत्वम्। तच्च लोके पुरुषाशयवृत्ति। वेदे च तदभावा दिच्छाभिन्नस्य कस्यचित् प्रवर्तनात्वं बोध्यम्।**

ननु पाणिन्यनुशासनादप्ययमेवार्थो लभ्यते, इत्ययुक्तम्, तदनुशासनेन निरूक्तरीत्या प्रवर्तनाया लिङर्थत्वलाभात्, प्रवर्तकेच्छाया एव लिङर्थताया भवता प्रतिपादनादित्यत आह — **प्रवर्तनात्वं चेति** प्रपूवकाद् वृतुधातोर्ण्यन्ताद्भावे युचि प्रवर्तनाशब्दस्य निष्पन्नत्वादाह — **प्रवृत्यनुकूलव्यापारत्वमिति** — इच्छायाः प्रवृत्ति जनकत्वमित्याशयेनाह **अनुकूलत्वं च जनकत्वमिति** अत्र कल्पे अनुकूलत्वमेतादृश-मित्याशयः, नव्यास्तु जनमत्वमत्र प्रयोजकत्वं नतु साक्षाज्जनकत्वम्, प्रेरणायाः स्वज्ञानजन्येष्ट साधनता ज्ञानजन्यप्रवृत्तौ साक्षात्कारणत्वाभावा दिति व्याचक्षतें, तन्न चारु लोकेपि नेच्छायाः स्वरूपेण प्रवृत्ति प्रतिकारणत्वम् — अपि तु प्रवृत्तिजनकत्वमेव प्रवर्तनात्वमित्याद्यर्थ प्रतिपादक "वस्तुतस्त्व"त्यादि-कल्पान्तरानुसरणस्य निर्बीजत्वापत्तेः, अनेन ग्रन्थेन तस्य पौनरूक्तयापत्तेश्चेति बोध्यम् — व्यापारश्च

प्रेरयितृधर्मः अहमेनं प्रवर्तयामि, अयं मां प्रवर्तयति, ति लोकव्यवहारात्, व्यापारश्च प्रवर्तयितृ पुरुषनिष्ठो ग्राह्यः, तेन लोक निन्दादेः प्रवृत्त्यनुकूलत्वेऽपि तत्र नातिव्याप्तिः, प्रवर्तयितृ समवेतव्यापारान्तरेऽति-व्याप्तिवारणाय – प्रवृत्त्यनुकूलेति, प्रवृत्तिश्च परसमवेता विवक्षिता, तेन प्रवर्तकाचार्य समवेतफलस्य दुग्धपानादेः गामानये ति वाक्योच्चारणानुकूलाचार्य निष्ठ प्रवृत्तिहेतुत्वेऽपि शिष्यप्रवृत्तिहेतुत्वे प्रमाणाभावान्नातिप्रसङ्गः। प्रकृत उपयोजयति – **तच्चेति पुरुषाशयेति** पुरुषाशयः = इच्छा तद्वृत्ति, "आचार्य प्रेरितोऽहं गामानयामि" मत्प्रवृत्त्यनुकूलव्यापारवानय मित्यादि व्यवहारसहकृताद् "विधि-निमन्त्रणे" त्यादि पाणिन्यनुशासनात्प्रवृत्त्यनुकूलव्यापाररूपायां प्रवर्तनायां लिङादेः शक्तिः स च व्यापारो "गुर्विच्छयाहं प्रवृत्तो, न तु स्वेच्छये" ति व्यवहाराल्लोके इच्छैव, एवं च पाणिन्यनुशासनस्य निरुक्तार्थोपष्टम्भकतया प्रदर्शनं युक्तमेव तस्यापि मदुक्तार्थकत्वादिति भावः। लोके इत्युक्ते राशयं विशदयति – **वेदेचेति** च स्त्वर्थे। तदभावात् = प्रवर्तक पुरुषाभावात्। कस्यचित् = शब्दनिष्टस्याऽलौकिकधर्मस्य, उक्तं चार्थवादाधिकरणे भाट्टदीपिकायाम् "लिङाद्यर्थो लोके पुरुषाशयः वेदे तदभावाल्लिङादिशब्दनिष्ट एव कश्चिद्धर्मः इति "कश्चिदिति – अनेनालौकिकत्वमुक्त" मिति तद्व्याख्याने प्रभावल्यां शम्भुभट्टः।

**अत्रापीष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङाद्यर्थ इति मण्डनमिश्राः। अर्थभावनाभि-धानानुकूलाया लिङादिनिष्टशक्तेरेवाभिधाख्यायाः प्रवर्तनात्वेन रूपेण वेदे लिङ्वाच्यत्वं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वमात्रं कल्प्यत इति तु पार्थसारथिः।**

ननु वेदेऽलौकिको धर्मो न लिङ्वाच्यः कल्प्यः, तत्रापीष्टसाधनत्वस्यैव तद्वाच्यत्वस्वीकारात्। पाणिन्यनुशासनमस्माकमप्यनुकूलमेवेति वादिना मण्डनमिश्रादीनां मतमुपक्षिपति – **अत्रापीति** – वेदेपीत्यर्थः, तथा च प्रवर्तना लिङर्थ इत्युक्ते इष्टसाधनत्वं विध्यर्थ इत्यर्थादायाति, अतः प्रवर्तनात्वेन रूपेण तदेव लिङाद्यर्थ इति पाणिन्यनुशासनं न केवलं भवत एवानुकूलं, किन्त्वस्माकमपीति भावः, **मण्डनमिश्रा इति**, इत्थंहि विधिविवेके तदीयाकारिका –

"पुंसां नेष्टाभ्युपायत्वात्क्रिया स्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मंच प्रवदन्ति प्रवर्तनाम्" इति।।

अपौरुषेये वेदेपि मत्प्रवृत्त्यनुकूलव्यापारवानयं विधिरिति व्यवहारात्तेषां च विध्यादीना स चेतनत्वेन तादृशेच्छाया असंभवाद् यागादिगतेष्टसाधनत्वस्य – प्रवृत्त्यनुकूलत्वेन ज्ञातत्वात्तस्यैव प्रवर्तनात्वेन रूपेण बोध इति मण्डनमिश्राशयः, "अभिधा भावनामाहुरन्यामेव लिङादयः" इति भावार्थाधिकरणवार्तिका-दप्ययमर्थो लभ्यते – अभिधीयतेऽसा वित्यभिधा – समीहितसाधनता, सैव प्रवर्तनात्वेनाभिहिता पुरुषप्रवृत्तिं भावयतीति भावना, तां लिङादय आहुरिति तदर्थ इति बोध्यम्।

षष्ठे स्वर्गकामाधिकरणे शास्त्रदीपिकायां पार्थसारथिमिश्रैरेवमुक्तम् – "लिङादयो विधिं भावनां चाभिदधति, प्रवर्तनारूपश्च विधिः, प्रवृत्तिहेतुश्च व्यापारः, प्रवर्तना। कस्य पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति ब्रूमः, तस्य संनिहितत्वादपरस्य चाप्रतीतेः। शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं संपादयितुं तद्विषयभूताया भावनायाः पुरुषार्थ भाव्यत्वं निश्चीयते" इति। तदनुसृत्याह – **अर्थ भावनेति** "अभिधा भावनेत्यादि वार्तिकादप्ययमर्थो लभ्यते – अभिदा शब्दस्य कर्तरिकरणे वा व्युत्पत्तौ अभिधायाः = शब्दस्य भावनेत्यर्थः, तस्य भावे कर्मणि वा व्युत्पत्तौ अभिधात्मिका = अर्थभावनाभिधानानुकूला लिङादिनिष्ठाऽभिधाख्याभावनेत्यर्थः। तथा च प्रवर्तनात्वेन रूपेणाभिधारूपा शक्तिरेव लिङाद्यर्थ इति भावः। तदाह – **लिङादिनिष्ठशक्तेरिति प्रवर्तनात्वेनेति** तथा च प्रवर्तनाया

लिङर्थत्व प्रति पादनपरं पाणिन्यनुशासनमस्माकमप्यनुकूलमेवेति भावः, **कारणत्वमात्रमिति** अनेन स्वमते लाघवं द्योतयति, अन्यथाऽतिरिक्त धर्मान्तर कल्पने तत्सद्भावः, तस्य च प्रवृत्तिहेतुत्वं लिङादिनिष्ठत्वं तल्लक्ष्यत्वमिति स्वीकारे गौरवं स्पष्टमेवेति बोध्यम्। **पार्थसारथिरिति,** वस्तुतस्तु पार्थसारथेरपि अभिधालिङर्थ इति पक्षो न संमतः, इष्टसाधनत्वमेव लिङाद्यर्थ इति पक्ष एव संमतः, अत एव न्यायरत्नमालायां तृतीयप्रकरणे विधिनिर्णयनामकेऽनेक पक्ष दूषण समये इष्टसाधनत्वं विध्यर्थ इति पक्षे दूषणमभिधायापि अन्ते = न्यायविदां तु इष्टसाधनत्वमेवाभिमतम्, इदमेव हि भगवतो मण्डनमिश्रस्यापि "पुंसां नेष्टाभ्युपायत्वादित्यादि वदतोऽभिमत" मित्यादि ग्रन्थेन इष्टसाधनत्वं लिङर्थ इति पक्षमेव स्वाभिमतमाविष्करोति पार्थसारथिः। अत एवार्थवादाधिकरणे "हितसाधनत्वावगतिरपि तत्रैव रुचिं जनयन्ती प्रवृत्तिहेतुः स्यान्नान्यथा, सा च पुरुषेभ्यः प्रमादालस्यादि युक्तेभ्यः कर्म दुःखात्मकं रोचयन्ती गुणकथनमपेक्षते, अवगतसमीहितसाधन भावमपि कर्मा रुचि गोचरं सत् सतामसतां वा गुणानां कीर्तनाद्रोचते तरामिति सर्वजनीनमेत"दिति शास्त्रदीपिकयामिष्टसाधनत्वस्य लिङर्थत्वं प्रतिपादितं पार्थसारथिमिश्रैः। अत एव एनं मिश्रग्रन्थम् – 'ननु सिद्धान्ते भावनैव लिङादिवाच्या, न समीहितसाधनत्वम्, ततश्च कथमयं ग्रन्थसन्दर्भः, इत्याक्षिप्य "प्रवर्तना लिङादिभिरभिधीयते, प्रवृत्तिहेतुर्धर्मः प्रवर्तना, न च प्रेक्षापूर्वकारी समीहित साधनत्वादन्यत्र प्रवर्तयितुं शक्य इत्यर्थात्समीहित साधनत्वमपि लिङादिनोच्यत इत्याशयादिति समाधाय तत्रापरितुष्यन् सोमनाथः, अथवा ग्रन्थकारमते इष्टसाधनत्वमेव प्रवर्तनेति न काप्यनुपपत्तिरित्याह – तद्व्याख्याने मयूरवमालिकायाम्। इष्टसाधनत्वमेव लिङाद्यर्थ इति मतमेव पार्थसारथि संमतमिति स्पष्टमेवानेनाप्यवगम्यते, परंतु शक्तिः प्रवर्तनेति पक्षस्यापि निराकर्तव्यत्वात्सोप्यत्र मिश्रैः प्रतिपादितत्वात्प्रदर्शितो ग्रन्थकृता, तदेतत्सर्वमभि-व्यज्यते "इति तु पार्थसारथिः" रिति तु शब्देनेति बोध्यम्।

**वस्तुतस्तु इष्टसाधनत्व – कृतिसाध्यत्वयो विनिगमनाविरहः। तथात्वेवा लोकेपि तस्यैव तथात्वापत्ते स्तार्किकमतोक्तदूषणापत्तिः। शक्तिप्रवर्तनावादिमतेपि उक्तशक्तेः संख्याभिधा-नानुकूलशक्त्या लिङ्त्वादिनैव वा विनिगमनाविरह स्तदवस्थ एव।**

मतद्वयमपि दूषयति – **वस्तुतस्त्विति** – प्रथमं मण्डनमतमुद्दिश्याह – **इष्टसाधनत्वेति विनिगमनाविरह इति** इष्टसाधनताज्ञानात्कृतिसाध्यताज्ञानाच्च प्रवृत्तिदर्शनादिष्टसाधनत्वमेव लिङाद्यर्थ इत्यत्र विनिगमकाभाव इति भावः। **तथात्वेवेति** इष्टसाधनत्वकृतिसाध्यत्वयोरन्यतरस्य लिङर्थत्व इत्यर्थः। तस्यैव = अन्यतरस्यैव। तथात्वापत्तेः = लिङर्थत्वापत्तेः। **तार्किकेति** किं च भवन्मते येन स्वत एव पाकादाविष्टसाधनत्वादि बुद्ध्वा प्रवृत्तं, तत्र पाकवर्तमानतादशायां चैत्रः पचेदिति प्रयोगापत्ति" रित्यादिदूषणापत्तिरित्यर्थः। शक्तिः प्रवर्तनेति पार्थसारथि प्रतिपादितमेकदेशिमतं दूषयति – **शक्तिप्रवर्तनेति** उक्तशक्तेः = अर्थभावनाभिधानानुकूलाया लिङादिनिष्ठशक्तेः, **संख्याभिधानेति,** आख्यातेन संख्याया अप्यभिधानात्तन्निष्ठतदभिधानानुकूलेत्यर्थः, लिङादेः प्रवर्तकत्वस्वीकारादाह – **लिङ्त्वादिनैववेति**, किं चान्यनिष्ठव्यापार बोधकत्वस्यैव शब्दस्वभावत्वात् स्वनिष्ठव्यापारबोधकत्वस्य क्वाप्यदर्शनादभिधायाः शक्तेर्लिङादिवाच्यत्वकल्पनं न,[1] युक्तं, तद्विरोधादित्यपि बोध्यम्, तस्मान्मण्ड-नाद्युक्तेरयुक्तत्वाद्वेदेऽलौकिको धर्म एव लिङादिवाच्य एषितव्य इत्येव युक्तमिति

[1] अयं च दोषोऽलौकिको धर्मो लिङ्वाच्य इतिवादिनोमतेपि विद्यत एव, तेनापि तद्धर्मस्य लिङ्निष्ठत्व-लिङ्वाच्यत्वाभ्युपगमात्, परंतु पार्थसारथिमतखण्डन एवाग्रहःखण्डदेवस्य।

**अतः ''क्लृप्तेन विनिगमनाविरहे कल्प्य मन्यत्सिध्यती''ति न्यायेन अलौकिकोधर्म एव लिङादिनिष्ठः प्रवर्तनात्वेन लिङादिवाच्यश्च कल्प्यते, तज्ज्ञानं च प्रवृत्तिं प्रति कारणमिति न्यायसुधा कृन्मतमेव कथञ्चि द्युक्तमिति व्यक्तं कौस्तुभे।**

स्वमतमुपसंहरति – **अत इति–** मण्डनादिमतस्यायुक्तत्वादित्यर्थः, स्वोक्तार्थो न्यायसुधाकृतोपि संमत इत्याह – **क्लृप्तेनेति** क्लृप्तेन पदार्थेनेत्यर्थः, प्रकृते कृतिसाध्यत्व लिङ्त्वादिनेति भावः, क्लृप्तेन, इत्येव पाठो भाट्टरहस्ये दरीदृश्यते ''तस्मात् क्लृप्तैर्विनिगमनाविरहाद्धर्मान्तरकल्पनैवोचितेत्युत्पश्यामः'' इत्यर्थवादाधिकरणस्थ कौस्तुभे ''क्लृप्तैरिति बहुवचनान्तः पाठः समस्ति, तस्याप्युक्त एवार्थः, कौस्तुभे न्यायाकारेण प्रदर्शितः, किंतु तदर्थ उल्लिखितः, अर्थवादाधिकरणे प्रभावल्यां सर्वमतेपि परस्परं विनिगमनाविरहस्य स्फुटत्वाल्लोकेपि तथात्वापत्तेः, क्लृप्तेषु विनिगमनाविरहेण कल्प्यमन्यत्सिध्यतीति, न्यायेनातिरिक्तो विधिशब्दनिष्ठोऽलौकिको धर्म एव वेदे तदर्थ'' इति वदता शम्भुभट्टेन सप्तमीबहुवचनान्तपाठः समादृतः, क्लृप्तानां पदार्थानां मध्ये परस्परं विनिगमनाविरहे इति तदर्थः भाट्टरहस्ये क्लृप्तेनेत्यस्य स्थाने ''क्लृप्तयो रिति पाठः स्थापितः कैश्चिदाधुनिकैर्महामीमांसकैः, क्लृप्तयोरिति षष्ठी द्विवचनान्तः, क्लृप्तयोः पदार्थयोर्मध्ये इत्यर्थः, अर्थवादाधिकरणे ''विधिनात्वेक वाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः – 1-2-7 इति सिद्धान्त सूत्रव्याख्यावसरे राणके सिद्धान्तितं सप्तमं पक्षं दर्शयति **अलौकिको धर्म इति** एवशब्देन 1. प्रवर्तको लिङादिः, 2. तत्क्रिया वा विलक्षणा, 3. अभिधा वा, 4. आज्ञादिर्वा 5. कार्यं वा, 6. इष्टहेतुता वेति षण्णां पक्षाणां व्यावृत्तिः, पाणिन्यनुशासन-मस्मत्पक्षेप्यनुकूलमेवेत्याह – **प्रवर्तनात्वेनेति** न चैवं धर्मान्तरस्यापि लिङादिनिष्ठत्वमिच्छादिनिष्ठत्वं वाऽऽदाय विनिगमनाविरह इति वाच्यम्, इच्छादेरस्थायित्वेन स्थायिधर्मान्तराश्रयत्वानुपपत्तेः, तज्ज्ञानम् = अलौकिकधर्मज्ञानम्, **कथञ्चिदिति** अनेना रुचिः सूच्यते – तद्बीजं तु – तादृशधर्मज्ञानस्य न साक्षात्प्रवृत्तिकारणत्वमिति, एतच्च समनन्तरमेव ''वस्तुतस्त्वित्यादि कल्पे व्यक्तम्, कौस्तुभे = अर्थवादाधिकरणे कौस्तुभे, प्रवर्तना लिङर्थः तत्त्वं च प्रवृत्त्यनुकूलव्यापारत्वम्, अत्र चानुकूलत्वं जनकत्वरूपम्, न तु प्रयोजकत्वरूपम् – तच्च लोके पुरुषेच्छावृत्ति, वेदेत्वलौकिकधर्मवृत्तीत्येतन्मत-निष्कर्षः।।

**वस्तुतस्तु लोकेपि ने च्छायाः स्वरूपेण प्रवृत्तिं प्रति कारणत्वम्। तदभावेपि तद्भ्रमेण प्रवृत्युदयात्। स्वरूपेण कारणत्वे लिङुक्तिवैयर्थ्याच्च। नापि तज्ज्ञानस्य कारणत्वम्। इष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिविशेषं प्रति प्रयोजकतयैवान्वयव्यतिरेकसिद्धौ कारणत्व-कल्पने गौरवात्।**

**अतः प्रवृत्तिप्रयोजकत्वमेव प्रवर्तनात्वं वाच्यम्। तदपि च न लिङादेः शक्यतावच्छेदकम्, गौरवादन्यलभ्यत्वाच्च। प्रवृत्तिर्हि आख्यातादेव लभ्यते, प्रयोजकत्वं तु संसर्गबलेनेति न तदपि शक्यातावच्छेदककोटिप्रविष्टम्। अपितु लोकवेदसाधरण्येन व्यापारत्वमेव शक्यतावच्छेदकम्। अस्तिहि लौकिके लिङादिपदोपस्थाप्ये पुरुषाशये प्रवृत्तिसाधनीभूतेष्ट साधनत्वाद्यनुमापकतया प्रवृत्ति प्रयोजकव्यापारत्वम्। वेदेपि शब्दश्रवणोत्तरकालं तदनुमायैव तत्कार्यदर्शना दिच्छाया श्चापौरुषेये वेदेबाधात्कार्यानुमेय मलौकिकं धर्मं लिङादिनिष्टं लिङादिवाच्यं च परिकल्प्य, तस्य तदनुमापकत्वकल्पना त्तत्रापि प्रवृत्तिप्रयोजकव्यापारत्वम्। अत उभयसाधरण्येन व्यापारत्वमेव लिङादिशक्यतावच्छेदकम्।**

ननु "अनुकूलत्वं जनकत्वमि"त्ययुक्तम्, लोके इच्छाया वेदेऽलौकिकधकर्मस्य च इष्टसाधनत्वानुमापन द्वारैव प्रवृत्तिप्रयोजकत्वेन साक्षाज्जनकत्वाभावादित्यतः कल्पान्तरमाह – **वस्तुतस्त्वित्यादिना व्यापारत्वरूपो खण्ड एवानतिप्रसक्तो लिङादिपदशक्यतावच्छेदक इत्यन्तेन ग्रन्थेन** प्रथमतोऽनुकूलत्वं जनकत्वमित्यर्थे दोषं दर्शयति **लोकेपीति** अपिना वेदस्य ग्रहणम्। तदभावेपि = इच्छाया अभावेपि। **प्रवृत्युदयादिति** इच्छा भ्रमेण प्रवृत्तेर्दर्शनात्तदभावेपि तत्कार्यदर्शनान्न तस्याः कारणत्वमित्यर्थः। दोषान्तरमाह **स्वरूपेणेति** कारणत्वे = स्वरूपसत्याः कारणत्वे **लिङुक्तीति** प्रवृत्तिकारणीभूतेच्छा ज्ञापनाय लिङादिरुच्चार्यते। तस्याः स्वरूपसत्याः कारणत्वाभ्युपगमे तज्ज्ञानानपेक्षणात्तद्बोधकस्य लिङादेरुच्चारणस्य वैयर्थ्यं स्पष्टमेवेति भावः। तर्हि तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वं स्वीकुर्म इत्याशयेन शङ्कते **नापीति** अयमर्थः – इच्छाज्ञाने प्रवृत्तिः, तदभावे प्रवृत्त्यभाव इत्यन्वयव्यतिरेकानुविधायि त्वात्प्रवृत्तिं प्रति तज्ज्ञानस्य कारणत्व – मिति। तज्ज्ञानस्य = इच्छा ज्ञानस्य। कारणत्वं = प्रवृत्तिं प्रति। समाधत्ते – **इष्टसाधनत्वेति** अयमर्थः – इच्छाज्ञानेन इष्टसाधनत्वानुमाने तेन प्रवृत्तिः, तेन तदनुमानाभावे प्रवृत्त्यभाव इति तदनुमापकतयैव इच्छाज्ञानस्य प्रवृत्तिप्रयोजकत्वं, नतु स्वतन्त्रान्वयव्यतिरेकानुविधायितया कारणत्वमिति। तदाह – **प्रवृत्तिविशेषं प्रति प्रयोजकतयैवेति** अन्वयव्यतिरेकसिद्धौ = प्रवृत्तिं प्रति इच्छा ज्ञानीयान्वय व्यतिरेकयोः, सिद्धौ = अन्यथा सिद्धौ। कारणत्वकल्पने = प्रवृत्तिं प्रति तत्कल्पने। एवं वेदेपि अलौकिकधर्मज्ञानस्यापि प्रवृत्तिं प्रति कारणत्वं न संभवतीति बोध्यम्।

अतः = स्वरूपसत्या इच्छायास्तज्ज्ञानस्य च प्रवृत्तिं प्रति कारणत्वायोगात्। प्रवृत्तिप्रयोजकत्वमेव = प्रवृत्तिप्रयोजकव्यापारत्वमेव। प्रवृत्तिजनकव्यापारत्वं प्रवर्तनात्वमिति पूर्वं निरुक्तम्। इदानीं तु प्रयोजकत्व घटितं तदिति विवेकः। साक्षात्कार्योत्पादकत्वं जनकत्वम् जनकजनकत्वसाधारणं प्रयोजकत्वम्। नन्वेवं प्रवृत्तिप्रयोजकव्यापारत्वस्य शक्यतावच्छेदकत्वे गौरवं स्यादित्यत आह – **तदपीति** विशिष्टमित्यर्थः। ननु प्रमाणिकं गौरवं न दोषायेत्यत आह – ***अन्य लभ्यत्वादिति*** अन्यलभ्यत्वमेव दर्शयति **प्रवृत्तिर्हीति तदपीति** सा च तच्च = तत् '[1] नपुंसकैकशेषः' एकवद्भावश्च। प्रवृत्तिः, प्रयोजकत्वं चेत्यर्थः। **व्यापारत्वमेवेति** तस्य च व्यापारस्य प्रवृत्तिप्रयोजकत्वात्प्रवर्तनात्वेन व्यवहारः। लोकवेदसाधारण्येनेत्युक्तम्, तत्र लोके तत्त्वमुपपादयति **अस्ति हि लौकिके इति** पुरुषाशये इच्छायाम्, **प्रवृत्तिसाधनीति** प्रवृत्तिसाधनीभूतं यदिष्टसाधनत्वादि तदनुमापकतयेत्यर्थः। आदिपदे कृतिसाध्यत्वस्य ग्रहणम्। ननु वेदे पुरुषेच्छाया अभावात्कथं तत्र तत्त्वमित्यत आह **वेदेपीति शब्दश्रवणेति** "यजेत स्वर्गकाम" इत्यादौ तिङ्रूपशब्दश्रवणोत्तरकालमित्यर्थः। तद् = इष्टसाधनत्वादि। तत्कार्यदर्शनात् = प्रवृत्तिरूप कार्यदर्शनात्। कार्यानुमेयम् = प्रवृत्तिरूपकार्येणानुमेयम्। लोके व्यापारस्याश्रयः पुरुषः, वेदे तु तदभावाच्छब्द एवाश्रय इत्याह – **शब्दनिष्ठमिति** धर्मज्ञानात्प्रवृत्ति दर्शनादाह - **लिङादिवाच्यमिति** ननु य एव शब्दा लौकिकास्त एव वैदिकाः, य एव तेषामर्थः स एवामीषामपीति न्यायेन लोके विधिशब्दस्य यत्र शक्तिगृहीता, वेदेपि तदर्थकेनैव भवितव्यम्। लोके च प्रेषणादि पुरुषधर्मवाचित्वं क्लृप्तमिति वेदे पुरुषा भावेन शक्तिग्रहाभावे कथमलौकिकधर्मोपस्थितिरिति चेत्, मैवम्। प्रवर्तनायाः प्रवृत्त्यनुकूलव्यापार रूपत्वाल्लोके आवापोद्वापाभ्यां व्यापारत्वेनैव सखण्डेनाखण्डेन वा शक्तिग्रहाद् यद्धर्मावच्छिन्ने यस्य शब्दस्य शक्तिग्रहो जातस्तदधर्मप्रकारके बोधे तेन शब्देन जनिते सति तदधर्माश्रय व्यक्तीनां विशेष्यत्वानुपपत्तावप्रसिद्धव्याक्तिमाक्षिप्यैव बोधः पर्यव स्यतीति न्यायस्यालौकिकप्रेरणावादिमते संचारेण तदुपपत्तेः, तन्न्यायसंचारश्च अपूर्वात्मककार्यविध्यर्थवादि प्राभाकरमते शब्दभावनाविध्यर्थवादिपार्थसारथिमते चावश्यक एवेति न काचिदनुपपत्तिरिति

[1] नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् 1-2-69 इति पाणिनि सत्रेण

बोध्यम्। तदेतत्सर्वमभिप्रेत्याह – **परिकल्प्येति** तस्य = अलौकिक धर्मस्य। **तदनुमापकत्वेति** इष्टसाधनत्वाद्यनुमापकत्व कल्पनादित्यर्थः। तत्रापि = वैदिकलिङर्थालौकिकधर्मेपि। **प्रवृत्तिप्रयोजकेति** – अधिकारिणो यागादौ प्रवृत्तिप्रयोजकव्यापारत्व मित्यर्थः। **अत इति** लोके इच्छाया वेदेऽलौकिक धर्मस्य चेष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिप्रयोजक त्वादित्यर्थः। उभयसाधारण्येन = लोकवेदसाधारण्येन। **व्यापारत्वमेवेति** तथाच व्यापारत्वावच्छिन्ने शक्तिः, सच लोके प्रवर्तकेच्छा, वेदे लिङ्निष्ठोऽलौकिको-धर्मः, तस्य चेष्टसाधनत्वाद्यनमापकतया प्रवृत्तिप्रयोजकत्व मव्याहतमिति भावः।

**यद्यपि च तदन्यत्राप्यतिप्रसक्तम्, तथापि समभिव्याहार बलाद्विशेषलाभः। तथाहि – लिङ्पदाद् व्यापारत्वावच्छिन्नव्यापारमात्रोपस्थितावपि तस्या ख्यातोपात्तकृतौ निरुक्त-संसर्गेणान्वये बुद्धे पश्चात्तत्संसर्गस्य तत्त्वेन रूपेण बोधवेलायां तेनतेन प्रमाणेन विशेषलाभोना सुलभः। इष्यत एव हि "भूतलं घटव", दित्यादौ घटपदाद् घटत्वाच्छिन्नघटमात्रप्रतीतावपि तस्य योग्यसंसर्गेण भूतलाद्यन्वये बुद्धे तत्संसर्गस्य तत्त्वेन जिज्ञासायां प्रमाणान्तरेण संयोगत्वादिना संयोगादिरूपसंसर्गप्रतीतितो भूतल वृत्तिघटविशेषप्रतीतिः।**

व्यापारत्वमेव लिङादिशक्यतवच्छेदकमित्यर्थे दोषमुद्भावयति **यद्यपीति** तद् = व्यापारत्वम्, अन्यत्रापि = आनयनभोजनादावपि। तत्रापि व्यापारत्वस्य सत्त्वात्, **अतिप्रसक्तमिति** तथाच व्यापारेण इष्ट साधनत्वाद्यनुमातुं न शक्यत इति भावः। **समभिव्याहारबलादिति** धातुप्रत्ययादिसमभिव्याहार-बलादित्यर्थः। **विशेषलाभ इति** व्यापारस्य इच्छारूपत्वं, तस्या "अयमत्र प्रवर्ततामित्याकारकत्वमित्यादि विशेषार्थलाभ इत्यर्थः। तदेवोपपादयति – **तथाहीत्यादिना – उभयविषयिणी अनुमितिरुत्पद्यते इत्यन्तेन ग्रन्थेन** निरुक्तसंसर्गेण = स्वविषयक ज्ञानजन्यानुमिति प्रयोज्यत्वसंसर्गेण, तत्त्वेन रूपेण = स्वविषयकज्ञानविशेषजन्यानुमिति प्रयोज्यत्वेन रूपेण। तेन तेन प्रामाणेन = प्रत्यक्षादि तत्तत्प्रमाणेन। विशेषलाभः = व्यापारस्य इच्छादिविशेषलाभः। सामान्यरूपेणोपस्थितस्यार्थस्य विशेषरूपेण प्रतीतौ संप्रतिपन्नमर्थं दृष्टान्तयति **इष्यत एव हीति** अस्य "घटविशेषप्रतीति" रित्यत्रान्वयः। **घटवदिति** घटोस्मिन्न स्तीति घटवत्। सप्तम्यर्थे मत्वर्थीयो मतुप्। घटसंबन्धवर्दिति तदर्थः। **योग्यसंसर्गेणेति** योग्यसंबन्धसामान्येनैवेत्यर्थः। **भूतालाद्यन्वये इति** योग्यसंबन्धेन घटविशिष्टं भूतलमित्यन्वय इत्यर्थः। तत्त्वेन = संसर्गत्वेन, जिज्ञासायां = कोऽसौ संबन्ध इति ज्ञातुमिच्छायाम्, प्रमाणान्तरेण = प्रत्यक्षादिना। **संयोगादिरूप संसर्गप्रतीतित इति** तद्रूपसंसर्गप्रतीतिबलादित्यर्थः। **भूतलवृत्तीति** अयमर्थः – निरुक्तवाक्ये घटपदाद् घटत्वविशिष्टघटमात्रं भासते, नतु स घट एतद्देशवृत्ति, स्तद्देशवृत्तिरित्यादि-विशेषणविशिष्टः, भूतलपदसमभिव्याहारात्तु घटस्य भूतलेन्वये भूतलवृत्तिर्घटविशेषः प्रतीयते। तथा संयोगरूपसंबन्धविशेषप्रतीत्या तद्बलेनापि संयोगेन तद्वृत्तिघटविशेषः प्रतीयते। तेन पर्वतादिवृत्ते स्समवायेन वर्तमानस्य च प्रतीतिः। एवं कपाले घट इत्यादावपि निरुक्तरीत्या विशेषर्थप्रतीतिर्बोध्या – इति। "संयोगादिरूपसंसर्गप्रतीतित" इति पाठमाश्रित्य व्याख्यातम्। परन्तु सर्वेष्वपि भाट्टरहस्यग्रन्थेषु "संयोगादिरूपसंसर्गप्रतीतिवदि"त्येव पाठो दृश्यते। तत्रैवं व्याख्येयम् – घटवदित्यतः संबन्धसामान्यमेव प्रतीयते, भूतलाद्यन्वये प्रत्यक्षादिना संयोगत्वादिना संयोगादिसंसर्गविशेषः प्रतीयते, तद्वदित्यर्थः। इदं च भूतलवृत्ति घटविशेषप्रतीतौ दृष्टान्तव्याजेनोक्तम्। संयोगादिरूपसंसर्गविशेषप्रतीतिरपि साध्यकोटि प्रविष्टैव। एवञ्च संयोगरूपसंसर्गविशेषप्रतीतिर्भूतल वृत्तिघटविशेषप्रतीतिश्च भूतलं घटवदित्यत इष्यत एव। संयोगादिसंसर्ग प्रतीतिवदित्यत्र तत्प्रतीत्यातुल्यमित्यर्थे तृतीयान्ताद्वतिस्तद्धित इति बोध्यम्।

**तदयमत्रक्रमः – प्रथमं लिङादिपदाद् व्यापारत्वेन सामान्यरूपेणैव व्यापारोपस्थितिः,**

**पश्चादाख्यातोपस्थितकृतौ तस्य स्वविषयकज्ञानविशेष जन्यानुमिति प्रयोज्यत्व संसर्गेण तत्त्वेनानुपस्थितेनैवान्वयः। शाब्दबोधश्च व्यापारवती यागादिकृतिरिति। न च लिङर्थविशेष्यक एव शाब्दबोध इति भ्रमितव्यम्। "भावप्रधान माख्यात" मिति स्मृत्या अर्थभावनातिरिक्तलकारार्थ प्रकारक शाब्दबोधत्वावच्छिन्नं प्रति अर्थभावनानिष्ठविशेष्यता संबन्धेना ख्यातपदजन्योपस्थितिः कारणमिति कालादिसाधारण्येनै क कार्यकारण भावकल्पना-लाघवानुरोधेनाऽऽख्यातार्थकृतेरेव मुख्यविशेष्यत्वात्।**

तत् = तस्मात्, "भूतलं घटवदित्यादौ संसर्ग विशेषघटविशेषप्रतीतेरिष्टत्वात्। तद्वदिति यावत्। अत्र = दार्ष्टान्तिके। तमेवोपपादयति – **प्रथममिति** पश्चात् = सामान्यरूपेण व्यापारोपस्थित्यनन्तरम्। तस्य = लिङर्थव्यापारस्य। **स्वविषयकेति** स्वं = व्यापारः, तद्विषयको ज्ञानविशेषः = यागो विषयता संबन्धेन तादृशव्यापारवानिति पक्षधर्मता ज्ञानविशेषः, तज्जन्या या अनुमितिः, याग इष्टसाधनमित्यनुमितिः, तत्प्रयोज्यत्वमाख्यातार्थकृतौ, तत्संसर्गेणेत्यर्थः। ननुतादृश संसर्गस्य पूर्वमनुपस्थितत्वात्कथं शाब्दे तद्भानमित्यत आह **तत्त्वेनानुपस्थितेनैवेति** विशिष्टज्ञाने संसर्गज्ञानस्यानपेक्षितत्वान्न दोष इत्यर्थः। लिङर्थ व्यापारस्य कृतावन्वये पर्यवसितं बोधमाह **शाब्दबोधश्चेति न चेति** मीमांसान्यायप्रकाशादौ शाब्द भावनायामर्थ भावनायाः प्रकारत्वकथनात्तथैव शाब्दबोधस्स्वीकार्य इति शङ्कितुराशयः। **लिङर्थ विशेष्यक एवेति** यागादिकृतिविषयको व्यापार इति शाब्दाभावाना विशेष्यक एवेत्यर्थः। **भ्रमितव्यमिति** न्यायप्रकाशादौ तथा लेखनं भ्रमबीजम्। "प्रत्ययार्थः प्रधान"मिति स्मृतिः प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यं बोधयति, प्रत्ययार्थानां मध्ये कस्य प्राधान्यमित्यपेक्षायां "भावप्रधानमाख्यात"मिति स्मृति र्भावनापरपर्यायभावरूपाया अर्थभावनायाः प्राधान्यं बोधयतीति भावना वादे वक्ष्यमाणत्वात्तदभिप्रायेण समाधत्ते – **भावप्रधानमिति** अर्थभावनातिरिक्ता लकारार्थाः = व्यापारकर्तृकर्मसंख्योपग्रहकालाः, तत्प्रकारकेत्यर्थः। **कालादीति** आदिना लक्षितयोः कर्तृकर्मणोः संख्याया उपग्रहस्य च ग्रहणम्। एतेषां भावनायामेव प्रकारत्वं तत्तसंदर्भे ग्रन्थकृता प्रदर्शयिष्यते, अत एककार्यकारणभावकल्पने लाघवादर्थ-भावनाया मुख्यविशेष्यत्वं युक्तम्। अन्यथाऽर्थभावनायाः शाब्दभावनायां प्रकारत्वोपगमे तदर्थमेकः कार्यकारण भावः, कालादीनामर्थभावना यामन्वयात्तदर्थमन्ये कार्यकारणभावा इति तत्कल्पना गौरवं स्पष्टमेवेति भावः।

**संप्रश्न प्रार्थनयोरपि विषयता संबन्धेन तस्यामेवान्वयः। हेतुत्वादेरपि स्वरूपसंबन्धेन तस्या मन्वयेपि तस्या उपलक्षणत्वादिने तरक्रियाया मन्वयः, लिङ्वा हेतुमत्त्वरूपसंसर्गतात्पर्य-ग्राहकत्वम्। तेना ख्यातार्थस्यैव "आर्ति मार्छे"दित्यादा वितरक्रिया न्वयो हेतुमत्त्वसंसर्गणैवेति न कश्चिद्विरोधः।**

नन्वेककार्यकारणभावकल्पना लाघवानुरोधेनेत्ययुक्तम्। संप्रश्नादीनां लिङर्थानामन्वयायातिरिक्त तत्कल्पनाया आवश्यकत्वादित्याशंक्य तेषामपि कृतावेवान्वयान्नास्मन्मते तत्कल्पनाधिक्यमित्याशयेनाह – **संप्रश्नप्रार्थनयोरपीति** किं त्वमधीयीथाः, व्याकरणमुत तर्कमित्यादौ, भो वेदमधीयीयेतयादौ च तयोरपि भावनायामेवान्वय इति भावः। **विषयता संबन्धनेति** व्याकरणादिसंबन्धि संप्रश्नविषयिका भावनेति ततो बोधः। कृष्णं न मेच्चेत्, सुखं यायादित्यादौ हैतुहेतुमतोर्लिङ्यपि नातिरिक्तः कार्यकारणभावः कल्प्य इत्याह – **हेतुत्वादेरपीति** स्वरूपसंबन्धेन = आश्रयता संबन्धेन। तस्यां = धात्वर्थविशिष्टभावनायाम्। **उपलक्षणत्वादिनेति** उपलक्षणत्वं = ज्ञापकत्वम्। तथाच हेतुत्वाश्रयनमननिष्ठ ज्ञापकत्वनिरूपित ज्ञाप्यत्वविशिष्टा सुखप्राप्ति भावनेति ततोबोधः। इतरक्रियायाम् = यानभावनायाम्। लाघवादाह –

**लिङो वेति** पूर्वकल्पे हेतुत्वस्य धात्वर्थे आश्रयता संबन्धेनान्वये तस्य चोपलक्षणत्वादिना क्रियान्तरे चान्वयाद्गौरवमतस्तदपेक्षया लघुभूतः कल्पः स्वीकृत इति बोध्यम्। **हेतुमत्वरूपेति** हेतुत्वं प्रयोजकत्वम्, हेतुमत्वं च प्रयोज्यत्वम्। तेन = निरुक्तार्थस्वीकारेण। **आख्यातार्थस्यैवेति** कृष्णं नमेच्चेदित्यत्र संभावना रूपस्य आर्तिमार्च्छेदित्यत्र प्रतियोगित्वस्य चेत्यर्थः। **आर्ति मार्च्छेदिति** "यस्योभयं हविरार्तिमार्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति श्रुतिवाक्यम्। यस्य = यजमानस्य दर्शसंबन्धिसायंकालिकं हविः दधिरूपं प्रातः कालिकं हविः पयोरूपं च नश्यति स इन्द्र देवताकं शरावपञ्चकपक्वौदन द्रव्यकं यागं कुर्यादिति तदर्थः। प्रथमभावना द्वितीयभावनायां हेतुमत्त्वसंबन्धेनान्वेति तादृशसंबन्धे तात्पर्यग्राहकं लिङ्पदमिति भावः।

**एवं 'यदि शालीन् भुञ्जीत, तर्हि दध्युपसिञ्चे'दित्यादौ कामप्रवेदनेपि स्वविषयकेच्छा-निमित्तकत्वं संसर्गः, लिङ्तात्पर्यग्राहकः। आख्यातमेववा इच्छालक्षकम्। 'यदि शालीन् भोक्तुमिच्छे'दित्यत्र निमित्तत्वमेव संसर्ग इति न क्वापि व्युत्पत्त्यन्तरम्।**

"कामप्रवेदनेऽकच्चिती" 3-3-153 ति सूत्रो दाहरणे आह **एवमिति** हेतुत्वादाविवेत्यर्थः। **यदि शालीनिति** यदि शब्देन निमित्तमभिधीयते, शालीन् भोक्तुमिच्छेद्यदि तर्हि दधि उपसिञ्चेदित्यर्थः। कामप्रवेदनेपि = कामप्रवेदने लिङ्यपि। **स्वविषयकेति** स्वं = भोजनकृतिः, तद्विषयिका इच्छा या तन्निमित्तकत्वमुपसेकक्रियायाम्, तर्हि "कामप्रवेदनेऽकच्चिती" त्यनुशासनस्य वैयर्थ्यमित्यत आह **लिङ्तात्पर्य ग्राहक इति** एतादृशसंसर्गस्वीकारे सूत्रं तात्पर्य ग्राहकम्। एतावतैव तत्सार्थक्यमिति भावः। इच्छाया आख्यातार्थकत्वमित्याशयेनाह **आख्यातमेवेति** भुञ्जीतेत्यत्राख्यातमित्यर्थः। "विधिनिमन्त्रणे" तादि सूत्रमेव शक्यार्थबोधकम्। तदतिरिक्तं लिङर्थ बोधकं लाक्षणिकानुशासनमेवेति स्वसिद्धान्तरी... **इच्छा लक्षकमिति** एतदाशयेनैव "हेतुहेतुमतोर्लिङ्" "कामप्रवेदनेऽकच्चिती" त्यनुशासनेनैव हेतुत्वादु वित्युक्तं प्राक्। अयमर्थः — कच्चिच्छब्दस्याप्रयोगे कामशब्दाभिधेयाया इच्छाया लिङर्थत्वं प्रकृतानुशासनेन लभ्यते, तच्च लाक्षणिकानुशासनमिति प्रकृतार्थ सिद्धि-रिति। नन्विदमयुक्तम्, तेनानुशासनेन निरुक्तार्थस्यालाभात्। कामप्रवेदने प्रकारान्तरेण गम्यमाने सर्वलाकारापवादत्वेन लिङो विधानमित्येवम्-परतया तत्सूत्रस्य काशिकाकारेण व्याख्यातत्वात्। कामो मे भुञ्जीत भवानिति तदुदाहरणस्य तेनोक्तत्वादिति चेत्, न। कामप्रवेदने कर्तव्ये लिङित्येव सूत्रार्थोपपत्तौ प्रकारान्तरेणेत्यध्याहारे गौरवात्। "इच्छार्थेषुलिङ्लोटौ" 3-3-157 इति सूत्रे महाभाष्यकारेण "कामप्रवेदनेचेदिच्छार्थेभ्य उपपदेभ्यो गम्यमाने इत्येवं व्याख्यातत्वेन प्रकृतसूत्रेण विवक्षितार्थस्य "इच्छार्थेषु लिङ्लोटौ" इति सूत्रेणैव सिद्धौ कामप्रवेदने इति सूत्रस्य वैयर्थ्यापत्तेश्च। यद्यपि पदमञ्जर्यां हरदत्तेन पौनरुक्त्यं वारितं, तथापि तदप्यसंगतम्। अतः काशिकाकार पूर्वकालीनैः शबरादिभिर्व्याख्यात त्वादिच्छायां लिङित्येव सूत्रार्थो युक्तः। एतच्च विस्तरेण प्रतिपादितं द्वितीयाध्याय तृतीयपादे रथन्तराधिकरणे कौस्तुभे। तदेतत्सर्वमभिप्रेत्योक्तम् "आख्यातमेव वा इच्छा लक्षक"मितीति दिक्। इच्छतेर्धातोर्लिङन्तस्य निरुक्तसंसर्गतात्पर्यग्राहकत्वस्य लिङोऽयोगात्तत्रोपपत्तिमाह — **यदि शालीन् भोक्तु मिच्छेदिति** निमित्तत्वार्थक यदि शब्दसमभिव्याहारा दाह। **निमित्तत्वमेवेति** "यदि राजन्यं वैश्यं वा याजये दित्यादौ यदि शब्दो निमित्तत्वपरो दृष्टः। निगमयति **न क्वापि व्युत्पत्त्यन्तरमिति।**

**अतश्च 'देवदत्तः पचे' दित्यादौ लोके तावच्छाब्दबो धोत्तरं स्वसंसर्गस्य तत्त्वेन जिज्ञासायां 'चैत्रप्रेरितोऽहं पचामी' त्यादिव्यवहारं बलाद् व्यापारस्ये च्छारूपत्वेवगते पाकविषयकृति-संबन्धात् 'पाकेऽयं प्रवर्तता' मित्याकारकत्वे च तस्याः सिद्धे तदाश्रयस्य प्रयोजकवृद्धस्य**

**प्रमाणान्तरेणाऽऽप्तत्वावगमेच पाके समान संवित्संवेद्यतया 'पाकेऽयं प्रवर्तता' मित्याद्याकार काप्तनिष्टेच्छाविषय कृतिविषयत्वरूपहेतुज्ञानं मानसं जायते, ततश्च तस्मिन् हेतौ क्रियान्तरदृष्टान्तेने ष्टसाधनत्वकृतिसाध्यत्वयो र्व्याप्तिस्मरणाद् भयविषयिणी अनुमिति रुत्पद्यते।**

प्रकृतार्थमनुसरति – **अतश्चेति** यागादि कृतिर्व्यापारवतीति शाब्दबोधे बाधकाभावादित्यर्थः। लौकिकलिङर्थस्य प्रकृतत्वादाह **लोके इति तावच्छाब्द बोधोत्तरमिति** पाककृतिर्व्यापारवती देवदत्त-वृत्तिरिति व्यापारसामान्यविषयक शाब्दबोधोत्तरमित्यर्थः। स्वसंसर्गस्य = स्वविषयकज्ञानजन्यानुमिति प्रयोज्यत्वरूपसंसर्गस्य। प्रेरकव्यापारस्य इच्छा रूप त्वादाह **इच्छा रूपत्वेऽवगते इति पाकविषयकृतीति** देवदत्तः पचेदित्यत्र पचि धातुना पाकस्यारव्यातेन कृतेश्चोपस्थापनात्प्रकृतार्थसिद्धिरिति भावः। हेतावाप्तविशेषणसत्वात्तल्लाभप्रकारमाह **तदाश्रय स्येति** इच्छाश्रयस्येत्यर्थः। प्रमाणान्तरेण = प्रत्यक्षेङ्गितादिना। **समानसंवित्संवेद्यतयेति** पाकविषय कृतिविषयेच्छायाः आप्तनिष्ठत्वेऽवगते तद्बलात्प्रकृतार्थसिद्धिरित्याशयः। **इत्याकारकाप्तेति** इत्याकारिका या आप्तनिष्ठा इच्छा, तद्विषयो या कृतिस्तद्विषयत्वं पाक इत्यर्थः। तस्याशाब्दत्वादाह – **मानसमिति** क्रियान्तरदृष्टान्तेन = भोजनक्रियादि-दृष्टान्तेन **व्याप्तिस्मरणादिति** यत्र यत्र अयमत्र प्रवर्ततामि त्याकारकाप्तेच्छा विषयकृतिविषयत्वं तत्रेष्टसाधनत्वं कृतिसाध्यत्वं चेति व्याप्तेः स्मरणादित्यर्थः। उभयविषयिणी = इष्टसाधनत्व कृतिसाध्यत्वविषयिका। अनया रीत्या व्यापारसामान्यरूपस्याप्याख्यातार्थस्य भूतलं घटवदित्यत्र प्रतिपादितार्थरीत्या विशेषरूपत्वात्तेनेष्टसाधनत्वाद्यनुमितिर्निराबाधेति प्रकृतप्रघट्ट कार्थः।

**क्वाचिच्चा निष्टसाधनी भूताकरणप्रतियोगित्वादेरपि, सामग्रीवशात्। तत्सामग्रीच 'अयमत्र प्रवर्तता' मित्याकारकस्वभङ्गनि मित्तकाऽनिष्ठकर्त्रिच्छाविषयत्वरूपहेतु-परामर्शादिरूपा। स्वपद – मिच्छापरम्। इदंच तत्र तत्र कौस्तुभादौ स्पष्टम्। तस्याश्च प्रवृत्तिप्रयोजकत्वं स्पष्टमेवेति संसर्गस्य तत्त्वेन लाभः। इच्छाविशेष लाभश्चेत्युभयं सुलभम्।**

ननु नित्यकर्मथलेऽनुपपत्तिः, तत्रेच्छाया इष्टसाधनतवानुमापकत्वायोगादित्यत आह - **क्वचिदिति** नित्यकर्मस्थले इत्यर्थः। **अनिष्टेति** अत्र च प्रतियोगित्वं संबन्धविशेषः। यस्मिन्सति 'अस्या करण' मिति प्रतीतिरुपजायते। नत्वाभावप्रतिस्पर्धिस्वरूपसंबन्धात्मकम्। तस्य करण एव सत्त्वेन सन्ध्यावन्दन-ज्योतिष्टोमादावसंभवात्। प्रत्यवायरूपानिष्टसाधनीभूतं यद् अकरण = मनुष्ठानं, तत्प्रतियोगित्वस्येत्यर्थः। प्रतियोगित्वादेरपि = तस्याप्यनुमितिः, यथा उपनीतस्य सन्ध्यावन्दने प्रवर्तनम्। अनिष्टजनकीभूतं यदकरणं सन्ध्यावन्दनाकरणं, तत्प्रतियोगित्वं सन्ध्यावन्दने, तदनु मापिका या प्रवर्तकेच्छा सन्ध्यावन्दनेऽयं प्रवर्ततामित्याकारिका इच्छा। तदकरणे श्रुतिस्मृत्योः प्रत्यवायावगमात् तदकरणस्यानिष्टजनकीभूतत्वं ज्ञाप्यते। तथाचायमत्रानुमान प्रयोगः – सन्ध्यावन्दनमनिष्टजनकीभूताकरणप्रतियोगि, ''अयमत्र प्रवर्ततामित्याकारक स्वीयेच्छाभङ्गनिमित्तकानिष्ट कर्तृ प्रवर्तकेच्छा विषयत्वात् इति। अयमत्र प्रवर्ततामित्यत्र अयं = उपनीतोऽधिकारी, अत्र = नित्यकर्मणि, प्रवर्ततामित्याकारिका या स्वकीया इच्छा तद्बङ्गनिमित्तकं यदनिष्टं, तादृशानिष्ट कर्ता यः प्रवर्तकः, तदिच्छा विषयत्वादित्यर्थः। अत्र सन्ध्यावन्दनाकरणे प्रवर्तकस्य स्वीयेच्छा भङ्गो भवति, तद्भङ्गेनोपनीतस्यानिष्टं जायते। तद्द्वारा प्रवर्तक उपनीतस्यानिष्टकर्ता भवतीत्याधुनिकाः केचिद्विद्वांसो व्याकुर्वते।

तत्तु न सम्यक् 'साक्षात्परम्परयावा यःस्वार्थस्य विशेष्यो' यश्च समभिव्याहतक्रियाकारकपदार्थस्त-दुभयत्र स्वशब्दस्य शक्तिग्रहेण प्रकृतेऽनिष्टस्य कर्तुर्वा स्वभङ्ग निमित्रकेत्यत्र स्वशब्देन ग्रहणापत्तेः प्रयोजकेच्छाया अग्रहणापत्तेश्च।

अत एवं व्याख्येयम् – स्वभङ्गनिमित्तकमनिष्टं यस्यास्सा – स्वभङ्निमित्तकानिष्टा, तथाच अयमत्र प्रवर्ततामित्याकारिका स्वभङ्निमित्तकानिष्टा च या कर्त्रिच्छा प्रयोजकेच्छा, तद्विषयत्वादित्यर्थः। यद्भङ्गः अनिष्टनिमित्तं तादृशत्वमेव स्वभङ्गनिमित्तकानिष्टत्वम्। इच्छायाः स्वभङ्गो नाम इच्छाविषयप्रवृत्त्यभावः, सोऽनिष्टस्य निमित्तम्। अनिष्ट साधनीभूताकरणप्रतियोगित्व व्याप्य अयमत्र प्रवर्ततामित्याकारकस्वभङ्गनिमित्तकानिष्ट कर्त्रिच्छाविषयत्ववत् सन्ध्यावन्दनमिति परामर्शः, तस्मात्तादृशहेतोश्चेत्यर्थः, तस्याश्च = निरुक्तसामग्रयाश्च। तत्त्वेन = विशेषरूपेणेति।

यद्वा – **अयमत्रेति** विहितकालशुचिजीवित्वादि विशेषणविशिष्टोधिकारी अयं पदार्थः। अकरण-निमित्तक प्रत्यवायजनकं नित्यकर्म अत्र पदार्थः। स्वपदेन इच्छा शब्दनिष्ठोऽभिप्रायविशेष, तस्या भङ्गः = नित्यकर्माननुष्ठानम्, तन्निमित्तकं यदनिष्टं प्रत्यवायप्राप्तिरूपम्। तस्य कर्त्री या इच्छा, सैव पूर्वोक्ता तद्घटिका अयमत्र यदि न प्रवर्तेत तदा तस्यानिष्टं भवत्वित्यकारिका, तद्विषय त्वादित्यर्थः। अत्रेच्छायाः कर्तृत्वं प्रयोजकत्वरूपम् (जनकत्वरूपम्) कर्त्री शब्दे "स्त्रियाः पुंव" 6-3-34 दित्यादिना पुंवद्भाव इति व्याख्येयम्।

केचित्तु – इदं नित्यकर्मानिष्टसाधनाननुष्ठान प्रतियोगि, अयमत्र प्रवर्ततामित्याकारकप्रवर्तकेच्छा भङ्गनिमित्तक कर्तृसमवेतानिष्टविशेष्यकेच्छाविषयत्वात्। एवं चानिष्टसाधननुष्ठानप्रतियोगित्वव्याप्य अयमत्र प्रवर्ततामित्याकारक प्रवर्तकेच्छा भङ्गनिमित्तक कर्तृसमवेता निष्टविशेष्यकेच्छाविषयत्ववदिदं नित्यकर्मेत्याकारक परामर्शात् इदं नित्यकर्म अनिष्टसाधनीभूताभावप्रतियोगि इत्याकारक नित्यकर्म-विशेष्यकानिष्टसाधनाकरण प्रतियोगित्वप्रकारकानुमितिर्जायते, अत्र अयमत्र कर्मणि प्रवर्ततामित्या-कारिका प्रवर्तकेच्छा, अनिष्टसमवेत कर्तृसमवेता तु अननुष्ठानं मे भूयादित्याकारिका प्रवर्त्येच्छा विशेष्यतावच्छेदकमननुष्ठानत्वमेव, नानिष्टत्वमिति व्याचक्षते।

तथाच सन्ध्यावन्दनादि नित्यंकर्म अनिष्ट साधनीभूताकरणप्रतियोगि अयमत्र प्रवर्ततामित्याकारक स्वभाङ्गनिमित्तकानिष्टकर्त्रिच्छाविषयत्वात्। यथा आप्तोपदिष्टं राजाभ्यागमननिमित्तमुपायनम्। तत्र प्रत्यवायसाधनाकरणप्रतियोगित्वस्यलाभः। अतस्तत्र व्यापाररूपेच्छया निरुक्तप्रतियोगित्वस्यानु-मितिरिति प्रकृतग्रन्थाशय इति बोध्यम्।

**वेदेपि लिङादिश्रवणोत्तरकालं व्यापारत्वरूपेण व्यापाररूपपदार्थोपस्थित्या निरुक्तसंबन्धेन व्यापार वती यागादिकृति रिति 'शाब्दबोधे जाते,संबन्धस्य तत्त्वेन जिज्ञासायां।वेदस्थलिङादि-प्रेरितोऽहं यागादि करोमी'त्यादिव्यवहारा द्यागविषयकृतिसंबन्धा च्च तस्य लिङादिनिष्ठत्वं 'यागेऽयं प्रवर्तता' मित्याकारकत्वं चावगम्यते। अत एव वर्णात्मकलिङदे र्नित्यत्वात् तद्वृत्त्यलौकिकधर्मस्यापि नित्यत्वम्। न च भ्रम प्रमासाधारण्येन तज्ज्ञानस्यैवा नुमितिप्रयोजकत्वा ल्लोकवदेव तत्सिद्धौ प्रमाणाभावः, वेदोत्थज्ञानस्य भ्रमत्वानुपपत्त्या तत्सिद्धेः। तस्मिन् यागविषयककृतिविषयिता च न ज्ञानादिविषयितासाधारणी, अतिरिक्ता वा। अपितु 'पाकेऽयं प्रवर्तताा' मित्यादिलौकिकेच्छानिष्टविषयितासाधारणी इच्छासामान्यनिष्टविषयिताभिन्ना लिङाद्यर्थमात्रनिष्ठा। अनुगतप्रतीतेरेव तत्रप्रमाणत्वात्।**

एवं लोके सामान्यरूपस्य लिङर्थस्य व्यापारस्य तत्संसर्गस्य च विशेषरूपतां तेनेष्ट साधनत्वाद्यनुमितिं च प्रदर्श्य वेदेपि तस्य तत्त्वं दर्शयति। **वेदेपीति** लोकवेदसाधारण्येन व्यापारत्वस्यैव लिङादिशक्यता-वच्छेदकत्वस्य स्वीकारादाह – **व्यापारत्वेन व्यापाररूपपदार्थोपस्थित्येति** वेदे प्रेरकस्य पुरुषस्या-भावादाह – **वेदस्थलिङदीति** अनेन व्यापारस्य लिङादिनिष्ठत्व गम्यते। **यागविषयेति** यजेतेत्यत्र धातुना

यागादेर्धात्वर्थस्याऽख्यातेन कृतेश्चो पस्थापनात्प्रकृत्यर्थस्य विषयतासंबन्धेन कृतावन्व यात्प्रकृतार्थलाभः, अनेन व्यापारस्य यागेऽयं प्रवर्ततामित्याकारकत्वं गम्यते। तस्य = लिङर्थव्यापारस्य। व्यापारस्य लिङ्निष्ठत्वाश्रयणे प्रयोजनान्तरमप्य स्तीत्याह — **अत एवेति** तस्य लिङ्निष्ठत्वादेवेत्यर्थः। शब्दस्य नित्यत्वमिति जैमिनीयसिद्धान्तरीत्याऽह — **वर्णात्मकलिङादेर्नित्यत्वादिति** ध्वन्यात्मक शब्दस्यानित्यत्वात्तदव्यावृत्तये 'वर्ण' ग्रहणम्। **तद्वृत्त्यलौकिकेति** एतेन धर्मान्तरस्यापि लिङादिनिष्ठत्व मिच्छानिष्ठत्वं वाऽदाय विनिगमनाविरह इति शङ्का परास्ता। तज्ज्ञानस्यैव = अलौकिकधर्मज्ञानस्यैव। अनुमितिजनकत्वात् = याग इष्टसाधनमित्यनुमिति जनकत्वात्। लोकवदेव = लोके इव। तत्सिद्धौ = लिङ्निष्ठस्यालौकिकधर्मस्य। **प्रमाणाभाव इति** भ्रमप्रमासाधारण लौकिक धर्मज्ञानादनुमितिरनुभवसिद्धा। तथाच लोके यथा भ्रमेण वस्तुनो न सिद्धिस्तथा वेदेपि भ्रमेणालौकिकधर्मस्या सिद्धिरिति भावः। **भ्रमत्वानुपपत्त्येति** भ्रमजनकदोषाभावादिति भावः। अत एव समनन्तरमेव वक्ष्यति, लिङादेर्निर्दोषत्वेनेति। तस्मिन् = अलौकिकधर्मे। **यागविषयककृतिविषयितेति** यागादिविषयिका याकृतिस्तद्विषयकत्वमित्यर्थः। **ज्ञानादीति** ज्ञानादिनिष्ठविषयिता साधारणी न, अन्यथा इच्छानिष्ठविषयिताया अग्रहणाल्लोकवेदसाधारण्याभावादैकरूप्यानापत्तिरिति भावः। अत एवाह — **अतिरिक्ता वेति** नेत्यस्यात्र संबन्धः। स्वाभीष्टां विषयितां दर्शयति **अपित्विति इच्छासामान्येति** अन्यथा तया इष्टसाधनत्वाद्यनुमितिर्नस्यादिति भावः। **लिङाद्यर्थमात्रेति** मात्रपदेन ज्ञाननिष्ठायाः सामान्यरूपायाश्च व्यावृतिः। **अनुगतप्रतीतेरिति** यजेत, यजेतेत्याद्यनुगतप्रतीतेरित्यर्थः। तत्र = अलौकिकधर्मे यागविषयकृतिविषयकत्वस्य निरुक्तरूपत्वे।

**अतश्च लिङादेर्निर्दोषत्वेना नाप्तभिन्नत्वेऽवधारिते समानसंवित्संवेद्यतयैव प्रतारणाद्यजन्यहिताहितोप देशजनकनिष्ठनिरुक्ताकारकव्यापारविषयीभूतकृतिविषयत्वरूपहेतुज्ञानं तथैव मानसं जायते। अत एव लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्व माप्तत्वम्। अतश्ज तेनेष्टसाधनत्वाद्यनुमिति र्लोकवदेव नानुपपन्ना। न च भ्रमप्रमासाधारण्येनेष्टसाधनत्वाद्यनुमितेरेव प्रवृत्तिप्रयोजकत्वा न्न भवन्मते यागादावपी ष्टसाधनत्वादिसिद्धिः, ज्ञानस्या स्मन्मते स्वतः प्रमाणत्वेन दोषाद्यभावे प्रमात्वस्यैव सिद्धेः! सल्लिङ्गकपरामर्शस्य भ्रान्तानुमित्यजनकत्वाङ्गी काराच्च। अतः सिद्धं शक्यतावच्छेदकस्या तिप्रसक्तत्वेपि लोके वेदेवा विशेषलाभो निरुक्तसंसर्गलाभश्चेति।**

अतश्च = लिङर्थव्यापारस्य निरुक्तरूपत्वात्। वेदे पुरुषस्याप्तस्याभावादाह — **लिङादेर्निर्दोषत्वेनानाप्तभिन्नत्वेऽवधारिते इति** पौरुषेये शब्दे वक्तृबुद्धिगतभ्रमप्रमादादिदोषास्संभवन्ति। वैदिके तु ते न संभवन्ति। अतो लिङादेर्निर्दोषत्वम्। आप्तत्वनिश्चयो न प्रवृत्तिप्रयोजकः किंत्वनाप्तभेद निश्चय इति भावः। **समानसंविदिति** यागविषयकत्वे कृतेर्बुद्धे सति कृतिविषयत्वं यागे बुध्यत इत्यर्थः। **प्रतारणादीति** आदिना भ्रमादेर्ग्रहणम् तथाच प्रतारणाजन्यो यो हिताहितोपदेशः, तज्जनको यः लिङादिश्शब्दः, तन्निष्ठो यागेऽयं प्रवर्ततामित्याकारको यो व्यापारः, तद्विषयीभूता याकृतिस्तद्विषयत्वं (यागे) एतद्रूपं हेतु ज्ञानमित्यर्थः। तथैव = लोकवदेव। अत एव = एतादृश हेतुज्ञानस्यावश्यकत्वादेव। **तद्भिन्नोपदेशेति** हिताहित भिन्नोपदेशाकर्तृत्वमित्यर्थः। प्रस्तुतार्थमाह — **अतश्चेति**निरुक्तरीत्या हेतुज्ञानस्य लाभादित्यर्थः। तेन = यागेऽयं प्रवर्ततामित्याकारकाप्तनिष्ठालौकिकधर्मरूप व्यापारविषयकृतिविषयत्वरूपहेतुना। सर्वानुभव सिद्धत्वादाह — **भ्रमप्रमासाधारण्येनेति** भवन्मते = इष्टसाधनत्वादेरनुमेयत्ववादिनो भवतो मते **इष्टसाधनत्वादिसिद्धिरिति** भ्रमजन्यानुमितिस्थले यागे इष्टसाधनत्वं न सिध्यति। भ्रमेण वस्तुनोऽसिद्धेः। तथाच निरुक्तहेतोः पक्षावृत्तित्वेन व्यभिचार इति भावः। समाधत्ते **ज्ञानस्येति** अस्मन्मते = मीमांसकमते।

**दोषाभावेनेति**बाधो द्वेधा भवति = विषयस्य याथार्थ्याभावेनोत्तरकालं जायमानेनापरेण ज्ञानेनैव पूर्वज्ञानस्य भ्रमत्वनिश्चयः। यथा – नेदं रजतमिति, यथा वा शङ्खादौश्वैत्यनिश्चयेपि चक्षुर्निष्ठकामलादिदोषेण पूर्वं जातस्य शङ्खनिष्ठ पीतिमज्ञानस्य भ्रमत्वनिश्च्योऽपरः। नहियत्रोभयविधोपि बाधोऽस्ति। यागे इष्टसाधनत्वस्या बाधात्। वेदस्य विश्वसनीयत्वाच्च। अतोनिर्दोषाद्वेदा ज्जायमानमिष्टसाधनत्वज्ञानं प्रमात्मकमेवेत्यवश्यं यागे इष्टसाधनत्वं वास्तवमेव। तथाच भ्रमजन्यानुमिते रेवास्मन्मतेऽभावेन न दोष इति भावः। ज्ञानस्य परतः प्रामाण्यमिति वादिनां मतेप्याह – **सल्लिङ्गकेति** प्रकरणार्थ मुपसंहरति **अतस्सिद्धमिति** शक्यतावच्छेदकस्य = व्यापारत्वस्य। अतिप्रसक्तत्वेपि = भोजनानयनादावपि तस्य सत्वात्तत्वेपि। विशेषलाभः = व्यापरस्य लोके इच्छा रूपत्वं वेदेऽ लौकिकधर्मत्वम्, तस्य "अयमत्र प्रवर्ततामित्याकारकत्वमित्येतद्रूपविशेषलाभः। संसर्ग लाभः = स्वविषयक ज्ञानविशेषजन्यानुमिति-प्रयोज्यत्वरूप संसर्गलाभः। इति शब्दो लोकवेदसाधारण्येन व्यापारत्वमेव लिङादिशक्यतावच्छेदक-मित्यर्थसमाप्तिसूचकः।

**अथवा लोकवेदसाधारणः पूर्वोक्तविधया प्रवृत्तिविशेषप्रयोजकतावच्छेदकतया सिद्धो व्यापारत्व रूपोऽखण्डधर्म एवा नतिप्रसक्तो लिङादिपदशक्य तावच्छेदकः।**

एवं व्यापारत्वं सखण्डोपाधिरूपमित्यांशयेन वस्तुतस्त्वित्यादिना प्रतिपाद्य तस्याखण्डोपाधि रूपत्वमिति सिद्धान्तमाश्रित्याह – **अथवेति पूर्वोक्तविधयेति** स्वतस्सिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तिस्थले पचेदिति प्रयोगवारणावसरे यद्वेत्यादिकल्पे "अत एव तत्प्रयोजकतावच्छेदकतया प्रेरणात्वमखण्डो धर्मो लोकवेदसाधारण इत्युक्तरीत्येत्यर्थः। तदेतदाह – **प्रवृत्तिविशेषेति** प्रेरणा जन्यप्रवृत्तिप्रयोजकता-वच्छेदकतयेत्यर्थः। **अखण्डधर्म एवेति** तस्याखण्डत्वेपि धर्मिग्राहकप्रमाणेन ससंबन्धिकत्व-कल्पनात्पूर्वोक्तविशेषलाभः, संसर्गलाभश्चेति तस्येष्टसाधनत्वाद्यनुमापकत्वमितिबोध्यम्।

**अथवा 'अयमत्र प्रवर्तता' मित्याकारकत्वरूपस्य लोकवेदसाधारणस्य विषयिताविशेषस्य पूर्वमुक्तत्वा त्स एव लिङादिशक्यतावच्छेदकः। एष्टव्यश्चा यमेव प्रकारः शाब्दबोधत्वा-वच्छिन्नंप्रति लक्षणादिजन्यशाब्दबोधत्वावच्छिन्नं प्रति वा लोकवेदसाधारण्येन तात्पर्यज्ञानस्य भट्टमते कारणत्वनिर्वाहार्थम्। नहि 'अस्मात्पदादयमर्थो बोद्धव्य' इत्याकारकेच्छारूपं तात्पर्यंवेदे संभवति। अत स्तत्रातिरिक्तः शब्दनिष्टोधर्मविशेष एव तात्पर्यंभट्टमते वक्तव्यम्। न च तज्ज्ञानस्य कारणत्वं लोके क्लृप्तम्। अत्रैवातिरिक्तकार्यकारणभावकल्पने मानाभाव एव। अतो विषयिताविशेषस्यैवा नुगतव्यवहारा दुभय साधारणत्व मङ्गीकृत्य कारणतावच्छेदकत्वं वाच्यम्। तद्वदिहापि विषयिताविशेषस्यैव प्रवृत्तिप्रयोजकतावच्छेदकत्वं लिङादिपदशक्यता-वच्छेदकत्वं च**

इतोऽपि लधुभूतं पक्षान्तरमाह - **अथवेति** विषयिताविशेषस्य = ज्ञानादिविषयिताभिन्नस्य अयमत्र प्रवर्ततामित्यादि लौकिकेच्छानिष्ठविषयिता साधारणस्य। अयमेव = विषयिता विशेषरूपोऽर्थः। शाब्दबोधत्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वमित्यसार्वत्रिकत्वादाह – **लक्षणादिजन्येति** विपक्षे बाधकमाह – **नहीति** वेदस्यापौरुषेयत्वात्तादृशतात्पर्यं न संभवतीति भावः। तत्र = वेदे। तेन लोके न निर्वाह इत्याह – **नहीति** तस्य = शब्दनिष्ठस्यालौकिकधर्म विशेषस्य। अत्रैव = वेद एव। **अतिरिक्तेति** पृथक्कार्य कारणभावकल्पने इत्यर्थः। **मानाभाव इति** लोके इच्छारूपस्य वेदे अलौकिकधर्मस्य तात्पर्यरूपत्व मङ्गीकृत्य द्वयोरपि बोधकारणत्वकल्पने गौरवमिति भावः। अयमर्थः –

लाक्षणिकशाब्दबुद्धित्वावच्छिन्नं प्रति तात्पर्यज्ञानस्य कारणत्वमविवादम्। परन्तु तात्पर्यं लोकवेद-साधारणं निर्वक्तुमशक्यम्। इच्छा रूपस्य वेदे, अलौकिकधर्मस्य लोके चासंभवात्। उभयविधस्य कारणत्वस्वीकारे पृथगेव कार्यकारण भावस्स्वीकार्यः। अत उभयसाधारण्येनैकविधस्यैव तात्पर्यत्वं स्वीकार्यम्। सच विषयिताविशेष एव। सहि लोके इच्छा निष्ठः, वेदे अलौकिकधर्मनिष्ठः। अतो लाघवमिति। तदेतदाह – **अत इति** निरुक्तरीत्या एकविधतात्पर्यस्यासंभवादित्यर्थः। तत्र प्रमाणमाह – **अनुगतव्यवहारादिति** उभयसाधारणत्वं = लोकवेदसाधारणत्वम्। कारणतावच्छेदकत्वं = लक्षणा-जन्यशाब्दबोधीयकारणतावच्छेदकत्वम्। तमर्थं प्रकृतेऽतिदिशति **तद्वदिति** तात्पर्यांशवदित्यर्थः। इहापि = लिङर्थविषयेपि। **लिङादिशक्यतावच्छेदकत्वं चेति** तथाचोभयसाधारण्येन विषयिताविषय एव लिङाद्यर्थः। लोके स इच्छानिष्ठः, वेदे त्वलौकिकधर्मनिष्ठ इति भावः।

**यदितु निरुक्तविषयिताविशेषस्ये च्छात्वव्याप्यत्व मेवे त्याग्रहः, तदा वैदिकलिङादिनिष्ठ-व्यापारस्या पीच्छारूपत्वे न काचित् क्षतिः। गुणे गुणानङ्गीकारस्य निर्युक्ति कत्वेना श्रद्धेयत्वात्। श्रद्धेयत्वेपि वा शब्दस्य द्रव्यत्वोपपत्ते र्जीवातिरि क्तेश्वरे नित्येच्छाङ्गीकारवद् वैदिकशब्देपि नित्येच्छाङ्गीकारे बाधका भावात्।**

उक्तार्थेऽपरितुष्यन्नाह – **यदित्विति इच्छाव्याप्यत्वमेवेति** पूर्वत्रतस्य व्यापकत्वं प्रति पादितम्। इच्छात्वाभाववति वैदिकलिङादावपि तत्स्वीकारात्। अत्र चेच्छा व्याप्यत्वमेवेति भेदः। तथाच तस्य लिङादिनिष्ठत्वाभावात्तस्य तत्पदशक्यतावच्छेदकत्वं न सिध्यतीति भावः। **आग्रह इति** विषयिता विशेषस्य ''पाकेऽयं प्रवर्ततामित्याकारक लौकिकेच्छा निष्ठ विषयिता साधरणत्वस्वीकारोऽत्र बीजम्। लिङादिनिष्ठ व्यापारस्यापि = अलौकिक धर्मस्यापि। **न काचित् क्षतिरिति** तथाच तादृश विषयिता विशेषस्य लिङादिशक्यतावच्छेदकत्व सिध्यतीति भावः। नन्विदमयुक्तम्, शब्दे इच्छा सत्वे ''गुणे गुणो नाङ्गी क्रियते, इत्यभियुक्तोक्तिविरोधात् काणादपरिभाषितेषु गुणेषु शब्देच्छयोरुभयोरपि सत्त्वादित्यत आह **गुणे गुणानङ्गीकारस्येति** सिद्धान्ताविरोधायाह – **श्रद्धेयत्वेपि वेति** काणादाद्विविधस्यापि शब्दस्य गुणत्वमभ्युपगच्छन्तु नाम। वयं तु वर्णात्मकस्य शब्दस्य द्रव्यत्वमभ्युपेमः, अतोऽस्मत्पक्षसिद्धिरित्याह – **द्रव्यत्वोपपत्तेरिति** ननु तर्हि इच्छाया द्विक्षणावस्थायित्वात्त्वन्मतासिद्धिरत आह – **जीवातिरिक्तेति** जीवगतेच्छाऽनित्या, जीवातिरिक्तेश्वरीया तु नित्येति गौतमा आशेरते, तद्वदिति भावः।

**यदित्विच्छात्वस्या त्मनिष्ठत्वव्याप्यत्वमेवेत्या ग्रहः, तदा लिङादिवैदिकशब्दे श्रौतात्मशब्द-प्रयोगाभावेने श्वरइवा त्मत्वाङ्गीकारे मानाभावा दुपनिषदादिप्रमाणगम्य मीश्वरमप्यङ्गीकृत्य तदिच्छैव तदाकारिका वेदे लिङाद्यर्थ, स्तात्पर्यरूपा च। वेदस्थलिङादिना प्रेरितोऽहं यजे इत्यादिव्यवहारस्तुतादृशेच्छया वेदस्थलिङादिबोध्यत्वादिति सर्वथा नेष्ट साधनत्वादिकं विध्यर्थः।**

उक्तार्थेऽपरितुष्यन्नाह **यदित्विति आत्मनिष्ठत्वव्याप्यत्वमेवेति** इच्छात्वस्य आत्मनि, शब्दे च स्वीकारात्पूर्वत्र व्यापकत्वमुक्तं, प्रकृते तु तद्व्याप्यत्वमिति भेदः। **आग्रह इति** तस्य चेतनधर्मत्वं न्याय्यमिति भावः। **श्रौतेति** श्रुतिभवात्मशब्दप्रयोगाभावेनेथ्यर्थः। **ईश्वर इवेति** अयं व्यतिरेके दृष्टान्तः। ईश्वरे श्रुतिभवात्मशब्दप्रयोगात्तत्रेच्छा सत्वेपि शब्दे लिङादौ तादृशात्मशब्दस्य प्रयोगाभावेन तत्रेच्छा स्वीकारो नोचित इति भावः। ईश्वराङ्गीकारस्य मीमासकमतबाहयत्वेपि नैयायिकमतनिराकरणाय ईश्वरमप्यङ्गीकुर्म इत्याशयेनाह **उपनिषदादि गम्यमिति** ईश्वरमपीत्यपि

शब्देन तदङ्गीकारस्यागातिक गतित्वं स्फोरयति। तदिच्छेव = ईश्वरनित्येच्छैव, तदाकारिका = यागेऽयं प्रवर्ततामित्याकारिका। लक्षणा जन्य शाब्दबुद्धित्वावच्छिन्नं प्रति कारणभूतं तात्पर्यमपि ईश्वरेच्छा रूपमेवेत्याह – **तात्पर्यरूपा चेति** एवंच लोकवेदसाधारण्येन तात्पर्यज्ञानस्य कारणत्वं सिध्यतीति भावः। नन्वेवं यागादौ प्रवृत्तिं प्रतीच्छाया एव प्रयोजकत्वाद् "वेदस्थलिङा प्रवर्तितोहं यजे" इत्यादि व्यवहारनुपपत्तिः तेन लिङादेरेव प्रयोजकत्वलाभादित्यत आह **वेदस्थलिङादिनेति** एवञ्चेष्टसाधनत्वं लिङर्थ इति परमतमनुपादेयमेव, गत्यभावे ईश्वरमप्यङ्गीकर्म इति भावः। तदेतन्मनसिकृत्याह **सर्वथापि नेष्टसाधनत्वादिकं लिङर्थ इति**

**वस्तुतस्तु इच्छात्वं जातिरेव लिङादिशक्यतावच्छेदिका, लाघवात्। विशेषलाभः पूर्ववत्। वेदेत्वलौकिकप्रेरणायां लक्षणा। अन्यत्सर्वं पूर्ववदित्यपि वक्तुंशक्यम्।**

एतच्च सर्वं लोकवेदसाधारण्येन लिङादिपदशक्यतावच्छेदकस्यैकस्य प्रतिपिपादयिषयोपन्यस्तम्। वस्तुतस्तु नैकरूप्यं लिङर्थस्य, किन्तु भिन्नार्थकत्वमेवेत्याह – **वस्तुतस्त्वति इच्छात्वं जातिविशेष इति** लोके लिङादिना मिच्छेव शकयार्थः। इच्छात्वं जातिविशेषस्त दवच्छेदकः। **लाघवादिति** जातेरेकत्वाच्छक्यतावच्छेदकस्वीकारे लाघवम्। अन्यथा व्यापारत्वादेरतिप्रसक्तस्य तत्त्वे गौरवमिति भावः। विशेषलाभः = इच्छाया अयमत्र प्रवर्ततामित्याकारकत्वस्य स्वविषयक ज्ञानजन्येत्यादिसंसर्ग-विशेषेस्य च लाभः। पूर्व वत् = तत्तत्समभिव्याहारवशादिति यावत्। इच्छाया वेदेऽसंभवादाह – **वेदेत्विति** लक्षणा = साम्प्रतिकी लक्षणा। **अन्यत्सर्वमिति** यागेऽयं प्रवर्ततामित्याकारक व्यापारलाभः संसर्गविशेषश्चेत्यर्थः। अत्रापि मते इच्छाया अलौकिकप्रेरणायाश्च न प्रवृत्ति कारणत्वम्, अपि तु तत्प्रयोजकत्वमेवेति न कश्चिद्दोषः–

अत्रैतौ संग्रहश्लोकौ –

1. इच्छायाः शब्दनिष्ठत्वं शब्दो द्रव्यं हि नो मते।
   ईश्वरो वौपनिषद इच्छाया आश्रयो भवेत्।।
2. इच्छाऽलौकिक धर्मश्च लिङर्थः पृथगेव तु।
   युक्तं वा, नतु तद्युक्तं परेषां मतमेव नः।। इति।

**एवं 'चैत्रो न पचेत्' 'न कलञ्जं भक्षये' दित्यादौ नञ्समभिव्याहृतलिङादिस्थलेपि न तावद्बलवदनिष्टा ननुबन्धित्वं लिङर्थः 'तदभावो नञा बोध्यत इति पक्षःसुवचः' पूर्वमेव निरस्तत्वात्। नापि अनिष्टसाधनत्वेलिङे लक्षणा, नञ्पदं तात्पर्यग्राहक मिति नवीनतार्किकमतं युक्तम्, "ज्योतिष्टोमेन न यजेते" ति लौकिकवाक्यस्य प्रामाण्यापत्तेः, श्रुत्या स्वर्गसाधनत्वाव गमेपि तात्कालिकानिष्टसाधनत्वस्य यागे बाधाभावात्। न हि नरकादिरूपकालान्तरभाव्यनिष्टजनकत्वमेव निषेधार्थ इत्यत्र प्रमाण मस्ति। 'अग्निं न स्पृशे' दित्यादिलौकिकवाक्ये व्यभिचारात्। "नातिरात्रे षोडशिनं गृहणाती" त्यादा वुभयथापि व्यभिचाराच्च।**

एवं नञ्समभिव्याहारे लिङर्थमुपवर्ण्य तत्समभिव्याहारे तमुपवर्णयति **एवमिति** लौकिकं वाक्यमाह – **न पचेदिति** वैदिकमाह – **न कलञ्जमिति** नैयायिकमतं दूषयति **न तावदिति तदभावो बोध्यत इति** तथाच बलवदनिष्टाननुबन्धित्वा भाववत्कलञ्ज भक्षणमिति वाक्यार्थ इति भावः। पूर्वमेव = "किंच बलवदनिष्टाननुबधित्वं न तावदिष्टोत्पत्तिनान्तरीयक दुःखाधिक दुःख जनकत्व" मित्यादिना ग्रन्थेन, नव्य

नैयायिकमतं दूषयति **नापीति** अनेकशक्ति कल्पनायां गौरवादाह – **लिङो लक्षणेति** नन्वेवं नञः प्रयोगो व्यर्थः स्यादित्यत आह – **नञ् पदं तात्पर्य ग्राहक मिति प्रामाण्यापत्तेरिति** अनिष्टसाधनीभूत ज्योतिष्टोम यागानुकूल कृतिमानित्य बाधितार्थबोधकत्वेन तद्वाक्यस्य तत्त्वापत्तिरिति भावः। प्राचीन नैयायिक मते तु नेयमापत्तिः, व्यक्ती भविष्यति चेदं समनन्तरमेव मूले। ननु "ज्योतिष्टोमेन स्वर्गकामो यजेते" ति श्रुति वाक्येन ज्योतिष्टोमयागे इष्ट साधनत्व बोधनात्तद्विरुद्धार्थ बोधकत्वेन लौकिकवाक्यस्या प्रमाण्यमेव सेत्स्यतीत्यत आह **श्रुत्येति** "ज्योतिष्टोमेन स्वर्गकामो यजेते" ति श्रुत्येत्यर्थः। स्वर्ग साधनत्वावगमेपि = कालान्तर भावि स्वर्गरूप साधनत्वस्ययागेऽवगमेपि। **तात्कालिकेति** यागानुष्टानकालिक धन व्यायश्रमोपवासादि रूपानिष्ट साधनत्वस्येत्यर्थः। ननु कालान्तर भावि यदनिष्टं नरकादि, तत्साधनत्वस्यैव लिङर्थत्वान्नेयमापत्ति, रित्यत आह – **नहीति** निषेधार्थः = निषेध स्थलीय लिङर्थः। 'श्रुत्या तथाऽनवगमादिति भावः' ननु श्रुत्या सामर्थ्यात्स्वर्गादिरूप कालान्तर भावीष्ट साधनत्वस्यैव बोधनेन तत्प्रतिद्वन्द्वि निषेधेनापि तादृशानिष्ट साधनत्वस्यैव बोधना न्नेयमापत्ति रित्यत आह **अग्निं न स्पृशेदिति**

ननूभयविधानिष्ट साधनत्वं निषेधार्थः, प्रयोगानुरोधेन च व्यवस्था स्वीक्रियते अतो न दोष इत्यतः प्राचीन नवीन मतद्वयेपि वज्रलेपायितं दोषमाह – **नाति रात्र इति** अनेन विध्युत्तर निषेधेन षोडशि ग्रहणस्याति रात्रानुपकारकत्वं बोध्यते, उभय थापि = बलवदनिष्टानुबन्धित्वं निषेधार्थः, अनिष्ट साधनत्वं म इत्युभयमतेपि। **व्यभिचारादिति** तेन निषेधेनाति रात्रानुपकारकत्वस्यैव बोधना न्नैयायिकोक्तार्था बोधनाद् व्यभिचार इति भावः।

**यदिहि तात्कालिकानिष्टसाधनत्वं तत्रनिषेधार्थः, तदातस्य प्रमाणान्तर सिद्धानुवादकत्वेपि "अतिरात्रे षोडशिनं गृहणाती" त्यनेनेष्टसाधनत्वस्य बोधात् क्रत्वङ्गतया नित्यवत्करणापत्तिः। अथ तत्र वैयर्थ्यभिया क्रतुगतवैगुण्यरूपानिष्टसाधनत्वमेव "नानृतंवदे"दिति वत्तदर्थः। तदैकस्यैव क्रतुसाद्गुण्यतद्वैगुण्यजनकत्वविरोधः। अथ विरोधपरिहारार्थं वैगुण्यापेक्षया साद्गुण्याधिकयं कल्प्येत, तदा तात्कालिकानिष्टसाधनत्ववद् वैगुण्यस्यापि नान्तरीयकत्वापत्ते र्नित्यवत्करणापत्तिः। अस्मन्मतेतु वक्ष्यमाणरीत्या प्रवृत्त्यभावप्रयोजकप्रवृत्तिसामग्रीविघटनाय षोडशिग्रहणाभावेपी तराङ्गैरेव क्रतुमहोपकार सिध्द्यनुमितेरेव तत्र संसर्गघटकतयोक्त-विधानुमित्या प्रवृत्त्यभावोपपत्तौ तत्रा निष्टसाधनत्वाननुमानात्। अत एव विध्युत्तरनिषेधे सर्वत्र विधिप्रमितेष्टसाधनत्वाभावस्यैव बोधनाद् द्वयो वैदिकत्वे प्रयोगभेदेन प्रामाण्योपपत्तावपि श्रौतविधिविरोधे लौकिकवाक्यस्या प्रामाण्यं नानुपपन्नम्।**

**यदिहीति** उभय विधानिष्ट साधनत्वं नञ् समभिव्याहारे लिङर्थः प्रयोगानुरोधेन च व्यवस्था, अतो न व्यभिचार इत्याशङ्कितुराशयः। **तात्कालिकेति** श्रमादिरूप तात्कालिकानिष्टेत्यर्थः। तत्र = "नातिरात्रे षोडशिनं गृहणाति" इति विध्युत्तर निषेध वाक्ये। तस्य = निरुक्त निषेध वाक्यस्य। **प्रमाणान्तरेति** प्रत्यक्षप्रमाण सिद्धार्थानुवादकत्वेनेत्यर्थः, **क्रत्वङ्गतयेति** तात्कालिकानिष्ट साधनत्वस्य नान्तरीयकत्वा-द्विधि वाक्यस्य वैयर्थ्यापत्तेः, अपूर्वार्थबोधक विधिवाक्यापेक्षयाऽनुवादक निषेध वाक्यस्य दुर्बलत्वात्सम-बलत्वा भावाद्विधि वाक्येनेष्ट साधनत्व बोधनात्क्रत्वङ्गतया नित्यकर्मणीवावच्छेदकावच्छेदेनाति रात्रे षोडशि ग्रहणस्य कर्तव्यत्वापत्तिः। नचेष्टापत्तिः, षोडशि ग्रहणाग्रहणयोः प्रयोगभेदेनेष्टत्वादिति भावः, "नातिरात्रे षोडशिन", मित्यस्य क्रत्वर्थत्वसिद्धान्तं मनसि निधायाह **क्रतुगतेति** तदनुगुणं दृष्टान्तमाह – **नानृतं वदेदितिवदिति** निराकरोति – **तदेति** निरुक्तार्थ स्वीकारे इत्यर्थः, एकस्यैव = षोडशि

ग्रहणस्यैकस्यैव। **क्रतुगत सादृगुण्येति** "अतिरात्रे षोडशिनं गृहणाति" इति विधिस्तस्य क्रतु सादृगुण्य हेतुत्वं बोधयति। तस्यैव "नाति रात्रे इति निषेधः क्रतोर्वैगुण्य हेतुत्वं बोधयति, अत एकस्यैव क्रतुसादृगुण्य वैगुण्य जनकत्व' विरोधः स्पष्ट इति भावः। निरुक्तदोष परिहर्तुं शङ्कते **अथेति** वैगुण्यापेक्षया = "नातिरात्रे" इति निषेध वाक्यावगत वैगुण्यापेक्षया। सादृगुण्याधिकयम् = अतिरात्रे षोडशि ग्रहणात्तत्वम्, अत्रापि पूर्वोक्त दोषएवापततीत्याह **वैगुण्यस्यापि नान्तरीय कत्वान्नित्यवत्करणापत्तिरिति** ननु त्वन्मतेपि" अतिरात्रे षोडशिनं गृहणाति, "नाति रात्रे" इत्यनयो र्विरोधापत्तिरनिवार्या, ज्योतिष्टोमेन न यजेते, ति लौकिक वाक्यस्य प्रामाण्य च दुर्वारमेवेत्यत आह – **अस्मन्मतेत्विति** प्रथमतो नातिरात्रे इत्यत्र विरोधं परिहरति **वक्ष्यमाणरीत्येति** "षोडशिग्रहणे तद्वयतिरेकेणैव क्रतुमहोपकार सिद्धेरप्यनुमान" मिति वक्ष्यमाणरीत्येत्यर्थः, **प्रवृत्य भावेति** – प्रवृत्त्य भाव प्रयोजकं यत्सामग्री विघटनं तदर्थमित्यर्थः। **क्रतुमहोपकारसिध्द्यनुमितेरेवेति** एव शब्देन अनिष्टसाधनत्वस्य व्यावृत्तिः। अयमर्थः – भवता सर्वेष्वपि निषेध वाक्येषु अनिष्ट साधनत्वं लिङर्थतयाऽभ्युपेयते। "तेन "अतिरात्रे षोडशिन" मित्यादि विधि निषेध वाक्यार्थयोर्विरोधः प्रसज्यते। अत एव ज्योतिष्टोमेन न यजेतेति लौकिक वाक्यस्य प्रामाण्य मापद्यते, अबाधितार्थ बोधकत्वात्। अस्मन्मतेतु नञ् घटित वाक्येषु सर्वत्र नानिष्टसाधनत्वानुमितिः स्वीक्तियते, किंतु रागतः प्राप्तकलञ्ज भक्षण प्रतिषेध वाक्येष्वेव, विहित प्रतिषेध विषये तु नानिष्टसाधनत्वानुमितिः, किंतु निरुक्तरीत्या इतराङ्गैरेव क्रतुमहोपकारसिद्धिरेवानुमीयते। अतो न तद्वाक्यद्वयस्य विरुद्धार्थ बोधकत्व – मिति 'संसर्गघटकतया = लिङर्थस्य कृता वन्वयाय स्वीकृत संसर्ग घटकतया' उक्तानुमित्या = षोडशिग्रहणाभावेपि इतराङ्गैरेव अतिरात्र क्रतुमहोपकारनुमित्या। प्रवृत्त्याभावोपपत्तौ = षोडशिग्रहणे प्रवृत्त्य भावोपपत्तौ। तत्र = "नातिरात्रे षोडशिनं गृहातीति"त्यत्र। **अनिष्ट साधनत्वाननुमानादिति** अतो न तद्वाक्य द्वयार्थस्य विरोधः। एवं च नास्माकं मते तत्र दोष लेशोपीति भावः। 'ज्योतिष्टोमेन न यजेते' ति लौकिक वाक्यस्या प्रामाण्यं निरुपयति - **अत एवेति** रागतः प्राप्त कलञ्ज भक्षणादिनिषेध वाक्येष्वेवानिष्टसाधनत्वानुमितेः स्वीकारादेवेत्यर्थः, विध्युत्तर निषेधे = नातिरात्रे षोडशिनं गृह्णाति ज्योतिष्टोमेन न यजेतेत्यादौ'। सर्वत्र = वेदे लोके च। **विधि प्रमितेति** विधिना = अतिरात्रेषोडशिनं गृहणाति, ज्योतिष्टोमेन स्वर्ग कामोयेजेते त्यादिना विधिना, प्रमिमितं यदिष्ट साधनत्वं तदभावस्यैवेत्यर्थः। एव शब्देनानिष्ट साधनत्वस्य व्यावृत्तिः। द्वयोः = विधि निषेधयोरुभयोरपि, वैदिकत्वे = वैदबोधितत्वे, **प्रामाण्योपपत्तावपीति** उभयोरपि समबलत्वेन प्रयोगभेदेनोभयोरपि प्रामाण्यमुपपद्यते, यथा अतिरात्रे षोडशिग्रहणाग्रहणयोः। प्रतिषेध पर्युदासार्थवादा संभवादगत्या करणाकरणयोर्विकल्पः। प्रतिषेधार्थ-वत्त्वायाऽकरणेपि क्रतु सिद्धिरस्तीति कल्प्यते, विध्यर्थवत्त्वाय चानुष्टाने फल भूयस्त्वं कल्प्यते, अत उभयोरपि प्रामाण्यं सिध्यति, तत्र तथा स्वीकारेपीत्यर्थः, ज्योतिष्टोमेन न यजेतेत्यस्याऽप्रामाण्यमुपपादयति **श्रौत विधि विरोधेइति** श्रौतेन विधिना विरोधे इत्यर्थः, लौकिकवाक्यस्य = ज्योतिष्टोमेन नयजेतेत्यादेः। **अप्रामाण्यं नानु पपन्नमिति** अयमर्थः, "ज्योतिष्टेमेन स्वर्गकामो यजेते"ति विधिना ज्योतिष्टोमयागे इष्टसाधनत्वं बोध्यते। ज्योतिष्टोमेन न यजेतेति लौकिकवाक्येन तत्रेष्टसाधनत्वाभावो बोधनीयः। स च श्रुति विरुद्धः। अतः श्रुति विसद्धार्थ बोधकत्वेन लौकिकवाक्यस्या प्रामाण्यं सेत्स्यति, यथा, "न कलञ्जं भक्षये"दिति श्रुतिविरुद्धार्थ बोधकतया 'तृप्तिक्रमः कलञ्जं भक्षये'दिति लौकिक वाक्यस्याप्रामाण्यं तद्वत्, एवं द्वयो र्विधिनिषेधयोः श्रौतत्वे प्रयोग भेदेन व्यवस्थया-प्रामाण्यम्, अन्यतरस्य लौकिकत्वे तस्य श्रुतिविरुद्धार्थ बोधकत्वादप्रामाण्यं सेत्स्यतीति न काचिदनुपपत्तिरस्मन्मते इति,

**एतेन – इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वमेव शक्तया लक्षणया वा नञ्-समभिव्याहारे लिङाद्यर्थः। तदभाव स्तादृश दुःखजनकत्वरूपो बलवदनिष्टानुबन्धित्वं नञर्थः।**

**तस्य च धात्वर्थेऽन्वयः। नातो लौकिकवाक्यस्य प्रामाण्यापत्ति, र्निमूलत्वादित्यपास्तम्। ''नातिरात्रे षोडशिनं गृह्णाती''त्यादावपि तदापत्तेः।**

**एतेनेति**, नाति रात्रे इति निषेधेदोषस्य दुर्वारत्वेनेत्यर्थः, **इष्टोत्पत्तीति** स्वर्गादिरूपेष्टोत्पत्त्या नान्तरीयक = मवश्यम्भावि यद् दुःखं = श्रमघनव्ययादिकं, तदधिक दुःखाजनकत्वमित्यर्थः – तत्र लिङादेः शक्तिग्राहक प्रमाणाभावादाह **लक्षणयावेति** तत्स्वीकारे नञ् पदं तात्पर्य ग्राहकमिति भावः, तदभाव एव विव्रियते, **तादृश दुःख जनकत्वरूप इति** धात्वर्थे = भक्षणादौ, तथाच बलवदनिष्टानु बन्धि कलञ्ज भक्षणानुकूल कृतिमानिति तत्र बोध इति भावः, अतः = एतादृशार्थ स्वीकारात्। लौकिक वाक्यस्य = ज्योतिष्टोमेन स्वर्गकामो न यजेते त्यादेः। अनेन निरुक्तरीत्या ज्योतिष्टोमयागे बलवदनिष्टानुबन्धित्वं बोधनीयम्, तच्च ज्योतिष्टोमे इष्ट साधनत्व बोधक प्रत्यक्ष श्रुति विरुद्धम् – अतो लौकिकवाक्यस्या प्रामाण्यं सेत्स्यत्याशयः, एतेनेत्यस्यार्थं विशदयति **नातिरात्रे इति तदापत्तेरिति** षोडशिग्रहणेपि बलवदनिष्टानुबन्धित्व बोधापत्तेरित्यर्थः। न चेष्टापत्तिः, ''अतिरात्रे षोडशिनं गृह्णातीत्यनेन तत्र बलवदनिष्टाननुबन्धित्व बोधनेन तद्विरोधापत्तेः। अत एव तत्र प्रयोग भेदेन व्यवस्था स्वीकृता सिद्धान्ते साभवन्मते नोपपद्येतेति भावः।

**किंचैतेषु सर्वेष्वपि पक्षेषु रागिणः कलञ्जभक्षणवर्तमानतावेलायां 'चैत्रः कीदृश?' इति प्रश्ने इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनककलञ्ज भक्षणानुकूलकृतिमानित्युत्तरवत् 'न कलञ्जं भक्षये'दित्युत्तरवक्तु रसंबद्धप्रलापित्वानापत्तिः। श्येनवर्तमानतादशायां च 'श्येनेन न यजेते, त्युत्तरापत्तिः**

**अस्मन्मतेतु वक्ष्यमाणरीत्या लिङर्थस्ये च्छायाः स्वज्ञानविशेषजन्यानुमिति संपादित प्रवृत्तिसामग्र्य भावकालीना भाव प्रतियोगित्वसंबन्धेना ख्यातार्थे कृतावन्वया न्न तदापत्तिरिति वैषम्यम्।**

नैयायिक मते दोषान्तरमाह – **किञ्चेति** सर्वेष्वपि = बलवदनिष्टाननुबन्धित्वं लिङर्थः तदभावो नञा बोध्यते, अनिष्ट साधनत्वे लिङो लक्षणा, नञ्पदं तात्पर्य ग्राहकमित्यादि पक्षेष्वपि। **इष्टोत्पत्तीति** इष्टं = तृप्तिः तदुत्पत्त्या नान्तरीयकं ।यद दुःखं = वस्तु सम्पादनादिकम्, तस्मादधिकं यद् दुःखं श्रुति स्मृति संप्रतिपन्नं दुःखं तज्जनकं यत् कलञ्ज भक्षणं तदनुकूल कृतिमानित्यर्थः। उत्तरवत् = उत्तरमिव। **असंबद्ध प्रलापित्वा नापत्तिरिति'** अयमर्थः – कलञ्ज भक्षण वर्तमानतादाशायां चैत्रः कीदृश इति पश्ने इष्टोत्पत्तिनान्तरीयक दुःखाधिक दुःख जनक कलञ्ज भक्षणानुकूल कृति मनिति समाधानं संबद्धमेव, ''न कलञ्जं भक्षये'' दिति समाधानं तत्प्रश्नस्यासंबद्धमेव, यदि कश्चिद् ''न कलञ्जं भक्षये'' दित्युत्तरयति, तदा एषोऽसंबद्ध प्रलापीति लोक उपहसति। परंतु नैयायिकोक्तरीत्यनुसरणे 'न कलञ्जं भक्षये' दित्यस्यापि इष्टोत्पत्तिनान्तरीयक दुःखाधिक दुःख जनक कलञ्ज भक्षणानुकूल कृति मनिति समाधानं संबद्धमेव, ''न कलञ्ज भक्षये' दित्युत्तयितुरपि संबद्धप्रलापित्वा त्तस्यासंबद्ध प्रलापित्वस्यानुपपत्ति-रिति। दोषान्तरमाह **श्येनवर्तमानतेति** श्येनयाग करण दशाया मित्यर्थः **उत्तरापत्तिरिति** ''श्येननाभिचरन् यजेते'' ति श्रुति विहित श्येन यागकरण समये चैत्रः किं करोतीति प्रश्ने, श्येनेन न यजेते त्यस्योत्तरत्वं प्रसज्येत, श्येनयागे नरकरूपानिष्ट साधनत्वस्य प्रमाणान्तर सिद्धत्वेन, श्येनेन न यजेते, त्यतोपि तदर्थस्य प्रतीतेः। अतो नैयायिकोक्त मयुक्तमेवेति भावः।

ननु त्वन्मते प्येतद्दोष तादवस्थ्यम्, आख्यातार्थस्य कृति रूपत्वादित्यत आह **अस्मन्मतेत्विति** वक्ष्यमाणरीत्या = ''अतश्च लिङर्थस्य स्वविषयकज्ञानविशेषजन्यानुमिति जन्ये'' त्यादि वक्ष्यमाणरीत्या।

**स्व ज्ञान विशेषेति** स्वं = लिङर्थेच्छा, स्वज्ञान विशेषः = नञ् समभि व्याहारात्' अयमस्मान्निवर्तताम् इतीच्छा विषयक ज्ञानम् तज्जन्या कलञ्ज भक्षणमनिष्टसाधन, मित्यनुमितिः तत्सम्पादितः प्रवृत्ति सामग्रय भाव कालीनः आभावः = प्रवृत्त्यभावः, तत्प्रतियोगित्वं प्रवृत्तौ, अनेन संबन्धेन लिङर्थेच्छायाः प्रवृत्तावन्वयेन प्रवृत्ति वर्तमानतादशायामुक्ताभाव प्रतियोगि प्रवृत्त्याश्रयत्व बाधान्नोक्तापत्ति रस्मन्मते इति भावः।

**किंच 'चैत्रः कीदृश' इति प्रश्नस्य नै वेद मुत्तरम्। प्रथमान्तमुख्यविशेष्यकत्वाभावात्। 'कीदृशी कृति' रिति प्रश्नस्यापि नोत्तरम्। लिङ्गधर्मितावच्छेदककप्रश्ने तदनालिङ्गतो-त्तरस्या संबध्दत्वात्। अत एव 'कीदृशी कृति' रिति प्रश्नस्यापि 'चैत्रः पचति, चैत्रो न पचती, त्यादि नैवोत्तरम्' लिङ्गानलिङ्गितत्वात्। अत एव कृतिमुख्यविशेष्यकत्वमेव भट्टसंमतम्। प्रथमान्त मुख्यविशेष्यकत्वे तादृशोत्तरस्या संबद्धत्वानापत्तेः।**

वस्तु तस्त्वस्माकं मते चैत्रः कीदृश इति प्रश्ने न कलञ्जं भक्षयेदित्यादिना मुत्तरत्व प्रसक्तिरेव नेत्याह — **किञ्चेति** इदम् = न कलञ्जं भक्षयेत्, इत्येतत्। **प्रथमान्तेति** अस्मन्मते आख्यातार्थ कृति मुख्य विशेष्यक एव शाब्द बोधः स्वीक्रियते, न प्रथमान्तार्थमुख्य विशेष्यकः, अतो नास्माकं मते तच्छङ्काया अवकाशः, नैयायिक मतेतु चैत्र विशेष्यकस्य भावना प्रकारकस्य बोधस्य जननात्तदापत्ति र्वज्रलेपायत इति वैषम्यम्। ननु भावना मुख्य विशेष्यक, बोधवादिन स्तव मतेपि न कलञ्जं भक्षयेदिति वाक्यं कीदृशी कृतिरिति प्रश्नश्योत्तरं स्यात्, चैत्र कर्तृक भक्षणकृते र्बोधकत्वादित्यत आह **कीदृशी कृति रित्यस्यापीति, नोत्तरम्** = चैत्रः कलञ्जं भक्षये'' दिति वाक्यं नोत्तरम्। **लिङ्गेति** स्त्रीत्व रूपं लिङ्गं धर्मितावच्छेदकं यस्य सः लिङ्ग धर्मितावच्छेदककः, बहुव्रीहौ शैषिकः कप् समासान्तः तादृशे प्रश्ने इत्यर्थः। अयमर्थः — कृञ् धातोः ''स्त्रियां क्तिन्'' 3-3-94 इति पाणिनि सूत्रेण स्त्रीलिङगे भावे क्तिनो विधानात् कृति शब्दात् स्त्रीत्व विशिष्टा कृतिरिति बोधेन स्त्रीत्वरूपं लिङ्गं धर्मितावच्छेदकम्। तथाच स्त्री लिङ्ग विशिष्ट कृतिविषयक प्रश्नस्य स्त्रीलिङ्ग विशिष्ट कृतिबोधक पदघटितं वाक्यमेवोत्तरं भवितुमर्हति, आख्यातोपात्ता कृतिस्तु लिङ्गानन्वयिनीति न तादृशं वाक्यमुत्तरं भवति, अनया रीत्या नैयायिक मते आपत्तिवारणं न संभवति, तन्मते मुख्य विशेष्यस्य चैत्रस्य लिङ्गसंख्यादि विशिष्टस्यैव तद्वाक्येन बोधितत्वात् — इति, तदाह **तदनालिङ्गितेति भक्षये दित्याख्यातेन** लिङ्गानन्वयिकृतेरेवोपस्थापनात्तद्घटितोत्तरस्यासंबद्धत्वमिति भावः, उक्तमर्थमन्यत्राप्यति दिशति **अत एवेति** निरुक्तार्थ स्वीकारादेवेत्यर्थः अत एव = नैयायिकमते निरुक्त दोष ध्रौव्यादेव। **भट्ट संमतमिति** 'तत्र दोष लेशस्याप्याभावादिति भावः' उक्तमेव दार्ढ्याय स्मारयतीति **प्रथमान्तेति।**

**अतो नञ समभिव्याहारस्थले प्रवर्तनावत् निवर्तनापि निवृत्तिप्रयोजकतया नञ्समभि-व्याहारसत्त्वेऽभ्युपेया, आचार्योपदेशादहं निवृत्तः, न स्वतः 'न वाऽन्योपदेशा' दिति व्यवहारदर्शनात्। निवर्तनात्वं च प्राचां मते प्रवर्तनात्ववदेव निवृत्तिजनकव्यापारत्वादिरूपं भिन्नं बोध्यम्। तदवच्छिन्नं च लोके इच्छा, वेदे चा लौकिको धर्म इत्यादि सर्वं पूर्ववत्। शक्ततावच्छेदकं च तस्या नञ्पदत्वम्। प्रवर्तनावाचकं च लिङादिपदं तात्पर्यग्राहकम्। इतरथा 'न पचति चैत्र' इत्यादौ नञ्पदा दत्यन्ताभावस्यैव बोधात्।**

प्रकृतमनुसरति - **अतइति** बलवदनिष्टाननु बन्धित्वं लिङर्थः, तदभावो नञा द्योत्यते 'अनिष्ट साधनत्वे लिङो लक्षणा नञ् पदं तात्पर्य ग्राहकम्' ''इष्टोत्पत्तिनान्तरीयकदुःखाधिक दुःखाजनकत्व'' मित्यादि

नैयायिकोक्तानामर्थाना मयुक्तत्वादित्यर्थः। नञसमभिव्याहारे = "सोमेन यजेते" त्यादौ, नञ् समभि व्याहार स्थले = "नकलञ्जं भक्षये" दित्यादौ। तत्र लोक व्यवहारं प्रमाणयति, **आचार्योपदेशादिति** निवर्तना प्रवृत्त्यभावरूपैव, नातिरिक्तः पदार्थ इति स्व सिद्धान्तस्य समनन्तरमेव वक्ष्यमाणत्वादाह - **प्राचां मत इति** भिन्नम् = प्रवर्तनायाभिन्नम्।

अत्र चाऽचाराधिकरणे वार्तिकन्याय सुधयोर्ब्राह्मणत्व पुंस्त्वयो रविवक्षा प्रदर्शनावसरे निषेधाधिकारेषु निवर्तना वाक्यार्थसिद्धयेऽनेक पक्षाः प्रदर्शिताः १. 'न ब्राह्मणं हन्या' दित्यादौ केवल नञोऽभाव-वाचकत्वेन, केवल लिङः प्रवर्तनावाचकत्वेन च क्लृप्तस्य निवर्तना बोधजनने सामर्थ्याभावात् विनिगमना विरहेण पङ्कजपदे पङ्कजनिधात्वोरुभयोरपि शक्तयन्तर कल्पनया पद्मत्व प्रकारक पद्मविशेष्यक बोध स्वीकारवदिहापि नञ् लिङो रूभयोरपि निवर्तना-बोध जनकत्वं शक्तयन्तर कल्पनया स्वीक्रियते, २. अथवा नञ स्तात्पर्यग्राहकत्वमङ्गीकृत्य केवल लिङ एव निवर्तना वाचकत्वं स्वीक्रियते। ३. अथवा नञ एव निवर्तना वाचकत्वम्। सामान्यतो विरोध प्रतीतिजनकत्वेन क्लृप्तस्य नञ एव विरोधि विशेषरूप निवर्तनायां शक्ति कल्पनाया उचितत्वात्। अयमेव पक्षः षष्ठाध्याय द्वितीय पादे पञ्चमेधिकरणे तन्त्र रत्ने पार्थसारथि मिश्रैः प्रदर्शितः, न्यायप्रकाशकारादयो नवीना अपि तमेव पक्ष माशिश्रियिरे, ४. लिङस्तात्पर्यग्राहकत्वमाश्रित्य एतादृशे विषये नञो निवर्तना वाचकत्वम् — इति। तत्र चतुर्थं पक्ष मुपक्षिपति' **'शक्त तावच्छेदकं च तस्या नञ् पदत्वमिति** तस्याः = निवर्तनायाः। ननु घटो नास्तीत्यत्रापि तत्प्रतीत्यापत्ति, रित्यत आह **प्रवर्तना वाचकं च लिङादि पदं तात्पर्यग्राहकमिति** अन्यथा = तात्पर्यग्राहक लिङाद्यभावे '**बोधादिति** अयमर्थः' — नञ एव निवर्तना वाचकत्वम्। अन्यथा लिङ एव तद्वाचकत्व स्वीकारेनञोर्थाभावेन शक्तत्वाभावाद् "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" 1-2-45 इति पाणिनि सूत्रेण प्रातिपदिक संज्ञाया अभवात्सुपोऽनुत्पत्त्या सुबन्तत्व निबन्धन पदत्वानापत्तेः, अत उक्तैव रीतिर्ज्यायसी-ति

**लिङ वा निवर्तनोच्यते, नञ्पदंतु प्रवृत्त्य भावानुवादकं सत् तात्पर्यग्राहक मित्यादिप्राचीन मतं कौस्तुभ एव व्यक्तम्।**

द्वितीयं पक्षमुपक्षिपति - **लिङ वा निवर्तनोच्यत इति** अत्रापि केवलं पचेदित्यत्रापि निवर्तना प्रतीति वारणादाह — **नञ् पदंत्विति** अयमर्थः—

"चतुर्विधे पदेचात्र द्विविधस्यार्थ निर्णयः।
क्रियते संशयोत्पत्तेः, नोपसर्ग निपातयोः।।
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।
यदर्थ द्योतकौ तौतु वाचकः स विचार्यते।।

इत्यभियुक्तोक्तदिशा निपातानां द्योतकत्वस्य निर्विवादत्वाल्लिङ एव तदर्थ वाचकत्वं युक्तम्, द्योत्यार्थ मादायैव निपातानां प्रतिपादिकत्वं सेत्स्यति। न च लिङःप्रवर्तनायां शक्ते निर्वतनायामपि तत्स्वीकारे गौरवापत्त्या निवर्तना बोधो लक्षणयैवेति वाच्यम्, उभयोः प्रचुरप्रयोगा विशेषेण एकत्रैव शक्तिकल्पने मानाभावादिति। **इत्यादीति** आदिपदेन प्रथमतृतीय पक्षयो र्ग्रहणम्, **प्राचीनमतमिति** अनेनारुचिः सूच्यते — तद्बीजं त्वेतेषामयुक्तत्वमेव। यथा — आद्य प्रकारद्वयेन नञ् लिङो रुभयोरन्यतरस्य वा निवर्तनायां शक्तयन्तर कल्पने गौरवं स्फुटमेव, तृतीय मतं तु सुतरामयुक्तमेव

"तत्सादृश्य मभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाःषट् प्रकीर्तिताः"।।

इत्यभियुक्तोक्तौ विरोधाद्यर्थ प्रतीतावपि विरोध्यर्थान्तर वाचकत्वे नञः शक्तिकल्पने प्रमाणाभावात्,

ब्राह्मण विरोधिनि 'अब्राह्मण' इत्यत्र ब्राह्मण विरोधित्व विशिष्टव्यक्तेः प्रतीतावपि विरोधा प्रकारक केवल व्यक्तचनुभवाभावात्। नास्ती त्यत्रापि सत्व प्रतिपक्ष मसत्वं भावान्तरं नञ् न प्रतिपादयति – किंतु मत्वा भावमात्रम्। नैतावता मत्व प्रतिपक्षत्वं तदभावे विहन्यते, भावाभावयोः स्वभावे नैव सप्रति पक्षत्वात् चतुर्थोपि न युक्तः, तात्पर्य ग्राहकत्वस्य निरर्थकत्वे पर्यवसानात् – इति

**वस्तुतस्त्वनेक शक्तिकल्पनापत्ते र्न प्रवर्तनानिवर्तनयोः पृथक्शक्तिः, प्रवृत्त्यभाव – निवृत्त्यो र्वा भेदः, प्रमाणाभावा दुगौरवाच्च। अपितु आख्यातस्य कृतावेव, नञोऽभाव एव। लिङादेः प्रवर्तनानिवर्तनासाधारणव्यापारादावेव। शक्यतावच्छेदकं च पूर्ववदतिप्रसक्त मनतिप्रसक्तं वा प्रवर्तना निवर्तनासाधारणमेकमेव।**

एतच्च विधिस्थले प्रवर्तना निषेधस्थले निवर्तना च लिङा बोध्यते, निवर्तना च विजातीय यत्न रूपेत्यश्रित्योक्तम्, वस्तुतस्तु लोक वेदोभय साधारण्येन व्यापारत्वावच्छिन्ने लिङः शक्ति, स्तथा विधि निषेधोभय साधारण्येन व्यापारत्वावच्छिन्ने लिङः शक्तिः, निवर्तना च न विजातीयत्व रुपा, किंतु प्रवृत्त्य भावरूपैव सेति स्वसिद्धान्त मुद्घाटयति, **वस्तुतस्त्विति** प्रथमो नञ समभिव्याहार स्थले प्रवर्तना लिङर्थः तत्समभिव्याहारे निवर्तना स इत्यंशं दूषयति – **अनेक शक्ति कल्पना पत्तेरिति** अयमर्थः – लिङः प्रवर्तनायां निवर्तनायां वा न पृथक् शक्तिः गौरवात्, किंतु प्रवृत्त्यनुकूल व्यापारत्मिकायां प्रवर्तनायां शक्तिः स्वीक्रियते, तत्र प्रवृत्तेराख्यात लभ्यत्वा दनुकूलत्वस्य संसर्ग लभ्यत्वा दन्य लभ्यत्वेनानन्यलभ्ये केवल व्यापरमात्रे शक्तिः पर्यवस्यति' तस्य च व्यापारस्य यथैव नञोऽसत्त्वे प्रवृत्ति प्रयोजकत्वात्प्रवर्तनात्वेना-भियुक्तानां व्यवहार, स्तथैव नञः सत्वे प्रवृत्त्यभाव प्रयोजकत्वान्निवर्तनात्वेन व्यवहार – इति। तदेतदाह – **लिङादेः प्रवर्तना निवर्तना साधारण व्यापारादावेवेति** निवर्तना विजातीय यत्नरूपेति द्वितीयाशं निराकरोति – **प्रवृत्त्यभाव – निवृत्त्योर्वेति गौरवाच्चेति** किंच षष्ठे तन्त्र रत्ने भावनारूप विषयस्यैक्या न्नविषयकृतो भेदो विधिनिषेधयोः, किंतु प्रेरणा निवारणास्वरूप कृत एव भेद इत्युपपादितम्, त्व द्रीयाश्रयणे विधिस्थले प्रवृत्तिर्विषयः निषेधस्थले निवृत्ति र्विषय इति विषयभेदेनापि तयोर्भेद सिद्धौ तन्त्ररत्ने कृत मुपपादनं मन्दमेव स्यात्, किंच तस्य धर्मत्वापत्त्या व्रत शब्द वाच्यत्वानिवारणा "न्नेक्षेतोद्यन्तमादित्य" मित्यादौ निवृत्तेरेव विधेयत्वस्य सुवचत्वात् संकल्पलक्षणा सिद्धान्तो व्याकुप्येत। अतः प्रवृत्त्यभावस्यैव निवृत्तिपदार्थत्वं युक्त – मिति। व्यापारत्वस्य सखण्डत्व पक्षे आह – **अतिप्रसक्तमिति** अखण्डत्व पक्षे आह – **अनति प्रसक्तंवेति**

**यदितु प्रवर्तनानिवर्तनासाधारण्येन नैकाविषयितेत्याग्रहः, तदाऽस्तु निवृत्तिविषयित्वा-वच्छिन्ने लिङादे र्लक्षणा, नञ्पदं तात्पर्यग्राहकमिति। तस्य च लिङर्थस्य स्वविषयकज्ञान-विशेषजन्यानुमिति प्रयोज्यभावप्रति योगित्वसंसर्गेणा ख्यातार्थे कृतावेवान्वयः। नञ्पदं च संसर्गविशेषेपि तात्पर्यग्राहकम्।**

विषयिता विशेषो लिङर्थ इति पक्षाभिप्रायेणाह **यदित्विति** निवृत्तिविषयित्वावच्छिन्ने = निवृत्ति विषयके। एवं च यथा लोके इच्छा लिङर्थः वेदेत्व लौकिक प्रेरणायां लक्षणा स्वीकृता, तथात्रापि विषयिता विशेषेलिङः शक्तिः निषेधस्थले तु निवृत्ति विषयित्वावच्छिन्ने = निवृत्ति विषयके लक्षणा। सर्वत्राप्यैक रुण्येण भाव्यमिति नियमो नेति भावः, निषेध स्थले विध्यर्थ भूतव्यापारस्य न विधिवाक्य इव प्रयोज्यत्व संबन्धेन भावनान्वयः, किंतु नञ स्तात्पर्य ग्राहकस्य सत्वात् स्वप्रयोज्याभाव प्रतियोगित्वेनेत्याह – **तस्य च लिङर्थस्येति** निषेधस्थलीयलिङर्थ व्यापारस्येत्यर्थः। **स्वविषयकेति** स्वं = लिङर्थ व्यापारः, स्वविषयक

ज्ञानविशेषः = नञ् समभिव्याहारात् अयमस्मान्निवर्ततामित्याकारकेच्छाविषयक ज्ञानं तज्जन्या अनुमितिः – कलञ्जभक्षण मनिष्टसाधन, मित्यनुमितिः, तत्प्रयोज्यः प्रवृत्त्यभावः, तत्प्रतियोगित्वं कृतौ, अनेन संसर्गेणेत्यर्थः। **अन्वय इति** अत एव तस्य निवर्तनारुपत्व सिद्धिः। स्पष्टं चेदं भाट्टदीपिकायां षष्टे "प्रतिषेधेष्वकर्मत्वात्" 6-2-5 इत्यधिकरणे। नन्वेतादृश संसर्ग विशेष लाभः कथमित्यत आह – **नञ् पदंचेति** संसर्ग विशेषेपीत्यपि शब्देन निवर्तनायां तात्पर्य ग्रहणम्

**अतो निरुक्तसंसर्गेण व्यापारवती कलञ्ज कर्मिका भक्षणकरणिका कृतिरिति शाब्दबोधे वृत्ते संसर्गस्य तत्त्वेन भानं पूर्ववत्। अत्रहि निवारणाविषयकज्ञानात्, 'कलञ्जभक्षणादयं निवर्तता' मित्याकारकाप्तेच्छाविषयीभूताभाव प्रतियोगिकृति विषयत्वरूपहेतुज्ञानम्। तेन कलञ्ज-भक्षणेऽनिष्टसाधनत्वानुमिति र्जायते।**

अतः = विधिनिषेधोभय साधारण्येन लिङोव्यापारवाचकत्व स्वीकारात्। निरुक्त संसर्गेण = स्वविषयक ज्ञान विशेषेत्यादि समनन्तरोक्त संसर्गेण। तत्त्वेन = विशेषरूपेण। पूर्ववत् = विधिस्थले इव, अत्र हि = न कलञ्जमिति निषेधस्थले। **निवारणेति** नञ स्तात्पर्य ग्राहकस्य सत्त्वा दयमस्मान्निवर्तना'मिति निवारणाविषयक ज्ञानादित्यर्थः, **इत्याकारकेति** इत्याकारिका या आप्तेच्छा तद्विषयीभूतोयोऽभावः कृत्यभावः, तत्प्रतियोगिभूताया कृति स्वद्विषयत्वेत्यर्थः

**एवं "नातिरात्रे षोडशिनं गृहणाती" त्यादौ विहितनिषेधे तादृशोक्तविध हेतुज्ञानात् षोडशिग्रहणेऽतिरात्रानुपकारकारकत्वानुमिति द्वारा तदव्यतिरेकेणैवेतराङ्गैः क्रतूपकारसिद्धे रप्यनुमानम्। उक्तानुमितेश्च प्रवृत्तिसामग्रीविघटकतया प्रवृत्त्यभावप्रयोजकत्वम्। तथाहि – यत्रा निष्टसाधनत्वानुमिति, स्तत्र प्राचीनकर्मवशाद् द्वेषगतबलवत्त्वे सति बलवदनिष्टानु-बन्धित्वज्ञानरूप प्रतिबन्धकसंपादना त्तदभावघटितसामग्रीविघटनम्। यत्र तु इष्टसाधनत्वा-भावा नुमिति, स्तत्र तया पूर्वावगतेष्टसाधनताज्ञाने प्रयोगविशेषावच्छेदेनाऽप्रामाण्यज्ञाना त्तदभावरूपप्रवृत्तिसामग्रीविघटनम्।**

विहित निषेध स्थले विशेषमाह **एवं नातिरात्रे इति** अयमर्थः – "अतिरात्रे षोडशिनं गृहणती"ति श्रुत्या "यदाह वनीये जुहोती"तिवत् सप्तमी निर्देशात् अतिरात्रस्याधिकरणत्वमवगम्यते, आहवनीय देशादेरिव मुख्यस्याति रात्रस्याधिरकरणत्वं न संभवति, अतोऽतिरात्रपदस्य लक्षणयाऽतिरात्रोपकारस्योद्दश्यत्वं वक्तव्यम षोडशिग्रहणेनातिरात्रोपकार भावयेदिति तथाचायमनुमानप्रयोगः – षोडशिग्रहणमतिरात्रो-पकारकम्, प्रवर्तना विषयत्वा-दिति। अनेनानुमानेना वच्छेदकावच्छेदेन षोडशिग्रहणस्यातिरात्रोपकार-कत्वे ज्ञाते 'नाति रात्रे' इति निषेधेन कस्मिंश्चिदति रात्र प्रयोगे षोडशिग्रहणस्य तदुपकार जनकत्वाभावो बोध्यते। तथाचाय प्रयोगः – षोडशिग्रहणमति रात्रानुपकारकम्, निवर्तना विषयत्वा-दिति। न ह्यत्र 'न कलञ्जं भक्षये'दिति पुरुषार्थ निषेधेष्विव निषेध्यस्य नरक साधनत्वं, 'नानृतं वदेदिति क्रत्वर्थ निषेधे ष्विव क्रतु वैगुण्य जकनत्वं वानुमातुं शक्यते, विधिनेष्ट साधनत्वस्य प्रमितत्वात्। अतो निषेधेन षोडशिग्रहणे इष्टसाधनत्वाभावोऽवगम्यते, तेन प्रवृत्तिकारणी भूत ज्ञानाभावादेव प्रवृत्ति प्रतिबन्धेऽर्थात् षोडशिग्रहणा न्निवर्तते, निषेध वाक्येषु च सामान्यतो यत्प्रतियोगिनोयञ्जनकत्वं बुध्यते, तत्प्रतियोगिका भावस्य तदभावजकनत्व बोधकत्वस्य कलृप्तत्वात् षोडशिग्रहणस्याति रात्रानुपकारकत्वे बोधिते अति रात्रोपकार जनकत्वरुपतिरात्रानुपकारकत्वा भावः षोडशि ग्रहणाभावेऽर्थाद् बुध्यते। एवं च नरकाभाव क्रतुवैगुण्याभावयोरिव षोडशिग्रहणाभावं प्रत्यपि क्रतुसादगुण्यस्यो द्देश्यत्वं पार्यन्तिकं निराबाधमेव। न

चाभावाद्भावोत्पत्ति र्नसंभवति, अन्यथाऽभाव सत्त्वेन क्रतपकार फलापत्तिः सर्वदा स्यादिति वाच्यम्, षोडशिग्रहणाभावस्य निषेधावगत कारणत्वानयथानुपपत्त्या षोडशिग्रहण भिन्नाङ्गविशिष्ट ग्रहणस्यैव कारणत्व कल्पनेना दोषात्, तथाच "नातिरात्रे" इत्यत्रद्वितियाप्यनुमितिः स्वीक्रियते – अतिरात्रा पूर्वसाधनीभूत षोडशिग्रहण जन्योपकारः षोडशिग्रहणभिन्नेतराङ्गजन्यः, षोडशिग्रहणा जन्यत्वे सति प्रधानोपकारकत्वात्, यथा समिदादि जन्योपकारेषु – इति "अतिरात्रे षोडशिनं गृह्णती"त्यत्रापि षोडशिग्रहण विधि साफल्याय द्वितीया फलभूमानुमितिरपि स्वीक्रियते तद्वत्। यथा षोडशिग्रहणं फलबाहुल्य जनकोपकार जनकम्, अभ्यनुज्ञाविधिविषयभिन्नत्वे सति निषेध्यत्व समानाधिकरण विधेयत्वा-दिति, एवं च विधिनिषेधयोरुभयत्रापि निरुक्तरीत्या प्रत्येक मनुमान द्वयं स्वीक्रियते – इति। तदेतत्सर्वं स्पष्टं ध्वनयन्नाह '**अतिरात्रानुपकारकत्वानुमिति द्वारा तद्व्यतिरेकेणैवेतराङ्गैः' क्रतूपकार-सिद्धेरप्यनुमानमिति** विधिवाक्ये द्वितीयानुमान मभिप्रेत्यैव "अत एव तत्र प्रवृत्यर्थं विधिना फलाधि क्याक्षेपः" इत्युक्तं प्राक् धर्मलक्षणकथनावसरे। नन्वनुमितेः प्रवृत्यभाव प्रयोजकत्वं कथ-मित्यत आह – **उक्तानुमिते** श्चेति "न कलञ्जं भक्षयेत्" नातिरात्रे "इत्यादि स्थलीयानुमिते रित्यर्थः। तदेवोपपादयति, **तथाहीत्यादिना यत्रेति** रागतः प्राप्तस्य निषेधस्थले 'न कलञ्जं भक्षयेदित्यादावित्यर्थः, अनिष्टसाधनत्वानुमितिः = कलञ्ज भक्षण मनिष्टसाधन मित्यनुमितिः। **बलवदनिष्टेति** एत द्रूपं यत् प्रतिबन्धकं = प्रवृत्ति प्रतिबन्धकम्' तत्सम्पादनादित्यर्थः। **तदभावेति** बलवदनिष्टानुबन्धित्व ज्ञानाभाव घटितायाः प्रवृत्ति सामग्रया विघटनमित्यर्थः। इदं बलवदनिष्टानुबन्धीति ज्ञानं प्रवृत्तिं प्रति प्रतिबन्धकम्। तादृशज्ञानाभावे सति पुरुषः प्रवर्तते, निरुक्तानुमित्या इदं बलवदनिष्टानुबन्धीति विरोधि ज्ञानं जन्यते, अतो न प्रवृत्तिः कलञ्ज भक्षणादाविति भावः। विहित निषेधे आह – **यत्रत्विति** 'नातिरात्रे' इत्यादौ विहितनिषेधस्थले इत्यर्थः। "अतिरात्रे षोडशिनं गृह्णाती"ति विधिना इष्ट साधनत्वस्य प्रमितत्वेन 'नातिरात्रे इति निषेधेनानिष्टसाधनत्वस्यानुमातु मशक्यत्वा'दाह – **इष्टसाधनत्वाभावानुमितिरिति –** तया = इदमिष्टसाधनत्वाभाववदित्यनुमित्या, **पूर्वावगतेति** विधिवाक्यावगतेष्ट साधनताज्ञाने इत्यर्थः। विधि निषेधयोरुभयोरपि श्रौतत्वादन्यतरस्या प्रामाण्य स्वीकारा योगात्प्रयोगभेदेनोभयोरपि प्रामाण्य स्वीकारादाह '**प्रयोग विशेषावच्छेदेनेति तदभावेति** अप्रामाण्याभाव रूपेत्यर्थः' अप्रामाण्य ज्ञानानास्कन्दित सामग्रया एव प्रवर्तकत्वात्प्रकृते तदभावान्न प्रवृत्तिरिति भाव·

**यद्यपि चो भयत्रापि प्रतिबन्धकसंसर्गाभावस्याऽत्यन्ताभावादिरूपस्य नित्यतया नानुमितिनाश्यत्वम्। तथापि प्रतियोगि सत्त्वस्या भावसंबन्धनाशकत्वा दभावीयविशेशणता संबन्धरूपस्य कारणतावच्छेदकसंबन्धस्य प्रतियोगिसत्त्वे नाशा त्तस्याः प्रवृत्तिसामग्री विघटकत्वं सुलभमेव।**

'न कलञ्जं भक्षये'दित्यत्र 'नातिरात्रे इत्यत्र चोक्तानुमितेः प्रवृत्ति सामग्री विघटकत्वं न संभवतीत्याक्षिपति **यद्यपीति** समवाय सम्बन्धेन प्रवृत्तिं प्रति स्वरूप संबन्धेन बलवदनिष्टानुबन्धित्व ज्ञानाभावः कारणम्। 'बलवदनिष्टानुबन्धित्व ज्ञाने जाते बलवदनिष्टानु बन्धित्व ज्ञानाभावस्य नित्यतया नाशासंभवेपि तदीयसंबन्धस्य नाशात्कारणसंबन्धस्याभावात्प्रवृत्यभावः सेत्स्यतीति, यद्यपी, त्यादि प्रघट्टकार्थः। उभयत्रापि = "न कलञ्ज मित्यादावनिष्ट साधनत्वानुमिति स्थले" नातिशत्रे इत्यादाविष्ट साधनत्वा भावानुमिति स्थले च, **प्रति बन्धकेति** प्रति बन्धकं = बलवदनिष्टानु बन्धित्व ज्ञानम्, तत्संसर्गा भावस्य = अन्योन्याभाव भिन्ना भावस्येत्यर्थः। प्रकृतोपयोगितयाह **अत्यन्ताभावादिरूपस्येति** 'आदिनाध्वंसस्य ग्रहणम्' **प्रतियोगि सत्त्वस्येति** यथा भूतले विद्यमानस्य घटात्यन्ता भावस्य नित्यत्वेपि तत्रघटसत्त्वे तस्यतत्संबन्ध नाशकत्वम्, अत एव तद्दशायां भूतले घटो नास्तीति नधीरिति भावः,

**'कारणतावच्छेदकेति'** कारणं = बलवदनिष्टानुबन्धित्व ज्ञानाभावः, कारणतावच्छेदक संबन्धः = स्वरूपसंबन्धस्तस्येत्यर्थः। प्रतियोगि सत्त्वे = बलवदनिष्टानुबन्धित्व ज्ञानरूप प्रतियोगि सत्त्वे, तस्याः = निरुक्तानुमितेः।

**अतश्च लिङर्थस्य स्वविषयकज्ञानविशेष जन्यानुमितिजन्यस्वनिरूपितकारणतावच्छेदकीभूत संबन्धनाशकालीनाभावप्रतियोगित्वसंसर्गेणाऽऽख्यातार्थकृतावन्वय इति फलितोऽर्थः। प्रथमस्वपदं लिङर्थपरम्। द्वितीयस्वपदं प्रवृत्तिपरम्। अत्र च दैव वशसंपन्नप्रवृत्तिसामग्रयत्यन्ताभावकालीनप्रवृत्य भावदशायां "नकलञ्जं भक्षये" दिति प्रयोगापत्तिवारणायोक्तं-संबन्धनाशकालीने-ति। यत्र कलञ्ज भक्षण मनिष्टसाधन मितिवाक्या दनिष्टसाधनत्वादिशाब्दबोध, स्तत्र तज्जन्यसंबन्धनाशकालीना भावदशाया मुक्तप्रयो गापत्तिवारणाया – नुमितिजन्ये-ति नाशविशेषणम्। अनिष्टान्वयव्यतिरेकानुविधायित्वादिहेत्वन्तर ज्ञानजन्या निष्टसाधनत्वानुमितिजन्यसंबन्धनाशकालीनप्रवृत्त्य भावदशायां तादृशप्रयोगापत्तिवारणाय – स्वविषयकेत्यादि। अत्र निरुक्तसंबन्धेन निवारणाप्रयोज्याभाव वर्तमानतादशायां तादृशप्रयोगापत्तिः, अतः स्वविषयकज्ञानमपि स्वध्वंसासमानकालीनस्वज्ञानोपधेयमेव विशिष्य तत्तद्व्यक्तित्वेन प्रविष्टमिति ज्ञापनाय विशेषपदम्। अत्र प्रथमस्वपदं प्रवृत्तिकारणतावच्छेदकीभूततत्तत्संबन्धपरम्। द्वितीयस्वपंद तु पूर्वव लिलङादितत्तद्व्यक्तिपरम्। तेन निरुक्तसंबन्धध्वंसासमानकालीन लिङादिज्ञानोपधेय हेतुज्ञानजन्यानु मितिजन्येत्यादिः फलितोर्थः।**

**एवं चानुमितित्वस्य विशिष्याप्रवेशेपि न क्षतिः। तत्सिद्धं निवारणारूपस्य लिङर्थस्यानेन संबन्धेनाख्यातार्थकृतावन्वय इति, नञ्पदंतु स्वार्थस्या भावस्य प्रतियोगितासंसर्गेणाख्यातार्थकृता वन्वयानुवादकं सत् लिङाद्यर्थतात्पर्यग्राहक मिति सर्वमनाकुलम्।**

नञर्थान्वय निष्कर्षं दर्शयति **अतश्चेति** निरुक्तार्थस्यावश्च स्वीकार्यत्वादित्यर्थः। **स्वविषयकेति** स्व विषयकज्ञान विशेष जन्याया अनुमितिः, तज्जन्योयः, स्व निरूपित कारणतावच्छेदकी भूत संबन्धनाशः = प्रवृत्ति निरूपिताया बलवदनिष्टानुबन्धित्व ज्ञानाभावनिष्टा कारणता तदवच्छेदको योऽभावीय विशेषणता संबन्धः तन्नाशः तत्कालीनो योऽभाव, स्तत्प्रतियोगित्वं प्रवृत्तौ, तत्संसर्गेणेत्यर्थः, संबन्ध घटकदलानां सार्थक्यं दर्शयति **अत्र चेति** लिङर्थस्याख्यातार्थ कृतावन्वयार्थं स्वीकृते संसर्गे इत्यर्थः। प्रथममभावे संबन्ध नाश कालीनेति विशेषणस्य प्रयोजनमाह – **दैववशेति** अयमर्थः - कस्याचित् पूर्व जन्मसुकृत वशेन कलञ्ज भक्षणादि विषये प्रवृत्ति सामग्र्यन्ताभावः समजनि, तदा तस्य प्रवृत्यभावः सिध्यति तद्दशाया मपि "न कलञ्ज भक्षये" दिति प्रयोग आपद्यते, तद्वारणार्थ मभावे एतद्विशेषणम्, अत्र च प्रवृत्यभावो न संबन्धनाशोत्तरकालिक इति न दोषः-इति, संबन्ध नाशे अनुमिति जन्येति विशेषणस्य फलमाह – **यत्रेति** यत्र स्थले इत्यर्थः। **कलञ्ज भक्षणमिति** अयमर्थः देवदत्तादेः "कलञ्ज भक्षण मनिष्ट साधन"मिति वाक्यादनिष्ट साधनत्वादि विषयकः शाब्दबोधो जातः, तेन च कारणतावच्छेदक संबन्धो नश्यति तत्कालीन प्रवृत्त्यभावमादाय "न कलञ्जं भक्षये" दिति प्रयोगापत्तिः, तद्वारणाय अनुमिति जन्येति विशेषणम्। प्रकृते नाशस्य तादृशानुमिति जन्यत्वाभावान्नदोष - इति। ज्ञान विशेषे "स्व विषयके"ति विशेषणस्य प्रयोजनमाह – **अनिष्टान्वयेति** अयमर्थः – कस्यचित् कलञ्ज भक्षणमनिष्ट साधनम्, अनिष्टान्वयव्यतिरेकानु विधायित्वादिति हेत्वन्तर ज्ञानेन कलञ्ज भक्षण मनिष्ट साधनमिति

अनुमितिर्जायते, तयाच कारणता वच्छेदक संबन्धो नाश्यते, तदुत्तरं प्रवृत्यभाव इति तद्दशायामपि "न कलञ्जं भक्षये" दिति प्रयोगापत्तिः, तद्वारणाय "स्व विषयके" ति ज्ञान विशेषणम्, प्रकृते लिङर्थ विषयक ज्ञान जन्यत्वाभावादनुमितेर्न दोष – इति। तादृश हेत्वन्तर जन्या या अनिष्ट साधनत्वानुमितिः, तज्जन्यो यः संबन्धनाशः तत्कालीन प्रवृत्त्य भावदशायामित्यर्थः-इति। ज्ञान विशेषेत्यत्र विशेष पदस्य प्रयोजनमाह **निरूक्त संबन्धेनेति** स्व विषयक ज्ञानेत्यादि संबन्धेनेत्यर्थः, अयमर्थः - यदा "न कलञ्जं भक्षये" ति ज्ञानेन प्रवृत्यभावोजातः, सच नित्यतया स्थितः, तदा कञ्चित्कालमनन्तरं "न कलञ्चं भक्षये" दिति प्रयोग आपद्यते, तदापि प्रवृत्य भावस्यानिष्ट साधनत्वानुमिति प्रयोज्यत्वात्, तादृशानुमितेः प्रेरणाजन्यत्वाच्च अतस्तद्वारणाय उक्त संबन्धघटक कारण तावच्छेदक सम्बन्धेध्वं सासमानका कालीनं यल्लिङादि ज्ञानं तज्जन्यं यत्प्रेरणाज्ञानं तज्जन्यानुमिति जन्येत्यदिरीत्या संबन्धो वक्तव्यः, ततश्च प्रवृत्यभावकालीन प्रयोगे यल्लिङादि ज्ञानं, तत् कारणतावच्छेदकध्वंसकालीनमेव, न तु तदसमान कालीनम्। अतो न तत्प्रयोगापत्ति-रिति।

**तत्सिद्धं प्रवर्तना-प्रेरणा-विध्यपरपर्यायाभावना नञ्रहित वाक्ये लिङाद्यर्थः। तत्सहितेतु निवर्तना-निवारणा-निषेध प्रतिषेधापरपर्याया सैवच लिङाद्यर्थ इति। सैवच शब्द निष्ठत्वा द्वैदेशाब्दी भावनेत्युच्यते।**

**तत्तच्छक्ततावच्छेदकं तु लिङ्त्वम्, लोट्त्वम्, लेट्त्वं च, न तु तव्यत्वादिकमपि। तेषां "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे, 3-3-163 तिस्मृत्या प्रैषाद्यर्थकत्वेन विध्यर्थकत्वास्मृतेः, प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठ पुरुष प्रवर्तना = प्रैषः।** अतिसर्गः = **कामचारः। "स्वाध्यायोऽध्येतव्य" इत्यादौत्वप्राप्तार्थत्वात्प्रैषबाधेन विधौ लक्षणेति साम्प्रदायिकाः। लिङाद्यादेशत्वं वा शक्ततावच्छेदकम्, श्रूयमाणत्वात्**

मतान्तानिराकरणपूर्वकं विधिं निरूप्य संक्षेपेण तत्स्वरूपं प्रदर्शयन् प्रकरणार्थमुपसंहरति – **तत्सिद्धमिति** प्रतिषेधापरपर्याया = तादृशी भावना लिङाद्यर्थः। सैव च = उभयरूपापि भावना। तव्यदादयोपि विधिवाचका इति भ्रमवारणायाह – **तत्तच्छक्ततावच्छेदकं त्विति** "विधिनिमन्त्रणा-मन्त्रणाधीष्ट संप्रश्न प्रार्थनेषु लिङ्" 3-3-161 इति स्मृतेराह – **लिङ्त्वमिति** "लोट् च" 3-3-162 इति सूत्रादाह – **लोट्त्वमिति** "लिङर्थे लेट् 3-4-7 इत्यनुशासनादाह – **लेट्त्वमिति तव्यदादिकमिति,** तव्यत्, तव्य, अनायर, केलिमर, यत्, क्यप्, ण्यत्, इति सप्तकृत्य संज्ञकास्तव्यदादयः प्रत्यायाः। विधेः प्रैषस्याभेद इति शाब्दिकानामुक्तिर्भ्रमबीजम्। तेषां = तव्यदादीनाम्, विध्यपेक्षया प्रैषस्य भेदं दर्शयति – **प्रमाणान्तरेति** गेहे घटोस्ति, तमानयेत्यादौ लोटः प्रैषार्थकत्वम्।

यदाहुः – "प्रवर्तनस्मृतिः प्राप्ते प्रैष इत्यभिधीयते।
अप्राप्तप्रापणं सर्वं विधित्वं प्रतिपद्यते।। इति

शाब्दिकास्तु विधिप्रैषयोरभेदं मन्वते, तन्मते "प्रैषा"दि सूत्रे प्रैषातिसर्गग्रहणं तु निमन्त्रणादिषु कृत्यव्यावृत्यर्थम्। "प्राप्तकाले च कृत्याश्च" इत्युक्ते हि तेष्वपि ते स्युः, स्पष्टं चेदं लघुशब्देन्दुशेखरे लकारार्थप्रकरणे। "आमन्त्रणादतिसर्गो न भिन्न" इति शाब्दिकोक्तिरस्माकमपीष्टैवेत्याशयेनाह – **अतिसर्गः = कामचार इति** नन्वेवं "स्वाध्यायोऽध्येतव्यः इत्यादौ तव्यप्रत्ययस्य विध्यर्थकत्वव्यवहारः कथमत आह **स्वाध्याय इति** लिङ्त्वादीनां शक्ततावच्छेदकत्वे "यथाकथञ्चिदुपस्थितलकारादपि भावनोपस्थित्या पत्ति"रित्यादि वक्ष्यमाणदूषण प्रसङ्गात्सिद्धान्त मतेनाह – **लिङाद्यादेशत्वं वेति** लिङादेस्तिबादिरूपाये आदेशास्तत्त्वमित्यर्थः। तथा च पचतु पचेत् पचति इत्यादौ प्रयोगे श्रूयमाणानां तु तु,

ति इत्यादीनामेव भावनावाचकत्वात्तत्वादिकमेव तच्छक्तत्तावच्छेदकं, न तु प्रयोगेऽश्रूयमाण लिङ्त्वादिकमिति भावः, आख्यातार्थ निरूपणावसरे चेदं स्पष्टं भविष्यति।

## (शाब्दभावनाया अंशत्रयनिरूपणम्।)

**अस्या श्च शाब्दभावनाया अर्थभावनावदेव अंशत्रयमितिव्यवहरन्ति। तत्र प्रवृत्तिनिवृत्त्यो र्यथाक्रमं विधिनिषेधप्रयोज्यत्वा त्पुरुषार्थानुबन्धित्वाच्च भाव्यत्वम्। लिङादिजन्यविधि-निषेधज्ञानं च भाव्यप्रयोजकत्वात्करणम्। अस्य च करणत्वेन व्यवहारमात्रम्, न तु तस्य शाब्दबोधे करणत्वेना न्वयः, अशाब्दत्वात्। एवं प्राशस्त्याप्राशस्त्यज्ञानं यथाक्रमं रितिकर्तव्यता। तदपि वस्तुत एव, न तु शाब्दबोधेऽन्वयः, अशाब्दत्वादेव। ते च प्राशस्त्या प्राशस्त्ये तत्तद्विधिनिषेधसंनिधिपठितार्थवादै र्लक्षणया प्रतिपाद्येते।**

यद्यपि यजेतेत्यादि विधिषु '' न कलञ्जं भक्षये''दित्यादि निषेधेषु चोभयरूपाया अपि शाब्दभावनाया स्तद्विषयक प्रवर्तनान्तराभावेन न कर्तव्यताप्रतीतिः, येनार्थभावनाया इव करणेतिकर्तव्यतयोः साध्यस्य चापेक्षाया मन्वयस्तेषामुच्येत, तथापि अधीतो वेदः पुरुषस्य यादृशमुपकारं कर्तुं शक्नुया, त्तमुपकारं कुर्यादिति ''स्वाध्यायोऽध्येतव्य'' इति विधितोवगमेन तद्वेदभागशक्त्यालोचनायां विधिनिषेधांशे ईदृश्यवगतिर्भवति – यत्, पुंकर्तृकाध्ययन विषयीकृता यजेतेत्यादिलिङ्प्रत्ययाः स्वयमेवाख्यातांशे संबन्धस्मरणेन विज्ञानेनवा करणेनेष्टसाधनविशिष्टार्थ भावनारूप वाक्यार्थज्ञानं कृत्वा पुंप्रवृत्तिं कुर्यु-रिति। तत्र केन कथं किमुद्दिश्य प्रवर्तना निवर्तना च कर्तव्येत्येव मंशत्रय वैशिष्ट्येन बोधित शाब्दभावनाकर्तव्यतापेक्षांशत्रय समर्पणार्थमुच्यमानांशत्रयमध्ये प्रकृते इतिकर्तव्यतात्वेनापेक्षितं प्राशस्त्यं निरूपयितुं भाव्यकरणेऽनुवदति – **तस्याश्च शाब्दभावनाया इति** द्विविधाया अपि तस्या इत्यर्थः। तदेतत्सर्वमभिप्रेत्याह – **व्यवहरन्तीति** तत्र = अंशत्रयमध्ये। समानाभिधानश्रुत्यवगतार्थ भावनाया एव भाव्यत्वं युक्तमित्याह – **प्रवृत्तिनिवृत्योरिति** अत्र केचित् – पुरुष प्रवृत्तिवाचक शक्तिमत्तया ज्ञातस्य विधिशब्दस्य करणत्वमिति वदन्ति, अन्ये तु सर्वलिङ्ज्ञानानामादिभूतमुपजीव्यं यद् ''अयं लिङ्प्रवर्तनाभिधायी''ति संबन्धज्ञानं तदेव करणमिति प्राहुः, तदुभयमप्यसंगतम्। अर्थोपस्थितिमन्तरेण शब्दतदर्थ संबन्धानां प्रवृत्तिं प्रतिकरणत्वाभावात् इत्याशयेन स्वसिद्धान्तमाह – **लिङादिजन्येति** प्रेरणा निवारणयोः स्वरूपेण प्रवृत्तिनिवृत्तिजनकत्वायोगाल्लिङादिजन्यं तयोर्ज्ञानमेवकरणमित्यर्थः, भाव्य-प्रयोजकत्वात् = प्रवृत्तिनिवृत्ति प्रयोजकत्वात्, **करणमिति** भावनाभाव्यनिष्पादकत्वरूपं पारिभाषिकमत्र करणत्वं बोध्यम्। अस्य = लिङादिजन्यविधि निषेधज्ञानस्य। अशाब्दत्वात् = वृत्या शब्दादनुपस्थितेः, एवं भाव्यकरणे अनूद्य इतिकर्तव्यतात्वेनापेक्षितं प्राशस्त्यं निरूपयितुमुपक्रमते, **एवं प्राशस्त्येति** तदपि = प्राशस्त्याप्राशस्त्य ज्ञानमपि। अशाब्दत्वादेव = शक्त्या तदबोधात्। ननु वेदस्थशब्दैः प्राशस्त्या प्राशस्त्ययोरबोधनात्तयोरितिकर्तव्यतयान्वयो नोपपद्यते इत्यत आह – **तेच प्राशस्त्या प्राशस्त्ये इति तत्त द्विधिनिषेधेति** ''वायव्यं श्वेतमालभेते''ति विधेः सन्निधौ ''वायुर्वै क्षेपिष्ठा देवते त्यादिरर्थवादः, ''बर्हिषि रजतं न देय''मिति निषेधसन्निधौ ''सोऽरोदीद्यदरो''दित्यादिरर्थवादश्च पठयते। यत्र तु संनिधावर्थवादाभाव, स्तत्राप्यानुमानिकवचनातिदेशेन तत्प्राप्तिः, स्पष्टं चेदं विस्तरेणार्थवादाधिकरणे कौस्तुभे। यत्र तु प्रकृतावेव दर्वीहोमेषु चोपदेशाति देशयोरभावस्तत्र विधेरेव प्राशस्त्यात्तस्यैव प्राशस्त्य लक्षकत्वमपि रात्रिसत्रन्यायेनोचितम्, न तु फलादि पदानाम्, तेषां तदनपेक्षत्वात् – **लक्षणया प्रतिपाद्येते इति** अयमर्थः – ''स्वाध्यायोऽध्येतव्यः'' इत्यत्र तव्यप्रत्ययेन लक्षणया प्रवर्तनाभिधीयते, तस्याश्च प्रवृत्यनुकूलव्यापार रूपत्वा त्प्रवृत्तिरूपार्थ भावनापि तेनैवाक्ष्प्यिते। तस्याश्च भाव्यापेक्षायां स्वाध्यायो

भाव्यत्वेनान्वेति, भावार्थाधि करणन्यायेनाध्ययनस्य करणत्वेनान्वयः। तत श्चाध्ययनेनाक्षरग्रहणद्वारा स्वाध्यायं प्राप्नुयादिति तद्वाक्यार्थः सिध्यति। निष्प्रयोजनस्य स्वाध्यायस्य कर्मत्वानुपपत्तेः प्रयोजनाकाङ्क्षायां दृष्टसंभवेऽदृष्टकल्पनानुपपत्तेः स्वाध्यायजन्यं दृष्टमर्थज्ञानादि प्रयोजनमाश्रीयते, एवं चार्थवादानामपि वेदान्तर्गत त्वात्तेषां वाच्यार्थस्य निष्प्रयोजनत्वात्त दसंभवे लाक्षणिकस्यापि प्राशस्त्या प्राशस्त्यस्य गौणसामर्थ्यलभ्यत्वेन दृष्टत्वात्तत्परत्वं स्वाध्यायविधिबलादवसीयते, एवं चार्थवाद-वाक्यैर्लक्षणया प्रतिपादिते प्राशस्त्या प्राशस्त्ये शाब्दभावनाया इतिकर्तव्यताकाङ्क्षायां तत्त्वेनान्वीयेते। तथाहि – विधिनिषेधाभ्या मिष्टानिष्टसाधनत्वाक्षेपात्प्रवृत्ति निवृत्ति हेतु भूतेच्छाऽनिच्छयोरुत्पत्तावपि तात्कालिकेष्टाानिष्टसाधनत्वस्यापि प्रत्यक्षेणावगतत्वाद् द्वेषोत्साह संभवेन प्रवृत्तिनिवृत्यभाव प्रसङ्गा-त्तदपनायकापेक्षायां लोके तदपनयनशक्तत्वेनावगतस्य स्तुति निन्दाज्ञानस्यानुग्राहकत्वं परिकल्प्यते। ज्योतिष्टोमसुरापानयोश्च द्वेषोत्साहौ हि निसर्गसिद्धौ तन्निवर्तकत्वं च स्तुतिनिन्दयोरुचिद्वेषोत्पादनद्वारा "इयं गौः क्रेतव्या, इयं हि बहुक्षीरा सदपत्या जीवद्वत्से"त्यादिवाक्येषु लोकसिद्धमेव, अनयारीत्या विधिनिषेधयोस्तत्प्रतिबन्धविगमनद्वारा अर्थवादकृतं साहाय्यमपेक्षितम्, एवमर्थवादानामपि शक्त्या गौण्या वा वृत्त्या भूतमर्थं वदतामपि स्वाध्यायविध्यापादितदृष्टप्रयोजनवत्वलाभार्यं विधिसाहाय्यपेक्षितम्, ततश्च यद्विधिनापेक्षितं प्राशस्त्यज्ञानं तद् अर्थवादैः, यच्चार्थवादैरपेक्षितं – तद् विधिनेति अर्थवादैर्लक्षणया प्राशस्त्या प्राशस्त्यज्ञानं सुलभमेव। तदुक्तम् –

"न हि तत्करणं लोके वेदेवा किञ्चिदीदृशम्।
इतिकर्तव्यता साध्ये यस्य नानुग्रहार्थिता"।। इति।

तथा च यागेन स्वर्गं भावयेत्, प्रशस्तत्वात्। न सुरांपिबे, दप्रशस्तत्वात् इति विधिनिषेधानामर्थवादानां चैकवाक्यता - इति।।

## (अर्थवादप्रतिपाद्यप्राशस्त्या प्राशस्त्य स्वरूपविचारः)

**ननु किमिदं प्राशस्त्य, मप्राशस्त्यं वा? न तावद्गुणवत्त्वं दोषवत्त्वं वा, गुणदोषत्वयोरे व निर्वक्तुमशक्यत्वात्, न हि "वायु र्वैक्षेपिष्ठा देवता" "अपशवो वा अन्ये गो अश्वेभ्यः" इत्यादौ वायुक्षेपिष्ठत्वादिकं गुणः, अपशुत्वं गवाश्वगतप्राशस्त्याभाववत्त्वं वा दोषः, तज्ज्ञानस्य प्रवृत्तिनिवृत्तित्वावच्छिन्नं प्रति व्यभिचरित्वेना नुपयोगित्वात्, क्षेपिष्ठत्वादेः शक्त्यैवो पस्थितत्वेन लाक्षणिकत्वसिद्धान्तभङ्गापत्तेश्च। नापि स्वर्गनरकादि जकनत्वे, स्वर्गादिपद-समभिव्याहारादेव तत्सिद्धावर्थवादवैयर्थ्यापत्ते, रिति चेत्।**

अर्थवादलक्ष्य प्राशस्त्या प्राशस्त्ययोः स्वरूपं मतान्तरनिराकरणपूर्वकं प्रदर्शयितुमुपक्रमते। **नन्विति** इदम् = अर्थवादलक्षितम्। तत्र गुणवत्वं प्राशस्त्यं, दोषवत्वमप्राशस्त्यमिति केषाञ्चिदाशयं दूषयति **न तावदिति वायुर्वै इति** "वायुर्वै क्षेपिष्ठा देवतास्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इति संपूर्णोऽर्थवादः, वैशब्दः प्रसिद्धौ, वायुः क्षिप्रगामिनी देवतेति प्रसिद्धम्, अतः क्षिप्रगामिनीं वायुदेवतां वायुचिते न श्वेतपशुरूपेण भागधेयेन = भागेन, स्वार्थे धेय प्रत्ययः। यजमानः, उपधावति =तोषयति, स च तुष्टो वायुः, एनं = भागप्रदंयजमानमैश्वर्यं प्रापयत्येवेति तदर्थः। क्षिप्रशब्दादतिशायने इष्टन् प्रत्यये "स्थूल दूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" 6-4-156 इत्यनेन क्षिप्रशब्दे र शब्दस्य लोपे इकारस्य एकारे गुणे च स्त्रियां क्षेपिष्ठा, इति रूपम्। अग्निचयने पञ्चदशशीर्षोपधाने श्रुतम् – "पुरस्तात्प्राचीन मश्वस्योपदधाति, पश्चात्प्राचीनमृषभस्ये"ति गवाश्व शीर्षोपधान विधिवाक्यशेषमुदाहरति **अपशव इति** "अजोऽग्नीषोमीयः" सारस्वतीमेषी" त्यादाव जादीनां विहितत्वादपशुकार्ये प्रतिषेधस्य पर्युदासस्य

वाऽनुपपत्तेरस्यार्थवादत्वम्। **वायुक्षेपिष्ठत्वादिकमिति** यथा च ज्ञानजननस्वभावे शब्देज्ञानगतयाथार्थ्यात्मकातिशय प्रयोजनकाप्तोच्चरितत्वादि धर्मः परैर्गुण इत्युच्यते, एवं फलगतक्षिप्रत्वाद्यतिशये प्रयोजकं विधेयगामि क्षिप्रदेवताकत्वादि गुणपदेन विवक्षितम्, तेनैव रूपेण तं तं गुणं विधेयगामिनमर्थवादो बोधयति, **गवाश्वगतेति** अपशवो वेत्यर्थवादे अपशुशब्दोघटादौ मुख्यो गवाश्वगत प्राशस्त्याभावरूपगुणयोगादजादौ गौण्या वृत्या प्रयुज्यत इति तद्वत्वं दोषः। तथा च "न हि निन्दा निन्दितुं प्रवर्तते अपि तु विधेयं स्तोतु"मिति न्यायेन विधेयाश्वगत प्राशस्त्यावगतिः सुलभा, यद्यपि अर्थवादस्य गवाश्वगत प्राशस्त्यलक्षणयाप्युपपत्ते र्न तद्गत प्राशस्त्याभावकथनस्योपयोगः, तथापि इतरनिन्दया विधेयोत्कर्षापादकत्वेन फलीभूत स्तुतेरतिशये तदुपयोगो बोध्यः। तज्ज्ञानस्य = निरुक्तगुणदोषज्ञानस्य। **व्यभिचारित्वेनेति** तज्ज्ञानसत्वेपि प्राचीनकर्मवशेन रागद्वेषयोरभावे प्रवृत्तनिवृत्योरदर्शनात् तज्ज्ञानाभावेपि प्राचीनकर्मवशेन रागद्वेषयोरुदये प्रवृत्तिनिवृत्योर्दर्शनाच्च व्यभिचार इति भावः। ननु कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वात्प्रकृते प्राचीनकर्मरूप प्रति बन्धकस्य सत्त्वान्न दोष इत्यत आह – **क्षेपिष्ठत्वादेरिति** शीघ्रगामित्वादेरित्यर्थः, शक्त्यैव = क्षेपिष्ठा, इत्यादिशब्दैः शक्त्यैव। **लाक्षणिकत्वेति**, अर्थवादानां न स्वार्थबोधनेन प्रामाण्यम्, किन्तु लाक्षणिकार्थ बोधकत्वेनैवेति सकल मीमांसकसिद्धान्त भङ्ग इति भावः। "एतानि वै दशयज्ञायुधानि, "एकं वृणीते" इत्याद्यर्थवादेषु तादृशागुणा संभवाच्च गुणत्वं प्राशस्त्यमित्याद्ययुक्तमित्यपि बोध्यम्।

प्राशस्त्याप्राशस्त्यविषयेऽन्येषां मतं दूषयति **नापीति स्वर्गनरकेति** स्वर्गपशुपुत्रादि जनकत्वं प्राशस्त्यम्, नरकादिजनकत्वमप्राशस्त्यमित्यर्थः।।

**क्रियाजन्यदुःखापेक्षया अधिकेष्टसाधनत्वं प्राशस्त्यम्, तज्जन्यसुखापेक्षयाऽधिकानिष्टजनकत्व मप्राशस्त्य मित्येवं विधयो स्तयोरुपपत्तेः। नहचय मर्थोऽन्यतः सिद्धः, विधिने ष्टानिष्टसाधनत्वमात्रस्यैवा क्षेपात्। अत एव यत्र नार्थवादः पठित, स्तत्र विधिना तदाक्षिप्यते एव।**

**न चैवं विधतज्ज्ञानस्य प्रवृत्तिनिवृत्त्यो रनुपयोगः, एवं विधज्ञानाभावेपि प्राचीनकर्मवशेनैव तात्कालिकसुखदुःखयो रुत्कटरागद्वेषसत्त्वे प्रवृत्तिनिवृत्त्यो रुदय सत्त्वात्, एवं विधज्ञानसत्त्वेपि च प्राचीनकर्मवशेनैव प्रवृत्तिनिवृत्त्यो रनुदयाच्चेति वाच्यम्। तथात्वेप्येवं विधज्ञानसत्त्वे क्रिया जन्यतात्कालिक दुःखापेक्षयाऽधिकेष्टे प्रायशो लोके वेदेवा सर्वेषां पुरुषाणामुत्कटरागदर्शनेन, तात्कालिकसुखापेक्षयाऽधिके दुःखे उत्कटद्वेषदर्शनेन च तज्ज्ञानस्य रुच्यरुच्यात्मकोत्कटरागद्वेषोपयोगित्वस्य सर्वसिद्धत्वात्। क्वचिदेव तु प्राचीनकर्मण औत्कट्ये तत्सत्त्वेपि तदभावः, न तु सर्वत्र।**

केषाञ्चिन्मतं प्रदर्शयति – **क्रियाजन्य दुःखापेक्षयेत्यादिना, मूलग्रन्थोन्नीतः पन्था – इत्यन्तेन ग्रन्थेन** **क्रियाजन्येति** यागहोमक्रियाभिर्यद् दुःखं शरीर कार्श्यक्षुत्पिपासादिसहनं तदपेक्षयेत्यर्थः। **अधिकेष्टेति** अधिकमिष्टं स्वर्गपुत्रपश्वादि तत्साधनत्वमित्यर्थः। **तज्जन्येति** सुरापानकलञ्जभक्षणादि क्रियाजन्यं यत् सुखं रसास्वादतृप्त्यादिकं तदपेक्षयेत्यर्थः। तयोः = प्राशस्त्या प्राशस्त्ययोः। निरुक्तपक्षद्वयापेक्षयात्र विशेषमाह – **न हीति** प्रथमपक्षे क्षेपिष्ठादिपदै, र्द्वितीयपक्षे स्वर्गादिपदैश्च तत्तदर्थलाभवदत्र प्रदर्शितोर्थो न केनापि पदेन लभ्यते। अन्यतः = तद्वाक्यघटक पदेभ्यः। ननु विध्यादिपदेन निर्दोषविधिनिषेधप्रतिपादितत्वात्, प्रशस्तोयम् – अप्रशस्तोयमित्येवं तत्प्रतिपादनात्तयोरन्यतः सिद्धिरित्यत आह – **विधिनेति इष्टानिष्टेति** अलौकिक धर्मरूपेण लिङर्थेन तावन्मात्रमेवाक्षिप्यते, न तु प्राशस्त्या प्राशस्त्यमपि, तस्य =

अयमत्र प्रवर्तता" मित्याकारकाप्तेच्छाविषयत्वा भावात्, नापि फलपदेन प्रशस्त फलयुक्तत्वात्तत्प्रतीतिः संभवति, श्रौतफलादि परत्वेन लाक्षणिकस्तुति निन्दारूप प्राशस्त्या प्राशस्त्य गमकत्व कल्पनानौचित्यात्, अत एव = अर्थवादानामेव तल्लक्षकत्वादेव यत्र = "वसन्ताय कपिञ्जलानालभेते"त्यादौ, तद् = प्राशस्त्या प्राशस्त्यम्। आक्षिप्यत एव = प्रवृत्तिनिवृत्ति प्रतिबन्धक द्वेषोत्साहापनायकतया विधिनाक्षिप्यत एव, इयमत्र वस्तुस्थितिः, यत् प्रकृतावेव दर्वीहोमादिषु चोपदेशातिदेशयोर भावाद्विधेरेव प्राशस्त्याक्षेपकत्वा-त्तस्यैव प्राशस्त्य कल्पकत्वमपि, प्रकृतावुपदेशे तु अतिदेशेनैव तत्प्राप्तिः, निरुपितं चैतत्समनन्तरमेव, यत्र तु संनिधावर्थवादाः पठिता, स्तत्र विधेरुभयपरत्व कल्पने प्रमाणाभावादर्थवादा एव प्रयोजनापेक्षया लक्षणया प्राशस्त्या प्राशस्त्यं विधिनिषेधापेक्षितं प्रतिपादयन्ती-ति।

**न चेति** एतादृश प्राशस्त्या प्राशस्त्य ज्ञानस्य नान्वयव्यतिरेकविधया प्रवृत्तिनिवृत्तिकारणत्वसंभव इत्याशयः पूर्वपक्षस्य। व्यतिरेकव्यभिचारमाह — **एवं विधेति उत्कटरागेति** तात्कालिकसुखे उत्कटोरागः कर्मवशेन जायते तदा प्रवृत्तिः, तादृशे दुःखे प्राचीन कर्मवशेन द्वेष उत्कटोजायते तदा निवृत्तिश्च सिद्धा, सर्वत्रापि प्राचीन कर्मेव कारणं स्यादिति नैतादृश ज्ञानस्योपयोग इति भावः। अन्वयव्यभिचारं दर्शयति — **एवं विधज्ञानसत्वेपीति** पूर्वपक्षोक्तं दोषमभ्युपेत्यैवाह — **तथात्वेपीति** प्रवृत्तिनिवृत्तिप्रयोजक रागद्वेष जनकत्वेन प्राशस्त्या प्राशस्त्य ज्ञानस्योपयोग इत्याह — एवं विधज्ञानसत्वे इति। रागांशे आह — **क्रियाजन्येति** द्वेषांशे आह — **तात्कालिकसुखेति** तज्ज्ञानस्य = प्राशस्त्याप्राशस्त्यज्ञानस्य। यदुक्तं प्राचीनकर्मवशेनेति तत्राह — **क्वचिदेव त्विति** कार्यमात्रं प्रति प्रतिबन्धकाभावस्य कारणत्वात्प्रकृते प्रतिबन्धकस्य प्राचीनकर्मणः सत्त्वात्तदभावेपि न दोषः, तदेतदाह — **न तु सर्वत्रेति** प्रतिबन्धकाभाव एव पूर्वोक्तारीति रित्याशयः।

**अत उत्कटप्राचीनकर्माभावे उक्तविधप्राशस्त्या प्राशस्त्यज्ञानस्योत्कटरागद्वेषजनकत्वात् तद्द्वारा प्रवृत्तिनिवृत्यो रुपयोगः। न चैवं यस्य स्वत एव रुच्यरुची, तं प्रति प्राशस्त्याप्राशस्त्यज्ञानस्या नुपयोगेन सर्वान् पुरुषान् प्रत्यनुपयोग इति वाच्यम्। सर्वपुरुषान् प्रत्यनुपयोगेपि पुरुषविशेषं प्रत्युपयोगेनैवार्थवादप्रामाण्योपपत्तेः। स्वतस्सिद्धस्मरणवतो मन्त्र-जन्यस्मरणस्यानुपयोगेपि मन्त्राम्नानवशेन तज्जन्यस्मरणस्याभ्युदयकारित्वकल्पनव दर्थ-वादाम्नानबलेन तद्बोधितप्राशस्त्यस्या भ्युदयकारित्व कल्पनयो पयोगोपपत्तेश्च। एवं विधप्राशस्त्यादेश्च लक्षणयैवार्थवादैः प्रतिपादना ल्लाक्षणिकत्वसिद्धान्तस्यापि न भङ्गः। सा च वाक्यलक्षणायां बाधका भावा दर्थवादस्य पदसमुदाये, एकस्मिन्नेव वा पदे लक्षणा, इतरपदानि तात्पर्य ग्राहकाणीत्यन्यदेतत्।**

स्वमतं निष्कृष्टं दर्शयति **अत इति** प्राचीनकर्मणः प्रवृत्तिनिवृत्तिवशेन प्रतिबद्धत्वादित्यर्थः। स्वाशयं स्पष्टयति **उत्कटप्राचीन कर्माभावे इति** तद् द्वारा = रागद्वेष द्वारा। निरुक्तार्थ स्वीकारेपि व्यभिचारो दुर्वार इत्याशयेन शङ्कते **न चेति** — एवम् = प्राशस्त्या प्राशस्त्य ज्ञानस्य रुच्यरुचि द्वारा प्रवृत्तिनिवृत्युपयोगस्वीकारे। तत्पुरुष दृष्टान्तेनाह — **सर्वानिति** अनुपयोगः = व्यभिचारात्। अवच्छेदकावच्छेदेन तज्ज्ञानस्य न प्रवृत्तिनिवृत्तिजनकत्वं येन व्यभिचारः स्यात्, किन्तु सामानाधि-कारण्येनेति समाधत्ते — **सर्वपुरुषान् प्रत्यनुपयोगेपीति** अत्र समाधानेऽपरितुष्यन्नाह — **स्वतः सिद्धस्मरणवत इति** मन्त्राणां प्रयोग समवेतार्थस्मृतिरेव प्रयोजनम्, मन्त्राणा मनुच्चरणेपि मेधाविनः स्वतो मन्त्रार्थस्मरणसंभवात्त द्विषये मन्त्राणामनुपयोग एव, अतो मन्त्राम्नानबलेन "मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः" इति नियम्यते, तत्प्रयोजनं च तादृशस्मरणमेवाभ्युदयकारि, नत्वन्यदिति-तदाह — **तज्जन्यस-**

**स्मरणस्याभ्युदयकारित्वकल्पनवदिति तद्बोधित प्राशस्त्यस्येति,** अर्थवादप्ररोचितमेव कर्माभ्युदय-कारित्यध्ययन विधिबलेन कल्पनान्नान्य प्ररोचनं कर्माङ्गमिति बोधनात्सर्वपुरुष विषय एवार्थवादानामुपयोग इति भावः, यत्र सुखनरकादिरूपफले निसर्गत एव रुच्यरुची, तत्र प्रयोजना भावात्,

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम्"।।

इत्यादीनां च न प्राशस्त्या प्राशस्त्यलक्षकत्वम्। किन्तु विधिनिषेधापेक्षित स्वर्गनरकादिस्वरूप परत्वमेवेति बोध्यम्, अस्मिन् पक्षे मीमांसकसिद्धान्तविरोधोपि नेत्याह **एवं विधेति** सा च लक्षणा वाक्ये? उत एकस्मिन् पदे इति विचारे आह — **सा चेति बाधकाभावादिति** शक्य सम्बन्धो न लक्षणा, येन वाक्ये शक्तेरभावात्तन्मूलिका लक्षणावाक्ये न प्रसरेत्, किंतु ज्ञाप्यसंबन्धो लक्षणा, सा वाक्येऽव्याहतेत्याशयः। शक्यसंबन्धो लक्षणेति स्वीकारेप्याह — **एकस्मिन्नेव वा पदे इति** तर्हीतरपदानां वैयर्थ्यं स्यादित्यत आह — **इतरपदानीति** वस्तुतस्तु सर्वत्रापि वाक्य एव लक्षणेति वा एकस्मिन्नेव पदे इति वा न नियन्तुं शक्यते, तद्व्यवस्था चै तत्प्रकरणान्ते, तेन यत्रैकस्मिन् पदे" इत्यादिना ग्रन्थकृतैव करिष्यते — तत्सूचयन्नाह — **अन्यदेतदिति।**

**तच्च प्राशस्त्य मप्राशस्त्यं वा इतिकर्तव्यतात्व संबन्धेन शाब्दभावनाया मन्वेतीति बहवः। स्व रूपसंबन्धेन धात्वर्थादावेवान्वेतीति केचित्।**

एवमर्थवादानां प्राशस्त्याप्राशस्त्यलक्षकत्वमुपपाद्य तदन्वय प्रकार माह — **तच्चेति** अर्थवादलक्षितमित्यर्थः। **शाब्दभावनायामन्वेतीति** अयमर्थः — प्राशस्त्यादेर ज्ञातस्य प्रवृत्तिं प्रति कारकत्वासंभवात् कारणापेक्षयैव प्रशस्तत्वादित्येवान्वयो युक्तः, परंतु तेनापि रूपेण स्वविषयकज्ञानजन्य प्रवृत्तिनिवृत्तिजनक ज्ञानविषयत्वसंबन्धेन शाब्द भावनायामेवान्वय इति। मतान्तरमाह — **स्वरूपसंबन्धेनेति।**

**वस्तुतस्तु वक्ष्यमाणरीत्याऽन्यसुबन्तार्थव देककार्यकारण भावकल्पनालाघवानुरोधेन प्राशस्त्यस्य स्वविषयकज्ञानजन्येष्टविषयकोत्कटराग जन्यत्वसंबन्धेन प्रवृत्तौ, अप्राशस्त्यस्य च स्वविषयकज्ञानजन्यानिष्टविषयकोत्कटद्वेष प्रयोज्य भाव प्रतियोगित्व संबन्धेन प्रवृत्तावेवान्वयः।**

**न चैवं प्रधानार्थवादेनैव क्रियाजन्यतात्कालिकदुःखापेक्षया स्वफले आधिक्यसिद्धौ अङ्गार्थवादवैयर्थ्यम्।। प्रधानजन्यफलापेक्षयाऽङ्गजन्यफलस्य भेदाभावात्। क्रतूपकारे चाधिक्यासंभवा दिति वाच्यम्। तत्तदङ्गजन्यतात्कालिकदुःखकूटापेक्षया प्रधानफले आधिक्यबोधनार्थत्वात्। अतो विध्यर्थवादेषु प्रकृष्टफलकत्वरूपप्राशस्त्यलक्षणा, निषेधार्थवादेषुच प्रकृष्टदुःखजनकत्व रूपाप्राशस्त्य लक्षणेति मूलग्रन्थोन्नीतः पन्थाः।**

वस्तुतस्त्विदमयुक्तम् — अन्वयमूलभूतायाः सहकार्यपेक्षायाः कारणे कार्ये वान्वयेनैव शमनादित्यतः स्वमतमाह — **वस्तुतस्त्विति स्वविषयकेति।** स्वं = प्राशस्त्यम् तद्विषयकं ज्ञान = मिदं प्रशस्तमित्या कारकम्, तज्जन्यो यः स्वर्गादीष्टविषयको रागः, तज्जन्यत्वं प्रवृत्तौ तेन संबन्धेनेत्यर्थः, **स्वविषयकेति,** स्वम् = अप्राशस्त्यम् तद्विषयकं ज्ञानम् = इदमप्रशस्तमित्याकारकम्, तज्जन्यो योऽनिष्टकलञ्जभक्षणादि विषयको द्वेषः, तत्प्रयोज्यो योऽभावः = प्रवृत्यभावः, तत्प्रतियोगित्वं प्रवृत्तेः, तेन संबन्धेनेत्यर्थः, प्रवृत्तावेवेत्येवशब्देन शाब्दभावनाया धात्वर्थस्य च व्यावृत्तिः, अन्यथा तत्रान्वयार्थमतिरिक्तकार्यकारण भावकल्पनायां गौरवापत्तिरिति भावः। एवम् = अर्थवादानां निरुक्तार्थ लक्षकत्वे। प्रधानार्थवादेनैव = दर्शपूर्णमासादि प्रधानयागसंबन्ध्यर्थ वादेनैव। स्वफले = प्रधानजन्यफले, अङ्गार्थवादवैयर्थ्यम् =

प्रयाजाद्यङ्गसबन्धिनः ''वर्म वा एतद्यज्ञस्य क्रियते। यत्प्रयाजानुयाजा इज्यन्ते'' इत्यादेरर्थवादस्य वैयर्थ्यम्। ननु फलभेदादुभयोरप्यावश्यकतेत्यत आह – **प्रधानजन्येति** अत एवाह **क्रतूपकारे चेति तत्तदङ्गजन्येति** अयमर्थः – प्रधानानुष्ठानानन्तरमङ्गानुष्ठानकाले तात्कालिकदुःखजातमसहमानोऽधिकारी अङ्गानुष्ठानान्निवर्तेत। तथा च यागस्यासंपूर्णत्वात्प्रधानादपि फलं न लभते। तदा अङ्गार्थ वादा एवं प्ररोचयन्ति अयि भो, अङ्गानुष्ठानाद् मा विरम, प्रधानं कर्मानुष्ठितमेव, अस्याप्यनुष्ठाने प्रधान फलमधिकं संपद्यते, इत्येतदर्थ बोधनमङ्गार्थवादानां प्रयो जन-मिति। तदेतदाह – **प्रधानफले आधिक्यबोधनार्थत्वादिति** निगमयति – **अत इति** निरुक्तरीत्याऽर्थवादैर्बोधनादित्यर्थः।।

**वस्तुतस्तु अभ्यनुज्ञाविध्यर्थवादेषु ''नातिरात्रे षोडशिनं गृह्णाती''त्यादिनिषेधार्थवादेषु च नैवंविधप्राशस्त्या प्राशस्त्य लक्षणासंभवः। न हि ''हुतायां वपायां दीक्षितस्य न्न मश्नीया''दित्यत्र क्रियाजन्यानिष्टापेक्षया तृप्त्याख्यस्य फलस्या धिक्यं बोधयितु शक्यम्। निषेध प्रमितानिष्टस्या धिक्यावश्यं भावात्। क्रियाजन्यतात्कालिकदुःखापेक्षया धिक्यस्य लोकसिद्धत्वेन निषेधसत्त्वे तज्ज्ञानस्य प्रवृत्त्यनुपयोगित्वात्। षोडशिग्रहणजन्यसुखापेक्षया तज्जन्यदुःखस्या धिक्यं नैव संभावयितुं शक्यम्।**

मूलग्रन्थोन्नीते पक्षे दोषमुद्भावयति – **वस्तुतस्त्विति** अभ्यनुज्ञाविध्यर्थवादेषु = ''वपायां हुतायां दीक्षितस्यान्न मश्नीया''दित्याद्यभ्यनुज्ञाविधीना मुत्तरे पठितेष्वर्थ वादेषु। निषेधार्थवादेषु =निषेधानामुत्तरं पठितेष्वर्थवादेषु। **एवं विधप्राशस्त्येति** ऐक रूप्येण तल्लक्षणासंभवादित्यर्थः। तदेवोपपादयति **न हीति** अयमर्थः – ''न दीक्षितस्येति निषेधो दीक्षितान्न भोजनस्यानिष्ट साधनत्वं बोधयति, ''वपायां हुताया मित्यनन्तरं पठितेनार्थवादेन त्वदुक्तरीत्या भोजनक्रिया जन्यानिष्टापेक्षया तृप्त्याख्य फलाधिक्यं बोधयित्वा प्रवर्तकेन भवितव्यम्। तच्च न संभवति, निषेधवाक्येनानिष्टाधिक्यस्यावश्यं भावबोधनात् प्रवृत्त्यनुपपत्तेः, नापि क्रियाजन्य तात्कालिकदुःखापेक्षया फलाधिक्यस्य लोकसिद्धत्वादस्यार्थवादस्य तत्प्रवर्तकत्वं युक्तम्, फलाधिक्यस्य लौकिकतया प्रत्यक्षनिषेधस्य जगरूकतया तस्य प्रवर्तकत्वासिद्धेः, अतः क्रियाजन्यदुःखापेक्षयाऽधिकेष्ट साधनत्वरूप प्राशस्त्यं नैव लक्षयितुं शक्यते इति, तदेतदाह – **क्रियाजन्येति,** क्रियाजन्यदुःखापेक्षयेत्यर्थः। **निषेध प्रमितेति ''न दीक्षितस्या न्न मश्नीया''दिति निषेधप्रमितस्यानिष्टस्येत्यर्थः। निषेधान्यथानुपपत्त्याह, अधिक्यावश्यम्भावादिति,** फलापेक्षयाऽनिष्टाधिक्यस्यावश्यं भावादित्यर्थः। तृप्त्याख्यफलस्य लोकसिद्धस्य प्रवर्तकत्वमस्त्वत आह – **क्रियाजन्येति** आधिक्यस्य = भोजने फलाधिक्यस्य/ प्रवृत्त्यनुपयोगित्वे हेतुः – **निषेधसत्वे इति** ''न दीक्षितस्ये''त्यादि श्रौत निषेधस्य सत्तायामित्यर्थः, तज्ज्ञानस्य = तादृशभव दुक्तप्राशस्त्यज्ञानस्य, **प्रवृत्त्यनुपयोगित्वादिति** तथा चैकरूप्येण प्राशस्त्यं न निरुक्तं स्यादिति भावः।। **षोडशिग्रहणेति** सुरापानकलञ्जभक्षण क्रियाजन्य सुखापेक्षया निषेधवाक्यैस्तत्र दुःखाधिक्यं बोधयितुं शक्यते। प्रकृते ग्रहणजन्य सुखापेक्षया षोडशिग्रहण जन्यदुःखस्याधिक्यं नैव संभावयितुं शक्यते इति भावः तदाह – **तज्जन्यदुःखस्याधिक्यं नैव संभावयितुं शक्यमिति** अननुभवादिति भावः। तथा चैकरुप्येणा प्राशस्त्यमपि न निरुक्तमिति भावः।

**अपिच श्येनार्थ वादे श्येनजन्यतात्कालिक दुःखापेक्षया यद्यभिचारे आधिक्यं बोध्यते, तदा तज्ज्ञानस्य नैव प्रवृत्त्युपयोगित्वम्। श्येनप्रयोज्यनरकादि दुःखापेक्षया धिक्यं तु नैव बोधयितुं शक्यम्। ''न हिंस्या''दिति निषेधार्थवादेन तस्या प्यभिचारापेक्षया धिक्यबोधना च्च।**

नन्वत्रान्यादृशमेव प्राशस्त्या प्राशस्त्यं लक्ष्यते, ऐकरूप्येणैव लक्षणीयमिति नियमाभावादित्यत आह — **अपि चेति** श्येनार्थवादे = "यथा वै श्येनो निपत्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते" इत्यर्थवादे। **श्येन जन्येति**, "श्येनेनाभिचरन् यजेते"ति वाक्यविहित श्येनजन्येत्यर्थः। **नैव प्रवृत्युपयोगित्वमिति** तेन हि तात्कालिक दुःखापेक्षयाऽभिचार फलाधिक्यं बोधनीयम्, तदा "न हिंस्या"दिति निषेधेनानिष्टजनकत्वस्य तत्र बोधने प्रवृत्ति प्रतिबन्धक सामग्री सत्वेन प्रवृत्तेरसंभवात्तज्ज्ञानस्य कथं तदुपयोगित्वमिति भावः। ननु श्येन प्रयोज्यनरकादि दुःखापेक्षया तदाधिक्यं बोध्यते, अतो न दोष इत्यत आह — **श्येन प्रयोज्येति** श्येनजन्याभिचार जन्यनरकादीत्यर्थः। तस्यापि = नरकादेरपि, **अधिक्यबोधनाच्चेति**, "न हिंस्यात्सर्वभूतानी"ति निषेधार्थवादस्य वेदीय हिंसातिरिक्त हिंसापरत्वेन संकोचस्तु विधेयविषयक एव। यथा "अग्नीषोमीयं पशुमालभेते"त्यादौ। प्रकृतेऽभिचारस्य विधेयत्वाभावा "न्न हिंस्या"दिति निषेधविषयत्वं दुर्वारमेवेति बोध्यम्।।

**अतो विध्यर्थवादेषु विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्व रूपं प्राशस्त्यं लक्ष्यते। निषेधार्थवादेषुच निषेध्यतावच्छेदकसामानाधिकरण्येन बलवदनिष्टानुबन्धित्वरूप मप्राशस्त्यम्। अत्रा निष्टेबलवत्त्व मुत्कटद्वेषविषयत्वम्, न त्वाधिक्यम्। स्वर्गन्यूनेपि तात्कालिकदुःखे प्राचीनकर्मवशेन कदाचिदुत्कटद्वेषोदयात्। अत एव नैव तदा यागादौ प्रवर्तते। नरकन्यूनेपि च तात्कालिकसुखे प्राचीनकर्मवशेनोत्कटरागोदया च्च। अत एवाभिचारदौ कदाचित् प्रवर्तते। अत एव यागादौ कदाचित् प्राचीनशुभकर्मवशाद् बलवदनिष्टाननुबन्धित्वम्, न तु सर्वदा। अत एव विधेयतावच्छेदकसामानाधिकरण्येनेत्यनेन तस्य कालिकाव्याप्यवृत्तित्वं विवक्षितम्।**

एवं मतान्तराणि दूषयित्वा स्वसिद्धान्तमुद्घाटयति **अत इति** मतान्तराणां दुष्टत्वादित्यर्थः। विधेयतावच्छेदकावच्छेदेन तल्लक्षणायां दोषतादवस्थ्यादाह — **विधेयतावच्छेदकसामानाधिकरण्येनेति** अप्राशस्त्यं = लक्ष्यते, ननु बलवत्वस्याधिक्यरूपत्वात् त्वन्मतेप्यैकरूप्यासंभवदोष तादवस्थ्यमेवेत्यत आह — **अत्रेति** अस्मदुक्तार्थघटके इत्यर्थः स्वाशयं स्पष्टयति **न त्वाधिक्यमिति**, तात्कालिकदुःखे = उपवासनिद्राऽभाव धनव्ययादिरूप दुःखे। **द्वेषोदयादिति, स्वर्गापेक्षयानिष्टस्याधिक्यं नैव संभावयितुं शक्यम्, परंतु तत्राधिकोद्वेष उदेतीति भावः। अत एव** = तत्राधिकद्वेषोदयादेव। तदा = तस्मिन् समये, श्येनार्थवादे आह — **तात्कालिकसुख इति** शत्रुर्मरिष्यतीतिमानससुखे। अत एव = तत्र तत्कर्मवशेनोत्कटस्य रागस्योदयादेव। सर्वदा प्रवृत्तेर भावादाह — **कदाचिदिति**, अत एव = अनिष्टे एतादृश बलवत्वस्य स्वीकारादेव, **न तु सर्वदेति** एवं चास्मन्मते यागादौ कादाचित्के प्रवृत्यप्रवृत्ती स्वरसत उपपद्येते, नान्यस्मिन् मते इति भावः। अत एव = प्राचीनकर्मवशेन यागादावुत्कटरागद्वेषयोरुदयादेव, कालिकाव्याप्य वृत्तित्वं = किञ्चित्कालवृत्तित्वम्।

**एवं कलञ्जभक्षणादौ कदाचिदेव शुभकर्मवशाद्बलवदनिष्टानुबन्धित्वम्। अत स्तत्रापि कालिकाव्याप्यवृत्तित्वसिद्धयर्थं निषेध्यतावच्छेदकेत्यादि। एतादृशाव्याप्यवृत्तित्वज्ञापनार्थमेव कौस्तुभादौ योग्यतापदम्।**

निषेधार्थवादे आह — **एवं कलञ्जभक्षणादाविति** बलवदनिष्टानुबन्धित्वं = लक्ष्यते, एवं प्राचीनाशुभकर्मवशात्कलञ्जभक्षणादौ तदनुबन्धित्वम्, अत एव तत्र प्रवृत्तिः कदाचिदिति बोध्यम्। कौस्तुभादौ = अर्थ वादाधिकरणे "तत्त्वं च बलवदनिष्टाननुबन्धित्वानु बन्धित्वयोग्यत्वम्। तज्ज्ञानस्य च प्रवृत्तिनिवृत्तिकारणत्व मविवादमेवे"ति तत्रोक्तम्।।

**एवं विधबलवदनिष्टाननुबन्धित्वज्ञानस्य च येन पुरुषेण यागे सर्वदैव बलवदनिष्टानुबन्धित्वं बुद्धम्, तं प्रति तद्वृत्तिज्ञानेऽप्रामाण्यज्ञानसंपादकतयो पयोगः। येन च कलञ्जभक्षणे बलवदनिष्टाननुबन्धित्वं सर्वदैव बुद्धम्, तं प्रति तद्वृत्तिज्ञानेऽप्रामाण्यज्ञानसंपादकतया एवं विधबलवदनिष्टानुबन्धित्वज्ञानस्योपयोगः। अवच्छेदकावच्छेदेन तद्वत्ताबुद्धिं प्रति सामानाधिकरण्येन तदभाववत्तानिश्चयस्य विरोधित्वात्। अत श्चै तादृशप्राशस्त्यज्ञानस्य सामग्रीसंपादनद्वारा प्रवृत्तावुपयोगः। तादृशा प्राशस्त्यज्ञानस्य च प्रवृत्ति सामग्रीविघटनद्वारा निवृत्तावुपयोगः।**

प्राशस्त्या प्राशस्य ज्ञानयोरुपयोगं दर्शयति – **एवं विधबलवदिति** अस्य "उपयोग" इत्यत्रान्वयः। निषेधांशे आह – **येन चेति**, पुरुषेणेत्यर्थः। एवं विधबलवदनिष्टानुबन्धित्वज्ञानस्याप्रामाण्य संपादकतयोपयोग इति योजना, तत्रोपपत्तिमाह – **अवच्छेदकावच्छेदेनेति**। यथा पर्वतत्वावच्छेदेन वह्निमत्ताबुद्धिं प्रति पर्वतत्व सामानाधिकरण्येन वह्न्यभाववत्तानिश्चयस्य प्रतिबन्धकत्वम्। तथा विधित्वावच्छेदेन बलवदनिष्टानुबन्धित्वज्ञानं प्रति विधित्वसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वनिश्चयस्य प्रतिबन्धकत्वम्। एवं निषेधार्थवादेष्वपि निषेधत्वावच्छेदेन बलवदनिष्टाननुबन्धित्वज्ञानस्य तत्सामानाधिकरण्येन बलवदनिष्टानुबन्धित्वनिश्चयस्य प्रतिबन्धकत्वमिति भावः। विध्यंशे आह – **अतश्चै तादृशेति** निषेधांशे आह – तादृशाप्राशस्त्येति।

**संभवतिचेद मभ्यनुज्ञाविध्यर्थवादे वपाहोमोत्तरदीक्षितान्न भोजनस्य निषेधप्रयुक्तानिष्टाननुबन्धित्वज्ञानात्। न च तस्य दोषाभावरूपस्य विधिनैवा क्षेपात् कृत मर्थवादेनेति वाच्यम्। तेन तदाक्षेपेपि सामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वस्यार्थवादेन बोधनोपपत्तेः।**

अभ्यनुज्ञाविध्यर्थवादेषु परमते उद्भावितो दोषः स्वमते न लगतीत्याह – **संभवति चेति** इदम् = अर्थवादलक्ष्य प्राशस्त्य ज्ञानस्य प्रवृत्त्युपयोगित्वम्। **निषेधप्रयुक्तेति** – "न दीक्षितस्या न्न मश्नीया"दिति निषेध प्रयुक्तेत्यर्थः। तस्य = बलवदनिष्टाननुबन्धित्वस्य। **विधि नैवेति** निर्दोषविधिनैवेत्यर्थः। तेन = निर्दोषविधिना, असाधारणं प्रयोजनमाह – **सामानाधिकरण्येनेति**, प्रयोगभेदेन बलवदनिष्टाननुबन्धित्वं बोधयितुमर्थवादा उपयुज्यन्त इति भावः।

**एवं षोडशिग्रहणनिषेधार्थवादेपि ग्रहणजन्ये तात्कालिके स्वल्पेपि दुःखे सामानाधिकरण्येनोत्कट द्वेषविषयत्वाख्यं बलवत्त्वं बोध्यत इति न काचिदनुपपत्तिः।**

**एवं षोडशीति** श्येनेपि धर्मत्वोपपादनरीत्या बलवदनिष्टाननुबन्धित्वयोग्यत्वस्य सत्त्वात्तदर्थवादेनापि तद्बोधनं सुलभमेव, इतरथा कदापि तत्र प्रवृत्त्यनापत्तेः। अत एव तामसधर्मत्वस्य स्थापनाद् बलवदनिष्टाननुबन्धित्व योग्यत्वरूपा प्राशस्त्यस्यापि संभवान्निषेधार्थवादेन बोधितमप्राशस्त्यमपि नैव विरुध्यते, तदेतदाह – **न काचिदनुपपत्तिरिति।**

**अत एवंविधे स्तुतिनिन्दे क्वचित् "वायुर्वैक्षेपिष्ठे"त्यादा वर्थवादपदैः स्वशक्यार्थज्ञानजन्यशाब्दबोधविषयीभूत वाक्यार्थसंबन्धादेव लभ्येते। स च वाक्यार्थः – क्षेपिष्ठत्वादिगुणको वायुः स्वदेवताककर्मजन्यं फलं शीघ्रं प्रयच्छतीत्येवंरूपः। अत्र हि 'स एव' इत्यत्रैवकारस्य वैयर्थ्य परिहारार्थं गमयत्येवेत्येवं योजना। ततश्च तेनौ दासीन्यस्यापि व्युदासाद्वाने शीघ्रत्वप्रतीतिः। शाब्दबोधश्च तात्पर्या विषयीभूत एव जन्यते, गङ्गापदेन प्रवाहोपस्थितिवत्। फलगतशैघ्र्य-**

**ज्ञानस्य च प्रायशः फले रागौत्कटयजनकत्व दर्शनात्तत्संबन्धसत्त्वेन स्तुति लक्षणासिद्धिः। एवमन्यत्राप्यूहचम्।**

अर्थवादेषु लक्षणाप्रकारं निरूपयति – **अत इति** निरुक्तरीत्या प्राशस्त्याप्राशस्त्ययोर्निर्दिष्टं निरुक्तत्वादित्यर्थः। एवं विधे = निरुक्त प्राशस्त्याप्राशस्त्यरूपे। "यजमानः प्रस्तर इत्यादौ प्रकारान्तरस्य वक्ष्यमाणत्वादाह – **क्वचिदिति** – शक्त्योपस्थितपदार्थानामन्वयसंभवस्थले इत्यर्थः। ननु "स एवैनं भूतिं गमयति"त्यादिभिः पदैः स्तुतिप्रतीतावपि "वायुर्वै क्षेपिष्ठा" इत्यादिभ्यस्तदप्रतीतेः कथं तेषां स्तावकत्वसंभव इत्यत आह – **अर्थवादपदैरिति** गुणागुणरुपस्तुति निन्दा वादः सर्वत्र यथासंभवं कल्प्यः, कारणानुरुपत्वात्कार्यस्य, क्षिप्रदेवतासाध्यं कर्मक्षिप्रमेव फलं दास्यतीति सर्वेषामपि पदानां स्तुत्युपपादकत्वमिति भावः। तद्ध्वनयन्नाह – **स्वशक्यार्थेति** – स्वंघटकानि यावन्ति पदानि तानि वाक्यार्थस्वरूपं दर्शयति **स चेति** एवं च समुदाये लक्षणा सिद्धयतीति भावः। नन्वात्रार्थवादे "एव" शब्दस्यानर्थकयमेवेत्याक्षिप्य समाधत्ते, **अत्र हीति** "वायुर्वै क्षेपिष्ठे"त्याद्यर्थवादे इत्यर्थः। ननु ततः किंस्यात्, येन वैयर्थ्यं परिह्रियेत इत्यत आह – **ततश्चेति** क्रिययान्वये चेत्यर्थः। तेन = अवधारणेन। औदासीन्यस्यापि = फलदानविषये वायुदेवतायाः शाब्दबोधश्च = प्राथमिकशाब्दबोधः। तात्पर्याविषयीभूतः = तात्पर्यविषयोबोधः, स्तुतिविषयः। तात्पर्याविषयः निरूक्तः। लक्षणायाश्च एष स्वभावः, यत् प्राथमिको बोध एतादृश एव, अनन्तरं तात्पर्यविषयो बोधो लाक्षणिकः इति। तदेव दृष्टान्तेनोपपादयति – **गङ्गापदेनेति** लक्षणायां प्रवृत्ति दर्शयति – **फलगतेति एवमन्यत्रापीति**, अयमर्थः – "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्, यदश्रुव्यशीर्यत तद्रजतमभवत्, पुरास्य संवत्सराद् गृहे रोदनं भवति, तस्माद्बर्हिर्षि रजतं न देय"मित्यत्रापि बर्हिश्शब्दलक्षिते यज्ञे – "यथा श्रद्धं दक्षिणां ददाती"त्यादि सामान्यविहितदक्षिणाके स्वेच्छाप्राप्त रजतदाननिषेधस्यायमर्थवादः। पुरा कदाचिद् देवा असुरैः साकं युयुत्सवः कदाचिदस्माकं पराजये तदा जीवनार्थमस्माकमिदमुपयोक्ष्यतीति मन्वानाः स्वनिकटस्थममूल्यं वस्तुजातमग्नौ निधाय योद्धुमगच्छन्, तद् वस्तुजातं दृष्ट्वा लोभाकृष्टमना अग्निस्तैर्वस्तुभिः साकं पलायते स्म। युद्धे जयं प्राप्य प्रतिनिवृत्तादेवा अग्निमपश्यन्तस्तमन्विष्य क्वचिल्लब्ध्वा स्वीयानि वस्तूनि ततोऽगृह्णन्। इति पूर्व सन्दर्भः। एवं गृहीतोऽग्निरत्र तच्छब्देन परामृश्यते। "तद्रजतमित्यत्र तच्छब्देनाश्रु, तत्र "पुरा अस्य संवत्सरा"दिति रजतदाननिन्दा। तदुपपत्तिश्च "सोऽरोदी" दित्यादिः। कारणानुरुपत्वात्कार्यस्य रोदनप्रभवरजतदाना द्रोदनं भवतीति रजतदान निन्दा, एवमादौशक्यार्थासत्यत्वेपि गौण्यावृत्या कथञ्चिदर्थसत्यत्वमापाद्य लक्षणया निन्दोपपत्तिरिति।

**यत्र त्वयोग्यतानिश्चयसत्त्वे नैतादृशशाब्दबोधः, यथा – "यजमानः प्रस्तरः" इत्यादावभेदान्वयस्य बाधितत्वात्, तत्र यजमानपदं यजमानकार्यकारित्वसमानजातीयकार्यकारित्वरूपगुणयोगेन प्रस्तरे गौण मङ्गीकृत्य 'यजमानः प्रस्तर' इति वाकयजन्यशाब्दबोधोत्तरं स्वकार्यकर्तृत्व रूपवाक्यार्थ संबन्धा त्तेन वाक्येन बलवदनिष्टाननुबन्धित्व रूपस्तुतिलक्षणा। न च यजमानपदे गौणी मनङ्गीकृत्यैव बलवदनिष्टाननुबन्धित्वलक्षणा मङ्गीकृत्य तस्य प्रस्तरेऽन्वयः किं न स्यादिति वाच्यम्। यजमानपदस्य प्रस्तरवृत्तिनिरुक्तस्तुतिलक्षणायां शक्यसंबन्धाभावात्। अस्मन्मते सुबन्तयोः परस्परसंबन्धाभावेन प्रस्तरेऽन्वयानुपपत्तेश्च। न चैवं तात्पर्याविषयीभूतशाब्दबोधदशायां गौण्यावृत्त्योक्तस्य स्वकार्यकारित्वविशिष्टस्या प्यभेदसंबन्धेन प्रस्तरेऽन्वयानापत्तिः, अध्याहृतास्त्याख्यातार्थ एवोभयो रन्वयेन परस्परान्वयस्य पार्ष्टिकत्वात्। तस्मा दध्याहृताख्यातपदेन वाक्येन शाब्दबोधे जनिते पश्चा त्तल्लक्षितप्राशस्त्यस्य विधावन्वयः।**

"क्वचि" दिति पदेन सूचितमर्थं विशदीकर्तुं स्थलान्तरे लक्षणाप्रकारं निरूपयति — **यत्र त्विति** एतादृश शाब्दबोधः = "वायुर्वैक्षेपिष्ठे" त्यत्र प्रदर्शितरीत्या प्राथमिकशाब्दबोधः। इत्यादावित्यादि-पदेन "यजमान एककपाल" इत्यादेर्ग्रहणम्, **यजमानकार्येति**, साङ्गप्रदानस्य यजमानकार्यतया प्रस्तरस्यापि यजमानकार्यत्वादस्ति प्रस्तरे यजमानकार्यकरत्वम्, प्रस्तरः = वेद्यां हविरासादनार्थमास्तरितो दर्भमुष्टिः। **गौणमिति** न चाध्यारोपितार्थवृत्तित्वं गौणत्वं लोके प्रसिद्धम्, सिंहत्वस्य देवदत्तादावाहार्यारोपात्, न हि वेदे तत्संभवति, आरोपकपुरुषाभावादिति वाच्यम्। विनाप्यारोपं सिंहशब्दस्य सादृश्यमात्र विवक्षया देवदत्तादौ लोककाव्ययोः प्रयोगदर्शनात् स्वशक्यगुणसमान जातीय गुणयोगनिमित्तत्वं गौणत्वं, सिंहनिष्ट क्रूरत्वसमानजातीय क्रूरत्व योगाच्च सिंहपदस्य देवदत्ते प्रवृत्तेः सिंहो देवदत्त इत्यत्र लक्षण समन्वयः। न च गौण्या लक्षणातो न भेद इति वाच्यम्। स्वशक्यवृत्तिगुणानामेव यत्र संबन्धित्वेन रूपेण बोधस्तत्र लक्षणा, क्रूरत्वादिना बोधे तु गौणीति तयोर्भेदात्, ते च गुणाः षड्विधास्तत्सिद्धिपेटिकाधिकरणे प्रतिपादिताः। **शाब्दबोधोत्तरमिति** यजमानाभेदः प्रस्तरे बाधितः, अतो गौणवृत्तिराश्रिता, तेन यजमान कार्यकारित्व समानजातीय कार्य भेदः प्रस्तरे सिध्यति, अतस्तदभिन्नः प्रस्तर इति बोधो जायते, तदुत्तरमित्यर्थः, तेन वाक्येन = यजमानः प्रस्तरः, "यजमान एककपालः" इति वाक्येन। **स्तुतिलक्षणेति** प्रस्तरैक कपालयोरपि यजमानवत्कर्तृत्वाविशेषेण यागाख्य कार्यनिरूपितत्वैक धर्मयोगेन प्रस्तर यजमाननिष्ठ करणत्वयोः साजात्याद्यजमाननिष्ठकार्यकर्तृत्व समानजातीय कार्यकर्तृत्वाख्य गुणयोगेन गौणलक्षणया प्रस्तरैक कपाल पदसामानाधिकरण्योप-पत्याऽवान्तर वाक्यार्थ संभवात्पश्चात् स्तुतिलक्षणा निर्वाह्येति भावः। **न चेति**, गौणवृत्याश्रयणेना-वान्तर वाक्यार्थो मास्तु। अभेदान्वयस्यायोगे यजमान पदेऽभिमत प्राशस्त्ये लक्षणा स्वीक्रियताम्। लक्षितस्य प्राशस्त्यस्य प्रस्तरेऽन्वयः स्वीक्रियतामिति भावः। गौणीम् = गौणवृत्तिम् **अनङ्गीकृत्यैवेति** इदमेवात्र कल्पे लाघवमिति भावः। लक्षणां = यजमानपदे। तस्य = लक्षितस्य बलवदनिष्टाननुबन्धित्वरूप प्राशस्त्यस्य, **अन्वय इति** प्रशस्तः प्रस्तर इत्यर्थः सिध्यतीति भावः, गौणवृत्यनङ्गीकारे लक्षणैव न प्रसरति, निमित्ता भावादित्याशयेन समाधत्ते — **यजमानपदस्येति** यथा कथञ्चित्संबन्धपरि कल्पने तु भाट्टसिद्धान्तो व्याकूप्येतेत्याह — **अस्मन्मते इति** प्रथमाविभक्त्यर्थविचारे वक्ष्यमाणरीत्याह — **सुबन्तयोः परस्परेति न चेति** गौणवृत्याश्रयणेनावान्तर वाक्यार्थ स्वीकारेऽयं दोषोपन्यासः। एवम् = सुबन्तयोः परस्परमन्वयाभावे। "अस्तिर्भवन्तीपर इत्यादि कात्यायनवचनमनुश्रृत्याह — **अध्याहृतास्तीति** उभयोः = यजमानकार्यकारित्व समानजातीयकार्यकरस्य प्रस्तरस्य च। **अन्वयेनेति,** तथा च तादृश कार्यकरवृत्तिसत्ताश्रयत्वम्, प्रस्तरवृत्तिसत्ताश्रयत्वमित्यवान्तर वाक्यजन्यो बोध इति भावः। तर्हि तयोरभेदो न प्रतीयतेत्यत आह — **परस्परान्वयस्येति,** अरुणैकहायनीन्यायेनेति भावः, शाब्दबोधे = अवान्तरशाब्दबोधे पश्चात् = तच्छाब्दबोधादनन्तरम्। **लक्षितेति** वाक्यलक्षितेत्यर्थः। विधौ = "प्रस्तरमुत्तरं बर्हिषः सादयती"ति वाक्यीयसादनविधौ बर्हिरुपरिस्थापन- विधौ, एवं च "प्रस्तरमुत्तरं बर्हिषः सादयती"ति विध्येकवाक्यतया बर्हिरुपरिस्थापनाविधिस्तावको "यजमानः प्रस्तर" इत्यर्थवादः। यजमानपदं तु गौण्या वृत्या प्रस्तरस्तावकमिति बोध्यम्।

**नचैवं पश्चादपि यजमानपदेनैव प्राशस्त्यवन्तं लक्षयित्वा तस्य पार्ष्टिकान्वयलभ्यपरस्पर-संबन्धाङ्गीकारेणा ध्याहृताख्यातार्थ एव उभयान्वयो भवतु, पूर्वमेव यजमानपदे गौणीगर्भां स्तुतिलक्षणा मङ्गीकृत्य तदन्वयोपपत्तेः। एक एव वा शाब्दबोधोऽस्तु, कृतं विध्यन्वयेन, वाक्यैकवाक्यतयैव तदाकांक्षितपूरणोपपत्ते रिति वाच्यम्। वाक्ये लक्षणा मङ्गीकृत्यै कवाक्यत्वे संभवति वाक्यभेदस्या न्याय्यत्वात्। न चा स्मदुक्तरीत्या ध्याहृताख्यातार्थान्वयेपि** 'पश्यमृगो

**धावती'ति व देकाख्यातार्थस्य विध्याख्यातार्थे प्रकारतया न्वयेनाप्येकवाक्यातोपपत्तिः, आख्यातार्थस्य मुख्यविशेष्यत्वभङ्गभयेन ''स्योनंते'' इतिव दाख्यातद्वयसत्त्वे भिन्नवाक्यत्वस्यैवाऽऽपातात्। अन्यथा प्रयाजाद्यङ्गभावनाया अपि इतिकर्तव्यतात्वेन प्रधानभावनान्वयापत्तेः** सर्वस्या प्येकवाक्यतापत्तिः। 'पश्य मृगो धावतीत्यादौ तु पश्येत्यस्य कर्मान्वयं विना **शाब्दबोधाजनकत्वा द्युक्तोधावनभावनायाः कर्मत्वेन तस्या मन्वयः। नहिकर्मान्वयं विना शाब्दबोधापर्यव सानव दितरकारकान्वयं विना तदपर्यवसानं, वाक्यमात्रस्य साकांक्षत्वापत्तेः। तस्माद्यजमानपदमात्रे** प्राशस्त्यलक्षणा **मङ्गीकृत्या ध्याहृताख्यातार्थेऽन्वयाङ्गीकारे वाक्यभेदापत्ते र्वाक्ये लक्षणाङ्गीकरणम्।**

यजमानपदमेव प्राशस्त्यलक्षकमिति शङ्कते **नचेति**, एवम् = यजमानपदेन गौणवृत्या प्रतिपादितस्यार्थस्य अस्त्याख्यातार्थान्वयस्वीकारे। **पश्चादपीति**, गौणवृत्याश्रयणेनावान्तरशाब्दबोधानन्तरमपीत्यर्थः। अयमर्थः – गौणवृत्या यजमानपदाल्लब्धस्यार्थस्य प्रस्तरस्य च अस्त्याख्यातार्थेन्वयः। अनन्तरं ''यजमानः प्रस्तर'' इति समुदाये लक्षणाश्रयणेन लब्धस्य प्राशस्त्यस्य सादनविधावन्वय इति भवता प्रतिपादितम्, तन्न युक्तम् – अवान्तर शाब्दबोधानन्तरमपि यजमान पदेनैव प्राशस्त्यवान् लक्ष्यते, तस्य प्रस्तरस्य चाध्याहृतार्थ एवान्वयः स्वीक्रियते लाघवात्, न तु विधौ। प्राशस्त्यवतः प्रस्तरस्य परस्परान्वयः पार्ष्टिक एव, विध्यर्थवादयोश्च वाक्यैकवाक्यतैव, यद्वा बोधद्वयं न स्वीक्रियते, प्रथमत एव गौणगर्भां स्तुतिलक्षणां यजमानपदे स्वीकृत्य तदर्थस्याध्याहृताख्यातार्थेन्वयः कल्प्यते, अत्रापि विधावन्वयो मास्तु अतो लाघवान्मदुक्तमेव युक्तमिति, तदेतदुपपादयति **यजमानपदेनैवेति** एवशब्देन ''यजमानः प्रस्तरः'' इति वाक्यस्य व्यावृत्तिः, प्रथमतस्तत्तत्पदे गौणवृत्ति राश्रिता, पश्चादपि तत्रैव लक्षणाश्रयणं युक्तं, न तु समुदाये इति भावः। तस्य = लक्ष्यस्य प्राशस्त्यवतः। अस्य 'परस्परसंबन्धाङ्गीकारेणे' त्यत्र संबन्धः तथा च तयोरभेदप्रतीतिरुपपन्नैति भावः। उभयान्वयः = प्राशस्त्यवतः प्रस्तरस्य चान्वयः **भवत्विति**, लक्ष्यार्थस्य विधवन्वयो मास्त्वित्याशयः। इतोपि लाघवादाह – **पूर्वमेवेति** प्रथमतो गौणवृत्ते, रनन्तरं तत्रैव लक्षणायाश्चाश्रयणेन प्रथमः कल्पः। अत्र तु प्रथमत एव वृत्तिद्वयं स्वीकृत्य एक एव शाब्दबोधोऽङ्गीक्रियते इति ततो लाघवमिति भावः। **गौणीगर्भां स्तुतिलक्षणामिति** तथाच यजमानकार्यकारित्व समान जातीयकार्यकारित्व प्रयोज्य प्राशस्त्यवान् यजमान पदार्थः। **तदन्वयेति**, आख्यातार्थान्वयेत्यर्थः। **एक एवेति**, गौण्या प्राथमिकोऽवान्तरबोधः ततो लक्षणयाऽन्यो बोधः प्रथमकल्पे। अत्रत्वेक एव शाब्दबोध इति भावः। वा शब्दः पक्षान्तरसूचकः। पूर्वपक्षी स्वाशयं विशदयति **कृतमिति**, अलमित्यर्थः मास्तु विध्यन्वय इति भावः। विध्यर्थवादयोर्वाक्यैकवाक्यतयान्वय इत्याह – **वाक्येति, तदाकाङ्क्षितेति** विधिनिषेधापेक्षितद्वेषोत्साहा पनयनस्य, अर्थवादापेक्षितप्रयोजनस्य च पूरणोपपत्तेरित्यर्थः, वाक्यैकवाक्यतयैवेत्येव शब्देन पदैकवाक्यताया व्यावृत्तिः, तथा चैतादृशः प्रशस्तः प्रस्तरो बर्हिरुपरिस्थापयितव्य इत्यर्थः सिध्यतीति भावः, अयं कल्पो वाक्य भेदरूपदूषणग्रस्त इत्याह – **वाक्ये इति**। एकवाक्यत्वे संभवतीत्यन्तः सिद्धान्तः, परमते दूषणम् – वाक्यभेदस्या न्याण्यत्वादिति। पुनः पूर्वपक्षी पर्यनुयुङ्क्ते – **नचेति** – अस्मच्छब्देन पूर्वपक्षिणो ग्रहणम्। स हि पदे लक्षणां स्वीकृत्य लक्ष्यार्थस्याध्याहृताख्यातार्थेन्वयो न विधाविति खलु प्रतिपादितवान्, तदुपरि वाक्यभेददूषणं दत्तवान् सिद्धान्ती। पूर्वपक्षी तं दोषमिदानीं परिहरति। **पश्यमृग इति** मृगस्य धावनभावनायां स्वनिष्ठकर्तृत्वनिरूपकतासंबन्धेनान्वये तादृश भावनायाः कर्मतासंबन्धेन दर्शन भवनायामन्वयः स्वीकृतः तद्वदित्यर्थः। **प्रकारतयेति**, अध्याहृताख्यातार्थ भावनायाः सादयत्यादि विध्यन्वयः प्रकारतयेति भावः। **एकवाक्यतोपपत्तिरिति** अतो लघुभूता मदुक्तसरणिरेव युक्तेति भावः। तन्मतं दूषयति, **आख्यातार्थस्येति**,

''भावप्रधानमाख्यात'' मिति स्मृतेः संकोचे प्रमाणाभावादाह — **मुख्यविशेष्यकत्वेति स्योनमिति**, ''स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि'' तस्मिन् सीदामृते प्रतितिष्ठ ''व्रीहीणां मेध सुमनस्यमान'' इति मन्त्रः। हे पुरोडाश, स्योनं = सुखहेतुं सदनं करोमि, घृतस्य धारया सुशेवं = सुखशयनयोग्यं कल्पयामि, तस्मिन् = सदने सीद हे व्रीहीणां मेध = सारभूत, सुमनस्यमानः = प्रीयमाणः सन्, अमृते = मरण रहिते तस्मिन् प्रतितिष्ठेति तदर्थः, तत्र कृणोमि सीद, प्रतितिष्टेत्यनेकाख्यातानां सत्त्वा न्नैकवाक्यत्वमिति सर्वसंमतम्, तद्वदित्यर्थः विपक्षे बाधकमाह — **अन्यथेति** भावप्रधानमिति स्मृतेः संकोचेनैकाख्यातार्थस्य विध्यादावन्वयेनैकवाक्यत्वाङ्गीकारे इत्यर्थः। **प्रयाजाद्यङ्गभावनाया अपीति** अयमर्थः — द्वयोः पदसमुदाययोरबाधितान्वयबोधजनकत्वेन लब्धवाक्यव्यपदेशयोर्यद् एकवाक्यत्वं तद् वाक्यैकवाक्यत्वम्, एतदेव प्रयाजाद्यङ्गवाक्याधिकार वाक्ययोः संभवति, प्रयाजादि वाक्येषु फलाश्रवणेपि विधेरिष्ट भाव्यकत्वानुरोधेन सामान्यतः किञ्चिदिष्टोद्देशेन प्रयाजादिविधायकतया जनितशाब्दबोधान्यपि तद्वाक्यानि फलान्तरकल्पनाभिया फलविशेषसाकाङ्क्षाण्यपि प्रधानविध्येकवाक्यतां भजन्ते, प्रधानवाक्यमपि, यागेन स्वर्गं भावयेत्, कथमित्याकाङ्क्षया प्रकारविशेषसाकाङ्क्षमित्थमंश पूरकाङ्ग वाक्यैकवाक्यतां भजते, एष चार्थः प्रकरणाधिकरणे श्रीपार्थसारथि मिश्रैः प्रदर्शितः। भवदुक्तरीत्याश्रयणे अङ्ग भावनाया अपि इतिकर्तव्यतासंबन्धेन प्रधान भावनान्वयस्य दुर्वारतया सर्वस्याप्येकवाक्यता प्रसज्येत। सात्वनिष्टे-ति तदाह — **प्रधानभावनान्वयापत्तेरिति** सर्वस्यापि = दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत''समिधो यजति, तननपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीत्यादेः प्रयाजादिवाक्य सहितस्य सर्वस्यापि वाक्यकदम्बस्य। तर्हि ''पश्य मृगो धावती''त्यत्र कागतिरित्यत आह — **पश्यमृग इति** दृशेः सकर्मकत्वादाह — **कर्मान्वयं विनेति** कर्मान्तरस्यानुपादानादाह — **धावनभावनाया इति,** नन्वेवमेतादृशीरीतिः प्रकृतेपि स्वीक्रियता, मित्यत आह — **न हीति** तदपर्यवसानम् = शाब्दबोधापर्यवसानम्। अन्यथातिप्रसङ्गः स्यादित्याह — **वाक्यमात्रस्येति** पूर्वपक्षिणो मतदूषणमुपसंहरन् स्वसिद्धान्तं निगमयति **तस्मादिति** — निरुक्तदोषसद्भावादित्यर्थः, परमतमनुवदति — **यजमानपदमात्रे इति** मात्रग्रहणं वाक्यव्यावृत्यर्थम्। तत्र दोषं प्रदर्शयति — **वाक्यभेदापत्तेरिति** — स्वमतं दर्शयति — **वाक्ये इति।**

**वस्तुतस्तु आख्यातद्वयसत्त्वे वाक्यभेदस्यादोषत्वेन वाक्यलक्षणायां प्रमाणाभावः। तेन ''यजमानः प्रस्तर'' इत्यादौ वाक्यैकवाक्यत्वेपि न काचित् क्षतिः। न चैवं जर्तिलयवाग्वा-वा-जुहुया''दित्यादावपि प्राशस्त्यलक्षणया पयोहोमविध्येकवाक्यतानापत्ते र्भिन्न वाक्यतापत्तिः। तत्र वाशब्देनैकवाक्यत्वप्रतीतेः।**

वस्तुतस्तु ''यजमानः प्रस्तर'' इत्यादौ पदलक्षणया वाक्यैकवाक्यतयान्वयः। इयमपि रीतिर्न सर्वत्र किंतु समनन्तरवक्ष्यमाणरीत्या व्यवस्थितेति प्रतिपादयति — **वस्तुतस्त्विति, न चैवमिति** अयमर्थः — तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रश्ने अग्नौ श्रुतम् यद्ग्राम्याणां पशूनां पयसा जुहुयाद् ग्राम्यान् पशूनशुचाऽर्पयेत्। यद्यारण्यानामारण्यान् जर्तिलयवाग्वावा जुहुयाद्, गवीधुकयवाग्वा वा। न ग्राम्यान् पशून् हिनस्ति, नारण्यान्, अथो खल्वाहुः — अनाहुतिर्वैजर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोति। आग्नेयीवा एषा यदजाऽऽहुत्यैव जुहोति, न ग्राम्यान् पशून् हिनस्ति, नारण्यान्'' इति। अत्र पयसा जुहुयादिति विधिः, इतरः सर्वोपि तदेकवाक्यतया तद्धोमस्तुत्यर्थ वादः। समुदाये लक्षणया पदैकवाक्यतयान्वयः। भवदुक्तरीत्याऽवान्तरवाक्यार्थे जातेऽनेकाख्यातसत्त्वे वाक्य भेदस्यादोषत्वात्पयोविध्येकवाक्यता न सिध्यति। तथा च भिन्नवाक्यतापत्तिः वा शब्देन पयोजर्तिलगवीधुक होमानां विकल्पापत्तिश्चे-ति तदेतदाह — **जर्तिलेति** जर्तिलाः = कृष्णतिलाः, गवीधुकाः = तृणतण्डुला इति

भट्टभास्करः। जर्तिलाः = अरण्यतिलाः, गवीधुका = अरण्यगोधूमा इति माधवः। **प्राशस्त्यलक्षणया =** समुदाये तया। **पयोहोमेति,** पयसा जुहोती"त्येत देकवाक्यतानापत्तिः। भवदुक्तरीत्याऽध्याहृताख्यातार्थे नान्वयाद्वाक्यार्थसिध्याऽन्यानपेक्षणात्। ततः किं स्यादत आह – **वाक्यभेदापत्तिरिति,** अनेकाख्यातसत्त्वे वाक्यभेदस्यादोषत्वादिति भावः। तथा च विकल्पापत्तिरिति तात्पर्यम्, समाधत्ते, **तत्रेति** उदाहृतश्रुतिवाक्ये इत्यर्थः। **वा शब्देनेति,** जर्तिलयवाग्वा वा गवीधुकयवाग्वावेति श्रुतिघटक वा शब्देनेत्यर्थः। **एकवाक्यत्वप्रतीतेरिति** अयमर्थः – श्रुतिघटको वा शब्दो न पयः प्रभृतीनां विकल्पविधायकः। तस्य व्रीहियवन्यायादेव सिद्धेः, अपि तु "विषमपि वा भक्षयेत् न तु परान्नं भुञ्जीथाः" इति वदन्यविधानतात्पर्यक एव। अतः सर्वोपि वाक्संदर्भः स्तुतिलक्षणया पयोविध्येक वाक्यतापन्नः स्तुत्यर्थः, एवं चैकवाक्यतापि लभ्यते। जर्तिलयवाग्वा जुहुयादिति न विधिः, वा शब्देन तस्य प्रतिबद्धत्वात्, अतः सोपि पशुनिन्दा द्वारेण पयः प्रशसार्थैव, अत एव न हि निन्दान्यायेन पयोविधिस्तुत्यर्थैव सापि निन्दा, अत्र च स्तुतिरेवं रुपा, यत् असंबद्धस्यापि अविधेयस्य स्तुतिस्तन्निन्दासहकृता विधेयस्य प्रशस्ततरत्वं लक्षयतीति, एवं चात्र वा शब्दबलात्समुदाये लक्षणया एकवाक्यतया पयोविधिस्तुत्यर्थत्वं संपूर्णस्य सिध्यतीति न दोष इति।

**"एकं वृणीत" इत्यादावपि विधायकतया भिन्नवाक्यत्वस्य विकल्पापादकतयाऽनुपपत्ते, रगत्या वाक्ये प्राशस्त्यलक्षणया प्येकवाक्यत्वाङ्गीकरणम्। न हि तत्र "यजमानः प्रस्तर" इतिवदेकस्मिन् पदे लक्षणा मङ्गीकृत्य** लक्षितप्राशस्त्यस्येतरपदार्थेऽन्वयः **संभवति। अत स्तत्र वाक्य एव लक्षणा। तेन यत्रैकस्मिन् पदे प्राशस्त्यलक्षणामङ्गीकृत्य** तस्येतरपदार्थान्वय **मङ्गीकृत्य वाक्यार्थ पर्यवसानम् तत्रार्थवादविध्यो र्वाक्यैकवाक्यता। यत्रतु न तथा, तत्र सर्वत्र वाक्य एव प्राशस्त्यलक्षणामङ्गीकृत्य पदार्थविधयो पस्थितस्य तस्य विध्याख्यातार्थ एवान्वया द्विध्यर्थवादयोः पदैकवाक्यतैवेति युक्तमुत्पश्यामः।**

**तत्सिद्धं लिङादि वाच्या शाब्दी भावना प्राशस्त्यज्ञानाद्यनुगृहीता इष्टसाधनत्वाद्याक्षेपमुखेन मुख्यविशेष्य भूताया माख्यातार्थ कृता वन्वेतीति।**

**(इति विधिवादः समाप्तः)**

नन्वेवमपि "एकं वृणीते" इत्यादौ निरुक्तदोषनादवस्थ्यमेव तथाहि दर्शपूर्णमासयोः श्रूयते "आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते" इति, यजमान पूर्वजभूतो मन्त्र द्रष्टा = ऋषिः तस्यापत्यमार्षेयः, तस्य होत्रोच्चारणं वरणमित्यभिधीयते, तत्र एकमेव वरणविधायकम्, अन्ये तदनुवादा इत्यविवादम्। अन्यथा सर्वेषां विधित्वे वाक्यभेदस्य विकल्पस्य चापत्तेः, अतः "त्रीन् वृणीते" इत्येव विधिः, एकं वृणीते "द्वौ वृणीते" इति त्ववयुत्यानुवादः, अवयविभूतद्वादशकपाल स्तुत्यर्थमष्टकपालादिश्रवणवत्। "न चतुरो वृणीते, न पञ्चातिवृणीते" इत्यपि त्रित्वमात्रविधानेन चतुरादीना मप्राप्तत्वादेव निषेधे प्रयोजनाभावात् "नान्तरिक्षे न दिवी तिव"न्नित्यानुवादस्त्रित्वस्तुत्यर्थ एव। "त्रीन् वृणीते" इत्यस्यैव विधित्वे बीजमिदम्-आर्षेयं वृणीते इति सामान्यं विशेषं प्रति साकाङ्क्षं सत् "त्रीन् वृणीते" इति विहित त्रित्वेनैव विशेष्यते। अन्यथात्रित्वश्रुतेरानर्थक्यान्नित्यवत्प्राप्त्यभावेना,नुवादत्वा संभवात्पाक्षिकानु वादत्वे च नित्यवच्छ्रवण बाधापत्तिः। न चार्षेयवाक्येनैव तद्विधानम्, एकत्वादयः सर्वेप्यर्थवादा एवेति युक्तमिति वाच्यम्। तथात्वे सामान्यविधिना एकत्वादीनामिव चतुः षडादीनामपि प्राप्तौ तस्मिन्निषेधद्वयकरणेन वाक्यभेदस्य दुर्वारत्वात्, त्रित्वमात्रविधाने तु निरुक्तरीत्या तस्य नित्यानुवादत्वा न्न दोषः। अतः "त्रीन् वृणीते इत्यस्यैव विधित्वात्तदतिरिक्तस्य सर्वस्याप्यर्थवादत्त्वात्तदेकवाक्य तापन्नत्वादेकवाक्यतोपपत्तिः सिध्यति, भवदुक्तरीत्याऽनेकाख्यातसत्वे

वाक्यभेदस्यादोषत्वा त्प्रत्येकमेकत्वादीनां विधानापत्त्या निरुक्तसिद्धान्तो भज्येत, न ह्यत्र जर्तिलवाक्य इव एकवाक्यता प्रयोजको 'वा' शब्दोस्तीत्यत अह — **एकं वृणीते इत्यादावपीति** अयमर्थः — आख्यातानेकत्वे वाकयभेदस्यान्यत्रादोषत्वेपि प्रकृते वाक्य भेदोनेष्टः, अन्यथा एकत्वद्वित्वादीनां सर्वेषामपि शास्त्र विहितत्वाद्विकल्पापत्तेः। अतो त्र विकल्पापादकत्वाद्वाक्यभेदस्यायुक्तत्वाद् गत्यन्तरा भावात् "त्रीन् वृणीते" इति विध्यतिरिक्तस्य सर्वस्यापि स्तुतिलक्षकत्वाश्रयणेन तस्य पदैकवाक्यतया विध्यन्वयादेक वाक्यत्वं सम्पादनीय-मिति, तदाह — **विधायकतयेति,** एकं वृणीते, इत्यादीनामेकत्वादि विधायकतयेत्यर्थः भिन्नवाकयत्वस्य = वाक्यभेदस्य। विकल्पापादकतया = एकत्वादीनां सर्वेषामपि शास्त्रविहितत्वेन समबलत्वाद्विकल्पः स्यात्, तदापदकया। अनुपपत्तेः = वाक्यभेदस्यानेकाख्यात सत्त्वेन्यत्रादोषत्वेपि प्रकृतेऽनुपपन्नत्वात्, अगत्या =गत्यन्तराभावेन। वाक्ये = "त्रीन् वृणीते" इति विध्यतिरिक्ते सर्वस्मिन्। **एकवाक्यत्वाङ्गीकरणमिति** तथा च निरुक्तरीत्या "त्रीन् वृणीते" इत्येकमेव वरणविधायकम्। तदतिरिक्तः सर्वोप्यर्थवादः, अत्र विकल्पापत्तिभियैकवाक्यत्वम्। जर्तिलवाक्ये तु निरुक्तरीत्या **वा** शब्दबलेन तत्त्वमिति भावः, ननु "यजमानवाक्य इवैकस्मिन्नेव पदे लक्षणाश्रयाणं युक्तमत आह — **न हीति** तत्र = जर्तिलयवाग्वा वा, एकं वृणीते, इति स्थलद्वये। **इतरपदार्थेन्वय इति।** यजमानशब्दसमानाधिकरणत्वात्प्रस्तरादिशब्दस्य तत्र सा रीति राश्रयितुं सुशका। प्रकृते समानाधिकरण पदाभावादेकस्मिन् पदे लक्षणाश्रयणे लक्षितस्ये तरपदार्थेन्वयस्यासंभवात्समुदायलक्षणैव शरणमिति भावः, उपसंहरति **अत इति** पदलक्षणाया असंभवादित्यर्थः। तत्र = निरुक्तस्थलद्वये। एवं च यजमानवाक्ये पदे लक्षणा, वाक्यैकवाक्यतया चान्वयः। जर्तिलादि वाक्ये तु सा वाक्ये, पदैकवाक्यतया च विध्यन्वय इत्येतावता ग्रन्थेन प्रतिपादितम्। कुत्र पदे लक्षणा, कुत्र वा सा वाक्ये इत्यत्र निष्कृष्य व्याप्तिं दर्शयति — **तेनेति** एकस्मिन् पदे = यजमान इत्याद्येकस्मिन् पदे। तस्य =लक्षितस्य प्राशस्त्यस्य। इतरपदार्थान्वयम् = प्रस्तरादावित्तर पदार्थेन्वयम्। वाक्यार्थ पर्यवसानम् = यजमानकार्यकारित्व समानजातीयकार्यकारित्ववान् प्रस्तर इति बोधस्य पर्यवसानम्। वाक्यैकवाक्यता = प्रस्तरः प्रशस्तः, तेन बर्हिरुपरि सादयेदित्यादिरीत्या। यत्र तु = जर्तिलवाक्यादौ। न तथा = एकपदे लक्षणया वाक्यार्थ पर्यवसानं न। तस्य = प्राशस्त्यस्य। पदैकवाक्यता = प्रशस्तः पयोहोम, प्रशस्तं त्रित्ववरणमित्यादिरीत्या, एवं शाब्दभावनाया इतिकर्तव्यताकाङ्क्षाऽर्थ वादलक्षित प्राशस्त्यान्वयेन शमनीयेति प्रक्रान्तमर्थं प्रतिपाद्य विधिप्रकरणार्थमुपसंहरति **तत्सिद्धमिति—**

**(इति विधिवादः समाप्तः)**

# अथ भावनावादः

## (तार्किकमतम्)

**नन्वा ख्यातार्थस्य कृतेर्मुख्यविशेष्यत्वे माना भावः। तथाहि – तिङुपात्तैकत्वादिसंख्या अन्याविशेषणीभूतप्रथमान्तपदोपस्थाप्ये चैत्रादा वाश्रयता संबन्धेना न्वेतीति तावद विवादम्। स च चैत्र ओदनं पचतीत्यत्र कर्त्राख्याते चैत्रः, ओदनः पच्यते चैत्रेणेत्यत्र कर्माख्याते चौदनः, तस्यैवान्याविशेषणत्वात्। इतरस्य कर्मत्वादिविशेषणत्वात्। अत्रच "चैत्र इव गच्छति मैत्र" इत्यादौ चैत्रे प्रथमान्तपदोपस्थाप्येपि न तिङुपात्तसंख्यान्वयः। तस्य इवशब्दार्थे सादृश्ये प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात्, अपितु मैत्र एव। अत एव चन्द्र इव मुखं चन्द्रश्च भासत इत्यत्रो भयत्र संख्यान्वयः। उभयो रप्यन्याविशेषणीभूतपदोपस्थाप्यत्वात्। भावाख्याते धात्वर्थस्या न्याविशेषणत्वा त्तत्र संख्यान्वयवारणार्थं 'प्रथमान्ते' ति।**

**अत श्च तद्वदेव आख्यातोपात्तार्थभावनाया अपि तस्मिन्नेवा श्रयतासंबन्धेनान्वयः, न तु तस्या मुख्यविशेष्यत्वम्। कालादिव्यतिरिक्ताख्यातार्थप्रकारक शाब्दबुद्धित्वावच्छिन्नं प्रत्युक्तविधप्रथमान्तपदजन्योपस्थितिः कारणमित्येक कार्यकारण भावकल्पने लाघवा दिति चेत्।**

गते ग्रन्थे शास्त्रप्रमेयस्य धर्मस्य वेदबोधितेष्टसाधनताकत्वं लक्षणं निरूप्य वेदेनेष्टसाधनताबोधनप्रकार प्रति पादनमुखेन नैयायिकाभिमतं लिङर्थं सपरिकरं दूषयित्वा स्वमतेन च तं निर्धार्याऽन्ते "तत्सिद्धं लिङादिवाच्या शाब्दी भावना प्राशस्त्यज्ञानाद्यनुगृहीता इष्टसाधनत्वाद्याक्षेपमुखेन मुख्यविशेष्यभूतायामाख्यातार्थ कृतावन्वेती"त्युपसंहृतम्। तत्राख्यातार्थकृतेर्मुख्यविशेष्यत्वे विप्रतिपन्नो नैयायिकः प्रत्यवतिष्ठते **नन्वित्यादिना मुख्य विशेष्यत्वे इति** कृतेराख्यातार्थ त्वमभ्युपेमः, तस्याश्च प्रकृत्यर्थापेक्षया विशेष्यत्वमपि स्वीकुर्मः, परंतु तस्या मुख्यविशेष्यत्वे विप्रतिपद्यामह इति भावः, **मानाभाव इति** पण्डितश्चैत्र इत्यादिवाक्यात्पण्डिताभिन्नश्चैत्र इति बोधोनुभवसिद्धः, न ह्यत्राख्यातार्थस्य मुख्यविशेष्यतया भानमिति शक्यते वक्तुम्। आख्यातस्यैवाऽश्रवणात्। अतस्तस्यास्तत्वं नाङ्गीकार्यमिति भावः। तस्याः अन्यत्र विशेषणत्वमित्येव युक्तमित्याह – **तथा ही त्यादिना अन्याविशेषणीभूतेति** अन्यत्राविशेषणीभूतो यः प्रथमान्तपदोपस्थाप्यस्तत्रेत्यर्थः। कर्त्राख्यातस्थलाभिप्रायेणाह – **चैत्रेति** चैत्रस्तण्डुलं पचतीत्यादावित्यर्थः। आदिना चैत्रेण पच्यते तण्डुल इत्यादौ तण्डुलादेर्ग्रहणम्। **अविवादमिति** आख्यातवाच्यासंख्यागुणिन माकाङ्क्षते। द्रव्यरूपश्चैत्रादिः संख्यामपेक्षते। अत उभयाकाङ्क्षया सा तत्रान्वेतीति निश्चप्रचमिति भावः। तत्पदोपस्थाप्यः कीदृश इत्याकाङ्क्षायां तं विशिष्य दर्शयति **स चेति** तत्पदोपस्थाप्यश्चेत्यर्थः। तस्यैव = चैत्रतण्डुलरूपार्थस्यैव। इतरस्य = कर्त्राख्याते तण्डुलस्य कर्माख्याते चैत्रस्य। कर्मत्वादीत्यत्रादिपदेन कर्माख्याते तृतीयार्थकर्तृत्वस्य ग्रहणम्। अन्याविशेषणीभूतेति विशेषणस्य फलमाह – **अत्रेति** तस्य = चैत्रस्य, अत एव = अन्याविशेषणी भूतेति सामान्यरूपेण कथनादेव। तादृशः प्रथमान्तार्थ एक एवेति नियमाभावादिति यावत्। प्रथमान्तेत्यस्य प्रयोजनमाह – **भावाख्यात इति** चैत्रेण सुप्यत इत्यादौ चैत्रवृत्तिः स्वाप इति धात्वर्थस्वापस्यैव मुख्यविशेष्यत्वेन तस्यान्याविशेषण त्वात्तत्र संख्यान्वय वारणार्थमिति भावः। अनेन एतद्ध्वन्यते यद् – नैयायिकमते सति संभवे प्रथमान्तार्थमुख्यविशेष्यको बोधः, असंभवे तु अन्यार्थविशेष्यक एव सः, यथा भावाख्याते धात्वर्थमुख्यविशेष्यकः। केवलं पचतीत्युक्ते आख्यातार्थकृतिमुख्यविशेष्यकः, भूतले न घट इत्यादौ निपातार्थमुख्यविशेष्यकः, मीमांसकवद् वैयाकरणवद्वा नास्माकं सर्वत्रापि प्रथमान्तार्थमुख्यविशेष्यक एव

शाब्दबोध इत्याग्रहः मीमांसका हि सर्वत्राख्यातार्थ मुख्यविशेष्यक एव बोधः इत्यागृह्णन्ति। वैयाकरणाश्च सर्वत्र धात्वर्थमुख्यविशेष्यक एव बोध इत्यागृह्णन्ति – इति। एवं संख्यायास्तादृश-प्रथमान्तपदोपस्थाप्येन्वयमुपपाद्य तं प्रकृते योजयति **अतश्चेति**। संख्यायास्तत्रान्वयादित्यर्थः तद्वदेव = संख्याया इव, एकपदोपात्तानामेकविशेष्यगामित्वनियमादाह – **आख्यातोपात्त भावनाया अपीति** आख्यातार्थ भावना व्यापार रूपा व्यापारिणमाकाङ्क्षते, प्रथमान्तार्थश्च निर्व्यापारो व्यापारमाकाङ्क्षते। अत उभयाकाङ्क्षयोरुभयोरन्वयो युज्यत इति भावः। तस्मिन्नेव = संख्याविशेष्य भूते तादृश प्रथमान्तपदोपस्थाप्य एव। प्रतिज्ञातार्थमुपसंहरति – **नतु तस्या मुख्यविशेष्यत्वमिति**। तस्याः = आख्यातार्थकृतेः, अस्मन्मते कार्यकारणभाव लाघवमपीत्याह – **कालादिव्यतिरिक्तेति** करोतीत्यादौ धात्वर्थे, पचतीत्यादावाख्यातार्थकृतौ कालस्यान्वयात् कालादिव्यतिरिक्तेति।

## (तार्किकमतनिराकरणम्)

**उक्तप्रथमान्तार्थस्यैवा धेयतासंबन्धेन कृता वन्वयस्य कालादिवत्संभवेन तादृशकार्यकारण-भावकल्पन एव नियामकाभावात्। न ह्याख्यातार्थभावनायाः प्रथमान्तार्थं प्रति प्रकारत्वेनै-वान्वयबोध इत्यत्र नियामकं किञ्चि दस्ति। जैमिनिपाणिन्याद्यनुभव विरुद्धानुभवस्य शपथ-निर्णेयत्वात्। "तद्भूतानां क्रियार्थेन समाम्नायः" 1-1-25 इति जैमिनिना क्रियामुख्यविशेष्य-कानुभवस्योक्तत्वात्। नचैवं गौतमानुभवोप्यस्ति।**

आख्यातार्थकृतेराश्रयतासंबन्धेन प्रथमान्तार्थेन्वयः। संख्यावदिति नैयायिकमतमयुक्तं, तथैव स्वीकारे नियामका भावादित्याशयेन स्वमतोपन्यासपूर्वकं तद् दूषयति।

**उक्तेति** उभयवादिसमतत्वादाह **कालादिवदिति** – कालस्य कृतावन्वयः सर्वसंमतः, तद्दृष्टान्तेन प्रथमान्तार्थस्यापि कृतावेवान्वयः स्वीकार्य इति भावः। **नियामकाभावादिति** आख्यातार्थकृतेराश्रयता-सम्बन्धेन प्रथमान्तार्थेन्वय इति स्वीकारे निर्णायकस्य प्रबलप्रमाणस्याभावादित्यर्थः। तदेवाह – **न हीति** प्रथमान्तार्थस्य भावनायां प्रकारत्वमिति स्वमतनिर्णायकम् ऋष्यनुभवं प्रदर्शयन् नैयायिकमतं दूषयति – **जैमिनिपाणिन्यादीति** आदिपदेन यास्कपतञ्जल्यादीनां ग्रहणम्। जैमिन्यादयो भावनाविशेष्यकबोधं स्वानुभव सिद्धं ब्रुवते, तद्विरुद्धो नव्यनैयायिकानामनुभव, स्तस्य शपथनिर्णेयत्वा, दतस्तन्नयुक्तमिति भावः। प्रथमाध्याय प्रथमपादे सप्तमे वाक्याधिकरणे सिद्धान्तसूत्रमाह – **तद्भूतानामिति**, तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वा"दिति संपूर्णं सूत्रम्। सूत्रे तच्छब्देन पदार्थानां परामर्शः, भूतशब्दो विद्यमानार्थकः क्रियाशब्देनांशत्रयविशिष्टा भावनाभिधीयते, अर्थशब्दः प्रयोजनपरः, समाम्नायशब्द उच्चारणार्थकः, तथा चायमर्थः – तद्भूतानां = तेषु पदार्थेषु विद्यमानानां पदानाम्। क्रियार्थेन = अंशत्रयविशिष्ट भावनाप्रतीतिरूपप्रयोजनोद्देशेन समाम्नायः = संभूयोच्चारणम् अर्थस्य = वाक्यार्थस्य, तन्निमित्तत्वात् = पदार्थ निमित्तकत्वादिति, अत्र भावनायाः प्रयोजनत्व कथनेन तस्याः प्राधान्यं लब्धम्, यत्प्रयोजनं तदेव खलुमुख्यम्। एवं च पदानां संभूयोच्चारणस्य भावनायाः प्रयोजनत्वं सूत्रेण प्रतिपाद्यते, अतस्तत्प्रधानक शाब्दबोधो जैमिनि मुनिना स्पष्टमेव स्वानुभवसिद्धतयोच्यते इति भावः। इति = इत्यादिसूत्रेण। क्रियार्थेनेति पदप्रयोगादाह – **उक्तत्वादिति** "धातुसम्बन्धे प्रत्ययाः 3-4-1 इति सूत्रयतो भगवतः पाणिनेरपि क्रियामुख्यविशेष्यको बोध एवाभिमतो, न तु प्रथमान्तार्थमुख्यविशेष्यकः तथाहि – कालान्यत्व प्रतिपादकमिदं विधिसूत्रम्। संबन्धस्य द्विष्टत्वात् धात्वोः संबन्धो धातुसंबन्ध इति द्विवचनान्तेन समासः। धातुशब्देन तदर्थो गृह्यते। तथा च धात्वर्थयोः संबन्धे यस्मिन् काले प्रत्यया विहिता, स्ततोन्यत्रापि काले स्युरिति सूत्रार्थः, उदाहरणम् – वसन् ददर्श। वस धातोः वर्तमाने लट् – 3-2-123 इत्यनेन वर्तमानकाले लटि शतरि वसन्निति रूपम्, ददर्शेत्यत्र भूते लिट्, एवं लट्

लिटोर्भिन्नभिन्नकालयोर्विधानात् तदर्थयोरन्वयो नोपपद्यते, एवं स्थिते अनेन सूत्रेण प्रयोगे श्रूयमाणानां प्रत्ययानां कालान्तरे विधानां क्रियते। तेन शतृप्रत्ययस्य भूतकाले साधुत्वं सिध्यति, अतोऽर्थापत्त्या तदर्थको लडपि कल्प्यते। एतेन "अनेन लटचपि पुनर्व्यापारे मानाभावाच्छता दुर्लभ इत्यपास्तम्। वसन् ददर्शेत्यत्रानेन शतु भूतार्थकतया अतीतवासकर्तृकर्तृकमतीतं दर्शनमिति बोधः सिध्यति। ननु भूते लडिव वर्तमाने लिडित्यपि स्वीकारेऽन्वयोपपत्तिरिति चेत्सत्यम्। परंतु प्रधानक्रियानुरोधेनाऽप्रधानक्रिया-वाचिभ्यः कालान्तरे प्रत्यय इत्यवश्यमङ्गीकार्यम्। गुणानां प्रधानानुरोधित्वात्। प्रकृते तिङन्त वाच्यक्रियाया मुख्यविशेष्यतया वसन्निति नाम्नः सत्वप्रधानतया प्रत्ययार्थं प्रति क्रियाया गुणभूततया प्रधानानुरोधेन वसन्नित्यत्र कालान्तरे लट्, न तु कालान्तरे लिडिति व्यवस्थासूपपादा, तिङन्तार्थक्रियायाः प्रथमान्तार्थविशेषणत्वे तु तिङन्त कृदन्तोपस्थाप्ययोरुभयोरपि क्रिययोर्विशेषणत्वाविशेषात् तद्-व्यवस्थायाः सूत्रसंमताया भङ्ग एव स्यात्, तथा च भूते लडिव वर्तमाने लिडित्यपि स्यात्, अतो निरुक्तव्यवस्थान्यथानुपपत्या तिङन्तोपस्थाप्य क्रियाया एव मुख्यविशेष्यत्वमास्थेयम्। न तु प्रथमान्तपदोपस्थाप्यविशेषणत्वं तस्याः। एवं च पाणिनिरपि क्रियामुख्यविशेष्यकमेव बोधं स्वानुभवसिद्धमनेन सूत्रेण ब्रूत इति बोध्यम्। न च = नहि। एवं= जैमिनिपाणिन्याद्यनुभववत्, गौतमानुभवः = प्रथमान्तार्थ मुख्यविशेष्यक शाब्दबोधे तदनुभवः। गौतममुनिना तादृशसूत्राप्रणयनात्। एवं च ऋष्यनुभवविरुद्ध एवायं नव्यनैयायिकानुभव इति भावः।

**किंच संख्याया अपि तिङुपात्ताया नैव नामार्थे चैत्रादावन्वयः, तस्य प्रथमोक्तसंख्यावरोधात्। न च तस्याः साधुत्वार्थत्वा न्नावरोधकत्वम्, एकपदोपात्तत्वप्रत्यासत्त्या झटित्युपस्थिताया स्तस्या अन्वयेन विलम्बोपस्थिताया स्तिङुपात्ताया एव साधुत्वार्थकत्वौचित्यात्**

**न च चैत्रो मैत्रश्च गच्छतः, इत्यत्र द्वित्वान्वयानुभवानापत्तिः, द्वित्वान्वयानुभववत् सुपा प्रत्येकैकत्वान्वयानुभवस्याप्यपह्नोतु मशक्यतया वश्य मेकस्या नुभवस्या शाब्दत्वे वाच्ये पदान्तरोपात्तद्वित्वस्यैव तदौचित्यात्।**

नन्विदमयुक्तम् — प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्यालौकिकत्वाभावेन पारमर्षानुभवैक-शरणत्वाभावात्, येन तदभावे तन्निर्णयो न स्यात्। किं च "तद्भूतानामित्यादि जैमिनि सूत्रमपि सिद्धार्थक्रिययोर्मध्ये क्रियायाः प्राधान्यमित्यर्थबोधकमेव, न तु तस्या मुख्यविशेष्यत्वमित्यर्थपरम् — तस्य तत्वानियतत्वात्, पर्वतो वह्निमान् पर्वते वह्निरित्यत्र विधेयत्व निबन्धन प्राधान्यस्य वह्नावेवानु-भूयमानत्वात्। किं च "धातुसम्बन्धे प्रत्ययाः" इति पाणिनिसूत्रं न भवदुक्तार्थसाधकम्। पचन् पाचक इत्यादौ कृदन्ते क्रियायाः स्वप्रत्ययार्थं प्रतिनियमेन विशेषणतयैव भानेन तिङन्ते क्रियायाः प्रथमान्तार्थं[1] प्रति विशेषणत्वेपि स्वोत्तर वर्ति प्रत्ययार्थनिष्ठविशेषणतानिरूपित विशेष्यतावैशिष्टयेनैव भानेन कृदुपात्त-क्रियापेक्षया तिङन्तोपस्थाप्य क्रियायां विशेष्यतायाः सत्वेन तदनुरोधेन गौणत्वात् कृदुपस्थाप्य कालस्यैव बाधो, न तिङुपस्थाप्य कालस्येति प्रथमान्तार्थमुख्यविशेष्यकबोध स्वीकारेपि वसन् ददर्शेत्यत्र निरुक्तव्यवस्थाया नानुपपत्तिः क्रियायाः मुख्यविशेष्यत्व एव सा व्यवस्थोपपाद्येत्यत्र न मानम्। अधिकमस्मदीये लधुमञ्जुषाव्याख्यायाने नागेश भावप्रकाशे द्रष्टव्यमित्यत आह **किञ्चेति**

1. चैत्रः पचतीत्यादावाख्यातार्थः कत्रादिः, स च प्रकृत्यर्थे विशेषणम्। तादृश धात्वर्थस्याश्रयता सम्बन्धेन प्रथमान्तार्थेऽन्वयः। तथा च एक कर्तृविशिष्टपाकाश्रयश्चैत्र इति ततो बोधः। एतच्च "नन्वेवं प्रथमान्तसमभिव्याहारे एक कर्तृविशिष्ट क्रियाश्रयो देवदत्त इति प्रथमान्तविशेष्यकबोध एवास्त्वि" ति लघुमञ्जूषायां तिङर्थवादे वैयाकरणनागेशेन प्रदर्शितम्। तदनुसृत्य एतद् ग्रन्थप्रवृत्तिरिति बोध्यम्।

आख्यातार्थसंख्यायाः प्रथमान्तपदोपस्थाप्येन्वयमवष्टभ्य तद्बलेन तदर्थकृतेरपि प्रथमान्तपदोपस्थाप्य एवान्वयो नैयायिकेन स्वीक्रियते। तदसंगतम्। संख्या एव प्रथमान्तार्थे न्वयायोगादित्याह – **संख्याया अपीति** तस्य = चैत्रादेः, **संख्यावरोधादिति** प्रथमाविभक्त्यर्थसंख्यया शान्ताकाङ्क्षत्वात्तत्र तिङर्थसंख्याया अन्वयो न घटत इति भावः। तस्याः = प्रथमायाः, **साधुत्वमात्रार्थत्वादिति** "न केवला प्रकृतिः प्रयोक्तव्ये" ति नियमपरिपालनार्थं तस्याः प्रयुक्तत्वेन संख्याबोधकत्वाभावान्नावरोधकत्वमिति भावः, समाधत्ते **एकपदेति**। अयमर्थः – प्रथमाया अनुशासनबलादर्थवाचित्वं पुरस्ताद् व्यवस्थापयिष्यते। अतो न तस्याः साधुत्वमात्रार्थत्वम्। एवं च चैत्रः पचतीत्यादावुभाभ्यामपि सुप्तिङ्भ्यामेकत्वसंख्या बोध्यते। तयो श्चैकत्वयोरेक श्चैत्र एवाश्रयः, तत्र किमुपात्तायाः संख्याया श्चैत्रेन्वय इत्यपेक्षायामेकपदोपात्तत्वप्रत्या-सत्त्या सुबुपात्तैकत्वस्यैवान्वयेन तावता नैराकाङ्क्ष्याद्भिन्नपदोपात्तैकत्वस्य तत्रान्वयाभाव इति स्पष्टमेव। अतस्तिङोऽनुवादत्वमेव संख्याविषये – इति। तस्याः = सुबुपात्तैकत्वसंख्यायाः। भिन्नपदोपात्तत्वादाह **विलम्बेति** साधुत्वमात्रार्थत्वात् = अनुवादमात्रार्थत्वात्, सुप्तिङोः समान वचनस्थले एवं वक्तुं शक्यत्वेपि तयोर्भिन्नवचनत्वे नैवं वक्तुं शक्यत इत्याशयेन नैयायिकः प्रत्यवतिष्ठते, **न चेति** एवं = समानपदोपात्तत्वप्रत्यासत्त्या सुबर्थसंख्यायाश्चैत्रादावन्वयाभ्युपगमे। **द्वित्वान्वयेति**, चैत्रमैत्रगतत्वेन द्वित्वमनुभूयते, परंतु विलम्बोपस्थितत्वेनाख्यातार्थद्वित्वस्य तत्रान्वयायोगात्तदनुभवस्यासिद्धिः। अतस्त-दनुरोधेनाख्यातार्थसंख्याया एव चैत्रादावन्वयः कार्य इति भावः। समाधत्ते – **द्वित्वान्वयेति** समुदाये तदनुभववदित्यर्थ, विनिगमकं दर्शयति – **पदान्तरोपात्तेति**, तदौचित्यात् = अशाब्दत्वौचित्यात्। एवं चाख्यातोपात्तायाः संख्यायाश्चैत्रादावन्वयायोगात्तदवष्टम्भेन तदर्थकृतेस्तत्रैवान्वयं प्रत्याशानकार्येति प्रकृतप्रघट्टकार्यः।

**वस्तुतस्तु तिङां लाघवानुरोधेन कृतौ शक्तावपि वक्ष्यमाणरीत्या कर्त्रादे र्निरूढलक्षणया भानस्या वश्यकत्वात्तत्र चैकपदोपात्तत्वप्रत्यासत्त्या संख्याया अन्वयेन न कुत्रापि तस्याः प्रथमान्तेऽन्वयः।**

**अतश्च "एकपदोपात्ताना मेकविशेष्यकत्व मौत्सर्गिक" मितिन्यायेन एककार्यकारण भावकल्पनालाघवानुरोधेन च यदि संख्याविशेष्ये भावनान्वय इत्याग्रहः, तदाऽस्त्वाख्यातलक्ष्ये एव कर्त्रादा वुभयान्वयः, नतुप्रथमान्तपदोपस्थाप्ये। यथाचैवं सति भावनायास्तं प्रत्यपि मुख्यविशेष्यत्वम्। तथाग्रे निरूपयिष्यामः।**

सुप्तिङोः समानवचनत्वं भिन्नवचनत्वं वास्तु। सर्वथापि न कुत्राप्याख्यातार्थसंख्यायाः प्रथमान्तार्थेन्वय इत्याह – **वस्तुतस्त्विति** लाघवानुरोधेन = कृतित्वरूपशक्यतावच्छेदकलाघवेन, कर्तरिशक्तौ तु कृतिरूपतदच्छेदकगौरवं, तासांनानात्वात्, वक्ष्यमाणरीत्या = "लाघवादनुशासनाद्धर्मिज्ञानानुरोधादा-ख्यातस्य कर्त्रादौ लक्षणे" ति वक्ष्यमाणरीत्या, कर्त्रादेरित्यादिपदेन कर्मणो ग्रहणम् – लः कर्मणि च भावे चाकर्मकेभ्यः – 3-4-69 इत्यनुशासनादाह – **निरूढलक्षणेति आवश्यकत्वादिति** पचतीत्युक्ते कीदृग्विध इति प्रश्नोपपादक धर्मिज्ञानार्थमावश्यकत्वादित्यर्थः। तत्र च = लक्षिते कर्त्रादावेव, तस्याः = तिङर्थसंख्यायाः अतश्च = निरुक्तार्थस्वीकाराच्च, एकपदोपात्तानामिति। अयं च न्यायो लाघवमूलकः, अन्यथा भिन्नभिन्नयोविशेष्यत्वेऽनेक कार्यकारणभाव स्वीकारापत्तेः, एव कारार्थयोर्भेदवान् अभाव इत्यनयोर्भिन्ने विशिष्येऽन्वयादुक्त" मौत्सर्गिकमिति, न्यायबीजमेवाह – **एककार्यकारणभावेति** उभयान्वयः = आख्यातार्थसंख्याभावनयोरन्वयः, नैयायिकोक्तं निषेधति – **न तु प्रथमान्तपदोपस्थाप्ये इति**। ननु लक्ष्यार्थे भावनान्वये लक्ष्यार्थस्यैव प्राधान्यापत्त्याभावनाप्राधान्यवादस्त्वदीय उच्छिद्येतेत्यत

आह – **यथा चेति** एवं सति = लक्ष्यार्थे भावनान्वये सति। तं प्रत्यपि = लक्ष्यकर्त्रादिकं प्रत्यपि। अग्रें = कर्तृलक्षणावादप्रसङ्गे निरूपयिष्यामः = "तदपि न भावनां प्रति विशेष्यं, किंतु भावनैव तद्विशेष्ये" त्यादिग्रन्थेन।।

**किंच भवन्मते कालाद्यतिरिक्ताख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेना ख्यात-पदज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन प्रथमान्तनामपदजन्याऽन्या-विशेषणीभूतार्थविशेष्यकोपस्थितित्वेन कारणते त्येवं कार्यकारणभावः पर्यवसन्नः। न चासौ संभवति, न पचति चैत्रः, पचत्येवचैत्रः पचत्यपि चैत्र इत्यादावाख्यातार्थभावनाया श्चैत्र एवा न्वयप्रसङ्गेन नञर्थेऽभावे एवकारार्थान्ययो गव्यावृत्त्येकदेशभेदे अपिशब्दार्थभूते समुच्चये वा अन्वयानापत्तेः। तत्र चैत्रे संख्यान्वयेन 'भावनाविशेष्ये संख्यान्वय' इतिनियमस्यापि व्यभिचारापत्तेश्च।**

**अत एव निपातासभिव्याहृतत्वं ना ख्यातेत्यस्य विशेषणम्। संख्याया श्चैत्रेऽन्वयानापत्तेः। नचोक्तकार्यकारणभावे तेन विशेषणेपि निपातासमभिव्याहृतस्थले संख्या भावनयोः पृथक्कार्य-कारणभाव मङ्गीकृत्य स्वस्वविशेष्येऽन्वयोपपत्तिः, अनेककार्यकारण भावकल्पनापत्तेः**

**अस्मन्मते त्वेककार्यकारण भावेनैववक्ष्यमाणरीत्या सर्वेषां भावनान्वयेन भावनाया एव मुख्यविशेष्यत्वा त्तदनापत्तिः।**

आख्यातार्थभावनायाः प्रथमान्तपदोपस्थाप्येन्वय इति नैयायिकमतेनञादिनिपातसमभिव्याहारे व्याभिचारं दर्शयति। **किंच भवन्मत इति** तन्मतसिद्धं कार्यकारणभावं दर्शयति – **कालाद्यतिरिक्तेति** न च = नहि **न पचति चैत्र इति** अत्राख्यातार्थकृतेर्नञर्थेन्वयस्वीकारान्निरुक्तकार्यकारण भावे व्याभिचारः, अन्वयप्रसङ्गेन = तदुक्तकार्यकारणभाववशेन। **एकदेशभेद इति** अन्ययोगव्यावृत्तिरेवकारार्थ इत्याशयेनेदम् समुच्चये वा = समुच्चये च। **अनन्वयापत्तेरिति** – चैत्रस्यैव प्रथमान्तपदोपस्थाप्यत्वात्तत्रैव भावनान्वयः स्यात्। अभावादीनां नञादिनिपातोपस्थाप्यत्वेन प्रथमान्तोपस्थाप्यत्वाभावा तत्र तदनापत्तिरित्याशयः, नियमान्तरस्यापि व्यभिचार इत्याह – **तत्रेति** नञादिसमभिव्याहृतवाक्ये इत्यर्थः। **व्यभिचारापत्तेश्चेति** भावनानन्वयिनि चैत्रादौ संख्यान्वयाद् व्यभिचारः। एवं संख्याविशेष्ये भावनान्वय इति नियमस्यापि व्यभिचारः। संख्याविशेष्ये कर्तरि भावनाया अनन्वयादिति **बोध्यम्**। अत एव = वक्ष्यमाणदोषादेव। **निपातासभिव्याहृतत्वमिति** तेन नञादिसमभिव्याहारे उक्तकार्यकारणभावस्य न व्याभिचार इति भावः। अत एवेत्यस्याशयमाह – **संख्याया इति न चेति** उक्तकार्यकारणभावे निपातसमभिव्याहृतेति आख्यात विशेषणम् **पृथगिति** आख्यातार्थ संख्याप्रकारक शाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितिः कारणम्। तदर्थभावना प्रकारकबोधं प्रति निपातपदजन्योपस्थितिः कारणमिति पृथगेव कार्यकारणभावः स्वीक्रियत इति भावः, स्वस्वविशेष्ये = संख्यायाः स्वविशेष्ये प्रथमान्तार्थे, भावनायाः स्वविशेष्येऽभावादौ च। समाधत्ते। **अनेकेति** एककार्यकारण भावेनैव = निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यः य स्सुबुपात्तलिङ्गसंख्याव्यतिरिक्तोऽर्थः, तत्प्रकारकशाब्द-बुद्धित्वावच्छिन्नं प्रति लिङ्गानन्वयिभावना विशेष्यता सम्बन्धेन पदजन्योपस्थितिः कारणमिति कार्यकारणभावेनैव, भावनान्वयेन = साक्षात्परम्परया वा। तदनापत्तिः = अनेक कार्यकारणभावकल्पना-नापत्तिः। अतो लाघवमिति भावः।

**किंच सर्वनिपातसाधारण्येनापि नैकरूप्यम्, चैत्र एव पचति 'घटएव दृश्यते' इत्यादौ**

**निपातसमभिव्याहारेपि उभयोरपि संख्याभावनयो श्चैत्राद्यन्वयप्रतीतेः। न च क्रियासमभि-व्याहृतनिपातस्थल एव संख्याभावनयो वैरूप्यं, नान्यत्रेति नियमोपि संभवति, पचति नचैत्रः, चैत्रो नपचतीत्यादावुभयथापिवैरूप्यात्। अतो भवन्मते कार्यकारणभावानन्त्याद् व्यभिचाराच्च न प्रथमान्तपदोपस्थाप्यस्य भावनाविशेष्यत्वम्।**

ननु नैयायिकोक्तं युक्तमेव, न च कार्यकारणभावानन्त्यम् तत्तद् व्युत्पत्यनुसारेण तथातथा बोधस्य तेषां तेषां जायमानत्वेन तथा तथा कार्यकारणभावानां सर्वेषामावश्यकत्वेन तल्लाघवगौरवविचारस्यायुक्तत्वा-दित्यत आह – **किञ्चेति ऐकरूप्यमिति** निपातसमभिव्याहारे आख्यातार्थसंख्यायाः प्रथमान्तार्थे, तदर्थभावनाया निपातार्थेऽन्वय इति सर्वनिपातसाधारण्येन नियन्तुं न शक्यत इति भावः। तदेवोपपादयति **चैत्र एवेति** अत्र संख्याभावनयोश्चैत्र एवान्वयान्नैकरूपत्वमिति भावः। चैत्राद्यन्वयेत्यत्रादिपदेन घटस्य ग्रहणम्। ऐकरूप्यं सम्पादयितुं शङ्कते – **न चेति** क्रियासमभिव्याहृत निपातस्थले = न पचति चैत्रः, पचत्येव चैत्रः, पचत्यपि चैत्रः, इत्यादौ। **वैरूप्यमिति** प्रथमान्तार्थे संख्याया निपातार्थे भावनाया अन्वय इत्येवंरूपं वैषम्यमित्यर्थः। अन्यत्र = नामसमभिव्याहृतनिपातस्थले चैत्र एव पचतीत्यादौ। तद् दूषयति, **पचति न चैत्र इति** अयमर्थः – नामसमभिव्याहृतनिपातस्थलेऽत्रापि आख्यातार्थसंख्यायाश्चैत्रेतदर्थ-भावनायाश्चैत्रभिन्नेचान्वयाद्वैरूप्यं तदवस्थमेव, एकत्वविशिष्टो यश्चैत्रस्तद्भिन्नः पचतीति तदर्थात्। अत एव चैत्रभिन्नाः पचन्तीत्यर्थ तात्पर्येण पचन्ति न चैत्र इत्यादयो न प्रयोगाः, अन्यथा चैत्रभिन्ने तदन्वये तत्र बहुत्वस्यापि सत्वात्तत्प्रयोगापत्ति-रिति, **चैत्रो न पचतीति** अत्र संख्यायाश्चैत्रे भावनाया नञर्थाभावे चान्वयः, एकत्वविशिष्टश्चैत्रः पाककृत्यभाववानिति तदर्थः। क्रियासमभिव्याहृतेऽत्र संख्याभावनयो-र्भिन्नविशेष्यकत्वरूपं वैरूप्यं पूर्वपक्षिणः संमतम्। तद्वन्नामसमभिव्याहृतनिपातस्थले पचति न चैत्र इत्यादावपि तद्वैरूप्यं दुर्वारमिति प्रकृतग्रन्थाशयः। तदेतदाह – **उभयथापीति** क्रियासमभिव्याहृत-निपातस्थले नामसमभिव्याहृत निपातस्थले चेत्यर्थः। वैरूप्यात् = संख्याभावनयोर्भिन्नविशेष्यकत्वरूपाद्वै-रूप्यात्।।

**अपिच 'ओदनं पचती' त्यत्र प्रथमान्तपदाभावे कारणाभावादेव भावनाप्रकारकबोधानुपपत्ते रितरसामग्रीवशाद् भावनामुख्यविशेष्यकबोधे बाधकाभावः। न चानुभवानुरोधेन भावना-प्रकारकबोधत्वावच्छिन्नंप्रत्येवाख्यातपदज्ञानस्य कारणत्वं कल्पयित्वा तादृशबोधार्थं प्रथमान्त-पदाध्याहार इति वाच्यम्। अनुभवस्य शपथनिर्णेयत्वेन तत्कार्यकारणभावकल्पने गौरवात्।**

**न च तवापि 'पण्डित श्चैत्र' इत्यादावाख्यातपदाभावे प्रथमान्तस्य मुख्यविशेष्यत्वापत्तिः, सुबर्थप्रकारकबोधत्वावच्छिन्नं प्रत्येव सुब्ज्ञानस्य कारणत्वात्। वक्ष्यमाणरीत्या प्रथमाया अपि संख्यातिरिक्तार्थसद्भावात्। अनतिरिक्तत्वेपि प्रथमान्तनामपदोपस्थप्यप्रकारकबोधत्वा-वच्छिन्नं प्रति प्रथमान्तपदज्ञानस्य कारणत्वकल्पनेन तादृशस्थले आख्यातपदाध्याहारोपपत्तेः। न च विनिगमनाविरहः, स्मृत्यनुमतत्वेन तस्या दोषत्वात्। "अस्ति र्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोप्यस्ति" इत्यनुशासनज्ञानाभावे निरुक्तबोधस्येष्टत्वाच्च**

आख्यातार्थ भावनाप्रकारकबोधं प्रति प्रथमान्तपदजन्योपस्थितेः कारणत्वं न सम्भवतीति प्रतिपादयन् स्वमतसिद्धिं दर्शयति – **अपि चौदनमिति** – यद्यपि नैयायिकमते सर्वत्र प्रथमान्तार्थविशेष्यक एव बोध इति नियमो न, किन्तु सति सम्भवे स इति तैरभ्युपगतं, तथापि ओदनं पचतीति स्थले तैः प्रथमान्तपदाध्याहारेण स निर्वाह्यते, अतो त्र दोष उद्भावव्यते ग्रन्थकृतेति बोध्यम्। **बोधानुपपत्तेरिति**

त्वया भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेः कारणत्वं स्वीक्रियते, प्रथमान्तपदरहिते ओदनं पचतीत्यादौत्वदुक्तकारणाभावात्तत्प्रकारकबोधस्यानुपपत्तिरिति भावः। मद्रीत्या भावनामुख्यविशेष्यक-बोधस्ततो निराबाधः सिध्यतीत्याह – **इतरसामग्रीवशादिति** सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रत्याख्यातपदजन्योपस्थितेः कारणत्वस्वीकारेण प्रकृते आख्यातार्थोपस्थितिरूपकारणसामग्रीवशाद्-भावनाविशेष्यकबोधः सेत्स्यतीति भावः। नैयायिकः स्वाशयमुद्गिरति, **नचेति** तादृशबोधार्थम् = भावनाप्रकारकबोधार्थम्, **प्रथमान्तेति** भावनानिष्ठप्रकारतानिरूपकविशेष्यताविशिष्टार्थबोधकप्रथमान्त-पदस्याध्याहार इति भावः। **शपथनिर्णेयत्वेनेति** न हि भवतो नुभवादेव वस्तुनः सिध्यसिद्धी। सर्वस्यापि स्वस्वानुभवस्यापि व्यवस्थापकत्वापत्याऽतिप्रसङ्गादिति भावः, नैयायिकः प्रतिबन्द्या पर्यनुयुङ्क्ते – **नचेति** तवापि = सुबर्थप्रकारकबोधं प्रत्याख्यातपदजन्योपस्थितेः कारणत्ववादिनस्तवापि मते। **आख्यातपदाभावे इति** आख्यातपदरहिते निरुक्तवाक्ये कारणाभावात्सुबर्थप्रकारको बोधस्तव मते नोदेतीति भावः। तथाच स्वमतसिद्धिरित्याह – **प्रथमान्तस्य मुख्यविशेष्यत्वापत्तिरिति** पण्डित इत्यादौ प्रथमार्थः संख्यामात्रम्। सा च प्रकृत्यर्थविशेषणम्। तथा च एकत्वविशिष्टः पण्डितः। एवमेकत्वविशिष्टश्चैत्र इति प्रथमान्तार्थस्य तत्त्वापत्तिः। पण्डितश्चैत्र इत्यत्र पण्डिताभिन्नश्चैत्र इति प्रथमान्तार्थस्यैव तत्वम्। एवं च मदभीष्टसिद्धिरिति भावः। समाधत्ते – **सुबर्थप्रकारकेति** अयमर्थः – प्रथमाया अपि संख्यार्थकत्वमते सुबर्थप्रकारकशाब्दबोधं प्रति सुब्ज्ञानस्यकारणत्वम्। मतान्तरे तु प्रथमान्तनामपदार्थ प्रकारकशाब्दोधं प्रति प्रथमान्तपदज्ञानस्य कारणत्वं कल्प्यते। उभयत्रापि तन्निर्वाहायाख्यातपदमध्याह्रियते, अतो मत्पक्षे न दोष-इति। ननु प्रथमायाः साधुत्वमात्रार्थकत्वात्कथमे-तत्कायकारणभावोऽत आह **वक्ष्यमाणरीत्येति** प्रथमाविभक्त्यर्थनिरूपणावसरे वक्ष्यमाणरीत्येर्थः। **अर्थसद्भावादिति।** पाणिनिमते चैत्र घटपट इत्यादि प्रातिपदिकार्थश्चैत्रादिरेव प्रथमाया अर्थः। कात्यायनमतेऽभिहितकारकत्वं स इति अग्रे निरूपयिष्यते। प्रथमायाः साधुत्वमात्रार्थकत्वमिति वादिनां मतेनाह – **अनतिरिक्तत्वेपीति** संख्यातिरिक्तार्थाभावेपीत्यर्थः। तादृशस्थले = आख्यातरहिते पण्डितश्चैत्र इत्यादिस्थले। **अध्याहारोपपत्तेरिति** प्रथमान्तार्थ प्रकारकबोधनिर्वाहाय तन्निष्ठप्रकारता-निरूपक विशेष्यता विशिष्टार्थबोधक तत्पदाध्याहारेण प्रकृतार्थोपपत्तेरित्यर्थः। **न च विनिगमनाविरह इति** ओदनं पचतीत्यत्र प्रथमान्तपदाध्याहारो दूषितः, पण्डितश्चैत्र इत्यत्र आख्यातपदाध्याहारः स्वीकृतः, अध्याहारे विनिगमकं नास्तीति न शङ्क्यमिति भावः, स्मृत्यनुमतत्वेन = "अस्तिर्भवन्तीपर" इति कात्यायनस्मृत्यनुमतत्वेन। तस्य = आख्यातपदाध्याहारस्य, नैयायिकमते प्रथमान्तपदाध्याहारे न स्मृत्यनुमतिः, तस्मात्तन्मत मयुक्तमिति भावः। **अनुशासनज्ञानाभावे इति**, अनेनारुचिः सूचिता – तज्ज्ञानाभावे एतद्विचारस्य प्रसक्तिरेव न। शास्त्र ज्ञानवतामेव प्रकृतार्थविचारकरणादिति।

**किंच भावनाप्रकारकबोधत्वावच्छिन्नं** प्रत्याख्यातपदज्ञानत्वेन **कारणत्वे 'चैत्रेण सुप्यते' गगनेन स्थीयते,** इत्यादिभावाख्यातस्थले **प्रथमान्तपदाध्याहारापत्तिः, अथ तत्राख्यातार्थ-विशेष्यकबोधमेवाङ्गीकृत्य** कारणतावच्छेदके **भावाख्यातभिन्नत्वं निवेश्यते, तदा तदपि गौरवम्। अस्मन्मते तु सर्वत्रा ख्यातार्थविशेष्यकत्वाद्भावाख्या तस्थले च कर्तुरनभिधानेन प्रथमान्तस्या प्रसक्तिः।**

नन्वाख्यातार्थभावनाप्रकारकशाब्दबोधं प्रति आख्यातपदज्ञानत्वेन कारणत्वं कल्प्यते, तदनुरोधेन प्रथमान्तपदमध्याह्रियते, "अस्तिर्भवन्तीपर इति न सार्वत्रिकम्। त्वं पण्डितः अहं पण्डित इत्यादौ तावताप्यनिर्वाहात्। अत ओदनं पचतीत्यादौ प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधो निराबाध इत्यत आह **किं चेति चैत्रेण सुप्यत इति** चैत्रवृत्तिः स्वापकृतिरिति ततो बोधः। तत्राप्याख्यातपदज्ञानरूपकारणसत्वा

तत्रापि निरुक्तकार्यकारणभाववशात्तत्प्रकारकबोधस्यैवस्वीकर्तव्यतया तदनुरोधेन प्रथमान्तपदस्याध्याहारापत्तिः, ओदनं पचतीत्यत्रेवेति भावः, **अथेति** निरुक्तरीत्या चैत्रवृत्तिः स्वापकृतिरित्येव बोधः, परंतु आख्यातार्थ भावनाप्रकारकबोधं प्रति भावाख्यातभिन्नाख्याख्यातपदज्ञानं कारणमिति स्वीक्रियत इति भावः। तदपि = कारणतावच्छेदके भावाख्यातभिन्नत्वम्। ननु भवन्मते भावाख्याते का गति रत आह — **अस्मन्मतेत्विति।** गौरवं नास्तीत्याह — **सर्वत्राख्यातार्थेति** **'कर्तुरनभिधानेनेति** लक्षणया कर्तुरनभिधानेनेत्यर्थः। **प्रथमान्तस्याप्रसक्तिरिति** प्रथमाप्रयोजकाभिहितत्वस्याभावात्, नैयायिकमते त्वेवंवक्तुमशक्यम्, तन्मतेऽभिधानानभिधानव्यवस्थाया दुरुपपादत्वात्, एतच्च समनन्तरमेव मूले स्पष्टं भविष्यति।।

**किंच यदि अन्याविशेषणीभूतप्रथमान्ते भावनासंख्ययोरन्वयः, तदा 'चैत्र एव पचति' 'घट एव दृश्यते' इत्यादौ कुत्र भावनासंख्ययो रन्वयः? कथं वा शाब्दबोधः? न तावच्चैत्रादौ, तस्य एवकारार्थभूतान्ययोगव्यावृत्त्येकदेशे भेदे प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात्। नाप्येवकारार्थभूतायां व्यावृत्तौ प्रतियोगिताकत्व संसर्गेण भावनायाः, आश्रयतासंसर्गेण च एवकारार्थभूतेऽन्यस्मिन् संख्याया अन्वयः। तयोः प्रथमान्तपदोपस्थाप्यत्वाभावात्। न चाव्ययोपरि सुपो लोपेन 'दधि तिष्ठती' तिव प्रथमान्तत्वाविरोधः, तथात्वेपि चैत्रे पाकभावनान्वयानुभवानुपपत्तेः चैत्रान्येषु बहुष्वपि चैत्र एव पचतीत्येकवचनप्रयोगाच्च।**

**अत एव पचतिपदस्य व्युत्पत्तिवैचित्र्येण वारद्वयमन्वयमङ्गीकृत्य पाकानुकूलकृतिमच्चैत्रभिन्नः पाकानुकूलकृत्यभावाश्रय इत्येवमेवकारार्थैकदेशविशेष्यकशाब्दबोध इत्यपास्तम्। तद्बहुत्वेन एकवचनस्य तत्रा न्वयानुपपत्तेः, चैत्रस्या न्यविशेषणतया तत्राप्यन्वयानुपपत्तेश्च।**

ननु भावानाप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रत्याख्यातपदज्ञानत्वेन कारणत्वं स्वीक्रियते, कारणतावच्छेदके भावाख्यातभिन्नत्वं न निवेश्यते, तत्राख्यातस्य भावे घञ इव साधुत्वमात्रार्थत्वान्न दोषः, धात्वर्थमुख्यविशेष्यकश्च तत्र शाब्दबोध इत्यत आह **किं चेति** प्रथमान्तपदोपस्थाप्ये अन्याविशेषणेति विशेषणं चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रे संख्याभावनयोरन्वयवारणायोपात्तम्। तत्र दोषमुद्घाटयति, **यद्यन्याविशेषणीभूतेति**, प्रथमान्ते = तदर्थे। अन्वयो दुश्शक इत्याशयेनाह — **कुत्र संख्याभावनयोरन्वय इति** प्रतियोगिताकत्वसंसर्गेण = स्वनिष्ठप्रतियोगिताकत्वसंसर्गेण, यद्वा प्रतियोगितानिरूपकतासंसर्गेण, भावाख्याते धात्वर्थेऽन्वयवारणाय — प्रथमान्तपदोपस्थाप्येत्युक्तं। तत्र दोषं प्रतिपादयितुमाह — **नाप्येवकारार्थेति संख्याया अन्वय इति** तथा च एकत्वविशिष्ट चैत्रान्यवृत्तिः पाकभावनाभाव इति शाब्दबोध इति भावः। समाधत्ते — **तयोरिति** व्यावृत्ति — अन्य एतयोरेवकारार्थयोरित्यर्थः। **प्रथमान्तपदोपस्थाप्यत्वा भावादिति**, चैत्रः घट इत्यादीनामेव प्रथमान्तत्वम्, निपातानां तत्त्वाभाव इत्यभिमानः, तमेव विशदयति **न चेति सुपो लोपेनेति** न एव इवेत्यादीनामपि "अर्थवदधातुरप्रत्ययः प्रातिपदिक" 1-2-45 मित्यनेन प्रातिपदिकत्वात्तेभ्यः सप्तानामपि विभक्तीनामेकव च नान्युत्पद्यन्ते, "अव्ययादाप्सुपः 2-4-82 इत्यनेन लुक् संज्ञकेन लोपेनापहारः, "प्रत्ययलोपे प्रत्ययलक्षणम्" 1-1-62 इति प्रत्ययलक्षणेन प्रथमाद्यन्तत्वमिति भावः। तत्र सम्प्रतिपन्नं दृष्टान्तमाह — **दधीतिवदिति** दधि वारि इत्यादीनामपि सुपोलुका लुप्तत्वेन प्रत्ययलक्षणेन प्रथमान्तत्वम्, तद्वदिति भावः। **प्रथमान्तत्वाविरोध इति** एव शब्दस्य तत्त्वाविरोधे तदर्थस्य प्रथमान्तपदोपस्थाप्यत्वान्न दोष इति भावः, समाधते **तथात्वेपीति** एवकारार्थयोर्व्यावृत्यन्ययोः प्रथमान्तपदोपस्थाप्यत्वेपीत्यर्थः। **अनुभवानापत्तेरिति** त्वया भावनाया एवकारार्थव्यावृत्तान्वयस्वीकारेण एतदनुभवो नोपपद्येतेति भावः दोषान्तरमप्याह — **चैत्रान्येष्विति**

आख्यातार्थसंख्याया एवकारार्थेन्यस्मिन्नन्वयात्तत्र बहुत्वसत्त्वेपि चैत्र एव पचतीत्येकवचान्त एव प्रयुज्यते स नोपपद्यते, पचन्तीति बहुवचनान्तस्य न्याय्यत्वादिति भावः।।

अत एव = एकवचनान्त प्रयोगादेव, व्युत्पत्तिवैचित्र्येण = कार्यकारणभावान्तरस्वीकारेण। चैत्रे पाके भावनान्वयानुभवानापत्तिरपि नास्मन्मत इत्याह – **पाकानुकूलकृतिमदिति**। तद्बहुत्वेन = चैत्रान्यगतबहुत्वेन एकवचनस्य = तदुपात्तैकत्वस्य अन्याविशेषणीभूतेति विशेषणादाह – **चैत्रस्यान्य-विशेषणतयेति**।।

**न च चैत्रपदस्य विशेष्यतया विशेषणतया च वारद्वयमर्थबोधकत्वम्। ततश्च पाकानुकूलकृतिमांश्चैत्रः पाकानुकूलकृत्यभाववां श्चैत्रान्य इति शाब्दबोधः। इतराविशेषणत्वं च मुख्यविशेष्यत्वाभावविशिष्टं यद्विशेषणत्वं तदभाव इति वाच्यम्। तथात्वेपि चैत्रो मैत्रश्च गच्छतः, चैत्रो मैत्रादयश्च गच्छन्ती' तिवद् द्विवचनबहुवचनयोरप्यापत्तेः**

**न च चैत्रो गच्छति, न मैत्र इतिव देकवचनोपपत्तिः, तथात्वे तत्र गच्छतिपदानुषङ्गेण भिन्नवाक्यत्वव दिहापि मुख्यविशेष्यभेदेन भिन्नवाक्यत्वापत्तेः। अस्मन्मतेतु चैत्रवृत्ति श्चैत्रान्यावृत्ति श्चैककर्तृका भावनेति बोधः। भेदेच चैत्रप्रतियोगिकत्वं पार्ष्टिकम्। एवकारस्यैव वा तत्र लक्षणेति न विरोधः।**

**नचेति** अन्याविशेषणत्वमित्यस्य अन्यस्मिन् विशेषणता मनापन्नत्वमिति नार्थः – किन्तु मुख्यविशेष्यत्वाभावविशिष्टं यद्विशेषणत्वं तदभावरूपम्, प्रकृते चैत्रे विशेष्यत्वस्यापि सत्वाद् विशेषणत्वं मुख्यविशेष्यत्वविशिष्टमेव, अतो न दोष इति भावः। स्पष्टं चेदं नैयायिकग्रन्थेषु तथात्वेपि = चैत्रे न्याविशेषणत्वं सम्पाद्य तत्र तदन्वयस्वीकारेपि। **द्विबहुवचनयोरिति** – पाकानुकूलकृतिमति चैत्रे एकत्वं चैत्रभिन्ने विद्यमानमेकत्वं चादाय चैत्र एव पचत इति द्विवचनापत्तिः चैत्रान्यस्मिन् द्वित्वादि सत्वे चैत्र एव पचन्तीति बहुवचनापत्तिः, तत्र दृष्टान्तः – चैत्रो मैत्र श्चेत्यादि – अत्र चैत्र मैत्रादेरिव प्रकृते चैत्र तदन्ययोरपि शब्दोपात्त त्वात्तद्गतसंख्यामादाय निरुक्तप्रयोगो दुर्वार इति भावः। **न च चैत्रो गच्छतीति** अन्याश्रयगत संख्यामादायात्रैकवचनं प्रवृत्तम्। न हि मैत्रे कृत्याश्रयत्वमस्ति, अत एतत्प्रयोगे एकवचनमेव साधु, न द्विवचनम्। तद्वत्प्रकृतेपि चैत्रे पाककृत्याश्रयत्वात्तद्गतमेकवचनमेव प्रवर्तते, न तु पाककृत्यनाश्रय चैत्रान्यगतसंख्यामादाय वचनान्तरमिति भावः। तदाह – **एकवचनोपपत्तिरिति** तद् दूषयति **तथात्वे इति** तद्रीत्या **एकवचनस्योपपत्तिस्वीकारे** इत्यर्थः। तत्र = निरुक्तवाक्ये गच्छति पदानुषङ्गेण = न मैत्र इत्यत्रापि तत्पदसंयोजनेन। भिन्नवाक्यत्वापत्तेरिति एकवाक्यत्वमेव तत्रानुभवसिद्धमिति भावः। ननु त्वन्मते चैत्र एव पचतीत्यत्र कथ शाब्दबोधोऽत आह – **अस्मन्मतेत्विति** – आख्यातार्थभावनामुख्य-विशेष्यकबोधवादिनां न पूर्वोक्तदोषावकाश इत्याशयेनाह – **चैत्रवृत्तिरिति** ननु चैत्रान्यावृत्तिरिति नोपपद्यते, सकृच्छ्रुतस्य चैत्रपदस्य तत्रान्वयायोगादत आह – **भेदे चेति** एवकारार्थैकदेशे भेद इत्यर्थः। पार्ष्टिकः = मानसः। प्राथमिकबोधस्तु चैत्रवृत्तिरन्यावृत्तिरित्येवेति भावः। नन्विदमयुक्तम् – चैत्रेपि मैत्रापेक्षयान्यत्वसत्वाद्, केवलान्यत्वस्याव्यावर्तकत्वाच्चेतत आह – **एवकारस्यैवेति**।।

**वस्तुतस्तु पचतिचैत्रे मैत्रेचापचति 'कीदृशौ चैत्रमैत्रा' विति प्रश्ने 'चैत्र एव पचती' त्युत्तरापत्तिः। अत एव 'कीदृश श्चैत्र' इति प्रश्ने पचतीत्युत्तरापत्ते र्नप्रथमान्त मुख्यविशेष्यको बोध इत्युक्तम्। कीदृशी कृति रिति प्रश्नोत्तरत्वं तु न, लिङ्गानास्कन्दितत्वादित्यप्युक्तम्। अतोऽनुभवसिद्धमेव भावनामुख्यविशेष्यकत्वम्।**

ननु नैयायिकमते चैत्र एव पचतीत्यत्र वाक्यभेद इष्ट एव, तदभिप्रायेणैव बोधोपि तथैव दर्शित इत्यतस्मन्मते वज्रलेपायितं दोषमाह – **वस्तुतस्त्विति, उत्तरापत्तिरिति** तादृशप्रश्ने चैत्रः पचति, मैत्रो न पचतीति युक्तं समाधानम्। चैत्र एव पचतीत्यस्यापि तत्समानार्थकतया तदुत्तरत्वापत्तिरिति भावः। अत एव = तन्मतस्यायुक्तत्वादेव। इत्युक्तम् = "अत एव कृतिविशेष्यकत्वमेव भट्टसंमतम्। प्रथमान्तमुख्यविशेष्यकत्वे तादृशोत्तरस्या संबद्धत्वानापत्ते" रिति ग्रन्थेन, ननु त्वन्मते कीदृशी कृतिरिति प्रश्ने पचतीत्युत्तरापत्ति, रत आह – **कीदृशीति** उक्तम् = तत्प्रसङ्ग एव विधिवादे स्वसिद्धान्तं निगमयति। **अतोनुभवसिद्धमेव भावनामुख्यविशेष्यकत्वमिति** अनुभवः = पाणिनि जैमिन्याद्यनुभवः।।

**किंच सत्यपि संख्याभावनोभयसाधारण्येनो क्तविधप्रथमान्तपदजन्योपस्थितेः कारणत्वे भवन्मते प्रथमातृतीयादिप्रयोजकं किम्? न तावत्कर्त्राद्यभिधानानभिधाने तत्प्रयोजके, तस्यत्वयाऽनङ्गीकारात्। नापि संख्याभिधानानभिधाने संख्याया आख्याताभिधेयत्वेन सर्वत्र कारकेषु प्रथमापत्ते द्वितीयादिविभक्त्यभावप्रसङ्गात्।**

किंच नैयायिकमतेऽभिधानानभिधानव्यवस्था नोपपद्यत इत्याह – **किञ्चति** आख्यातार्थसंख्यायास्त-दर्थ भावनायाश्चैक विशेष्यकत्वनियमादाह – **उभयसाधारण्येनेति उक्तविधेति** अन्या विशेषणी-भूतेत्यर्थः। सत्यपीत्यपि शब्देन तस्य दुष्टत्वे प्रतिपादितेपि तदाश्रयणे दोषान्तरमापततीत्यभिव्यज्यते। **प्रथमातृतीयादीति** आदिना द्वितीयादीनां ग्रहणम्। कर्तृ प्रत्यय समभिव्यवहारे कर्तरि प्रथमा, कर्मणि द्वितीया, कर्म प्रत्ययसमभिव्यवहारे कर्तरि तृतीया, कर्मणि प्रथमेत्यर्थप्रयोजकमित्यर्थः। किं शब्दः प्रकृतार्थासंभवसूचनाय। भवन्मते साव्यवस्थानोपपद्यते इति भावः। ननु निरुक्त व्यवस्थायां पाणिनि सूत्राण्येव गमकानि। तानि अस्माकमपि मते व्यवस्थापकानि भवन्तीत्याशङ्क्य नैयायिकमते तानि नोपपद्यन्त इति दर्शयितुमपक्रमते – **नतावदिति** अनभिहताधिकारे "कर्तृकरणयोस्तृतीया, "कर्मणि द्वितीये" " त्यादीनां पाठादाह – **कर्त्राद्यभिधानानभिधाने इति**। तत्प्रयोजके = प्रथमातृतीयादि प्रयोजके। तस्य = तिङा कर्त्रादेरभिधानस्य। त्वया = नैयायिकेन। आख्यातस्य कृतिवाचकत्वं नैयायिक मीमांसकोभयवादिसंमतम् कर्तृकर्मणो रवाच्यत्वमपि उभयवादि संमतम्, परंतु लक्षणया कर्तृकर्म-बोधकत्वमाख्यतस्य मीमांसकाः स्वीकुर्वते, नैयायिकास्तथापि न स्वीकुर्वन्ति, प्रथमान्तपदेनैव तल्लाभ इति तदाशयः। अत उक्तं – त्वयेति, एतच्चानुपदमेव मूले स्पष्टं भविष्यति, ननु संख्याया अनभिधाने तृतीयोति पाणिनि सूत्रार्थः। तेन संख्याभिधानानभिधानाभ्यां तद्व्यवस्थासेत्स्यतीत्यत आह **नापीति** ते अपि न तत्प्रयोजके इत्यर्थः। कर्तृकर्मगत संख्याया अनभिधाने इति विशिष्याबोधनात्सर्वत्राभिहितत्वस्या-विशिष्टत्वात्प्रथमापत्तिरित्याशयेन दूषयति – **संख्याया इति** सर्वत्र = सर्वेष्वपि। **प्रथमापत्तेरिति**, चैत्रस्तण्डुलं काष्टैः स्थाल्यां पचतीत्यादावाख्यातेन संख्याया उक्तत्वेन तण्डुल काष्टस्थाल्यादिभ्योपि प्रथमापत्तिरिति भाव· तथाचेष्टासिद्धिरित्याह – **द्वितीयाद्यभावप्रसङ्गादिति**

**अथ तिङुपात्तसंख्यान्वयित्वमेव प्रथमाप्रयोजकम्। तदन्वयश्च यगादिसमभिव्याहारसत्त्वे कृतिविषयाख्यफलाश्रये कर्मणि, शबादिसमभिव्याहारे कृत्याश्रयाख्ये कर्तरि। यादृशसमभि-व्याहारे आख्यातस्य कर्तृवाचित्वं वैयाकरणमते, मीमांसकमतेवा कर्तृलक्षकत्वं, तादृशसमभि-व्याहारे तिङुपात्तसंख्यायाः कृत्याश्रयरूपकर्तृगामित्वम्। यादृशसमभिव्याहारे च तयोर्मते आख्यातस्य कर्मपरत्वं, तादृशसमभिव्याहारे तिङुपात्तसंख्यायाः कृतिविषयरूपकर्मगामित्वम्। अत स्तादृशसंख्याभिधानमेव संख्याविशेष्यवाचिनामपदोत्तर प्रथमा प्रयोजकम्। तादृशसंख्यान-भिधानं च तद्विशेष्यवाचिनामपदोत्तरकर्तृकर्माद्यभिधायक तृतीयाद्वितीया दिवि भक्ति प्रयोजकम्। अत एव भावाख्यातस्थले कर्तृकर्मगतसंख्यानभिधाना च्चैत्रेण सुप्यत इति तृतीया।**

**तेन चैत्रेण पच्यते ओदन इत्यत्र कर्माख्याते कर्मवाचिपदे एव प्रथमा। चैत्रः पचतीत्यत्र कर्त्राख्याते कर्तृवाचिपदे एवेति व्यवस्थालाभ इतिचेत्।**

ननु सामान्येन संख्याभिधानानभिधानाभ्यां न तद्व्यवस्था, किंतु विशिष्य कर्तृकर्मगतसंख्याभिधानानभिधानाभ्याम्। तथाचाख्यातार्थसंख्या यत्रान्वेति तदुत्तरं प्रथमा, यत्र सा नान्वेति, तत्र तृतीयादीति नोक्तदोष इत्याशयेन नैयायिकः पर्यनुयुङ्क्ते – **अथेति तिङ्पात्तेति** ''द्व्येकयोर्द्विवचनैकवचने'' ''बहुषुबहुवचन'' 1-4-21 मिति शास्त्रबलाद् द्वित्वादिका संख्याऽऽख्यातार्थः, तदन्वयित्वमित्यर्थः।। तदन्वये व्यवस्थां दर्शयति **तदन्वयश्चेति** संख्यान्वय इत्यर्थः, **यगादीति** आदिनाऽऽत्मनेपद चिण्चिण्वदिटां ग्रहणम्। ''सार्वधातुके यक्'' 3-1-67 इत्यनेन यक् विकरणो ''भावकर्मणोः'' 1-3-13 इत्यनेनात्मनेपदम्, ''चिण्भावकर्मणोः'' 3-1-66 इत्यनेनच्लेश्चिण् ''स्य सिच् सीयुट्तासिषु'' 6-4-62 इत्यादिना चिण्वदिट् च विधीयन्ते, तत्समभिव्यवहारसत्वे इत्यर्थः, तेन पच्यते तण्डुलः स्वयमेवेत्यादौ कर्मकर्तरि अजनि इत्यादौ च यगादिसत्वेपि न कर्मणि संख्यान्वयः। **कृतिविषयेति** कृतिविषयरूपं यत्फलं तदाश्रय इत्यर्थः। **शबादीति** आदिना श्यन् श्नमादीनां ग्रहणम्। एवं च यगादिसत्त्वे कर्मणि, शबादिसत्वे कर्तरि चाख्यातार्थ संख्यान्वेति। तत्रैव प्रथमेति भावः। नन्वेवमनन्त कार्य कारणभावकल्पनापत्ति, रत आह – **यादृशसमभिव्याहारे इति** कर्तृकर्मभिधानानभिधानाभ्यां प्रथमादिव्यवस्थेति वादिभिरपि कार्चनव्यवस्था स्वीकार्या, अन्यथासांकर्यापत्तेः। तद्व्यवस्थास्थानेऽस्माभिरेव स्वीक्रियते, अतो न गौरवमित्याशयः। मीमांसकमते आख्यातस्य कर्तृवाचित्वायोगादाह – **कर्तृलक्षकत्वमिति** लाघवादाख्यातस्य कृतौ शक्तिः ''लः कर्मणिचे'' त्याद्यनुशासनबलादाख्यातस्य कर्तरि कर्मणि गुणत्वेनभावे च लक्षणेति मीमांसकानां मतमिति बोध्यम्, कर्माख्यातस्थलाभिप्रायेणाह **यादृशेति** तयोः = वैयाकरणमीमांसकयोः। आख्यातस्य कर्मपरत्वम् = वैयाकरणमते तद्वाचकत्वं, मीमांसकमते तल्लक्षकत्वं च। अत एव = निरुक्तव्यवस्थाश्रयणादेव, **तृतीयेति** अन्यथा तत्राप्येकत्वादि संख्यया अभिधानात्तत्रापि प्रथमैवापद्येतेति भावः। तेन = निरुक्तार्थस्वीकारेण। **कर्मवाचिपद एवेति** तत्रैव संख्यान्वयादिति भावः। एवेन कर्तृव्यवच्छेदः, **व्यवस्थालाभइति** अतो न सर्वेषु कारकेषु प्रथमापत्त्याद्वितीयाद्यनापत्तिरिति भावः।

**तथात्वे चैत्रेण पाचकस्य पुत्रः, ओदनं पक्वस्य विक्लृत्ति रित्यादिप्रयोगापत्तेः, कृत्प्रत्ययेन कर्तृकर्मगतसंख्याया अनुक्तत्वात्। चैत्रस्य पाचकस्य पुत्रः, ओदनस्य पक्वस्य विक्लृत्ति रिति प्रयोगानापत्तेश्च। ''विषवृक्षोपि संवर्ध्यस्वयं छेत्तुमसाम्प्रत'' मित्यादावपि प्रथमानापत्ते श्च। न च तत्र कृत्प्रत्ययेन साम्प्रतमिति निपातेन च कर्त्राद्यभिधानादेव प्रथमासिद्धिः, संख्याकर्त्राद्यन्यतरानभिधानेच तृतीयादि रिति सूत्रार्थ इति वाच्यम्। तथात्वेपि 'चैत्र इव गच्छति मैत्र' इत्यादौ चैत्रे प्रथमानापत्तेः। गच्छतीति तिङा चैत्रगतसंख्याया श्चैत्रगतकर्तृत्वस्य चा नुक्तत्वात्।**

तद् दूषयति **तथात्वेइति** कर्त्रादिगत संख्याभिधानानभिधानयोः प्रथमादि प्रयोजकत्व इत्यर्थः, तिङां कर्त्रादिगत संख्यावाचित्वेन चैत्रः पचति चैत्रेण तण्डुलः पच्यत इत्यादौ तद्व्यवस्थाया उपपादयितुं शक्यत्वेपि कृत्प्रत्ययानां संख्यावाचकत्वाभावा त्तत्र सा व्यवस्था नोपपादयितुं शक्यते इत्याह – **चैत्रेण पाचकस्येति** पाचक शब्दे कर्तरि अकः, तेन संख्याया अबोधनात्पाक कर्तरि चेत्रेऽनभिहिताधिकारीया तृतीया प्रसज्यत इत्यर्थः। कर्मकृत् स्थले दोषमाह **ओदनं पक्वस्येति** पचेः कर्मणिक्तः, तेन संख्याया अनभिधानात्पच्यर्थकर्मणि ओदने द्वितीयास्यादिति भावः। तदेतदुपपादयति **कृत्प्रत्ययेनेति अनुक्तत्वादिति** ''कर्तरि कृत्'' 3-4-67 ''तयोरेव कृत्यक्त खलर्थाः'' 3-4-70 इत्यनुशासनात्कृत्प्रत्ययानां कर्तृ कर्मवाचित्वेपि तद्गतसंख्यायास्तेनानभिधानात्, तस्य संख्यावाचित्वे शास्त्र व्यापाराभावादिति भावः।

इष्टप्रयोगासिद्धिरपि दोष इत्याह — **चैत्रस्यपाचकस्यैति** कृत्प्रत्ययेनेव निपातेनापि संख्याया **अनभिधाना** त्तत्रापि प्रथमानापत्तिस्तवमते इत्याह — **विषवृक्षोपीति प्रथमानापत्तेश्चेति** असाम्प्रतमिति निपातेन विषवृक्षरूप कर्मगत संख्याया अनभिधानादभिहितत्वनिबन्धन प्रथमाया अनापत्तिः, किंच तृतीयाविधायके अनभिहिते कर्तरीतिपदे लक्षणापत्तिरिति भावः। नैयायिकः प्रकारान्तरेण पर्यनुयुंक्ते — **नचेति** तिङ्स्थले कर्तकर्मगत संख्याभिधानानभिधानाभ्यां तद्व्यवस्था कृन्निपातस्थलेतु कर्तृकर्माभिधानानभिधानाभ्यां तदव्यवस्थेति न क्वापि दोष इति भावः। तत्र = पूर्वोक्त स्थले चैत्रस्य पाचकस्य पुत्र इत्यादौ। कृत्प्रत्ययेन = अकप्रभृति कृत्प्रत्ययेन। निपातेन = साम्प्रतमित्यादिना। प्रथमासिद्धिः = विषवृक्षोपीत्यत्र। चैत्रस्य पाचकस्य पुत्र इत्यत्र कृताभिधाना तृतीयाया अप्रवत्त्या विशेष्यानुरोधात् षष्ठी च सिध्यति। उक्तार्थस्य सूत्रारुढत्वं दर्शयति **संख्याकर्त्रादिति** लक्ष्यानुरोधाच्च व्यवस्थाबोध्या। इव शब्दसमभिव्याहारे दोष तादवस्थ्यमित्याह — **तथात्वेपीति** अन्यतरानभिधाने तृतीयादिरित्यर्थस्वीकारेण निरुक्त दोषवारणेपीत्यर्थः। **प्रथमानापत्तेरिति** गच्छतीति तिङा उपमेयगत संख्याऽभिधीयते, अतस्तत्र प्रथमासिध्यति, उपमानगत संख्यायास्तेनानभिधानात्प्रथमानापत्तिरिति भावः, तदाह, **गच्छतीति तिङेति**

**यत्तु 'कृत्यनभिधाने तृतीया' फलानभिधाने द्वितीया। अभिधानेतु सर्वत्र प्रथमे' ति मतम्, तदपि न, भावाख्याते भावनाभिधानेन प्रथमापत्तेः, कर्माख्यातेपिक्रियत इति विवरणानुरोधेन कृतिवाचित्वस्या वश्यकत्वात्प्रथमापत्ते 'श्च।**

प्रकारान्तरं दूषयति **यत्विति** कर्त्राख्यातस्य कृतिवाचित्वादाह **कृत्यनभिधान इति** यथा चैत्रैण तण्डुलः पच्यत इत्यत्र कृतेरनभिधाना तृतीया। कर्माख्यातस्य फलवाचित्वादाह — **फलानभिधाने इति** यथा चैत्रस्तण्डुलं पचतीत्यत्र फलस्यानाभिधानाद् द्वितीया। **प्रथमैवेति** कर्माख्याते ओदनात् कर्त्राख्याते चैत्रादेश्च प्रथमैव। **इति मतमिति** — इदं च तिङ्मात्रविषयकम्, कृदादिविषयेतु प्रकारान्तरमन्वेष्टव्यमेवेति बोध्यम्, भावाख्याते = चैत्रेण सुप्यते शय्यते इत्यादौ। **भावनाभिधानेनेति** सुप्यते = स्वापः क्रियते शयनं क्रियते इति करोतिना विवरणाद्भावाख्यातस्यापि कृतिरुपभावनाभिधायित्वमिति भावः। स्पष्टी भविष्यति चेदमुपरिष्टात्। **कर्माख्यातेपीति** पच्यते चैत्रेण तण्डुल इत्यादौ तिङाफलमात्रमुच्यत इति प्राञ्चो नैयायिका आशेरते। तत्रापि कृतेरभिधानाद् दोष तादवस्थ्यमित्यभिप्रैति ग्रन्थकारः। **तथाच** ''अनभिहिते'' 2-3-1 कर्मणि द्वितीया ''2-3-2 कर्तृकरणयोःस्तृतीये'', 2-3-18 त्यादिक्रष्यनुभवसिद्धाभिधानानभिधान व्यवस्था नैयायिकमते न घटते, अतस्तन्मतमयुक्तमिति प्रकृत प्रघट्टकार्थः।

**अस्मन्मते तु सत्यपि तिङो भावनावाचित्वे वक्ष्यमाणरीत्या कर्त्रादेरपि लक्षणया भिधानात्, कृत्प्रत्ययेन साम्प्रतमिति निपातेन च शक्त्यैव कर्त्राद्यभिधानात्सर्वत्र प्रथमोपपत्तिः। साम्प्रतमिति निपातेन योग्य इत्यर्थकेन कर्माभिधानात्। चैत्र इवेत्यादावपि इवशब्देन गमन कर्तृत्वरूपसादृश्याभिधानात्कर्त्रभिधानम्। चन्द्र इव मुख मित्यादावपि अस्तीति क्रियापदाध्याहारस्या वश्यकत्वा दाह्लादकत्वावच्छिन्नसत्ताश्रयत्वरूपकर्त्रभिधानम्।**

ननु नैयायिकस्येव कृति शक्तिवादिनस्तवापि मते सा न घटत एव। तथाच ''नयोभयाश्रयं दोषमेकश्चोद्योऽविचारयन्नि'' तिन्यायापात इत्यत आह **अस्मन्मतेत्विति** तु शब्दोनैयायिकमताद्विशेष सूचनाय **भावना वाचित्वे इति** कृञा विवरणाल्लाघवाच्च तद्वाचित्वे सत्यपीत्यर्थः। विशेषमेवाह **वक्ष्यमाण रीत्येति** ''नन्विदमाख्या तस्य कृतिवाचिनः कर्तृ लक्षकत्वे सिध्द्येत्, तत्रैवतु प्रमाणाभावः इत्यादिग्रन्थेनेत्यर्थः। कर्तादेरित्यादि पदेन कर्मणो ग्रहणम्''। **लक्षणयाभिधानादिति** तथा च पचति

तण्डुलं चैत्र इत्यत्र तिङाकर्तृ पच्यते तण्डुलश्चैत्रेणेत्यत्र कर्मणश्चाभिधानात्प्रथमा सिध्यति, तृतीया द्वितीये न प्रवर्तेते। नैयायिकमतेत्वेवं वक्तुमशक्यम्। तन्मते शक्त्या लक्षणया वा कर्तृकर्मणो स्तिङाऽबोधनात्। कृदादि विषये आह **कृत्प्रत्ययेन साम्प्रतमिति निपातेनचेति** सर्वत्र = चैत्रः पाचकः विषवृक्षोपि संवर्ध्य इत्यादौ। ननु साम्प्रतशब्दस्य कर्मार्थकत्वे किं मान, मत आह **योग्य इत्यत्रर्थकेनेति** इव शब्दयोगे उपमान वाचकात्प्रथमाया उपपत्तिं दर्शायति **चैत्र इवेति** चैत्र इव मैत्रो गच्छतीत्यादावपीत्यर्थः। नन्वाख्यात रहिते कथं तदभिधान, मत आह **चन्द्र इव मुखमिति कर्त्राद्यभिधानमिति** एवं च कर्त्राद्यभिधानानभिधाने एव प्रथमा तृतीयादि प्रयोजके, न तु संख्याभिधानानभिधाने, निरुक्तदोषापत्तेः। अन्यतरत्त्वस्यदर्ज्ञेयत्वाच्चेति भावः।

**अत एव क्त्वाप्रत्ययेनापि समानकर्तृकत्वाभिधाना च्चैत्रः, पक्त्वा चैत्रो भुङ्क्ते इत्यत्राऽऽद्य-चैत्रपदेपि प्रथमोपपत्तिः। नचैवं चैत्रेण पक्त्वा चैत्रेण भुज्यत इत्यत्राऽऽद्यचैत्र पदे तृतीयानापत्तिः, क्त्वाप्रत्ययेन कर्तृरुपादाना दिति वाच्यम्। तत्र "आत्मान मात्मना वेत्सि" "अनेन जीवेनात्मना नुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिवत् करणत्वस्य तृतीयार्थत्वात्।**

एतदेव समर्थयति **अतएवेति** निरुक्तरीत्याश्रयणादेवेत्यर्थः। "समानकर्तृकयोः पूर्वकाले" 3-4-21 इति शास्त्र बलादाह – **समानकर्तृकत्वाभिधानादिति आद्य चैत्रपदेपीति** क्त्वान्त धातुपस्थाप्यक्रियाकर्तर्य-पीत्यर्थः। अन्यथा नैयायिकमते क्त्वः केवलतात्पर्य ग्राहकत्वेन कर्त्रबोधकत्वात्तेन संख्याया अनभिधानाच्च प्रथमानोपपद्यते, भुङ्क्ते इति तिङा तद्गगत संख्याया अनभिधानात्तृतीया प्रसङ्गश्चेति बोध्यम्। कर्माख्याते दोषमुद्भावयति – **नचेति** एवं = क्त्वः समान कर्तृकत्वार्थकत्वाश्रयणेन प्रथमासमर्थने। तत्र निरुक्ते कर्माख्यात घटित वाक्ये। आत्मन औपादिक भेदेन कर्तृत्व कर्मत्वकरणत्वानां स्वीकारादाह – **आत्मानमात्मानेति** ब्रह्मणोप्यौपाधिक एव जीव भाव इत्याशयेनाह – **अनेन जीवेनेति**।

**अत एव 'यद्वृत्तिकारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते, तत्त्वं प्रथमाप्रयोजकीभूताभिहितत्व' मित्युक्तं भाट्टदीपिकायाम्। अस्तिचेदं चैत्रः पचति, ओदनः पच्यते इत्यादौ, चैत्रादिवृत्तिकर्तृत्वकर्मत्वादे र्निरुक्तक्रियापदेनाऽभिधानात्। 'पाचकेन गम्यत' इत्यादौ च कृदुपात्तस्य पुरुषस्य गमनक्रिययैवान्वयो, न तु पाकक्रियया, प्रथमं तस्या एव तस्मिन्नन्वयात्।**

**अन्वय श्चात्र प्राथमिकशाब्दबोधविषयीभूत एव विवक्षितः। तेन "औदम्बरो यूपो भवति" "स्वर्गकामो यजेत" इत्यादौ यूपस्वर्गादीनां प्रथमया कर्मत्वादिलक्षणायामपि प्राथमिकयूपकर्तृक भवनाश्रयत्वादिशाब्दबोधे कर्तृत्वस्योक्तत्वात् प्रथमोपपत्तिः। न च तत्र प्रमाणाभावः, तथात्वे धर्मिज्ञानाभावेन वैयर्थ्यप्रतिसन्धानाभावा त्तात्पर्यज्ञानाभावेन लक्षणानुपपत्तेः।**

ननु भवन्मतेऽपि कर्त्राद्यभिधानात्प्रथमोपपत्तिरित्ययुक्तम्, पाचकेन गम्यते चैत्रेण भुक्त्वा गम्यते इत्यादौ तृतीयाद्यनापत्तेः। अकेन कृत्प्रत्ययेन कर्तुः, क्त्वाप्रत्ययेन समानकर्तृत्वस्य चोपादानात्प्रथमाया एवापत्तेरित्यतः स्वाशयं विवृणोति **अत एवेति** कृदादिभिरभिहितत्वे प्रथमेति सामान्य रूपेण स्वीकारे दोषसत्वादेवेत्यर्थः **स्वान्वयीति** कारकत्वान्वयिनी या क्रिया तत्प्रतिपादकेनेत्यर्थः। पदेन = तिङा कृता तद्धितेन निपातेनवा वृत्त्या = शक्तिलक्षणान्यतररूपया। तत्त्वम् = तादृश कारकत्वम्। भाट्टदीपिकायाम् = तृतीये चतुर्थपादे सप्तमे कर्त्रधिकरणे 18-19 सूत्रयोः। लक्ष्ये योजयति **अस्तिचेति** अभिहित कर्तृत्वे उदाहरति **चैत्रः पचतीति** अभिहत कर्मत्वे उदाहरति – **ओदनः पच्यते इति** क्रियापदेन = क्रियाबोधक

तिङ्पदेन। "स्वान्ययिक्रियाप्रतिपादके" तिविशेषविवक्षायाः प्रयोजमाह — **पाचकेन गम्यत इति** चकारस्तुशब्दार्थे। पुरुषस्य = आश्रयस्य। एवशब्द व्यावर्त्यमाह — **नतु पाक क्रिययेति** विनिगमकमाह — **प्रथममिति** तस्या एव = गमन क्रियाया एव। **अन्वयादिति** तथाच पाचक निष्ट कर्तृत्वान्वयिनी गमन क्रिया, तद्बोधकेन गम्यते इत्यत्र तिङ्पदेन कर्तृत्वस्याभिधानाभावा दभिहितत्व निबन्धना प्रथमा न प्रवर्तते। स्वान्वयिक्रियेत्यादि विशेष रूपेणा विवक्षायातु कृता कर्त्तुरुपात्तत्वात्प्रथमा दुर्वारैवेति भावः। नन्वेवं कृदर्थस्य पुरुषस्य पश्चात्पाकक्रियाया आश्रयाकङ्क्षा निवृत्त्यर्थं तत्राप्यन्वयस्य वक्तव्यतया तादृशपदेन कर्तृत्वस्योक्तत्वात्प्रथमा दुर्वारा। किंच "औदुम्बरोयूपो भवति" "स्वर्गकामोयजेते" त्यादौ प्रथमानापत्तिः। तत्र लक्षणया प्रथमायाः कर्मत्वार्थकतया यूपं भावयेत्, स्वर्गं भावयेदित्यर्थात्तत्कर्मत्वस्य स्वान्वयि .क्रियाप्रतिपादक भवति यजते पदाभ्यामनभिधानादभिहितत्वाभावादत आह **अन्वयश्चेति** स्वान्वयिक्रियेत्यत्र विवक्षितोन्वयस्त्वित्यर्थः। **प्राथमिकेति** प्रथमतो जायमान बोधेत्यर्थः। स च प्राथमिको बोधः शक्ति जन्यो लक्षणा जन्योवा। शक्ति जन्य प्राथमिक बोध विषयस्यान्वयस्योदाहरणम् "औदुम्बरो पोणे भवति" "स्वर्गकामो यजेते" त्यादि। तेन = प्राथमिकबोधविषयान्वयस्वीकारेण। **कर्मत्वादि लक्षणायामपीति** अयमर्थः — "यजेत स्वर्गकामः, इत्यत्र स्वर्गकामनिष्ठा याग भावनेत्येकः प्राथमिको बोधः। ततो लक्षणया स्वर्गकामशब्दो विशेषणभूतं स्वर्गं, प्रथमा च कर्मत्वं बोधयति। तथाच यागेन स्वर्गं भावयेदिति द्वितीयोबोधः तत्र प्राथमिकबोधे स्वर्गकाम वृत्ति कर्तृत्वस्य स्वान्वयि यागक्रियाबोधक पदेन प्रतिपादितत्वादभिहितत्व निबन्धना प्रथमा सिध्यति। एतदर्थमेव प्राथमिक शाब्द बोधविषयीभूत एवान्वयो विवक्षित-इति तदाह **प्राथमिकेति** भूधात्वर्थो भवनम्, आख्यातार्थ आश्रयत्वम्। यूप वृत्ति भवनाश्रयत्वमिति प्राथमिको बोधः, उक्तत्वात् = भवति यजेतेत्येताभ्याम्। तत्र = प्राथमिक बोधे। **प्रमाणाभाव इति** तथाच स्वर्गं भावयेदित्येव तत्र बोधात्तत्र स्वर्गवृत्ति कर्मत्वस्याऽप्रतिपादनात्प्रथमा-नुपपत्तिरेवेति शङ्कितुराशयः, समाधत्ते — **तथात्वे इति** प्राथमिकबोधाभाव इत्यर्थः, **धर्मिज्ञानाभावेनेति** अयमर्थः — स्वर्गकाम शब्दोधिकारिसमर्पकः, स्वर्गकामो यागं कर्यादिति तद्वाक्यार्थः। तत्र च फलेच्छावतः पुरुषस्य कर्तृत्वेनार्थात्प्राप्तिसंभवात् स्वर्गकामशब्दो व्यर्थः, तत्सार्थकयाय स शब्दो लक्षणया विशेषण भतं स्वर्गं बोधयति। परिशेषाद्धात्वर्थस्य करणत्वं भावनायाम्। प्रथमा च कर्मत्वार्थिकेति स्वर्गं यागेन भावयेदिति वाक्यार्थः सिध्यति। प्राथमिकबोधाभावे अधिकारिरूप धर्मिज्ञानं नास्ति। तदभावे स्वर्गकाम शब्दस्य वैयर्थ्यं न प्रति सन्धीयते। तदभावे तात्पर्य ज्ञानाभावे लक्षणैव न प्रसरेतु, तथाच लक्षणया स्वर्गकामशब्दः स्वर्गरूपभाव्यसमर्पक इति सिद्धान्तो व्याकुप्येते-ति। तदाह **वैयर्थ्य प्रति सन्धानाभावादिति** स्वर्गकाम शब्दस्य तदभावदित्यर्थः। "यदपि तत्राख्यात पद समानाधिकरणं, स्वर्गकामपदं तदपि न कर्तृपरं" मित्यादि ग्रन्थ व्याख्यावसरे स्पष्टं प्रतिपादयिष्यामः।

**अत एव यत्रान्वयानुपपत्त्यैव लक्षणा, तत्र लक्षणाजन्यशाब्दबोधस्यैव प्राथमिकत्वात् तत्रच करणत्वानुक्तौ प्रथमान्तस्या योग्यत्वमेव। यथा — अग्निना चैत्रः पाके यतत इत्यर्थे 'अग्नि श्चैत्रः पाके यतते' इति, अत्र हि प्रथमायाः करणत्वलक्षणया शाब्दबोधः, अत्र हि अन्वयानुपपत्त्यैव करणत्वलक्षणा। अत स्तत्र लक्षणातः पूर्वं शाब्दबोधाभावा दयमेव बोधः प्राथमिको वाच्यः। न चे दानीं भासमानं करणत्वं स्वान्वयिक्रियाप्रतिपादकेन यतत इति पदेनोक्तम्। यत्तु यतत इत्यनेनोक्तं कर्तृत्वं, न तदग्निवृत्तीति प्रथमाप्रयोजकरूपाभावा त्तद्वाक्यं तस्मिन्नर्थेऽसाधु। उक्तविधं तद्वृत्ति कर्तृत्वं न कर्माख्यातेनाभिहित मिति युक्तैव तत्र तृतीया। एवं चैत्रेण भुक्त्वा गम्यत इत्यत्र चैत्रस्य भुजिक्रियायामनन्वयाद्गमनक्रियायामेवान्वयाङ्गीकारेण तृतीयोपपत्तिः।**

एवं शक्तिजन्य बोधस्य प्राथमिकत्वे प्रयोजनं प्रदर्श्य लक्षणाजन्य शब्दबोधस्य तत्वे प्रयोजनं प्रतिपादायितुमाह – **अत एवेति** शक्ति जन्य बोधेत्यनुक्त्वा प्राथमिकशाब्द बोधेत्युक्तत्वादेवेत्यर्थः। **करणत्वस्यानुक्तौ** = तस्य स्वान्वयिक्रियापदेना प्रतिपादने। तादृशं स्थलं दर्शयति **यथाऽग्निनेति** इत्यर्थे = इति साधु वाक्यस्यार्थे। लाक्षणिकं प्रयोगं दर्शयति, **अग्निश्चैत्र इति** अत्र हि = अग्निश्चैत्र इत्यादि समुदाये। प्रथमान्तोपस्थाप्यस्याग्नेर्यततिनान्वया संभवादाह **करणत्वेति**, लक्षणा जन्यबोधस्यैव प्राथमिकत्व मुपपादयति **अत्र हीति** अतः = अन्वयानुपपत्या तस्याः स्वीकारात्। ततः पूर्वं = लक्षणाजन्य बोधात्पूर्वम्। अयमेव बोधः = लक्षणाजन्य बोध एव। प्रथमाया अनुपपत्तिं दर्शयति **नचेति** – नहीत्यर्थः। अस्य "यतत इति पदेनोक्त" मित्यत्रान्वयः। इदानीं = लक्षणाजन्यबोधे। करणत्वम् = अग्निनिष्ठम्। एवं चग्नि निष्टस्य करणत्वस्य स्वान्वयि क्रिया वाचि पदेनानुपस्थापनात् तत्र प्रथमा न प्रवर्तते। ननु यतत इत्यनेन कर्तृत्वस्योक्तत्वादग्निशब्दात्प्रथमा सिध्यतीत्यत आह – **यत्विति** यतते इति पदेन यत्कर्तृत्वमुक्तं तद् न अग्नि वृत्तिकिंतु चैत्र वृत्ति। अतोग्निशब्दात्प्रथमा न प्रवर्तते, तत्प्रयोजक रुपाभावादिति भावः। उपसंहरति **तद्वाक्यं तस्मिन्नर्थेऽसाध्विति** पाचकेन गम्यत इत्यत्र प्रथमां वारयति **उक्तविधमिति** गमनक्रिया निरुपितमित्यर्थः। तद्वृत्ति = पाक क्रियाश्रय पुरुषवृत्ति। तत्र = पाचक पदे क्त्वा प्रत्यय समभिव्याहारे दोषं वारयति **एवमिति गमनक्रियायामेवेति चैत्रनिष्ट कर्तृत्वस्य स्वान्वयिगमनक्रियाप्रति-**पादकेन गम्यते इत्यनेनानभिहितत्वेनाभिहितत्व निबन्धना प्रथमा न भवति, किंत्वनभिहितत्व निबन्धना तृतीयैवेति न दोषः। एवं च स्वान्वयि क्रियाप्रतिपादकपदेनेत्यादिरीत्या विशिष्याभिहितत्वं निर्वाच्यम्, अन्वयश्य प्रथमिक बोध विषयीभूतोग्राहयः। अतः पाचकेन गम्यते, चैत्रेण भुक्ता गम्यते, औदुम्बरो यूपो भवति, यजेत स्वर्गकाम इत्यादीनां साधुत्वम्, अग्निना चैत्रः पाके यतते इत्यस्यार्थे लक्षणाया आश्रयेणेपि अग्निश्चैत्रः पाके यतते इत्यस्यासाधुत्वं च सिध्यतीत्येतत्प्रघट्टकार्थः।

**एवंच 'पक्त्वौ दनो भुज्यत' इत्यादौ पचिधातोः कर्माकाङ्क्षायां द्वितीयान्तौ दनपदाध्याहारेण वाक्यपूरणम्। न हि 'प्रधानक्रियाया मुक्तस्य कारकस्य गुणभुतक्रियाया मप्युक्ति' रिति नियमे प्रमाणमस्त्ति, येनाध्याहारं विनापि वाक्यं पूर्येत। तथात्वे 'ओदनं भुक्त्वा शास्त्रं पठचते' "श्रुत्वाप्यर्थं नानुमत स्तेन सोर्थः कुबुद्धिने" त्यादौ द्वितीयाप्रयोगो नोपपद्येत। अतः सकर्मक धातूत्तरक्त्वाप्रत्ययस्थले द्वितीयान्त पदाध्याहारेपि कर्तृविशेषवाचिपदं विनापि शाब्दबोधो-पपत्ते श्चैत्रेण भुक्त्वा गम्यत इति प्रयोगे बाधका भावः।**

ननु पक्त्वौदनो भुज्यते इत्यत्रैकस्यैव ओदनरुपकर्मण उभयक्रियान्वयेन पक्त्वेति क्रियावाचकपदेन कर्मत्वस्यानभिधानात्ततो द्वितीयापत्ता वभिहितत्वाभावात्प्रथमानापत्ति, रित्यत आह **एवं चेति** यद्वृत्तिकारकत्वमित्याद्यर्थस्यावश्यकत्वे चेत्यर्थः। इत्यादौ = इत्यादौ तु। **वाक्यपूरणमिति** तथाचाध्याहृतौदन पदस्यैव पक्त्वेत्यत्रा न्वयात्प्रथमान्तौदनपद प्रतिपाद्यौदनवृत्ति कर्मत्वस्य भुजि क्रियायामेवान्वयां न पचि क्रिया स्वान्वयिनी, स्वान्वयि भुजि क्रियापदेन कर्मत्वस्याभिहितत्वात्तन्निबन्धना प्रथमा निराबाधेति भावः। नन्वध्याहारो मास्तु। क्त्वा प्रत्ययान्तार्थेन्वयादोदनपदात् द्वितीया तु न प्रवर्तते, प्रधान भुजि क्रियावाचिपदेनौदन कर्मत्वस्या भिहितत्वेन गुणभूत क्रियायामप्युक्तत्वादित्यत आह **नहीति गुणभूत क्रियायामप्युक्तिरिति** प्रकृते प्रधान भुजि क्रियावाचकेनौ दन कर्मत्वमभिहितम्, तच्चऽप्रधान पाक क्रिया वाचकेन पदेन ना नभिहितम्, तथापि प्रधानानुरोधित्वाद्गुणानां तेनाप्यभिहितमेव भवतीति न द्वितीयेति भावः। तादृश मुनि वचनानुपलम्भादयं नियमो नाद्रियत इति भावः। प्रमाणं = मुनिवचनरूपम्। येन = नियमेन। वाक्यं = पाकत्वौदनो भुज्यते इति वाक्यम्। पूर्येत = संम्पूर्णार्थकं योज्येत। समर्थ्येतेति भाट्ट

दीपिकायां पाठः। ननु गुणानां प्रधानानुरोधित्वमेवात्र प्रमाणमत आह – **तथात्वे इति** तन्नियम स्वीकारेण गुण क्रियायामप्युक्तत्वे इत्यर्थः। ननु किं भिन्नकारक वृत्यपि कर्मत्वादि एकविभक्तिक पदेनैवोच्यते इति नियमः स्वीक्रियते, उत एककारक वृत्तिकर्मत्वादिकमेव एकविभक्तिक पदेनैवोच्यत इति स्वीक्रियते इति विकल्प्य आद्येव्यभिचारं दर्शयति, **ओदनं भुक्त्वा शास्त्रं पठ्यते इति** अत्र प्रधान भूतपठन क्रियान्वित शास्त्रवाचक पदे प्रथमाया अभिहितत्व निमित्तकायाः सत्वादप्रधान भुजि क्रियान्वितौदनवाचकेपि प्रथमाया एव न्याय्यतया द्वितीयानापत्ति र्दोष इति भावः। द्वितीये व्यभिचारं दर्शयति **श्रुत्वाप्यर्थमिति** प्रधानानुमति क्रियान्वितार्थवाचकपदे कर्मत्वस्याभिहितत्वे न प्रथमायाः सत्वादप्रधानश्रवण क्रियान्वितार्थ बोधक पदेपि प्रथमैवस्यादिति भावः। तदाह **द्वितीयाप्रयोगो नोपपद्येतेति** द्वितीया प्रयोगः द्वितीयान्तपदघटित प्रयोगः। ननु तुल्य न्यायाच्चैत्रेण भुक्त्वा गम्यत इत्यत्र चैत्र इति प्रथमान्त पदाध्याहारापत्तिरित्यत आह **अत इति** द्वितीयान्तौदन पदाध्याहार एव तद्वाक्यस्य समर्थनीयत्वादित्यर्थः। **कर्तृ विशेषेति** तद्बोधक प्रथमान्ताध्याहारं विनापीत्यर्थः। एवं क्त्वा प्रत्ययस्य समानकर्तृकत्व वाचित्वमश्रित्य प्रयोगाः समर्थिताः।

**यदित्वस्मिन् पक्षे चैत्रो भुक्त्वा चैत्रेण गम्यत इति प्रयोगापत्ति रिति विभाव्यते, तदा मास्तु क्त्वाप्रत्ययस्य समानकर्तृकत्व पूर्वकालत्वयो श्शक्तिः। किंतु भावकृत्त्वाद् भाव एव। तस्यैवोत्तरक्रियायां समानकर्तृकत्व पुर्वकालत्वसंसर्गेणान्वय इति।**

क्त्वः समान कर्तृकत्वं न वाच्यमिति पक्षमवलम्ब्यतत्समर्थनायाह – **यदित्विति** अस्मिन् पक्षे = क्त्वः समानकर्तृत्व वाचित्व पक्षे **प्रयोगापत्तिरिति** भुज्यर्थस्य कारकाकाङ्क्षायां तत्र चैत्रस्यान्वयो वाच्यः, तद्गतकर्तृत्वस्य क्त्वाप्रत्ययेनाभिधानात्प्रथमायादुर्वारत्वादिति भावः। "अव्ययकृतो भावे" इति कात्यायनवचनादाह **भावकृत्त्वाद्भाव एवेति** भाव एव = भावे एव शक्तिः। तर्हि तयोः शाब्देभान कथमत आह **तस्यैवेति** प्रत्ययार्थ भावस्यैवेत्यर्थः। अन्वय इति = अन्वय इति स्वीक्रियते।

**एवं च चैत्रः पक्त्वा चैत्रो भुङ्क्ते इत्यपप्रयोग एव, प्रधानक्रियाया मुक्तस्य कर्तृकारकस्यैव गुण भूतक्रियाया मप्युक्ति रिति नियमाङ्गीकारेण वा तस्य साधुत्वम्। प्रधान क्रियावाचिनः कर्त्राख्यातत्वे क्त्वाप्रत्ययस्यापि समान कर्तृकत्वादौ लक्षणेति वाध्येयम्। अत एव चैत्रेण पक्त्वा चैत्रो भुङ्क्ते इत्यपप्रयोगः। अत एव मयैव पक्त्वा मयैव भुज्यत इत्यत्रापि कर्तर्येव तृतीया। पक्त्वौदनो भुज्यत इत्यादौ कर्मकारकाध्याहार एव। ओदनं भुक्त्वा शास्त्रं पठ्यत इत्यादयः प्रयोगा श्च सुखोपपादाः।**

एवं च = क्त्वः समानकर्तृत्वार्थकत्वाभावे च। **अपप्रयोग एवेति** आद्य चैत्र पदोपात्त चैत्र वृत्ति कर्तृत्वस्य कृत्प्रत्ययेनाभिधाना दभिहितत्व निबन्धनप्रथमाया अप्राप्त्याऽपप्रयोग एवेत्यर्थः। सोपि समर्थनीय इत्याग्रहेत्वेवं समर्थनीयमित्याह **प्रधान क्रियायामिति** प्रकृते प्रधान भुजि क्रियायां चैत्रवृत्ति कर्तृत्वस्याभिहितत्वादप्रधान पचि क्रियायामपि तस्याभिहितत्वमेवोति तन्निबन्धनप्रथमाप्रवर्तत इति भावः। नन्वेमोदनं भुक्त्वा शास्त्रं पठ्यते इत्यादावपि ओदनादौ प्रथमाया आपत्तिरित्यत आह **कर्तृकारकस्यैवेति** ओदनं भुक्त्वेत्यादि प्रयोगे कर्मकारकस्याभिहितत्वाभावाद् द्वितीया सूपपादेति भावः, **नियमाङ्गीकारेणेति** अत्रच "स्वादुमिणमुल्" 3-4-26 इति सूत्रस्थं भाष्यं प्रमाणम् तच्च भाष्यं भर्तृहरिणा एवं व्याख्यातम् (साधनसमुद्देशे वाक्यपदीये 3 काण्डे) –

"प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्ति र्गुणाश्रया तत्र प्रधानमनुरुध्यते ।।८०।।

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा, गुणे तदा तद्वदनुक्तापि प्रतीयते।।८१'' इति

तस्य = चैत्रः पक्त्वा चैत्रो भुङ्क्ते इति प्रयोगस्य। प्रकारान्तरेण तस्य साधुत्व प्रतिपादयति – **प्रधानक्रियावाचिन इति** ओदनं भुक्त्वा शास्त्रं पठयते इत्यादि व्यावृत्यर्थमाह – **कर्त्राख्यतत्वे इति लक्षणेति** शक्तेः स्वीकारे सा सार्वत्रिकीस्यादिति प्रयोगाति प्रसङ्गः, लक्षणात् लक्ष्यानुसारादिति न दोष इति भावः। अत एव = आद्य चैत्रपदे निरुक्तरीत्या प्रथमाया एव स्वीकारादेव। अपप्रयोगः = क्त्वः समानं कर्तृत्व वाचित्वाभावेपि प्रथमाया एव न्याय्यत्वादयमपप्रयोग एव। क्त्वः समानकर्तृत्व वाचित्वा भाव एव युक्त इत्याह **अत एवेति** तस्य तद्वाचित्वाभावादेवेत्यर्थः। **कर्तर्येवेति** तस्य तद्वाचकत्वे मयेति करणत्वे तृतीयेत्याश्रयणीयं, गत्यन्तर सत्वात्तन्नचारु इति भावः। अत्र कल्पेपि पक्त्वौदनो भुज्यते इत्यत्र द्वितीयान्तौदनपदाध्याहार एव कार्य इत्याह **पक्त्वौदन इति कर्मकारकाध्याहार एवेति** प्रधान क्रियायामुक्तस्य गुणभूत क्रियायामप्युक्तिरिति नियमस्य, ओदनं भुक्त्वा शास्त्रं पठयते इत्येतत्सिद्धये कर्तृकारकमात्र विषयकत्वान्न तेनात्रनिर्वाहः। अत एव क्त्वः समान कर्तृत्वलक्षणायामपि न निस्तारः तस्या अपि प्रधान क्रियावाचिनः कर्त्राख्यातत्वे एव स्वीकारात्, अतोत्रापि पक्षे तदध्याहरेणैव वाक्यं समर्थनीयमिति भावः। **सुखोप पाद्य इति** नियमस्य कर्तृकारक मात्र विषयकत्वा, ल्लक्षणायाश्च्य प्रधान क्रियावाचिनः कर्त्राख्यातत्व एव स्वीकारादुभथापि ओदनपदस्य द्वितीयान्तत्वे बाधकाभावादिति भावः।

अत्रेदं बोध्यम् – क्त्वा प्रत्ययस्य भावार्थकत्वमेव, परंतु यत्रगुणभूत क्रियायां कर्मवाचक पदान्तरस्य न प्रयोगस्तत्रैव सनियम इति कल्प्यते, ओदनं भुंक्तेत्यादौ तादृश पदान्तरस्य गुणक्रियायां प्रयुक्तत्वात्त-न्नियमाप्रवृत्त्या न दोषः। पक्त्वौदनो भुज्यते इत्यत्र गुण क्रियायां तादृशपदप्रयोगसत्वादेतन्नियमवशाद्-गुणक्रियाकर्मत्वस्याप्यभिधाना न्न दोषः। तथाच पक्त्वौदनो भुज्यते इत्यत्र द्वितीयान्तौदनपदं नाध्याहर्तव्यमेव। एवं च यद्वृत्तिकारकत्वं स्वान्वयि प्रधानक्रिया प्रतिपादकपदेन वृत्त्या प्रतिपाद्यते, तत्वमभिहितत्वम् तदभावोऽनभिहितत्वमिति स्वीकार्यम्। एतच्च यदित्वित्यादिना भाट्ट दीपिकायां प्रतिपादितम्। ओदनं भुक्त्वा शास्त्रं पठयत इत्यत्र प्रधानपठन क्रियाप्रतिपादकेन पठयते इति पदेन शास्त्र निष्टकर्मत्वमेव प्रतिपादितं, नत्वोदननिष्ट मतो न तत्रोदने प्रथमा। पक्त्वौदनो भुज्यते इत्यत्र प्रधान क्रियाप्रतिपादक पदेन ओदन निष्टकर्मत्वस्य प्रतिपादनात्प्रथमानिष्प्रत्यूहे-ति।

**एवं पचनी स्थाली, दानीयो विप्रः, कुब्जरः करणमित्यादा वधिकरणत्वादेः कृदुक्तत्वा त्प्रथमो-पपत्तिः।**

कृत्प्रत्ययेन कारकत्वस्याभिधाने उदाहारति – **एवमिति** तिङन्तवदित्यर्थः। **पचनीति** पचिधातोः ''करणाधिकरणयोश्चे, 3-3-117 त्यनेनाधिकरणे ल्युट् स्त्रियां टित्वात् ङीप्, पचन्त्यस्यामिति पचनी, स्थाली निष्टाधिकरणत्वस्य स्वान्वयि पाकक्रियाप्रति पादकेनाभिहितत्वात्प्रथमा, **दानीय इति** दा धातोः ''कृत्यल्युटो बहुल – 3-4-13 मित्यनेन संप्रदाने अनीयर् दीयतेऽस्मैदानीयः अत्र ब्राह्मणनिष्ठ संप्रदानत्वस्याभिहितत्वात्प्रथमा। **करणमिति** कृञः करणे ल्युट्।

**न चैव मपि यत्र तिङन्तोपरि पचतितराम् पचतिकल्पम् पचतःकल्पम् पचन्तिकल्प मित्यादावतिशयार्थकः ईषदसमाप्त्यर्थको वा प्रत्ययः कृत, स्तस्य तद्धितत्वेन प्रातिपदिकसंज्ञया प्रातिपदिकार्थमात्रविवक्षायां प्रथमान्तत्वा त्तत्र प्रथमाप्रयोजकरूपाभावः, तद्वृत्तिकर्तृत्वस्य तिङ नुक्तत्वात्। ईषत्त्वाद्याश्रयस्य भेदसंबन्धेन पाकभावनाया मन्वया दिति वाच्यम्। तादृशस्थले**

**धातोरेव ईषदसमाप्त्यादौ लक्षणाङ्गीकारात्। कल्पबादिप्रत्ययस्य लक्षणातात्पर्यग्राहकत्वा-ङ्गीकारेण तदर्थान्वयस्यैवा नङ्गीकारे तत्रत्यप्रथमायाः साधुत्वमात्रार्थत्वात्। अत एव शाब्दबोधजनकप्रथमाया एवेदं प्रयोजकं, न तु साधुत्वार्थायाः,तस्या स्तु प्रथमातिक्रमे कारणाभाव एव। इदं चासंबुद्धिविषये, संबोधनप्रथमायाः स्वतन्त्रविधिविधेयत्वात्। अत एव तद्वृत्तिकर्तृत्वानभिधानेपि चैत्र मैत्रः पचतीतिप्रयोगः।**

निरुक्तं प्रथमा प्रयोजक रुपमव्याप्तमिति शङ्क्ते **नचेति** एवमपि = निरुक्तस्थलेषु प्रथमा समर्थनेपि। **पचतितरामिति** पचतीति तिङन्तात् ''तिङश्च'' 5-3-57 इत्यनु वर्तमाने ''द्विवचन विभज्योपपदेतर बीय सुनौ'' 5-3-57 इत्यनेन तरप्। ततः ''किमेत्तिङ व्ययघादाम्व द्रव्य प्रकर्षे '' 5-4-11 इत्यनेन आमु प्रत्ययः। एवं पचतीति तिङन्तात् ''ईषदसमाप्तौ कल्पब्देश्य देशीयरः'' 5-3-67 इत्यनेन कल्पप्। कृतः = शास्त्रेण। तस्य = तमबादेः प्रत्ययस्य। ''कृत्तद्दित समासाश्चे''1-2-46 त्यनेन तद्दितान्तस्य प्रातिपदिक संज्ञा विधानादाह **तद्धितत्वेन प्रातिपदिकसंज्ञयेति** प्रातिपदिकाधिकारे सुपा विधानात्पचतितरामित्यादेः प्रातिपदिकत्व मनयारीत्या प्रतिपादितम्, अर्थान्तरस्या भावादाह – **प्रातिपदिकार्थमात्रेति** तन्मात्र विवक्षायां प्रथमा, तदन्तत्वादित्यर्थः। एवं तत्र प्रथमामुपपाद्याव्याप्ति दर्शयति **तत्र प्रथमा प्रयोजकरुपाभाव इति** निरुक्ते पचतितमामित्यादौ ''स्वान्वयि क्रियेत्यादि प्रयोजक रूपं नास्ति, तथापि प्रथमा दृश्यते अतोत्र तस्य व्यभिचार इति भावः। तदेवोपपादयति **तद्वृत्ति कर्तृत्वस्येति** तद्धितार्थ वृत्ति कर्तृत्वस्येत्यर्थः। ननु प्रत्ययार्थातिशयेषत्वादेर्भावानायामन्वयात्तद्बोधक पदेन तद्वृत्ति कर्तृत्व मभिहितमेवेति क्व व्यभिचार इत्यत आह **ईषत्त्वाद्याश्रयस्येति** ईषत्त्वादेनभावनायमन्वयः, किंतु धात्वर्थे पाकादौ, तस्य भावनायाम्। ईषत्वाश्रयस्य = तदाश्रय पाकादेः। तादृश स्थले = कल्पबाद्यन्तस्थले। **तात्पर्यग्राहकत्वेति** अन्यथा केवलपचतिपदादपि तदर्थबोधापत्तिरिति भावः। तदर्थान्वयस्यैव = कल्पबादेः प्रत्येकमर्थाभावेन तदर्थस्यान्यत्रान्वयस्यैव। **साधुत्वमात्रार्थत्वादिति** ''न केवला प्रकृतिः प्रयोक्तव्ये'' ति नियमपरिपालनायैव सुपोऽपेक्षणादित्यर्थः। एवं च प्रकृत प्रथमाप्रयोजकरुपानाक्रान्तत्वान्नात्र तद्व्यभिचार शङ्केति भावः। अत एव = अस्यास्तद्रूपानाक्रान्तत्वादेव। तस्यास्तु = साधुत्वमात्रार्थक प्रथमायास्तु। **प्रथमातिक्रमे कारणाभाव एवेति** पदत्व संपादनाय येन केन चित्सुपोत्पत्तव्यम्। तत्र कपिञ्जलाधिकरण न्यायेन प्राथमिकत्वात्प्रथमैवोत्पद्यत इति भावः। एवं च यद्वृत्ति कारकत्वं स्वान्वयि क्रियाप्रतिपादकेन पदेन वृत्त्या प्रति पाद्यते तत्त्वं प्रथमाप्रयोजकीभूताभिहितत्वमित्यव्यभिचरि वच इति बोध्यम्। ननु संबुद्धौ प्रथमा नापत्तिः तद्वृत्ति कर्तृत्वस्यानभिधानादित्यत आह **इदं चेति** प्रदर्शितं प्रथमाप्रयोजकमित्यर्थः। **स्वतन्त्र विधीति** ''संबोधने च'' 2-3-47 इति स्वतन्त्र विधिना विधेयत्वादित्यर्थः। अत एव = तस्याः स्वतन्त्र विधिविधेयत्वादेव।

**केचित्तु – कृदादिभिरनभिहितत्वमेव तृतीयादिविभक्तिप्रयोजकम्। प्रथमायांतु कर्तृत्वा-द्यभिधानम्, कर्तृत्वाद्यविवक्षा च प्रयोजिका। अतश्च पचतिकल्पमित्यादौ विभक्त्यर्था-विवक्षायां प्रातिपदिकार्थमात्र विवक्षायां प्रथमोत्पत्तावपि बाधकाभावः। अत एवा विवक्षाविरहविशिष्टानभिधानं तृतीयादिप्रयोजकम्, तदभावः प्रथमाप्रयोजक इत्येवानुगमः।**

एतदेव प्रकारान्तरेण प्रदर्शयतां विशिष्यकल्पबादेर्वाचकत्व मङ्गीकुर्वतां मतमाह – **केचित्त्विति** एतैरपि प्रथमाया विशिष्यार्थो न स्वीक्रियते परंतु कल्पबादेरीषदसमाप्ति रूपार्थ वाचित्वं स्वीक्रियते इति विशेषः। पूर्वमताद्विशेषमाह **कर्तृत्वाद्यविवक्षाचेति** एवं च शाब्दबोधजनक प्रथमायाः प्रवृत्तौ कर्तृत्वाद्यभिधानं प्रयोजकम्, साधुत्वमात्रार्थक प्रथमायास्तु कर्तृत्वाद्यविवक्षेति विवेकः। अतश्च =

कर्तृत्वाद्यविवक्षाया अपि निमित्तत्वाश्रयणात्। स्वमते लाघवं दर्शयति **अत एवेति** कल्पबाद्यन्तादपि प्रथमोत्पत्तेरुपपादितत्वादेवेत्यर्थः। **अविवक्षेति** अविवक्षाविरहेण विशिष्टं यत् अनभिधानं तत् तदभावः = अविवक्षा विरह विशिष्टानभिधानाभावः। अनुगमः = अनुगतिः ऐकरूप्यम्।

**न चैवमपि प्रकारतया करणत्वाद्यविवक्षायां भवन्मते करणत्वादिसंसर्गेण काष्ठादीनां भावनान्वयापत्तेः चैत्रः काष्ठानि स्थाली ओदनः पचतीति प्रयोगापत्तिः। परमतेहि तेषां धात्वर्थेऽन्वयात्तत्रचा भेदसंबन्धेनैव नामार्थान्वया न्न तथाप्रयोगापत्तिः। तेषामपि दधि पश्यतीत्यादिवत् काष्ठकरणत्वलक्षणया प्रयोगापत्तिरनिवार्यैव। भवन्मते तु सर्वस्याऽऽख्यातार्थ एवा न्वया त्तत्रच नामार्थस्यापि चैत्रादे र्भेदसंसर्गेणान्वयाङ्गीकारवत् काष्ठादीना मप्यन्वयोपपत्तिरिति वाच्यम्। एतादृशप्रयोगापत्तिभयादेव मयापि स्वबोधककृदाद्यभिहित-कारकवाचिनामभिन्ननामार्थस्य तद्गतलिङ्गसंख्यादे र्वा क्रियासंबन्धे सुबुपात्तलिङ्गसंख्या-व्यातिरिक्त द्वितीयाविभक्त्युपस्थितार्थद्वारकत्वं तन्त्रमिति नियमस्य कल्पनात्। स्वपदं स्वान्वयिक्रियापरम्। अत्र नामार्थस्यापि चैत्रादेः पचतीत्यादौ साक्षादेव क्रियायामन्वयाद् 'भिन्ने' त्यन्तम्। पाचकमानयेत्यादौ कृदाद्यभिहितकारकवाचिनोपि पाचकपदस्याऽऽनयनानुकूल-कृतावन्वये द्वितीयोपस्थापितकर्मत्वद्वारकत्वस्या वश्यकत्वात् 'स्वबोधके' त्युक्तम्। पाचकः पक्वमित्यादावपि लक्षणया भावनाबोधस्य वक्ष्यमाणत्वात्, तत्र काष्ठदीना मन्वये तत्र करणत्वादिबोधकतृतीयाद्यावश्यकम्।**

**अत एव एतन्नियमानुरोधेनैव कौस्तुभादौ प्रातिपदिकार्थस्य सुबुपात्तलिङ्गसंख्ययो श्च साक्षाद्भावनान्वयो नाङ्गीकृतः। अतः पचतिकल्पमित्यादौ प्रातिपदिकार्थमात्रविवक्षायां प्रथमे-त्याहुः।**

एवम् = कर्तृत्वाद्यविवक्षायाः प्रथमाप्रयोजकत्वे। **प्रकार** तयेति करणत्वादीनां प्रकारतया बोधोभवत्वितीच्छाया असत्वे इत्यर्थः। तथाच सर्वेष्वापि काष्टादि पदेषु प्रथमायाः प्रवृत्ति र्दुर्वारेति भावः, भवन्मते = सर्वेषां पदार्थानां भावनान्वय वादिनस्तवमते। तदवस्थायां निष्पन्नं वाक्यं दर्शयति **चैत्रः काष्टानिस्थाली ओदनः पचतीति** भवन्मते इत्यनेन सूचितं स्वाशयं प्रकटयति – **परमत इति** नैयायिकादि मते इत्यर्थः। हि शब्दः प्रसिद्धिद्योतकः। अयमर्थः – परेषां मते काष्टानि स्थालीत्यादि प्रयोगात् करणत्वादि संसर्गेण काष्टादिविशिष्टः शाब्दबोधो न जायते। तेषां धात्वर्थेन्वयो वाच्यः, स च न संभवति। नामार्थ धात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात्, अभेदेनान्वयोपि न घटते काष्ठाद्य भेदस्य धात्वर्थे बाधितत्वात्। अतः परमते सप्रयोगो वार्यते-इति। तदाह – **तेषामिति** काष्टादीनामित्यर्थः **धात्वर्थे न्वयादिति**, परैस्तथैवाभ्युपगमात्। नामार्थ धात्वार्थयोः इत्यादि व्युत्पत्तिवशाद्भेदेनान्वयो नाभ्युपेय इत्याह **अभेद संबन्धेनैवेति**, एव शब्दे न भेदान्वयस्य व्यावृत्तिः। **न तथा प्रयोगापत्तिरिति** अभेदान्वयस्य बाधितत्वादस्य प्रयोगस्यापत्तिर्नेत्यर्थ वस्तुतः परमतेपि स प्रयोगो दुर्वार इत्याह **तेषामपीति** परेषामपीत्यर्थः। **दधितिष्ठतीत्यादिवदिति** दधीत्यत्र सुपो लुका लुप्ततयाऽवशिष्टस्यैव दधिकर्तृकत्वे लक्षणया दधि कर्तृका स्थितिरिति स्थित्याश्रयत्ववद् दधीति वा बोधः स्वीक्रियते, तद्वदत्रापि सुपः सत्त्वेपि तस्य साधुत्व मात्रतया करणत्वादिलक्षणया बोधः स्यात् अबाधितार्थ बोधकतया तत्प्रयोगस्यापत्तिरिति भावः। परमतापेक्षया मीमांसकमते वैलक्षण्यं दर्शयति **भवन्मते इति** सर्वस्य = पदार्थस्य। ''नामार्थधात्वर्थयो'' रिति व्युत्पत्तेरत्रा प्रसराददोष इत्याह **आख्यातार्थ एवान्वयादिति** तत्र च = आख्यातार्थे च। भेदेनान्वये दृष्टान्तमाह **नामार्थस्थापि चैत्रादेर्भेदसंसर्गेणान्वयाङ्गीकारवदिति** चैत्रः

पचतीत्यादौ चैत्रादेः कर्तृता संसर्गेणाख्यातार्थ भावानाया मन्वयः स्वीकृतः, तद्वत् करणत्वादि संसर्गेण काष्टादीनामन्वय उपपद्यते, अतस्तत्प्रयोगापत्तिर्भवन्मते इति भावः। व्युत्पत्त्यन्तराश्रयणेन मयापि तदापत्तिर्वार्यते इत्याह **एतादृशेति** मयापि = सर्वेषां पदार्थानां भावनान्वयवादिना मयापि। **स्वबोधकेति** स्वान्वयि क्रियाबोधकं यत् कृदादि, आदिना तिङादेर्ग्रहणम्, तदभिहितं यत्कर्त्रादिकारकं, तद्वाचि यन्नाम चैत्रादि, तद्भिन्नं यन्नामस्थाली काष्टादि तदर्थस्येत्यर्थः। क्रियासंबन्धे = भावनान्वये। **सुबुपात्तेति** सुबुपात्ते ये लिङ्गसंख्ये, तद्व्यतिरिक्तो यो द्वितीयादि विभक्त्युपस्थितोऽर्थः तद्द्वारकत्वमित्यर्थः। **कल्पनादिति** यथा – चैत्रस्तण्डुलं काष्टैः स्थाल्यां पचतीत्यत्र चैत्रान्वयि पाक क्रियाबोधक तिङभिहित कर्तृवाचक चैत्रनामभिन्नं यत् तण्डुल काष्टस्थाली इत्यादिकं नाम, तदर्थस्य पाकभावनान्वये द्वितीयतृतीया सप्तमीरूप विभक्त्युपस्थापितार्थ रूपकारण सत्वाद्विशिष्टबोधो जायते। चैत्रः काष्टानि स्थालीत्यादि प्रयोगे तादृश विभक्त्युपस्थापितार्थरूप कारणाभावात्करणत्वादि संसर्गकोबोधोनोदेति। अतस्तत्प्रयोगापत्तिर्ममापि मते नेति भावः। चैत्रादेः स्वपद ग्राह्यत्ववारणायाह – **स्वपदं स्वान्वयि क्रियापरमिति** स्वान्वयिनी या क्रिया तत्परमित्यर्थः। ननु नामार्थस्य क्रिया संबन्धे द्वितीयादि विभक्त्युपस्थितेस्तन्त्रत्वाङ्गीकारेण सिद्धे भिन्नान्तं विशेषणं व्यर्थमित्यत आह **अत्रेति** व्युत्पत्तावित्यर्थः। अस्य भिन्नेत्यन्त मित्यत्रान्वयः। चैत्रादेरित्यादि पदेन चैत्रेण तण्डुलः पच्यते इत्यादेर्ग्रहणम्। साक्षादेव = भेदेन साक्षादेव। क्रियायामन्वयात् = चैत्रवृत्तिः पाक भावनेति बोधात्। **भिन्नेत्यन्तमिति** एतदभावे चैत्रादेरपि नामार्थत्वादेतद्व्युत्पत्ति वशात्साक्षात्तस्य क्रियान्वयानापत्तिः, अत स्तद्व्यावृत्त्यर्थमिदं विशेषणम् – चैत्रनाम्नि स्वबोधक तिङभिहित कर्तृकारकवाचक नामत्वस्यैव सत्वेन तद्भिन्ननामत्वाभावात्तदर्थस्य साक्षात्तत्रान्वयः सेत्स्यतीति भावः। स्वबोधेकेत्यस्य प्रयोजनमाह **पाचकमानयेति** स्वबोधकेत्यस्याभावे कृदभिहित कर्तृकारक वाचिनामत्वात् पाचकपदस्य तत्र तद्भिन्न नामत्वाभावात्तदर्थस्यापि विभक्त्यर्थम द्वारीकृत्य साक्षादानयन क्रियायां कर्मतासंसर्गेणान्वयापत्त्या तत्रार्थे पाचक आनयेत्यस्य प्रयोगस्यापत्तिः, स्वबोधकेत्युक्तौ तु पाचकान्वयिनी क्रिया आनयनानुकूलकृतिः, तद्बोधकः तिङ् तदभिहितं कारकं चैत्रादि कर्तृकारकं (न तु पाचकादि कर्मकारकम्) तद्बोधकं नाम चैत्रादि नाम तद्भिन्न नामत्वं पाचक शब्दे, अतस्तदर्थस्य एतद्व्युत्पत्तिवशान्न साक्षाद्भावनान्वयः, किंतु द्वितीयोपस्थापित कर्मत्वद्वारा। अतस्तदर्थे पाचक आनयेति न प्रयोगः, किंतु पाचकमानयेत्येवेति न दोषः, अतः स्वबोधकेति तदाह **कृदादीति** स्वपदगृहीतमाह **आनयनानुकूल कृताविति** तद्भिन्न नामार्थत्वादाह – **द्वितीयोपस्थापितेति** ननु निरुक्त व्युत्पत्तौ कृद्ग्रहणं व्यर्थम् कृतां कर्त्रादि धर्मिवाचकतया स्वान्वयि क्रियाबोधकत्वा भावात्, तिङमेव तादृश क्रियाबोधकत्वादित्यत आह – **पाचकः पक्वमिति वक्ष्यमाणत्वादिति** तृतीया प्रकरणे "चैत्रः पाचकः पक्तेत्यादौ कृतैव पाकानुकूलकृते लिंङ्गानन्वयिन्या उक्तत्वात्, तस्य कर्तृत्वोपपत्तिः इति द्वितीया प्रकरणे "कर्मकृत् स्थलेपि पक्व ओदनोस्तीत्यादौ पाकस्य कृत्प्रत्यय लक्ष्यायां कृतौ" इति च वक्ष्यते। तत्र = कृल्लक्षितायां कृतौ। कांष्टादीनामन्वये = काष्टैः स्थाल्यां ओदनस्य पाचको भुङ्क्ते इत्यादौ, **करणत्वेति** अन्यथा काष्टानि स्थाल्यामित्यादि प्रयोगापत्तिरित्यर्थः उक्त नियमः स्वस्यात्यन्तमभीष्ट इत्याह **अत एवेति** एतन्नियमा भावे दोषसद्भावादेवेत्यर्थः। स्वाभिप्रायमुपसंहरति **अत इति** कर्त्राद्यविवक्षाया अपि प्रथमा प्रयोजकत्वादित्यर्थः।

**तन्न, एव मपि ईषदसमाप्तेः कल्पप्प्रत्ययवाच्याया भावनयासह भेदसंबन्धविवक्षया षष्ठ्यापत्तेर्दुर्वारत्वात्। ईषदसमाप्तेरपि तादृशनामार्थतया निरुक्तक्रियासंबन्धे द्वितीयादिविभक्त्यर्थद्वारकत्वाभावाद् व्यभिचारापत्तेश्च**

**अतोऽन्यत्र व्याकरणस्य वृत्तिबोधकत्वेपि प्रकृते तात्पर्यग्राहकतामात्रपरतेति युक्त मुत्पश्यामः।**

तद्दूषयति **तन्नेति** एवमपि = कर्त्राद्यविवक्षायाः प्रथमाप्रयोजकत्वेपि। कल्पबादेर्वाचकत्व स्वीकारादाह **कल्पप् प्रत्यय वाच्याया इति** षष्ठ्यापादने बीजमाह **भेद विवक्षयेति** अत्रोक्त नियमस्य व्यभिचारो दोष इत्याह **ईषदसमाप्तेरपीति तादृश नामार्थतयेति** स्वबोधक तिङुपात्त कर्तृकारक बोधक चैत्र भिन्न नामार्थतयेत्यर्थः। **व्यभिचारापत्तेश्चेति** तथाच तन्नियमायोगात् करणत्वादि संसर्गेण काष्टं तण्डुल इत्यादेः प्रयोगस्य दुर्वारतया कर्त्राद्यविवक्षायाः प्रथमा प्रयोजकत्वं न घटत इति भावः। सूत्रस्य कागतिरत आह **अत इति** अन्यत्र = कर्मणि द्वितीयेत्यादौ।

**केचित्तु - पचतिकल्पमित्यादौ तिष्ठतीत्याध्याहारात् पाक भावनावृत्ति रीषदसमाप्ति स्तिष्ठतीत्यर्थः, अस्मिं श्च पक्षे पचतीति तिङर्थोपि कल्पप्प्रत्ययार्थेन भेदसंबन्धेनान्वेति, एकपदोपात्तत्वात्। अतश्च कल्पप्प्रत्ययस्य वाचकत्वेपि तस्य तिष्ठतीत्यत्रैवान्वयात् प्रथमोपपत्ति-रित्याहुः।**

**तन्न, बहुत्वविवक्षायां पचन्तिकल्पा इत्यस्याप्यापत्तेः**

**एवं चा स्मन्मते सर्वत्र प्रथमाप्रयोजकरूपलाभः सुलभो, नतु भवन्मत इति सिद्धम्।**

क्रियापदान्तराध्याहारेण वाक्यं समर्थयतां मतमाह **केचित्त्विति अस्मिंश्चपक्षे** = अध्याहारेण अर्थं वर्णयतामस्माकं पक्षे। भेद संबन्धेन = आश्रयता संबन्धेन, ईषत्वं पाकवत्। अतश्च = तिष्टतीत्यस्याध्याहारात् प्रथमोपपत्तिः = यद्वृतिकारकत्वमिति — व्युत्पत्त्या पचति कल्पनिष्ट कर्तृत्वस्य तिष्टतिना प्रतिपादनात्तदुपपत्तिः। बहुत्व विवक्षायाम् = आश्रयगतबहुत्वमादाय तत्र तद्विवक्षायाम्। **इत्यस्याप्यापत्तेरिति** नचेष्टापत्तिः तथाप्रयोगाभावात् महाभाष्य विरोधाच्च।

## (कर्तृलक्षणावादः)

**नन्विद माख्य**

## (कर्तृलक्षणावादः)

**नन्विद माख्यातस्य कृतिवाचिनः कर्तृलक्षकत्वे सिध्द्येत्। तत्रैवत् प्रमाणाभाव इति चेत्,**

**पचतित्युक्ते कीदृग्विध इति प्रश्नस्यैव प्रमाणत्वात्। न हि धर्मिज्ञानं विना धर्मविषयप्रश्नो-युज्यते।**

**न च धर्मिज्ञानं त्वन्मते संभवति, पचतिपदात् पाकप्रकारकानुकूलतासंसर्गकाख्यातार्थ-विशेष्यकाखण्डवाक्यार्थबोधस्यैव जननात्। प्रथमान्त पदजन्योपस्थिति रूपकारणाभावेन कृतिप्रकारकाश्रयविशेष्यकबोधस्य जनयितु मशक्यत्वात्।**

**यद्यपि भवन्मते कृतिप्रकारकबोधं प्रति आख्यातपदज्ञानत्वेनापि कारणताऽस्ति, तथापि तत्कार्यतावच्छेदकं यदि कृतिप्रकारकबोधत्वम्, तदा आश्रयज्ञानाभावाद्धर्मिज्ञानाभावः सुलभ एव। यदि तु कृतिप्रकारकाश्रयविशेष्यकबोधत्वम्, तदापि तत्र प्रथमान्तपदजन्योपस्थितेरपि दण्डचक्रादिवत् समुच्चित्यकारणत्वात् तदभावेनाऽभावः सुलभः।**

**अतोऽवश्यं प्रश्नोपपादकधर्मिज्ञानार्थं प्रथमान्तपदाध्याहारार्थं चाश्रयज्ञानं वाच्यम्।**

"अस्मन्मतेतु सत्यपि तिङो भावनावाचित्वे वक्ष्यमाणरीत्या कर्त्रादेरपि लक्षणयाऽभिधाना" दिति प्रतिज्ञातमर्थं निरूपयितुमुपक्षिपति – **नन्विति** इदम् = कर्तृकर्माभिधानानभिधानाभ्यां प्रथमा तृतीयादि व्यवस्थेति कथनम्। तत्रैव = तल्लक्षकत्व एव। **प्रमाणाभाव इति** तथाच ऋष्यनुभवसिद्धाऽभिधाना-नभिधानव्यवस्थात्वन्मतेऽपि न घटत एवेति भावः। **कीदृग्विध इति** कीदृशी विधा यस्य सः, कीदृशधर्मविशिष्ट इति तदर्थः। प्रश्नस्यैव = धर्मविषयकप्रश्नस्यैव। तत्र = कर्त्रादौ लक्षणाश्रयणे। तदेवोपपादयति **नहीति** तथाच धर्मविशेषप्रश्नान्यथानुपपत्या धर्मिज्ञानमावश्यकमिति भावः। एवं यजेतेत्युक्ते क इति जायमानसंशयोऽपि तत्र प्रमाणम्। तादृशसंशयात्पूर्वमवश्यं धर्मिज्ञानसिध्यर्थं कर्तृत्वविशिष्ट कर्तृज्ञानं भवतीत्यस्य निर्विवादत्वात्। नन्वलमनेन प्रयासेन। कृतिशक्तिवादिनो मम मते तत्प्रकारक चैत्राधाश्रयविशेष्यक शाब्दबोधस्य स्वीकारेण धर्मिज्ञानस्य सुलभत्वादिति पर्यनुयुञ्जानं नैयायिकं प्रत्याह – **नहि धर्मिज्ञानं त्वन्मते संभवतीति** असंभवमेव दर्शयति **पचति पदादिति** चैत्रादिपदान्तरं विना प्रयुज्यमानात्तत्पदादित्यर्थः। **पाकप्रकारकेति** पचिधात्वर्थः पाकः, कृतिराख्यातार्थः। प्रकृत्यर्थः पाकः प्रत्ययार्थे कृतौ प्रकारः, अनुकूलत्वं संसर्गः। तथाच पाकानुकूला कृतिरिति बोधः। बोधस्यैवेत्येवशब्देन धर्म्यलाभस्सूचितः। **जननादिति** तथाच धर्मिज्ञानं तव मते न संभवत्येवेति भावः। ननु न वयं कृतेः मुख्यविशेष्यत्वमभ्युपेमः, प्रकृत्यर्थापेक्षया प्रधानस्यापि कृतेः प्रथमान्तार्थे प्रकारत्वमङ्गी-कुर्मः, अतो धर्मिज्ञानं संभवत्येवेत्यत आह – **प्रथमान्तेति अशक्यत्वादिति** आख्यातार्थकृतिप्रकारकबोधं प्रति प्रथमान्तपदजन्योपस्थितेस्त्वया कारणत्वाभ्युपगमेन कारणाभावेन तद्बोधो जनयितुमशक्य इति भावः। नैयायिकमते धर्मिज्ञानमाख्यातार्थकृतिप्रकारकबोधोपपादनेऽपि न संभवतीति प्रतिपादयति **यद्यपीति ज्ञानत्वेनापीति** प्रथमान्तपदज्ञानाभावेऽपि आख्यातार्थकृतिप्रकारकबोधः सेत्स्यतीत्याशयः। तत्कार्यतावच्छेदकं कृतिप्रकारकबोधत्व? मुत तत्प्रकारकाश्रयविशेष्यकबोधत्वमिति विकल्पयाद्यं दूषयति – **यदि कृतिप्रकारकबोधत्वमिति** द्वितीयं दूषयति **यदि तु कृतिप्रकारकाश्रयेति** तदभावेन = प्रथमान्तपदजन्योपस्थितेरभावेन। एवं नैयायिकमते धर्मिज्ञानासंभवं प्रदश्र्य प्रकृतमाह – **अत इति** त्वन्मते तदसंभवादेवेत्यर्थः। **प्रश्नोपपादकेति** कीदृग्विध इति प्रश्नोपपादकं यद्धर्मिज्ञानं तदर्थम्। एवं क इति संशयोपपादनार्थं चाश्रयज्ञानमावश्यकमिति भावः। **प्रथमान्तपदेति** चैत्रादिपदान्तरप्रयोगाभावेऽपि

केवलपचादिप्रयोगेऽपि तदर्थमित्यर्थः। **आश्रयज्ञानं वाच्यमिति** पचतीत्यतः पाककर्तृबोधं विना नैतदुभयमुपपादयितुं शक्यत इति भावः।

**तच्च शाब्दं मानसं स्मरणं वेति विप्रतिपत्तिः। तत्र "लः कर्मणि च भावे चाकर्मकेभ्यः" 3-4-69 इत्यनुशासना च्छाब्दमेव। तत्र चकारात् "कर्तरिकृत्" 3-4-67 सूत्रीयस्य कर्तरीत्यस्याऽनुकर्षणात् कर्तर्यपि लकारलाभः।**

**इदं हि न लकारस्य कर्त्रादौ शक्ति रित्येवं परम्। पदार्थे वृत्तौ च तात्पर्यकल्पने गौरवात्। लाघवेन कृतौ शेक्ता ववधारितायां तदनुशासनस्य निरूढलषणयैव व्याख्येयत्वाच्च।**

**कर्तुर्मानसत्वे तत्र संख्यान्वयानुपपत्तेः। पचती त्येतावन्मात्रश्रवणे कर्तरि एकत्वसंशयापत्ते श्च। पचतीति पाचक इत्येवं कृदर्थविवरणाच्च। अत आश्रयज्ञानस्य शाब्दत्वमेव।**

एवमाश्रयज्ञानस्यावश्यकत्वमुपपाद्य तल्लक्षणाधीनमिति निरूपयितुमुपक्रमते **तच्चेति** आश्रयज्ञानं चेत्यर्थः। तत्र = विप्रतिपत्तिविषयाणां मध्ये। **लःकर्मणि चेति** ल इत्यत्र उच्चारणार्थकाकारेण जातावेकवचनम्। लकारा इति तदर्थः। ननु सूत्रे कर्मणित्युपादानात् तस्य शाब्दत्वेऽपि तत्र कर्तरीत्यस्याभावात्कथं तद्बलेन तस्य शाब्दत्वमित्यत आह – **अत्रेति** लःकर्मणि इति सूत्रे इत्यर्थः। **कर्तरि कृदिति** कर्त्रर्थे कृत्प्रत्ययः स्यादिति तत्सूत्रार्थः। पाचकः पक्ता, कुम्भकार इत्यादीन्युदाहरणम्। अनुकर्षणात् = अनुवृत्तेः। तथाच लःकर्मणि चेत्यत्र वाक्यद्वयम्। आद्यं सकर्मकधातुविषयकम्, लकाराः सकर्मकेभ्यः कर्मणि, कर्तरि च स्युरिति। द्वितीयमकर्मकधातुविषयकम्, अकर्मकेभ्यो भावे कर्तरि चेति। तेन सकर्मकेभ्यो न भावे लकाराः, अकर्मकेभ्यो न कर्मणि **लकारलाभ इति** एतदनुशासनबलात् कर्तृकर्मज्ञानं शाब्दमेवेति भावः। नन्विदमनुशासनं भवतः प्रतिकूलम्, तस्य कर्तृकर्मणोर्लकारस्य शक्तिग्राहकत्वात्। आख्यातस्य कर्तृकर्मणोर्लक्षणेति भवतः सिद्धान्तादत आह – **इदं हीति** निरुक्तं "लःकर्मणि चे" त्यादि पाणिनीयमनुशासनमित्यर्थः। पदार्थे = कर्तृकर्मादिरूपपदार्थे। वृत्तौ = शक्तौ, तात्पर्यकल्पने = अनुशासनस्य उभयत्र तत्कल्पने। ननु प्रामाणिकत्वान्नेदं गौरवं दोषाय इत्यत आह – **लाघवेनेति** कर्तरि शक्तौ कर्तृत्वं शक्यतावच्छेदकं वाच्यम्। कर्तृत्वञ्च कृत्याश्रयत्वम्। तच्च कृतिरेव। तथाच कृतीनां नानात्वादेकशक्यतावच्छेदकाभावान्न कर्तरि शक्तिर्युक्ता, तद्गौरवप्रसङ्गात्। अतः कृतावेवाख्यातस्य शक्तिः, कृतित्वं शक्यतावच्छेदकम्। तच्च जातिरूपमेवेति शक्यतावच्छेदकलाघवं स्पष्टमेव। अतो लाघवात् कृतौ शक्तिरवधार्यत इति भावः। **व्याख्येयत्वाच्चेति** निरुक्तलाघवादाख्यातस्य कृतावेव शक्तिः, लःकर्मणीत्यनुशासनं तु कर्तृकर्मणोर्निरूढलक्षणाग्राहकमेव। एवञ्च तत्र तदाश्रयणे पाणिनीय-मनुशासनं तात्पर्यग्राहकमेवेति न तद्विरोध इति भावः। नन्वाश्रयज्ञानं मानसमेवास्तु, किं तस्य शाब्दत्वा-ग्रहेणेत्यत आह – **कर्तृर्मानसत्वे इति** तत्र = मानसे कर्त्रादौ। **संख्यान्वयानुपपत्तेरिति** आख्यातवाच्यैकत्वा-दिसंख्याया अनन्वयापत्तिः, "न हि शाब्दमशाब्देनान्वेती" तिन्यायादिति भावः। **एकत्वसंशयेति** पाककर्ता एको नवेति संशयापत्तिः। चैत्र इत्यादि पदप्रयोगाभावे तन्निर्णायकस्या भावादिति भावः। **कृदर्थविवरणा-च्चेति** पाचक शब्दः पचतीत्यनेन विव्रियते। पाचकशब्दश्च पाककर्तृबोधकः। पचतीत्यस्य कर्त्रबोधकत्वे तस्य विव्रियमाणशब्द समानार्थकत्वाभावाद्विवरणत्वमेव भज्येत। अतः पचतीत्यतोपि कर्तृबोध आवश्यक इति भावः। आश्रयज्ञानं स्मरणरूपमिति पक्षेऽप्येतद्दोषतादवस्थ्यम्। अतस्तत्पक्षोपि अयुक्त इति बोध्यम्। स्वमतमुपसंहरति **अत इति** शाब्दत्वमेवेत्येव शब्देन मानसत्वस्मरणत्वयोर्निरासः।

**युक्तं चैतत्। आख्यातोपात्तसंख्याप्रकारकशाब्दबोधं प्रति आख्यातपदस्य प्रथमान्तपदापेक्षयो**

**पस्थि तत्वेनाऽऽख्यातपदजन्योपस्थितित्वेन कारणत्वकल्पने लाघवात्।**

**अतो लाघवा दनुशासनाद्धर्मिज्ञानानुरोधा दाख्यातस्य कर्त्रादौ लक्षणा।**

तत्समर्थयते — **युक्तञ्चेति** एतत् = आश्रयज्ञानस्य शाब्दत्वम्। युक्तत्वमेव दर्शयति **आख्यातोपात्तेति** नैयायिकैस्तत्प्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितेः कारणत्वं स्वीक्रियते। प्रथमान्तपदापेक्षया आख्यातपदस्य शीघ्रमुपस्थितत्वा देकपदोपात्तत्वात् तत्पदजन्योपस्थितेर्हेतुत्वकल्पने लाघवमिति भावः। कर्त्तरि लक्षणावादं सहेतुकमुपसंहरति — **अत इति** लाघवात् = संख्याप्रकारकबोधं प्रति आख्यातपदजन्योपस्थितेः कारणत्वकल्पनालाघवात्। अनुशासनात् = "लःकर्मणि च भावे चाकर्मकेभ्य" इत्यनुशासनात्। धर्मिज्ञानानुरोधात् = प्रश्नोपपादकतज्ज्ञानानुरोधात्। कर्त्रादौ = आदिनाकर्मणि।

**एतेन — एकत्वादेरस्मन्मते कर्त्रादिघटितसामानाधिकरण्यसंबन्धेनैव भावनान्वयात्कर्त्रादेः सांसर्गिकविषयतयैव बोध — इत्यपास्तम्। पाककर्ता एको न वेत्यस्य संशयस्य पचतीत्यतो व्युदासानुपपत्तेः, अनुशासनवैयर्थ्यापत्ते श्च लक्षणेति न कश्चिद्विरोधः। धर्मितावच्छेक-विशिष्टधर्मिज्ञानाभावा त्पाककर्ता क इति संशयानापत्ते श्च।**

कर्त्रादिस्सांसर्गिकविषयतया भानमिति वादिनाम्मतं निराकरोति — **एतेनेति** वक्ष्यमाणदोषेणेत्यर्थः। एतेनेत्यस्यार्थं — विवृणोति — **पाककर्तेति व्युदासानुपपत्तेरिति** पचतीत्यतः पाकानुकूलकृतिमात्र-विषयकबोधोदयादिति भावः। **अनुशासनेति** लःकर्मणि चेत्यादि पाणिन्यनुशासनवैयर्थ्यापत्तेरित्यर्थः।

**न च क्वचिदपि शक्तिमात्रजन्यशाब्दबोधाभावे तस्यैव पदस्याऽर्थान्तरलक्षकत्वासंभव इत्यत्र प्रमाण मस्ति। मुख्यार्थासंभवस्येवाऽर्थान्तरबोधानुपपत्तेरपि लाघवतर्कसहकृताया लक्षणा-तात्पर्यग्राहकत्वात्।**

**तत्रापि शबादिविकरणस्थले कर्तरि यगादिविकरणस्थले च कर्मणीत्येवं व्यवस्थया लक्षणा। लक्ष्यतावच्छेदकं चा श्रयत्वं, कर्तृत्वकर्मत्वाद्यखण्डोपाधिर्वा।**

**नचेति** अयमाशयः — मुख्यार्थबाधे लक्षणाऽश्रीयते। मुख्यार्थबोधस्य क्वचिदुपपत्तावन्यत्र तद्बाधे लक्षणेति वृद्धानां व्यवहारः। यथा — गङ्गायां घोष इत्यादौ। गङ्गायां मीनाः संचरन्तीत्यादौ प्रवाहमात्रविषयको बोधः सर्वसिद्धः। घोषपदसमभिव्याहारे घोषाधिकरणत्वस्य प्रवाहे बाधितत्वात्तत्र तीरे लक्षणा स्वीक्रियते। मुख्यार्थमात्रविषयकबोधस्य क्वचिदप्यप्रसिद्धौ तु न लक्षणाऽऽश्रयणीया। बीजाभावात्। प्रकृते कृतिरूपमुख्यार्थमात्रविषयकबोधस्याभावाल्लक्षणाबीजाभावात्कथं तदाश्रयणम्, कर्तारं विना कृतिमात्रबोधस्य क्वाप्यभावादिति संशयो जायेत। संशयो माभूत्, तादृशनियमे मानाभावादिति।नचेत्यस्य प्रमाणमस्तीत्यत्रान्वयः। एतदेवोपपादयति **क्वचिदपीति** लक्ष्यार्थाऽविषयके स्थले इत्यर्थः। तस्यैव पदस्य = प्रकृते पचतिपदस्य। नियमोदाहरणं — गङ्गायां घोष इत्यादि। स्वाशयं प्रकटयति **मुख्यार्थासंभवस्येवेति** अर्थान्तरबोधानुपपत्तेरपि = प्रकृते धर्मिज्ञानानुपपत्तेरपि। अतिप्रसङ्ग-वारणायाह — **लाघव तर्केति** तत्रापि = आश्रयलक्षणायामपि। **शबादीति** आदिना श्यन्नादीनां परस्मैपदादीनाञ्च ग्रहणम्। तेन पपाचेत्यादौ न दोषः। **यगादीति** "सार्वधातुके यक्" 3-1-67 इति भावसाधारणविधिविहितेत्यर्थः। तेन पच्यते तण्डुलः स्वयमेवेत्यादौ कर्मकर्तरि नातिव्याप्तिः। आदिना चिणात्मनेपदादीनां ग्रहणम्। **व्यवस्थयेति** अतो न साङ्कर्यमिति भावः। **आश्रयत्वमिति** व्यापाराश्रयः कृत्याश्रयो वा कर्ता, फलाश्रयः कर्म। तत्र फलव्यापारयोर्धात्वादिलभ्यत्वादनन्यलभ्य आश्रय एव

आख्यातलक्ष्यः, अत आश्रयत्वमाख्यातलक्ष्यतावच्छेदकमिति भावः। स्वसिद्धान्तरीत्याऽह – **कर्तृत्वकर्मत्वाद्य खण्डोपाधिर्वेति** आदिपदं संपातायातं, तद्ग्राह्यस्या भावात्।

**कर्तृत्वादिकं हि कृत्याश्रयत्वादिसमनियतोऽखण्डधर्मोऽनुगतव्यवहार साक्षिकः, न तु कृत्याश्रयत्वादिकमेव। तथात्वे चैत्रेण पाकः क्रियत इत्यत्र चैत्रेण पाक इत्येतावतैव चैत्रनिष्ठकृतिसाध्यः पाक इत्यर्थबोधोपपत्तेः पुनः क्रियत इति कृतिवाचकपदप्रयोगवैयर्थ्यापत्तेः।**

**अतः कर्तृत्वादिक मखण्डमेव तृतीयार्थः। तस्य चा श्रयत्वादिवदेव कृत्यादिनिरूपितत्वादि-धर्मकल्पनाच्चैत्रनिष्ठकर्तृत्वनिरूपककृतिसाध्यः पाक इत्यर्थबोधोपपत्तिः।**

**इदं च परमतेनोक्तम्, स्वमते उक्तकृतिसाध्यत्वं पाकवृत्तीत्येवं शाब्दबोधस्य वक्ष्यमाणत्वात्। सर्वथा कर्तृत्वादिक मखण्डोपाधिः।**

**इष्टं चैतत् प्राचां दम्पत्यो र्व्यासज्यवृत्ति कर्तृत्वसिध्यर्थम्, अग्नीषोमयो र्व्यासज्यवृत्तिदेवतात्व सिध्यर्थंच। अन्यथा कृत्याश्रयत्वरूपकर्तृत्वस्य, त्यज्यमान द्रव्योद्देश्यत्वरूपस्य च देवतात्वस्य आश्रयभेदेन भिन्नतया व्यासज्यवृत्तित्वसिद्धान्तानुपपत्तेः।**

**अतः कर्तृत्वं कर्मत्वं च लक्ष्यतावच्छेदकीकृत्य कर्तृकर्मणो राख्यातस्य लक्षणा।**

तदेवोपपादयति **कर्तृत्वादिकमिति** आदिना कर्मत्वस्य ग्रहणम्। **कृत्याश्रयत्वेति** कृतिवाचकात् कृञ्धातोः कर्तरि तृच्प्रत्यये कर्तृशब्दो निष्पद्यते। तत्र कृतेर्धातुनैव लाभादाश्रयमात्रं कृदर्थ इति भावः। **अनुगतेति** कर्ताकर्ता, कर्म कर्मेत्यनुगतव्यवहारसाक्षिक इत्यर्थः। तथात्वे = कृत्याश्रयत्वादिरूपत्वे। इत्येतावतैव = क्रियत इति पदानपेक्षेणैतावन्मात्रप्रयोगेणैव। कर्तृत्वस्य तृतीयार्थत्वादाह **चैत्रनिष्ठ कृतीति** पुनः = अतिरिक्ततया। **वैयर्थ्यापत्तेरिति** तृतीयायाः, क्रियत इति पदस्य च तुल्यार्थकतया चैत्रेण पाक इत्येतावतैव कृतिबोधसंभवात् क्रियत इति पदप्रयोगोऽनर्थकः स्यात्। अखण्डस्य कर्तृत्वस्य तृतीयाबोध्यत्वे तु कृतिसाध्यत्व बोधनाय क्रियत इति पदप्रयोगस्सार्थक इति भावः। **तृतीयाद्यर्थ इति** आदिना कात्यायनमते प्रथमायाः कृद्योगनिमित्तकषष्ठ्याश्च ग्रहणम्। इदमेव च प्रकृते कर्त्राख्यातलक्ष्यतावच्छेदकं कृत्प्रत्ययशक्यतावच्छेदकं चेति बोध्यम्। वक्ष्यते चेदमुपरिष्टात्। नन्वेवं तस्य निर्धर्मकत्वात्तत्र निरूपकत्वादिव्यवहारो भज्येतेत्यत आह – **तस्य चेति** अखण्डस्यापि कर्तृत्वादेरित्यर्थः। **बोधोपपत्तेरिति** एवमेवाखण्डसंप्रदानत्वादि स्थलेऽपि बोध्यम्। परमतेन = नैयायिकमतेन। इदम् = बोधस्वरूपम्। स्वमतमुपसंहरति – **सर्वथा कर्तृत्वादिकमखण्डोपाधिरिति** कर्तृत्वादिकमखण्डोपाधि-रूपमिति प्राचीनैरप्य वश्यमङ्गीकार्यमित्याह – **इष्टं चेति** इच्छा विषय एवेत्यर्थः। एतत् = कर्तृत्वादिकमखण्डोपाधिरूपमित्येतत्। प्राचाम् = पार्थसारथिप्रभृतीनाम्, **कर्तृत्वसिध्यर्थमिति** तयोः कर्तृत्वं व्यासज्यवृत्तीति सर्ववाक्यविदां सम्मतम्। तत्सिध्यर्थमित्यर्थः। **देवतात्वसिध्यर्थमिति** तयोर्देवतात्वं व्यासज्यवृत्तीति सर्वैर्मीमांसकैरङ्गीकृतं, तत्सिध्यर्थमित्यर्थः। अन्यथा = कर्तृत्वादेर-खण्डत्वानङ्गीकारे। **आश्रयभेदेनेति** कर्तृत्वस्याश्रयः पतिः पत्नी च। तथा देवतात्वस्य आश्रयोऽग्निः, सोमश्च। तद्भेदेनेत्यर्थः। **भिन्नतयेति** कर्तृत्वस्य पतिनिष्ठस्य, पत्नीनिष्ठस्य च भिन्नभिन्नत्वेन व्यासज्यवृत्तित्वं नोपपद्येत। अनेकनिष्ठस्यैकस्य द्वित्वादेर्व्यासज्यवृत्तित्वदर्शनादिति भावः। कर्तृलक्षणावादमुपसंहरति – **अत इति** कर्तृत्वकर्मत्वाभ्यां कर्तृकर्मबोधार्थमाख्यातस्य तत्र लक्षणा स्वीकार्या, अतस्तत्र संख्यान्वयो युज्यत एवेति भावः।

**इदं चौत्सर्गिकीं रीति मनुसृत्योक्तम्। यत्र षष्ठोक्तन्यायेनाऽऽश्रयानेकत्वग्राहकं प्रमाणान्तर मस्ति, यथा – दम्पत्योः, तत्र विधिवाक्ये एकवचनश्रवणा दाख्याते नाऽऽश्रयलक्षणा, एकत्वानन्वयापत्तेः।**

**अत स्तत्र द्वित्वलक्षणायां प्रमाणाभावा दाख्यानेनैव लाघवात् कर्तृत्वत्वेन कर्तृत्वं लक्ष्यते। न तदाश्रयोपि, तस्यार्थादेव बोधोपपत्तेः। इष्यते च कर्तृत्वत्वादिना कर्तृत्वादिबोधस्तृतीयादौ स परं 'शक्त्या तत्र' अत्र तु लक्षणयेत्येतावान् भेदः। तत्रैवच साक्षात्संबन्धनै कत्वान्वयः, न त्वाश्रये, तस्य द्वित्वात्।**

वस्तुतस्तु कर्तृत्वत्वेन कर्तृत्वबोधार्थं कर्तृत्वे लक्षणा, नतु कर्तरीति स्वसिद्धान्तप्रतिपादनायोपक्रमते। **इदं चेति** कर्तृत्वकर्मत्वे लक्ष्यतावच्छेदकीकृत्य कर्तृकर्मणोर्लक्षणाश्रयणमित्यर्थः। औत्सर्गिकीं रीतिम् = सामान्यरूपां व्यवहारे स्थितां रीतिम्। तर्हि सिद्धान्ते किमभिप्रेतमित्यत आह – **यत्रेति** यत्रतु लक्ष्ये इत्यर्थः। **षष्ठोक्तन्यायेनेति** "लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः" 6-1-6 इत्यादि षष्ठाध्याय प्रथमपाद तृतीयाधिकरणे स्त्रिया अप्यधिकार उक्तः। ततस्सिद्धे द्वयोरप्यधिकारे किं दम्पती पृथक्पृथग्यजेयाताम् उत सहेति चिन्तायाम् "स्ववतोस्तु वचनादैककर्म्यं स्या 6-1-17 दित्यादि चतुर्थाधिकरणे दम्पत्योस्सहाधिकारस्सिद्धान्तितः, तेन न्यायेनेत्यर्थः। **आश्रयानेकत्वेति** आश्रयस्य = कृत्याश्रयस्य कर्तृर्नानात्वग्राहकमित्यर्थः। प्रमाणान्तरम् = तत्साधकं सहाधिकाररूपं प्रमाणान्तरम्। दम्पत्योः प्रत्येक प्रयोगेऽन्यतरकर्तृकाज्यावेक्षणान्वारम्भणादिपदार्थलोपेन कर्मवैगुण्यापत्तेस्तद्वारणाय सहप्रयोगस्यैवावश्याश्रयणीयतया जायापत्योः कर्त्रोर्नानात्वस्यावश्यभावित्वमिति भावः। तदाह – **यथा दम्पत्योरिति** तत्र = लक्ष्ये। विधिवाक्ये = "स्वर्गकामो यजेते" त्यादौ विधिवाक्ये। एकवचनश्रवणात् = धातूत्तरमाख्यातैकवचनश्रवणात्। आश्रयलक्षणा = कर्तृलक्षणा। **अनन्वयापत्तेरिति** आख्यातार्थैकत्वस्य लक्षिते द्वित्वविशिष्टे कर्तृत्वविशिष्टेऽन्वयायोगादित्यर्थः। नन्वनन्वयपरिहारायाख्यातस्यद्वित्वे लक्षणा स्वीक्रियतामत आह – **अतस्तत्र द्वित्वलक्षणायामिति** एकत्वबोधकैकवचनस्य द्वित्वलक्षणायामित्यर्थः। **प्रमाणाभावादिति** दम्पत्योरेकप्रयोगे प्रमिते एकवचनोपात्तैकत्वस्यान्वयायोगे खलु द्वित्वे लक्षणा आश्रयणीया स्यात्। प्रकारान्तरेण तदन्वयसंभवात्तल्लक्षणा न प्रमाणवतीत्याशयः। तदाश्रयः = कर्तृत्वस्याश्रयः, तस्य = आश्रयस्य, अर्थादेव = आक्षेपादेव। **बोधोपपत्तेरिति** क्रियाक्षिप्तयोः कर्तृत्वतदाश्रययोर्मध्ये आवश्यकांश एव शाब्दत्वसिध्यर्थं लक्षणा। आश्रयस्त्वाक्षेपादेव बोध्यत इति भावः। संवादार्थमाह – **इष्यते चेति** तृतीयादावित्यादिपदेन कृद्योगनिमित्तककर्तृषष्ठ्या ग्रहणम्। सः = कर्तृत्वेन कर्तृत्वबोधः। तत्र = तृतीयास्थले। **शक्त्येति** "कर्तृकरणयोस्तृतीये" 2-3-18 त्यस्य शक्तिग्राहकत्वात्। अत्र तु = आख्याते तु। कृद्योगनिमित्तकषष्ठ्यन्तेऽपि लक्षणयैव तत्वेन तद्बोधः। "कर्तृकर्मणोः कृती" 2-3-65 त्यस्य लाक्षणिकानुशासनत्वात्। तत्रैव = कर्तृत्वत्वेन लक्षिते कर्तृत्व एव। आश्रये = कर्तरि। तस्य = जायापति रूपाश्रयस्य। साक्षात्संबन्धेनैव = आश्रयत्वसंबन्धेनैव। एवञ्च प्रकृते कर्तृत्वाश्रयस्य द्वित्वात् तत्रैकत्वान्वयासंभवान्नाश्रये लक्षणा, किन्तु विशेषणीभूते तदन्वययोग्ये व्यासज्यवृत्तित्वेन कल्पिते कर्तृत्व एव। तथाचान्यत्र समानाभिधान श्रुत्या एकत्वस्य भावनायां सामानाधिकरण्यसंबन्धेनान्वयेऽपि लक्षिते कर्तर्यन्वयस्य पार्ष्टिकस्य स्वीकारेऽपि प्रकृते तस्य प्रथमतो भावनायां निरुक्तसंबन्धेनान्वयेऽपि योग्यत्वाल्लक्षिते कर्तृत्व एव पार्ष्टिकान्वयस्वीकारे न किञ्चिद्-बाधकमिति भावः। एतेन यत्तन्त्ररत्नादावेकवचनस्योपपत्तिर्द्वेधा प्रदर्शिता। तस्या अयुक्तत्वं ध्वनयति – तथाहि – अग्नीषोमयोरिव देवतात्वं भिन्नयोरपि दम्पत्योः संसृष्टद्रव्ययोः पृथक् स्वतन्त्रीभवितुम-प्रभवतोरेकमेव स्वातन्त्र्यलक्षणं कर्तृत्वं, नतु सत्रिवत्कर्तृत्वभेद इत्येकवचनं युक्तमेव। सत्रिणां हि

पृथग्द्रव्यतया पृथगेव द्रव्यवत् कर्तृशक्तिः। वाचनिक-अनेककर्तृत्वसिध्यर्थं तु कर्तृणां साहित्यम्, इह तु सहैव कर्तृत्वमितीयान् विशेषः। अतः संसर्गाभिप्रायमेकवचनम्। यद्वा मिथुनकारकत्वाभिप्रायमेकवचनम्। एकं हि मिथुनं दम्पती, मिथुनपदं च स्वर्गकामपदमितिकर्तव्यतालोचनयावगतमिति तदभिप्रायमेकवचनमिति तन्त्ररत्नकारादीनामाशयः। तदयुक्तम् – अशाब्देन संसर्गेण शाब्दैकत्वान्वयायोगात्। "नहि शाब्दमशाब्देनान्वेती"ति न्यायात्। प्रकरणपर्यालोचनयैव स्वर्गकामपदस्य व्यक्तिद्वयपरत्वावसायेऽपि मिथुनपरत्वे प्रमाणाभावादेकवचनानुपपत्तेस्तदवस्थत्वाच्च। अतश्शाब्दत्वसिध्यर्थमनुपस्थिते संसर्गे मिथुने वाऽवश्यं लक्षणा स्वीकार्या। तदपेक्षया आवश्यके उपस्थिते कर्तृत्व एव लक्षणामङ्गीकृत्य तत्रैकत्वान्वयो युक्तः। अत उपस्थितलक्षितकर्तृत्वान्वयेनैवोपपत्तौ नानुपस्थित संसर्गमिथुनाभिप्रायकत्वकल्पनं युक्तमिति।

**यदपि तत्रा ख्यातपदसमानाधिकरणं स्वर्गकामपदं, तदपि न कर्तृपरम्, अपितु लक्षणयाऽपेक्षितस्वर्गाख्यभाव्यपरमेव। प्रथमाच तत्रत्या लक्षणया कर्मत्वार्थिकेति न तत्सामानाधिकरण्यबलेनाप्याख्याते न आश्रयलक्षणा। प्रथमाप्रयोजकरूपं तु सर्वत्र कर्तृत्वोक्तिरेव। सापरं कर्तृत्वप्रकारिका कर्तृत्वविशेष्यिका वेत्यन्य देतत्। अतः सिद्धाऽऽख्यातेपि कर्तृत्वादिलक्षणा।**

ननु "यजेत स्वर्गकाम" इति विधिवाक्ये स्वर्गकामपदस्य स्वर्गकामनावद्बोधकतया तत्सामानाधिकरण्यबलेनाख्यातस्य कर्तृलक्षकत्वं युक्तमत आह – **यदपीति** तत्र = विधिवाक्ये। कर्तृपरं = कर्तृबोधकम्। **लक्षणयोपस्थितस्वर्गाख्यभाव्यपरमेवेति** लक्षणया = समुदाये तया। उपस्थितं = विशेषणतया उपस्थितं यत् स्वर्गाख्यं भाव्यं = साध्यं, तद्बोधकमेव, तत्रत्या = स्वर्गकाम पदोत्तरं विद्यमाना। लक्षणया = सांप्रतिक्या तया। अयमर्थः "यजेत स्वर्गकाम" इत्यादौ त्र्यंशभावनाया विधिबलादिष्टसामान्यभाव्यिकाया इष्टविशेषाकाङ्क्षा भाव्यविशेषेण पूरणीया, यद्यपि स्वर्गकामविशेषणबलात्स्वर्गकामनिष्ठानुष्ठाने स्वर्गज्ञानं लभ्यते, तथापि स्वर्गकामपदार्थस्य कर्तृत्वेनान्वयेनार्थिकस्वर्गविषयत्वज्ञानात्सा न निवर्तते। नहि इष्टं किं भावयेदिति संबन्धो घटते, 'शाब्दीह्याकाङ्क्षा' शब्देनैव पूर्यते इति न्यायात्। किञ्च कामविशेषणत्वेनान्वितस्य स्वर्गस्य पुनर्भाव्यत्वेनान्वयो न संभवति। अत इष्टविशेषाकाङ्क्षा पूरकत्वेन भावनापेक्षित भाव्यविशेषसमर्पक पदान्तराभावे फलेच्छावतः पुरुषस्य कर्तृत्वेनार्थात्प्राप्तेरविशेषकरं स्वर्गकामपदं व्यर्थं सत् तत्सार्थक्यान्यथानुपपत्त्या कामविशेषणभूतस्वर्गपरमेव, लक्षणामङ्गीकृत्य स्वर्गाख्यभाव्यसमर्पकपरमेव। तथाच स्वर्गभाव्यिकायां भावानायां परिशेषात् योग्यतया यागस्य करणत्वेनान्वयात् यागेन स्वर्गं भावयेदित्यर्थस्सिध्यति। एवञ्च स्वर्गयागयोस्साध्यसाधनभावप्रतीतिश्शब्दत एव सुलभा। ननु स्वर्गकामशब्दार्थोऽधिकारित्वेनान्वेति। स्वर्गादिभाव्यविशेषवाचकद्वितीयान्तपदमध्याह्रियते, स्वर्गकामः स्वर्गं यागेन भावयेदिति वाक्यार्थः। तथाच स्वर्गकामपदस्य कर्तृसमर्पकत्वेन तदनुरोधेनाख्याते आश्रयलक्षणा युक्तैवेति चेन्न। फलापेक्षायाः प्राथमिकत्वात्। तथाहि – यदि इष्टविशेषान्वयात्प्रागेव स्वर्गकामस्याधिकारित्वेनान्वयः, तदा स्वर्गकामो यागेनेष्टं भावयेदिति प्राथमिकबोधे स्वर्गातिरिक्तस्यैव भाव्यत्वेनावगमात् तद्वाचकपदान्तरमेव विशेषबोधायाध्याह्रियेत, नतु द्वितीयान्तं स्वर्गपदम्। यदितु प्रथमत इष्टसामान्यावगतावेतद्विशेषाकाङ्क्षा शमनाय द्वितीयान्तस्वर्गपदाध्याहारेण स्वर्गरूपविशेषस्य भाव्यत्वेनान्वयानन्तरं स्वर्गकामस्याधिकारित्वेनान्वयस्स्वीक्रियते यागेन स्वर्गं भावयेत् स्वर्गकाम इति, तदा स्वर्गकामपदस्य वैयर्थ्यम्। अतः करोत्यर्थभूताया प्रत्ययोपात्ताया नित्यं सकर्मिकाया भावनायाः प्रथमतः कर्मविशेषाकाङ्क्षैव स्वारस्यादुत्पद्यमाना कर्मविशेषान्वयं विना नोपशाम्यतीति कर्मविशेषसंबन्धार्थं स्वर्गकामपदस्यैव लक्षणया स्वर्गरूपभाव्यपरत्वं युक्तम्। नहि भावयेदित्यनन्तरं किमित्याकाङ्क्षोदयवत् कः, केन, कुत्रेत्याकाङ्क्षोदेति। येनेतरकारकाणां

कर्मान्वयात्पूर्वमेवान्वयस्स्वीक्रियेत। अतश्च स्वर्गकामशब्दो लक्षणया स्वर्गाख्यभाव्यपरम्। यज धातुरपि लक्षणया यागकरणत्वं, स्वर्गकामपदोत्तरप्रथमापि तया कर्मत्वं प्रतिपादयतीत्येव युक्तम्। स्वर्गं यागेन भावयेदिति वाक्यार्थः। स्वर्गकामशब्दस्य फलपरत्वेऽपि यदि कामशब्दो नोच्चार्येत, ततः स्वर्गपश्वादयोऽस्याभिप्रेताः समीहिता इति नैव विज्ञायेत। अतोऽवश्यं स्वर्गादीनां साध्यत्वप्रतिपादनार्थं कामपदमावश्यक-मिति। तत्सामानाधिकरण्यबलेनापि = प्रथमान्तस्वर्गकामपदसामानाधिकरण्य-बलेनापि।

**तदपि न भावनां प्रति विशेष्यम्। किं तु भावनैव तद्विशेष्या। इतरथा 'पचति ब्रूते' इति प्रयोगापत्तिः। पक्ता ब्रूते इतिवत् तस्य योग्यत्वात्। "पचति भवति" ति भाष्योदाहृतप्रयोगानापत्ते श्च।**

**यस्तु "अपाक्षीद्भवति पक्ष्यति भवती" ति तदुदाहृतप्रयोगः, सच भूधातुना युक्तत्वलक्षणया भूतभाविपाकभावनावृत्ति वर्तमानयुक्तत्वाश्रयत्वमिति शाब्दबोधाङ्गीकारा न्नानुपपन्नः। दृश्यते च युक्तइत्यर्थे लोके भवतीति प्रयोगः।**

**एवं 'पचति भवती' ति प्रयोगोपि कर्तृविशेष्यत्वपक्षे नोपपद्यते। तथात्वे 'पचन्ति भवन्ती' ति प्रयोगापत्ते श्च। "भावप्रधान माख्यात" मिति निरुक्तस्मृत्या भावनातिरिक्ताख्यातार्थमात्रं प्रति भावपदवाच्य भावनाया विशेष्यत्वोक्तेश्च। अत्र हि न प्रकृत्यर्थं प्रति भावनायाः प्राधान्यं बोध्यते, "प्रकृतिप्रत्ययौ प्रत्ययार्थं सहब्रूत स्तयोस्तु प्रत्ययः प्राधान्येने" ति स्मृत्यैव प्रकृत्यर्थनिरूपितप्रत्ययार्थ प्राधान्यस्य सुबर्थसाधारण्येन सिध्देः।**

ननु कृतिवाचिन आख्यातस्य कर्तरि लक्षणायां कर्तुरिव विशेष्यत्वापत्तिः, गङ्गादिपदशक्यस्य तल्लक्ष्ये विशेषणताया एव दर्शनात्। नचेष्टापत्तिः भावना मुख्यविशेष्यक एव बोध इति त्वत्सिद्धान्तभङ्गा-पत्तेरित्याशङ्क्य "यथा चैवं सति भावनायास्तं प्रत्यपि मुख्यविशेष्यत्वं, तथाऽग्रे निरूपयिष्यामः, इति पूर्वप्रतिज्ञातमर्थं स्मारयन् समाधत्ते – **तदपीति** लक्षितं कर्त्राद्यपीत्यर्थः। भावनां प्रति = आख्यातवाच्यां भावनां प्रति, **तद्विशेष्येति** कर्त्रादिर्विशेष्येत्यर्थः। तथाचाख्यातलक्ष्यः कर्तापिस्वनिष्ठकर्तृता निरूपकता संबन्धेन भावनायामेव विशेषणतयान्वेतीति भावः। लक्ष्यार्थस्यैव सर्वत्र विशेष्यत्वमिति नियमो नास्त्येवेति तात्पर्यम्। व्यतिरेके बाधकं दर्शयति – **इतरथेति** लक्ष्यस्य कर्तुर्विशेष्यत्वे इत्यर्थः। प्रयोगापत्तिः = प्रयोगस्य साधुत्वापत्तिः, **पक्तेति** पच धातोः कर्तरि तृच्प्रत्ययः। **योग्यत्वादिति** लक्ष्यस्य कर्तुर्भावनापेक्षया प्राधान्ये पचतीत्यस्य पाककर्ताऽर्थः, ब्रूते इत्यस्य वचनकर्तार्थः। तथाच पाककर्तरि चैत्रे वचनकर्त्रभेदस्य योग्यतया संभवेन तादृशेऽर्थे पाचकोब्रूते, पक्ता ब्रूत इत्यनयोरिव पचति ब्रूते इत्येकवाक्यस्य साधुत्वापत्तिः। उक्तञ्च भर्तृहरिणा –

"बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यते" ति। अस्मन्मते तु एककर्तृका पाकभावना पचतीत्यस्यार्थः। एककर्तृकवचन भावना ब्रूत शब्दस्यार्थः। प्रधानद्वयस्य क्रिया रूपस्य परस्परमन्वयायोगान्न तत्प्रयोगापत्तिः। परमते तु प्रधानयोः कर्त्रोरभेदान्वयस्य संभवात् दोषो दुर्वार इति भावः।

**पचति भवतीति** पाकक्रिया भवतीति तदर्थः। भवने पाकक्रियायाः कर्तृत्वात्। लक्ष्यस्य कर्तुर्भावना विशेष्यत्वे पाककर्ता वर्तमानयुक्तत्वाश्रय इति तद्वाक्यार्थो वक्तव्यः। तथाच पाककर्तरि युक्तत्वाश्रयत्वप्रतीत्या पाकक्रियायां तत्त्वप्रतिपादनपर भाष्यप्रयोगो नोपपद्येत। पाके चैत्रादिः, पाकश्च भवने कर्तेति तद्भाष्यार्थः। **भाष्योदाहृतेति** इदञ्च भाष्यं "भूवादयो धातवः" 1-3-1 इति सूत्रस्थम् – "पचादयः क्रिया भवतिक्रियायाः कर्त्र्योभवन्ती" ति।

नन्वेतद्भाष्यविरोधोऽकिञ्चित्करः, तस्य अनुपपन्नार्थकत्वात्। सिद्धपदार्थस्यैव क्रिया साधनत्वात्। दृश्यन्ते च तत्र समनन्तरमेवानेके प्रयोगाः – पचन्ति भवति अपाक्षीद्भवति, पक्ष्यति भवतीत्येवमादयः, भिन्नकालिकक्रियाबोधकानां तेषां कथमपि संबन्धायोगादित्यत आह – **यस्त्विति** यस्तु प्रयोगः, सच नाऽयुक्त इति योजना। तदुदाहृतप्रयोगः = भूवादिसूत्रे भाष्यकृदुदाहृतप्रयोगः। भविष्यत्कालिक पाकक्रियाणां वर्तमानभवनाश्रयत्वमयुक्तम्। अतोऽनुपपन्नार्थकस्तत्प्रयोग इति शङ्कितुराशयः। **भूतभावीति** भूतपाकभावना वृत्ति वर्तमानयुक्तत्वाश्रयत्वं, भावि पाकभावना वृत्ति तदाश्रयत्वमिति शाब्दबोध इति भावः। **वर्तमानेति** वर्तमानकालो लडर्थः। भूधातोर्युक्तत्वे लक्षणा, आख्यातार्थो लक्षणयाऽऽश्रयत्वम्। अपाक्षीत्, पक्ष्यतिशब्दौ तादृशाश्रयत्वकर्तृबोधकौ। युक्तत्वस्य सार्वत्रिकत्वात्तदनुरोधेन दुष्परिहार रूपत्वम्। पचति भवति, पक्ष्यन्ति भवति, अपाक्षीद्भवति इति। **नायुक्त इति** अतो भाष्यविरोधो दुष्परिहार एवेति भावः। भूधातोर्युक्तत्वे लक्षणाश्रयणं प्रमाणयति **दृश्यते चेति** प्रयोगः = पण्डितो भवतीति प्रयोगः। एवञ्च सत्कार्यवादाश्रयणेन भूतभविष्यतोरपि सूक्ष्मावस्थामवलम्ब्य तत्सत्ताया वर्तमानत्वाक्षतेर्भाष्यं सूपपादमिति नव्यवैयाकरणोक्तमनादेयमेवेति सूचयति। किञ्च लक्ष्यस्य कर्तुः प्राधान्ये तत्प्रयोगो नोपपद्यत इत्याह – **एवं पचति भवतीति नोपपद्यत इति** अयमर्थः – भूवादिसूत्रे "कातर्हीयं वाचो युक्तिः", पचति भवति, पचसि भवति, पक्ष्यति भवतीति, इति प्रश्ने, सैषा वाचो युक्तिः, पचादयः क्रिया भवतिक्रियायाः कर्त्र्योभवन्ती" त्युक्तम्, तेन चाहत्यैव पचाद्यर्थक्रियाकर्तृकभवनक्रियायाः प्राधान्यं प्रतिपाद्यते, पाक भावनाया आख्यातार्थविशेषणत्वोपगमे तु स्वस्वार्थाविरुद्धत्वेन पदार्थान्तरे विशेषण तयान्वयासंभवे नैराकाङ्क्षेण भवत्यर्थक्रियायामाख्यातार्थविशेषण पचादिक्रियाणामन्वयासंभवेन तद्विरोधः स्पष्ट एव, लक्ष्यस्याख्यातार्थकर्तु र्भावनायां विशेषणत्वे तु सविशेषणायास्तस्या अन्वये बाधकात्तत्संगतिरपि स्पष्टेति बोध्यम्। अधिकमस्मदीयायां वैयाकरणभूषणसार व्याख्यायां तत्त्वदर्शिन्यां द्रष्टव्यमिति, तथात्वे = आख्यातार्थस्य कर्तुर्विशेष्यत्वे, **प्रयोगापत्तेश्चेति**, अयमर्थः – पचति भवतीत्यादौ भवने पचादि क्रियाणां कर्तृत्वम्, पाकादौ तु चैत्रादीनां तत्त्वम्, चैत्रादि कर्तृगतसख्यामादाय पचादिभ्यो वचनोत्पत्तिः, कर्तुरेकत्वे, पचति, द्वित्वे पचतः, बहुत्वे पचन्तीति, भवनकर्तुभूत पाकक्रियायामेकत्वस्यैव सत्त्वेन भूधातोः सर्वदा एकवचनमेवेति पचति भवति, पचतो भवति, पचन्ति भवतीति भाष्यप्रयोगा अस्मन्मते सिध्यन्ति, भावनापेक्षया कर्तुरेवप्राधान्ये प्रधानानुरोधेन भूधातोर्द्विवचनबहुवचनयोरप्यापत्त्या पचन्ति भवन्तीत्यादेर्दुर्वारतया न तत्प्रयोगनिर्वाह इति। भाष्यकृता यदाशयेन पचति भवतीति प्रयुक्तम्, तदाशयासिद्धिरिति भावेन "पचति भवतीति भाष्योदाहृत प्रयोगानापत्तेश्चे" ति दूषणमभिहितम्, कर्तुर्विशेष्यत्वे तत्प्रयोग एव नोपपद्यत इति दूषणमुक्तम्, एवं महाभाष्यावलम्बनेन भावनायाः प्राधान्यं प्रतिपाद्य यास्कवचनेनापि तस्यास्तत्त्वं साधयति – **भावप्रधानमिति** अर्थभावनातिरिक्त लकारार्थ प्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति अर्थभावनानिष्ठविशेष्यतासंबन्धेनाख्यातपदजन्योपस्थितिः कारण-मितिकार्यकारण भावस्य निरुक्तवचनेन लाभादाह – **भावनातिरिक्तेति** अर्थभावनेत्यर्थः एवं च यजेतेत्यादौ शाब्दभावनाया अपि विशेषणत्वमेवार्थभावनायाम्, निरूपितं चैतद्विधिवादे, नन्वनया स्मृत्या प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यं बोध्यते, न तु प्रत्ययार्थानां मध्ये भावनाया इत्यत आह, **अत्रहीति** निरुक्ते इत्यर्थः, प्रकृत्यर्थं प्रति =धात्वर्थं प्रति, भावनायाः = प्रत्ययार्थभावनायाः प्रकृत्यर्थापेक्षया प्रत्ययार्थस्यानया प्राधान्यं न बोध्यते इत्याशयः, अस्याः स्मृतेस्तदर्थबोधकत्वे वैयर्थ्यमेवस्यात् तदर्थस्य स्मृत्यन्तरेणैव प्रतिपादितत्वादित्याह – **प्रकृति प्रत्ययाविति सुबर्थेति** तण्डुलं पचति, काष्ठैः पचतीत्यादौ प्रकृत्यर्थतण्डुलाद्यपेक्षया प्रत्ययार्थकर्मत्वादेरनया प्राधान्यं प्रतिपाद्यते, तत्साधारण्येनेत्यर्थः। **सिद्धेरिति** अतस्तन्मात्रबोधिका नेयं स्मृतिः, किं तु निरुक्तरीत्या प्रत्ययार्थानां मध्ये भावनाया एव प्राधान्यमियं प्रबोधयति, तथाच कर्तुर्विशेष्यत्वे निरुक्तस्मृतिरपि विरुणद्धीति भावः। एवं च पचतीत्यादावाख्यातस्य

कर्त्रादौ लक्षणायामपि लक्ष्यार्थस्य भावनायां विशेषणत्वमेवेति भावनामुख्यविशेष्यकशाब्दबोध सिद्धान्त उपपद्यत एवेति प्रकृत प्रघट्टकार्थः।

## (वैयकरणमतनिराकरणम्।)

**न च ''धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते'' इति वैयाकरणस्मृत्यनुरोधेन भावशब्दस्य धात्वर्थ परत्वावसायात् तस्यैवाऽऽख्यातार्थापेक्षया प्राधान्यमनया स्मृत्या नियम्यते, प्रत्ययार्थप्राधान्यस्मृति स्तु सामान्यविषयत्वा त्सुबर्थाभिप्रायेण व्याख्येयेति वैयाकरणमत मेव युक्त मिति वाच्यम्। एतस्य परिभाषारूपत्वेन नदीवृध्यादिवदन्यत्रा प्रवृत्तेः। अत एव व्याकरण शास्त्र एव तस्य ''भावे'' 3-2-28 इत्यादौ प्रवृत्तिः। सापि न सर्वत्र, भावे त्वतलावित्यादावप्रवृत्तेः। अतश्च निरुक्त भावपदेन णिजन्त भूधातो रच्प्रत्ययान्तत्वव्युत्पत्त्या भवनानुकूलव्यापाररूपा भावनैवोच्यते, न धात्वर्थः।**

ननु ''भावप्रधानमाख्यात'' मिति निरुक्तस्मृत्या तिङर्थ भावनायाः **प्राधान्यं** प्रतिपाद्यते इत्ययुक्तम्, तया स्मृत्या धात्वर्थस्यैव प्राधान्यबोधनावगमादिति वैयाकरणमतं **प्रतिक्षेप्तुं शङ्कते न चेति — धात्वर्थ इति** अयमर्थः — पचादिधातूनां विक्लित्त्यादि फलं व्यापारः फूत्कारादि श्चार्थः, कृति रूपभावनाया अपि व्यापारपदेन ग्रहणात्सापि धातुवाच्यैव, तत्र केवलः = फूत्कारादि फलासंसृष्टः, शुद्धः = कारकसंबन्धरहितः, धात्वर्थः भाव इति व्यपदिश्यते-इति स्मृतिवाक्यार्थः इति। **भावशब्दस्येति** भवनं = भावः, भूधातोर्भावेघम्। धात्वर्थपरत्वावसायात् = तन्निश्चयात् तस्यैव = धात्वर्थस्यैव, आख्यातार्थापेक्षया = आख्यातार्थकर्तृकर्मसंख्याकालापेक्षया, अनया स्मृत्या = ''भावप्रधानमाख्यात'' मिति यास्कस्मृत्या, **नियम्यत इति** आख्यातम् = तिङ्प्रत्ययः, भावप्रधानम् = धात्वर्थभावप्रधानकमिति यास्कवचनस्यार्थः, अनयाख्यातार्थापेक्षया धात्वर्थ भावः = व्यापारः प्रधानमिति स्पष्टमेव लाभात्पचति चैत्र इति कर्त्राख्याते पच्यते चैत्रेण तण्डुल इति कर्माख्याते च धात्वर्थभावमुख्यविशेष्यक एव शाब्दबोध इति भावः। ननु ''प्रत्ययार्थः प्रधान'' मिति स्मृतिविरोधो, त आह — **प्रत्ययार्थप्राधान्येति** सामान्यविषयत्वात् = प्रत्ययसामान्यविषयत्वात्। **सुबर्थाभिप्रायेणेति** तण्डुलं पचतीत्यादौ तण्डुलरूप प्रातिपदिकार्थापेक्षया प्रत्ययार्थस्य कर्मणः प्राधान्यम्, एवं पाचकः,गार्ग्य इत्यादौ कृदर्थस्य कर्तृस्तद्धितार्थस्यापत्यस्य च प्रकृत्यर्थापेक्षया प्राधान्यं प्रतिपाद्यतेऽनया सामान्यस्मृत्या।''भावप्रधानमाख्यात'' मिति स्मृतिर्विशेष-विधित्वात्तद्बाधिकेति भावः। **युक्तमिति** व्याकरण-निरुक्त स्मृत्योरेकवाक्यतया वैयाकरणमतमेव सिध्यति, तथाच भावनाया स्तिङर्थत्वं, तस्याश्च मुख्यविशेष्यत्वं च दूरापास्तमेवेति भावः, वैयाकरणमतं दूषयति **एतस्येति** शुद्धधात्वर्थो भाव इत्यस्येत्यर्थः, परिभाषारूपत्वेन = स्वशास्त्रीयव्यवहारनिर्वाहाय संकेतरूपत्वेन। **नदीवृध्यादिवदिति** ''यू स्त्र्याख्यौ नदी'' 1-4-3 इत्यनेन नित्यस्त्रीलिङ्गयो दीर्घेकारोकारान्तयो र्नदी संज्ञा कृता, तामुपजीव्य ''अम्बार्थनद्योर्ह्रस्वः'' 7-3-107 इत्यादिभिर्ह्रस्वादिकार्य-जातं विधीयते हे गौरि, हे वधु, सा संज्ञा व्याकरणशास्त्रीयकार्यमात्रप्रयोजनिका, शास्त्रान्तरेषु पुराणादिषु वा नदीपदेन पाणिनि परिभाषितोर्थो न गृह्यते, तथा ''वृद्धिरादैच्'' 1-1-1 इत्यनेन आ ऐ औ इत्येषां वर्णानां वृद्धिसंज्ञा कृता सापि तादृश्येव। आदिपदेन गुणसवर्णसंयोगादीनां ग्रहणम्, तद्वदित्यर्थः अन्यत्र = व्याकरणशास्त्रादन्यत्र निरुक्तादौ, **अप्रवृत्तेरिति** तथाच व्याकरणे परिभाषितोर्थस्तच्छास्त्रस्थ पदार्थप्रतिपादनायैवोपयुज्यते, न शास्त्रान्तरस्थ पदार्थ निर्णयाय प्रभवति, अतो भावशब्दो निरुक्तस्मृतौ वैयाकरणपरिभाषित धात्वर्थप्रतिपादक इति नैव वक्तुं शक्यते, अन्यथा — ''तत्त्वं भावेने'' ति कणादसूत्रस्थः, ''भावे चोपलब्धेः'' 2-1-15 इत्यादि व्याससूत्रस्थो भावशब्दोपि शुद्ध धात्वर्थपर इत्यवश्यं

वक्तव्यं स्यात्, ततश्च **बहूपप्लव** इति भावः, अत एव = तस्यान्यत्रा प्रवृत्तेरेव, यद्वा तस्य परिभाषारूपत्वादेव, **भावे इति सिद्धावस्थापन्नो** धात्वर्थो भावः, तत्र वाच्ये धातोर्धञ् स्यादिति तत्सूत्रार्थः पाकः, पाकौ।इत्यादावित्यादि **शब्देन** "रूजार्थानां भाववचनानामज्वरे" 2-3-54 "यस्य च भावेन भावलक्षणम्" 2-3-37 इत्यादेर्**ग्रहणम्**। किं च धात्वर्थः केवलः शुद्धः इत्यादिपरिभाषणं तैरेव स्वशास्त्र एव नियमेन नाद्रियत इत्याह — **सापीति** धात्वर्थः केवल इत्यादेः प्रवृत्तिरपीत्यर्थः, न सर्वत्र = व्याकरणे भाव शब्द घटितेषु सर्वत्रापि स्थलेषु नास्ति, व्यभिचरितेति यावत्, तादृशं स्थलं दर्शयति — **भावेत्वतलाविति** "तस्यभावस्त्वतलौ" 5-1-119 इति सूत्रम्, तत्र प्रकृतिजन्यबोधे प्रकारो भावः, षष्ठ्यन्ताद्भावेर्थेत्वतलौ स्यातामिति सुत्रार्थः — गोर्भावः = गोत्त्वम् गोता, न त्वत्र भावशब्देन धात्वर्थस्य ग्रहणम् **अप्रवृत्तेरिति** तथा च स्वपरिभाषितार्थस्य स्वशास्त्र एव वैयाकरणैस्त्यागे शास्त्रान्तरे तत्त्यागे को वा संशयः, अतो निरूक्तस्थ भावशब्देन वैयाकरण परिभाषितार्थमादायैव समन्वयः कर्तव्य इति नियमो नास्तीति तद्विरोधोऽकिञ्चित्कर इति भावः, ननुं यास्कवचनस्य त्वन्मतोपष्टम्भकत्वं कथ, मत आह, **अतश्चेति** वैयाकरणोक्तरीतेरयुक्तत्वादित्यर्थः, निरुक्तभावशब्देन = "भावप्रधानमाख्यात" मिति यास्कनिरुक्त-ग्रन्थे भावशब्देन। **णिजन्तेति** भूधातोर्भवनमर्थः, ततो णिच् तदनुकूलो व्यापारस्तदर्थः ततो णिजन्तात् = भावि इत्यस्मात् "एरच्" 3-3-56 इत्यनेन भावे अच् प्रत्यये णेर्लोपे भावशब्दो निष्पद्यते, **भावनानुकूलेति** धात्वर्थपाकगमनादि भवनानुकूलेत्यर्थः सा च कृतिरूपैवेत्याह — **भावनैवेति** वैयाकरणमतमपाकरोति **न धात्वर्थ इति** विक्लित्याद्यनुकूलः फूत्कारादिर्धात्विर्थः, स नात्रगृह्यते किंतु तदनुकूला कृतिरूपा भावना भावशब्देन गृह्यत इत्यस्मत्पक्ष सिद्धिरिति भावः।

**अत एव "सर्वमाख्यातजं नामे" ति स्मृत्या ख्यातशब्दस्य धातुपरत्वावसाया दनयापि स्मृत्या धातोरेव भावप्राधान्यनियमाद् धात्वर्थमुख्यविशेष्यकत्वबोधोपपत्ति रित्यपास्तम्। कृदन्ते पाचकपदादौ आख्यात शब्दप्रयोगाभावेन तत्रा ख्यातशब्दस्य धातौ लाक्षणि कत्वस्य कौस्तुभे व्युत्पादितत्वात्।**

**अतश्चा ख्याताथनिकत्वे कस्य प्राधान्यम्, कस्य वा गुणत्व मित्यपेक्षिते "भावप्रधान माख्यात" मिति स्मृत्या भावनातिरिक्तार्थं प्रति भावनाया एव प्राधान्य मिति नियम्यते। अत एव कालादिसाधारण्येनैकः कार्यकारणभाव इत्यपि लाघवम्।**

ननु आख्यातपदं न तिङ्प्रत्ययपरम्, किंतु धातुपरम् अत एव "सर्वमाख्यातजं नामे" ति निरुक्तग्रन्थः संगच्छते, पाचक, गो, धातृ, चैत्र इत्यादि सर्वमपि प्रातिपादिकं धातुजमिति तदर्थः, आख्यातशब्दस्य तिङ्परत्वे तदसंगतिः स्पष्टैव नहि पाचकादेर्नाम्नस्तिङ्प्रत्ययजन्यत्वं संभाव्यते, अत एव "उणादयो बहुल" 3-3-1 मिति सूत्रे महाभाष्यकृता निरुक्तवचनमेवं विवृतम् — "सर्वं नाम च धातुजमाह निरुक्ते" इति। एवं च आख्यातं = पचादिर्धातुः, भावप्रधानम् = भावप्रधानक इत्येवार्थः "भावप्रधानमाख्यात" मिति निरुक्तवचनस्य। अनेन धात्वर्थमुख्यविशेष्यकः शाब्दबोध इत्यर्थस्यैव लाभेन न तस्य भवन्मतोपष्टम्भकत्वमित्यत आह — **अत एवेति** उक्तरीत्या भावशब्देन भावनाया एव ग्रहणादेवेत्यर्थः, वैयाकरणमतमनुवदति **सर्वमाख्यातजमिति** आख्यातजं = धातुजन्यम्,नाम्नस्तिङ्प्रत्ययजन्यत्वासंभवाद-त्राख्यातपदं धातुपरमेवेत्याह — **धातुपरत्वावसायादिति** अनयापि स्मृत्या = "भावप्रधानमाख्यात" मिति स्मृत्या, आख्यायते = बोध्यतेऽनेनेतिव्युत्पत्याऽऽख्यातपदं धातुपरमित्याह — **धातोरेवेति अपास्तमिति** आख्यातशब्दो रूढया तिङ्प्रत्ययपरः तच्छब्देन धातोर्ग्रहणे धातोरेव भावप्रधानत्वापत्त्या आख्यातशब्दस्य भावप्रधानानुपपत्ते वैयाकरणोक्तं न ग्राह्यमिति भावः। नन्वेवं "सर्वमाख्यातजं नामे" ति निरुक्तस्मृतेः का

गतिरित्यत आह – **कृदन्ते** = **पाचकपदादाविति** तद्घटक धातावित्यर्थः, **प्रयोगाभावेनेति** – एवं चाख्यातशब्दो न धातपर इति स्पष्टमवगमाद् यत्र तस्य धातुपरत्वमावश्यकं, तत्र लक्षणयैव निर्वाह इत्याह – **तत्रत्येति** निरुक्तस्थेत्यर्थः, कौस्तुभे = द्वितीयाध्यायप्रथमपादे द्वितीयेभावार्थाधिकरणे।

''भावप्रधानमाख्यात'' मिति स्मृत्यर्थविचारावसरे प्रसक्तं वैयाकरणविरोधं परिहृत्य प्रकृतार्थमाह – **अतश्चेति** प्रकृत्यर्थापेक्षया प्रत्ययार्थप्राधान्यस्य स्मृत्यन्तर सिद्धत्वादित्यर्थः। **आख्यातार्थानेकत्व इति** गौणमुख्यसाधारण्येन आख्यातार्थस्यानेकत्वे इत्यर्थः, कृतिः कालः संख्या कर्ता चेत्यनेकेऽर्था आख्यातस्येत्यर्थः, **कस्य प्राधान्यमिति** आख्यातार्थानां मध्ये एतद्विचारे प्रस्तुत इत्यर्थः – **इति स्मृत्येति** प्रकृतिप्रत्ययौ सहार्थ मिति स्मृत्या पचतीत्यादौ प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यमवस्थाप्यते, ततः प्रत्ययार्थाना मनेकेषां मध्ये कस्य प्राधान्यं, कस्य वा गुणत्वमित्यपेक्षाया मनया स्मृत्या संख्याकाल कर्त्रपेक्षया भावनाशब्दबोधित भावस्य कृत्यपरपर्यायस्य प्राधान्यं बोध्यते इति भावः, एवं च कार्यकारणभाव-लाघवमपीत्याह – **अत एवेति** इतर प्रत्ययार्थापेक्षया भावस्य प्राधान्यबोधनादेवेत्यर्थः, कालादीत्यादिपदेन संख्याकर्त्रादीनां ग्रहणम् एकः कार्यकारणभावः = अर्थ भावनातिरिक्तलकारार्थप्रकारकशाब्दबुद्धित्वा-वच्छिन्नं प्रति अर्थभावनानिष्ठ विशेष्यता संबन्धेनाख्यातपदजन्योपस्थितिः कारणमित्येवं रूपः।

**कालो हि नञ्समभिव्याहाराभावे कालिकसंबन्धेन भावनायामन्वेति। नञ्समभिव्याहारे तु तत्कालीनाभावप्रतियोगित्वसंबन्धेन साक्षादेव वा तस्यामेव। तथाहि – ''वर्तमाने लट्'' 3-2-123 इति सूत्रात्पचतीत्यत्र वर्तमानत्वं लडर्थः। तच्च लडुच्चारणकालाभिन्नकालत्वम्। तच्च कालिकवृत्तित्वसंबन्धेन कृतावन्वेति। विक्लत्त्युपधाय ककृतिकूटान्तर्गतयत्किञ्चित्कृते स्तदुच्चारणकालीनत्वात्। अत्र सर्वत्र कृतिशब्दो भावनापरः। तेन जानातीत्यादा वाश्रयत्वस्य वर्तमानत्वान्न क्षतिः नश्यतीत्यादौ च धातुना नाशस्यैवोक्तिः, प्रत्ययेन च प्रतियोगित्वस्य लक्षणा। वर्तमानकालस्य पर मनु भवानुरोधेन स्ववृत्त्युत्पत्तिकनाशीयत्वसंबन्धेन प्रतियोगित्व एवान्वयः। तथाच घटवृत्तिनाशप्रतियोगित्वं वर्तमानकालोत्पत्तिकनाशीयत्वसंबन्धेन वर्तमानत्ववदित्येवा स्मन्मते शाब्दबोधः। एवं च धातु नोत्पत्तिं लक्षयित्वा तस्यां कालस्य कथञ्चिदन्वय इत्यापि न कल्पनीयम्। एवं संबन्धभेदसत्त्वेपि वर्तमानकालः सर्वत्र कृतावेवा न्वेतीति न क्वापि तस्य विशेष्यान्तरकल्पना।**

''कालादि साधारण्येनैकः कार्यकारणभावः'' इत्युक्तं विशदयति **कालोहीति** नञ् समभिव्याहाराभावे = चैत्रः पचतीत्यादौ। नञ् समभिव्याहारे = चैत्रो न पचतीत्यादौ। **तत्कालीनेति** चैत्र वृत्त्यभावप्रतियोगिनी निरुक्त संबन्धेन वर्तमानत्ववतीच पाक भावनेति बोधः। एवं हि यदा कदापि पाक भावनावत्येव चैत्रादौ न पचती प्रयोगः स्यात्, न तु कदापि पाक भावनाऽभाववति, प्रतियोगिनोऽप्रसिद्धेः। परंतु तदापि सप्रयोग इष्टः, इत्याशयेनाह – **साक्षादेववेति** ''प्रारब्धा परिसमाप्तत्वं भूत भविष्यद्भिन्नत्वं वा वर्तमानत्व, मिति वैयाकरणोक्तमयुक्तं, गौरवादननुगमाच्चेति ध्वनयन्नाह – **लडुच्चारणकालेति** नैयायिका अप्येवमेवा-शेरते। कालिक वृत्तित्व संबन्धेन = कालिक संबन्धावच्छिन्नाधेयता संबन्धेन। ननु कृतौ वर्तमानत्वान्वये स्थाल्याश्युल्युपरिधारणानन्तरं पचतीति प्रयोगानपत्तिः, तदनुकूलकृतेर्नष्टत्वेन तद्दशायां तदभावादित्यत आह – **विक्लित्त्युपाधायकेति** विक्लित्त्युपाधायको यः कृतिकूटः तदन्तर्गताया यञ्चित्कृतेरित्यर्थः न हि चुल्युपरिधारणानुकूल कृतिरेव विक्लित्त्युपधायकः, किंतु कृतिकूटः, तदन्तर्गतां यां कांचनकृतिमादाय लट् प्रयोग निर्वाह इत्यर्थः। एतेन ''कृतौ कालान्वये पाकशालायां काष्ट ज्वलनानुकूले यन्त्रे नष्टे पच्यमानमोदनं पश्यति चैत्रे पचतीत्यनापत्तिः। अतो धात्वर्थव्यापरे तदन्वयः कार्यः। तदा पाक्यवस्तुनिष्ट विक्लित्ति

विशेषानुकूलस्य पाक शालावस्थान**रूप** धात्वर्थ व्यापारस्य• विद्यमानत्वान्नदोषः" इति वैयाकरणोक्तम् पास्तम्। पाक शालावस्थानानुकूलकृतेरपि तादृश विक्लित्त्यनुकूलत्वेन तस्या अपि लड्च्चारण कालीनत्वादिति बोध्यम्। ननु वर्तमानत्वं कृतावन्वेतीत्ययुक्तम् चैत्रो जानातीत्यादौ वर्तमानत्वस्यान्वया-नापत्तेः, तत्र कृतेराख्यातार्थत्वाभावा दत आह – **अत्र सर्वत्रेति** सर्वस्मिन्नत्र प्रकरणे इत्यर्थः। कृतिशब्दस्य यत्नबोधकतया **जानातिरथो** गच्छतीत्यादावाख्यातेन कृतेरबोधनात्तत्र कालान्वयानापत्तिः। अतः स भावना परइति भावः। **भावनापर इति** आख्यातेन शक्त्या लक्षणया वा कारकान्वय योग्यो यो यो बोध्यते, स सर्वोपि भावनापदव्यपदेश्यः। अत एव सवत्रापि भावना मुख्यविशेष्यक एव शाब्द बोध इति सिद्धान्तोपि संगच्छत इति भावः। तेन = कृति शब्दस्य भावनापरत्वेन। जानातीत्यादावित्यादि पदेन रथोगच्छतीत्यादेर्ग्रहणम्। घटो नश्यतीत्यत्र नैयायिकोक्तां रीतिं निराकुर्वन् प्रथमं स्वमते **तदुपपत्तिं** दर्शयति – **नश्यतीत्यादाविति स्ववृत्तीति स्वं** = वर्तमानकालः, तद्वृत्ति रुत्पत्तिर्यस्य तादृशोयो नाशः, तदीयत्व संबन्धेनःनाशनिरुपितत्व संबन्धेन न तु स्ववृत्तिनाशनिरुपितत्वेन संबन्धेन, चिरध्वस्ते घटे नश्यतीति प्रयोगापत्तेः। प्रतियोगित्वे = आख्यात लक्ष्ये तस्मिन्नेव। बोधं दर्शयति **तथाचेति वर्तमानत्ववदिति** वर्तमानकालवदित्यर्थः। तथाच स्ववृत्त्युत्पत्तिक नाशप्रतियोगित्वसंबन्धेन घटवृत्ति नाशप्रतियोगित्वं वर्तमानकालवदिति बोधः। संबन्धनिविष्टस्व पदार्थ स्पष्टीकर्तुमुक्तं – वर्तमानकालेति। **स्ववृत्त्युत्पत्तिकेति** तदर्थः। **नैयायिकमतं** दूषयति **एवं चेति** निरुक्तरीत्या तदुपपत्तौ चेत्यर्थः, **लक्षयित्वेति इदमौत्सर्गिकीं** रीतिमाश्रित्य। वस्तुत उत्पत्तिमदभावो नाशः, स एव न श धातोरर्थः, तदेकदेशो उत्पत्तौ कालान्वय इति तदाशयः। क्लिष्टत्वात्तन्नयुक्तमित्याशयेनाह – **न कल्पनीयमिति** सर्वप्रधानभूता-**ख्यातार्थान्वयेनोपपत्तौ कालस्य धात्वर्थान्वयो न युक्त इत्यपि बोध्यम्** एवं = निरुक्तरीत्या। **संबन्धभेदेति** चैत्रः पचतीत्यादौ कालिकवृत्तित्वं संबन्धः नश्यतीत्यादौ स्ववृत्त्युत्पत्तिकनाश निरुपितत्वं संबन्ध इति स्वीकारात्तद्भेद सत्त्वेपीत्यर्थः, सर्वत्र = आख्यात सामान्ये। कृतावेव = भावनायामेव। तस्य = कालस्य **विशेष्यान्तरेति** भावनातिरिक्त विशेष्यान्तरेत्यर्थः।

**न चैकविशेष्यलाभेपि संबन्धभेदेन समभिव्याहारज्ञानस्य कार्यकारणभावानन्त्यंतादवस्थ्य मिति वाच्यम्। वस्तुतस्संबन्धभेदेपि संबन्धसामान्येन तत्प्रकारकतद्विशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तादृशसमभिव्याहारज्ञानस्य कारणतेत्येव मेकस्यैव तस्योपपत्तौ संबन्धाननुगमस्या दोषत्वात्। यथैव हि संयोगसमवायकालिकादिसंबन्धभेदेपि "घटवद् द्रव्य" मित्येवंविध-वाक्यात्संबन्धसामान्यसंसर्गके घटप्रकारके मत्वर्थद्रव्य विशेष्यके शाब्दबोधे जाते पश्-चात्संबन्धस्य तत्त्वेन जिज्ञासायां प्रमाणान्तरेण तात्पर्येऽवधारिते यत्रैकस्मिन्नेव संसर्गे तात्पर्यमवधारितम्, तत्र तत्संसर्ग एव शाब्दबोधपर्यवसानम्। यत्रा नेकेषु तात्पर्यम्। तत्रानेकेषु शाब्दबोधपर्यवसानम्।**

**तत्रच वस्तुतस्तात्पर्यविषयीभूतस्यापि संबन्धस्य तत्त्वेन बोधस्य प्रमाणान्तराधीनत्वात्, शाब्दबोधेच सबन्धत्वेनैव बोधात् न 'घटवद् द्रव्य' मित्येवंविधसमभिव्याहारज्ञानस्य कार्यकारणभावानन्त्यम्।**

**पर्यवसितबोधमादायैव बाधबुद्धिप्रतिबन्ध्य प्रतिबन्धकभावः। अत एव संयोगेन 'न घटवद् द्रव्य' मिति बाधबुद्धिसत्त्वेपि 'घटवद् द्रव्य' मिति बुद्धिर्जायमाना संबन्धान्तरमादाय पर्यवस्यति। संयोगविषयतातु तस्या आपाततः प्रतीताबाध्यत इति स्वानुभवसिद्धमेतत्। घटो नास्तीत्यादौ वा संयोगसमवायाद्यवच्छिन्नप्रतियोगितारूपसंबन्धभेदोऽनुसन्धेयः। अतः संबन्धभेदेपि न कार्यकारणभावभेदः।**

**नचेति** अयमर्थः सर्वत्र भावनारूप विशेष्यस्य एकत्वेपि तत्र तत्र **संबन्धानां** विलक्षणत्वात् तत्तत्संसर्गक **बोधे**तत्तत्समभिव्याहारस्य कारणतानां कल्पनीयतया **कार्यकारणभावनामानन्त्यं** दुष्परिहर-मिति। **एकविशेष्यलाभेपि** = भावनारूपस्यैकस्य विशेष्यस्य सर्वत्र लाभेपि। **संबन्धभेदेनेति** प्रकृते कालिक वृत्तित्व स्ववृत्त्युत्पत्तिक नाशीयत्वादि संबन्ध भेदेनेत्यर्थः। एवं **कर्मकरणादि** कारकाणां भावनान्वये तत्तत्संन्धभेदेन तादानन्त्यं बोध्यम्। **कार्यकरण भावानन्त्येति** शाब्दबोधस्य समभिव्याहार ज्ञानस्य च यः कार्यकारणभावः, तदानन्त्येत्यर्थः। अयमर्थः – कालिक वृत्तित्व संसर्गेण जायमानाख्यतार्थ वर्तमानकाल **प्रकारकबोधं प्रति धात्वाख्यात विशेष समभिव्याहार ज्ञानं कारणम्। स्ववृत्युत्पत्तिकनाशीयत्व संबन्धेन जायमान** वर्तमानकाल प्रकारकबोधं प्रति नश धात्वख्यात समभिव्याहार ज्ञानं कारणम्। एवं स्वाश्रयसमवेतत्व संबन्धेनजायमान संख्याप्रकारकबोधं प्रति कर्त्राख्यात समभिव्याहारः कारणमित्या-दिरीत्या तदानन्त्यमिति। सम्बन्ध सामान्यसंसर्गक एव शाब्दबोधोजायते न तु तद्विशेष संसर्गकः, अनन्तरं संबन्धस्य विशिष्यजिज्ञासायां प्रमाणान्तरेण तद्विशेषतात्पर्येऽवधृते तत्तत्सम्बन्धे शाब्दबोधः पर्य-वस्यतीति सार्वजनीनमेतत्। तथाच चैत्रः पचति-घटो नश्यतीत्यादौ वर्तमानकालवती पाकादिभावनेति शाब्दबोधे कालिक वृत्तित्वादि संबन्धविशेषो विशिष्य न संसर्गतया भासते, अपि तु संबन्धत्वेन। अनन्तरं विशिष्यकालिक वृत्तित्वादि संबन्धविशेषावधारणे बोधस्तत्रपर्यवस्यति। एवं च संबन्ध सामान्य संसर्गक काल प्रकारक भावना विशेष्यक बोधं प्रति तादृश तिङ्समभिव्याहारज्ञानं कारणमित्येक एव कार्यकारण भाव इति न तदानन्त्यतादवस्थ्यमित्याशयेन समाधत्ते – **वस्तुतः संबन्धभेदेपीति** न हि केवलं कालान्वय एवायं प्रकारः किंतु पदार्थान्वयमात्रे इत्याह **संबन्धसामान्येन तत्प्रकारकेति** आख्यातार्थ सख्याद्यन्वयेपि एव एव कार्यकारण भाव इति महल्लाघवमिति भावः। संबन्धविशेष संसर्गकबोधस्तु पाश्यात्योमानस एवेति **बोध्यम्। तस्य = कार्यकारण भावस्य। संबन्धाननुगमस्य = तदनेकत्वस्य संबन्धविशेषाणामनैक्यरूपस्य। अदोषत्वादिति** तथाच न भवदापादित कार्यकारण भावानन्त्यदोष प्रसक्तिरिति भावः। अत्रार्थे संप्रतिपन्न दृष्टान्तमाह – **यथैवेति** घटवद् द्रव्यमिति वाक्यात्सम्बन्धसामान्य संसर्गको घट प्रकारको मतुबर्थ द्रव्य विशेष्यको बोधो जायते, न तु संयोग समवायादि विशेष संबन्ध संसार्गकः तद्वत्प्रकृतेपीति भावः। **संयोगेति** द्रव्यपदेन **भूतला**दीनां ग्रहणे संयोगः, कपालाद्यवयवग्रहणे समवायः काल ग्रहणे कालिकः संबन्धः चैत्रादीनां **ग्रहणे स्वस्वामिभावः** संबन्धः। एवं विध संबन्ध भेदेपीत्यर्थः। **घटवदिति** घटोस्यास्तीति घटवत् घटोस्मिन्नस्तीति घटवत् षष्ट्यर्थे सप्तम्यर्थेच मतुप्। **सम्बन्धसामान्येति** न तु संयोगादिसंबन्धविशेष **संसर्गको बोध** इत्याशयः। एवं च संबन्धः संबन्धत्वेन **संसर्गमर्यादया** भासते, न तु विशिष्यसंयोगत्व **समवायत्वा**दिनेति भावः। **मत्वर्थ द्रव्य विशेष्यके इति** अयमर्थः = मतुपः प्रकृत्यर्थविशिष्टः वाचित्वमेव, **सम्बन्धस्य वाक्यार्थ** विधया विशेषण विशेष्य भावबोधोत्तरमर्थाद्वा प्रतीत्युपपत्तेः। उक्तं च वार्त्तिक कृता

सर्वत्र यौगिकैः शब्दै र्द्रव्यमेवाभिधीयते।
न हि संबन्ध वाचित्वं संभवत्यतिगौरवादिति,।।

**नचानन्त द्रव्येषु** शक्तिग्रहासंभवः। एक मुपलक्षणीकृत्यतत्संभवात्, न चोपलक्षणीभूता घटदण्डादयोपि नाना, **तद्वृत्ति जात्याऽनुगमात्। न च** तदपि घटत्व दण्डत्व रूपमनेकविधम्, प्रकृयर्थत्वेनानुगमात्। अतो **मतुबादयो द्रव्यमेवाभिदधति।** न संबन्धं नापि संबन्धिनम्। अतो घटवदित्यतो मतुबर्थ द्रव्य विशेष्यको बोध – इति। "निर्विशेषं न सामान्य" मिति न्यायेनाह – **तत्त्वेन जिज्ञासायामिति** तत्त्वेन = विशेषरूपेण। **प्रमाणान्तरेण** = प्रत्यक्षादिना। तात्पर्ये = संबन्ध विशेषे वक्तु स्तात्पर्ये। एकस्मिन्नेव संसर्गे = संयोगे **कालिके** वा। एवं तद्वाक्यात्सामान्यसंसर्गकबोधमुपवर्ण्य प्रकृतार्थोपयोगितां दर्शयति **तत्रचेति** घटवद्द्रव्य **मित्येत**द्वाक्यार्थविषये। तत्त्वेन बोधस्य = संबन्धस्य विशेषरूपेणावगाहिनो बोधस्य। प्रमाणान्तरा-

धीनतया = प्रत्यक्षादि प्रमाणान्तराधीनतया, **संबन्धत्वेनैवेति** एवेन संयोगत्वादिना संयोगादे र्व्यावृत्तिः। **कार्यकारणभावानन्त्यमिति** घटवद् द्रव्यमित्येवं विधसमभिव्याहारज्ञानस्य तद्वाक्य जन्य शाब्द बोधस्य च यः कार्यकारणभावः, तदानन्त्यं नेत्यर्थः। तद्वत् कालप्रकारकभावना विशेष्यक बोधस्यापि संबन्ध सामान्य **संसर्गकत्वान्नकार्यकारणभावानन्त्यमिति** प्रकृत प्रघट्टकार्थ इति बोध्यम्। ननु घटवत् द्रव्यमिति वाक्यात्संबन्धसामान्य संसर्गकबोध स्वीकारे, संयोगेन न घटवद् द्रव्यम् घटवद् द्रव्यमित्यादि वाक्य जन्य ज्ञानानां प्रतिबन्ध्य **प्रतिबन्धक** भावानिर्वाह इत्यत आह **पर्यवसित बोधमिति** पाश्यात्यमानस बोधमादायैव तन्निर्वाह इति भावः। ननु घटवद् द्रव्यमिति वाक्याच्छाब्दबोध एव संबन्धविशेष संसर्गकः स्वीक्रियताम् किं संयोगादि संबन्धस्य मानसत्व स्वीकारेणेत्यत आह – **अत एवेति** जायमाना = घटवद् द्रव्यमिति वाक्यज्जायमाना। संबन्धान्तरं = **समवायादि** संबन्धान्तरम्, **पर्यवस्यतीति** शाब्दबोधस्यैव संबन्ध विशेषसंसर्गकत्वे संयोगेन न घटवदिति बोध सत्तायां घटवदिति ज्ञानोत्पत्तेरसंभवात्तदुत्पत्तिरनु-भूयमाना न संगच्छेतेति भावः। ननु तर्हि संयोगेन न घटवदिति बुध्या किं विषया बुद्धिर्बाध्यते इत्यत आह – **संयोग विषयतेति** तस्याः = तद्वाक्य जाया बुद्धेः। **आपातत इति** विमर्शेनमिथ्याज्ञान नाशः पातशब्दार्थः तंमर्यादी कृत्य = आपातमित्यव्ययीभावः, ततः सप्तम्यन्तात्सार्वविभक्तिकस्तसिः। अज्ञान काले इति तदर्थः। घटवद् द्रव्यमिति वाक्य जन्यबुद्वेरापाततः संयोगविषयता प्रतीता सैव "संयोगेन न घटवदि" ति वाक्य जन्यबुध्या बाध्यत इति भावः। प्रकृतार्थोपष्टम्भकतयादृष्टान्तान्तरमाह – **घटो नास्तीति** अत्रापि संबन्ध सामान्यावच्छिन्न प्रतियोगिता संबन्ध एव शाब्दबोध विषयः। पश्यात्सा प्रतियोगिता किं **संबन्धावच्छिन्नेति विशेष जिज्ञासायां प्रमाणान्तरेण तात्पर्य निर्णयानन्तरं संयोगादि विशेष** संबन्धावच्छिन्नत्वं मानसमवेति भावः। प्रकरणार्थमुपसंहरति **अत इति संबन्धभेदेपि** = कालस्य भावनान्वये कालिकवृत्तित्वादि संबन्धभेदेपि।

**एवं विशेष्यप्रकारभेदेपि तदनुगमकधर्मैक्ये न तदानन्त्यम्। नहि श्वेतरक्तादिप्रकारभेदे घटपटादिरूपविशेष्यभेदे वा नामार्थयोरभेदान्वय इतिव्युत्पत्तिर्भिद्यते।**

संबन्ध भेदेपि कार्यकारणभाव भेदाभावे दृष्टान्तान्तरमाह – **एवमिति** संबन्ध भेदवदित्यर्थः, **तदनुगमकेति** प्रकारक विशेष्ययोरनुगमकोधर्मः नामार्थत्वरूपः, तस्यैकत्वे इत्यर्थः। **श्वेतरक्तेति** श्वेतोघटः रक्तोघट इत्यादौ। **घटपटेति** श्वेतोघटः श्वेतः पट इत्यादौ।

**अस्तु वा एवमादिस्थले सर्वत्र तद्भेद, स्तथापि एक कार्यकारण भावकल्पनादशाया मुपस्थितस्य विशेष्यस्यैव कार्यकारण भावान्तरेपि विशेष्यत्वकल्पनौचित्यात्। न च विनिगमनाविरहः, द्वितीयान्तादिपदानां तावत् क्रियापदं विना निराकांक्षत्वाभावस्यो भयवादि सिद्धतया क्रियाप्रतिपादकस्य विशेष्यप्रतिपादकत्वा वश्यंभावात् तत्रापि धात्वर्थं प्रति कालादिकं च प्रति विशेष्यभूताया भावनाया एव 'प्रधानभूतविशेष्यत्वे संभवति प्रकारविशेष्यत्वस्या न्याय्यत्वा' दिति न्यायेन विशेष्यत्वोपस्थितिलाघवानुरोधेन च विशेष्यत्वकल्पनौचित्यात्।**

**न च प्रथमान्तस्य क्रियापदसाकांक्षत्वे प्रमाणाभावः, चैत्र इत्येतावन्मात्रस्य शाब्दबोधा-जनकत्वेन तस्यापि साकांक्षत्वात्। न च तथात्वेपि पण्डितादिपदसमभिव्याहारेणापि शाब्दबोधजननात् क्रियापदसाकांक्षत्वे प्रमाणाभावः, "अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्य-मानोऽप्यस्ति" इति कात्यायनस्मरणेन तस्यापि क्रियापदसाकांक्षत्वात्। भवन्तीपरः लडन्त इत्यर्थः। न च क्रियापदान्तरस्यापि योग्यताद्यनुसारेणा वश्यकत्वा देतदनुशासनवैयर्थ्यम्।**

**योग्यतासाधारण्ये वेदादौतात्पर्यग्राहका भावे च सति अस्त्यध्याहारनियमार्थत्वात्। प्रथमान्तमुख्यविशेष्यकत्व भ्रमनिरासार्थत्वेनैव वा सार्थक्याच्च।**

**न चैवं तर्हि प्रथमपुरुषभिन्ने 'अहं पण्डितः, त्वंपण्डित' इत्यादौ तत्साकांक्षत्वे प्रमाणाभावः, तत्रापि प्रातिपदिकार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यता संबन्धेन सुबजन्योपस्थितिः कारणम्, लिङ्गसंख्याव्यतिरिक्तसुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति च क्रियापदजन्योपस्थितिः कारणमिति क्लृप्तकार्यकारणभावयोरेव प्रमाणत्वात्। अत एव प्रथमास्थलेपि न प्रातिपदिकोपस्थापितस्यैव चैत्रस्य क्रियाया मन्वयः, अपितु प्रथमोपस्थितस्यैव। प्रातिपदिकार्थमात्रे प्रथमेत्यनुशासनेन प्रातिपदिकार्थस्यैव प्रथमार्थत्वात्। प्रकृतिप्रत्ययार्थयोश्चाभेदसंबन्धेनान्वया न्न क्लृप्तव्युत्पत्तिभङ्गः। प्रातिपदिकं वा तात्पर्यग्राहकमिति वक्ष्यते। यदातु अभिहितकारकवाचिनी प्रथमेति मतं, तदा सुतराम्।**

**अतः सिद्धं लाघवाद्यनुरोधेन सर्वत्र भावनैव मुख्यविशेष्यभूतेति।**

नन्विदमयुक्तं, तत्तत्पदार्थस्य भावनायां भिन्न भिन्न संबन्धेनैवान्वयात् लडर्थ वर्तमान कालस्यापि पचतीत्यादावाधेयतासंबन्धेन नश्यतीत्यादौ स्ववृत्त्युत्पत्तिकनाश निरूपितत्व संबन्धेन **चान्वयात्तत्संसर्गकबोधे** तादृश तादृश समभिव्याहार ज्ञानस्य हेतुताया अवश्यकल्पनीयतया **कार्यकारणभावा**नन्त्यस्य दुर्वारत्वात्।नच तत्र संबन्धः संबन्धत्वेन संसर्गतया भासते, न तु विशिष्याधेयत्वत्वादिनेति न दोष इति वाच्यम्। शाब्दबोधे सर्वत्र संबन्धस्य विशेष **रूपेणैव** संसर्गमर्यादया **भानेन** संबन्धत्वेन सामान्यरूपेण भानायोगात्। स्पष्टं चेदंगदाधरीय चतुर्दश लक्षण्यां प्रथम स्वलक्षणे। **तत्रहि ''वस्तुतस्तु** संयोगसमवायादि साधारणानुगत संबन्धत्वस्य कथंचित्सुवचत्वेपि तेन रूपेण संयोगादीनां संबन्धतया भानस्य निर्युक्तिकतया व्यापकता शरीरे लाघवानुरोधात्साध्यप्रकारेणाधिकरण निवेशे साध्य संबन्धोपि विशिष्य संसर्गतया निवेश्यः। तथाच विशिष्य साध्यतावच्छेदक संबन्धनिवेशनमावश्यक्तमिति **ध्येय**'' मित्युक्तम्, ''साध्यसम्बन्धानुयोगित्वेन न साध्याधिकरणं निविष्टं, किंतु साध्येनैव रूपेण, एवं च साध्यस्यधिकरणे न साकं संबन्धत्वेन संबन्धानां सम्बन्धत्वं नैव संभवतीत्यर्थः। इदं च येन केनचित्सम्बन्धेन तद्वांश्च प्रकृतो हेतुरिति दीधितौ स्फुटम्। लाघवेति तथाच साध्याधि करणत्वेन रुपेण निवेशकल्पे तादात्म्य संबन्धेन साध्यतास्थलानुरोधेन साध्यसंबन्धित्वेन निवेशस्यावश्यकतया तत्र संबन्धत्वेन निवेशवशेन उक्तशङ्का स्यात्। लाघवात्साध्येन रुपेणाधिकरणस्य निवेशेच संबन्धत्वेन संसर्गताया अप्रमाणिकत्वादधिकरणांशे संबन्धत्वविशिष्टेन साध्यस्य विशेषणत्वासंभवात्तदृश शङ्कैव नोदेतीति भावः ''इति **तद्व्याख्यातारः**। तिङर्थवाद मञ्जूषायां **नागेशभट्टैरप्येवमुक्तम्'' तत्तद्व्युत्पत्त्यनुसारेण** तथा तथा बोधस्य तेषां तेषां जायमानत्वेन तथा तथा कायकारण भावानां सर्वेषामावश्यकत्वेन तल्लाघव गौरव विचारस्यायुक्तत्वा — दिति। घटवद् द्रव्यमित्यत्र मतुपो न द्रव्यवाचित्व, मपितु संबन्धिवाचित्वमेव। स्पष्टं चैतत् **वैयाकरणभूषणादौ। तथाच संबन्धस्य प्रकारतया संबन्धत्वेन भाने न किंचिद्बाधकम् अत एव पर्वतो** वह्निमनिति वाक्याद् वह्निसंबन्ध्य भिन्नः पर्वत इति बोधे जाते तत्र संबन्धत्वेन संबन्धस्य प्रकारतया भानात्संबन्धविशेषस्या**भानात** केन संबन्धेन वह्निमानिति जिज्ञासोदेति। स्पष्टमधिकमन्यत्र। एवं च निरुक्तरीत्या तदानन्त्य प्रसङ्गो दुर्वार एवेत्यरुचेराह — **अस्तु वा एवमादिस्थले सर्वत्र तद्भेद इति** तत्तत्पदार्थस्य भिन्न भिन्नसंबन्धेन विशेष्यान्वयस्थले, तद्भेदः = कार्यकारणभावभेदः। तर्हि भावनाया विशेष्यत्वनिर्वाहः कथमत आह **एक कार्यकारणभावेति** स्वाश्रय समवेतत्व संबन्धेन जायमानाख्यातार्थ संख्या प्रकारकशाब्दबोधं प्रति विशेष्यतयाख्यात जन्य भावनोप स्थितेः कारणत्वमिति संख्यान्वये कार्य

कारणभावकल्पनादशायामित्यर्थः। उपस्थितस्य विशेष्यस्य = भावना रुपस्य तस्य। कार्यकारणभावान्तरे = **आख्यातार्थकालस्य भावनान्वयं प्रति कल्पिते तस्मन्नपि। औचित्यादिति** धात्वर्थाख्यातार्थ संख्यादिकं प्रति भावनाया विशेष्यत्वे सिद्धे कालादेर्विशेष्य विमर्शे झटित्युपस्थित विशेष्य भावाया भावनाया एव विशेष्यत्व कल्पनं **युक्तमिति** भावः। नैयायिकः पर्यनुयुङ्क्ते – **न च विनिगमनाविरह इति** आख्यातार्थ संख्यायाः प्रथमान्तार्थेन्वयेन तत्र कार्यकारण भाव कल्पनायामन्याविशेषणीभूत प्रथमान्तपदोपस्थाप्यस्य विशेष्यत्वलाभेन भावनाया एव तत्वमित्यत्र विनिगमकं नास्तीत्याशयः। समाधत्ते – **द्वितीयान्तादीति** चैत्रः पचतीत्यादौ तथा वक्तुंशक्यत्वेपि ओदनम् काष्टैरित्यादि द्वितीयान्तादिपदप्रयोगे पचतीत्यादिक्रियापदं विना आकाङ्क्षा शान्तेरभावादगत्यातत्र भावनाया विशेष्यत्व मध्यवसेयमिति भावः। ननु कालान्वये धात्वर्थस्य विशेष्यत्वमस्त्वत आह – **तत्रापीति** क्रियापदाध्याहारेपीत्यर्थः। **धात्वर्थ प्रतीति** एतच्च मूल एव स्पष्टं भविष्यति। **भावनाया एवेति** अस्य विशेष्यत्व कल्पनौचित्या, दित्यत्रान्वयः। ननु धात्वर्थस्य भावनायां विशेषणत्वेपि कालस्य धात्वर्थे प्रकारत्वमास्ताम् अविरोधात् **इत्यत** आह **प्रधान भूत विशेष्यत्वे इति** प्रधानभूतस्य भावनारुपार्थस्य कालं प्रति विशेष्यत्वे संभवति सति, प्रकार विशेष्यत्वस्य = भावनायां प्रकारस्य धात्वर्थस्य कालादिकं प्रति विशेष्यत्वमन्याय्यम्, **विशेष्यत्वोपस्थितीति तत्त्वेनोपस्थिति** भावनाया एव न तु धात्वर्थस्य तल्लाघवेन चेत्यर्थः। एवं च कार्यकारण भावानन्त्यमस्तुनाम परतु सर्वत्र **भावनाया मुख्य विशेष्यत्वे न कापि क्षतिरिति तात्पर्यम्। नैयायिकः** पुनरपि पर्यनुयुङ्क्ते – **न च प्रथमान्तस्येति प्रमाणाभाव इति** विनापि क्रियापदं ततः शाब्दबोधो जायत इति नैयायिकस्याभिमानः। अभिमानं निर्दलयन्नाह **चैत्र इत्येतावन्मात्रस्येति** नैयायिकः स्वाशयमाविष्करोति **न च तथात्वेपीति** भगवतः कात्यायनस्य वचनं स्वार्थोपष्टम्भकतया प्रदर्शयति **अस्तिर्भवन्तीपर इति** इदं च "अनभिहिते" 2-3-1 **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रेप्रथमा"** 2-3-46 इत्यादि सूत्रेषु वार्तिकम्। भवन्तीति लटः प्राचां संज्ञा। तदाह – **लडन्त इति** नैयायिको वार्तिकार्थे पर्यनुयुङ्क्ते – **न चेति क्रियापदान्तरेति** पण्डितश्चैत्र इत्युक्ते पठतीत्यस्य, पाचकश्चैत्र इत्युक्तौ अवन्नावयतीत्यस्येत्यादिरीत्या तदध्याहार इत्याशयः। तदाह – **योग्यताद्यनुसारेणेति** योग्यतासाधारण्ये = प्रथमान्तार्थस्यानेक क्रियाभिरन्वय-योग्यतास्थले। वेदे पुरुषाभावादाह **वेदे तात्पर्यग्रहाभावे चेति** असाधारणं प्रयोजनमाह – **प्रथमान्तेति** एवं च "तद्भूतानां क्रियार्थेने" त्यादि जैमिनिसूत्रवदिदं कात्यायन वचनमपि भावनामुख्य विशेष्यक बोध **स्वीकारे प्रमाणमित्याकृतम्।** वार्तिक मव्याप्तमिति शङ्कते **न चेति** "अस्तिर्भवन्तीपरः प्रथमपुरुषेऽ-प्रयुज्यमानोप्यस्ती" ति वार्तिके प्रथम पुरुषे इत्युक्तत्वात्तत्र दोष इत्याशयेनाह – **प्रथमपुरुष भिन्ने इति** तत्साकाङ्क्षत्वे = अस्तिक्रियापद साकाङ्क्षत्वे। तत्रापि अनुगत कार्यकारण भावानुरोधात्तदध्याहार इत्याह **तत्रापीति** अहं पण्डितः, त्वं पण्डित इत्यादावपि। प्रकृतयर्थ प्रकारक शाब्दविषये आह **प्रातिपदिकार्थेति** सुबर्थप्रकारक बोधविषये आह **लिङ्ग संख्या व्यतिरिक्त सुबर्थेति** लिङ्ग संख्ययोः सामानाधिकरण्य संबन्धेन सुबर्थकरणत्वादावन्वयादुक्तं – **लिङ्गसंख्या व्यतिरेकेति। प्रमाणत्वादिति** तण्डुलं पचतीत्यादौ द्वितीयार्थकर्मत्वस्य धात्वर्थ द्वारा पाकभावनायामन्वयात्तदनुरोधेन निरुक्त कार्यकारण भावस्यावश्य स्वीकर्तव्यतया तदनुरोधेन त्वं पण्डित इत्यादावपि क्रियापदाध्याहार आवश्यक इति भावः। वस्तु तस्तु – न हि सत्तां पदार्थो व्यभिचरति इति मतुप् सूत्रे भाष्य कृतोक्तम् तत्र सत्ता शब्देन बुद्दिपरिकल्पित सत्ताया ग्रहणम्। सैव औपचारिकी सत्तेति वैयाकरणैर्व्यवह्रियते। सा च घटादि भाव रुप पदार्थैरभावरूप पदार्थेन चा विरोधेन वर्तते। किं च सा भूत भविष्यद्वर्तमान पदार्थमात्रमनुबध्नाति। अविरुद्धाहि बास्यासत्ता तस्याः पूर्णरुपतया प्रत्यासन्ना, तत्रापि वर्तमानावस्था तस्याः पूर्णत्वोपकारिणीत्याशयेन "यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्ती परः" इत्युक्तं वार्तिककृता, एवं च यथा योगं सर्वलकारसर्व पुरुषविषयकमिदं वार्तिकम्, सत्ता प्रसङ्गाद्वार्तिके, अस्तिरित्युक्तम्, यत्र या क्रिया योग्या तत्र साध्याहर्तव्येत्येव

**भाष्यवार्तिकयोराशयः।** **स्पष्टं चेदं तृतीयकाण्डे सम्बन्ध सुमुद्देशे हरिहेलाराज ग्रन्थयोः।** **एवं च त्वं पण्डित इत्यत्र** **असिइति अहमित्यत्रास्मीति अन्यत्र यथायोग्यं** क्रियापदाध्याहारान्नकापि. क्षति-रिति **बोध्यम्।**

अत एव = सुबर्थ प्रकारक शाब्दबोधं प्रति क्रियापद जन्योपस्थितेः कारणत्वादेव। प्रथमास्थलेपि = चैत्रः पचतीत्यादावपि। प्रातिपदिकोपस्थापितस्यैव = चैत्र मैत्र इत्यादि **प्रातिपदिकैः** शक्तयोपस्थापितस्यैव। **अन्वय इति** तस्य सुबर्थत्वाभावान्न क्रियान्वय इति भावः। **प्रथमोपस्थितस्यैवेति** प्रथमा **विभक्त्योपस्थितस्यैव चैत्रस्येत्यर्थः।** पाणिनि मते प्राति पदिकार्थे **प्रथमाया विधाना च्चैत्रादि** प्रातिपदिकबोध्यश्चैत्रादिरेव प्रथमाया अर्थ इति भावः। ननु ओदनमित्यादौ प्रातिपदिकार्थस्योदनस्य द्वितीयार्थकर्मत्वेन्वयात्तत्र प्रातिपदिकार्थ प्रकारक बोधं प्रति सुब्जन्योपस्थिते कारणत्व कल्पनं युज्यते। **प्रथमास्थले** कथं तत्कल्पनम्। प्रकृत्यर्थातिरिक्त प्रत्ययार्थाभावा, दित्यत आह – **प्रकृति प्रत्ययार्थयोरिति अभेदेति** ओदनं पचतीत्यादौ यथा वैयाकरण मते ओदनस्य प्रकृत्यर्थस्य प्रत्ययार्थे कर्मण्यभेदेनान्वयः तथा चैत्राभिन्नश्चैत्र इत्यभेदान्वय इति भावः। क्लृप्त व्युत्पत्ति भङ्गः = ओदनमित्यादौ क्लृप्तायाः प्रातिपदिकार्थ प्रकारक शाब्दबुद्दित्वावच्छिन्नं प्रति विशेष्यता संबन्धेन सुब्जन्योपस्थितिः कारणमिति व्यत्पत्तेर्भङ्ग चैत्रादेः शाब्दे वारद्वयं भानानन् **भवादाह प्रातिपदिकवेति तात्पर्य ग्राहकमिति** प्रथमार्थविशेषतात्पर्यग्राहकमित्यर्थः, वक्ष्यते = पाणिनि मतेन प्रथमार्थाविचारे। "अभिहिते प्रथमे" ति **कात्यमतेनाह, यथेति** मतं = कात्यायनस्य मतम्। सुतराम् = **सुबर्थस्य भावनायामन्वयान्नव्युत्पत्ति** भङ्गः। प्रकरणार्थमुपसंहरति - **अतःसिद्धमिति।**

**नचानुभवानुरोधेन व्युत्पत्तिनानात्वमप्यङ्गीकृत्ययोग्यतया साक्षात्संबन्धेन तत्तद्विशेष्ये तस्य तस्यान्वयोनाऽयुक्त इति वाच्यम्। तथात्वे 'राजपुरुष' इत्यादावपि राज्ञ स्साक्षात् स्वस्वामिभावसंबन्धेनैवा न्वयानु भवात् समासस्थले व्युत्पत्त्यन्तर मङ्गीकृत्य राज्ञ एव भेदसंबन्धेन पुरुषान्वयोपपत्तेः पूर्वपदे संबन्धिलक्षणानापत्तेः। अर्धपिप्पलीत्यादा वुत्तरपदे लक्षणानापत्ते श्च। 'यजेत स्वर्गकाम' इत्यादौ स्वर्गसाधनत्वस्य यागे प्रतीयमानस्य मानसबोधविषयत्व मङ्गीकृत्य क्लृप्तव्युत्पत्तित इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इत्येवंविधशाब्दबोधस्य भवत्संमतस्या नापत्ते श्च**

**तस्मा दनुभूयमानस्य साक्षात्संबन्धस्य परम्परा संबन्धघटकत्वेन मानसबोधविषयतया वोपपत्ते र्न प्रथमक्लृप्तव्युत्पत्तिभङ्गेन व्युत्पत्त्यन्तरकल्पनं प्रमाणवत्।**

**अतःसिद्धं सर्वत्र वर्तमानकालस्य कृतावेवा न्वय इति। अत स्तत्तत्क्षणेष्वेव लटः शक्तिः, न तु लडुच्चारणस्य शक्यतावच्छेदककोटिप्रवेशः। तस्य तदादौ बुद्धिविषयत्वस्येव शक्ति ग्राहकोप-लक्षणत्वात्।**

**नचेति** अयमाशयः – सर्वेषां पदार्थानामाख्यातार्थभावनायामेव अन्वय स्वीकारे तत्र परम्परा संबन्धेनान्वयः स्वीकार्यः, यथा-पचतीति कर्त्राख्याते आख्यातार्थ संख्यायाः स्वाश्रय समवेतत्व संबन्धेन पच्यते इत्यादौ कर्माख्यात स्थले स्वाश्रयभूत कर्मवृत्तिफलप्रयोजकत्व संबन्धेन भावनायामन्वयः एवमनेकत्र परम्परा संबन्धाः स्वीकार्याः। अतो वरं व्युत्पत्यनेकत्वं स्वीकृत्य साक्षादेवान्वयो यथायोग्य-मिति **व्यत्पत्ति नानात्वमिति** कार्यकारण भावानन्त्यमित्यर्थः, एवं स्वीकारे **सिद्धान्त** भङ्गः परेषां मते स्यादित्याह, **तथात्वे इति** साक्षादन्वय लोभेनानेक **व्युत्पत्ति** स्वीकारे इत्यर्थः। समास स्थले =

राजपुरुष इत्यत्र। व्युत्पत्त्यन्तरम् = पुरुषविशेष्यकस्वत्व संसर्गक राजप्रकारक शाब्दबोधं प्रति राज पदाव्यवहितोत्तर पुरुष पदत्वरुपानुपूर्वीज्ञानस्य कारणत्वमिति व्यत्पत्त्यन्तरम्। पुरुषान्वययोपपत्तेः = पुरुषे तदुपपत्तेः। **लक्षणानापत्तेरिति** निपातातिरिक्त नामार्थयोः साक्षाद्भेनान्वयो नेति व्युत्पत्ते राजपुरुषादि समासे राज्ञो भेदेन पुरुषेन्वयायोगाद्राजा भेदस्य पुरुषे **बाधित्वाच्च**ागत्या पूर्वपदे तत्सम्बन्धिनि लक्षणामाश्रित्याभेदेनान्वयः स्वीक्रियते। राज संबन्ध्य भिन्नः पुरुष इति। निरुक्तरीत्या व्युत्पत्यन्तर स्वीकारेण साक्षाद्भेदान्वयोपपत्तौ लक्षणाश्रयणं नैयायिकानां नोपपद्येतेति भावः। ननु तत्र **लक्षणा न स्वीक्रियत एव, अत एव शब्द शक्ति प्रकाशिकायां राज्ञो भेदेनैव पुरुषान्वयः स्वीकृतो जगदीश** तर्कालंकारैः इत्यतो दोषान्तरमाह – **यजेत स्वर्गकाम इति** अत्र लिङ्गर्थ इष्टसाधनत्व सामान्यम्, तस्य च धात्वर्थेयागेऽन्वयः प्रथमान्तार्थमुख्यविशेष्यकश्च बोधः – इष्टसाधनीभूत यागानुकूल कृतिमान् स्वर्गकाम इति। यागे स्वार्गसाधनत्वं मानसमेव नशाब्दमिति नैयायिकानामभ्युपगमः। अत्रापि व्युत्पत्यन्तर-स्वीकारेण स्वर्ग कामपदार्थैकदेशस्य स्वर्गस्य लिङर्थान्वये स्वर्गाभिन्नेष्ट साधनताया यागे शाब्दत्वोपपत्तौ तत्र मानसत्व कल्पनमसंगतमेव स्यादिति भावः। प्रतीयमानस्य = समभि व्याहारबलात्प्रतीयमानस्य। शब्दतोऽलाभादाह **मानसबोध विषयत्वमिति** क्लृप्तव्युत्पत्तितः = आख्यातार्थकृति प्रकारकबोधं प्रत्यन्य विशेषणीभूत प्रथमान्त पदजन्योपस्थितिः कारणमिति क्लृप्तव्युत्पत्तेः। **अनापत्तेश्चेति** यागे प्रतीयमानस्य स्वर्गसाधनत्वस्य मानसबोधत्वाङ्गीकारपूर्वकं स्वीकृतस्य शाब्दबोधस्यानापत्तिरिति भावः। स्पष्टं भविष्यति चेदं पाणिनि मतेन प्रथमा विभक्तर्थ निरुपणावसरे मूल एव। तस्मात् = निरुक्त दोष सत्त्वेन तत्तदव्युत्पत्त्याश्रयणेन साक्षात्सम्बन्धेन तस्य तस्य तत्र स्वीकर्तुमशक्यत्वात्। संख्यादि विषये आह **परम्परा संबन्धेनेति** नीलो घट इत्याद्यनुरोधेनाह – **मानस बोधविषयेति** प्रथम व्युत्पत्ति भङ्गेन = **सुबर्थप्रकारकबोधं प्रत्याख्यात पदजन्य पदार्थोपस्थितिः कारणमिति व्युत्पत्ति भङ्गेन।** व्युत्पत्यन्तर कल्पनम् = साक्षात्संबन्धेनान्वयार्थव्युत्पत्ति कल्पनम् अतः = कार्यकारण भावालाघवात्। **कृतावेवेत्येव** शब्देन धात्वर्थस्य **व्यवच्छेदः**। अतः = **लटो वर्तमान काले शक्तेः**। **लाघवादाह = तत्तत्क्षणेष्विति न तु** लडुच्चारणस्य = गौरवात् ननु भूत भविष्यद्व्यावृत्तिः कथमत **आह तस्येति** लडुच्चारणस्येत्यर्थः। **तदावाविति** तच्छब्दस्य **बुद्धि**विषयतावच्छेदकत्वोपलक्षित तत्तद्धर्मावच्छिन्ने शक्तिः, तदुपलक्षिता ये घटत्वादयो धर्मास्तदवच्छिन्न इति यावत् अत एव अत्र घटोस्ति तमानयेत्यत्र तच्छब्देन घटत्वेन घटबोधः सर्वानुभव **सिद्धः** संगच्छते। बुद्धिस्थत्वस्येव = बुद्धिविषयतावच्छेदकत्वस्येव।

**अथवा लडादे र्लट्त्वादिकमेव शक्यतावच्छेदकम्। तदवच्छिन्नस्य च कालिकसंबन्धेन प्रकृतशाब्दबोधोपधायकस्ववृत्तित्वं कृतौ संबन्धः। कृते राख्यातत्वेन रूपेण लड्बोध्यत्वात्। तेन मैत्रीयप्रयोगकालीनकृतिध्वंसकाले न चैत्रे लट्प्रयोगापत्तिः।**

इतोपि लाघवादाह = **अथवेति शक्यतावच्छेदकमिति** लडेव शक्योर्थः। लट्त्वं तदवच्छेदकमित्यर्थः। **प्रकृतेति** प्रकृतशाब्दबोधोपधायकं यत् स्वं = लट् तद्वृत्तित्वं तन्निरुपित कालिक **संबन्धावच्छिन्न** वृत्तित्वम् निरुक्त संबन्धेन लड्विशिष्टाभावनेति बोधः। ननु "वर्तमाने लट्" 3-2-123 इति शास्त्राल्लटो वर्तमानार्थकत्व लाभेपि कृति बोधकत्वासंभवोऽत आह – **कृतेरिति लड्बोध्यत्वाविति** लटो लट्त्वेन काल बोधकत्वम् स्ववृत्याख्यातत्वेन रुपेण **कृति** बोधकत्वमिति भावः। शाब्दबोधे प्रकृतत्व विशेषणस्य प्रयोजनमाह **तेनेति मैत्रीयेति** तदीय लट् प्रयोग कालिको यश्चैत्रीय कृतिध्वंसः तत्काल इत्यर्थः। **नचैत्रे लट् प्रयोगापत्तिरिति** चैत्रः पचतीति न प्रयोगस्यापत्तिरित्यर्थः अयमर्थः – प्रकृतेति विशेषाणानुपादाने चैत्रीय कृति ध्वंसकालेपि पाक वर्तमानता दशायां मैत्र प्रयुक्त लड् वृत्तित्वस्य कृतावबाधित्वेन चैत्तः पचतीति प्रयोगापत्तिः। प्रकृतेति विशेषणसत्वे तु पाक वर्तमानता दशायां मैत्र प्रयुक्त लटःप्रकृत

शाब्दबोधौपयिकत्वाभावेन प्रकृत शाब्द बोधीय लटो ग्रहणे तद्वृत्तित्वस्य नष्टायां कृतौ बाधित्वान्न पचतीति प्रयोग-इति,

**एवं लिडर्थोपि भूतानद्यतनत्वविशिष्टपारोक्ष्यरूपो भावनायामन्वेति। तत्र भूतत्वं लिडुच्चारणकालीनक्षणध्वंसप्रतियोगिक्षणवत्त्वम्। तच्च कालिकसंबन्धेन कृतावन्वेति। इदं चान्तिमकृता वेव, तेना नेकदिनसाध्यपाकस्थले प्याद्यकृतिध्वंसकाले न 'पपाचे' ति लिट्प्रयोगः। लिडुच्चारणकालीनध्वंसप्रतियोगित्वं वा। तदपिस्वरूपसंबन्धेना न्तिम कृता वन्वेति। लिडुच्चारणकाल एव वा लिडर्थः। लिडेव वा पूर्ववत्। तस्य च स्ववृत्तिध्वंसप्रतियोगित्वादि-संबन्धेन तस्या मन्वयः। ननाशेत्यादौ भुतत्वान्वयः पूर्ववत्।**

लिडर्थस्यापि तस्यामेवान्वय इत्याह **एवं लडर्थोपीति** "परोक्षे लिट्" 3-2-115 इति सूत्रे भूते अनद्यतने इत्यनयोः संबन्धादाह — **भूतानद्यतनत्वेति** भूतमात्रे लुङ्, अनद्यतन भूते लङ्, उभयसहितपारोक्ष्ये लिडिति वेवेकः। तत्र = लिडर्थानां मध्ये। **लिडुच्चारणेति** तादृश कालवृत्तिः योध्वंसः = क्षणध्वंसः तत्प्रतियोगी यः क्षणः तद्वत्वमित्यर्थः। तच्च = एतादृशं भूतत्वं च। इदंच=निरुक्तं भूतत्वं च। **अन्तिमकृतावेवेति** पाकानुकुलोयः कृतिकूटस्तदन्तिम कृतावेवान्वेतीति भावः। **लिट् प्रयोग इति** अन्तिमकृतौ निरुक्त भूतत्वाभावान्न तत्प्रयोग इति भावः। क्षण पर्यन्तानुधावने गौरवादाह — **लिडुच्चारणेति** तत्कालीनो योध्वंसः = कृतिध्वंस स्तत्प्रतियोगित्वमित्यर्थः। ततोपि लाघवादाह — **लिडुच्चरणकाल एवेति** ततोपि लाघवादाह **लिडेवेति** पूर्ववत् = लड्वत्, पूर्ववत् = **लटीवप्रतियोगित्वेन्वयः।**

**अनद्यतनत्वं लिडुच्चारणदिन भिन्नदिनवृत्तित्वम्। परोक्षत्वं च प्रयोक्तृवृत्तिसाक्षात्करोमीत्ये-तादृशविषयताशालिज्ञानाविषयत्वम्। इदं द्वयमपि कृतावन्वेति, परंत्वाद्यं साक्षात्संबन्धेन, द्वितीयं तु स्वसंबन्धिधात्वर्थावच्छिन्नत्वसंबन्धेन। चैत्रवृत्तिकृतेः प्रयोक्तृसाक्षात्काराविषयत्वेन तस्यां तदभावबोधस्य व्यर्थत्वात्, बुध्यतां वा स्वकृतौ प्रसिद्धस्य साक्षात्कारविषयत्वस्य तस्या मभावः।**

**उत्तमपुरुषे प्यनवधानेन पारोक्ष्यं द्रष्टव्यम्। शक्तिस्त्वर्थत्रये प्रत्येकं, विशेषणविशेष्यभावे विनिगमनाविरहात्। अत एवोक्तदिनस्यो क्तक्षणेपि न विशेषणता, विनिगमनाविरहात्।**

अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतनः तद्भिन्नत्व मनद्यतनत्वमिति वृत्तिकाराः, अतीतरात्रेरन्त्य यामेन आगामिरात्रेराद्ययामेन च सहितो **दिवसोद्यतन** स्तद्भिन्नत्वमिति कैयटः, तदसंगतमिति ध्वनयन्ननद्यतनत्वं निर्वक्ति — **अनद्यतनत्वमिति दिनभिन्नेति** "सद्यः परुत्परारि" 5-3-22 इत्यादि सूत्रेण अस्मिन्नहनि इत्यर्थे अद्य शब्दो निपात्यत। तेनास्मदुक्तमेवयुक्तम्, न वैयाकरणैरुक्तम्, दिनावान्तरकालस्य तेनालाभादिति भावः। **प्रयोक्तृवृत्तीति** लिट् प्रयोक्तृ चैत्रादि वृत्ति तादृश विलक्षण ज्ञान निष्टविषयता शालि चं यज्ज्ञानं तदविषयत्वमित्यर्थः। इदं द्वयं = अनद्यतनत्वं परोक्षत्वं च द्वितीयं = परोक्षत्वम्। **स्वसंबन्धीति** स्वं = परोक्षत्वम्। तस्यां = कृतौ। तदभावबोधस्य = प्रत्यक्षत्वाभाव बोधस्य। **व्यर्थत्वादिति** अतः परोक्षत्वस्य न साक्षात्संबन्धेन भावनायामन्वय इति भावः। तस्य तत साक्षात्संबन्धेनान्वयोपि सुवच इत्याह **बुध्यतां वेति** स्वकृतौ = प्रयोक्तृकृतौ। तस्यां = वक्तृनिष्ट कृतौ। ननु लिटि उत्तमपुरुष प्रयोगानुपपत्तिः, स्वकृतेः स्वपरोक्षत्वासंभवा, दित्यत आह — **उत्तमपुरुषेपीति अनवधानेन = चित्तविक्षेपादिना।** पारोक्ष्यम् = **स्वकृतेः।** यथा —

"सुप्तोऽहं किल विललाप"
"बहुजगद पुरस्तात्तस्य मत्ताकिलाहं
चकर च किल चाटु प्रौढयोषिद्वदस्ये" त्यादौ।

अर्थत्रये = भूतत्वे अनद्यतनत्वे परोक्षत्वे च।

**लुडर्थस्तु "पक्तेत्यादौ अनद्यतनत्वविशिष्टं भावित्वम्। तच्च लुडुच्चारणकालीनप्रागभाव-प्रतियोगिक्षणवत्त्वादिकं पूर्वव दाद्यकृता वन्वेति**

**लृडर्थोपि पक्ष्यतीत्यादा वद्यतनानद्यतनसाधारणं भविष्यत्सामान्यं तत्रैव।**

**लेड् वेद एव। तदर्थो लिङर्थ एव – "समिधोयजती" त्यादौ**

**लोडर्थोपि पचेत्यादौ लिङर्थ एव। प्रैषादयः कृत्यप्रत्ययार्थाश्च, "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे" 3-3-133 तिसूत्रे चकारेण लोटोप्यनुकर्षणात्।**

**लङर्थस्त्वनद्यन भूतत्वम् अपचदित्यत्र। "भूते" 3-2-84 इत्यनुवृत्तौ "अनद्यतने लङि" ति 3-2-222 सूत्रात्।**

**लिङर्थस्तु पूर्वं निरूपितः।**
**लुङर्थः अपाक्षीदित्यत्र भूतत्वमात्रम्।**

पक्तेत्यादौ = पक्ता पक्तासि इत्यादौ, "अनद्यतने लुट्" 3-3-15 इति सूत्रे "भविष्यति गम्यादयः" 3-3-3 इत्यतो भविष्यतीत्यनुवर्तते, तदाह – **अनद्यतनत्व विशिष्टं भावित्वमिति क्षणवत्वादिकमिति** तादृश प्रागभावप्रतियोगित्वं, लुडुच्चारणकालः, लुडेव वा तत्वमिति भावः। **आद्यकृताविति** अन्यथा पाकवर्तमानता दशायामपि पक्तेत्यादि प्रयोगापत्तिरिति भावः

"लृट्शेषे च" 3-3-13 इति सूत्रे भविष्यतीत्यनुवर्तते तदाह – **अद्यतनानद्यतन साधारण भविष्यत्सामान्यमिति** "लिङर्थे लेट्" 3-4-7 इति सूत्रे "छन्दसि लुङ्लङ् लिटः" 3-4-6 इति सूत्राच्छन्दसीत्यनुवर्तनादाह – **लेड् वेद एवेति** तत्सूत्रादेवाह **तदर्थो लिङर्थ एवेति** उदाहरति **समिधो यजतीति,**

विधिनिमन्त्रणामन्त्रणाधीष्ट संप्रश्न प्रार्थनेषुलिङ्" 3-3-161 इति सूत्रादनन्तरं "लोट् च" 3-3-162 इति सूत्रस्य पाठादाह – **लोडर्थोपि लिङर्थ एवेति** लोटः प्रैषाद्यर्थकत्वे प्रमाणं दर्शयति, **चकारेण लोटोऽनुकर्षणादिति** अनुर्षणात् = अनुवृत्तेः। भूतत्व मात्रम् = "भूते" 3-2-84 इत्याधिकारे "लुङ्" 3-2-110 इति सूत्रात्,

**लृडर्थस्तु हेतुहेतुमद्भावविशिष्टक्रियातिपत्तिः। यथा – 'यदि सुवृष्टि रभविष्यत्, तदा सुभिक्षमभविष्य' दिति। अत्र वृष्टिसुभिक्षयो र्हेतुहेतुमद्भवात्। उभयो रनिष्पत्या च क्रियातिपत्तिः। अयं भाविनि भूते च। 'दृष्टो मया भवतः पुत्रोऽन्नार्थे चङ्क्रममाणः, दृष्ट श्चापरो द्विजो ब्राह्मणार्थी, यदि तेन स दृष्टोऽभविष्यत् ततोऽभोक्ष्यत, न तु भुक्तवानि, त्यादौ भूतेपि प्रयोगदर्शनात्। अनयो श्चार्थयोः साक्षादेव स्वरूपसंबन्धेन भावनान्वयः।**

"लिङ्निमित्ते लृङ् क्रियातिपत्तौ" 3-2-139 इति सूत्रादाह – **हेतुहेतुमद्भावेति** "हेतुहेतुमतोर्लिङ्" 3-3-156 इत्यनेन हेतुहेतुमद्भावे लिङ् विहितः, अत एतदर्थ लाभः। अतिपत्तिः = अनभिनिर्वृत्तिः। तयोः =

सुवृष्टिभवन – सुभिक्षभवनयोः। **हेतुहेतुहेतुमद्भावादिति** लोकोऽसकृत्प्राक् सुवृष्टि भवने सति सुभिक्षभवनं दृष्ट्वा भविष्यतोपि सुवृष्टि भवनस्य सुभिक्ष भवन हेतुत्वमध्यवस्यति। **अयमत्र प्रयोगः** भविष्यत्सुवृष्टि भवनमपि सुभिक्ष भवनस्य हेतुः, सुवृष्टि भवनत्वात् पूर्वसुवृष्टि भवनवदिति। अतस्तयोर्हेतुहेतुद्भाव इति भावः। उदाहरणे भविष्यतो स्त्रयोरनभिनिर्वृत्तिरितो वाक्याद्गम्यते। प्रमाणान्तराच्च तयोरतिपत्तिं वक्ताऽवगत्य इदं वाक्यं प्रयुङ्क्ते-तदाह – **उभयोरनिष्पत्त्येति** क्रियातिपत्तिः = तस्या अनभिनिर्वृत्तिः। अयम् – एतदर्थकोलुङ्। भाविनि = "लिङ् निमित्ते लृङ् क्रियातिपत्तौ" विति सूत्रे "भविष्यति मर्यादावचनेऽवरस्मिन्" 3-3-36 इति सूत्रात् भविष्यतीत्यनुवृत्तेः। "भूतेच" 3-3-140 इति सूत्राद्भूतकालेपि तदर्थको लृङित्याह – **भूतेचेति**, भूतकालेपीत्यर्थः। अस्यापि तदेव वाक्यमुदाहरणम्, परंतु भुतार्थको लृङ् सुवृष्टिर्यदि जाता तर्हि सुभिक्षं जातं भवेत्, सुवृष्टिर्नासीत् **तेद्धेतुकं** सुभिक्षमपि न जातमिति तद्वाकयार्थः। निरुक्तार्थे भूते लृङो वृत्तिकारोक्त मुदाहरणमाह **दृष्टो मयेति** इदं च लृङोभूतार्थकत्वद्योतनायोक्तम्। मम पुत्र स्तत्र दृष्टः स भुक्तवान् वा इति केनचित्पृष्टस्य प्रतिवचनमिदम्।

**अत्रच सर्वत्र लकारेषु शक्ततावच्छेदकं तत्तल्लकारत्वम्। वक्ष्यमाणरीत्या वा तत्तदादेशविशेषत्वं बोध्यम्। सर्वथा तदर्थस्य भावनायामेवा न्वय इति सिद्धम्।**

एवं लडादीनां लकाराणां दशानामाप्यनुबन्धक्रमेणार्थ भावनायां विशेषणतया तदन्वयं च प्रतिपाद्य **शक्ततावच्छेदकं निर्वक्ति अत्रेति तत्तल्लकारत्वम् = लडादिलकारत्वम्। ननु यथा कथञ्चिदुपस्थित** लकारादपि (लवणमित्यादावपि) वर्तमानादि कालप्रतीत्यापत्तिरित्यत आह – **वक्ष्यमाणरीत्येति** भावनाया आख्यातवाच्यत्व प्रतिपादनावसरे। तत्तदादेशविशेषत्वं = तित्व तत्सवादिकम्। "कालोहि भावनाया मन्वेति। इत्युपक्रान्तार्थमुपसंहरति **सर्वथेति** तदर्थस्य = भावनातिरिक्ताख्यातार्थस्य कालस्य

**एव मुपग्रहविशेषरूपस्याऽऽत्मनेपदादे रर्थः कर्तृगामिफलादिरूपः, सोपि कर्मतादिसंबन्धेन तस्या मेवा न्वेति।**

**यद्यपि स्वर्गत्वादिरूपेणाऽसौ स्वर्गकामादिपदे रुक्तः, तथापि कर्तृगामित्वादिना तदभिधान मात्मनेपदादिना ना नुपपन्नम्। अस्तु वा कर्तृगामित्वादिकमेव तदर्थः। स च स्वाश्रयफलकर्मत्वादिसंबन्धेन कृत्यन्वयी।**

आख्यातार्थोपग्रहस्यापि भावनायामेवान्वय इत्याह – **एवमिति** तदर्थकालवदित्यर्थः। **उपग्रहेति आत्मनेपद परस्मैपदाभ्यां बोधितस्य कर्तृगामित्वादिरूपार्थस्य उपग्रह इति संज्ञा पाणिनेः प्राचीनाना** वैयाकरणानाम्। उपग्रहशब्दश्च भाष्ये बहुषु स्थलेषु प्रयुक्तः – "सार्वधातुकेयक्" 3-1-67 काल **पुरुषोपग्रहाः" "व्यत्ययोबहुलम्" 3-1-85 "सुप्तिङुपग्रह"? तौ सत्" 3-2-127 "उपग्रहप्रतिषेधश्चे" ति।** भर्तृ हरिणा वाक्यपदीये तृतीयकाण्डे उपग्रह समुद्देश नामके द्वादशे प्रकरणे सप्तविंशतिश्लोकैरुपग्रह पदार्थो विस्तरेण निरुपितः। **आत्मनेपदादेरिति** आदिना परस्मै पदस्य **ग्रहणम्।** आत्मनेपदपरस्मैपदरुपाख्यातार्थस्येत्यर्थः। "स्वरितञितः कर्त्रभिप्राये क्रियाफले" 1-3-72 इति शास्त्रादाह – **कर्तृगामि फलादिरुप इति** स्वरितेतोञितश्य धातोरात्मने पदंस्यात् कर्तृगामिनि क्रियाफले इति सूत्रार्थः। पचते, यजते, कुरुते, दत्ते इत्याद्युदाहरणम। आदिना "व्यक्तवाचां समुच्चारणे" 1-3-48

इत्यादिभिः शास्त्रैर्बोधितस्य व्यक्तवाक्तवादेर्ग्रहणम् — सम्प्रवदन्ते ब्राह्मणाः। **कर्मवादि संबन्धेनेति** पचते इत्यादौ तत्संबन्धेन कर्तृगामि क्रियाफलवती भावनेति बोधः **स्वर्गत्वादिरुपेणेति** आत्मनेपद बोध्योऽर्थः फलरुपो यः स "यजेत स्वर्गकामः" इत्यादौ स्वर्गपदेनोक्तः, अतस्तत्राख्यातस्य शक्तिर्नकल्पनीयेति भावः। असौ = कर्तृगामि फलादिरुपोर्थः। **तदभिधानं** = फलाभिधानम्' ननु फलस्य विशेषरुपेण स्वर्गादिपदाद् बोधनात्पुनरपि तत्र शक्तिकल्पना नोचितेत्यत आह — **अस्तु वेति, स्वाश्रयेति** स्वं = कर्तृगामित्वम्, तदाश्रयः फलं स्वर्गादि तत्कर्मकत्वेनेत्यर्थः। **उपग्रहविवरणस्य नागेशभट्टै**स्तिङर्थवादमञ्जूषायां कृतः।

order to it

**एव मेकत्वादिसंख्याया अपि तिबाद्युक्तायाः सामानाधिकरण्यादिसंबन्धेन तस्या मेवान्वयः, न तु साक्षात्संबन्धेन कर्त्रादौ, "भावप्रधान" मिति स्मृतिसंकोचे प्रमाणाभावात्, कार्यकारणभावकल्पनागौरवापत्ते श्च। तत्रापि कर्त्राख्यातस्थले स्वाश्रयसमवेतत्वसंबन्धेन, कर्माख्यातस्थले स्वाश्रयभूतकर्मवृत्तिफलप्रयोज्यत्वसंबन्धेन।**

आख्यातार्थ संख्याया अपि तदर्थभावनायामेवान्वय इत्याह — **एवमिति** कालोपग्रहवदित्यर्थः। तस्यामेव = आख्यातार्थभावनायामेव। कर्त्रादौ = आख्यात लक्ष्ये। **प्रमाणाभावादिति** तया भावनानिरिक्ताख्यानार्थं प्रति भावनायाः प्राधान्य बोधनादिति भावः "आख्यात लक्ष्य एव कर्त्रादावभयान्वयः" इति प्रागुक्तिस्तु नैयायिकरीत्या प्रथमान्तार्थे संख्यान्वय स्वीकारापेक्षया लक्षिते कर्त्रादौ तत्स्वीकारो युक्त इत्याशयकः न तु स्व सिद्धान्तरीत्येति बोध्यम्। प्रकृते साक्षात्संबन्ध लोभेन संख्यायाः कर्त्रादावन्वये सा स्मृतिरेतदतिरिक्ततया संकोचिता स्यात् तत्र प्रमाणं नास्तीति भावः। **कार्यकारणभावेति** नैयायिकमते आख्यातार्थ संख्या प्रकारक बोधं प्रति अन्याविशेषणीभूत प्रथमन्तपदजन्योपस्थितिः कारणमिति कार्यकारण भावो वाच्यः वैयाकरणमतेपि तादृश बोधं प्रति आख्याताथश्रियोपस्थितिः कारणमिति वाच्यम्। तथाच गौरवं स्पष्टमेव। अस्मन्मतेतु सर्वसाधारण्येन एक एव कार्य कारण भाव इति लाघवमिति भावः। संख्यान्वये व्यवस्थामाह — **तत्रापीति** संख्यान्वय विषयेपीत्यर्थः कर्त्राख्यात स्थले = चैत्र स्तण्डुलं पचतीत्यादौ। **स्वाश्रयेति** स्वं = संख्या तदाश्रयः चैत्रः तत्समवेतत्वं कृतेः तत्संबन्धेनेत्यर्थः। कर्माख्यातस्थले = चैत्रेण तण्डुलः पच्यते इत्यादौ। **स्वाश्रयेति** स्वं = संख्या तदाश्रयभूतं यत्कर्म तण्डुलादि तद्वृत्ति फलं विकलृत्यादि तत्प्रयोजकत्व = तज्जनक पाकजनकत्वं कृताविति भावः।

**चैत्रेण ओदनः पच्यते इत्यत्रहि चैत्रेण पाकेनौदनः क्रियत इति विवरणानुसारात् कृतिरेवाख्यातार्थः। पाकस्य करणत्वं, चैत्रस्य कर्तृत्वं च प्रतीयते, आत्मनेपदेन च लक्षणया कर्म, उक्तानुशासनानुरोधात्। फलंतु विक्लित्यादि न कस्यापि पदस्यार्थः, तस्या न्यलभ्यत्वात्**

**अत एव "फलमात्मनेपदस्यार्थः, कृतिस्तृतीयार्थ" इत्यप्यपास्तम्। चैत्रः पचते इत्यादौ कृतावपि शक्ते रावश्यकत्वेना नेकशक्तिकल्पने गौरवात्। 'चैत्रेणौ दनः क्रियत' इति तृतीयातः कृतेः पृथग्विवरणाच्च**

**अतश्च तत्र कृते राख्यातार्थत्वात्तस्यामेकत्वान्वयः स्वाश्रयीभूतौदनवृत्तिविक्लित्तिरूपफलजनकव्यापारजनकत्वसंबन्धेन नानुपपन्नः।**

ननु कर्माख्याते भावनायां संख्यान्वय इत्ययुक्तं, तस्य भावना वाचित्वाभावात्, कर्मणः फलस्य वा तदर्थत्वादित्यत आह — **चैत्रेणौदन इति** द्वितीयादिना भाव्यान्तरनिर्देश स्थले धात्वर्थस्य करणत्वेनान्वयस्य **वक्ष्यमाणत्वादाह — पाकेनेति विवरणानुसारादिति** पच्यते = पाकेन क्रियते इति **कृत्यर्थक** करोतिना आख्यातार्थ विवरणादित्यर्थः। "कृतिरेवेत्येव शब्देन फलस्य व्यावृत्तिः। **आख्यातार्थ**

**इति** तथाच तत्र निरुक्त संबन्धेन संख्यान्वय कथनं युज्यत एवेति भावः। धात्वर्थस्यापि विवरणे प्रयोजनमाह **पाकस्य करणत्वमिति** तृतीयायाः कृतिरर्थ इति मतनिरासायाह **चैत्रस्य कर्तृत्वमिति** प्रतीयते = विवरणात्। न न्वोदनादेरन्वयानुरोधेन कर्माख्यातस्य कर्मवाचित्वाद्भावना वाचकत्वानुपपत्तिः इत्यत आह — **आत्मनेपदेनेति** कर्मणि **विहितेनात्मनेपदेनेत्यर्थः**, **अनुशासानुरोधातिति** लः कर्मणि च भावेयाकर्मकेभ्यः'' इत्यनुशासनानुरोधादित्यर्थः। पदस्य = आत्मनेपदस्य। अन्य लभ्यत्वात् = धातुलभ्यत्वात्। नैयायिकमतं दूषयति **अत एवेति** फलस्यान्वलभ्यत्वादेवेत्यर्थः **चैत्रः पचते इति** अयं च कर्तरिलकारः, अत्राप्यात्मनेपदस्य सत्त्वात्फलस्य वाच्यत्वं स्यात्, स्वतः कर्तृप्रत्ययतया कृति वाचित्वमपि तस्य स्वीकार्यमिति भावः। तदाह — **कृतावपीति अनेक शक्तिकल्पने इति** अनेकत्र = फले कृतौ च शक्तेः कल्पने इत्यर्थः। ननु यगादि समभिव्याहृतस्यात्मनेपदस्य फलवाचिकत्व कल्पनान्न दोषो इत्यतो दोषान्तर-माह **चैत्रेणेति** तृतीयातः = तृतीयविभक्तेः। पृथक् = पार्थकयेन। **विवरणाच्चेति** तृतीयायाः कृत्यर्थकत्वे तत एतद्बोध संभवात्ततः पार्थकयेन करोतिना विवरणमसंगतं स्यात् विव्रियते च प्रामाणिकैः, अतः कृतिर्नतृतीयार्थः किं त्वखण्डोपाधिरुपं कर्तृत्वमेव निरुपितं चैतत्प्राक्। उपसंहरति **अतश्चेति** कर्माख्यातस्य फलवाचित्वा योगादित्यर्थः। तत्र = कर्माख्याते। पूर्णोक्त संबन्धघटकं प्रयोजकत्व विशदयति — **फल जनक पाकजनकत्वेति।**

**एवं भावाख्यातेपि चैत्रेण सुप्यते गगनेन स्थीयते इत्यादा वाख्यातेन स्वापः क्रियत, इति विवरणा द्भावनैवोच्यते, स्थीयत इत्यत्राप्याश्रयत्वम्। नच तत्र लक्षणायां प्रमाणाभावः, चैत्रो जानातीत्यादौ विशेषणीभूत धात्वर्थान्वयस्येव गगनेन स्थीयत इत्यादौ विशेषणीभूत धात्वर्थान्वयस्यापि लक्षणाबीजत्वोपपत्तेः।**

**नच तत्र धात्वर्थविशेष्यक एव बोधः, भावना प्रकारकबोधत्वावच्छिन्नं प्रति आख्यातपद-ज्ञानत्वेन कारणत्वस्या न्यत्र क्लृप्ततया 'समिधोयजती' त्यादौ प्रथमान्तपदाध्याहारस्येव धात्वर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुपदज्ञानत्वेन कारणत्वस्या न्यत्र क्लृप्ततया तन्निर्वाहार्थं भावाख्याते प्याश्रयत्वलक्षणोपपत्तेः**

नन्वेवमपि भावनातिरिक्ताख्यातार्थं प्रति भावनाया विशेष्यत्व नियमस्य भावाख्याते व्यभिचार एव, तस्य भावनावाचित्वाभावात्, अर्थान्तराभावाच्च। अत एवाख्यातस्य तत्र धात्वर्थानुवादकत्वं वदन्तौ वैयाकरणाः तस्य साधुत्वमात्रार्थकत्व मभ्युपगच्छन्तो नैयायिकाश्च धात्वर्थ मुख्यविशेष्यकमेव शाब्दबोधं स्वीकुर्वन्ति। अतस्तत्र संख्या अनन्विता, धात्वर्थान्विता वा स्यादित्यत आह **एवमिति** **कर्तृकर्माख्यातवदित्यर्थः**। विवरणात् = कृत्यर्थकरोतिना विवरणात्। उच्यते = शक्तया बोध्यते। एव **शब्देन** नैयायिकोक्त साधुत्वमात्रादेर्व्यावृत्तिः। **आश्रयत्वमिति** लक्षणयोच्यते इति भावः। एवं च गगनेन स्थीयते इत्यत्रापि आश्रयत्वरुपा भावना बोध्यत इति तद्विशेष्यक एव बोध इति तात्पर्यम्, तत्र = गगनेन स्थीयते इत्यत्र। लक्षणायाम् = आश्रयत्वे। **प्रमाणाभाव इति** तृतीयान्तार्थस्य धात्वर्थे वृत्तिता संबन्धेनान्वयेगगन — वृत्तिः स्थितिरिति बोध संभवेनानुपपत्तेरभावत्कथं लक्षणेत्याशयः। समाधत्ते — **चैत्रो जानातीति** अत्र ज्ञा धात्वर्थस्याश्रयता संबन्धेन चैत्रेन्वयो नैव संभवति नामार्थ धात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात्, अतस्तदुपपत्तये आख्यातेनाश्रयत्वं लक्ष्यते, प्रकृतेपि धात्वर्थे नामार्थान्वया-संभवात्तत्र लक्षणाश्रयणमिति भावः, **विशेषणीभूतेति**,

**नचेति** सर्व वादि संमतस्य भावाख्यात निरर्थकत्वस्य त्यागेन भावनार्थकत्व कल्पनम् तदनुपपत्त्या लक्षणाश्रयणमिति स्वीकारापेक्षया धात्वर्थ मुख्य विशेष्यक शाब्दबोध स्वीकार एव युक्त इत्याशयः। तत्र =

भावाख्याते, समाधत्ते = **भावना प्रकारकेति** नैयायिकैः स्वीकृत एवार्थस्तान् प्रति दृष्टान्ततया तदर्थोपन्यास इति बोध्यम्। अन्यत्र = चैत्रः पचतीत्यादौ प्रथमान्तपद समभिव्याहृतस्थले। **समिधो यजतीति** समिच्छब्दो याग नामधेयम्, समिन्नामकेन यागेनेष्टं भावयेदिति तद्वाक्यार्थः। तदृष्टान्तेन स्वमतं साधयति **धात्वर्थ प्रकारकेति** अन्यत्र = चैत्रः तण्डुलं पचति चैत्रेण तण्डुलः पच्यते इत्यादौ। **लक्षणोपापत्तेरिति** अन्यथा भवन्मतेपि प्रथमान्ता समभिव्याहारे भावना प्रकारक बोधस्यानिर्वाहापत्तिरिति भावः। अयमर्थः – आख्यात,पदज्ञाने नियमेनाख्यातार्थ भावनाप्रकारक बोधोजायते। तत्र तज्ज्ञानस्य करणत्वात् प्रथमान्त पदाभावेपि निरुक्त कार्यकारण भावानुरोधेनःबोधविषयाख्यातार्थनिष्ट प्रकारताया स्तन्निरूपक विशेष्यताया आकाङ्क्षायां तन्निर्वाहाय तत्समर्पक प्रथमान्तपदमध्याह्रियते नैयायिकैः। तद्वदस्मन्मतेपि निरुक्तकार्य-कारण भावानानुरोधेन गगनेन स्थीयत इत्यत्रापि तन्निर्वाहाय बोधविषय धात्वर्थनिष्ट प्रकारता निरुपकतया आख्याते आश्रयत्व लक्षणाऽऽवश्यकी-ति।

**तत्रापि 'भावप्रधान' मिति स्मृत्या, प्रत्ययार्थप्राधान्यस्मृत्या च भावनाया एव प्राधान्यम्। अनुशासनबलाच्चा ख्यातेन कर्तृकर्मलक्षणावद् भावरूपधात्वर्थस्यापि गुणत्वेन लक्षणा। त थाच गगननिष्टं स्थितिमत् स्थित्याश्रयत्वमिति शाब्दबोधः। द्वितीयवारं स्थितिबोधस्त्वनुवादः साधुत्वार्थः**

**अतः स्थीयत इत्येकत्वमपि स्वाश्रयीभूतभावरूपधात्वर्थनिरूपितत्वसंबन्धेन आश्रयत्वा-दावेवान्वेति। 'भावप्रधान' मिति स्मृतिसंकोचेप्रमाणाभावात्**

ननु भावाख्याते धात्वर्थ मुख्यविशेष्यक एव बोधः स्यात्, धात्वर्थस्यापि भावत्वेन "भावप्रधानमाख्. त" मिति स्मृतेः प्रवृत्ते, रित्यत आह – **तत्रापीति** भावाख्यातेपीत्यर्थः। **भावनाया एव प्राधान्यमिति** प्रत्ययार्थ प्राधान्यस्मृत्या धात्वर्थापेक्षया आख्यातार्थस्य प्राधान्यं बोध्यते, "भावप्रधानमाख्यात" मिति स्मृत्या आख्यातबोध्येतरार्था पेक्षया भावनायाः प्राधान्यं बोध्यते, इति भावः। नन्वेतावतापि धात्वर्थविषयेपि भावप्रधानमाख्यातमिति स्मृतेः प्रवृत्तेर्दुवारतया न भवदभीष्ट सिद्धिः, प्रत्ययार्थ प्राधान्य स्मृतिः सुबर्थ विषयिका स्यादित्यत आह – **अनुशासनबलादिति** "लः कर्मणिच भावे चाकर्मकेभ्यः" 3-4-69 इति भावे लकार विधायकानु शासनबलादित्यर्थः। तत्सूत्रस्य लाक्षणिकानु शासनत्वादाह – **कर्तृ कर्म लक्षणावदिति** पचति पच्यते इत्यत्र लाघवात्कृतेर्वाच्यत्वेपि प्रकृतानुशासन बलात्कर्तरि कर्मणि च लक्षणा स्वीक्रियते तद्वदित्यर्थः। भावे लकार विधानादाह **भावरुप धात्वर्थस्यापीति** ननु पचति पच्यते इत्यत्र धात्वर्थात् पार्थक्येन भानात्कर्तृकर्मणोर्लक्षणा युज्यते, भावे लकारे सुप्यत इत्यादौ धात्वर्थात्पार्थक्ये-नार्थाभानात्कथं लक्षणेत्यत आह – **गुणत्वेनेति** स्थित्यादेर्धात्वर्थस्याप्राधान्य सिध्द्यर्थं तत्त्वेन लक्षणा स्वीक्रियते, तेन धात्वर्थापेक्षया प्रत्ययार्थस्य प्राधान्यं सेत्स्यतीति न कोपि दोषः। स्वमते बोधं दर्शयति **तथाचेति** धात्वर्थ विशिष्टे लक्षणाश्रयणे चेत्यर्थः। **स्थित्याश्रयत्वमिति** स्थिति र्धात्वर्थः, स गुणत्वेन प्रत्ययेन लक्ष्यते तद्वत् स्थित्याश्रयत्वं गगननिष्ठमित्याख्यातार्थभावना विशेष्यक एव शाब्दबोध इति भावः। ननु बोधेस्थिते र्धात्वर्थस्य द्विवारं भानं निरर्थक मत आह – **द्वितीय वारमिति साधुत्वार्थ इति** केवलस्य प्रत्ययस्य प्रयोगानर्हतय तत्साधुत्व संपत्यर्थं धातुः प्रयुज्यते। स्थित्याश्रयत्वं गगननिष्ट मित्येव पर्यवसितबोधस्व रुपमिति भावः।

भावे तिङोपि भावनार्थकतया भावनातिरिक्ताख्यातार्थंप्रति भावनायाः प्राधान्यमिति नियमस्य न व्यभिचार इत्याह – **अत इति** भावाख्यातस्यापि भावनार्थकत्वादित्यर्थः। एकत्वम् = भावप्रत्ययवाच्यमेकत्वम् **स्वाश्रयी भूतेति** स्वं = संख्या तदाश्रयी भूतो यः स्थित्यादिरुपो धात्वर्थः

तन्निरूपितत्वमाश्रयत्वादावित्यर्थः। **प्रमाणाभावादिति** सामान्य प्रवृत्तायास्तस्या भावाख्यातातिरिक्ततया संकोच न प्रमाणम्, अत्रापि संख्या एकत्वरूपं वाच्या स्थीयते = स्थितिः क्रियते शय्यते = शयनं क्रियते इति कृत्यर्थक करोतिना विवरणात्तस्यापि कृति वाचकत्वं संख्यापेक्षया च कृतेः प्राधान्यमिति सर्वं चतुरश्रम्। एवं च तत्र संख्या न भासते प्रत्ययोऽन्ततो निरर्थक एवेति दर्शनान्तरीयाणामुक्तिर्नादर्तव्येति भावः।

**नचैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः, प्रयोगाभावसहकृतानुशासनबलेन एकवचनान्तेनैव द्वित्वादिलक्षणात्। अत एव "उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते" इति महाभाष्यकारवचनाद्भावेपि बहुवचनं क्वाचित्कमेव। अत्र चो ष्ट्रासिका उष्ट्रासन-तुल्यानीति क्रिया विशेषणत्वात् 'सुखं सुप्यत' इतिवद्भावाख्यातेपि द्वितीया नानुपपन्ना।**

आख्यातार्थ संख्याया धात्वर्थ द्वारकान्वय स्वीकारे चैत्र मैत्राभ्यां स्थीयते इत्यादौ चैत्रमैत्ररूप धर्मिगत संख्याया धात्वर्थ स्थितावपि भानेन तादृश द्वित्वादिकमादाय चैत्र मैत्रौ गच्छत इत्यादाविव भावे लकारेपि द्विवचनाद्यापत्तिरित्याशयेन शङ्कते **नचेति** एवम् = संख्याया धात्वर्थद्वारा आश्रयत्वदावन्वये।धात्वर्थस्य = स्थित्यादेः। द्वित्वादि विवक्षायाम् = चैत्र मैत्राभ्यां स्थीयते इत्यादौ चैत्रादिगत संख्यया स्थितिरुप धात्वर्थेपि द्वित्वादि संख्याया भानादित्याशयः। **द्विवचनाद्यापत्तिरिति** न चेष्टापत्तिः भावे एकवचनमेवेति प्रामाणिक वचनविरोधात् तादृश प्रयोगाभा वाच्च। एवंच भाव धञन्त पाकादि शब्दानामिव (पाकः पाकौः पाकाः) भावाख्यातेपि द्विवचन बहुवचनयोरापत्तिरिति भावः समाधत्ते **प्रयोगाभावेति** पाकौ पाका इति प्रयोगाणां सत्त्वात्तत्र पाकाश्रय भेदेन धात्वर्थे भेदमारोप्य द्विवचनादिकं प्रवर्तते, आख्यातेतु प्रयोगाभावादाश्रयगत संख्याया धात्वर्थेऽनारोपान्नद्विवचनादि किंतु स्वगतमेकत्व मादायैकवचनमेव प्रवर्तत इति भावः। तर्हि चैत्रमैत्राभ्यां स्थीयत इत्यादावेकवचनेन द्वित्वावगतिः कथमत आह — **द्वित्वादि लक्षणादिति** शास्त्रत एक वचनमेव प्रवर्तते, द्वित्वादि भानं तु लक्षणयेति भावः। अत एव = शास्त्रेण वचन प्रवृत्तौ प्रयोग सहकारस्यापेक्षितत्वादेव। प्रयोग सत्वे भवत्येवेत्याशयः। **महाभाष्येति** तथाच "सार्वधातुकेयक्" 3-1-67 इति सूत्रे भाष्यम् " भावेपि बहुवचनं श्रूयते उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते" इति। आस धातोः शीङ्धातोश्च भावे लटि प्रथम पुरुष बहुवचने आस्यन्तेशय्यन्ते इति रूपे। उष्ट्रासिकाहतशायिका इत्यत्र धात्वर्थ निर्देशे ण्वुल्। आसनानि शयनानि इत्यर्थः उष्ट्राणां यादृशान्यासनानि तत्सादृशानि देवदत्त कर्तृकाणि आसनानि, हतानां यानि शयनानि तत्सदृशानिदेवदत्तकर्तृकाणि शयनानि इति तदर्थः। इवशब्दप्रयोगमन्तरेणापि तदर्थावगति र्भवति। अत्रभावे बहुवचनं भाष्यकार वचन प्रामाण्यादेवेति भावः। तदाह **अत्रेति** भाष्यप्रयोगे इत्यर्थः **द्वितीयेति,** क्रियाविशेषणानां फले क्रियाया वान्वयेपि सकर्मकाकर्मक धातुसाधारण्येन "ततोऽन्यत्रापि दृश्यते", इति वार्तिकेन द्वितीया भवति। इदञ्च द्वितीया प्रकरणे मूले स्पष्टं भविष्यति।

**एवं "कर्मवत्कर्मणा तुल्यक्रियः" 3-2-87 इति सूत्रात् 'पच्यते ओदनः स्वयमेवे' त्यादौ यत्र सकर्मकधातो र्यत्कर्मकारकं तद्वृत्त्यखण्डोपाधिरूपकर्मत्वाविवक्षया कर्तृत्वविवक्षा, तत्राख्यातेन तस्यैव गुणत्वेन लक्षणयोपादानादाख्यातेन विवरणानुसारेण शक्त्यैव कृते रुपादानात्तस्यामेव कर्तृत्वस्य स्वनिरूपकर्त्रविक्लित्तिरूपफलजनकपाकजनकत्व संबन्धेन, ओदनस्य च स्वनिष्ठ-कर्तृत्वनिरूपकफलप्रयोजकत्वसंबन्धेनान्वय इति व्यक्तं कौस्तुभे।**

कर्मकर्तृप्रयोगेपि भावनातिरिक्तार्थं प्रति भावनाया एव मुख्यविशेष्यत्वमिति निरूपयति **एवमिति**

कर्तृकर्म भावाख्यातेष्विवेत्यर्थः। **ओदनः पच्यते स्वयमेवेति** ओदनं पचति चैत्र इति कर्तरि शुद्धः प्रयोगः। तत्र क्रियागत सौकर्यद्योतनाय कर्तृव्यापाराविवक्षायां अन्यनिष्ठव्यापारस्य विवक्षया कर्मण ओदनादेरेव कर्तृत्वम्। तस्मिन् प्रयोगे पचिरकर्मकः ततः कर्तरि भावेच लकारा उत्पद्यन्ते – ओदनेन पच्यते इति। कर्तरि लकारे पच्यते तण्डुल इति। तत्र कर्त्रान्तर व्यावृत्तये स्वयमेवे-ति प्रयुज्यते। कर्तरि लकारे पचतीत्येवरूपं स्यात् तथापि "कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रेण कर्तुः कर्मवद्भावात्कर्मणीवया-गात्मनेपदादिकं प्रवर्तते, कर्मस्थया क्रियया तुल्य क्रियः कर्ताकर्मवदिति तत्सूत्रार्थः एवं च शुद्ध प्रयोगे कर्मणोऽर्थान्तरविवक्षायां कर्तृत्वे कर्मकर्तृत्व व्यापारः शाब्दिकानाम्। तदेतदुपपादयति **यत्रेति** ओदनं पचति चैत्र इत्यादावित्यर्थः। यत्कर्मकारकम् = ओदनादि। कर्मत्व मखण्डोपाधिरुपमिति वक्ष्यमाण स्वसिद्धान्तरीत्याह – **तद्वृत्त्य खण्डोपाधीति** तत्र = पच्यते ओदन इत्यत्र। तस्यैव = कर्तृत्वस्यैव। गुणत्वेन = अप्रधानतया। विवरणानुसारेण, पच्यते = पाकं करोतीति विवरणानुसारेण। कृतेः = भावनायाः, तस्यामेव = शक्त्योपस्थितायां भावनायामेव कर्तृत्वस्य = लक्षितस्य **स्व निरुपकेति** स्वम् = ओदन वृत्तिकर्तृत्वम्, तन्निरूपकं यत् विक्लित्ति रुपं फलं तज्जनको यो व्यापारः तज्जनकत्वं कृतावित्यर्थः। ओदनस्य = प्रथमान्तार्थस्य **स्वनिष्ठेति** – स्वं = ओदनः तन्निष्टं कर्मत्व निरुपकं यत्फलं तत्प्रयोजकत्वं = तज्जनक पाक जनकत्वं कृतावित्यर्थः। कौस्तुभे = द्वितीयाध्याय प्रथमपादे भावर्थाधिकरणे।

**तत्सिद्धं भावनातिरिक्ताख्यातार्थस्य सर्वस्य भावनायामेव प्रकारतेति तस्या मुख्य-विशेष्यत्वम्। धात्वर्थं प्रतितु तस्या विशेष्यत्वं 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत, स्तयोः प्रत्ययः प्राधान्येने" ति स्मृतिवशादेवाऽविवादम्। अत एव न तस्य प्रत्ययार्थान्तरं प्रति प्रकारता, विशेष्यगामित्वे संभवति प्रकारगामित्वस्या न्याय्यत्वात्।**

भावनाया एव मुख्य विशेष्यत्वमिति प्रक्रान्तार्थमुपसंहरति **तत्सिद्धमिति** भावनातिरिक्ताख्यातार्थस्य = कर्तृकर्म भाव संख्या कालोपग्रहात्मकस्य। प्रकारता = भाव प्राधानमाख्यात-मिति भावातिरिक्तार्थस्य भावनां प्रति प्रकारताया बोधनात्। "ननु धात्वर्थापेक्षया प्राधान्यं कथमत आह – **धात्वर्थमिति** अत एव = धात्वर्थापेक्षया भावनायाः प्राधान्यादेव। तस्य = धात्वर्थस्य प्रत्ययार्थान्तरं प्रति = भावनातिरिक्त कर्त्रादिप्रत्ययार्थं प्रति।

## (धात्वर्थनिरूपणम्)

### (मण्डन मिश्रमतःपन्यासः, तन्निरासश्च)

**अथ कोऽयं धात्वर्थो नाम? अत्र विवदन्ते बहवः। तत्र मण्डनमिश्रा स्तावत् – विक्लित्त्यादिरूपं फलमेव धात्वर्थः, तदनुकूलफूत्कारादिरूपो व्यापारसंघस्तु सर्वोपि व्यापारत्वेन प्रत्ययार्थः। फलस्यच तं प्रति प्रकारत्व-मित्याहुः।**

गते ग्रन्थे बहुत्र धात्वर्थस्य प्रस्तुतत्वात्तद्विषये वादि विप्रतिपत्तीनां सत्त्वात्तन्निर्णयायाऽवसरसंगत्या तदर्थनिरुपणायोपक्रमते **अथेति** पृच्छयत इति शेषः। **विवदन्ते इति** "विभाषा विप्रलापे" 1-3-50 इत्यात्मनेपदम्। बहवः = शाब्दिका नैयायिका मीमांसकाश्च तत्रापि प्राञ्चो नवीनाश्च। तत्र = विवदमानानां मध्ये। **मण्डनमिश्रा इति** यद्यपि प्रथमं प्राभाकराणां मतं निरसनीयम्-तेहि कार्याभिधायि लिङादीनामिव कार्यविशेषाणी भूतकृतिरुपा भावना वाच्या तदतिरिक्ताख्यातस्य न भावना वाच्या प्रकृत्यर्थ

फलेनाक्षेपात्संसर्गमर्यादया वा तत्प्रतीति संभवात्, फलमात्रं धात्वर्थः। आख्यातार्थस्तु कालः संख्याचे-ति प्रतिपन्नाः। उक्तं च प्रकरण पञ्चिकायां प्रभाकरशिष्येण शालिक नाथेन = येपि सर्वाख्यातानामेव भावनाभिधानमाहु "– स्तेषामपि मतमस्मभ्यं न रोच्यते। न हि कार्यानभिधायिष भावनाभिधाने प्रमाणमस्ति "यस्तु देवदत्त ओदनं पचतीत्यादौ वृद्धव्यवहार एव प्रकृत्यर्थातिरक्ते प्रयत्ने प्रयोगादाख्यातानां तदर्थकतामाह, स एवं शिक्षयितव्यः वत्स किं न वेत्सि अनन्य लभ्यः शब्दार्थः इति। प्रकृत्यर्थाक्षेपेणापि यत्नप्रतीत्युपपत्ते र्नशक्यते तद्वाचितामाश्रयितु-मिति। ननु प्राभाकरा अपि भावना वाचकतां कथमाख्यात प्रत्ययस्येच्छन्ति, उच्यते, न सर्वाख्यातानां भावना वाचकत्वमभ्युपेमः, किंतु कार्याभिधायिनो लिङादयः कार्यस्यान्यानभिधानात्कृत्यभिधायिन इष्यन्ते-इति। तथापि तन्मतस्य वाजपेयाधिकारणे पार्थसारथि सोमनाथ प्रभृतिभिर्दूषितत्त्वात्तत्र न प्रयति तव्य मित्याशयेनात्र तन्मतं नोपन्यस्तमिति बोध्यम्, विस्तरस्तु अस्मदीयमञ्जूषा-भूषणसारख्यानयो द्रष्टव्यः।

तावत् = प्रथमं। विक्लित्यादीत्यादिपदेन संयोगादेर्ग्रहणम्। फलमेवेत्ये वशब्देन व्यापार व्यावृत्तिः। प्राभाकर मत इवास्मन्मते व्यापारो न संसर्गलभ्यः किंतु प्रत्ययवाच्य इत्याह – **तदनुकूलेति व्यापार संघ इति** व्यापार समूह इत्यर्थः। "सङ्घः समूहः समुदाय इत्यनर्थान्तर" मिति "पङ्क्तिविंशती" 5-1-59 त्यादि सूत्रस्थभाष्यात्समूहमात्रपरं सङ्घपदमिति लाभेन प्रकृतेव्यापार समूहे सङ्घ प्रयोगोयुज्यत एवेति बोध्यम्। एतेन प्राणिनां समूहः सङ्घः इत्यभियुक्त वचनाद् व्यापार सङ्घ इत्ययुक्तमिति परास्तम्। "संख्यायाः संज्ञा सङ्घ सूत्राध्ययनेषु" 5-1-58 इति सूत्रे सूत्रपदं तु सङ्घपदस्य बहुसमुदाये शक्तेः पदद्वयात्मके "कोऽण इत्यादौ द्विकं सूत्रमिति प्रयोगस्य सिद्धये चरितार्थम्। सर्वोपि = शरीरनिष्ठः फूत्कारादिः आत्मगतो यत्नश्च। ननु व्यापारस्य धात्वर्थत्वमेवास्त्वत आह – **फलस्य चेति** प्रकारत्वम् = विशेषणत्वम्। एवं च व्यापारस्य प्राधान्य निर्वाहाय प्रत्ययार्थत्वमेव युक्तम्। अन्यथा "प्रत्ययार्थः प्रधान" मिति न्यायविरोधापत्तिरिति भावः। अयमर्थः फलव्यापारयोः शाब्दे भानमस्माकं शाब्दिकानां च संमतम्, व्यापारस्य विशेष्यत्वमप्युभयवादिसंमतम्। व्यापारस्य तत्त्वं प्रत्यय वाचत्व एव सिध्यति। नान्यथा। एवं च फलं धात्वर्थः व्यापारः प्रत्ययार्थ इत्येव युक्तम्। अत एव धातोर्नानार्थकता दोषोऽपि न। आख्यातार्थ व्यापाराश्रयत्वं च कर्तृत्वम् आख्यातार्थ व्यापार व्यधिकरण फल वाचित्वं च सकर्मकत्वम्। अतो न कोपि दोष-इति।

**तन्न, गमनजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेः, संयोगाख्यस्य फलस्य गमनरूपत्वेन तज्जन्यत्वा भावात्। गमनाश्रयो ग्राम इति प्रयोगापत्तेश्च। नच ल्युटा भावनावाचकेन व्यापाराभिधानाद् नैतादृशप्रयोगाद्यापत्तिः, गम्यर्थवान् ग्राम इति प्रयोगस्य एवमप्यापत्तेः, गम्यर्थजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेश्च। स्वत्वध्वंसाख्यस्य फलस्य यजिपदार्थत्वे तस्यैव फलभावनाकरणत्वेन स्वर्गसाधनतापत्तेः स्थायिन स्तस्मादेव स्वर्गोत्पत्त्युपपत्ता वपूर्व-कल्पनानापत्तेश्च।**

प्रयोगानापत्तिमुपपादयति **संयोगाख्यस्येति** गमन शब्दस्य भावल्युडन्ततया ल्युटश्च धात्वर्थानुवाद-मात्रफलकतया गमनशब्दः संयोगमात्र बोधकः। तथाच संयोग जन्य संयोगाश्रय इत्यर्थकः स प्रयोग इति पर्यवसानेन बाधित इति भावः। तदाह – **तज्जन्यत्वाभावादिति** व्यापारस्य धात्वर्थत्वे तु चलनरूप धात्वर्थ व्यापार जन्यत्वस्य संयोगेसत्वात्तत्प्रयोगोपपत्तिः स्पष्टैवेति भावः। **गमनाश्रयो ग्राम इतीति** गमनपदार्थस्य संयोगरूपतया संयोगाश्रयोग्राम इति वदबाधितार्थबोधकतया साधुत्वापत्तिरिति भावः। एवं फलानुकूल व्यापारारम्भेपि फलानुत्पत्तिदशायां पाको भवतीति प्रयोगानापत्तिः, व्यापारापगमेपि

...तादशायां पाको विद्यत्त इति प्रयोगापत्तिश्चेति बोध्यम्। व्यापारस्य फलधातुवाच्यत्वाङ्गीकारे तु नकोपि दोषः। **ल्युटेति** आख्यात प्रत्ययस्यैव व्यापारार्थकत्वमिति नब्रूमः किंतु धातूत्तर प्रत्ययस्य। तेन कृत्प्रत्ययस्य ल्युट्‌घञादेरपि व्यापारार्थकत्वमिति भावः। भाव वाचकेन = भावर्थकेन **गम्यर्थवानिति** गमनं पाक इत्यादौ कृत्प्रत्ययस्य भावे विधानात् व्यापारार्थकत्वं स्वीक्रियते गम्यर्थवानित्यत्र "इकश्तिपौ धातु निर्देशे" इत्यनेन "रोगाख्यायां ण्वुल् बहुल" 3-3-108 मिति सूत्रस्थं वार्तिकेन धातुस्वरुपनिर्देशे इक् प्रत्ययस्य विधानान्न व्यापारार्थकत्वं संभवति। तथाच गमेः = गमि धातो-रर्थः = संयोगः तद्वान् ग्रामइत्यबाधितार्थ बोधनात्तदापत्तिरिति भावः। एवमपि = एवं कल्पनायामपि। अनेन लुड् घञादेर्व्यापारार्थकत्वं नैव संभवति, तेषां भावप्रत्ययत्वेन धात्वर्थातिरिक्तार्थ वाचित्वायोगादिति सूचयति।

**आपत्तेरिति** ल्युड् घञन्त धातोः फलानुकूल व्यापारे शक्तिः, अन्यत्र फलमात्रे इति कल्पनायामप्येतद्दोषतादावस्थ्यामिति बोध्यम्। इष्टप्रयोगानापत्तिरपीत्याह – **गम्यर्थजन्येति** ननु "ईक्षतेर्नाशव्द" मित्यत्रेवार्थपरत्वेपि" "इक् श्ति पौधातु निर्देशे" इति वार्त्तिकप्रवृत्त्या इक् प्रत्ययस्य लक्षणया व्यापारार्थकतया गमि शव्दस्य संयोगानुकूल व्यापारार्थकत्वान्न दोष इत्यत आह **स्वत्वध्वंसाख्यस्येति** यज धातोस्त्यागोर्थः, सच स्वीयस्वत्व ध्वंसरुप इति भावः। तस्यैव = ध्वंसरुपयज्यर्थस्यैव, **फलभावनेति** "ज्योतिष्टोमेन स्वर्गकामोयजेते"त्यादौ स्वर्गादिफल भावनायां करणत्वेनेत्यर्थः। स्थायिन = स्थिरात् ध्वंसस्य नाशाभावेन तत्वमिति भावः। स्वर्गोत्पत्त्युपपत्तौ = कालान्तर भाविनः स्वर्गस्योत्पत्तेः संगतौ। **अपूर्वकल्पनानापत्तेरिति** कालान्तर भावि स्वर्गादि फलोत्पत्तिः क्षणिकाद्यागादेः कर्मणो व्यापारमन्तरेण न संभवतीति आत्मगतोऽपूर्वाख्यो व्यापारः कल्प्यते। तथाचा पूर्वद्वारेणैव यागादीनां फल.जनकत्वमित्यपूर्वाधिकरणे सिद्धान्तितम्, फलमात्रस्य धात्वर्थत्वनये निरुक्तरीत्या स्थिराद् ध्वंसादेव स्वर्गोत्पत्ति संभवात्तत्सिद्धान्तोभज्येतेति भावः

### (व्यापारमात्रं धात्वर्थ इति प्राचीनतार्किकमतम्, तन्निराकरणं च)

**अतो व्यापारमात्रं धात्वर्थः, फलञ्च द्वितीयार्थ, इत्यन्ये।**

**तदपि न, व्यापारत्वेन वाच्यत्वे सर्वधातूनां पर्यायतापत्तेः, क्रियात्वादिना विशेषरूपेण वाच्यत्वे त्यजिगम्योः पर्यायतापत्तेश्च। पूर्वदेशविभागानुकूलाक्रिया त्यजेरर्थः, उत्तरदेश-संयोगानुकूला सैव गमेः, तद्यदि क्रियामात्रं धात्वर्थः, फलसामान्यं च द्वितीयार्थ, स्तदा तयोः पर्यायतापत्तिः।**

**प्राचां नैयायिकानांमतमुपक्षिपति, अत इति** फलमात्रं धात्वर्थ इति पक्षे दोष सद्भावादित्यर्थः। **द्वितीयार्थ इति** कर्मप्रत्ययार्थ इत्यर्थः। कर्तरिलकारे द्वितीयायाः, कर्मणि लकारे आख्यातस्य, कर्मकृदादीनां च फलमर्थ इति भावः। अन्ये = प्राञ्चो नैयायिकाः। व्यापारस्य व्यापारत्वेन धातुवाच्यत्व = मुत क्रियात्वेन रुपेणेति विकल्प्याद्यं दूषयति **व्यापारत्वेनेति पर्यायतापत्तेरिति** तच्छक्यतावच्छेदकावच्छिन्न शक्तत्वं पर्यायत्वम्। अत्र पक्षे धातुमात्रस्य व्यापारत्वावच्छिन्नबोधकत्वा त्पर्यायत्वम् इति भावः। द्वितीयं दूषयति **क्रियात्वादिनेति** अत्र पक्षे ज्ञाकृञ्यतत्यादि धात्वर्थे क्रियात्वाभावात्तदन्तर्भाविण सर्वधातूनां पर्यायत्वं वार्यते, तथापि तदतिरिक्त सर्व धातूनां पर्यायतापत्तिर्दोषः। **त्यजिगम्योरिति** इदं च ज्ञाकृञ्यतत्यादि भिन्न सर्व धातूनामुपलक्षणम्। पर्यायतापत्ति मुपपादयति **पूर्वदेशेति** सैव = सा क्रियैव। एवं विक्लित्यादि फलानुकूल क्रियापचादेरर्थः। ननु = तस्मात्। किंचैतन्मते धात्वर्थान्वित प्रत्ययार्थफलाश्रयत्वं कर्मत्वम्, प्रत्ययार्थफल व्याधिकरण व्यापारवाचित्वं च सकर्मकत्वमिति वक्तव्यम्, तच्च भावयत्येधयतीत्यादिण्यन्त सकर्मकेषु तत्कर्मणि चाव्याप्तमिति बोध्यम्।

**(फलव्यापारौ धात्वर्थ इति वैयाकरणमतम्।)**

**अत उभयं – फलं व्यापारश्च धात्वर्थः। उभयत्र च प्रत्येकं शक्तिः, नात ओदनादिपदार्थस्यैक देशान्वयशङ्का। तयोश्च जन्यजनकभावः संसर्गः। व्यापारविशेष्यकश्च बोधः। तत्रैव कर्मकारकातिरिक्तसर्वकारकाणा मन्वयः, कर्म कारकस्य च फले।**

**व्यापारश्च शरीरनिष्ठः फूत्कारादिः आत्मनिष्ठः प्रयत्नादिश्च तत्त्वेन वाच्यः। अनुगतैकधर्मान्तरस्य निर्वक्तु मशक्तेः।**

**न चैवं सर्वकारकव्यापाराणां तत्त्वेन वाच्यत्वे नानार्थकत्वापत्तिः, इष्टापत्तौ वा सर्वकारकाणा प्रथमान्ततापत्तिः। नानार्थत्वेपि यत्कारकव्यापाराणां यदा विवक्षा, तदा तेषामेव बोध, स्तदादाविव बुद्धिस्थस्य, तत्कारकस्यैव च तदा प्रथमान्तत्वम्। अत एव 'स्थाली पचती' त्यादिप्रयोगोपि विवक्षायां संगच्छते। अतः सर्वोपि व्यापारो धात्वर्थः।**

**आख्यातार्थस्तु यगादिविकरणस्थले कर्म, शबादिविकरणस्थले कर्ता, अकर्मकधातूत्तर-यगादिविकरणस्थले च भावरूपो धात्वर्थ एव, "लःकर्मणी" त्याद्यनुशासनात्। सर्वेषां च धात्वर्थं प्रति योग्यसंबन्धेन गुणत्वम्। "भावप्रधानमाख्यात" मिति स्मृत्या भावपदवाच्य-धात्वर्थस्य आख्यातार्थं प्रति प्राधान्योक्तेः। प्रत्ययार्थप्राधान्यस्मृति स्तु सुबादिविषया – इति वैयाकरणाः।**

वैयाकरणानां मतमुपक्षिपति **अत इति** मण्डनमिश्र – प्राचीन नैयायिकमतयो र्दुष्टत्वादित्यर्थः। फलावच्छिन्न व्यापारे धातो रेकैव शक्तिरिति मतं दूषयति – **उभयत्र चेति** – फले व्यापारे चेत्यर्थः। प्रत्येक शक्तिः = पृथक् शक्तिः। तत्प्रयोजनमाह – **नेति** अतः = पृथक् शक्ति स्वीकारात्। एकदेशान्वयशङ्का = ओदनं पचतीत्यादावोदनादेः पदार्थैकदेशेविक्लित्त्यादावन्वय इति शङ्का। एकशक्तिवादिनां त्वयं दोष एवेति भावः। भट्टोजिदीक्षित कौण्डभट्टादयः खण्डशक्ति वादिनः। तन्मतेनेदम्। नागेशस्त्वेक शक्तिवादी। तयोः = फल व्यापारयोः। **संसर्ग लभ्य इति** अतस्तदंशे तिरिक्तशक्तिर्नकल्पनीयेति भावः। **व्यापारविशेष्यकश्च बोध इति** अयमत्र विवेकः – दीक्षितादिमते पक्वस्तण्डुल इत्यादौ कर्म कृत्समभिव्याहारे फल विशेष्यको बोधः चैत्र निष्ठ व्यापारजन्य विक्लित्या श्रयाभिन्नस्तण्डुल इति। तदतिरक्त स्थले सर्वत्रापि व्यापार विशेष्यक एव बोधः। एकाश्रयको विक्लित्यनुकूलो वर्तमानो व्यापार इति कर्तृ तिङन्ते बोधः। पच्यते इति कर्माख्याते च एकाश्रयिका या विक्लित्ति स्तदनुकूलो व्यापार इति बोधः।चैत्रः पाचक इत्यत्र च विक्लित्यनुकूलव्यापाराश्रयाभिन्नश्चैत्र इति बोधः। नागेशमतेतु कर्म तिङन्ते फल विशेष्यको बोध-इति। तत्रैव = धात्वर्थ व्यापार एव। कर्मकारकातिरिक्तेत्यस्य फलमाह **कर्मकारकस्य चेति** तस्यत्वित्यर्थः। फलानुकूल व्यापारो धात्वर्थः, तदनुकूल आत्मनिष्ठो यत्न आख्यातार्थ इति नैयायिकानां मीमांसकानां च मतमयुक्तमिति ध्वनयन्नाह – **व्यापारश्चेति आत्मनिष्ट इति** फूत्कारादि व्यापारानुकूल आत्मनिष्टः प्रयत्नादिश्चेत्यर्थः। तत्त्वेन = तत्तद्रूपेण। अत एव पचतीत्यतः फूत्कारत्वाधर सन्तापनत्व चुल्युपरि धारणत्व यत्नत्वादिभि र्बोधः सर्वानुभव सिद्धः संगच्छते। वाच्यः = विक्लित्तिरूपैक फलानुकूलत्वेन धातु वाच्य एव, द्वैराश्येन वाच्यत्वे मानाभावादिति भावः,

नन्वेव मननुगतत्वापर्त्तिरिति चेत्तत्रेष्टापत्तिरेवेत्याह – **अनुगतेति** सर्वानुगतैक धर्मस्ये यर्थः **नचेति** अस्य "**प्रथमान्तत्वापत्तिः**" इत्यनेन संबन्धः। नानार्थकतापत्तिः = हर्यादि पदेष्विव शक्य ावच्छेदका-नामपि नानात्वा त्तदापत्तिः। **प्रथमान्तत्वापत्तिरिति** सर्वकारक निष्ठव्यापाराणामपि ' ातूपात्ततया

तदुपात्त व्यापाराश्रयत्वरूप कर्तृत्वापत्तौ तेषां तिङभिधानादभिहिते ..थमायां तत्त्वापत्तिः। तथाच चैत्रः स्थाली तण्डुलः काष्टानि पचतीति प्रयोगापत्तिरिति भावः। नानार्थकतां धातोरभ्युपगम्य सर्वेषां प्रथमान्तत्वं वारयति **नानार्थत्वेपीति** व्यापाराणां व्यापारत्वेन सामान्यरूपेण वाच्यत्व स्वीकरेपि फलांशमादाय नानार्थत्वस्य दुष्परिहार्यतया तत्रेष्टापत्तिरेव शरणमिति तात्पर्यम्। **यत्कारकेति** यत्कारकनिष्ठ व्यापाराणामित्यर्थः। यदा = यत्र। बोधः = धातुतो बोधः। सर्ववादि संमतत्वादाह – **तदादाविव बुद्धिस्थस्येति** तथाच यदीयो व्यापारो धातुनाभिधीयते तदा स कर्ता, तद्दशायामन्यकारक व्यापाराणां धातुना नभिधानात्करणादिकारक प्रयुक्त कार्याणि प्रवर्तन्त इति भावः। तदाह – **तत्कारकस्यैव च तदा प्रथमान्तत्वमिति** अत एव = निरुक्त व्यवस्थायाः स्वीकारादेव। **स्थाली पचतीति** तण्डुल धारणरूपस्थालीव्यापारस्यैव धात्वर्थत्वेन विवक्षणात्तस्याः कर्तृत्वम्। तद्भिन्नकारकनिष्टव्यापारस्य धात्वर्थत्वे तस्य कर्तृत्वं, स्थाल्या अधिकरणत्वमेव, स्थाल्यां काष्टानि पचन्तीति। निगमयति, **अत इति** दोषाभावादित्यर्थः। सर्वोऽपि = शरीरनिष्ठः फूत्कारादि, रात्मनिष्ठः यत्नश्च। एवं च यत्न आख्यातार्थ इति नैयायिक मीमासकानां मतमयुक्तमिति भावः। नन्वेवं तिङोऽर्थाभावापत्तिरत आह **आख्यातार्थस्त्विति यगादीति** आदिना चिणो ग्रहणम् "सार्वधातुके यक्" 3-1-67 इति सूत्र विहितो यग् विकरणः "चिण् भावकर्मणोः" 3-1-66 इति सूत्र विहितः चिण् विकरणः। अनयोः समभिव्याहारे सकर्मक धातुप्रकृति काख्यातार्थः कर्म। तेन पच्यते तण्डुलः स्वयमेव, अपाचि तण्डुलः स्वयमेवेत्यादौ कर्मकर्तरि यक् चिणोः सत्वेपि आख्यातार्थो न कर्म, किंतु कर्तैवेति बोध्यम्। **शबादीति** आदिना श्यन् श्नमादीनां ग्रहणम्। भावलकारे आह – **अकर्मकेति** तेन सकर्मक धातूत्तरं पच्यते तण्डुलश्चैत्रेणेत्यादौ यगादि सत्वेपि भावस्य नाख्यातद्योत्यत्वम्। किंतु कर्मैव तदर्थ इति बोध्यम्। अत्रार्थे मानमाह – **लःकर्मणीति** फलाश्रयः कर्म, व्यापाराश्रयः कर्ता, तत्र फल व्यापारयो धातु लभ्यत्वेन आश्रयमात्रमाख्यातार्थः। आश्रयत्वं च शक्यतावच्छेदक मखण्डोपाधिरूपम्। एवमेकत्वादिका संख्या वर्तमानादिः कालश्च तिङर्थः। सर्वेषाम् = कर्तृकर्म संख्याकालानाम्। **योग्यसंबन्धेनेति** कर्तु र्व्यापारेऽन्वये आधेयता संबन्धः, कर्मणः फलेन्वये आधेयत्वम्, कालस्य व्यापारान्वये कालिक संबन्धावच्छिन्नाधेयत्वम्। एव माख्यातार्थ संख्यायास्तदर्थ कर्तृकर्मणोरन्वये आश्रयत्वं संबन्ध इति बोध्यम्। ननु धात्वर्थस्य प्रत्ययार्थे प्रकारत्व मेवास्तु अत आह **भावप्रधानमिति** आख्यायते सर्व प्रधानीभूतोर्थः अनेनेति व्युत्पत्त्या आख्यातपदं धातुपरम्। तेन आख्यातं = धातुः, भाव प्रधानम् = भावनापरनामक भावप्रधानकमिति तदर्थः। स्मृत्या = यास्कवचनेन। आख्यातार्थं प्रति = तिङर्थं प्रति। तिङि आख्यात पदप्रयोगो दर्शनान्तरीय वासनया। नन्वेवं "प्रत्ययार्थः प्रधानः" मिति वचनेन प्रत्ययार्थस्यप्राधान्यावगतेः कथं प्रकृत्यर्थ व्यापारस्य विशेष्यत्व-मित्यत आह **प्रत्ययार्थेति सुबादिविषयेति** भावप्रधानमिति विशेषस्मृत्यनुरोधेन "प्रत्ययार्थः प्रधान" मिति स्मृति स्तिङ् प्रत्ययातिरिक्त प्रत्यय विषयकतया संकोच्यते, अतो न तद्विरोधः, तया सुप् कृत्तद्धित विषये प्रत्ययार्थस्य प्राधान्यं प्रतिपाद्यते। वैयाकरणाः = दीक्षित कौण्डभट्टादयः।

## (वैयाकरणमतखण्डनम्।)

**तदपि न, फूत्कारत्वादेः पचतीत्यतोऽप्रतीतेः, अभासमानस्य शक्यतावच्छेदकत्वायोगात्। फूत्कारादिकं विनापि चैत्रनिष्ठक्रियान्तर मादाय स्वतस्सिद्धज्वालया वा जायमाने ओदने 'चैत्रः पचती' ति प्रयोगाच्च। तत्तद्व्यापारस्य तत्त्वेनाऽनुभवे याग इच्छा ज्ञानं वेति वदिविप्रतिपत्त्यनुपपत्ते श्च।**

वैयाकरणमतं दूषयति – **तदपि नेति अप्रतीतेरिति** पचतीत्यादिभ्यः पाकत्वेन बोध एवानुभूयते, न तु

फूत्कारत्वाधस्सन्तापनत्वादि विशेषधर्मपुरस्कारेण, अतस्तत्र फूत्कारत्वेन रूपेण शक्तिकल्पनाऽ-प्रामाणिकीति भावः। तदाह — **अभासमानस्येति** फूत्कारत्वादे र्धातुवाच्यप्रतीत्यप्रकारस्येत्यर्थः। **शक्यतावच्छेदकत्वायोगादिति** तल्लक्षणे वाच्योपस्थिति प्रकारत्वमिति दलस्य सत्वादिति भावः। अन्यथा घटादेरपि द्रव्यपदशक्यतावच्छेदकत्वापत्तिः, घटादौ द्रव्यपद वाच्यत्वस्य द्रव्यपदवाच्यकपालवृत्तित्वस्य च सत्वादिति बोध्यम्। ननु पचतीत्यादितः फूत्कारत्वादिविशेषधर्मपुरस्कारेण बोधोऽस्मदनुभव सिद्ध एव। न हि केवलं युष्मदनुभव बलादेव वस्तुनः सिध्द्यसिद्धी, अत आह — **फूत्कारादिकं विनापीति क्रियान्तरमिति** व्यजन संचलनादि क्रियान्तरमित्यर्थः। **स्वतः सिद्धेति** चैत्रीयफूत्काराभाव प्रदर्शनार्थमिदमुक्तम्। **प्रयोगाच्चेति** अन्वयव्यतिरेकाभ्यां हि शब्दादर्थावगतिः। प्रकृते फूत्कारासत्वेपि पचतीति प्रयोगात्पच धातोः फूत्कारत्वादि बोधकत्वाभावो निश्चीयत इति भावः। ननु फूत्कार एव गृहीत शक्तिकस्य पुंसो व्यजनेन वह्नि प्रज्वलन दशायां पचतीति प्रयोगो नेष्ट एव, फूत्कारातिरिक्ते विक्लित्यनुकूलत्वाग्रहे तवापि तस्या निष्टत्वादित्यत आह — **तत्तद्व्यापारस्येति** फूत्काराधस्सन्तापन चुल्यपरिधारणादे र्व्यापारस्येर्थः। तत्वेन = फूत्कारत्वेन अधस्सन्तापनत्वेन तत्तद्रूपेणेत्यर्थः। अनुभवे = धातुतोऽनुभवे। **वादिविप्रतिपत्तीति** यजधातोर्देवतोद्देशेन द्रव्यत्यागोर्थः, स च त्यागः स्वस्वत्व निवृत्ति विशिष्टपरस्वत्व प्रकारिका इच्छा इति केचित्, तादृशं ज्ञानमित्यन्ये। अनया रीत्या वादिनां विप्रति पत्तयोऽनुभूयन्ते। तत्तद्रूपेण वाच्यत्वाङ्गीकारे तासामपलापापत्तिः, संशयस्यैवाभावादिति भावः।

**अतोऽनु भूयमानं पाकत्वयागत्वादिकमेव तत्तत्फलोपधायकतावद्व्यापारवृत्ति अखण्डो-पाधिरूपं सामान्यं पच्यादिपदशक्यतावच्छेदकम्। तत्सत्त्वे पाकः पाक इत्यनुगत प्रतीतिः प्रमाणम्। फलोपधायकतावच्छेदकतया शक्यतावच्छेदकतयैव वा तत्सिद्धिः। फलोपधायक-व्यापारत्वादेः प्रमाणान्तरतो बोधः, नतु शाब्दबोधः। अत एव फलस्यापि न द्वितीयया बोधः, अखण्डोपाधिरूपकर्मत्वस्यैव तदर्थतायाः स्थापयिष्यमाणत्वात्। शक्ततावच्छेदकं च तत्त-द्धातुत्वम्।**

एवं मण्डनमिश्रमतं प्राचीननैयायिकमतं वैयाकरणमतं च संदूष्य स्व सिद्धान्तमाह — **अत इति** तत्तन्मतानां दुष्टत्वादित्यर्थः। अनुभूयमानं = सर्वैरप्यनुभूयमानम्। **तत्तत्फलोपधायकेति** स्वा व्यवहित पूर्ववृत्तित्व सम्बन्धेन तत्तत्फलविशिष्टास्तावन्तो ये व्यापारास्तद्वृत्तीत्यर्थः। यदुत्तर क्षणे फलोत्पत्ति, स्तद्वृत्तीत्याशयः। तेन धान्यक्रयणादेर्व्या वृत्तिः। सखण्डत्वे दोपतादवस्थादाह — **अखण्डोपधिरूपेति** पाकत्वादिकमेवेत्येव कारेण फूत्कारत्वादेर्व्यावृत्तिः। तत्सत्वे = तादृश पाकत्वादिसत्वे। **अनुगतप्रतीति-रिति**, सर्वेष्वपि विक्लित्यनुकूल व्यापारेषु पाकः पाक इत्येकाकार प्रतीतिरित्यर्थः, यथा गौर्गौरित्याद्येकार प्रतीत्यागोत्वादि सिद्धि स्तद्वदिति भावः। फलौपधायकतावच्छेदकतया = कारणतावच्छेदकतया। **शक्यतावच्छेदकतयेति** गुणपदशक्यतावच्छेदकतया गुणत्वजाति सिद्धवत् पच् पदशक्यतावच्छेदकतया तत्सिद्धिरिति भाव। ननु फलोपाधायक व्यापारत्वादेः शाब्दे भाने गौरवमत माह — **फलोपधायकेति,** प्रमाणान्तरतः = प्रत्यक्षादितः। **न तु शाब्दबोध इति** नातो गौरवमिति भावः। अत एव = तस्य प्रमाणान्तरतो लाभादेव। फलस्यापि = तन्निविष्ठ फलांशस्यापि। द्वितीयया = ओदनं पचतीत्यादौ द्वितीयया। अन्यथा फलाश्रयत्वस्य कर्मत्वात्तदर्थे विहित द्वितीयया फलांशस्यापि बोधापत्तिरिति भावः। तर्हि द्वितीयार्थः क इत्यत आह — **अखण्डोपाधिरूपेति** तदर्थतायाः = द्वितीयार्थतायाः। स्थापयिष्यमाणत्वात् = द्वितीयाप्रकरणे "भेदो न द्वितीयार्थः किं त्वाधेयत्वादिकमेवे" ति मत निराकरणावसरे। 'धातुत्वं शक्ततावच्छेदक' मिति भूवादि सूत्रस्य दीक्षितोक्तिं खण्डयति —

**शक्यतावच्छेदकं चेति** तत्तद्धातुत्वम् = पचित्व यजित्वादिकम् धातुत्वं तु न, अतिप्रसक्तत्वात् धातुत्वाद्यजानतोपि बोधाच्च।

**(पाकपदार्थनिर्वचनम्।)**

**पाकत्वादिकं च विक्लृत्तिजनकव्यापार वृत्त्येव, न तु तत्प्रयोजकयत्नादिवृत्त्यपि, पाकं करोतीत्यादिना यत्नादेः पाकात्पृथग् विव्रियमाणत्वात्।**

**न च घञादिसमभिव्याहृतधातोः फले एव शक्तिकल्पनात् पृथग्विवरणोपपत्तिः। अनेकशक्तिकल्पने व्यापारविषयकशक्तिप्रतिबन्धकल्पने वा गौरवात्। ग्रामो गमनवानिति प्रतीत्यापत्ति भयेन व्यापारप्रतीते रप्यावश्यकत्वाच्च।**

**अत एव विक्लृत्तिजनक व्यापारसमूह एव पाकपदार्थः, न तु तज्जनकयत्नादिरपि, तस्य पृथग्विव्रियमाणत्वेन पच्यर्थत्वाभावात्।**

फूत्कारादि व्यापाराणां फूत्कारत्वादि विशेष धर्मरूपेणपचादि धातुवाच्यत्वमिति शाब्दिकानां मतं दूषयित्वा 'यत्नोपि धातु वाच्य एवे' ति तन्मतं दूषयति **पाकत्वादिकं चेति** पच्यादि धात्वर्थतावच्छेदकं पाकत्वादिकं त्वित्यर्थः। **विक्लृत्ति जनकेति** विक्लृत्ति जनकाः फूत्कारादयो ये व्यापारा स्तद्वृत्त्येवेत्यर्थः। एवं च तादृश जात्याश्रयाः फूत्कारादय एव पच्यादि धातुवाच्या इति भावः। एव शब्द व्यावर्त्यं दर्शयति **नत्विति तत्प्रयोजकेति** विक्लृप्रयोजको यो यत्नादि स्तद्वृत्त्यपि नेत्यर्थः। प्रयोजकत्वं जनक जनक साधारणम्। विक्लृते र्जनकाः फूत्कारादयः, तज्जनको यत्नादिः, तद्वृत्त्यपि नेत्येर्थः। यत्नादिः पच्यादि धातुवाच्यो नैव भवतीत्याशयः, यथा गवादिपदं स्वशक्त्यतावच्छेदक गोत्वाश्रय गोव्यंक्तीनामेवोपस्थापकं तु तदनाश्रयघटादिव्यक्तीनामुपस्थापकम्, तद्वत् पच्यादि धातुरपि स्व शक्यतावच्छेदकाश्रय फूत्कारादीनामेवोपस्थापको, न तदनाश्रय यत्नादेरपि इति बोध्यम्। ननु फूत्कारादीनामिव विक्लृत्यनुकूलत्वाविशेषा द्यत्नादीनामपि पच्यादि धातुवाच्यत्व स्वीकारात्पाकत्वादीनां तद्वृत्तित्वमपि संभवत्येवेत्यत आह — **पाकं करोतीत्यादिनेति** आदि शब्देन पाके यतते, पाकं भावयतीत्यादेर्ग्रहणम्। पाकात् = पच धात्वर्थात्। पृथक् = पार्थक्येन। विव्रियमाणत्वात् = आख्यातस्य विव्रियमाणत्वात्। अयमर्थः — पचतीति तिङन्तं पाकं करोतीत्यनेन विव्रियत इति सर्ववादि संमतम्। विव्रियमाणे चांश द्वयं, पच इति प्रकृतिः, तिप्रत्ययश्च। तत्र प्रकृत्यर्थ विवरणं पाक-मिति प्रत्ययार्थ विवरणं करोतीत्यवश्य मभ्युपेयम् यत्नस्यापि पचादि धातु वाच्यत्वे पाकमित्यनेनैव यत्नस्यापि विवरण विषयत्वलाभात् पुनः करोतीति विवरणं व्यर्थस्यात् पुनरुक्तं च स्यात्। अतो धात्वर्थात्पार्थक्येन कृञा विवरणस्य सत्त्वान्नयत्नो धातुवाच्य इत्यकामेनाप्यभ्युपगन्तव्य-मिति। **न चेति** अस्य पृथग्विवरणोपपत्ति' रित्यत्रान्वयः। घञादीत्यादि पदेन ल्युडादेर्ग्रहणम्, फलं एवेत्येव शब्देन फूत्कारादीनां यत्नस्य च व्यावृत्तिः, **पृथग्विवरणोपपत्तिरिति** धात्वर्थात्पृथक् करोतिना विवरणस्योपपत्तिरित्यर्थः। पचादि धातुनाल्युड् घञादि समभिव्याहारे विक्लृत्यादि फलमात्राभिधानाद्विवरणे पाकमित्यनेन तावन्मात्रस्यैव बोधना त्तिङसमभिव्याहृत पच्यादि धातुवाच्यतयाभिमतस्य फूत्कार यत्नादे स्तेना बोधना तद्बोधनाय कृञा विवरण मावश्यकमेवेति भावः। तद् दूषयति — **अनेक शक्ति कल्पने इति** तिङ्समभिव्याहृत धातोः फले तदनुकूल व्यापारे यत्ने च शक्तिः। ल्युड् घञादि कृत्समभिव्याहारे फलमात्रे शक्तिरित्यस्य भवन्मते पर्यवसानाद्धातो भिन्न भिन्नशक्ति कल्पना प्रयुक्त गौरवापत्तिरिति भावः। किंच फलमात्रे शक्तिकल्पनाया विवरणोपपत्यतिरिक्तं न किञ्चित्फलमित्यपि बोध्यम्। ननु तिङ् साधारण्येनेकैव शक्ति धातोः स्वीक्रियतु, परंतु घञादे व्यापारविषयक शक्तिप्रति बन्धकत्वं कल्प्यते; अतो विवरणोपपत्ति, रत आह — **व्यापारविषयकेति**

व्यापारविषयिका या धातोः शक्तिः तत्प्रतिबन्धकत्वं घञादि समभिव्याहारस्येति स्वीकारे इत्यर्थः। **गौरवादिति** व्यापारबोधक धातुघटित सामग्रीतो व्यापार बोध प्रसक्तौ तद्बोधं प्रति घञादि समभिव्याहारस्य प्रतिबन्धकत्व कल्पने गौरवमित्यर्थः। किंच घञादि समभिव्याहृत धातुतो व्यापार बोधानु भवस्या पलापापत्तिश्चेत्यपि बोध्यम्। फलमात्रस्य धातुवाच्यत्वे मण्डन मतोक्त दोषापत्तिरित्याह – **ग्रामो गमनवानितीति** ग्रामः संयोगवानिति वदस्याप्यबाधितार्थावबोधकतापत्तौ निरुक्तार्थे स धुत्वापत्तिः। अतस्तद्वारणाय व्यापारस्यापि धातुवाच्यत्व मवश्यं स्वीकार्यमिति भावः, न चैतावता यत्नस्यापि धातु वाच्यत्वं सिद्धमिति भ्रमितव्यम्, ग्रामो गमन वानिति प्रतीति वारणान्यथानुपपत्त्या यत्नातिरिक्त व्यापारस्य धातुवाच्यत्वावश्यकत्वेपि यत्नस्यापि तदावश्यकत्वे मानाभावात्, धातोर्यत्न वाचित्वास्वीकारे कस्या अप्यनुपपत्ते रभावदिति तात्पर्यम्। तदाह – **अत एवेति** ग्रामो गमनवानिति प्रतीत्यापत्ति भयादेवेत्यर्थः। **विक्लित्तिजनकेति** विक्लिन्तिरूप फलजनको य श्शारीर व्यापारः फूत्कारादिः तत्समूह एवेत्यर्थः, एव शब्देन फूत्कारादि शारीर व्यापार जनकस्यात्मनिष्ठस्य यत्नस्य व्यावृत्तिः। तदाह – **नत्विति तज्जनकेति** फल जनक व्यापार जनको यत्नादि रपीत्यर्थः। तस्य धातुवाच्यत्वाभावेपि न कापि विप्रतिपत्तिरिति तात्पर्यम्। एव च यत्नस्य धात्ववाच्यत्वा त्तद्विवरणाय पार्थक्येन करोतीति प्रयुज्यत इति भावः। तदेत्सर्वमभिप्रेत्याह – **तस्येति** यत्नस्येत्यर्थः। पृथग्विक्रियमाणत्वेन = धात्वर्थात्पृथक् करोतिना विक्रियमाणत्वेन। अतो यत्नोपि धात्वर्थ एवेति शाब्दिकोक्त मयुक्तमेवेति प्रकृत प्रघट्टकार्थः।

**अत एव 'तेजस्संयोगमात्रं पच्यर्थः, नतु विक्लृत्त्यनुकूलव्यापारसामान्य' मित्यपि प्रत्युक्तम्। अग्निसंयोगानुकूलकृत्यभाववत्यपि भक्तविक्लृत्त्यनुकूलावस्रावणकर्तरि पचतीति प्रयोगात्।**

एतत्प्रसङ्गेन तेजस्संयोगमात्रं पच्यर्थ इति नैयायिकमतमपि दूषयति **अत एवेति** समनन्तर वक्ष्यमाण हेतोरित्यर्थः। मात्रशब्द व्यावर्त्यमाह – **न त्विति** व्यापार सामान्यमपि = फलानुकूल फूत्कारादिकमपि। अत एवेत्यस्यार्थ विशदयति **अग्नि संयोगेति** अग्निसंयोगानुकूला या कृतिः अग्निं काष्ठेन युनज्मि इत्याकारिका तदभाववति चैत्रादावपि। **भक्तेति** अन्न निर्वर्तनानुकूलं यत् स्रावणं = यवागूस्रावणं तत्कर्तर्यपि। **प्रयोगादिति** नैयायिकमतरीत्या स्रावणस्य पच्यर्थत्वाभावेन तद्व्यापारस्य वर्तमान तादशायां तदाश्रयत्वेन पचतीति प्रयोगस्येष्टस्यानापत्तिः, यत्नाश्रयत्वेन तु न सः यत्नस्य नष्टत्वादिति भावः।

**अत एव पाकात्पृथग्विक्रियमाणयत्नादे र्भासमानस्य भानकारणजिज्ञासायां पारिशेष्या दाख्यातवाच्यत्वमेव। तस्मिंश्च पाकादेः प्रकारत्वं, प्रकृत्यर्थत्वादेव। एवं च प्रत्ययार्थ प्राधान्यस्मृतिरपि न संकोचिता भवति।**

एवं मतान्तरं निरस्य यत्न आख्यातार्थ एवेति स्वमत मुपोद्बलयति – **अत एवेति** यत्नस्य धातुवाच्यत्वायोगादेवेत्यर्थः। **पाकात्पृथगिति** विक्लित्यनुकूल फूत्कारादि रूपात्पचिधात्वर्थात्पार्थक्येन करोतिना विक्रियमाणस्य यत्नादेरित्यर्थः। **भासमानस्येति** नचात्र मानाभावः, पचति = पाके यतते पाकं करोतीत्यादे र्विवरणस्यैव मानत्वात्। **भानकारणजिज्ञासायामिति** निरुक्त विवरणे यत्नस्य भासमानत्वाद्विक्रियमाणादपि तद्भानमावश्यकम्, अन्यथा विवरणाच्छक्ति प्रहानापत्तेः, विवरण विक्रियमाणयोः समानार्थकत्व नियमस्य भङ्गापत्तेश्च। तथाच विक्रियमाणे कोवा शब्द स्तद्भासक इति जिज्ञासायां धातोरन्यत्र व्यापृतत्वात्परिशेषादन्यस्य शब्दस्याभावात्प्रत्यय एव तत्र कारणमित्यकामेनापि ऊरी कर्तव्यतयाऽऽख्यात वाच्यत्वमेव यत्नस्य सिध्यतीति भावः, भाने कारणस्य जिज्ञासायामित्यर्थः। तस्मिंश्च = आख्यात वाच्ये यत्ने, पाकादेः = धात्वर्थस्य पाक गमनादेः। प्रकारत्वं = विशेषणत्वम्। ननु

वैपरीत्यमेव कुतो नेत्यत आह – **प्रकृत्यर्थत्वादेवेति** प्रकृत्यर्थस्य प्रत्ययार्थं प्रति प्रकारत्वमेवेति व्याप्तेरित्यर्थः। "प्रत्ययार्थः प्रधान" मिति स्मृतिराख्यातार्थातिरिक्ततया संकोचनीयेति वैयाकरण-मतयुक्तमेवेति निगमयति **एवं चेति** आख्यातार्थ यत्नस्य प्रत्ययार्थापेक्षया प्राधान्यसिद्धौ चेत्यर्थः। संकोचिता = आख्यातार्थातिरिक्ततया।

## (पार्थसारथिमतम्)

**अत्र च पाकाद्यनुकूलव्यापारसामान्यस्यैव प्रत्ययार्थत्वम्, 'पाकं भावयती' ति णिजन्तभूधातुना व्यापारसामान्यवाचकेन विवरणात्।**

**यद्यपि पाकं करोतीति विवरणं, तदपि करोतेर्व्यापारसामान्यवाचकत्वा दनुकूलमेव। न हि करोति र्यत्नार्थकः, तथात्वे करोते र्यततेरि वाकर्मकतापत्तेः। फलव्यधिकरणव्यापार वाचित्वं हि धातोः सकर्मकत्वम्। फलसमानाधिकरणव्यापार वाचित्वं चा कर्मकत्वम्। पचेः फलं विक्लृत्ति रोदनवृत्तिः, व्यापार श्चैत्रवृत्ति रिति व्यधिकरणत्वा त्सकर्मकः। स्वापस्य फलं सुखं, तच्चैत्र एवेति द्वयोः समानाधिकरणत्वमिति सोऽकर्मकः। तद्यदि करोतियतत्यो रेकार्थकत्वम्, तदा एकस्यैवार्थस्य फलव्यधिकरणत्वं फलसमानाधिकरणत्वं च विरुद्धम्। अतः करोतिरपि व्यापारसामान्यवाच्येव।**

**अत एव 'रथो गच्छती' त्यत्र रथो गमनं करोतीति विवरणमपि संगच्छते।**

**अतः करोतिभावयतिभ्यां विवरणा दाख्यातस्यापि फलोद्देश्यकं प्रकृत धात्वर्थातिरिक्तं व्यापारसामान्यं वाच्यम्। तच्च फलं क्वचिद्धात्वर्थः, क्वचित् स्वर्गादीत्यन्य देतत्। व्यापारसामान्यस्य च विशेषाकांक्षारूपेतिकर्तव्यताकाङ्क्षायां प्रयाजादि वाक्यै र्विशेषसमर्पण-मिति पार्थसारथिः।**

धात्वर्थनिरूपणावसरे "पाकात्पृथग्विव्रियमाणयत्नादे र्भासमानस्य भानकारण जिज्ञासायां पारिशेष्या दाख्यात वाच्यत्वमेवे" त्युपसंहृतम्। तत्र धात्वर्थव्यापारात्पार्थक्येनान्योर्थोभासते **स च यत्नरूपः**, किंतु धात्वर्थव्यापारानुकूल व्यापारसामान्यरूप एवेति विप्रतिपन्नानां पार्थसारथिमिश्राणा माशयं निराकर्तु-मनुवदति – **अत्रचेति** आख्यातार्थविषय इत्यर्थः। **पाकाद्यनुकूलेति** विक्लित्यनुकूलः फूत्कारादिर्व्यापारः पचेरर्थः तदनुकूलोव्यापारो व्यापारत्वेन रूपेण तिङर्थः, एवशब्देन यत्नत्वेनरूपेण यत्नस्य **व्यावृत्तिः, तत्र** हेतु माह **पाकं भावयतीति** पचतीति पदं पाकं भावयतीत्यनेन विव्रियते। **तत्र धात्वर्थविवरणं पाकमिति** आख्यातार्थविवरणं भावयतीति। **णिजन्तभूधातुनेति** भूधातो र्भवन मर्थः, भवन्तं प्रेरयतीत्यर्थे ततो णिच्। तद्राह **व्यापारसामान्येति विवरणादिति तथाच भवते र्व्यापार सामान्यार्थतया तेनविव्रियमाणस्यापि** तदर्थकत्वमेव, विवरणविव्रियमाणयोः समानार्थकत्वादिति भावः।

ननु पचतिः पाकं करोतीति यत्नार्थककरोतिना **विवरणाद्यत्न एवाख्यातार्थ इति वादिनां** मतं निराकर्तु माह। **यद्यपि पाकं करोतीति विवरणमिति** यत्नार्थ केन करोतिना विवरणमित्यर्थः। तदपि = करोतिना विवरणमपि।अस्य – 'अनुकूलमेवे' त्यत्रान्वयः। **व्यापारसामान्यवाचकत्वादिति** तथाच महाभाष्यकारः – कृभ्वस्तयः क्रियासामान्य वचनाः" इति। परेषां मतं दूषयति **नहि करोतिर्यत्नार्थक इति** व्यतिरेके दोषमाह **तथात्वे इति** तस्य यत्नार्थकत्वे इत्यर्थः। **अकर्मकतापत्तेरिति** यत्नार्थकतायामितिशेषः, अन्यत्रार्थे करोते रकर्मकत्वस्ये ष्टत्वात्। अत एव "अकर्मकाच्च" 1-3-35 इत्यनेन अकर्मकात्कृञोविपूर्वकात् छात्रा विकुर्वते इत्यादावात्मनेपद विधानं संगच्छते, अकर्मकतापत्ते रित्यस्य

फलव्यधिकरणव्यापारवाचित्वरूपसकर्मकत्वानापत्ते रित्यर्थः। अन्यथा यत्नमात्रार्थककरोतेः स्वार्थ-फलसमानाधिकरणव्यापारवाचित्वरूपाकर्मकत्वाप्रसक्त्या **यथाश्रुतेऽसंगतेः**। उदासीनफलमादाय दोष-वारणाय फले स्वार्थत्वस्यावश्यकत्वादिति बोध्यम्। **एतदाशयेनैव** सकर्मकलक्षणमाह **फलव्यधिकरणेति फलसमानाधिकरणेति** फलाधिकरणावृत्तीत्यर्थः। **तेन गच्छतौ** नातिव्याप्तिः। सकर्मकलक्षणं लक्ष्ये योजयति – **पचेरिति** पचधातो रित्यर्थः। व्यापारः = विक्लित्त्यनुकूलः फूत्कारादिः। स्वापस्य = तदर्थकस्य स्वपितेः तत् = फलम्। **चैत्र एवेति** तदनुकूलोऽवयवसंकोचादिव्यापारोऽपि चैत्र एवेति तस्याकर्मकत्वमिति भावः। एवं चानयारीत्या चैत्रो घटं करोतीत्यादौ सकर्मकलक्षणाक्रान्तत्वात्करोतेः सकर्मकत्वं चैत्रो यतत इत्यादा वकर्मकलक्षणाक्रान्तत्वाद् यतते रकर्मकत्वं चेष्टम्।करोतेरपि यत्नार्थकत्वे यतते रिव करोते रप्यकर्मकतापत्तिरिति भावः। तदेवोपपादयति – **तदिति** तस्मादित्यर्थः। एकार्थकत्वम् = यत्नार्थकत्वम्। **विरुद्धमिति** तथाच सकर्मकत्वाकर्मकत्वरूपधर्म भेदान्नकरोति यतत्योः पर्यायत्व,मपि तु भावयति पर्यायत्वमेवेति करोतिना विवरणमप्यनुकूलव्यापार वाचित्व एव तिङः साधकमिति भावः। निगमयति **अतः करोतिरपीति** अत एव = करोते र्व्यापारसामान्यार्थकत्वादेव। विवरणमपीत्यपिना 'बीजादिनाङ्कारः कृत' इत्यचेतने कृञ्घटितस्वतन्त्र प्रयोगस्य ग्रहणम्। **संगच्छत इति** अन्यथा रथादावचेतने यत्नस्य बाधात्तदसंगतिः स्पष्टैव। अस्मन्मते तु संयोगानुकूलस्य चलनस्य तत्र सत्त्वात्तत्सङ्गति रिति भावः। पार्थसारथिमतमुपसंहरति **अत इति** पूर्वोक्तकारणकलापादित्यर्थः। विक्लित्त्यादिफलं तदनुकूलः फूत्कारादिः शारिरो व्यापारः, तदनुकुलो यत्नादिरात्मनिष्ठव्यापारश्च सर्वोऽपि धातुवाच्य एव, 'फलानुकूलव्यापारत्वाविशेषा' दिति वैयाकरणमतं दूषयति। **प्रकृतधात्वर्थातिरिक्तमिति** प्रकृत धात्वर्थः विक्लित्त्यनुकूलफूत्कारादिशारीरव्यापारमात्रं, तदतिरिक्तमित्यर्थः। सर्वोऽपिव्यापारो धातुवाच्य एवेति वैयाकरणमतं सर्वेऽपि मीमांसका वयं द्विष्मः, धात्वर्थव्यतिरेकेण भावनाया आख्यातुवाच्यत्वेसिद्धे सा व्यापारसामान्यरूपाऽऽख्यातादवगम्यते? उत यत्नरूपेति तु **स्वकुटुम्बकलह** इति निगूढाशयः, सा भावना व्यापारसामान्यरूपैवेति पार्थसारथिमिश्रा आशेरते, यत्नरूपैवेति प्रकृत ग्रन्थकृतोऽभिप्रयन्तीति विवेकः। तत्र चा ख्यातस्य व्यापारसामान्यार्थक करोतिना भावयतिना च विव्रियमाणत्वा त्तस्यापितदर्थकत्वमेव। अत एव करोतेः सकर्मकत्वा त्क्रियते घट श्चैत्रेणेत्यादौ कर्मलकारः, क्रियते घटः स्वयमेवेत्यादौ कर्मकर्तरि कर्मवद्भावश्च सिद्ध इति पार्थसारथिमतानुयायिनो मन्यन्ते। तच्च फलम् = फलोद्देशेनेत्यत्र निविष्टे फलम्। क्वचित् = तण्डुलं पचतींत्यादौ विक्लित्ते र्धातुवाच्यत्वात्। क्वचित् = "यजेत स्वर्गकाम" इत्यादौ। **स्वर्गादीति** तत्र स्वर्गकामपदं लक्षणया स्वर्गपरम्। तंत्रत्या प्रथमा कर्मत्वार्थिका,धात्वर्थः परिशेषात्करणम्।तथाच स्वर्गं यागेन भावयेदिति तदर्थ इति भावः।

## (पार्थसारथिमतनिराकरणम्)

**वस्तुतस्तु तत्तत्फलभेदेन तत्तद्व्यापारभेदेन चा नुगतैकलघुभूतशक्यतावच्छेदका भावा-त्पचति पाके यतते पाकं करोतीत्यादिविवरणा च्चा ख्यातस्य यत्नत्वमेव शक्यतावच्छेदकम्।**

**न च करोति स्तदनुकूलव्यापारवाची, वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूलविजातीय-वायुसंयोगरूपव्यापार वत्यपि 'नाहं स्पन्दं करोमि' अपि तु वातरोगेण मच्छरीरं स्पन्दते, इति प्रतीत्या करोते र्यत्नार्थकत्वप्रतीतेः, यत्नत्वस्य शक्यतावच्छेदकत्वे लाघवाच्च।**

**एवंच रथो गमनं करोतीत्यादा वनुकूलव्यापारे कृञो लक्षणेति ध्येयम्।**

पार्थसारथिमिश्राणां मतं निराकरोति – **वस्तुतस्त्विति** तत्तत्फलभेदेन = तत्तद् विक्लित्त्यादिभेदेन,

तत्तद्व्यापारभेदेन = विक्लित्त्यादिफलजनकफूत्कारादिव्यापारभेदेन च **अनुगतेति** आख्यातार्थत्वेनाभिमतव्यापारत्वभेदेना नुगतैकशक्यतावच्छेदका भावादित्यर्थः। न च तत्तद्विशेषविषयकतत्तच्छक्तिकल्पनान्न दोष इति वाच्यम्, तत्तदितिकर्तव्यताविधीनां वैयर्थ्यापत्तेः। स्वमते लाघवं दर्शयति **पचति = पाके यतते इति** यततिना विवरणा दाख्यातस्य यत्नवाचित्वमेव युक्तम्। तथाच यत्नत्वं शक्यतावच्छेदकम्। तच्च जातिरूप मित्यस्मन्मते लाघवम्, पार्थसारथिमतेतु व्यापारत्वमुपाधिरूपं शक्यतावच्छेदकम्, न जातिरूप मितिगौरवम्, अन्यस्य तत्त्वकल्पनेपि गौरवमेव। मिश्रोक्तं दूषणमुद्धर्तुं शङ्कते – **न च करोतिरिति** तदनुकूलव्यापारवाची = धात्वर्थानुकूलव्यापारसामान्यवाची। **वातरोगादिनेति** कस्यचिन्मनुष्यस्य वातरोगोजातः तेन तस्य शरीरं पस्पन्दे। तदा समीपस्थः कश्चन तं रोगिणं पृच्छति-त्वं स्पन्दं करोषि इति रोगी प्रतिवक्ति – नाहं स्पन्दं करोमि, किंतु रोगवशेन मम शरीरं स्पन्दते-इति। कृञोव्यापारसामान्यार्थकत्वे स्पन्दानुकूलवायुसंयोगरूपव्यापारस्य सत्त्वात् 'न करोमी' ति निषेधोऽसंगतःस्यात्। यत्नार्थकत्वेतु स्पन्दानुकूलयत्नस्य रोगग्रस्तेऽभावा न्निषेधसंगतिः स्पष्टैव। नाहंस्पन्दं करोमि = नाहं स्पन्दानुकूल यत्नवानिति तदर्थात्। अतः करोते र्यत्नार्थकत्वमेव। उक्तंच कुसुमाञ्जलौ पञ्चमस्तबके उदयनाचार्यैः–

'कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना' इति।

"कृञश्च यत्नार्थकत्वम् व्यापारजन्यत्वप्रतिसन्धानाविशेषेपि घटाङ्कुरयोः कृताकृतव्यवहारा" दिति चाख्यातवादशिरोमणिरिति बोध्यम्। तदेतदाह – **करोते र्यत्नार्थकत्वेति** नन्वचेतने रथादौ यत्नस्य बाधाद् **रथोगमनं** करोतीति करोतेः प्रयोगानुपपत्ति रित्यत आह – **एवंचेति** करोते र्यत्नार्थकत्वसिद्धौ चेत्यर्थः। **रथोगमनं करोतीति** रथो गच्छतीत्यस्य विवरणमिदम्। स्वतन्त्रप्रयोगोवाऽयम्। नचविनिगमनाविरहः, अस्मन्मतेऽवच्छेदकलाघवस्यैव विनिगमकत्वात्। **अनुकूलव्यापारे लक्षणेति** अत्रत्यं तत्त्वं 'वस्तुतस्त्वि' त्यादि सकनन्तरकल्पव्याख्यावसरे व्यक्तीकरिष्याम।

**न च भवत्यर्थकर्तृकर्मकत्वाविशेषात् करोते र्भावयतिपर्यायत्वम्। पर्यायत्वा भावेपि भावयतिशक्यतावच्छेदकव्याप्ययत्नत्व शक्यतावच्छेदकत्वेनापि भवत्यर्थकर्तृकर्मकत्वोपपत्तेः।**

**नचेति** अयमर्थः – घटोभवतीत्यत्र घटस्य भवनकर्तृत्वं दृष्टम्।तस्यत मपरोभावयतीति भूधातोर्हेतुमण्णौ भावयतिकर्मत्वं दृष्टम्, एवमेव भवतिकर्तु र्घटस्य तमपरः करोतीत्यादौ करोतिकर्मत्वमपि दृश्यते, अतोभवतिकर्तु र्घटादेः कर्मत्वस्य भावयतिकरोत्यो रुभयत्राप्यविशिष्टत्वा त्करोतिर्भावयतिपर्याय एव,नतु यत्नार्थकः, अत एव रथोगमनं करोतीत्यत्राप्यचेतने करोतिना विवरण मविशिष्ट-मिति। तदाह **भवत्यर्थकर्तृकर्मकत्वाविशेषादिति** भवत्यर्थभवनकर्ता घटादिः कर्म यस्य भवत्यर्थकर्तृकर्मकः तद्वत्त्वस्याविशेषादित्यर्थः। भवनक्रियायां कर्तृ र्घटादे र्भावयतौ करो तौ च कर्मत्वस्य समानत्वादित्यर्थः। **पर्यायत्वमिति** तथाच करोते र्यत्नार्थकत्वासंभव इति भावः। समाधत्ते – **पर्यायत्वाभावेपीति भावयतिशक्यतावच्छेदकेति** तच्छक्यतावच्छेदकं व्यापारत्वं, तच्चचेतनाचेतन साधारणत्वाद्व्यापकम् तद्व्याप्यं यत्नत्वम्, तद्रूपशक्यतावच्छेदक कत्वं करोतेरपि।एतावता भावयतिकरोत्यो र्भवत्यर्थकर्तृकर्मकत्व मुपपद्यते, एवंच व्याप्यव्यापकभावापन्नशक्यतावच्छेदककत्वा त्तयो स्तत्त्वव्यवहारः नतु पर्यायत्वेनेत्यदोष इति भावः।

**न च करोते र्यत्नार्थकत्वे यतते रि वाकर्मकतापत्तिः, सत्यपि यत्नरूपैकार्थत्वे धात्वर्थतावच्छेदक फलभेदेन सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तेः। यतते र्हि चैत्रनिष्ठा क्रियैव**

**यत्नसमानाधिकरणं फलम्, करोते स्तु तद्व्यधिकरण मुत्पत्त्याख्यं धात्वर्थतावच्छेदकं फलम्।**

करोते र्यत्नार्थकत्वे पार्थसारथ्युक्तां तस्याकर्मकतापत्ति मुद्धर्तुं शङ्कते **नचेति** भवदुक्तसकर्मकत्वा-कर्मकत्वलक्षणानुसारेणापि यतते रकर्मकत्वं, करोतेः सकर्मकत्वं च सेत्स्यतीत्याह — **सत्यपीति** व्यवस्थोपपत्तेः = यतते रकर्मकत्वं, करोतेः सकर्मकत्व मितिव्यवस्थाया उपपत्तेः। तामेवोपपादयति **यतते र्हीति क्रियैवेति** एवशब्देन अवच्छेदकफलनिरासः। विद्यमानमपि न व्यापार व्यधिकरणमित्याह — **यत्नसमानाधिकरणमिति** अतश्च भवदुक्तरीत्याऽकर्मकत्वं यतते र्निराबाधमिति भावः। तद्व्यधिकरणं = यत्नव्यधिकरणम्। **उत्पत्त्याख्यमिति** घटं करोति चैत्र इत्यत्र यत्नश्चैत्रनिष्ठः, तद्व्यधिकरण मुत्पत्तिरूपं फलं घटनिष्ठमिति भावः। **फलमिति** अतश्च फलव्यधिकरणव्यापार वाचित्वं सकर्मकत्व मिति भवदुक्तलक्षणाक्रान्तत्वा द्यत्नार्थकत्वेपि करोतेः सकर्मकत्वं निष्प्रत्यूह मिति भावः।

**ततश्च यथैव त्यजतिगच्छत्यो र्व्यापाररूप क्रियैकत्वेपि फलभेदादेव व्यवस्था, एवमिहापि व्यापाररूप क्रियैकत्वेपि फलभेदादेव सकर्मकत्वाकर्मकत्वोपपत्तिः। तत्फलं पुन रुभयत्रापि प्रमाणान्तरावगतमेव धात्वर्थोपलक्षणम्, धातुवाच्यमेववेत्यन्यदेतत्।**

एनमेवार्थं दृष्टान्तेन समर्थयते **ततश्च यथैवेति क्रियैकत्वेपीति** एकस्या एवक्रियाया विभागसंयोग-जनकत्वा देकक्रियाकत्वंबोध्यम्। फलभेदादेव = विभागसंयोगरूपफल भेदादेव **व्यवस्थेति** पूर्वदेशविभागे त्यजते रेवप्रयोगः उत्तरदेशसंयोग एव गच्छतेः प्रयोग इतिव्यवस्था। अत एव न तत्र प्रयोगसाङ्कर्यम्। **व्यापाररूपेति** यत्नरूपव्यापारेत्यर्थः। फलभेदादेव = उत्पत्तिरूपफलवाचित्वावाचित्वरूपभेदादेव। तत्फलं = भेदक मुत्पत्ति विभागसंयोगरूपं फलम्। उभयत्रापि = दृष्टान्तदार्ष्टान्तिकयो रुभयत्रापि, प्राचीननैयायिकरीत्याह — **प्रमाणान्तरेति** प्रत्यक्षादिप्रमाणेन्तरेत्यर्थः। नव्यमतेनाह — **धातुवाच्यमेवेति अन्य देतदिति** नात्रतद्विचारः प्रस्तुतः, मतद्वयेपि तत्प्रयोगव्यवस्थोपपद्यत एवेति भावः।

**वस्तुतस्तु एतल्लक्षणस्य कौस्तुभोक्तरीत्या अव्याप्त्यादिदोषदुष्टत्वा दविविक्षाविरह विशिष्टकर्माकांक्षधातुत्व मेव सकर्मकत्वम्। तदभावश्चाकर्मकत्व मित्येवं कौस्तुभोक्तलक्षणं युक्तम्।**

**अत्रचा काङ्क्षा समभिव्याहारात्मिका शब्दधर्मः। तेन सत्यप्यर्थैकत्वे यथा-घटः कर्मत्वमित्यादावनाकांक्षत्वं घटमित्यादौ साकांक्षत्वं-तथैव यततेः कर्मानाकांक्षत्वं करोतेश्च कर्मसाकांक्षत्व मविरुद्धम्।**

**पच्यादेश्च स्वरूपेण कर्मसाकांक्षत्वे प्यविवक्षादशाया मकर्मकत्वा 'दविवक्षाविरहे' ति। अत एव 'ओदनस्य पच्यते' इति भावेऽपि प्रयोगः। आसादिधातूनां च स्वरूपेणाऽकर्मकाणामपि मासादिकालयोगे कर्मसाकांक्षत्वा त्सकर्मकत्वात् चैत्रेणाऽऽस्यते मास इति प्रयोगोपपत्तिः।**

**एव मेकस्यैव ग्रथधातो श्चैत्रनिष्ठव्यापार वाचित्वरूपधर्मपुरस्कारेण कर्मसाकांक्षत्वा त्सकर्मकत्वम्, पुष्पनिष्ठव्यापार वाचित्वेन कर्मानाकांक्षत्वादकर्मकत्वं च द्रष्टव्यम्।**

ननु फलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वमिति पार्थसारथ्युक्तलक्षणाश्रयणेपि त्वन्मते करोतेः सकर्मकत्वसिद्धे रेतल्लक्षणपरित्यागेन कौस्तुभे लक्षणान्तरप्रणयनं किमर्थ, मत आह **वस्तुतस्त्विति** एतल्लक्षणस्य = फलव्यधिकरणव्यापारवाचित्वरूपसकर्मत्वलक्षणस्य, कौस्तुभोक्तरीत्या = द्वितीयाध्याय-प्रथमपादे भावार्थाधिकरणेत्तरीत्या, **अव्याप्त्यादीति** आदिनाऽतिव्याप्तेर्ग्रहणम्। अयमर्थः — वस्तुतः

तत्तद्व्यापारभेदेन = विक्लित्त्यादिफलजनकफूत्कारादिव्यापारभेदेन च **अनुगतेति** आख्यातार्थत्वेनाभिमतव्यापारत्वभेदेना नुगतैकशक्यतावच्छेदका भावादित्यर्थः। न च तत्तद्विशेषविषयकतत्तच्छक्तिकल्पनान्न दोष इति वाच्यम्, तत्तदितिकर्तव्यताविधीनां वैयर्थ्यापत्तेः। स्वमते लाघवं दर्शयति **पचति = पाके यतते इति** यततिना विवरणा दाख्यातस्य यत्नवाचित्वमेव युक्तम्। तथाच यत्नत्वं शक्यतावच्छेदकम्। तच्च जातिरूप मित्यस्मन्मते लाघवम्, पार्थसारथिमतेतु व्यापारत्वमुपाधिरूपं शक्यतावच्छेदकम्, न जातिरूप मितिगौरवम्, अन्यस्य तत्त्वकल्पनेपि गौरवमेव। मिश्रोक्तं दूषणमुद्धर्तुं शङ्कते — **न च करोतिरिति** तदनुकूलव्यापारवाची = धात्वर्थानुकूलव्यापारसामान्यवाची। **वातरोगादिनेति** कस्यचिन्मनुष्यस्य वातरोगोजातः तेन तस्य शरीरं पस्पन्दे। तदा समीपस्थः कश्चन तं रोगिणं पृच्छति-त्वं स्पन्दं करोषि इति रोगी प्रतिवक्ति — नाहं स्पन्दं करोमि, किंतु रोगवशेन मम शरीरं स्पन्दते-इति। कृञोव्यापारसामान्यार्थकत्वे स्पन्दानुकूलवायुसंयोगरूपव्यापारस्य सत्त्वात् 'न करोमी' ति निषेधोऽसंगतःस्यात्। यत्नार्थकत्वेतु स्पन्दानुकूलयत्नस्य रोगग्रस्तेऽभावा न्निषेधसंगतिः स्पष्टैव। नाहंस्पन्दं करोमि = नाहं स्पन्दानुकूल यत्नवानिति तदर्थात्। अतः करोते र्यत्नार्थकत्वमेव। उक्तंच कुसुमाञ्जलौ पञ्चमस्तबके उदयनाचार्यैः—

'कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना' इति।

"कृञश्च यत्नार्थकत्वम् व्यापारजन्यत्वप्रतिसन्धानाविशेषेपि घटाङ्कुरयोः कृताकृतव्यवहारा" दिति चाख्यातवादशिरोमणिरिति बोध्यम्। तदेतदाह — **करोते र्यत्नार्थकत्वेति** नन्वचेतने रथादौ यत्नस्य बाधाद् **रथोगमनं** करोतीति करोतेः प्रयोगानुपपत्ति रित्यत आह — **एवंचेति** करोते र्यत्नार्थकत्वसिद्धौ चेत्यर्थः। **रथोगमनं करोतीति** रथो गच्छतीत्यस्य विवरणमिदम्। स्वतन्त्रप्रयोगोवाऽयम्। नचविनिगमनाविरहः, अस्मन्मतेऽवच्छेदकलाघवस्यैव विनिगमकत्वात्। **अनुकूलव्यापारे लक्षणेति** अत्रत्यं तत्त्वं 'वस्तुतस्त्वि' त्यादि सकनन्तरकल्पव्याख्यावसरे व्यक्तीकरिष्याम।

**न च भवत्यर्थकर्तृकर्मकत्वाविशेषात् करोते र्भावयतिपर्यायत्वम्। पर्यायत्वा भावेपि भावयतिशक्यतावच्छेदकव्याप्ययत्नत्व शक्यतावच्छेदकत्वेनापि भवत्यर्थकर्तृकर्मकत्वोपपत्तेः।**

**नचेति** अयमर्थः — घटोभवतीत्यत्र घटस्य भवनकर्तृत्वं दृष्टम्। तस्यत मपरोभावयतीति भूधातोर्हेतुमण्णौ भावयतिकर्मत्वं दृष्टम्, एवंमेव भवतिकर्तु र्घटस्य तमपरः करोतीत्यादौ करोतिकर्मत्वमपि दृश्यते, अतोभवतिकर्तु र्घटादेः कर्मत्वस्य भावयतिकरोत्यो रुभयत्राप्यविशिष्टत्वा त्करोतिर्भावयतिपर्याय एव,नतु यत्नार्थकः, अत एव रथोगमनं करोतीत्यत्राप्यचेतने करोतिना विवरण मविशिष्ट-मिति। तदाह **भवत्यर्थकर्तृकर्मकत्वाविशेषादिति** भवत्यर्थभवनकर्ता घटादिः कर्म यस्य भवत्यर्थकर्तृकर्मकः तद्भत्त्वस्याविशेषादित्यर्थः। भवनक्रियायां कर्तु र्घटादे र्भावयतौ करो तौ च कर्मत्वस्य समानत्वादित्यर्थः। **पर्यायत्वमिति** तथाच करोते र्यत्नार्थकत्वासंभव इति भावः। समाधत्ते — **पर्यायत्वाभावेपीति भावयतिशक्यतावच्छेदकेति** तच्छक्यतावच्छेदकं व्यापारत्वं, तच्चचेतनाचेतन साधारणत्वाद्व्यापकम् तद्व्याप्यं यत्नत्वम्, तद्रूपशक्यतावच्छेदक कत्वं करोतेरपि। एतावता भावयतिकरोत्यो र्भवत्यर्थकर्तृकर्मकत्व मुपपद्यते, एवंच व्याप्यव्यापकभावापन्नशक्यतावच्छेदककत्वा त्तयो स्तत्त्वव्यवहारः नतु पर्यायत्वेनेत्यदोष इति भावः।

**न च करोते र्यत्नार्थकत्वे यतते रि वाकर्मकतापत्तिः, सत्यपि यत्नरूपैकार्थत्वे धात्वर्थतावच्छेदक फलभेदेन सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तेः। यतते र्हि चैत्रनिष्ठा क्रियैव**

**यत्नसमानाधिकरणं फलम्, करोते स्तु तद्व्यधिकरण मुत्पत्त्याख्यं धात्वर्थतावच्छेदकं फलम्।**

करोते र्यत्नार्थकत्वे पार्थसारथ्युक्तां तस्याकर्मकतापत्ति मुद्धर्तुं शङ्कते **नचेति** भवदुक्तसकर्मकत्वा-कर्मकत्वलक्षणानुसारेणापि यतते रकर्मकत्वं, करोतेः सकर्मकत्वं च सेत्स्यतीत्याह – **सत्यपीति** व्यवस्थोपपपत्तेः = यतते रकर्मकत्वं, करोतेः सकर्मकत्व मितिव्यवस्थाया उपपत्तेः। तामेवोपपादयति **यतते हीति क्रियैवेति** एवशब्देन अवच्छेदकफलनिरासः। विद्यमानमपि न व्यापार व्यधिकरणमित्याह – **यत्नसमानाधिकरणमिति** अतश्च भवदुक्तरीत्याऽकर्मकत्वं यतते र्निराबाधमिति भावः। तद्व्यधिकरणं = यत्नव्यधिकरणम्। **उत्पत्त्याख्यमिति** घटं करोति चैत्र इत्यत्र यत्नश्चैत्रनिष्ठः, तद्व्यधिकरण मुत्पत्तिरूपं फलं घटनिष्ठमिति भावः। **फलमिति** अतश्च फलव्यधिकरणव्यापार वाचित्वं सकर्मकत्व मिति भवदुक्तलक्षणाक्रान्ततत्वा द्यत्नार्थकत्वेपि करोतेः सकर्मकत्वं निष्प्रत्यूह मिति भावः।

**ततश्च यथैव त्यजतिगच्छत्यो र्व्यापाररूप क्रियैकत्वेपि फलभेदादेव व्यवस्था, एवमिहापि व्यापाररूप क्रियैकत्वेपि फलभेदादेव सकर्मकत्वाकर्मकत्वोपपत्तिः। तत्फलं पुन रुभयत्रापि प्रमाणान्तरावगतमेव धात्वर्थोपलक्षणम्, धातुवाच्यमेववेत्यन्यदेतत्।**

एनमेवार्थं दृष्टान्तेन समर्थयते **ततश्च यथैवेति क्रियैकत्वेपीति** एकस्या एवक्रियाया विभागसंयोग-जनकत्वा देकक्रियाकत्वंबोध्यम्। फलभेदादेव = विभागसंयोगरूपफल भेदादेव **व्यवस्थेति** पूर्वदेशविभागे त्यजते रेवप्रयोगः उत्तरदेशसंयोग एव गच्छतेः प्रयोग इतिव्यवस्था।अत एव न तत्र प्रयोगसाङ्कर्यम्। **व्यापाररूपेति** यत्नरूपव्यापारेत्यर्थः। फलभेदादेव = उत्पत्तिरूपफलवाचित्वावाचित्वरूपभेदादेव। तत्फलं = भेदक मुत्पत्ति विभागसंयोगरूपं फलम्। उभयत्रापि = दृष्टान्तदार्ष्टान्तिकयो रुभयत्रापि, प्राचीननैयायिकरीत्याह – **प्रमाणान्तरेति** प्रत्यक्षादिप्रमाणेन्तरेत्यर्थः। नव्यमतेनाह – **धातुवाच्यमेवेति अन्य देतदिति** नात्रतद्विचारः प्रस्तुतः, मतद्वयेपि तत्प्रयोगव्यवस्थोपपद्यत एवेति भावः।

**वस्तुतस्तु एतल्लक्षणस्य कौस्तुभोक्तरीत्या अव्याप्त्यादिदोषदुष्टत्वा दविवक्षाविरह विशिष्टकर्माकांक्षधातुत्व मेव सकर्मकत्वम्। तदभावश्चाकर्मकत्व मित्येवं कौस्तुभोक्तलक्षणं युक्तम्।**

**अत्रचा काङ्क्षा समभिव्याहारात्मिका शब्दधर्मः। तेन सत्यप्यर्थैकत्वे यथा-घटः कर्मत्वमित्यादावनाकांक्षत्वं घटमित्यादौ साकांक्षत्वं-तथैव यततेः कर्मानाकांक्षत्वं करोतेश्च कर्मसाकांक्षत्व मविरुद्धम्।**

**पच्यादेश्च स्वरूपेण कर्मसाकांक्षत्वे प्यविवक्षादशाया मकर्मकत्वा 'दविवक्षाविरहे' ति। अत एव 'ओदनस्य पच्यते' इति भावेऽपि प्रयोगः। आसादिधातूनां च स्वरूपेणाऽकर्मकाणामपि मासादिकालयोगे कर्मसाकांक्षत्वा त्सकर्मकत्वात् चैत्रेणाऽऽस्यते मास इति प्रयोगोपपत्तिः।**

**एव मेकस्यैव ग्रथधातो श्चैत्रनिष्ठव्यापार वाचित्वरूपधर्मपुरस्कारेण कर्मसाकांक्षत्वा त्सकर्मकत्वम्, पुष्पनिष्ठव्यापार वाचित्वेन कर्मानाकांक्षत्वादकर्मकत्वं च द्रष्टव्यम्।**

ननु फलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वमिति पार्थसारथ्युक्तलक्षणाश्रयणेपि त्वन्मते करोतेः सकर्मकत्वसिद्धे रेतल्लक्षणपरित्यागेन कौस्तुभे लक्षणान्तरप्रणयनं किमर्थ, मत आह **वस्तुतस्त्विति** एतल्लक्षणस्य = फलव्यधिकरणव्यापारवाचित्वरूपसकर्मत्वलक्षणस्य, कौस्तुभोक्तरीत्या = द्वितीयाध्याय-प्रथमपादे भावार्थाधिकरणेक्तरीत्या, **अव्याप्त्यादीति** आदिनाऽतिव्याप्तेर्ग्रहणम्। अयमर्थः – वस्तुतः

फलव्यधिकरणो यो व्यापार स्तद्वाचित्वं सकर्मकत्व मित्यङ्गीकारे फलाविवक्षयाऽकर्मकत्वेना भिमतेषु पच्यादिष्वतिव्याप्तिः, फलव्यधिकरणत्वस्य वस्तुतोव्यापारे सत्त्वात्। **आस्ते इत्यादीना मकर्मकाणामपि** कालादिकर्मणा सकर्मकत्वस्य आस्यते **मासश्चैत्रेणे**त्याद्य**र्थमावश्यकतया तत्रा स्या व्याप्तिश्च,** फलवैयधिकरण्यस्य वस्तुतो व्यापारेऽसत्त्वात्। **अत एव फलव्यधिकरणत्वेन व्यापार वाचित्वं तत्त्व** मित्यर्थस्वीकारेप्य व्याप्तितादवस्थ्यमेव। किंच फलव्यधिकरणत्वस्य **वस्तुस्वभावबललभ्यत्वेन** वाच्यत्वाङ्गीकारे गौरवंचे-ति। अधिकं भावार्थाधिकरणकौस्तुभे **द्रष्टव्यम्। तर्हि निर्दुष्टं सकर्मकलक्षणं** कि-मित्यत आह **अविवक्षाविरहेति अविवक्षाविरहं यत्कर्म तदाकाङ्क्ष धातुत्वमित्यर्थः**, यद्धातूच्चारणे कर्माकाङ्क्षा नियता स सकर्मक **इति भावः। कौस्तुभोक्तलक्षणं = भावार्थाधिकरणे कौस्तुभोक्तं लक्षणम्।** युक्तम् = निर्दुष्टत्वात्। करोतेः **सकर्मकत्वं यतते रकर्मकत्वं च यथा सिध्यति तथोपपादयति — अथवेति** सकर्मकलक्षणे इत्यर्थः। **समभिव्याहारात्मिका = तत्पदोत्तरतत्पदवत्त्वरूपा।** शब्दधर्म **इति** तथाचैकार्थकत्वेपि एकस्य **कर्मसाकाङ्क्षत्व मन्यस्य तदभावश्च संगच्छते, शब्दसामर्थ्या दिति भावः।** समानार्थकत्वेपि **तत्त्वतदभावयो रुदाहरणं दर्शयति तत्पदवर्णकत्वे इति पटः कर्मत्वम् इति पदसमुदायस्य** घटमि मित्यस्य **च समानार्थकत्वे पीत्यर्थः। अनाकाङ्क्षत्वमिति तद्व्युत्पत्तानां आनयतिक्रियाकाङ्क्षा-** रहितत्व मित्यर्थः। **अविरुद्धमिति तथाच निरुक्तं सकर्मकत्वं करोतेः सिध्यति। करोति इति पदश्रवणे** किमिति कर्माकाङ्क्षायाः सत्त्वात्, यततौ **तदभावा दकर्मकत्व मिति मकोपि दोष इति भावः।** अविवक्षाविरहेतिविशेषणस्य प्रयोजन माह — **पच्यादेश्चेति** तत्प्रयोजनमाह। **अत एवेति निरुक्तरीत्या** तस्याकर्मकत्वादेवेत्यर्थः। **भावेपि प्रयोग इति अन्यथा "भावेचाकर्मकेभ्यः" इत्यनुशासना** त्सकर्मकत्वद्भावे लो न स्यादिति भावः, आसादिधातूना मपिकालादिकर्मयोगे सकर्मकत्वं च सिध्यतीत्याह — **आसादिधातूनामिति** एवं **वा स्मदुक्तलक्षणे**ऽतिव्याप्त्यादिदोषा न प्रसरन्तीति **एतदेव मुख्यं तल्लक्षण** मिति करोतियतत्यो स्तत्त्वतदभाव **सिद्धि** निष्प्रत्यूहेति **भावः।**

**एवमिति** एकार्थकत्वेपि भिन्नधात्वोरिवेत्यर्थः **ग्रन्थधातोरिति** ग्रन्थ बन्धने **इति चौरादिको**धातुः। **चैत्रनिष्ठेति** ग्रन्थयितृचैत्रादिनिष्ठेत्यर्थः। **पुष्पनिष्ठेति** ग्रथ्यमानपुष्पादिनिष्ठेत्यर्थः। **द्रष्टव्यमिति** एकस्यैवधातो स्तत्तदर्थवाचित्वरूप धर्मपुरस्कारेण सकर्मकत्वा कर्मकत्वयो र्दर्शना द्धातभेदेतयोः सत्वे न किञ्चिद् बाधकम्। आकाङ्क्षायाः शब्दविशेष धर्मत्वेन पर्यायत्वाबाधकत्वादिति भावः।

**अतो यत्नार्थकत्वेपि करोतेः सकर्मकत्वाश्रतेः तेन विक्रियमाणस्या ख्यातस्यापि यत्नार्थकत्वम्।**

**एवं च रथो गच्छति जानाति इच्छति प्रयतते इत्यादौ यत्र यत्नस्य बाध, स्तत्रा नुकूलव्यापारस्य आश्रयत्वस्य वा लक्षणेति द्रष्टव्यम्। नश्यतीत्यादौ प्रतियोगित्वे लक्षणा।**

**तत्सिद्धं भाक्तमुख्यसाधारण्येन सर्वत्र धात्वर्थातिरिक्ता भावनाऽऽख्यातार्थ-इति।**

पार्थसारथिमतखण्डनं निगमयन् स्वमतं प्रतिष्ठापयति **अत इति** उक्तदोषाणां निराकृतत्वादित्यर्थः। तेन = यत्नार्थककरोतिना। एवं च = यत्नार्थककरोतिना विक्रियमाण स्याख्यातस्य यत्नार्थकत्व ध्रौव्येच **रथोगच्छतीति** अचेतने रथादौ यत्नस्य बाधात्तत्राख्यात स्यानुकूल व्यापारे लक्षणेति भावः। इदं च व्यापारे लक्षणाश्रयणं प्राचीन नैयायिकरीत्या। वस्तुतस्तु व्यापारे लक्षणाश्रयणं न युक्तम् — यदा चैत्रोरथं नोदयति, तेन च रथे गमनं जातं, तदा रथनिष्ठगमनानुकूलनोदन रूपव्यापारवति निश्चलेपि चैत्रादौ गच्छतीति प्रयोगापत्तेः, अत आश्रयत्वे लक्षणाऽऽश्रयणीया। निश्चलेगमनाश्रयत्वा भावा न्न 'गच्छती' ति प्रयोग इत्याख्यातवाद शिरोमणौ दीधितिकृतः। ननु व्यापारस्य गमनविशिष्टव्यापारनिरूपिताश्रयत्व संबन्धेना न्वयस्वीकारा न्निश्चले निरुक्तसंबन्धेन व्यापारस्या भावा त्तादृशप्रयोगाप्रसक्ते र्व्यापारे लक्षणाश्रयणं

प्राचीनानां युक्तमेवेत्याशङ्कायां प्राचीनमते दोषान्तरं सूचयन्नाह **जानातीति** चैत्रो जानातीत्यादौ चेतनेऽपि चैत्रादौ ज्ञानानुकूलव्यापाराप्रतीत्या व्यापारे लक्षणाश्रयणा योगा दाश्रयत्व एव लक्षणाया अवश्याश्रयणीयतया तेनैव सर्वत्रापि निर्वाहाद्व्यापारे लक्षणाश्रयणं न युक्तमिति भावः। ज्ञानाश्रयत्ववां श्चैत्र इति नैयायिकमते बोधः, ग्रन्थकर्तृमतेतु ज्ञानाश्रयत्वं चैत्रीयमिति बोधः। ननु चक्षुर्जानातीत्यादौ ज्ञानानुकूलव्यापारः प्रतीयत एव। अन्यथा चक्षुषः करणत्व मेव न स्यात् व्यापारनियतत्वा त्करणत्वस्येत्यत आह **इच्छतीति इत्यादाविति** आदिपदेन विद्यत इत्यस्य ग्रहणम्। घटत्वं विद्यत इत्यादौ कालसंबन्धित्वं विदेरर्थः। तस्य चानुकूलव्यापारो न कश्चित् घटत्वादौ संभवतीत्याश्रयत्व एव लक्षणा स्वीकार्येति भावः। प्राचीननैयायिकमतेनाह **अनुकूलव्यापारस्येति** दीधितिकृन्मतेनाह **आश्रयत्वस्यवेति प्रतियोगित्वे इति** यद्यपि प्रतियोगिता संबन्धेनाश्रयत्वमेवार्थ स्तत्रापि संभवति, तथापि प्रतियोगितात्वप्रकारेणैव बोधस्य सर्वान् भवसिद्धतयाऽऽश्रयत्वपरित्यागः। जानातीत्यत्राश्रयत्वं समवायेना वच्छेदकतया च बोध्यम्। तेनात्मनि चैत्रादिशरीरे च जानातीतिप्रयोगो, घटादौ जानातीति प्रयोगा भावश्च सिद्धः। गत्यादे राश्रयत्वं च समवायेनैव ग्राह्यम्। तेन येन केनचित्संबन्धेनाश्रयत्वमादाय नातिप्रसङ्गः। विस्तरस्तु आख्यातवादशिरोमणौ तद्व्याख्याने मथुरानाथरहस्ये च द्रष्टव्यः। प्रकरणार्थमुपसंहरति **अतः सिद्धमिति भाक्तमुख्येति** जानातीत्यादौ भाक्त माश्रयत्वम् पचतिचैत्र इत्यादौ मुख्यो यत्नः एतदुभयसाधारण्येनेत्यर्थः। वैयाकरणमतं निराकरोति **धात्वर्थातिरिक्तेति**।

**तस्याश्च शक्ततावच्छेदकं करोतिविक्रियमाण माख्यातत्वम्। अतश्च भवतीत्यादौ करोतिना विवरणाभावेन भावनाऽभावाद् धात्वर्थ एव कारकान्वयः, परम्परासं बन्धेनै कत्वान्वयश्चेति प्राञ्चः।**

शक्ततावच्छेदकं प्रदर्शयन् "वक्ष्यमाणरीत्या तत्तदादेशविशेषत्वं बोध्य" मिति पूर्वोक्तं सिद्धान्तं प्रतिपादयितु माह **तस्याश्चेति** भावनाया इत्यर्थः। **करोतिविक्रियमाणमिति** कृधातुना विक्रियमाण मित्यर्थः। पचति = पाकं करोति गच्छति = गमनं करोतीत्यादिरीत्या विक्रियमाणमिति भावः करोतिविक्रियमाणमिति विशेषणस्य फलमाह **भवतीत्यादाविति** आदिना अस्ति विद्यते इत्यनयो र्ग्रहणम्। एष्वाख्याताद् भावना नबोध्यत इति मतेनेदम्। तदेव स्पष्टयति **भावनाऽभावादिति** ननुकथं तत्राख्यानप्रयोग इति चेत् संख्यादिभानार्थमेव तत्प्रयोग इति बोध्यम्। भावनाया अभावादाह **धात्वर्थ एवेति** परम्परासंबन्धेन = स्वाश्रयसमवेतत्व संबन्धेन

**वस्तुतस्तु लाघवा दाख्यातत्वमेव शक्ततावच्छेदकम्। भवतीत्यादा वाश्रयत्वे लक्षणा। एवंच कारकाद्यन्वये न व्युत्पत्त्यन्तरकल्पनापि।**

**शक्ततावच्छेदकं च न लत्वम्, यथाकथञ्चिदुपस्थितलकारादपि भावनोपस्थित्यापत्तेः। नाप्यादेशोपस्थापितलत्वम्, शानजाद्यादेशोपस्थापितलकारादपि शक्त्या भावनाबोधापत्तेः। नापि ति बाद्यादेशोपस्थापितलत्वम्, तथात्वे ति बादीना मनेकेषां प्रवेशात् शक्ततावच्छेदकाना मननुगमेन शक्त्यनेकत्वापत्तेः।**

**तद्वरं तित्वादिनैव प्रत्येकं शक्तिः। अत एव तित्वादिना लकारानुपस्थितावपि शाब्दबोधः। अन्यथाऽनेकेषु तिबादिषु तावतां शक्तिभ्रमाणां कारणत्वकल्पने गौरवात्।**

**एतेन — आख्यातत्वमेवैकं शक्ततावच्छेदकम्। तच्च शक्यत्वसं बन्धेनाऽऽख्यातपद-वत्त्वम्। तद्वत्त्वं च तिबादिष्विति ते शक्ताः — इत्यपास्तम्। तिबादिषु आख्यातपदवाच्यत्वा-**

**ज्ञानेपि तित्वेन पचतीत्यादौ ज्ञानेपि भावना बोधात्। अतः सिद्ध माख्यातार्थो भावनेति।**

ननु भवति अस्ति विद्यते इत्यत्रापि भावना प्रतीयत एव। यदाहु वैयाकरणा मीमांसावार्तिककाराश्च –

"अस्त्यादावपि धर्म्यंशे (कर्त्रंशे) भाव्येस्त्येव हि भावना।
अन्यत्राशेषभावात्तु सा तथा न प्रकाशते" इति

इत्यत आह **वस्तुतस्त्विति** भावनासद्भाव मेव दर्शयति **भवतीत्यादाविति आश्रयत्वे इति** इदमेवात्र भावनारूपम्। लाघवमेव दर्शयति **एवंचेति** प्राचीनमतेतु चैत्रो भवतीत्यत्र संख्याकारकयो र्धात्वर्थान्वया, त्पचतीत्यादौ तयो राख्यातार्थभावनाया मन्वयाद्भिन्न भिन्न कार्यकारणभावकल्पनाया आवश्यकत्वाद् गौरवम्, अस्मन्मतेतु एककार्यकारण भावकल्पना ल्लाघवमिति भावः। भाट्टालंकारकृतां मतं निराकरोति – **शक्ततावच्छेदकं च न लत्वमिति यथाकथञ्चिदपेति** ललना, प्लवनम्, इत्यादिस्थलकारादपि भावनाप्रतीत्यापत्तिरिति भाव। **नाप्यादेशेति** पाणिनिना "लस्य" 3-4-77 इत्यधिकारे धातोर्विहितस्य-लस्य स्थाने तिबादीनां विधाना त्प्रयोगे श्रूयमाणैस्तिबादिभि रुपस्थापितलत्वस्यैव तत्त्वकल्पना न्न दोष इति भावः। **शानजाद्यादेशेति** आदिना शतृ कानच् क्वसु एषां **ग्रहणम्**। पचमानः पचन् चिक्यानः सेदिवान्। एतेपि शानजादयो लस्य स्थाने विहिताः, तदुपस्थापितल**कारादपि भावनायाः** प्रतीत्यापत्तिरिति भावः। ननु तत्प्रतीतिरिष्टैवेत्यत आह **शक्त्येति** "सत्त्वप्रधानानि **नामानि" इति** स्मृत्या सत्त्वभूतस्य कर्त्रादेः प्राधान्या त्कृदन्ते धर्मिणोवाच्यत्वम्। तदपेक्षित भावनाया स्तुतल्लक्ष्यत्वमिति भाट्टसिद्धान्तः, अत्र शक्त्यैवतद्भाने स सिद्धान्तो भज्येतेति भावः, एतद्दोषवारणोपायं खण्डयति **नापि तिबाद्यादेशेति** तिबादीत्युक्तया शानजादे र्व्यावृत्त्यान दोष इति भावः। प्रवेशात् = लकारोपस्थापकतया **प्रवेशात्। शक्त्यनेकत्वापत्तेरिति** किंच लकारस्य साधुशब्द बोधनार्थं कल्पितत्वेन स्वतोऽविद्यमानत्वाद् व्याकरण भेदेन कल्पितस्य स्थानिनो भिन्नभिन्नतयाऽननुगतत्वाच्च न तस्यावच्छेदकत्वमित्यपि बोध्यम्। तित्वादिनैव = तित्व-तस्त्वादिनैव। अत एव = तित्वादिनैव तत्स्वीकारादेव, नचानन्तशक्ततावच्छेदकस्वीकारे गौरवमिति वाच्यम्। प्रतीयमानार्थानुरोधेन गौरवस्यापि प्रामाणिकत्वात्, अन्यथा घटपटादिगत द्रव्यत्वस्यैव घटपटादिरूपार्थ-शक्यतावच्छेदकत्वापत्तेः, स्पष्टमधिक मर्थवादाधिकरणे प्रभावल्याम्। ननु तिङ्क्षु शक्तिभ्रमाद् बोधः स्यादित्यत आह **अन्यथेति** लत्वस्यैव शक्ततावच्छेदकत्वे इत्यर्थः। **गौरवादिति** तिबाद्यादेशाना मादे शिलकारोपस्थितिं प्रति कारणत्वकल्पनाया भावनोपस्थितिं प्रति च तिबाद्यादेशगतानन्तशक्ति भ्रमाणां कारणत्वकल्पनायाश्च गौरवग्रस्तत्वेन तदपेक्षया भावनाद्युपस्थितिं प्रत्येव तिबादीनां कारणत्वकल्पने लाघवमिति भावः।

एतेन = उक्तदूषणेन **भावना बोधादिति** अतो न लत्वं शक्ततावच्छेदक मपितु तत्तदादेशत्वमेव तिप्रभृतिभिरादेशैरेव पचति-पाकं करोतीति विवरणे' धात्वर्थव्यतिरिक्तत्वेन प्रतीयमानाया भावनायाः प्रतीतेरिति बोध्यम्।

**तस्यां च धात्वर्थस्य प्रकारत्वेना न्वयः, प्रत्ययार्थप्राधान्यस्मृतेः संकोचे प्रमाणाभावात्। "भावप्रधान माख्यात" मितिस्मृते राख्यातार्थेष्वनेकेषु कस्य प्राधान्यमित्यपेक्षितार्थविधाय-कत्वोपपत्तौ प्रत्ययार्थप्राधान्यस्मृतिसंकोचकत्वानुपपत्तेः। अतो निरुक्तस्मृतौ भावपदेन वैयाकरणपरिभाषितधात्वर्थस्य न ग्रहण मित्युक्तमेव।**

भावनाप्राधान्य मपसंहरति **तस्यांचेति** प्रत्ययार्थप्राधान्य स्मृति मवलम्ब्याह – **धात्वर्थस्य प्रकारत्वेनान्वय इति** ननु "भावप्रधान माख्यात" मिति विशेषस्मृत्या प्रत्ययार्थ प्राधान्यबोधिकायाः

सामान्यस्मृत्या आख्यातार्थातिरिक्तपरतया संकोचकरणा द्धात्वर्थस्यैव प्राधान्यं सिध्यति भावप्रधान मित्यत्र भावशब्दस्य धात्वर्थपरत्वा, दित्यत आह — **भावप्रधानमित्यस्येति** अस्य 'संकोचकत्वानुपपत्ते' रित्यत्रान्वयः। पूर्वोक्तमेवार्थ स्मारयति — **आख्यातार्थेष्विति** तिङर्थेष्वित्यर्थः। अनेकेषु = कर्तृसंख्याकालोपग्रहभावनारूपेष्वनेकेषु सत्सु कस्य प्राधान्यम् = तेषां मध्ये कस्यार्थस्य प्राधान्यम्। **संकोचकत्वानुपपत्तेरिति** विरोधेखलु विशेषस्मृत्यनुरोधेन सामान्यस्मृतेः संकोचः क्रियते। प्रकृते तयो र्विरोध एव न, प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यं सामान्यस्मृत्याबोध्यते। प्रत्ययार्थानां मध्ये भावनापरपर्याय भावस्य विशेषस्मृत्या प्राधान्यं बोध्यते। अतः = निरुक्तरीत्योपपत्तेः। निरुक्तस्मृतौ ''भावप्रधान माख्यात'' मिति यास्काचार्यप्रणीतनिरुक्तवाक्ये।

**न च प्रत्ययार्थप्राधान्यस्मृतेः सुबाद्यर्थलिङ्गसंख्यादेः प्रकृत्यर्थं प्रति प्रकारतया संकोचावश्यकत्वे, यत्र करणत्वादौ प्रमाणान्तरेण प्रकृत्यर्थं प्रति प्राधान्यं प्रमितं, तदनुवादमात्रतया भावनाविषयेपि बाधे बाधका भावः।'प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इत्येकवचनश्रवणेन प्रत्ययार्थत्वसामानाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यनियमात्। सुबाद्यर्थ लिङ्गसंख्यादीना मप्राधान्येपि क्षतिविरहात्।**

**वस्तुतस्तु लिङ्गसंख्यादीनामपि प्रत्ययार्थान्तराणां न प्रकृत्यर्थप्रकारता, अपितु समानाभिधानश्रुत्या करणत्वादिरूपप्रत्ययार्थान्तरं प्रत्येवेति वक्ष्यते।**

**अतः सिद्धं धात्वर्थस्य भावनायां प्रकारतेति।**

वैयाकरणः पर्यनुयुङ्क्ते — **नचेति** अयमर्थः प्रत्ययार्थप्राधान्यस्मृतिः सर्वेषामपि प्रत्ययार्थानां प्राधान्यं नैवबोधयितुमीष्टे, घटे घटेनेत्यादौ प्रत्ययार्थ लिङ्गसंख्ययोः प्राधान्याभावात् प्रत्युत तयोः प्रकृत्यर्थविशेषणत्वस्यैवा नुभविकत्वात्। अतः लिङ्ग संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थापेक्षया प्राधान्यबोधिका सा स्मृति रित्यभ्युपगन्तव्यम्, एवं च तत्स्मृतेः संकोचस्यावश्यकतया विशेषस्मृत्यनुरोधेनापि साऽऽख्यातार्थातिरिक्तप्रत्ययार्थस्य प्राधान्यं बोधयतीति संकोचकरणे न किंचिद्बाधक-मिति। तदाह — **सुबर्थलिङ्गसंख्यादेरिति** ननु तस्याः कुत्रा वकाशोऽत आह — **यत्रेति** बाधे = विशेषस्मृत्या बाधने। समाधत्ते — **प्रत्ययार्थं सहेति। प्रत्ययार्थत्वसामानाधिकरण्येनेति** न तु प्रत्ययार्थत्वावच्छेदेन , येन दोषः स्यादिति भावः,

इदं चौत्सर्गिकींरीति माश्रित्योक्तम्, निष्कर्षे सामान्यस्मृते र्न कुत्रापि संकोचावश्यकता, प्रत्ययार्थस्या वच्छेदकावच्छेदेनैव प्रकृत्यर्थापेक्षया प्राधान्यं सा स्मृतिर्बोधयतीत्याह — **वस्तुतस्त्विति**

## (धात्वर्थस्य भावनायां प्रकारतानिरूपणम्)

**धात्वर्थश्च क्वचिच्छक्यार्थ एव प्रकारः, यथा 'सोमेन यजेते' त्यादौ। क्वचि ल्लक्ष्यार्थ एव। यथा — 'अग्नीषोमीयं पशुमालभेते' त्यादौ यागः। लक्ष्यार्थोपि क्वचिच्छक्यार्थयुक्तः। यथा — 'पृष्ठैरुपतिष्ठते' इत्यादावात्मनेपदानुरोधेन समीपस्थितिशक्यार्थविशिष्ट मभिधानम्।**

**वस्तुतस्तु 'सोमेन यजेते' त्यादौ तत्तद्विधिष्वपि विजातीययागत्वादिनैव लक्षणेति शक्यार्थान्वयोऽन्यत्राऽनुसन्धेयः।**

तस्यां च धात्वर्थस्य प्रकारत्वेनान्वयः, इत्युक्तमर्थ विशदयति। **धात्वर्थश्चेति** क्वचित् = स्थले। **सोमेनेति** सोम पदस्य मत्वर्थे लक्षणायां तदभावे वा शुद्धस्य यजि धात्वर्थस्य भावनायामन्वयः। आदि…

"ज्योतिष्टोमेन स्वर्गकामो यजेते" त्यादेर्ग्रहणम्। **अग्नीषोमीयमिति** आलभतिः स्पर्शार्थकः, तथापि अग्नीषोम देवता पशु द्रव्यान्यथानुपपत्त्या स लक्षणया यागार्थकः, तस्याख्यातार्थ भावनायामन्वय इति भावः। तदाह – **याग इति** आलभतिना लक्षितो याग इत्यर्थः। **पृष्ठैरुपतिष्ठत इति** इदंचाग्नै श्रुतम्। रथन्तर बृहद्वैरूपवैराज शाक्कर रैवतनामभिः पृष्टसंज्ञकैः सामभिः समीपे स्थित्वा गुणाभिधानं करोतीति तदर्थः। समीप स्थिति र्धातोः शक्योर्थः। "उपान्मन्त्रकरणे" 1-3-25 इति सूत्रान्मन्त्रकरणेऽर्थे वर्तमान दुपपूर्वात् स्थाधातोरात्मनेपदं स्यादित्यर्थकादात्मनेपदविधानात्तद्रूपतात्पर्य ग्राहकानुरोधा ल्लक्षणया शक्यार्थविशिष्टमभिधानं धात्वर्थः। तस्य भावनायामन्वयः। तदाह – **आत्मनेपदानुरोधेनेति** – शक्यार्थमाह – **समीप स्थितीति** लक्ष्यार्थमाह – **अभिधानमिति** गुणिनिष्ठ गुणाभिधानमित्यर्थः। अयमर्थः – पृष्टशब्दः शरीरावयव पृष्टसंज्ञक स्तोत्र तत्साधनमन्त्रवचन, स्तथापि "आपो वैऋत्वियमार्छन्... तत्पृष्टेषुन्यदधुः... एतस्यायोनेः पृष्टानि... ता **वैवामदेव्यं** पुत्राः पृष्टानी' ति पृष्टशब्दान्वाख्यानार्थवाद वशेन षाडहिकेषु रथन्तरादिषु षट्सु सामसु पृष्टशब्दस्य निरूढ ल्लक्षणाया श्चित्राधिकरण कौस्तुभे व्यवस्थापितत्वात्तान्येवाभिधानं प्रति करणत्वेन विधीयन्ते। यथा ऋगक्षराभि व्यक्तिद्वारा गुणिनिष्ठ गुणाभिधानरूप स्तोत्रं प्रति करणत्वं, तथा गुणाभिधानं प्रत्यपि तद्द्वारा तत्संभवत्येव। एवं च पृष्ट शब्दो निरूढ लक्षणया सामपरः। उपतिष्ठति निरूढ लक्षणया शक्यार्थविशिष्टाभिधानपरः। तस्य च भावनायामन्वयः-इति। एवमेव "ऐन्द्र्यागार्हपत्यमुपतिष्ठते" इत्यत्रापि शक्यार्थ विशिष्ट लक्ष्यार्थस्य धात्वर्थस्य भावनायामन्वयो बोध्यः। तत्र हि द्वितीयान्तं तृतीयान्तं च यथा श्रुतार्थकमेव। धातुनैवा त्मनेपदरूप तात्पर्यग्राहकानुरोधेन समीपावस्थानविशिष्टमभिधानं लक्षयित्वा तत्रैव मन्त्रस्य करणत्वेन गार्हपत्यस्य च कर्मत्वेनान्वयः। अभिधानस्य च भावनायामिति बोध्यम्। आद्य प्रभेदस्य "सोमेन यजेते" ति नोदाहरण मित्याह – **वस्तुतस्त्विति** सामान्यार्थवाचकस्य विशेषार्थ परत्वे लक्षणायाः सर्व संमतत्वादाह – **विजातीय यागत्वादि नैव लक्षणेति** तथाच लक्ष्यार्थस्यैव भावनायामन्वय इत्यस्यैवेदमुदाहरणमिति भावः। तर्ह्याद्य प्रभेदस्य किमुदाहरण? मत आह – **शक्यार्थान्वय इति** षष्टी समासः। अन्यत्र = "ऋत्विग्भ्यो दक्षिणां ददाती" त्यादौ।

**तस्य च कृतौ संसर्गो ना नुकूलत्वम्, पचति – पाकं करोतीति पाककर्मत्वस्यैव विवरण बलेन संसर्गत्व प्रतीतेः। अत एवौ दनं पचीत्यादौ पाकेनौदनं करोतीति विवरणा त्पाककरणत्वस्यापि प्रतीते स्तस्यापि संसर्गत्वम्।**

**अतश्च कर्मत्वकरणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायां धात्वर्थस्या न्वयः। यद्यपि कृतिं प्रति पाकस्य करणत्वं बाधितम्, कृतिसाध्यत्वा त्पाकादेः, तथापि स्वनिष्ठकरणत्वनिरूप-कौदनोद्देश्यकत्वसंबन्धेन पाकस्य कृतावन्वयात् करणत्वस्यापि संसर्ग घटकतया संसर्गत्वो-पपत्तिः। अस्ति चौदनस्यापि कृता वुद्देश्यताख्या विषयतेति नै तादृशसंसर्ग बाधः।**

धात्वर्थस्य क्वचित्करणत्वेनान्वयः, क्वचित्साध्यत्वेन, क्वचिदाश्रयत्वेनेति केचित्। तन्नयुक्तम्, कर्मत्वातिरिक्ताश्रयत्वस्य निर्वक्तुमशक्यत्वात्, अतः कर्मत्व करणत्वान्यतर संसर्गेणैव भावनान्वय इति प्रतिपादयितुमुपक्रमते – **तस्य चेति** धात्वर्थस्येत्यर्थः। सामान्यतोऽनुकूलत्वं संसर्ग इत्यपि नेत्याह – **नानुकूलत्वमिति** पाककर्मत्वस्यैवेत्येव शब्देन अनुकूलत्वस्य व्यवच्छेदः, अन्यथा पाकानुकूलाकृति रित्येव विव्रियेत। अत एव = अनुकूलत्वं संसर्ग इत्यस्यानङ्गीकारदेव। कर्मत्व बोधक द्वितीयान्तस्य श्रवणे धात्वर्थस्य करणत्वेनैवान्वय इत्याह **पाकेनेति** स्व सिद्धान्तमाह – **अतश्चेति** विवरणबलेन तयोरेव तत्त्व लाभादित्यर्थः। अन्यतरसंसर्गेणैवेत्येवशब्देना श्रयत्वस्यव्यवच्छेदः, **यद्यपीति** कृत्यनन्तर

भावित्वात्पाकस्य तत्र पाकस्य करणत्वं न युज्यत इति भावः। तदाह – **कृति साध्यत्वात्पाकादेरिति** **स्वनिष्ठेति** स्वं = पाकः तन्निष्ठकरणत्व निरूपक ओदनः, तदुद्देश्यकत्वं कृतौ। **संसर्गोपपत्तिरिति** निरुक्तरीत्या करणत्वस्यापि तद्घटकत्वात्तत्त्वोपपत्तिरिति भावः। नन्विदमयुक्तम्, कृत्युद्देश्यत्वस्य पाक एव सत्त्वेनौदनेऽभावादत आह – **अस्तिवेति** पाके कृत्युद्देश्यत्वसत्त्वे पाकस्यौदनार्थत्वादोदनस्य तत्वमित्याशयेनाह – **ओदनस्यापीति** **एतादृशेति** ओदनोद्देश यकत्व घटितेत्यर्थः।

**तत्र च यत्र विध्यश्रवणं तत्र द्वितीयान्तपदाद्यश्रवणे पचति चैत्र इत्यादौ धात्वर्थस्ये ष्टसाधनत्वाज्ञानेपि तस्य कर्मत्वमेव। आख्यातोपात्तभावनायाः करोत्यर्थतया तद्वदेव सकर्मकत्वनियमात्।**

**अत एवा कर्मकधातुस्थलेपि आख्यातोपात्ताया भावनायाः सकर्मकत्वमेव। अत एव तस्या स्तदाकाङ्क्षायां 'स्वास्थ्यकामः शयीते' त्यादौ कामपदोपात्तस्वास्थ्यादेरेव कर्मत्वेना न्वयः, स्वर्गकामपदेनेव लक्षणया स्वर्गादेः। धातुस्त्वकर्मक एव। अत एवात्र न भावनाकर्मणि द्वितीया। सातु धात्वर्थकर्मण्येव सकर्मकधातुस्थले। यथा – व्रीहीनवहन्ती" त्यादौ। तत्र तेषां प्रथमतो भावनायां कर्मत्वेना न्वयेपि, पार्ष्टिक धात्वर्थेपि कर्मत्वमिति तेषां धातूनां सकर्मकत्वोपपत्तिः।**

**अतो भावनाया नित्यं सकर्मकत्वात् 'पचति चैत्र' इत्यादिनिरुक्तस्थले भावनायाः कर्माकाङ्क्षायां समानपदश्रुत्या धात्वर्थस्यैव कर्मत्वम्। लौकिकवाक्यत्वा च्च तस्य वैयर्थ्येपि न दोषः।**

**वेदेतु विध्यन्तरैकवाक्यत्वादिना स्तावकत्वाद्यसंभवे स्वाध्यायविध्यवगतप्रयोजनवत्त्वाद्य- नुरोधेन लडादेरेव लेट्त्वं लेडर्थकत्वं वा लक्षणया परिकल्प्य भावनायाः स्वर्गादि भाव्यादिपरिकल्पनया धात्वर्थस्य तत्र करणत्वेना न्वयः। विधेः प्रवर्तकत्वान्यथानुपपत्त्या तत्समभिव्याहृतायां भावनाया मिष्टभाव्यकत्वावश्यं भावात्।**

**'घटं पटं चाऽऽनये' त्यादौ चकारं विना कर्मद्वयान्वयादर्शनात्, करोतेरिव आख्यातोपात्तभावनाया अपि एककर्मकत्वनियमेन यागादेरपि तस्यां कर्म [illegible]नुपपत्तेश्च।**

**अत एव यत्र विधिसमभिव्याहारस्य सत्त्वे असत्त्वे वाद्वितीयादिना भाव्यान्तरं निर्दिष्टं, यथा – ""व्रीहीनवहन्यात्" 'ओदनं पचती' त्यादौ तत्र धात्वर्थस्य करणत्वमेव।**

धात्वर्थस्य कर्मत्वेनान्वयः कुत्र कुत्र वा करणत्वेनेतिविचिकित्सायां विविच्य दर्शयति **तत्र चेति** कर्मत्व करणत्वयोर्मध्य इत्यर्थः। विधिसत्वेपि द्वितीयान्तपदश्रवणे करणत्वेनैवान्वया दाह – **द्वितीयान्त पदाद्यश्रवणे इति** तादृशं स्थलं दर्शयति **पचति चैत्र इति** विधेरश्रवणे इष्टसाधनत्वा ज्ञानात्कथं कर्मत्व मत आह **धात्वर्थस्येष्टेति** तस्य – धात्वर्थस्य। तत्रोपपत्तिं दर्शयति **आख्यातोपात्त भावनाया इति** **करोत्यर्थतयेति** निरूपितं चैतत्पाक्। **सकर्मकत्व नियमादिति** विधेः प्रवर्तकत्व बोधकता शक्तिबाधापत्ते श्चेतन विषय प्रवर्तकत्वस्या पुरुषार्थभाव्यक प्रवृत्त्याऽनुपपत्ते र्यागादेरपुरुषार्थत्वेन भाव्यत्वा योगादन्यस्यैव कस्यचित् भाव्यत्वेनाऽऽकाङ्क्षितत्वा त्तस्यनित्य सकर्मकत्वमिति भावः। अत एव = आख्यातोपात्त भावनाया नित्यं सकर्मकत्वादेव। **सकर्मकत्वमेवेति** सकर्मकत्वा कर्मकत्वव्यवहारो धातु गत एव, न तु भावनागतः, भावना तु नित्यं सकर्मिकैवेति भावः। अत एव = धातो रकर्मकत्वेपि भावनायाः सकर्मकत्वादेव। **काम पदोपात्तेति** स्वास्थ्य कामशब्दो लक्षणया विशेषण भूतं स्वास्थ्यं प्रथमा कर्मत्वं च

लक्षयतीत्याशयः। तत्र संप्रतिपन्नमर्थं दृष्टान्तयति **स्वर्गकाम पदेनेव लक्षणया स्वर्गादेरिति** निरूपितं चैतत्प्राक् कर्तरि लक्षणावसरे। तथाच प्रकृते शयनेन स्वास्थ्यं भावयेदिति वाक्यार्थ इति भावः। स्पष्ट प्रतिपत्तये आह – **धातुस्त्वकर्मक एवेति** अत एव = धातोरकर्मकत्वादेव। भावनाकर्मणि = स्वास्थ्यादौ। अन्यथा स्वास्थ्यकाम इत्यादौ द्वितीया दुर्वारा। **सातु** = कर्मणि द्वितीयातु। ननु व्रीहीणां कर्मत्वेन भावनायामन्वये धात्वर्थ कर्मत्वानुपमत्त्या धतोः सकर्मकत्वानुपपत्तेः कथं "सा तु धात्वर्थ कर्मण्येव सकर्मक धातु स्थले" इत्युक्तिः संगच्छेतेत्यत आह – **तत्रेति** भावनायामित्यर्थः। तेषां = व्रीह्यादीनाम्। **पार्ष्टिकमिति** अयमर्थः-व्रीह्यादेः स्व निरूपक धात्वर्थकरणत्व संबन्धेन प्रथमतो भावनायामन्वयः। एवं सत्यपि यद्धात्वर्थस्य कर्मणः पार्ष्टिकान्वये साकाङ्क्षा तद्धातोः सकर्मकत्वम्। यस्य तु न तदानीं सा, तस्या कर्मकत्वम्। एवं चावहन्यादित्यादेः सकर्मकत्वा तत्कर्मणि द्वितीयादि सिद्धिः। शयीतेत्यादे स्तदाकाङ्क्षाया अभावादकर्मकत्व मेवेति न दोष-इति। उक्तमर्थं निगमयति **अतश्चेति** नन्वेवं पचति चैत्र इत्यादीनां वैयर्थ्यापत्तिः, पाकादेरपुरुषार्थत्वेन तत्र चैत्रादेः प्रवर्तकत्वायोगादित्यत आह – **लौकिकेति** तस्य = पचति चैत्र इति वाक्यस्य। वैयर्थ्येपि = पाकस्यापुरुषार्थत्वात्तत्र चैत्रादेः प्रवृत्त्यजनकत्वाद्वैयर्थ्येपि। लौकिक वाक्यत्वादित्यस्य व्यावर्त्यं दर्शयति – **वेदेत्विति। स्तावकत्वा संभवे इति** अर्थवाद वाक्यानां विध्यन्तरैक वाक्यतया स्तावकत्वेन प्रामाण्यम्, तदसंभवेत्वित्यर्थः। यथा "समिधो यजती" त्यादौ। **स्वाध्यायविधीति** अयमर्थः "स्वाध्यायोऽध्येतव्य" इत्यध्ययन विधिः सकलस्य वेदस्याध्ययनकर्तव्यतां बोधयन्, सर्वोवेदः प्रयोजनवदर्थ पर्यवसायी. ति सूचयति। निरर्थकस्या ध्ययनानुपपत्ते-रिति। तदाह **प्रयोजनत्त्वानुरोधेनेति** लडादेरेव = यजतीत्यादौ। लेट्त्वं = विभक्ति विपरिणामेन। लक्षणया = साम्प्रतिक्या। "विश्वजिन्नयायेनाह **स्वर्गादीति** स्वर्गादेर्भाव्यत्वे धात्वर्थस्य परिशेषात्करणत्व मेवेत्याशयेनाह – **धात्वर्थस्येति** तत्र = भावनायाम्। तदेवोपपादयति **विधेरिति प्रवर्तकत्वेति** प्रवर्तकत्व बोधकताशक्त्यनुपपत्त्येत्यर्थः। तत्समभिव्याहृतायाम् = विधिसमभिव्याहृतायाम्। **इष्टभाव्यकत्वेति** स्वर्गादि रूपपुरुषार्थरूपेष्ट भाव्यकत्वेत्यर्थः। नन्वेवमपि यागादेरपि प्रत्ययार्थ भावनायां कर्मत्वेनान्वयो स्त्वत आह **घटं पटं चेति** अत्र चकारसत्वात्कर्मद्वयस्यान्वयो भवत्येव, तत्प्रकारश्च समनन्तरमेव मूले स्पष्टं भविष्यति। चकाराभावे घटं पटमानयेत्यादौ घट पटयो रुभयोरपि कर्मत्वेनान्वयादर्शनादेक कर्मत्वं भावनाया इति भावः। **करोतेरेवेति** चकारं विना घटं पटं करोतीत्य प्रयोगात्तस्यैक कर्मकत्वं सिद्धम्, तद्वदित्यर्थः। **भावनाया अपीति** करोति समानार्थकत्वादाख्यातस्य तदर्थभावनाया अप्येक कर्मकत्वमित्यर्थः। तस्यां = भावनायाम्। अतः स्वर्गादेरेव भावनाभाव्यत्वम्, यागादेः करणत्वमेवेति भावः। अत एव = भावनाया एक कर्मकत्व नियमादेव। द्वितीयादिनेत्यत्र आदि पदेन "ज्योतिष्टोमेन स्वर्गकामो यजेते" त्यादौ स्वर्गकाम इत्यादि प्रथमान्तादेर्ग्रहणम् **व्रीहीनिति** अवहननेन व्रीहीन् संस्कुर्यादित्यर्थः। **ओदनमिति** ओदनं पाकेन करोतीत्यर्थः। **करणत्वमेवेति** तत्रापि धात्वर्थस्य कर्मत्वेनान्वये तत्कर्मणा भावनायाः कर्मद्वयापत्त्या एक कर्मकत्व नियमो भज्येतेति भावः।

**यत्र तु तादृशस्थले अप्राप्तकरणान्तरसत्त्वं, धात्वर्थस्य च प्रकरणादिना प्राप्तिः, यथा "गोदोहनेन पशुकामस्य प्रणयेत्" "दध्नेन्द्रियकामस्य जुहुया" दित्यादौ, तत्रा श्रयतया प्रकरणप्राप्तधात्वर्थानुवादमात्रं, साधुत्वसिध्यर्थं धातुः। न तु तदर्थस्य करणत्वेना न्वयः, न वाऽऽश्रयत्वेन। कर्मत्वातिरिक्तस्या श्रयत्वस्य निर्वक्तुमशक्यत्वेन भावनाया मिन्द्रियरूपं-कर्मावरुध्दायां होमस्यापि कर्मत्वेना न्वये एककर्मकत्व भङ्गापत्तेः। अत एवा नेकोद्देश्यनिमित्तवाक्यभेदेपि एककर्मकत्वभङ्ग एव दूषकता बीजमुक्तं कौस्तुभादौ।**

नन्वेवं "गोदोहनेन पशुकामस्य प्रणये" दित्यादौ पशुरूप भाव्यान्तरस्य निर्दिष्टत्वात्तत्र **धात्वर्थस्य** करणत्वेनान्वयापत्तिः, नचेष्टापत्तिः, गोदोहनस्य करणान्तरस्य **वैयर्थ्यापत्तेरित्याशङ्कां तत्राश्रयतया** धात्वर्थान्वय इति केषञ्चिन्मतं च निराकर्तुमाह – **यत्रत्विति** तादृश स्थले = भाव्यान्तरस्य **निर्देशस्थले। अप्राप्तेति** शास्त्रान्तरेणाप्राप्तेर्त्यर्थः। यथा प्रकृते गोदोहनादेः। धात्वर्थस्य = प्रणयनादेः। **प्रकरणादिना** = "अपः प्रणयती" त्यादिना। **धात्वर्थेति** प्रणयन होमादेः। तर्हि धातोः प्रयोगो व्यर्थः स्यादित्यत **आह साधुत्व सिध्द्यर्थमिति** भावना बोधकाख्यात प्रत्ययस्य साधुत्व सिध्द्यर्थमित्यर्थः। **अन्यथा "नापि केवलः प्रत्ययः"** इति नियमेन केवल प्रत्ययो न प्रयोज्यः स्यादिति भावः। अतः प्रकृते धात्वर्थस्य करणत्वेनान्वय शङ्कैवनेति भावः। तदाह – **न तु तदर्थस्य करणत्वेनान्वय इति** केषञ्चिन्मतं दूष्यति **नचाऽऽश्रयत्वेनेति** तत्रोपपत्तिमाह – **कर्मत्वातिरिक्तस्येति। निर्वक्तुमशक्यत्वेनेति** अयमर्थः गुणभावनाया मन्वयो न तावत्करणत्वेन, तथात्वे भावार्थाधिकरणन्यायप्रवृत्त्या तस्यैव फलसंबन्धापत्तेः। **करणत्वेनोपस्थितस्य** गुणसम्बन्धायोगाच्च। नापी तिकर्तव्यतात्वेन, क्लृप्तप्रयोजनत्वात्, गुणाङ्गत्वापत्तेश्च। **अतः** परिशेषात्कर्मत्वेन। तदाश्रयणे यदीप्सितकर्मत्वेन, तदोद्दृश्यानेकत्वा द्वाक्य भेदापात्तिः, **गुणस्या-** श्रयाङ्गतापत्तिश्च। अनीप्सितकर्मत्वेनान्वये फलस्यापि कर्मत्वेनान्वयाद् भावनाया द्विकर्मकत्वा द्वाक्यभेदापत्ति-रिति। तदाह **भावनायामिन्द्रियरूपकर्मावरुद्धायामिति** होमस्यापि = धात्वर्थस्यापि। अत एव = भावनाया एककर्मकत्वानुरोधादेव। कौस्तुभादौ = ग्रहैकत्वाधि करण संमार्गाधिकरणादौ। आदिना भाट्टदीपिकाया ग्रहणम्।

**एककर्मकत्वं च नैककर्मत्वम्, एककर्मत्वाश्रयकत्वं वा। "सर्वेभ्यो दर्शपूर्णमासौ" घटानानयेत्यादौ तदनापत्तेः, तत्र पुत्रादिवृत्तिकर्मत्वानां कर्मत्वाश्रयपुत्रादीनां वाऽनेकत्वात्।**

**नाप्येककर्मत्वावच्छेदककत्वम्। "सर्वेभ्यो दर्शपूर्णमासा" वित्यादौ "व्रीहीन् प्रोक्षती" त्यादौ च तदनापत्तेः। तत्र पुत्रत्वपशुत्वादीनां, तदपूर्वसाधनत्वानां च कर्मतावच्छेदकानां भेदात्।**

**किंत्वेक बोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्व मित्युक्तं कौस्तुभे। निरुक्तस्थलेषु च सर्वत्र कर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्माणा मेकेन पदेनै कस्यैव समूहालम्बनात्मकस्य बोधस्य जनना देककर्मकत्वोपपत्तिः।**

ननु भावनाया एकं कर्मकत्वनियमो न घटते एककर्मकत्वस्यैव दुर्वचत्वदित्याक्षिपति **एककर्मकत्वं चेति नैककर्मकत्वमिति** एकं कर्मत्वं यस्या इत्यर्थाश्रयणेनेदम्। एकः कर्मत्वाश्रयः = एकं कर्मयस्या इत्यर्थाश्रयेणेनाह, **एककर्मत्वाश्रयकत्वमिति** एकः कर्मत्वाश्रयो यस्येत्यर्थः। पक्षद्वयेपि दोषमाह – **सर्वेभ्य इति** उद्देश्यतावच्छेदक व्यापक विधेय व्याप्य समुदायत्वावच्छिन्ने सर्वशब्दः शक्तः। लौकिक वाक्यं दर्शयति **घटानिति** तदनापत्तेः = भावनाया एककर्मत्वानापत्तेः। तत्र = निरुक्त स्थले। आद्ये दोषं दर्शयति **पुत्रादि वृत्तीति** आदिना घटादेर्ग्रहणम्। सर्वशब्द वाच्यपुत्र पश्वादि रूपकर्म वृत्तीनां घट पदोपस्थापित घटरूपकर्मवृत्तीनां च कर्मत्वानामित्यर्थः। द्वितीये दोषं दर्शयति, **कर्मत्वाश्रयेति** पुत्रादि वृत्ति कर्मत्वाश्रयाणां पुत्र पशुघटादीनामित्यर्थः। **अनेकत्वादिति** तथाच निर्वचन द्वयमिदं न युक्तमिति भावः। ननु कर्मत्वगतं कर्मत्वाश्रयगतं वा एकत्वमादाय एक कर्मकत्वं भावनाया न ब्रूमः, किंतु कर्मतावच्छेदक गतमेकत्व मादायेति चे त्तदपि न युज्यत इत्याह **नापीति एक कर्मतेति** एकं कर्मतावच्छेदकं यस्या इत्यर्थः। तत्र = निरुक्त स्थले। **पुत्रत्वेति** पुत्रादिगत कर्मत्वावच्छेदकानां पुत्रत्व पशुत्वादीनामित्यर्थः, **तदपू ति** व्रीहीणां **सिद्धत्वात्स्वरूपेण नैरर्थकया त्तद्वारणाय व्रीहिपदं तदपूर्व साधनपरम्। तथाच तत्र कर्मताव** ेदकमपूर्व-साधनत्वम्, कर्मभेदेन तद्भेदावश्यं भावादनेकत्वमिति भावः। न वयं कर्मत्वगतं तदाश्रय गत दवच्छेदक

गतं वैकत्वमादाय एककर्मकत्वं ब्रूमः, किंतु कर्मतावच्छेदक धर्मविषयक बोधगत मेकत्वमादाय। अतो नकोपि दोष इत्याशयेन तन्निर्वक्ति **किंत्विति एक बोध विषयेति** एक बोध विषयः, कर्मत्व पर्याप्ते र्यदधिकरण = माश्रयः तदधिकरणतावच्छेदको यो धर्मः तद्वत्वमित्यर्थः। स च धर्म एकः अनेको वेतित्वन्यदेतत्। कौस्तुभे = तृतीयाध्याय प्रथमपादे सप्तमे ग्रहैकत्वाधिकरणे। सर्वत्र = सर्वेषु स्थलेषु। **कर्मत्वपर्याप्तीति** कर्मत्व पर्याप्ते र्यान्यधिकरणानि पुत्र पशु व्रीह्यादीनि तदधिकरणतावच्छेदका ये धर्माः पुत्रत्वं पशुत्वापूर्वसाधनत्वादयस्तेषामित्यर्थः। एकेन पदेन = सर्व व्रीह्यादि पदेन। समूहा लम्बनात्मकस्य बोधस्य = नाना मुख्य विशेष्यकरूप समूहालम्बनात्मक बोधस्य। अतश्च सत्यामपि सर्वशब्दस्य पुत्रत्व पशुत्वादिना प्रत्येकशक्तौ सत्यपि च "सर्वेभ्यो दर्शपूर्णमासा" वित्यादौ तत्तदुद्देश्यतावच्छेदक नानात्वे सर्वशब्देन तत्तच्छक्तिभिः सर्वेषां फलानां युगपद् बोधादेक कर्मकत्वोपपत्तिरिति भावः।

**"अध्वर्युयजमानौ वाचं यच्छतः" इत्यत्र चाध्वर्युत्वयजमानत्वयोः कर्मत्वाधिकरणतावच्छेदकयोरेक बोधविषयत्वा भावाद् द्विकर्मकतापत्तिः, अतः 'पर्याप्ती' ति। तत्र द्वन्द्वोत्तरविभक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्यवृत्तित्वावसायात् तत्पर्याप्त्यधिकरणतावच्छेदकधर्मस्याऽध्वर्युयजमानोभयत्वस्य द्वन्द्वजन्यैक बोधविषयत्वेन एककर्मकत्वोपपत्तेः। उपपादितं चैतत् कौस्तुभादौ।**

पर्याप्तिनिवेशस्य प्रयोजनमाह **अध्वर्युयजमानाविति** दर्शपूर्ण मासयोः "यज्ञ तानिष्यन्ता वध्वर्यु यजमानौ वाचं यच्छतः, यदध्वर्यु यजमानौ वाचं यच्छतः तत्प्रजापति भूयं गतौ यज्ञं तन्वाते, तस्मात्प्रणीताः प्रणेष्यन् **वाचं यच्छति तां स हविष्कृता विसृजति इति श्रुतम् तत्र अध्वर्यु यजमानौ वाचं यच्छतः इति अध्वर्युयजमान संस्कारकत्वेन वाग्यमविधिः, वाङ्नियमेन अध्वर्युयजमानौ सेस्कुर्यादिति** तदर्थः। यम धातो **कर्तरिलटि** शपि "पाघ्राध्मा" 3-1-137 **इत्यादिना** तस्य यच्छादेशे युच्छत इति रूपम् यज्ञं तनिष्यन्ता वित्यर्थवादो वाग्यमस्तुत्यर्थः। **यद्यपि अध्वर्यु यजमानयोः** कर्तृतया गुणत्वेनैवान्वयः प्रतीयते, तथापि तस्य प्रयोजनापेक्षायां दृष्टार्थतालाभायोपस्थितत्वात्तद्वाचक पदान्तर कल्पनया तत्संस्कारकत्वेनैव विधानं, नतु प्रकारणात्प्रधान मात्राङ्गम्, अदृष्टार्थातापत्तेः तयोः संस्कारत्वेनैव कर्तृत्वस्य प्राप्तत्वात्तदंशेऽनुवादः। एवं चाध्वर्युयजमानोद्देशेन वाङ्नियमविधानात्तयोः कर्मत्वम्, तद्वृत्त्योरध्वर्युत्व यजमानत्व धर्मयोरेकबोध विषयत्वाभावाद्भावनाया एक कर्मत्वासिद्धिः। अतः पर्याप्ति निवेश इत्याशयः। तदेतदाह – **अध्वर्युत्व यजमानत्वयोरिति एक बोधविषयत्वाभावादिति** अध्वर्युत्वेनाध्वर्युमध्वर्युपदमभिधत्ते, एवं यजमानपदं यजमानं तत्त्वेन बोधयति। न त्वेकमेकपदमुभावभिधत्ते। अत एक बोधविषयत्वाभावस्तयोरिति भावः। पर्याप्ति निवेशो तद्वारणोपायं दर्शयति, **तत्रेति** – अध्वर्युयजमानावित्यत्रेत्यर्थः **देवतात्वादेरिवेति** अदिना दम्पति निष्ठकर्तृत्वस्य ग्रहणम्, "अग्नीषोमीयं पशुमालभेते" त्यत्र देवतात्व मग्नीषोमयो व्यासज्य वृत्तिः, तद्वदित्यर्थः। **अध्वर्यु यजमानोभयत्वस्येति** तथाचैक बोधविषयः कर्मत्व पर्याप्त्याधिकरणतावच्छेदको धर्म उभयत्वं, तच्चोभयोरेव पर्याप्तम्, न प्रत्येकं, तस्येत्यर्थः। तस्यैक बोधविषयत्व मुपपादयति **द्वन्द्व जन्येति** तथाच द्वन्द्वोपात्तोद्देश्य स्थले द्वन्द्वावगत साहित्य विशिष्टानामवैग्र्यसंपादक वाग्याम कर्मत्वान्वयाद्, देवतात्ववद् व्यासज्य वृत्ति कर्मत्वावगतेः सत्यापि तदाधिकरणानां भेदेनबोधे तेषां पर्याप्ति संबन्धेन कर्मत्वाधिकरणत्वाभावाद् न एक कर्मकत्व भङ्ग इति बोध्यम्। विस्तरस्तु ग्रहैकत्वाधिकरण कौस्तुभेद्रष्टव्यः।

**एवं शुक्लं घटमानयेत्यादौ शुक्लस्य घटेऽभेदान्वयात् पदद्वयेन घटपदेनैव वा शुक्लगुणविशिष्टघटलक्षणा देककर्मकत्वोपपत्तिः।**

**एवं घटं पटं चा नयेत्यादा वितरेतरयोगार्थचकार रूपतात्पर्यग्राहकानुरोधेन द्वितीयान्तपदद्वये लक्षणया तदुपपत्तिः। यथा चैवं सति निमित्तद्वयस्थले उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्य दूषकता बीज मेककर्मकत्व भङ्गपत्ति, स्तथा कौस्तुभे व्यक्तम्।**

**तत्सिद्धं-यत्र द्वितीयादिना भाव्यान्तरं भावनाया मन्वययोग्य मुपात्तं तत्र न धात्वर्थस्य कर्मत्व-मिति।**

नन्वेवमपि मीमांसकमते विशेषण विशेष्ययोरुभयोरपि कारकत्वात्सविशेषणस्थले भावनाया द्विकर्मकतापत्ति रनिवार्येत्यत आह – **एवमिति** निरुक्त स्थल इवेत्यर्थः। अभेदान्वयात् = अभेदान्वयानुभवात् पद द्वये शक्य संबन्धरूप लक्षणाया अयोगादाह, **घट पदेनैवेति** एकबोध विषयत्वादाह – **एक कर्मकत्वोपपत्तिरिति** द्वितीयान्त पदसमभिव्याहारादन्यत्रैव विशेषणानां विशेष्यस्य च पृथगेव भावनाया मन्वयः, तत्समभिव्याहारे तु एषैव रीति न कोपि दोष इति बोध्यम्। विशेषण विशेष्य भावानापन्न द्वितीयान्तद्वय सत्त्वे तदुपपत्तिं दर्शयति **एवमिति तदुपपत्तिरिति** एककर्मकत्वोपपत्तिरित्यर्थः। चकाराभावेतु घटपटयोरुभयोः कर्मत्वेनान्वयो नास्त्येवेति न दोषः। एवं सति = भावनाया एक कर्मकत्वे सिद्धे सति। **दूषकता बीजमिति** निमित्तानेकत्वे तयोर्भेदेनानुष्टापकत्वाद्भेदेनैव भाव्याक्षेप कत्वापत्ते र्निमित्तानेकत्वे तदाक्षिप्त भाव्यरूप कर्मानेकत्व प्रसङ्गः। तथाच तत्प्रयुक्त वाक्य भेदापत्ति र्दूषकताबीजमिति भावः, तदाह **तथाकौस्तुभेव्यक्तमिति** कौस्तुभे ग्रहैकत्वाधिकरण एव। तथाच भाव्यान्तरनिर्देशे धात्वर्थस्य करणत्वमेव, न तु कर्मत्व, मेककर्मकत्व नियमस्य भङ्गापत्ते रिति प्रकरणार्थ मुपसंहरति – **तत्सिद्धमिति** तत् = भावनाया स्तत्वनियमात्।

**यत्र तु न तदुपात्तं धात्वर्थस्य चेष्टसाधनत्वं प्रमाणान्तरेण प्रमितं, तत्र स्ववाक्यविधेय-गुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वमेव। यथा – "दध्नाजुहोती" त्यादौ। न चैवं "जुहूवाजुहोती" त्यादौ जुहोतेः सकर्मकत्वात् कर्मान्तरावश्यं भावेन द्विकर्मकत्वापत्तिः, सकर्मकस्यापि भावाख्यात इव कर्माऽविवक्षोपपत्तेः। एतादृशेपि विषये यदि तृतीयान्तनामधेयश्रवणं, तदा करणत्वमेव। यथा – "समे दर्शपूर्णमासाभ्यां यजेत" "उच्चैः प्रवर्ग्येण प्रवृणक्तीत्यादौ।**

धात्वर्थस्य करणत्वेनान्वय स्थलानि दर्शयति – **यत्रत्विति** तत् = भावनायामन्वय योग्यं भाव्यान्तरम्। **धात्वर्थस्य** = होमादेः। इष्ट साधनत्वम् = स्वर्गादि रूपेष्ट साधनत्वम्। प्रमाणान्तरेण = "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादि प्रमाणान्तरेण। गुणान्तर सत्त्वे = दध्यादि रूप गुणान्तरसत्वे। **दध्नेति** दध्ना होमं भावयेदिति तदर्थः, एवं = तादृशे स्थले धात्वर्थस्य कर्मत्वाङ्गीकारे। **सकर्मकत्वादिति** यत्तु तन्त्र रत्ने तन्त्रसारन्यायसुधयोश्य जुहोते सकर्मकत्व मुक्तं तन्न, "हुतोऽहुतः पर्यावर्तत" इत्यादौ कर्मणि निष्ठादर्शनेन जुहोते रकर्मकत्वा सिद्धेः। होः कर्मणि तृतीया, चकाराद् द्वितीया च स्यादित्यर्थकेन "तृतीया च होश्छन्दसी" 2-3-3 ति सूत्रकार पाणिनि व्यवहारेण तस्य सकर्मकत्वावगतेश्च। स्पष्टं चेदं संमार्गाधिकरणे कौस्तुभे। **कर्मान्तरेति** निरुक्तरीत्या धात्वर्थस्य कर्मत्वम्, धातोः सकर्मकत्वनिर्वाहाय तदतिरिक्तकर्मणोऽवश्यं भावादित्यर्थः। समाधत्ते – **सकर्मकस्यापीति** अत्र धात्वर्थस्य कर्मत्वमेव परंतु द्वितीयस्य कर्मणोऽविवक्षणादेक कर्मकत्वोपपत्ति रिति भावः। अविवक्षायां दृष्टान्तमाह – **भावाख्यात इवेति** तण्डुलं पचति चैत्र इति प्रयोगे पचिः सकर्मकः, तत्र कर्मणोऽविवक्षया तस्या कर्मकत्वाद्भावे लःसिध्यति – पच्यते चैत्रेणेति तद्वदिति भावः। एतदपवादस्थलमाह **एतादृशेपि विषय इति** "समेदर्शपूर्णाभ्या" **मित्यत्रभाव्यान्तरं नोपात्तम्। यागस्य "दर्शपूर्णाभ्यां स्वर्गकामो यजेते, ति प्रमाणान्तरेण स्वर्गेष्ट साधनत्वं प्रमितम्, समदेश रूपोगुणः, स्व वाक्ये उपात्तः। विशेषमाह तृतीयान्तेति करणत्वमेवेति**

तन्नामकेन यागेनेष्टं भावयेति तदर्थः। **उच्चैः प्रवर्ग्येणेति** उच्चैस्त्वं गुणः'' तप्ते घृतेपयः प्रक्षेपः प्रवृञ्जनम्. तद् यस्मिन् कर्मणि विद्यते, सोऽयं प्रवर्ग्यः, स कर्म विशेषोयथा संपद्यते तथा प्रवृञ्जनं कुर्यादिति तदर्थः।

**यत्रतु तादृशगुणश्रवणाभावः, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थ मनुवादः। यथा – विद्वद्वाक्ययोः। तदभावेतु ''तनूनपातं यजती'' त्यादौ कर्मान्तरमेव करणत्वेनेत्याद्याकरे व्यक्तम्।**

एतदपवाद स्थलमाह – **यत्र त्विति प्रयोजनान्तरार्थमनुवाद इति** विद्वद्वाक्यस्थ लङन्तयजिना प्रकृतत्वादाग्नेयादय स्त्रय एव तत्तत्काल योगिनः पूर्णमास्यमावास्येति नामधेयवशादनूद्यन्ते, तत्प्रयोजनं च यजिनाऽनेकोपादानात्समुदाय द्वयसिद्धिः, यथाऽनेकेषां वृक्षाणामेकदेशस्थितानां वनमित्येक पदेनोपादाना-देक प्रतीतिविषयत्वात्समुदाय सिद्धि स्तद्वत्प्रकृतेपि, तस्या अपि प्रयोजनं ''दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'' तिफलवाक्ये आग्नेयोपांशुयाजाग्नीषोमीयाग्नेय सान्नाय्यैन्द्राग्नानां षण्णमेव यागानां फल सम्बन्ध सिद्धिः तेन कालसम्बन्धरहितानां समिदादि यागानां न तत्फल सिद्धिः स्पष्टं चैदं पौर्णमास्यधिकरणे भाट्टदीपिकायाम्। **विद्वद्वाक्ययोरिति** दर्श पूर्णमासयोः ''य एवं विद्वान् पौर्णमासीं यजते, स यावदुक्थ्ये नोपाप्नोति तावदुपाप्नोति'' य एवं विद्वान् अमावास्यां यजते स यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति'' इति वाक्य द्वयं श्रुतम् तत्र ''यदाग्नेयोष्टाकपालोमावास्यां पौर्णमास्यां चाच्युतो भवती'' त्यादिभिः श्रुत पौर्णमासीकाल सम्बन्धा आग्नेयोपांशुयाजाग्नीषोमीयाः पौर्णमासी वाक्येन श्रुतामावास्याकाल संबन्धा आग्नेयसान्नायैन्द्राग्ना अमावास्या वाक्येन चानूद्यन्ते, न त्वत्राभ्यासात्कर्मभेदः अनन्यपरविधि पुनः श्रुतेरभावात् अन्यपरत्वं चात्रोपपादितमेव समुदाय द्वय सिद्धिरूप' मित्यन्यत्र विस्तरः। एतदपवाद स्थलमाह – **तदभावेत्विति** प्रयोजनान्तराभावेत्वित्यर्थः। इत्यादावित्यादि पदेन ''समिधोयजति'' ''इडो यजति'' ''बर्हिर्यजति'' ''स्वाहाकारं यजति'' इत्येतेषां ग्रहणम्, **कर्मान्तरमेवेति** पञ्चकृत्वोनन्यपरयजि विधि पुनः श्रवणरूप दभ्यासात्कर्मभेद इत्यर्थः। तदाह **करणत्वेनेति** यागेनेष्टं भावयेदिति तदर्थः। आकरे = द्वितीयाध्याय द्वितीयपादे द्वितीयेऽभ्यासाधिकरणे।

**यत्र तु नेष्टसाधनत्वं प्रमितं, स्ववाक्ये चो द्भिदादिव न्न वा तृतीयान्तनामधेयश्रवणं, यथा – ''सोमेन यजेत'' ''अग्निहोत्रं जुहोती'' त्यादौ, तत्र स्ववाक्ये इष्टविशेषानवगमेपि विधि बलेन भावनाया इष्टभाव्यकत्वावगमात्, इष्टसामान्यस्यैव तत्र भाव्यत्वमङ्गीकृत्य धात्वर्थस्य करणत्वमेव। अग्निहोत्र मित्यत्र द्वितीयापि करणत्वार्थिकैवेति साम्प्रदायिकाः।**

प्रमितं = प्रमाणान्तरसिद्धम्। **उद्भिदादिवदिति** मत्वर्थलक्षणाभयादुद्भिच्छब्दस्य कर्मनामधेयत्वं सिद्धान्तितम्। तद्वन्नेति भावः। तत्र = निरुक्तस्थले। भावनायाः = विधिसहकृतायाः। विधेः प्रवर्तकत्वान्वन्यथानुपपत्त्याह **इष्ट भाव्यकत्वेति** तत्र = भावनायाम्। सोमेन यागेनेष्टं भावयेत्, अग्निहोत्रशब्दस्य तत्प्रख्यशास्त्रात्कर्मनामधेयत्वेपि तृतीयान्तत्वाभावाद्धात्वर्थस्य करणत्वमेव। सोमेनेत्यस्य तृतीयान्तत्वेपि नाम धेयत्वाभावात्तत्रापि करणत्वमेवं। सोमपदे मत्वर्थ लक्षणायां तदभावेवा धात्वर्थस्य करणत्वमेव। अग्निहोत्र नामकेनहोमेनेष्टं भावयेदिति द्वितीयवाक्यस्यार्थः। यथाश्रुते होमस्य साध्यत्वाद्भावना कर्मत्वात्तद्भोधिका द्वितीया अग्निहोत्र पदे। वाक्यार्थानु सारेणाह – **अग्निहोत्र मित्यत्र द्वितीयापीति** ''सुपां सुपो भवन्ती'' ति व्यत्ययानुशासनेनाऽऽनुशासनकी लक्षणेत्याह – **करणत्व लक्षणार्थैवेति** साम्प्रदायिकाः = साध्यत्वाभिधायिनी द्वितीया साधनत्वमेव लक्षयतीति वदन्तः पार्थसारथि मिश्रप्रभृतयो मीमांसकाः।

**एतादृशे विषये समानपदश्रुत्या भावनापेक्षितं कर्म धात्वर्थ एव, सुतरा मग्नि होत्र मिति द्वितीयान्तश्रवणे।**

**न चे ष्टसाधनत्वेनाऽज्ञातस्य कर्मत्वानुपपत्तिः, अनिप्सितकर्मत्वेना न्वयोपपत्तेः। न च विधेः प्रवर्तकत्वव्याघातः। विध्यवगतेष्ट भाव्यकत्वज्ञानस्य प्रवृत्तिं प्रतिकारणत्वेपि शाब्दबोधं प्रत्यकारणत्वात्, तदभावेपि होमकर्मक भावनाशाब्दज्ञानोपपत्तेः।**

**न च भाव्यत्वेना न्वितस्य तस्य भाव्यान्तरानाकाङ्क्षत्वात् फलवाक्येपि स्वर्गसाधनत्व-बोधानापत्तिः, साधनत्वेना न्वितस्याऽर्था द्विध्यनुरोधेन कृतिसाध्यत्व ज्ञानवत्, कृतिसाध्यत्वेन बुद्धस्यापि विध्यपेक्षानुरोधेनैव इष्टविशेषसाधनतया वाक्यान्तरेण विश्वजिन्न्यायेन वा बोधोपपत्तेः।**

**अत उत्पत्तिवाक्ये धात्वर्थस्य कर्मत्वेनैवा न्वय इति प्राभाकरोक्तमपि युक्त मिति तद्रसिकाः।**

**सर्वथा सिद्धं धात्वर्थस्य कर्मत्व-करणत्वान्यतर संसर्गेण भावनायां प्रकारते-ति।**

तत्रापि धात्वर्थस्य कर्मत्वमेवेति मतान्तरमाह **एतादृशे विषये इति** "यत्रेष्टसाधनत्वं न प्रमित मित्यादिना प्रदर्शिते विषयेपीत्यर्थः। **धात्वर्थ एवेति** एवं च सोम **वाक्येपि** धात्वर्थस्य कर्मत्वमेवेति भावः। अग्निहोत्रवाक्यं प्रत्याह – **सुतरामग्निहोत्रमिति द्वितीयान्त श्रवणे इति** होमस्य कर्मत्वात्तत्समानाधि-करणस्याग्निहोत्रस्यापि कर्मत्वाद् द्वितीया तत्रानुकलेति भावः **अज्ञातस्येति** तथाचेप्सितत्वाभावात् कर्मत्वानापत्तिरिति भावः। "तथा युक्तं चानीप्सित" 1-4-50 मिति द्वितीय सूत्रेण कर्मत्व सिद्धिरित्याह – **अनीप्सितकर्मत्वेनेति प्रवर्तकत्व व्याघात इति** अनीप्सितत्वे पुरुषार्थत्वाभावात्त द्व्याघात इति भावः। समाधात्ते **विध्यपेक्षेतेति** तदभावेपि = इष्टसाधनत्वज्ञानां भावेपि। भाव्यत्वेनान्वये दोषनाशङ्कते – **न चेति अन्वितस्य** = होमस्य। फलवाक्येपि = "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति वाक्येपि। बोधानापत्ति= होमे तदनापत्तिः। समाधत्ते – **साध्यत्वेनेति** विधेरिष्टसाधनत्वं कृति साध्यत्वं चावगम्यते, तत्रान्यतरास्मिन् **बुद्धे** विध्यपेक्षानुसारेणेतरदपि बुध्यते इति भावः। तदाह **कृतिसाध्यत्वेन बुद्धस्यापीति** वाक्यान्तरेण = होमेनेष्टं भावयेदिति कल्पितवाक्यान्तरेण। लाघवादाह – **विश्वजिदिति** स्व वाक्ये फलस्याबोधने "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वा" दिति विश्वजिदधिकरणे प्रति पादितम् तन्न्यायेनेत्यर्थः। प्राभाकरस्यावकाशं दर्शयति **अत इति** कर्मत्वेनान्वये बाधकाभावादित्यर्थः। उत्पत्ति वाक्ये धात्वर्थस्य करणत्वेनैवान्वय इति भाट्टनयः। तद्व्यतिरेकेणाह **उत्पत्ति वाक्ये धात्वर्थस्य कर्मत्वेनैवान्वय इति** तद्रसिकाः = प्रभाकरमत रसिकाः। प्रकरणार्थमुपसंहरति = सर्वथा-सिद्धमिति

**साम्प्रदायिकास्तु – धातुना स्वार्थवृत्तिकर्मत्वकरणत्वान्यतर ल्लक्षणया प्रतिपाद्यते, तस्यैव स्वनिरूपकत्व-स्वनिरूपकोद्देश्यकत्वान्यतरसंसर्गेण भावनायामन्वयः, न तु कर्मत्वादेरपि संसर्गत्वम्। तथात्वे "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति साहित्यरूपान्वयानुशासन-वैयर्थ्यापत्तेः। न हि पदार्थानुशासनप्रवृत्तानां तेषा मन्वयानुशासकत्वं युज्यते।**

**अतः कर्मत्वकरणत्वादिरूपान्वयोपि वृत्त्यैव पदार्थविधया भासते। अत एव ज्योतिष्टोमेनेति तृतीयापि पदार्थविधया भासमानकरणत्वानुवादिकेति संगच्छते। विशेषणविशेष्ययोः प्रकारतया भासमानकारकवत्त्वस्यौ त्सर्गिकत्वा-दित्याहुः।**

**तत्सिद्धं धात्वर्थस्य सर्वत्र भावनाया मेव प्रकारतेति, सा पर माख्यातोपात्ता कृदाद्युपात्ताच लिङ्गानन्वयिनीति वक्ष्यते, तेन वस्तुपदोपात्तायां भावनायां नाऽन्वयः।**

**इति भावनावादः समाप्तः**

**कर्मत्व करणत्वयो** र्नसंसर्गत्वं, **किंतु** पदार्थत्वमेव, तयोश्च संबन्धान्तरेण भावनान्वय इति **केषाञ्चिन्मतमाह — स्वप्रवाचिकत्वस्येति** शक्त्या धातोः करणत्व कर्मत्वानभिधायाकत्वादाह — **लक्षणयैवेति, तस्यैव = लक्षितस्यैव।** कर्मत्वांशे आह — **स्वनिरूपकत्वेति** स्वं = धात्वर्थ वृत्ति लक्षितं **कर्मत्वम्। करणत्वांशे** आह — **स्वनिरूपकोद्देश्यकत्वेति** तथात्वे = तयोः संसर्गत्वे। सह = सहित **मन्वितमर्थं ब्रूतः** अनेनान्वयस्य पदार्थत्वं स्पष्टमेव प्रतिपाद्यते। तयोः संसर्गत्वे एतत्स्मृति **विरोधोऽपरिहार्य एव,**

**अतः** = एतत्स्मृति **वशात्। वृत्त्यैव** = लक्षणा रूपया वृत्त्यैव। अत एव = तयोर्निरुक्तरीत्या पदार्थत्वादेव। **ननु संसर्गतयाभासमान करणत्वानु** बादकत्वमेवा, स्त्वत आह — **विशेषणविशेष्ययोरिति आहुरिति**, युक्तं **चैतत् अत एव षष्ठाद्यपादान्ते श्रीमता खण्डदेवेन** ''एवं च बलवत्तर विधिश्रुत्यनुरोधेन स्वर्गादेरेव **भाव्यत्वावगतेः सामान्यप्रवृत्ता** पदश्रुतिरपि यागादेः **करणत्वमेव लक्षणया** प्रतिपादयति, **इत्युक्तं भाट्टदीपिकायाम्। तद्व्याख्याने प्रभावल्यां** ''यद्यपीत्यादिना कर्मत्व **करणत्वयोः** संसंर्ग लभ्यत्वमेवेति **वार्तिक मतमुपन्यस्य, तथापीत्यादिना** पदार्थत्वं तयोः साधितंशम्भु भट्टैः। **तत्तु** विस्तरभयान्नेह प्रदर्श्यते। **जिज्ञासुभिस्तत एवावधार्यम्,**

**धात्वर्थस्य सर्वत्र भावनायामेव प्रकारत्वमिति स्व** सिद्धान्तं निगमयति **सतिसत्त्वमिति कृत्यानुपपत्तेति पाचकः पचन इत्यादौ। आदिना कृत पूर्वीकट** मित्यादा चिन्यादेर्ग्रहणम्।

**इति भावनावादः समाप्तः**

**इति प्रथमो भागः**

## प्रथमाविभक्त्यर्थनिरूपणम्

### (सुबर्थस्य भावनान्वयनिरूपणम्। संबुध्द्यर्थश्च)

**एवं सुबर्थस्यापि लिङ्गसंख्याभिन्नस्य तस्यामेवान्वयः प्रकारतयेति ज्ञेयम्। तथाहि – प्रथमार्थस्ताव ल्लिङ्गसंख्याभिन्न [illegible]स्यां प्रकारत्वेनान्वेति। न च तस्याः साधुत्वमात्रार्थ-मुच्चारणेन तदर्थे मानाभावः, सं [illegible]धनेऽभिमुखत्वस्यापि भासमानत्वेन तदसिद्धेः।**

## द्वितीयो भागः

### प्रथमार्थनिरूपणम्

एवं धात्वर्थस्य भावनायामेवान्वय इतिसिद्धान्त मुपपाद्य "वस्तुतस्तु वक्ष्यमाणरीत्याऽन्यसुबन्तार्थवदेक कार्यकारण भावकल्पनानुरोधेने" ति पूर्वोक्तार्थनिर्वहणाय सुबर्थस्यापि भावनायामेव प्रकारतया न्वय इत्याग्रन्थसमाप्ति निरूपयति – **एवं सुबर्थस्यापीति** एवं = धात्वर्थवत्। यद्यपि प्रथमार्थस्य कालादिसाधारण्येना ख्यातार्थकृतावन्वयः प्राक् प्रतिपादितः, तथापितत्र प्रथमाया अर्थो न विचारितः, सोप्यवश्यविचार्य एव, तद्विषये नैयायिकानां विप्रतिपन्नत्वात्, किंच न केवलं प्रथमार्थस्यैव भावनायामन्वयः, किंतु सुबर्थमात्रस्ये त्याशयेनै त त्प्रकरणारम्भ इति बोध्यम्। एतदाशयेनैवोक्तं 'सुबर्थस्ये' ति, सुबर्थलिङ्गसंख्ययोः स्वप्रकृत्यर्थेऽन्वया दाह **लिङ्गसंख्याभिन्नस्येति तस्या मेव** = भावनायामेव। तमेवोपपादयति – **तथाहीत्यादिना** लोके "स्वौजसमौट्" 4-1-2 इत्यादिपाणिनि सूत्रेच प्रथमायाः प्राथमिकत्वा त्प्रथमत स्तदर्थान्वयमाह – **प्रथमार्थ इति** तावदिति वाक्यालङ्कारे। **नचेति** नैयायिकमतेनेय माशङ्का। **साधुत्वमात्रार्थमिति** "न केवला प्रकृतिः प्रयोक्तव्ये" ति नियमेन प्रत्ययं बिना केवलप्रातिपदिकरूपप्रकृतेः प्रयोगानर्हतया तन्नियमपरि पालनायैव प्रथमा प्रयुज्यते, न तु तस्या **अर्थवत्त्व** मिति भावः, तदर्थे =लिङ्गसंख्यातिरिक्तप्रथमार्थे। समाधत्ते – **सं बोधने इति** संबोधनप्रथमायामित्यर्थः। तदसिद्धेः = साधुत्वमात्रार्थमुच्चारणासिद्धेः,

**तच्च प्रकृतशाब्दबोधाश्रयत्वप्रकारकवक्तृभिन्नविशेष्यकवक्त्रिच्छाविषयी भूतशाब्द-ज्ञानवत्त्वम्, प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितवक्तृभिन्ननिष्ठवक्त्रिच्छाविषयतावत्त्वं वा। युष्मत्पदशक्यतावच्छेदकं च तदेव। अस्ति चैवं देवदत्त गामानयेत्यादौ देवदत्त चैत्रो गामानयतीत्यादौ च देवदत्ते। तस्योक्तविधज्ञानवत्त्वात्, तादृशविषयतावत्त्वा द्वा।**

**प्रकृतशाब्दबोधेति** प्रकृतोयः शाब्दबोधः = गवानयन मिष्टसाधनं कृतिसाध्यं चेत्यादिरूपः, तदाश्रय श्चैत्रादिः, तत्त्वप्रकारकं वक्तृभिन्नविशेष्यकं च यद् वक्त्रिच्छाविषयी भूतशाब्दज्ञानं तद्वत्त्वमित्यर्थः। चैत्रस्य एतच्छाब्दबोधो भवत्विति वक्तुरिच्छा। ननूदासीनेपि तच्छब्दश्रोतरि तादृशज्ञानवत्त्वात्तत्राति-व्याप्ति, रित्यत आह – **प्रकृतशाब्दबोधेति** प्रकृतशाब्दबोधनिष्ठा विशेषणत्वाख्या या विषयता तन्निरूपिता वक्तृभिन्ननिष्ठा च या विशेष्यत्वाख्या वक्त्रिच्छीया विषयता तद्वत्त्व मित्यर्थः। उदासीने तादृशेच्छीयविषयताया अभावा न्ना तिव्याप्तिः। तदेव = संबोधनत्वमेव। प्रथमलक्षणाश्रयणेनाह – **उक्तविधज्ञानवत्त्वादिति** द्वितीयलक्षणाश्रयणेनाह **तादृशविषयतावत्त्वादिति**

**नच यत्र स्नुषां बोधयितुं कन्यां संबोध्य वाक्यप्रयोग, स्तत्र स्नुषाया मतिव्याप्तिः, तत्र**

स्नुषायाः सं बोध्यत्वेपि तत्संबोधनस्य **शब्दतात्पर्यविषयत्वाभावेन तस्यां संबोधन-प्रथमानापत्तेः**, तात्पर्यविषयत्वसत्त्वे च **भवत्येव सा। अत एव चेतन एव संबोधन मुख्यम्।** अचेतने तु ज्ञानवत्त्वारोपेण **गौणोव्यवहारः। द्वितीयपक्षेतु मुख्योपिवक्तुं शक्यः। अत एवा द्योदाहरणेऽभिमुखत्वं कर्तृत्वं चेत्युभयं प्रथमार्थः,**

तत्र चाधेयत्वं प्रातिपदिकार्थसंसर्गः, **तयोश्च विषय निरूपकत्वाभ्यां भावनाया मन्वयः,** द्वितीय पक्षे पुन राश्रयत्वनिरूपकत्वाभ्याम्। **अन्त्ये चा भिमुखत्वस्यैव विषयत्वसंसर्गेण, आश्रयत्वेनैव वा।**

**चैत्र मैत्रः** कीदृश इत्यादावपि **"अस्ति भवन्ती" त्यादिना क्रियापदाध्याहारस्या वश्यकत्वा च्छाब्दबोधाविघातः।**

**चैत्र मैत्रो ग्रामं गच्छत्वित्यादौ तु लोडर्थप्रार्थनाविषयीभूतायां भावनायां निरुक्तसंबन्धेन संबोध्यत्वस्य स्वरूपसंबन्धेन स्वनिष्ठव्यापार प्रयोज्यत्वस्य चान्वयः, प्रतीत्यनुसारेण तत्तदर्थकलोडादे रेव तात्पर्यग्राहकत्वात्।**

**अत्र च प्रथमादेशविशेषाणामेव संबोधने शक्तिः, पृथगनुशासन बलात्, हेशब्दादिकं तात्पर्यग्राहकम्। व्यापारप्रयोज्यत्वादौ तु लक्षणैव।**

**कन्यासंबोध्येति** कन्या संबोध्या यस्मिं स्तादृशवाक्यस्य प्रयोग इत्यर्थः। समाधत्ते – **तत्रेति** तत्संबोधनस्य शब्दतात्पर्यविषयत्वे प्रथमा इष्टैवेत्याह – **तात्पर्येति** सा = संबोधन प्रथमा। अत एव = संबोधनत्वस्य ज्ञान-इच्छीयविषयताघटित त्वादेव। अचेतनेतु = शृणोत ग्रावाणः इत्यादौ। द्वितीयपक्षेतु = इच्छीयविषयताघटितद्वितीयपक्षेतु। शक्यः = व्यवहारः,

अत एव = संबोधनस्य चेतन एव संभवादेव। आद्योदाहरणे = संबोध्यस्या ख्यातार्थसामानाधिकरण्य-सत्तास्थले। अभिमुखत्वं = सादरत्वम्, तद्व्यञ्जकं च मुखपरावृत्त्यादि। प्रथमार्थः = संबोधनप्रथमार्थः। **विषयत्वेति** अभिमुखत्वस्य विषयत्वेन कर्तृत्वस्य निरूपकत्वेन चेत्यर्थः। अन्त्ये च = देवदत्त चैत्रो गामानयतीत्यादौ, संबोध्यस्या ख्यातार्थसामानाधिकरण्या भावस्थले, ननु क्रियापदप्रयोगाभावे कथ मन्वयो, त आह **चैत्र मैत्रः कीदृश इत्यादावपीति** अश्रूयमाणक्रियापदकेपीत्यर्थः। **प्रार्थनाबोधकलोडन्तघटिते** विशेषमाह **ग्रामं गच्छत्विति** निरुक्तसंबन्धेन = विषयत्वसंबन्धेन। **स्वनिष्ठेति** स्वं = संबोध्यव्यक्तिः, तन्निष्ठो व्यापारः मैत्रीयग्रामगमनानुकूलप्रार्थनारूपः, तत्प्रयोज्यत्वं भावनायाम्। अत्र च = एतदुदाहरणेषु। **प्रथमादेशेति** प्रथमाया आदेशविशेषः = "एङ्ह्रस्वात्संबुद्धेः 6-1-69 इति सूत्रविहितः संबुद्धिलोप रूप आदेशः, तथा प्रथमानिमित्तका आदेशविशेषाः = "संबुद्धौ च 7-3-106 इत्याबन्तस्य एकारः हे रमे, "अम्बर्थनद्यो र्ह्रस्वः" 7-3-107 इति र्ह्रस्वः हे अम्ब, हे गौरि, ह्रस्वस्य गुणः 7-3-108 इति गुणः हे हरे हे विष्णो। एतेषां संबोधने शक्तिः, गच्छेत्यादावाख्यातलोपे शबादे र्भावनायां शक्ति रिव न तु रामः हरि रित्यादौ विसर्गादिः। पृथगनुशासनात् = "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे" 2-3-46 त्यनुशासनात् पृथक् "संबोधने च" 2-3-47 त्यनुशासनात्। ननु संबोधनस्य प्रथमार्थत्वे हे है भो इत्यादीनां प्रयोगो न स्यात्, **प्रथमयैव तदर्थलाभा दित्यत आह – हे श ब्दादिकमिति** ननु प्रार्थनार्थकलोडन्तसमभिव्याहारे व्यापार प्रयोज्यत्वस्य विभक्त्यर्थत्वं न युक्त, मनुशासना भावा, दित्यत आह – **व्यापारप्रयोज्यत्वेति** लक्षणैव = सांप्रतिकी लक्षणैव।

**चैत्र मैत्रो ग्रामं गच्छतीत्यादौ प्रथमान्ते चैत्रे तार्किकमतेपि भावनाविशेष्यत्वं नास्ति, चैत्रस्य**

**प्रथमार्थरूपाम्य विशेषणत्वात्, तत्रा ख्यातोपात्तसंख्यान्वया भावाच्च, अत स्तैः सं बुद्धिभिन्न-प्रथमान्तपदजन्योपस्थितिरेव भावनान्वयप्रयोजिकेति वाच्यम्। न च तदपि वक्तुं शक्यम। चैत्र गामानयेत्यादौ तदनापत्तेः। न च तत्र त्वंपदाध्याहारः, तथात्वे भो ब्राह्मणाः, त्वं पचेति प्रयोगापत्तिः। न च युष्मदर्थकर्तृसंबुध्द्यो रेकसंख्याकत्वम्। व्युत्पत्त्यन्तरकल्पनापत्तेः। एतेन अभिमुखत्वादेः सर्वत्र प्रातिपदिकार्थप्रकारत्व मित्यपास्तम्, चैत्र मैत्रः पचतीत्यादौ चैत्रे भावनाद्यन्वयापत्तेः।**

'संख्यातिरिक्तसुबर्थः प्रकृत्यर्थविशेष्यततया भासते' इति नियमे संख्याभेदवत् संबोधन भेदोपि-निवेशनीयः। अतः संबोधनस्य प्रकृत्यर्थविशेषणतया भानेपि नक्षतिरिति नैयायिकाः, तदयुक्तम्, चैत्र इत्यादौ चैत्रादे रन्याविशेषणी भूतप्रथमान्तपदोपस्थाप्यतया तत्रा ख्यातार्थकृतेः प्रकारतया न्वयापत्ते-रित्याशयेनाह – **चैत्र मैत्रो ग्राममिति** भावनाविशेष्यत्वम् = तन्निरूपितविशेष्यत्वम्। **नास्तीति** तच्च परेषामिष्टमेव। परंतु तन्नोपपद्यते, तदुक्तरीत्या **चैत्राद्यर्थ**स्यान्याविशेषणतया तत्रा ख्यातार्थभावनान्वयस्य दुर्वारत्वात्। , अतः संबोधनस्यैव विशेष्यत्वं **स्वीकार्यम्**, तदा तन्मते दोषो वार्यत इत्याह **प्रथमार्थरूपेति** प्रथमार्थरूपेसंबोधने चैत्रादे र्विशेषणतयाऽन्याविशेषणत्वा भावा दित्यर्थः। ननु तिङर्थसंख्यान्वयिन्येव तदर्थभावनान्वय इति नियमेन प्रकृते **चैत्रे** तिङर्थसंख्याया अनन्वया द्भावनाया अप्यन्वयो न भवतीत्यत आह – **तत्राख्यातेति अन्वयाभावाच्चेति** अस्य 'न दोष इत्यप्ययुक्त' मिति शेषः। आख्यातार्थसंख्याया नामार्थेऽन्वया भावस्य पूर्व मुक्तत्वादिति भावः। अतः = प्रथमार्थस्य संबोधनस्य प्रकृत्यर्थवि शेषणत्वा-योगात्। **संबुद्धिभिन्नेति** नैयायिकरीत्या चैत्रादे रन्याविशेषणी भूतप्रथमान्तपदोपस्थाप्यतया तत्रा ख्यातार्थान्वयवारणाय संबुद्धिभिन्नेति विशेषण दाने **गौरवमिति** तात्पर्यम्। वाच्यं = वक्तव्यम्। तथापि दोषोदुर्वार इत्याह **नचेति** न हीत्यर्थः। तदनापत्तेः = आख्यातार्थस्य चैत्रेऽन्वयानापत्तेः तद्दोषपरिहारं शङ्कते **नचेति** तथात्वे = आख्यातार्थान्वयवारणाय युष्मच्छब्दाध्याहारे। **प्रयोगापत्तिरिति** संबोधनान्ताख्यातार्थयोः सामानाधिकरण्या भावात्तदापत्तिरिति भावः। तद्दोषपरिहारमपि शङ्कते – **नचेति एकसंख्याकत्वमिति** अत्र शब्दशक्तिरेवबीजम् एतेनेत्यस्यार्थं विशदयति – **चैत्रः मैत्रः पचतीत्यादाविति**

**वस्तुतस्तु अस्मन्मतेपि चैत्र मैत्रः पचतीत्यादौ चैत्रस्य कर्तृत्वेन भावनान्वयस्य निवारयितु मशक्यत्वा त्सर्वत्र सं बोधन मेव संबुद्धिप्रथमाया अर्थः 'न तु कर्तृत्वमपि' चैत्र पचेत्यादौ मध्यमपुरुषस्थले आख्यातेन संबोध्याया स्तद्व्यक्ते रेव कर्तृत्वेन लक्षणा न्न संबोध्याति-रिक्तस्य कर्तृत्वप्रसङ्ग इति ध्येयम्। अतो द्वितीयादिसुबर्थसाधारण्येन प्रथमासुबर्थस्यापि भावनायां प्रकारत्वमेव सर्वत्र युक्तम्।**

### इति सुबर्थस्य सं बुध्द्यर्थस्य च भावनान्वयनिरूपणं समाप्तम्

आख्यातसमानाधिकरणे **चैत्र** गामानयेत्यादौ कर्तृत्वं विभक्त्यर्थ इति समनन्तर मेवोक्तम्, तदपि न युज्यत इत्याह – **वस्तुतस्त्विति अशक्यत्वादिति** प्रत्ययेन तस्यो पात्तत्वादिति भावः। सर्वत्र = आख्यातसमाना धिकरणस्थलेपि। ननु कर्तृत्वस्य संबोधनविभक्त्यर्थत्वा भावे चैत्र पचेत्यादौ चैत्रा दन्यस्यापि पाकादिकर्तृत्वापत्ति रित्यत आह **चैत्र पचेत्यादाविति लक्षणादिति** अस्मन्मते आख्यातस्य कर्तृत्वे लक्षणा स्वीक्रियते उपपादितं चैतत्प्राक्। सा च संबोध्यव्यक्तेरेव कर्तृत्वेन स्वीक्रियते। अतो न दोष इति भावः। प्रकरणार्थमुपसंहरति **अत इति** प्रथमाया अपि लिङ्गसंख्यातिरिक्तसंबोधनरूपार्थवत्त्व स्वीकारादित्यर्थः।

**(अथ पाणिनिमतेन प्रथमार्थनिरूपणम्।)**

**न च संबोधन प्रथमाया लिङ्गसंख्ययोरिव संबोधनरूपार्थवत्त्वेपि तदतिरिक्तार्थाभावा च्चैत्रः पचतीत्यादौ प्रातिपदिकार्थातिरिक्तस्य विशेष्य भूतार्थस्या भावेन कथं द्वितीयादि साधारण्येन सर्वत्र प्रथमार्थस्य प्रकारत्व मितिवाच्यम्। असंबुद्धिप्रथमाया अपि अनुशासन बलेन लिङ्गसंख्याव्यतिरिक्तार्थवाचित्वावगतेः।**

ननूक्तरीत्या संबोधनप्रथमायाः प्रातिपदिकार्थातिरिक्तसंबोधनरूपार्थवत्त्वेन तदर्थस्य द्वितीयादिसुबर्थ-साधारण्येन भावनायामन्वयो स्तुनाम, प्रातिपदिकार्थेत्यादि सूत्रविहित प्रथमाया स्तादृशार्थकत्वा भावा त्तत्र त्वदुक्तनियमस्य व्यभिचार एवेत्याशयेना क्षिपति **नचेति लिङ्गसंख्ययोरिवेति** ''प्रातिपदिकार्थलिङ्गे'' त्यादिना लिङ्गे प्रथमाया विधानात्तदर्थकत्वं, ''द्व्येकयो र्द्विवचनैकवचने'' 1-4-22 ''बहुषुबहुवचनम्'' 1-4-23 इति शास्त्रबला त्तस्याः संख्यार्थकत्वं च सिद्धम् तद्वदित्यर्थः। ''संबोधने चे'' 2-3-47 ति शास्त्रबला दाह — **संबोधनरूपार्थवत्त्वेपीति तदतिरिक्तार्थाभावादिति** संबोधनप्रथमातिरिक्तायाः प्रथमाया अर्थाभावादित्यर्थः — **विशेष्य भूतार्थस्येति** प्रातिपदिकार्थचैत्रापेक्षया विशेष्यभूतस्येत्यर्थः। **द्वितीयादीति** घटं घटेनेत्यादौ प्रातिपदिकार्थघटापेक्षया कर्मत्वकरणत्वादीना मर्थानां सत्त्वा तदर्थस्य भावनान्वयो स्तुनाम तद्वदत्रार्था भावात्कथं तत्साधारण्येन प्रथमार्थस्य भावनायां प्रकारत्वमिति भावः। सर्वत्र = प्रथमासामान्ये। प्रकारत्वं = भावनायाम्। तथाच 'द्वितीयादिसुबर्थसाधारण्येन प्रथमासुबर्थस्यापि भावनायां प्रकारत्व' मिति भवदुक्तिर्न घटत इत्याशयः। **अनुशासन बलेनेति** व्याकरणानुशासनबलेनेत्यर्थः। तच्च पाणिनीयं कात्यायनीयं च। **लिङ्गसंख्याव्यतिरिक्तेति** सचार्थः पाणिनिमते चैत्रादिः प्रातिपदिकार्थः, स एव प्रथमावाच्यः, कात्यायनमतेऽभिहि तकर्तृत्वादिरिति विवेकः।

**तथाहि पाणिनिमतं तावत् ''प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'' 2-3-46 इति सूत्रात् प्रातिपदिकार्थ एव। इदं हि लिङ्गाद्यंशे शक्यत्वानुशासनवत् प्रातिपदिकार्थांशेपि शक्यत्वानुशासन मेव, न तु प्रातिपदिकार्थे प्रातिपदिकेन विवक्षिते प्रथमायाः साधुत्व मित्येवंपरम्, वैयर्थ्यापत्तेः, वैरूप्यापत्तेश्च। अतश्च प्रातिपदिकार्थ श्चैत्रादिरेव प्रथमार्थः।**

प्रथमं पाणिनिमतेन प्रथमार्थ निरूपयति **तथाहि पाणिनिमतं तावदित्यादिना-प्रथमार्थनिष्कर्ष इत्यन्तेन ग्रन्थेन। प्रातिपदिकार्थ एवेति** चैत्रादेः प्रातिपदिकस्य यो र्थश्चैत्रादिः स एव प्रथमाया अर्थ इत्यर्थः। ननु ''नकेवला प्रकृतिः, प्रयोक्तव्ये' तिनियमपरिपालनायैव प्रथमा प्रवर्तते तदनुवादकमेवेदं पाणिने रनुशासनम्, न त्वतिरिक्तशक्यार्थबोधक मित्यत आह **इदं हीति** हिशब्दः प्रसिद्धिं द्योतयति इदं = प्रातिपदिकार्थेत्यादि पाणिनीय मनुशासनम्। **लिङ्गाद्यंश इति** आदिना परिमाणस्य ग्रहणम्। अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थावगतिः। घट इति प्रातिपदिकाज्जातिर्व्यक्तिश्च बोध्यते, न तु लिङ्गादिकमपि, अमादिप्रत्ययश्रवणवेलायां तदवगम्यते। अतः, प्रत्ययवाच्यमेव लिङ्गादि। अत एव ''तस्माच्छसोनः पुंसि'' 6-1-103 आङो नाऽस्त्रियाम्'' 7-3-120 इत्याद्यनुशासनं संगच्छते। एवं च लिङ्गं प्रत्यय वाच्यमेव लिङ्गे प्रथमाविधानं शक्यार्थमादायैव प्रवृत्तम्, न त्वनुवादरूपम्, तद्वत्प्रातिपदिकार्थे प्रथमाविधानमपि शक्यार्थमादायैवेति भावः। नैयायिकोक्तिं खण्डयति **नत्विति वैयर्थ्यापत्तेरिति** ''स्वौजसमौडि'' 4-1-2 त्यादिसामान्यशास्त्रेणैव साधुत्वार्थ प्रथमायाः सिद्धत्वात् पुन स्तदर्थं ''प्रातिपदिकार्थे'' त्यादिना प्रथमाविधानं व्यर्थमेवस्यादित्यर्थः। नन्वनुवादकतया सूत्रं सार्थक, मत आह — **वैरूप्यापत्तेश्चेति** प्रातिपदिकार्थेत्यादिसूत्रं लिङ्गाद्यंशे शक्यार्थबोधकम्, प्रातिपदिकार्थांशेऽनुवादक मिति वैरूप्यापत्ति रिति भावः। अतश्च = तस्य शक्यार्थानुशासकत्वात्। **प्रातिपदिकार्थ इति** ''अर्थवदधातु रप्रत्ययः ।

प्रातिपदिकम्" 1-2-45 "कृत्तद्धितसमासाश्च" 1-2-46 तिलक्षणलक्षितं यत् प्रातिपदिकं चैत्र मैत्र घट पट इत्यादि तस्य योर्थ श्चैत्रमैत्रघटपटादिः स एव प्रथमाया अर्थ इत्यर्थः।

**नचैवमपि तस्य प्रातिपदिकेनैव बोधसिद्धेः प्रथमाया स्तदंशे साधुत्वार्थ मनुवादकतया न प्रथमार्थस्या न्यत्र प्रकारतेति वाच्यम्। प्रातिपदिकस्यैव प्रथमार्थविशेषतात्पर्यग्राहकत्वा-ङ्गीकारेण प्रथमार्थस्याऽन्यत्र प्रकारत्वे बाधकाभावात्, इतरथा सुबर्थप्रकारकशा ब्द-बुद्धित्वावच्छिन्नं प्रति धात्वादिपदजन्योपस्थितिः कारणमित्येवं विधकार्यकारणभावे प्रथमातिरिक्तत्वप्रवेशे गौरवात् प्रकृत्यर्थस्य प्रत्ययार्थं प्रति प्रकारत्वे प्रथमान्तप्रातिपदिकाति-रिक्तत्वप्रवेशे गौरवाच्च, आख्याताद्यर्थभावनादेः प्रथमान्तार्थं प्रति प्रकारत्वे व्युत्पत्त्यन्तर कल्पनापत्ते श्च।**

नैयायिकः पर्यनुयुङ्क्ते — **नचेति** एवमपि = अवैरूप्याय प्रातिपदिकार्थांशेऽपि सूत्रस्य **शक्यार्थबोधकत्व** स्वीकारे। तस्य = प्रातिपदिकार्थत्वेनाभिमतस्य चैत्रमैत्रादेः। प्रातिपदिकेनैव = चैत्र मैत्र इत्यादि प्रथमाप्रकृतिरूपप्रातिपदिकेनैव **बोधसिद्धेरिति** प्रकृतिप्रत्ययोरुभयोरप्येकार्थकत्वादिति भावः, तदंशे = प्रातिपदिकार्थांशे। **साधुत्वार्थमिति** प्रकृत्याऽलब्धस्य लिङ्गादे र्बोधनाय तदंशे प्रथमायाः शक्तत्वावश्यकत्वेऽपि प्रातिपदिकार्थांशेऽतथात्वा त्तस्या अनुवादकत्वमेवेति भावः। **न प्रथमार्थस्येति** एवं च "द्वितीयादिसुबर्थसाधारण्येने" त्युक्त मयुक्तमेवेति भावः। **प्रातिपदिकस्यैवेति** चैत्रः मैत्र इत्यादौ **प्रथमाया एव चैत्र मैत्रादि र्वाच्योर्थः।** प्रथमायाः सामान्यार्थकतया तद्विशेषः क इति विशेषजिज्ञासायां चैत्रादिप्रातिपदिकं तद्विशेषावगमकतयोपयुज्यते, एवंच "तस्यापत्यम्" 4-1-92 इत्यादिव त्सूत्रे प्रातिपदिकार्थग्रहणं चैत्रादीनां संग्राहकमेवेति भावः। तदाह — **प्रथमार्थविशेषेति** तथाच प्रथमाया न साधुत्वमात्रार्थता, किन्तु चैत्रादिवाचकत्वं तस्याः परंतु केवलस्य प्रत्ययस्य प्रयोगानर्हत्वा त्तावता चैत्रादिविशेषार्थानवगमाच्च तदर्थं प्रातिपदिकस्य प्रयोगः। एवं च प्रथमाया उत्पत्तेः प्राक् चैत्रादिप्रातिपदिकं चैत्राद्यर्थबोधकम् तदुत्पत्ते रनन्तरं चैत्राद्यर्थबोधकत्वं तस्या एव प्रथमाया स्तत्तदर्थवाचकत्वे चैत्रादिप्रातिपदिकं तात्पर्यग्राहकमेवेति भावः, प्रथमार्थस्य = चैत्रादेः। अन्यत्र = भावनायाम्। **बाधकाभावादिति** तथाच 'द्वितीयादिसुबर्थसाधारण्येने' त्यादिर्मदुक्तिर्युक्तैवेति तात्पर्यम्, इतरथा = नैयायिकोक्तरीत्या प्रथमायाः साधुत्वमात्रार्थकत्वे। तण्डुलं पचतीत्याद्यनुरोधेनाह **सु बर्थप्रकारकेति** धात्वादीत्यादिपदेन निपाताख्यातयो र्ग्रहणम्। **प्रथमातिरिक्तत्वेति** प्रथमाया अन्ततो निरर्थकतया तत्र निरुक्तकार्यकारणभावस्य व्यभिचार वारणाय प्रथमातिरिक्तत्वप्रवेशस्यावश्यकतया तत्स्वीकारे गौरवमिति भावः। गौरवान्तरमुद्भावयति **प्रकृत्यर्थस्येति प्रकारत्वे इति** घटं घटेनेत्यादौ द्वितीयादीना कर्मत्वाद्यर्थकतया तत्र प्रकृत्यर्थान्वयाय प्रकृत्यर्थप्रकारकशाब्दत्वावच्छिन्नं प्रति विशेष्यतया प्रत्यय-जन्योपस्थितिः कारणमिति कार्यकारण भावः स्वीकार्यः। **प्रथमान्तेति** चैत्र इत्यादौ प्रकृतिप्रत्यययोः सत्त्वेऽपि प्रत्ययस्यातिरिक्तार्थाबोधकत्वा त्तत्र निरुक्तकार्यकारणभावस्य व्यभिचार वारणाय प्रथमान्तप्राति-पदिकातिरिक्तत्वनिवेशे गौरवमिति भावः। नैयायिकमते गौरवान्तरं दर्शयति — **आख्यातादीति** भावना = कृतिः। आख्यातार्थकृति-संख्याप्रकारकबोधेप्रथमार्थोपस्थितिः कारणमिति कार्यकारण भावः स्वीकार्यः तत्र प्रथमाया निरर्थकतया तत्प्रकृत्यर्थोपस्थितिः कारणमिति व्युत्पत्त्यन्तरस्वीकारे गौरवमिति भावः।

**अतो लाघवा त्सुबर्थत्वेन प्रथमार्थस्यापि चैत्रादे राख्यातार्थभावनाया मेव प्रकारता। अत एव एतादृशे विषये प्रकृत्यर्थस्य चैत्रादे र्न प्रथमार्थचैत्रादावन्वयः, प्रकृतिप्रत्ययार्थयो र्व्युत्पन्नस्य भेदान्वयस्य बाधात्। अभेदान्वयस्य चा व्युत्पन्नत्वात्। अतः प्रातिपदिकं तत्र प्रथमार्थविशेष-**

**तात्पर्यग्राहकमेव। प्रथमोपस्थापितस्तु स एवाख्यातार्थ भावनान्वयी। न चैव माख्यातपदाभावे तस्या नन्वय., काष्टै रोदन मित्यादौ क्रियापदाध्याहारेणैव नीलोघट इत्यादावपि अस्तीत्यध्याहारस्यानुशासनशिष्टतया सुतरा मुपपत्तेः।**

अतः = प्रथमायाः साधुत्वार्थकत्वेऽनेकव्युत्पत्तिकल्पनापत्तेः। लाघवात् = एककार्यकारणभावकल्पनालाघवात्। **प्रकारतेति** यः, प्रातिपदिकार्थ श्चैत्रादिः, स एवेदानीं प्रथमाविभक्त्यर्थः संपन्नः। अत इतरसुबर्थसाधारण्येन तस्यापि भावनायामेव प्रकारतेति भावः। ननु घट मित्यादौ प्रकृत्यर्थो धर्मी, प्रत्ययार्थः कर्मत्वादिर्धर्मः। अत स्तत्र प्रकृत्यर्थप्रत्ययार्थयो र्भेदेनान्वयो स्तुनाम। चैत्र इत्यादौ प्रकृतिप्रत्ययार्थयो रेकधर्मिरूपतया तयो रभेदान्वयस्यैव वक्तव्यतया तत्र तव व्युत्पत्त्यन्तरकल्पनापत्ति रित्यत आह – **अत एवेति** एतादृशविषये = प्रकृतिप्रत्ययार्थयो रेकत्वस्थले। अत एवेत्यस्याभिप्रायमाह – **प्रकृतिप्रत्ययार्थयोरिति अव्युत्पन्नत्वादिति** ऐन्द्रं दधीत्यादावपि तयो र्भेदेनैवान्वयो द्वितीयाप्रकरणे मूले वक्ष्यते. अतः = अभेदेनान्वयायोगात्। तत्र = प्रातिपदिकार्थे प्रथमान्तस्थले। **पथमार्थविशेषेति** प्रातिपदिकार्थे प्रथमाया विधानेन नियमेन तद्विशेषाकाङ्क्षायाः सत्त्वात्तच्छान्त्यर्थं विशेषसमर्पणाय प्रातिपदिकं तात्पर्य ग्राहक मिति भावः। प्रथमोपस्थापितः = प्रथमाया विभक्तयो पस्थापितः। स एव = चैत्रादिरेव। एवं च चैत्र इत्यादौ प्रकृतिप्रत्ययार्थयो रन्वय एव नास्ति, प्रातिपदिकस्य तात्पर्यग्राहकत्वाश्रयणेन प्रथमाया एव चैत्राद्यर्थकत्वात्, इदानीं चैत्रस्य सुबर्थतया द्वितीयादिसुबर्थसाधारण्येन भावनायामन्वयो निराबाध इति भावः। एवम् = प्रथमार्थस्य भावनान्वय नियमस्वीकारे। आख्यातपदाभावे = घट इत्येतावन्मात्र प्रयोगे। तस्य = प्रथमार्थस्य। समाधत्ते **काष्टैरिति** अत्र करणत्वकर्मत्वयो रन्वयान्य थानुपपत्त्या पचतीत्यादे रध्याहारेणान्वयः स्वीक्रियते, तद्वदत्रापीति भावः। अनुशासनशिष्टतया = "अस्ति र्भवन्तीपर" इति कात्यायनीयानुशासन शिष्टतया। **सुतरामिति** अनुशासना भावेपि कारकाणां भावनान्वयनियमवशादाख्यातपद मध्याह्रियते, किमुवक्तव्य मनुशासनसत्त्वे इति भावः.

**नीलपदस्यापि वक्ष्यमाणरीत्या नीलगुणे नीलत्वजातौ वा शक्तस्य लक्षणया लक्षितलक्षणया वा नीलत्वावच्छिन्न गुणविशिष्टद्रव्यपरस्य तात्पर्यग्राहकत्वा त्तदुत्तरप्रथमोक्तस्य तद्द्रव्यस्यापि न घटेन सहाऽभेदेना न्वयः, अपितु घटवदेव अस्तीत्याख्यातोपात्त भावनायामेव। एकव्युत्पत्त्यैव शाब्दबोधोपपत्तेः, इतरथा विशेषणवाचकनामार्थस्या भेदसंबन्धेन नामार्थान्तरान्वयकल्पना तदुत्तरद्वितीयादिविभक्तेरपि साधुत्वार्थकत्वकल्पना, प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वयव्युत्पत्ते श्च विशेषणवाचकप्रकृति भिन्नविषयत्वकल्पनेत्येवं गौर वापत्तेः।**

ननु समानाधिकरणनामार्थयो रभेदान्वय इति व्युत्पत्त्या नीलो घट इत्यादौ नील इतिप्रथमान्तार्थस्य भेदेन घटेऽन्वया त्प्रथमान्तार्थस्य भावनान्वयव्युत्पत्तिभङ्गो दुर्वार इत्यत आह – **नीलपदस्यापीति** इदं च विशिष्टद्रव्यपरस्ये त्यनेनान्वेति। नैयायिकमतेनाह **नीलगुण इति** आकृत्यधिकरणसिद्धान्तरीत्याह **नीलत्वजातावित** लक्षणया = गुणबोधकस्य स्वाश्रये लक्षणया। **लक्षितलक्षणयेति** नीलगुणत्वजात्या स्वाश्रयोगुणः, तेन स्वाश्रयो द्रव्यं लक्ष्यते द्विरेफपदेन लक्षितलक्षणया भ्रमरबोधवदिति भावः। **नीलत्वेति** तदवच्छिन्नो यो गुण स्तद्विशिष्टेत्यर्थः। तदुत्तरप्रथमोक्तस्य = तादृशनीलपदोत्तरप्रथमाविभक्तिबोधितस्य। तद्द्रव्यस्यापि = निरुक्तरीत्या लब्धस्य वस्तुनो घटरूपद्रव्यस्यापि नामार्थयोः परस्परमन्वयोनेति मीमांसकसिद्धान्तमाश्रित्याह – **न घटेन सहाभेदेनान्वय इति** समानाधिकरणनामार्थयो रभेदेनान्वय इति व्युत्पत्ति नो स्पर्शयत इति भावः। नहि नीलपदोपात्तार्थस्य कुत्रान्वय इत्यत आह **अपित्विति** सर्वेपां

पदार्थानां भावनायामेवान्वय इति स्वसिद्धान्तेनाह – **घटवदेवेति** घटपदोपात्तघटस्यैवेत्यर्थः। सर्वसंमतत्वादस्य दृष्टान्तत्वम्। एक व्युत्पत्त्यैव = सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति आख्यातपदजन्योपस्थितिः कारणमित्येकव्युत्पत्त्यैव। **शा ब्द बोधोपपत्तेरिति** तथाच नीलोघट इत्यादौ नीलाभिन्नो घट इतिना भेदबोधः। किंतु नीलघटपदार्थयोरुभयोरपि पृथगेवाख्यातार्थान्वयेन नीलवृत्ति सत्ताश्रयत्वं घटवृत्तिसत्ताश्रयत्व मिति पृथक्पृथगेव शाब्दबोधः, नीलोऽस्ति घटोऽस्ति इति च योजना कार्येति भावः, **इतरथा** = निरुक्तार्थास्वीकारे। समानाधिकरणनामार्थयो रभेदान्वय इति व्युत्पत्त्यभिप्रायेणाह – **विशेषणवाचकेति** कल्पना = अपूर्वतया कल्पना। **तदुत्तरेति** नीलं घट मानयेत्यादौ विशेषणवाचक-पदोत्तरद्वितीयेत्यर्थः। आदिना नीलेन घटेन जलमाहरेत्यादौ तृतीयादे ग्रहणम्। **सधुत्वार्थकत्वेति** एषाऽनुभवविरुद्धाऽनुशासनरहिताचेति भावः। गौरवान्तरमाह – **प्रकृत्यर्थस्येति** प्रकृत्यर्थस्य प्रत्ययार्थेन्वयस्य सार्वत्रिकस्य विशेषणवाचकप्रकृति भिन्नत्वेन संकोचः कर्तव्य इत्यतिगौरवम्, अस्मन्मतेतु न किञ्चिद्बाधकमिति भावः।

**न च नीलघटयो रभेदानुभवानुरोधेन गौरवाङ्गीकरणमपि नदोष इति वाच्यम्। प्रथमाद्वयार्थस्य नीलगुणविशिष्टस्य घटस्य च कर्तृतासंसर्गेण शाब्दबोधे भावनाविशेष्यके जाते पश्चाद् घटस्य परिच्छेदकीभूतगुणापेक्षायां गुणविशिष्टस्य च जात्यपेक्षायां मानसोऽ-भेदानुभव ति पार्ष्टिकबोधमादायानुभवोपपत्तेः।**

नैयायिकः पर्यनुयुङ्क्ते – **नचेति** अभेदानुभवानुरोधेन = नीलाभिन्नोघट इति सर्वानु भवसिद्धाभेदानु भवानुरोधेन। **गौरवाङ्गीकरणमपि नदोष इति** अनुभवस्यापलपितु मशक्यत्वादिति भावः। प्रथमाद्वयार्थस्य = विशेषणविशेष्यवाचकप्रथमाद्वयार्थस्य। नीलगुणविशिष्टस्य = विशेषणार्थस्य। घटस्य = विशेष्यस्य। एतादृशप्रथमाद्वयार्थस्य, **भावनाविशेष्यके इति** कर्तृता संसर्गेण नीलगुणविशिष्टवती भावना। तत्संबन्धेन घटविशिष्टा भावनेति प्राथमिकोबोधोजायते, कारकाणां भावनान्वय नियमात्। अभेदानुभवस्य कागति रत आह – **पश्चादिति** निर्गुणस्य द्रव्यस्या भावादाह – **परिच्छेदकी भूतेति** गुणविशिष्टस्य = द्रव्यस्य। अनुभवोपपत्तेः = नीलाभिन्नोघट इत्यनु भवोपपत्तेः। एवं चा रुणैकहायनीन्यायेन विशेषणविशेष्ययोरुभयोरपि पृथग्भावनायामेवान्वयः। मानसबोधमादाया भेदानु भव उपपद्यते। द्वितीयान्तस्थलेतु नैवम्। भावनाया एककर्मकत्व भङ्गापत्तेः, निरूपितं चैतत्प्रागिति बोध्यम्.

## (अरुणैकहायन्योरभेदभानप्रकारः)

**नच शब्दादभासमानस्याभेदस्य वेदोत्थज्ञानविषयत्वा भावा दरुणयैकहायन्येत्यत्र आरुण्यस्य एकहायन्या मकरणेपि दोषा भावापत्तिः। वेदापेक्षितार्थ विषयकस्य मानसस्यापि ज्ञानस्य वेदतात्पर्यविषयतया वेदोत्थत्वात्। न हि वेदपद वृत्तिविषयत्वं वेदजन्य शाब्दबोधविषयत्वमेव वा वेदतात्पर्यविषयत्व प्रयोजकम्। तथात्वे "इमा मगृभ्णन् रशनामृतस्ये त्यश्वाभिधानी मादत्ते" इत्यत्र शाब्दबोधे मन्त्राश्वाभिधानी संबन्धमात्रस्यैव विषयीकरणात् तस्य च लिङ्गकल्पयश्रुत्यैव सिद्धाधेतद्वाक्यवैयर्थ्यापत्ते स्तत्परिहारार्थ-मनुमीयमानस्य लैङ्गिकश्रुत्य भावस्यापि वेदतात्पर्यविषयत्वानापत्तेः परिसंख्याफलकत्वाना-पत्तिः। अतो वेदापेक्षाशामकज्ञानविषयत्वमेव वेदतात्पर्यविषयत्व प्रयोजकम्। तच्च गुणविशिष्टद्रव्यस्य एकहायन्यादेश्चा भेदेपि अक्षत मेव।**

**नचेति** अयमर्थः-नीलोघट इत्यादा व भेदानुभवो मानसो नतु शाब्द इत्यङ्गीकारे "अरुणया पिङ्गाक्ष्या

कहायन्या सोम क्रीणाती'' त्यत्रापि एकहायन्या मारुण्य विशिष्टद्रव्या **भेदस्य शब्दा दभासमानतया** वेदजन्यज्ञानाविषयत्वा देकहायन्यां तस्या नन्वयेपिक्षत्य भावा द्गुणान्तरविशिष्टाया अप्येकहायन्याः क्रयणसाधनतापत्ति-र्रिति। अभेदस्य मानसत्वाङ्गीकारादाह – **श ब्दादभासमानस्येति दोषाभावा-पत्तिरिति** अरुणावाक्ये आरुण्यस्य एकहायन्याश्च प्रथमतः क्रयणभावनाया मन्वयेपि पाश्चात्यबोधे आरुण्या भेदस्यै कहायन्यां भानात्तद्गुणविशिष्टाया एव क्रयणसाधनत्वमभीष्टं सिध्यति। अभेदस्य-मानसत्वेत् निरुक्तरीत्या तस्यैकहायन्या मनन्वयेपि वेदोक्तार्थानुल्लङ्घना द्गुणान्तरविशिष्टाया अपि क्रयणकरणत्वापत्तिरिति तात्पर्यम्। समाधत्ते – **वेदापेक्षितेति** अयमर्थः-वेदापेक्षितार्थविषयकस्य मानसस्यापि ज्ञानस्य वेदतात्पर्यविषयत्वमस्तीति तादृशमानसज्ञानविषयस्यारुण्याभेदस्यापि वेदार्थत्व मस्ति। अत एकहायन्या मारुण्यस्यान्वय एवेति तदकरणे दोषः। न हि यो वेदघटकपदवृत्तिविषयो वेदजन्यशाब्दबोधविषयोवा स एव वेदतात्पर्यविषय इति नियमोस्ति। किंतु **वेदापेक्षितो योर्थः**, स एव वेदतात्पर्यविषयः, स पदवृत्तिविषयो वा शाब्दबोधविषयो वा मानसानुभवविषयोवा स्तु। न तत्र नैर्भर्य किमपी-ति। तदाह – **मानसस्यापिज्ञानस्येत्यादिना वेदतात्पर्यविषयत्वप्रयोजकत्वमित्यन्तेन ग्रन्थेन।** संसर्ग लभ्यार्थाभिप्रायेणाह – **वेदजन्यशाब्दबोधेति** विपक्षेबाधकमाह – **तथात्वे इति** तथानियमस्वीकारे इत्यर्थः। **इमामगृभ्णन्निति** अगृभ्णन् = आगृह्णन्, हृग्रहोर्भश्छन्दसिहः इत्यनेन **ग्रहधातो**र्हकारस्य भकारः। अभिधीयते = बध्यतेऽनयेति अभिधानी, करणेल्युट् बन्धनसाधनं रज्ज्वादि। **अयमर्थः–** यदि तथानियमः क्रियते, तदा ''इमा मगृभ्णन् रशनामृतस्ये त्यश्वाभिधानी मादत्ते'' इति **मन्त्रविनियोग**विधेः परिसंख्याफलकत्वानापत्तिः। तथाहि – अनेन मन्त्रेण अश्वरशनाग्रहणे 'इमामगृभ्ण' न्निति**मन्त्रोऽङ्गमि**ति बोध्यते। तत्रार्थप्रकाशन सामर्थ्यरूपा लिलङ्गाद्रशनासामान्यग्रहणेऽङ्गत्वेन प्राप्तोऽयं मन्त्रो रशनाग्रहणत्वसामान्या दश्वरशनाग्रहणेप्यङ्गत्वेन प्राप्त इति लिङ्गेन तत्कल्प्यश्रुत्या वा मन्त्रस्या श्वरशनाङ्गत्वे सिद्धे तद्बोधकं विनियोजकवाक्यं व्यर्थमित्याशङ्कायां लिङ्गकल्पयश्रुत्याहि गर्दभरशनाग्रहणेऽश्वरशनाग्रहणेचोभयत्र "**इमां मगृभ्ण**" न्निति **मन्त्र संबन्धो**ऽवगम्येत। अनया प्रत्यक्षयाविनियोजकश्रुत्या तु **अश्वरशनाग्रहण** एव मन्त्र संबन्धो बोध्यते। तेन गर्द भरशनारूपशेषिणो निवृत्तिः फलम्। एवं **च प्रत्यक्षश्रुतिबलाल्लिङ्गकल्पनीयश्रुत्यभावो** नुमीयते। लिङ्गकल्प्या श्रुतिश्च "इमा मगृभ्ण" न्निति मन्त्रेण रशनां गृह्णीयादि ति, तादृशश्रुत्यभावाद्गर्दभर-शनायां मन्त्र संबन्धो नास्तीति पर्यवस्यति। **एवंचा** नुमीयमानस्य श्रुत्यभावस्य वेदतात्पर्यविषयत्वा भावे परिसंख्याफलकत्वं **विनियोजकवाक्यस्य न सिध्येत्**। अतो वेदपदवृत्त्यविषयस्यापि वेदजन्यशाब्दबोधा-**विषयस्यापि अनुमीयमानस्य वा मानसविषयस्य वा** वेदतात्पर्यविषयत्वं वेदापेक्षाशामकज्ञानविषयत्वमेवा ङ्गीक्रियते। **एक हायन्या मारुण्यविशिष्टद्रव्याभेदस्यापि** परिच्छेद्यपरिच्छेदकाङ्क्षाशामकज्ञान-**विषयत्वाद्वेदतात्पर्यविषयत्वमस्त्येवेति** सिद्ध-मिति। एतदेव विशदयति – **इमामगृभ्णन्नित्यादिना अक्षतमेवेत्यन्तेन ग्रन्थेन मन्त्राश्वाभिधानीति** मन्त्रस्या श्वरशनाग्रहणेऽङ्गत्व मित्येतावन्मात्रस्यैव विषयीकरणादित्यर्थः। तस्य = **मन्त्रस्या श्वाभिधान्यङ्गत्वस्य**। **लिङ्गकल्प्येति** रशनेत्यर्थप्रकाशन-सामर्थ्यरूपलिङ्गेन कल्प्यया 'इमा मगृभ्णन्निति मन्त्रेण रशनां गृह्णीया' दिति श्रुत्यैवेत्यर्थः। **सिद्धाविति** कल्पितश्रुत्या गर्दभरशनाग्रहणेऽश्वरशनाग्रहणेचो भयत्रापि मन्त्रसंबन्धावगत्या श्वरशनासंबन्धस्यापि मन्त्रस्य सिद्धावित्यर्थः। **एतद्वाक्येति** ''इत्यश्वाभिधानी मादत्ते'' इति **ब्राह्मणवाक्येत्यर्थः**। तत्परिहारार्थम् = तद्वाक्यवैयर्थ्यपरिहाराय। **वेदतात्पर्यविषयत्वानापत्तेरिति** त्वदुक्तरीत्या कल्पितश्रुत्य-**भावस्य वेदस्थपदवृत्त्यविषयत्वा द्वेदजन्यशाब्दबोधाविषयत्वाच्च** तत्त्वानापत्ते रित्यर्थः। नन्विष्टापत्तिरेवे त्यत आह – **परिसंख्याफलकत्वानापत्तिरिति** गर्दभरशनारूपशेषिनिवृत्तिरूपपरिसंख्यारूपफलानिर्वाहो दोष इति भावः। स्वसिद्धान्तं निगमयति – **अतश्चेति** निरुक्तनियमे दोषसद्भावादित्यर्थः। तच्च =

तादृशवेदतात्पर्यविषयत्व च। अभेदेपि = मानसाभेदेपि। **अक्षतमेवेति** अतो नीलोघट इत्यादा वभेदभानं मानसमिति मदुक्तं युक्तमेवेति भावः।

**आवश्यकं चैतत् परेषामपि, इष्टसामान्यसाधनत्वस्यैव लिङर्थत्वात् स्वर्गादिपदार्थस्य च कामनाविशेषणत्वेन इष्टेऽभेदान्वयानुपपत्तेः इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इति शाब्दबोधस्या वश्यकत्वात्। तदुत्तरमिष्टे स्वर्गाभेद बोधो मानस एव शास्त्रतात्पर्यविषय इति एतादृशतात्पर्यविषयीभूत एव चेष्टे स्वर्गभेदनिश्चय प्रतिबन्ध्यः, न तु शा ब्द बोध इति त्वया प्यङ्गीकार्यमिति न ममै तच्चोद्यावकाशः,**

ननु नालो घट इत्यादौ अरुणावाक्ये च "**समानाधिकरणनामार्थयो** रभेदेनान्वय" इति व्युत्पत्त्याश्रणेनाभेदस्य शाब्दत्वमेव नैयायिकमत इव **किं न स्वीक्रियत** इत्यत आह — **आवश्यकं चैतदिति** एतत् अभेदस्य मानसबोधविषयत्वाश्रयणेन समर्थनम्। **परेषामपि** = नैयायिकानामपि, **इष्टसामान्येति** यजेत स्वर्गकाम इत्यादौ नैयायिकमते स्वर्गसाधनत्वं न **लिङर्थः**, अपि त्विष्टसामान्यसाधनत्वमेव, तस्य धात्वर्थेयागे तस्य चाख्यातार्थकृतौ तस्याश्चा न्याविशेषणीभूतप्रथमान्तपदोपस्थाप्येऽन्वयः। **तथाचे ष्टसाधनीभूतयागानुकूलकृतिमान्** स्वर्गकाम इति तन्मते शाब्दबोधः। तत्रचे ष्टे स्वर्गाभेदो न भासते। ननु स्वर्गपदोपादाना त्तत्रेष्टा भेदसिद्धि, रत आह — **स्वर्गपदार्थस्येति कामनाविशेषणत्वेनेति** स्वर्गकाम-पदात्स्वर्गविषयककामनावानिति बोधेन कामनायां स्वर्गस्य विशेषणत्वेनाऽऽख्यातार्थे इष्टेऽभेदान्वयान-पपत्तिरित्यर्थः। नैयायिकमते प्राथमिकशाब्दबोधं दर्शयति — **इष्टसाधनीभूतेति** तदुत्तरं = प्राथमिकशाब्दबोधादनन्तरम्। तन्मते उपपत्तिः स्वप्रदर्शितरीत्यैवोपपादनीयेत्याह **इष्टे स्वर्गाभेद बोधो मानस एवेति** एवं यागे स्वर्ग साधनतापि न प्राथमिकशाब्दबोधविषयः, किंतु मानस्यैवेत्यपि बोध्यम्, इतिशब्द स्तदावश्यकताप्रदर्शनसमाप्तिसूचकः। एवं च मानसबोधस्यापि तात्पर्यविषयत्वा दिष्टे स्वर्गाभेदो यागे स्वर्गसाधनत्वं च भवन्मते सिध्यति, ना न्यथेति भावः। प्रतिबन्ध्यप्रतिबन्धकभावोपि मदुक्तरीतिमाश्रित्यैव त्वया प्युपपादनीय इत्याह — **एतादृशेति** शाब्दबोधोत्तरं जायमानो मानस इष्टे स्वर्गाभेदबोध एवेत्यर्थः। **स्वर्गभेदेति** इष्टं न स्वर्ग इति भेदनिश्चयप्रतिबन्ध्य इत्यर्थः। **न शाब्दबोध इति** तत्र इष्टे स्वर्गाभेदस्या भानादिति भावः, त्वयापि = नीलो घट **इत्यादावभेदः** शाब्द इति वदता नैयायिकेन भवतापि मम = नीलो घट इत्यादा वभेदानभवो मानसबोध मादायेतिवादिनो मीमांसकस्य मम। एतच्चोद्यावकाश = "न चोभयाश्रयं दोष मेकश्चोद्योऽविचारयन्" तिन्यायात्।

**यदितु त्वया एतादृशदोषभिया स्वर्गादिसाधनत्वमेव शक्त्या लक्षणया वा लिङर्थः, स्वर्गादिपदं च तात्पर्यग्राहक, मित्यभ्युपेयते, तदा मयापि नीलपदोत्तरप्रथमार्थस्य गुणविशिष्ट-द्रव्यस्य स्वाभिन्नघटवृत्तिकर्तृत्वसंसर्गेण भावनान्वयः, घटपदं च संसर्गेपि तात्पर्यग्राहकम्। घटपदोत्तरप्रथमार्थस्य स्ववृत्तिकर्तृत्वेनेति शक्यं वक्तुम्। ततश्चाभेदस्यापि शाब्दत्वो-पपत्तेर्नकश्चिद्दोषः।**

एतादृशप्रक्रिया मसहमानस्य नैयायिकस्या शय माविष्करोति — **यदितुविति** त्वया = नैयायिकेन। एतादृशदोष भिया = इष्टे स्वर्गाभेदासिद्धिः, यागे स्वर्गसाधनतानवगति रिति दोषभिया। स्वर्गादिसाधनत्वमेव = स्वर्गत्वादिविशिष्ट स्वर्गादिसाधनत्वमेव। नन्वेवं स्वर्गादिपदप्रयोग नुपपत्ति, रत आह — **लक्षणयेति अभ्युपेयते इति** तथाचनोक्तदोषः, नापि मानसबोध इति भावः। मयापि = मीमांसकेन मयापि। नीलो घट इत्येतदभिप्रायेणाह — **नीलपदोत्तरेति**, नीलरूपप्रातिपदिकोत्तरप्रथम, स्येत्यर्थः। **स्वाभिन्नेति** स्वं = नीलगुणविशिष्टद्रव्यम्। नन घटादि पदं प्रथमाविशेषार्थे तात्पर्यग्राहकं तावता

[illegible] प्रकृतार्थमिति, तत्र आह – **घटादिपदं चेति शक्यं वक्तुमिति** एवं च सर्वपदार्थानां [illegible] इति मम मतानि अभेद बोधस्य शाब्दत्वं निष्प्रत्यूहमिति भावः। तदाह – **ततश्चेति** [illegible] –

**केचित्तु- विशिष्टविध्यादौ विशेषणविध्यादिवाचकपदसमूहकल्पनावदभेद बोधक-वाक्यान्तरकल्पनव-त्याहुः।**

**सर्वथा प्रथमार्थस्य भावनायां द्वितीयादिसाधारण्येन भेदसं बन्धेन प्रकारतेति सिद्धम्।**

**एतेन – चैत्रादेर्नामार्थस्य प्रथमार्थस्यैव वा आख्यातोपात्तकर्त्रादाव भेदान्वय-इति वैयाकरणमत मप्यपास्तम्, व्युत्पत्त्यन्तरकल्पने प्रमाणाभावात्।**

वाक्यान्तरकल्पनयाऽभेदानुभव मङ्गीकुर्वतां मतमाह – **केचित्त्विति** विशिष्टविध्यादौ = "सोमेन यजेत" त्यादौ गुणविशिष्ट यागविधिस्थले। **विशेषणविध्यादीति** अयमर्थः = "सोमेन यजेत" त्यादौ धात्वर्थकरणावच्छिन्नाया भावनायां सोमादिगुणानां करणत्वेन साक्षादन्वयासंभवाद् धात्वर्थस्य कारकत्वेन भावनान्वयित्वात् धात्वर्थेऽपि तेनरूपेणान्वयानुपपत्ते रवश्यं यागवृत्त्येव करणत्वमभेदेन तृतीयान्तसोमादिपदै रभिधेयमिति सोमादिपदेषु मत्वर्थलक्षणया यागे वृत्ति राश्रयणीया। तथाच लक्षणया सोमपदेन सोमवतो भिधाना त्सोमपदोत्तरविभक्ते रभेदार्थकत्वं साधुत्वमात्रार्थत्वं यागगतकरणत्वानुवादकत्वं वा ङ्गीकृत्य सोमपदार्थस्य यागे तस्य च करणत्वेन भावनाया मन्वया न्न प्रथमतः सोमपदार्थस्य करणत्वेन यागेऽन्वयः स्वीकार्यः, किन्तु यागवृत्तिकरणत्वरूपेण भावनायामेवा न्वयः। पश्चात्तु सोमवत्त्वं यागे केन रूपेण त्यपेक्षाया कल्प्यमानेन 'सोमेन यागं कुर्या' दिति विशेषणविधिना सोमस्य यागकरणतारूपत्वावगति-रिति। पदसमूहकल्पनावत् = सोमेन यागं कुर्या' दितिसमूहकल्पनावत्। **अभेद बोधकेति** नीलो घटो स्तीत्यादौ प्रथमोबोधः-नीलगुणविशिष्टद्रव्यवृत्ति भवनाश्रयत्वम्। घटवृत्ति भवनाश्रयत्वमिति। ततो द्रव्यस्य परिच्छेदकाकाङ्क्षावशाद् नीला भिन्नो घट, इत्यभेदबोधकं वाक्यान्तरं कल्पनीयम्। अरुणावाक्येऽपि सोमवाक्य इव लक्षणाश्रयणेन, प्राथमिकबोधोऽभेदबोधकपदसमूहकल्पना च स्वीक्रियते। एवशब्देन मानसस्य स्वाभिन्नद्रव्यवृत्तिकर्तृत्व संसर्गस्यव्यावृत्तिः। प्रकरणार्थमुपसंहरति **सर्वथेति** प्रथमान्तार्थस्य तिङर्थकर्तृकर्मणो रभेदेनान्वय इति दीक्षित भूषणकारादिवैयाकरणानां मतं निराकरोति – **एतेनेति** द्वितीयादिसाधारण्येन एककार्यकारण भावस्वीकारेण प्रथमार्थस्यापि भावनायामेवान्वयेनेत्यर्थः।

**यत्तु-स्तोकं पचतीत्यादौ नामार्थस्य स्तोकस्य पाकेऽभेदान्वयार्थ मभेदसंबन्धेन निरर्थक-सुप्समभिव्याहृतनामार्थप्रकारकशाब्दत्वावच्छिन्नं प्रति निरुक्तनामसमभिव्याहृतपदजन्यो-पस्थितिः कारण मिति कार्यकारणभावस्या वश्यकत्वा त्तेनैव चैत्रादे र्योग्यतया कर्त्रादा व भेदेना न्वयोपपत्ति-रिति**

**तन्न, चैत्रपदोत्तरप्रथमाया निरर्थकत्वस्य पाणिन्यादिविरुद्धत्वात्, स्वलेखनविरुद्धत्वाच्च। स्तोक मित्यत्रापि स्तोकप्रातिपदिकार्थः स्तोकत्वम्। द्वितीयार्थो लक्षणया आश्रयत्वम्। तस्य च साक्षात्परम्परया वा पाकादौ भावनायां वा न्वया न्न निरर्थकसुप्त्वमिति तादृशव्युत्पत्तिकल्पनाया असिद्धेश्च।**

चैत्रः पचतीत्यादौ चैत्रादे राख्यातार्थकर्त्रादा वन्वयो युज्यत एवेति वादिनां मतं दूषयितु मनुवदति – **यत्त्विति स्तोकं पचतीति** स्तोकमिति क्रियाविशेषणं द्वितीयान्तम्, विभक्ति र्न कर्मत्वाचिका, किंतु

निरर्थकैव। स्तोकपदार्थस्या भेदेन धात्वर्थे विक्लित्तावन्वयः, स्तोकाभिन्नः पाक इति बोधः, अत्र विभक्तेरर्थवत्त्वा भावा दन्वयोपपत्तये निरुक्तकार्यकारण भावः स्वीकार्यः, तदनुरोधेन चैत्रादेरपि आख्यातार्थेऽन्वयो पपत्तिरिति भावः। तदेतदाह – **निरर्थकेति** तेनैव = तेन कार्यकारणभावेनैव। कर्त्रादौ = पचतीत्यादावाख्यातार्थे कर्त्रादौ। **अन्वयोपपत्तिरिति** तथाच चैत्राभिन्नकर्तृवृत्तिः पाकानुकूलो व्यापार इति बोध इति भावः।

**पाणिन्यादिविरुद्धत्वादिति** आदिना कात्यायन पतञ्जल्योर्ग्रहणम् पाणिनिः प्रातिपदिकार्थे, कात्यायनोऽभिहितकर्त्रन्वकर्मन्वयोः प्रथमां शास्त्रि पतञ्जलिः प्रथमायाः कारकविभक्तित्व मभ्युपैति। अतस्तद्विरोध इति भावः। **स्वलेखनेति** अन भिहित कर्तृत्वे तृतीया, अभिहिते प्रथमेति स्वग्रन्थविरोध इति भावः। स्तोकं पचतीत्यत्रापि क्रियाविशेषणस्य **नाभेदेनान्वयः**, किंतु भेदेनैवेति तद्दृष्टान्तकथन मप्ययुक्तमित्याह – **स्तोकमित्यत्रापीति** स्तोकमित्यादौ ''ततोन्यत्रापि दृश्यते'' इति लाक्षणिकानुशासनेन द्वितीयाया वक्ष्यमाणत्वादाह – **द्वितीयार्थोलक्षणयाऽऽश्रयत्वमिति** तस्य = आश्रयत्वस्य, भावनया संबन्धश्चेदि तात्पर्यं तदा साक्षादेव भावनाया मन्वयः। तदाह – **साक्षादिति** यदि फलसंबन्धे व्यापारसंबन्धेवा तात्पर्यं, तदा परम्परया भावनाया मन्वयः। तदाह **परम्परयेति पाकादाविति**, पाकः = विक्लित्तिः फलम् आदिना व्यापारस्य ग्रहणम्, विवेचयिष्यते चेदं द्वितीयाप्रकरणान्ते मूल एव। भावनायां वा = भावनायामेव। **तादृशव्युत्पत्तीति** निरर्थकसुपसमभिव्याहृतेत्यादिव्युत्पत्तीत्यर्थः।

**यस्यापि स्तोकत्वविशिष्टं प्रातिपदिकार्थः, तस्यापि मतेऽभेदो लक्षणया द्वितीयार्थः, स च स्तोकप्रतियोगिकान्योन्याभावाभावरूपः स्तोकत्वमेव। तस्य च भेदसंबन्धेनैव पाकादावन्वयः। द्रव्यत्वावच्छिन्नवृत्तिद्रव्यत्ववान् पट इतिवच्च स्तोकत्वावच्छिन्नवृत्तिस्तोकत्ववान् पाकादिरिति शाब्दबोध इति क्वनामार्थस्या भेदसंबन्धेनान्वयः? क्व वा द्वितीयायानिरर्थकत्वम्?**

ननु स्तोकत्वविशिष्टो धर्मी स्तोकपदार्थ इति वदतां नैयायिकाना मते स्तोकस्या भेदेनैवान्वयो धात्वर्थे। अत स्तदनुरोधेन निरुक्तव्युत्पत्ते रावश्यकतेत्यत आह – **यस्यापीति** नैयायिकस्यापीत्यर्थः। स्तोकत्वविशिष्टं = स्तोकत्वरूपधर्मविशिष्टम्। ततः किमायात, मत आह **सचेति** द्वितीयार्थश्चेत्यर्थः। **स्तोकत्वमेवेति** स्तोकशब्दोत्तरद्वितीयाया अभेदोर्थः। अभेदः = भेदाभावः = अन्योन्या भावाभावः, स च प्रतियोगितावच्छेदकरूपः, यथा घट भेदाभावो घटत्वस्वरूपः, तथा स्तोका भेदः स्तोकत्व स्वरूप इति भावः। तस्य च = द्वितीयार्थस्तोकत्वस्य च। भेदसंबन्धेनैव = आश्रयता संबन्धेनैव। एवशब्देना भेदोव्यावर्त्यते, तन्विदं मयुक्तम् प्रमेयोघट इत्यादौ प्रमेयत्वावच्छिन्नभेदस्या प्रसिद्धत्वात्, लघुधर्मसमनियतगुरुधर्मस्या भावप्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमान् घट इत्यादावपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताक भेदस्या प्रसिद्धत्वाच्चे ति चेत् तर्हि अभेदः = तादात्म्यम्। तच्च स्ववृत्त्यसाधारणो धर्मः इत्याशयेन प्रकारान्तरमाह – **द्रव्यत्वेति** द्रव्यं पट इत्यत्र द्रव्यत्वावच्छिन्नं द्रव्यशब्दार्थः, प्रथमा लक्षणयाऽभेदार्थिका, अभेदो न भेदा भावरूपः, किंतु तादात्म्यं = तद्वृत्त्यसाधारणोधर्मः, स च प्रकृते द्रव्यत्वम्, तद्वान् पट इति बोधः, तद्वदित्यर्थः। **स्तोकत्वेति** स्तोकत्वावच्छिन्नं स्तोकपदार्थः, तद्वृत्त्यसाधारणोधर्मः स्तोकत्वम्। तद्वान् पाक इति बोध इति भावः परमत मवहेलयति **क्वनामार्थस्येति क्व वा द्वितीयाया इति** एवं च तदनुरोधेन निरुक्तव्युत्पत्ति र्नाश्रयणीयेति भावः।

**न च लक्षणादोषभिया व्युत्पत्त्यन्तरकल्पनं-द्वितीयाया निरर्थकत्वकल्पनं च न दोषः, तथात्वे चैत्रो जानातीत्यादावाश्रयत्वलक्षणायाः शिरोमणिसंमताया अनापत्तेः, तत्रापि कृत्यविषयी-**

**भूतार्थक धात्वर्थस्य व्युत्पत्त्यन्तरेणैव नामार्थप्रकारत्वोपपत्तेः लक्षणायाः फलमुखत्वाच्च। अन्यथा लक्षणोच्छेदापत्तेः।**

**तस्माद्युक्तं प्रथमार्थस्यापि कर्तृत्वकर्मत्वरूपसंसर्गेणा ख्यातार्थभावनाया मन्वयः, प्रातिपदिकं च तात्पर्यग्राहकम्। लिङ्गसंख्यान्वयश्च प्रथमार्थ एवेति सर्वमनवद्यम्।**

**लक्षणादोषभियेति** स्तोकं पचतीत्यत्र मीमांसकै द्वितीयाया आश्रयत्वे, नैयायिकै रभेदे लक्षणाऽश्रयणीया, जघन्यवृत्त्याश्रयणापेक्षया निरर्थकसुपसमभिव्याहृतेत्यादि व्युत्पत्त्यन्तर स्वीकार एवोचितः तदनुरोधेन द्वितीयाया निरर्थकत्व स्वीकारोपियुज्यत एवेत्याह — **द्वितीयाया इति** तद् दूषयति **तथात्वे इति** लक्षणास्वीकारभिया व्युत्पत्त्यन्तरस्वीकार इत्यर्थः। **चैत्रो जानातीत्यादाविति** अयमर्थः-पचति = पाकं करोति, गच्छति = गमनं करोतीत्यादिना यत्नार्थककरोतिना विवरणा दाख्यातस्य यत्नवाचित्व मास्थेयम्। आख्यातार्थयत्नस्य चाश्रयतासंबन्धेन प्रथमान्तार्थेन्वयः, पाकानुकूलयत्नाश्रय श्चैत्र इति बोधः। यत्र तु यत्नस्यबाधः, यथा अचेतने रथो गच्छतीत्यादौ, चेतनेपि चैत्रो जानाति इच्छति यतते विद्यत इत्यादौ तद्बाधः, तत्राख्यातस्य आश्रयत्वे लक्षणा, ज्ञानाश्रयश्चैत्र इति बोधः, घटो नश्यतीत्यादौ प्रतियोगित्वे लक्षणा। नाशप्रतियोगी घट इति बोधः। तत्रापि धात्वर्थस्य ज्ञानस्या श्रयतासंबन्धेन प्रथमान्तपदोपस्थाप्येऽन्वयस्वीकारे तत्र लक्षणाश्रयणं विनापि बोधोपपत्तौ तत्र लक्षणाश्रयणं रघुनाथशिरोमणीनामसंगतं स्यात्। आश्रयत्वे लक्षणा आख्यातवादशिरोमणौ प्रतिपादिता। अतो व्युत्पत्त्यन्तरास्वीकारेण लक्षणामाश्रित्यैव स्तोकं पचतीत्यादौ भेदेनान्वय उपपादनीय-इति। जानातीत्यादावित्यादिपदेन इच्छति यतते विद्यत इत्येषां ग्रहणम्। **शिरोमणिसंमताया इति** इत्थं हि आख्यातवाद शिरोमणिग्रन्थः — "रथोगच्छतिजानाति इच्छ यतति विद्यत इत्यादा वाश्रयत्वे लक्षणेति नव्याः" इति। यत्नस्य बाधे अनुकूलव्यापारत्वे लक्षणेति प्राचां मत मुपपाद्य तन्निराकरणपूर्वकं नव्यमतेना श्रयत्वे लक्षणा प्रतिपादितेति बोध्यम्। तदेतदुपपादयति — **तत्रापीति** जानातीत्यादावपीत्यर्थः। **कृत्यविषयीति** कृञाविवरणा त्कृति राख्यातार्थः, तद्विषयः पाकादिः, कृत्यविषयीभूतो योर्थः ज्ञानेच्छादिः, तदर्थकजानाति प्रभृति धात्वर्थस्य ज्ञानादेरित्यर्थः। **व्युत्पत्त्यन्तरेणैवेति** आश्रयतासंबन्धेन धात्वर्थप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितिः कारण मिति व्युत्पत्यन्तरेणेत्यर्थः। नामार्थस्य धात्वर्थे धर्मिणि भेदेनान्वयस्या व्युत्पन्नत्वेपि धात्वर्थस्य नामार्थे धर्मिणि तथान्वयो नाव्युत्पन्न इति भावः। तदाह **नामार्थ प्रकारत्वोपपत्तेरिति** धात्वर्थस्य नामार्थे प्रकारत्वस्योपपत्ते रित्यर्थः, **फलमुखत्वाच्चेति** फलं = सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति लिङ्गानन्वयिपदजन्योपस्थिति र्भावना विशेष्यतासंबन्धेन कारण मिति कार्यकारणभावग्रहः, तदधीनत्वादित्यर्थः। तादृशकार्यकारण भावस्वीकारान्तरं क्वचिदनुपपत्तौ लक्षणास्वीक्रियते, एवं च तादृशकार्यकारण भावनिर्णयात्पूर्वं लक्षणारूपगौरवानिर्णया न्न तादृशगौरवं दोषः स्वोत्तरोत्पन्नगौर वज्ञानस्य प्रतिबन्धकत्वासंभव इति भावः। अन्यथा = तत्तद्व्युत्पत्त्यन्तरकल्पने च **लक्षणोच्छेद इति** गङ्गायां घोष इत्यादावपि स्वसमीपतीर वृत्तित्वसंबन्धेन प्रवाहस्य घोषेन्वयसंभवा ल्लक्षणाया उच्छेद एव स्यादिति भावः।

प्रकरणार्थमुपसंहरति — **तस्मादिति** प्रथमान्तार्थस्या भेदेना न्वयासंभवा दित्यर्थः। **कर्तृत्वकर्मत्वेति** चैत्रः पचतीति कर्त्राख्याते कर्तृत्वं, चैत्रेण तण्डुलः पच्यते इति कर्माख्याते कर्मत्वं संसर्ग इति भावः। उक्तमेवद्रढयति — **प्रातिपदिकं चेति** तात्पर्यग्राहकम् = प्रथमया तत्तद्विशेषार्थबोधने।

**संसर्गश्च आख्यात निपातोपात्त कर्तृत्वकर्मत्वमेव, न तु कृवाद्युपात्तमपि। तेन पाठक श्चैत्रः पचतीत्यत्र चैत्ररूपप्रथमार्थस्य पाकक्रियाकर्तृत्वसंसर्गेणान्वयः। अत एवा ख्यातोपात्त**

**भावनायामेव, योग्यत्वात्। न तु लिङ्गानन्वयित्वेपि कृदुपात्तायां पाठकृतौ, तस्या माख्यातोपात्तकर्तृत्वसंसर्गेण, अयोग्यत्वात्। एतादृश संसर्गविवक्षानाङ्गीकारे च चैत्रः पाठकेन पच्यते ओदन इत्यस्याप्यापत्तेः। अत श्चैत्रः पाठकर्ता च द्वावपि पाककृतावेव तन्निरूपितकर्तृत्वसंसर्गेणा न्वीयेते। तयोः परस्पर मभेदभानं तु पूर्ववत्। चैत्रस्य पाठकृत्याश्रयत्वभानं तु सर्वमते मानसमेव।**

नीलो घटो स्तीत्यादा वेकस्या एव भावनायाः सत्त्वा त्तस्यामेव प्रथमाद्वयार्थस्य पृथगन्वयेपि भावनाद्वयसत्त्वे कुत्रान्वय इत्यपेक्षायां प्रथमार्थस्य ख्यातनिपातोपात्तभावनायामेवान्वयः, न कृत्प्रत्ययोपात्त भावनाया मपीत्याह —, **संसर्गश्चेति** प्रथमार्थस्या ख्यातार्थ भावनायाश्च संबन्ध इत्यर्थः। **आख्यातनिपातेति** अन्यतरोपात्तेत्यर्थः, कृदादीत्यादिपदेन तद्धितस्यग्रहणम्। तेन = निरुक्तार्थस्वीकारेण, प्रथमतो विशेष्यस्या न्वयप्रकारमाह — **चैत्ररूपेति** चैत्ररूपस्य प्रथमार्थस्येत्यर्थः। अत एव = आख्यातनिपातान्यतरोपात्तकर्तृत्व कर्मत्वमेव संसर्ग इति स्वीकारादेव भावनायामेव = अन्वयः, योग्यत्वात् = तस्य तद्भावनाश्रयत्वात्, एव शब्दव्यावर्त्यमाह — **नत्विति** कृदुपात्तायां = कृत्प्रत्ययेन लक्ष्यायाम्, तस्यां = कृदर्थभावनायाम्। अयोग्यत्वात् = पाककर्तृत्व वद्भावनाश्रये पाठकृतेर भावात् नष्टत्वादिति भावः **एतादृशेति** आख्याताद्युपात्तकर्तृत्वमेव, न कृदाद्युपात्तमपीति संसर्गविशेषानङ्गीकार इत्यर्थः। **चैत्रः पाठकेनेति** कर्मणि लकारे कर्तृत्वस्यान भिधाना दुभयत्रापि तृतीयायां चैत्रेण पाठकेन पच्यते तण्डुल इति प्रयोग उपपद्यते, चैत्रस्य कृदुपात्त भावनाया मन्वयेतु कृता कर्तृत्वस्या भिहितत्वा त्प्रथमापत्तिरिति भावः। अतः = अस्माद्दोषात्। **तन्निरूपितेति** कर्त्राख्याते आख्यातार्थकृतिनिरूपितेत्यर्थः। **अन्वीयेते इति** अनु पूर्वकाद् ईङ्गताविति दैवादिका द्धातोः कर्तरि लटि प्रथमपुरुषद्विवचने इदं रूपम्। चैत्रः पचति, पाठकः पचतीति पृथगेवान्वय इति भावः। तयोः = चैत्र पाठकयोः। **परस्परेति** चैत्रः पाठकाभिन्नः पाठक श्चैत्रा भिन्न इत्यभेदेन भानमित्यर्थः। पूर्ववत्= मानसं शाब्दं वा। ननु धर्मिणो रभेदभानेपि चैत्रे पाठकृत्याश्रयत्वभानस्यानु पपत्ति, रत आह — **चैत्रस्य पाठेति** सर्वमते = नामार्थयोरभेदेनान्वय इति वादिनामपि मते। तत्र धर्मिणो रेव प्राथमिकबोधेऽभेदेनान्वयः, कृत्याश्रयत्वबोधस्तु मशब्दतो लभ्यते इति भावः।

**एवं पक्व ओदनो भुज्यत इत्यत्रापि ओदनरूपप्रथमार्थस्य भोजनकृतिनिरूपितकर्मत्वसंसर्गेण भोजनकृतावेवान्वयः, न तु पाककृतिकर्मत्वेन पाककृतौ कृदुपात्तायाम्। तथात्वे ओदनः पक्वं चैत्रो भुङ्क्ते इत्यस्याप्यापत्तेः। अत स्तत्रापि पूर्ववदेवा न्वयः।**

**चैत्र इव मैत्रो गायति, "विषवृक्षोपिसंवर्ध्य स्वयं छेत्तु मसाम्प्रत" मित्यत्रा ख्यातोपात्त-कर्तृत्वकर्मत्वा भावेपि इवादिनिपातोपात्तकर्तृत्वकर्मत्वसंसर्गेण तदुपात्त भावनायां लिङ्गान्वय-रहितायां चैत्रविषवृक्षयोः प्रथमोपात्तयो रन्वयाच्च 'निपाते' ति। तदेवं पाणिनिमते प्रथमार्थनिष्कर्षः।**

कर्मलकारस्थले संसर्गमाह — **एवं पक्व ओदन इति** कर्माख्यातेन कर्मत्वस्य लक्षणया भिधानाद् द्वितीया न प्रवर्तते। कर्माख्यातेन कृते रभिधानात्तत्रैव प्रथमार्थस्यान्वयः,। तदाह — **भोजनकृतीति** कृदुपात्तायाम् = कर्मकृत्प्रत्ययलक्ष्यायाम्। तथात्वे = कृदुपाताया मन्वये। **ओदनः पक्वमिति** कर्त्राख्याते कर्मत्वस्यान-भिधानात् उभयत्र द्वितीया। ओदनस्य कृदुपात्तायामपि अन्वये तेन कर्मत्वस्याभिधाना दोदने प्रथमापत्ति रिति भावः। पूर्ववदेव = कर्त्राख्यातवदेव पृथगेव भावनाया मन्वयः।

समगशरीरे निपातग्रहणस्य प्रयोजन माह – **चैत्र इवेति** कर्मत्वविषयमाह **विषवृक्षोपीति आख्यातोपात्तेति** आद्ये गान भावनाकर्तृत्वं चैत्रे नास्ति, द्वितीये आख्याताभावेन तत्कर्मत्वाभाव इति भावः। अन स्तत्रा न्वयोपपत्तये निपातग्रहण मिति भावः। ननु तथापि कथं तदन्वयोऽत आह – **इवादीति** आदिना साम्प्रतमिति निपातस्य ग्रहणम्। **कर्तृत्वेति** आद्ये इव शब्देन गानकर्तृत्व रूपसादृश्याभिधानात् कर्त्रभिधानम्। द्वितीये साम्प्रतमिति निपातेन योग्य इत्यर्थकेन कर्माभिधानम्। कर्तृत्वग्रहणं कर्मत्वस्याप्युपलक्षणम्। **तदुपात्तेति** निपातोपात्तेत्यर्थः। निरूपितं चैतत्प्राक् प्रथमाप्रयोजकविचारावसरे।

## (कात्यायनमतेन प्रथमार्थनिरूपणम्।)

**कात्यायनस्तु – न प्रातिपदिकार्थे प्रथमा, तथात्वे प्रातिपदिकस्य तात्पर्यग्राहकत्वमात्र-कल्पनया शाब्दबोधजनकत्वानापत्तेः। अपितु अभिहितकारकत्वमेव प्रथमार्थः। तस्मिंश्च कर्तृत्वादिरूपे प्रथमार्थे प्रातिपदिकार्थ श्चैत्रादि र्भेदसंबन्धेनैवान्वेति, संख्यादिकं च द्वितीयान्तपद इवेति न क्वापि व्युत्पत्त्यन्तरकल्पना, कर्तृत्वादिकं च सुबन्तरार्थवदेव क्रियापदार्थ इति न तत्रापि सा।**

एवं पाणिनिमतन प्रथमाविभक्त्यर्थ मुपवर्ण्य तत्रा रुचिं सूचयन् कात्यायनमतेन तं निरूपयति **कात्यायन स्त्विति** – अस्य "प्रथमेत्याहे" त्यनेनव्यवहितेनान्वयः। प्रातिपदिकार्थे = प्रातिपदिकस्य योर्थ श्चैत्रादि स्तत्र। तथात्वे = प्रातिपदिकार्थेप्रथमायाम्। **शाब्दबोधेति** प्रथमाया उत्पत्तेः प्राक् चैत्रादिप्रातिपदिक मर्थवत्, अत एव तस्य "अर्थवद धातु रप्रत्ययः प्रातिपदिक" 1-2-45 मित्यनेन प्रातिपदिकत्वम्। प्रथमोत्पत्ते रनन्तरं तस्या एव चैत्राद्यर्थबोधकत्वे चैत्रादि प्रातिपदिकं तात्पर्यग्राहकमात्र मिति स्वीकार्यम्। तात्पर्यग्राहकत्वं च निरर्थकत्वरूपमेव, तथाच प्रातिपदिकस्य शाब्दबोधानौपयिकत्वं प्रसज्यते। तच्चा युक्तमिति भावः, **अभिहितकारकत्वमेवेति** "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमे" ति पाणिनिसूत्रे दोषमुद्भाव्य तत्सूत्रस्य स्थाने "अभिहिते प्रथमे" तिसूत्रितवान् कात्यायनः। तेन अभिहित कारकत्वं प्रथमार्थ इति तन्मत मिति भावः। कर्तृत्वादिरूप इत्यत्रा दिपदेन कर्मत्वस्य ग्रहणम्। भेदसंबन्धेनैव = वृत्तित्व संबन्धेन। एवंच प्रकृत्यर्थस्य प्रत्ययार्थे भेदेनैवान्वय इति व्युत्पत्ति रप्य संकोचिता भवतीति भावः। संख्यादिकं चेत्यादिपदेन लिङ्गस्य ग्रहणम्। **द्वितीयान्तपद एवेति** तण्डुलमित्यादौ द्वितीयार्थे कर्मत्वे लिङ्गसंख्ये साक्षात्परम्परया वा न्वीयेते। तद्वदत्रापीति भावः। व्युत्पत्त्यन्तरकल्पना = निरर्थकमुपसर्गाभिव्याहृतेत्यादि निरुक्तव्युत्पत्त्यन्तरकल्पना। **कर्तृत्वादिकं चेति** आदिना कर्मत्वस्य ग्रहणम् चैत्रः पचतीत्यादौ कर्तृत्वं चैत्रेण तण्डुलः पच्यते इत्यत्र कर्मत्वं चेत्यर्थः। **सुबन्तरार्थवदिति** द्वितीयातृतीयादीतर सुबर्थ इवेत्यर्थः।

**न च कर्तृत्वादे राख्यातावगतस्य भावनाया मन्वितत्वात्पुनर्बोधवैयर्थ्यम्। चैत्रत्वावच्छिन्न-वृत्तित्वेन तस्या ख्यातेना नवगमात् सार्थकयोपपत्तेः।**

**न च तथापि आख्यातजन्यस्य सामान्यधर्मप्रकारकबोधस्य वैयर्थ्यम्। तस्य प्रथमोत्पत्ति प्रयोजकत्वात्। इतरथा तृतीयाद्यापत्तेः, नहि कृत्याद्यभिधानमात्रं तत्प्रयोजकम्, भावाख्यातेपि चैत्रेण सुप्यत इत्यादौ कृत्ना विवरणेन कृत्यभिधाना त्प्रथमापत्तेः। अतः कर्तृत्वाद्यभिधानमेव प्रथमाप्रयोजकम्। तच्च शक्त्या लक्षणया वेत्यन्य देतत्। तस्मा दभिहितकारकत्वं प्रथमार्थः।**

पौनरुक्त्य वारयन् शङ्कते: **नचेति आख्यातावगतस्येति** कर्तरि लकारे कृति राख्यातार्थः, लक्षणया कर्तृत्व मर्थः। कर्मलकारेपि कृतिरेवा ख्यातार्थः कर्मत्वं लक्षणया बोध्यते इति भावः। **पुनर्बोधेति**

आख्यातेनैव तद्बोधस्य सिद्धतया पुनः प्रथमया कर्तृत्वकर्मत्वबोधनं व्यर्थमिति भावः। तस्य = कर्तृत्वकर्मत्वरूपस्य **सार्थकयोपपत्तेरिति** विशेषरूपेण बोधनाय तस्यावश्यकत्वादित्यर्थः। तथापि = **विशेषरूपेण बोधाय प्रथमया कर्तृत्वकर्मत्वबोधनेपि सामान्यधर्मेति** कर्तृत्वत्वेन कर्तृत्वप्रकारकबोधस्येत्यर्थः। तस्य = आख्यातेन सामान्यबोधस्य। इतरथा = आख्यातेन सामान्यरूपेण कर्तृत्वाबोधने, तृतीयापत्तेः = कर्तृत्वकर्मत्वादीनामनभिधाने तस्या विधानेन तदापत्तेः, ननु कृत्यनभिधाने तृतीयेत्येवास्तु, किं कर्तृत्वस्या भिधानेनेत्यत आह – **नहीति** तत्प्रयोजकं = प्रथमाप्रयोजकम्। कृत्वा विवरणेन = सुप्यते = स्वापः क्रियते इति विवरणेन, उपपादितं चैतत्प्राक् मूले। ननु तिङा कर्तृत्वस्य शक्त्या न भिधाना त्प्रथमानापत्तिः, तृतीयापत्तिश्चेत्यत आह – **तच्चेति** कर्तृत्वाद्यभिधानं च। शक्त्या = चैत्र इव मैत्रो गच्छतीत्यादौ निपातेन, लक्षणया चैत्रः पचतीत्यादा वाख्यातेन। तस्मात् = प्रातिपदिकार्थस्य प्रथमार्थत्वे दोषसद्भावात्। **अभिहितकारकत्वमिति** "अभिहिते प्रथमे" ति कात्यानेनोक्तम्। "तिङ्समानाधिकरणे प्रथमे" ति वार्तिकादप्ययमे वा र्थो लभ्यते। तिङ्सामानाधिकरण्यस्य कर्तृत्वकर्मत्वयोरपि संभवात्।

**न च प्रासादे आस्ते पक्वं भुङ्क्त इत्यादौ कृत्प्रत्ययेन अधिकरणत्वकर्मत्वयो रुक्तत्वा त्प्रथमापत्तिः, तिङ्निपाताभिहितकर्तृत्वकर्मत्वयो रेव प्रथमार्थत्वात्। प्रासाद इत्यत्र सदिधातूत्तरघञाऽधिकरणत्वस्या भिधानेपि सप्तम्यविरोधात्। पक्व मित्यत्र क्तप्रत्ययेन कर्मत्वाभिधानेपि द्वितीयाया अविरोधाच्च। तिङ्निपातोदाहरणानि पूर्वमेव प्रदर्शितानि।**

येनकेनाप्य भिहिते प्रथमेत्यर्थाश्रयणे न शङ्कते **नचेति प्रासादे आस्ते इति** प्रकर्षेण सीदन्त्यस्मिन्नित्यर्थे प्रपूर्वकात् सद्धातो रधिकरणे घञ्। अत्र घञा कृत्पत्ययेना धिकरणत्वस्यो क्तत्वा त्प्रथमापत्तिरिति भावः। **पक्वमिति** पचिधातोः कर्मणिक्तः, तेन कर्मत्वस्याभिधाना त्प्रथमापत्ति रिति भावः। कृत्प्रत्ययेन = घञाक्तेन च। येनकेनाप्यभिधाने प्रथमेति नार्थः, किंतु तिङ्निपातान्यतरेणा भिहितत्वे इत्यर्थः। इत्याशयेनाह – **तिङ्निपातेति** प्रकृते आख्यातेन कर्तृत्वस्योक्तत्वाच्चैत्रपदोत्तरं भवति प्रथमा आख्यातेना धिकरणत्वस्या न भिधानात्प्रथमा न प्रवर्तते प्रासादशब्दात्। कृत्प्रत्ययेना भिहितत्वस्य प्रथमाप्रयोजकत्वा भावा न्न ततः प्रथमा, घञा तदभिधानेपि आसिक्रिया धिकरणत्वस्या न भिधाना त्ततः सप्तमी निष्प्रत्यूहं प्रवर्तत इति भावः, एवशब्देन कृदादेर्व्यावृत्तिः। एवं च कृताधिकरणत्वबोधनेपि न प्रथमेति भावः। **सप्तम्यविरोधादिति** आसिक्रियानिरूपिताधिकरणत्वस्य कृताऽनभिधाना त्सप्तम्या विरोधोनेति भावः। अत एव पक्वमित्यत्रापि न प्रथमा, तिङाकर्मत्वस्यानभिधानात्। द्वितीयानुपपद्यत एवेत्याह **पक्वमित्यत्रेति द्वितीयाया अविरोधादिति** पच्यर्थनिरूपितकर्मत्वस्य कृता भिधानेपि भुजिकर्मत्वस्या न भिधाना त्ततो द्वितीया निबाधेति भावः। एवं च प्रासादपक्व शब्दयोः प्रथमा वारिता, सप्तमीद्वितीये च प्रसाधिते एवेति बोध्यम्

अत्रेदं बोध्यम्-प्रातिपदिकार्थेत्यादिपाणिनिसूत्रे दोष मभिधाय कात्यायनेन "अभिहिते प्रथमे" ति लक्षणमुक्तम्। स्वलक्षणे तेनैव "अभिहितानभिहिते प्रथमाभावः" इति दूषणमुक्तम्, प्रासादे आस्ते इत्यादौ प्रासादे द्वे अधिकरणत्वे, सदिक्रिया मादाय एकम्, आसिक्रियामादाय द्वितीयाम्, तत्र द्वितीयस्या न भिधानेपि प्रथमस्य घञा भिधाना दभिहितत्वांश मादाय प्रासादात्प्रथमा प्राप्नोतीति दूषणवार्तिकस्याशयः। तद् दूषण मभ्युपगम्य वार्तिककृता "तिङ्समानाधिकरणे प्रथमे" ति लक्षणान्तरमुक्तम्। एवं च "अभिहिते प्रथमे" ति लक्षणं दुष्ट मेवेति वार्तिककाराशयः, खण्डदेवस्त्वभिप्रैति – "अभिहितेप्रथमे" ति निर्दुष्टमेव, प्रासादशब्दात्प्रथमा तु न, तिङ्निपाता भिहितत्वस्यैव प्रथमाप्रयोजकत्वात्। कृताऽभिधानेपि प्रथमाया अप्रवृत्ते-रितिः तदेतत्सर्वं "न च प्रासादे" इत्यादिना "द्वितीयाया अविरोधा च्चे" त्यन्तेन ग्रन्थेन ध्वन्यते.

तदेतन्मनसिकृत्यैवाह — **तिङ्निपातोदाहरणानीति** पूर्वमेव = प्रथमाप्रयोजकविचारे पाणिनिमतेन प्रथमार्थविचारे च, प्रदर्शितानि = चैत्रः पचति चैत्र इव मैत्रो गच्छति, चैत्र इव मैत्रो गायति "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तु मसाम्प्रत" मिति प्रदर्शितानि।

**नन्वेवं तिङ्निपाताभिहिते कारके प्रथमा, तदनभिहितेतु तृतीयादिरित्यर्थापत्ते स्तिङर्थान्वयिनि चैत्रादौ प्रथमोपपत्तावपि कर्त्रर्थककृदुपात्त भावनान्वये विवक्षिते तृतीयापत्ते श्चैत्रेण पाचको भुङ्क्त इति प्रयोगापत्तिः, न हि कृदुपात्त भावनायां कारकाणा मनन्वयः, काष्टैः स्थाल्या मोदनस्य पाचको ऽन्नं भुङ्क्त इत्यादौ काष्टादीना मन्वयदर्शनात्। अतश्च तद्वदेव कर्तृकारकस्यापि अन्वयोपपत्तेः। तत्र च तिङुपात्तक्रियान्वयविवक्षाऽभावेन प्रथमानुपपत्तेः, कृदुपात्तक्रियान्वयित्वेन विवक्षितस्य चैत्रस्य तिङाद्यनभिहितकर्तृत्वार्थिका तृतीया दुर्वारा। एव मोदनं पक्वो भुज्यते चैत्रेणेत्यपि द्वितीयान्तप्रयोगापत्तिः, कर्मत्वस्य पाकनिरूपितस्य तिङाऽनुक्तत्वात्। शाब्दबोधश्च तत्र चैत्रकर्तृकपाकानुकूलकृत्याश्रयो भुङ्क्त इति। वारद्वयं कर्तृत्वबोधश्च घटत्ववान् घट इतिवन्ना नुपपन्नः। एव मोदनं पक्वो भुज्यत इत्यत्रापि शाब्दबोधो वारद्वयं कर्मत्वबोधश्चा नुसन्धेय इति चेत्।**

**अनभिहित इत्यस्य स्वान्वयिभिः कृदादिभि रनभिहित इत्यर्थात्। अत श्च तत्र कृता कर्तृत्वकर्मत्वयोरुक्तत्वा न्न तृतीयाद्यापत्तिः। प्रथमायास्तु तदन्वयविक्षायां निमित्ता भाव एव।**

ननु तिङ्निपाताभिहित कर्तृत्वकर्मत्वे प्रथमोत्पत्तिप्रयोजके इत्यर्थस्वीकारेऽतिव्याप्तिरेवेत्याशङ्कते — **नन्वेवमिति** पूर्वोक्तार्थमभिनयेन दर्शयति — **तिङ्निपातेति** एतदन्यतरेणाभिहितकारके प्रथमेत्यर्थः। तदनभिहिते = तिङ्निपातान्यतरेणा नभिहिते, इत्यर्थापत्तेः = इत्यर्थस्य पर्यवसानापत्तेः, तिङर्थान्वयिनि = चैत्रः पचतीत्यादौ **कर्त्रर्थकेति** कर्तरि शक्तोऽर्थः कृत् = ण्वुलादिः, तेन लक्षणयो पात्तभावनान्वय इत्यर्थः। **प्रयोगापत्तिरिति** कृदुपात्त भावनान्वये पाचक इत्यत्र तिङ्निपातयोरभावा तेनान भिधानस्य सत्त्वा तृतीयापत्ति रित्यर्थः ननु कारकाणां कृदुपात्तार्थेन्वय स्याप्रामाणिकत्वा न्नाय दोष इत्यत आह — **नहीति अन्वयदर्शनादिति** काष्टादीनां भुजि भावनाया मन्वयायोगाद् योग्यत्वा त्पाचकपदोपात्त भावनाया-मेवान्वयः स्वीकार्य इति भावः अतश्च = कारकाणां कृदर्थेप्यन्वय दर्शनात्। तद्वदेव = करणत्वा धिकरणत्व कर्मत्वानामिव। अन्वयोपपत्तेः = योग्यतया न्वयोपपत्तेः। तत्र च = कृदर्थान्वयविवक्षायाम्। प्रथमाया अप्रवृत्तौ बीजमाह **तिङ्निपातेति** तृतीयोत्पत्तौ बीजं दर्शयति। **तिङाद्यनभिहितेति** आदिना निपातस्य ग्रहणम्, एव कर्मकृदन्तार्थान्वयविवक्षायां तद्विशेषणे द्वितीया दुर्वारेत्याह — **एव मोदनं पक्व इति** आपत्ति मुपपादयति **कर्मत्वस्येति** ओदनस्य पाक भावनाया मन्वयविवक्षायां तत्कर्मत्वस्य तिङा न भिधानाद् द्वितीयापत्ति रिति भावः। भिन्नविभक्त्यन्तत्वा त्कथं शाब्दबोध इत्यत आह **शाब्देति** तर्हि कर्तृत्वस्य वारद्वयं बोधः कथ, मत आह — **घटत्ववानिति एवमिति** ओदनकर्मरूपपाककर्मा भुज्यत इति बोधः।

तिङ्निपाताभिहितकर्तृत्वकर्मत्वयोः प्रथमा, तदनभिधाने तृतीयादि रिति नार्थः, येनोक्तदोष आपद्येत किंतु तिङ्निपाता भिहितकारके प्रथमा। तिङ्कृदादिभिरनभिधाने तृतीयादि रित्यर्थः, अतो नोक्तदोष इत्याशयेन समाधत्ते — **अनभिहित इत्यस्येति** स्वं = कर्तृत्वादि। अतश्च = निरुक्तार्थस्वीकारात्। तत्र = चैत्रः पाचको भुङ्क्ते, ओदनः पक्वो भुज्यते चैत्रेणेत्यादौ, कृता = ण्वुला क्तेन च **तृतीयापत्तिरिति**। आदिना द्वितीयाया ग्रहणम् = कृदर्थान्वये प्रथमाया निमित्तत्वमेव नेत्याह **प्रथमायास्त्विति तदन्वयेति** कृदर्थान्वयेत्यर्थः, निमित्ताभाव एव = तिङ्निपाताभिहितकारके एव तत्प्रवृत्तेः।

**नचैवमपि तदन्वयविवक्षायां षष्ठ्यापत्तिः, अनभिहित इत्यधिकारस्य प्रथमाविधायकसूत्रेण विच्छेदात् "कर्तृकर्मणोः कृती" 2-3-65 ति कर्तृषष्ठीविधायकसूत्रेऽनुवृत्त्यभावा दिति वाच्यम्। मण्डूकप्लुतिन्यायेन तत्रापि तदनुवृत्तेः सर्वसंमतत्वात्। अन्यथा चैत्रः पाचको भुङ्क्ते इति वक्तव्ये चैत्रस्य पाचको भुङ्क्ते इत्यपि प्रयोगापत्तेः। अत श्चैत्रः पाचक इति प्रथमान्तयो रुभयोरपि भुङ्क्त इति क्रियायामेवा न्वयः, परस्पर मभेदान्वयबोधस्तु पूर्ववत्। यत्रापि क्रियापदाश्रवणं, तत्रापि "अस्तिर्भवन्ती" त्यनेनाध्याहर्तव्यम्।**

**नचेति** चैत्रः पाचको भुङ्क्ते, ओदनः पक्वो भुज्यत इति प्रयोगयो स्तृतीयाद्वितीययो र्वारणेपि तत्प्रयोगानुपपत्ति रेव, "कर्तृकर्मणोः कृती" ति षष्ठ्या दुर्वारत्वा दिति शङ्कितु राशयः। एवं = कृदर्थान्वियविवक्षायाम्। षष्ठ्यापत्तिः = "कर्तृकर्मणोः कृती" ति सूत्रविहितायाः कृद्योगषष्ठ्या आपत्तिः। ननु तृतीयाद्वितीययोर्यथाऽभिहितत्वा दप्रवृत्ति, स्तथा षष्ठ्या अप्य प्रवृत्ति रेवेत्यत आह – **अनभिहित इतीति** तृतीयाद्वितीयाविधायकसूत्रयोः "अनभिहिते" 2-3-1 इत्य धिकारस्य प्रवृत्त्या भिहते तयो रप्रवृत्तिः, "कर्तृकर्मणो कृती" त्यत्र तदधिकारस्याऽप्रवृत्त्या भिहितेपि तेन षष्ठी प्रवर्तत इति भावः। तत्र तदधिकाराप्रवृत्ति मुपपादयति – **प्रथमाविधायकेति विच्छेदादिति** "प्रातिपदिकार्थलिङ्गपरिमाणवचन-मात्रे प्रथमे" 2-3-46 ति सूत्रे "अन भिहिते" 2-3-1 इति सूत्रं नानुवर्तते, अन भिहितानां प्रातिपदिकार्थाना मसंभवात्। अतस्तेन विच्छेदात् "कर्तृकर्मणो" 2-3-65 रिति सूत्रेपि नानुवर्तते तदधिकारसूत्रमिति भावः। मण्डूकप्लुतिन्यायेन = तद्दृष्टान्तेन। सर्व संमतत्वात् = भाष्यकारादिसर्वसंमतत्वात्

अन्यथा तत्र तस्याननुवृत्तौ। वार्तिककारमते उक्तप्रयोगयो रुपपत्तिमाह – **अत इति** अभिहितकारकत्वस्य प्रथमार्थत्वा दित्यर्थः। इतरत् पाणिनिमतवदित्याह **उभयोरपीति** यत्रापि = चैत्रः पाचक इत्यादौ।

**न चैवं प्रथमाया स्तिङ्निपातान्यतरसामानाधिकरण्यनिमित्तत्वे चैत्र पच् + लृ इति स्थितिदशायां तिङोऽभावा त्प्रथमानिमित्ताभावेन अप्रथमासमाना धिकरणपदत्वरूपस्य शतृशानचो र्निमित्तस्य सत्त्वात् "लटः शतृशानचा व प्रथमासमानाधिकरणे" 3-2-124 इत्यनेन विशेषविधिना शतृशानचोरेव लटि प्राप्त्यापत्ते स्तिङादेशस्य लिडादिविषयत्वेनापि सामान्यविधिवशादुपपत्ते र्लटि तिङोऽभावापत्ति रिति वाच्यम्।**

एव "मभिहिते प्रथमा" "तिङ्समानाधिकरणे प्रथमे" ति वार्तिकानु सारेण प्रथमाया अर्थमुपवर्ण्य "शतृशानचोश्च निमित्तभावा त्तिङोऽभाव स्तयोरपवादत्वा" दिति कात्यायनेनो द्भावितं दोष माविष्करोति – **नचेति** एवं = निरुक्तरीत्या। **सामानाधिकरण्यनिमित्तत्वेनेति** तदन्यतरेण सामानाधिकरण्यं निमित्तं यस्या इति बहुव्रीहिः, तत्सामानाधिकरण्यनिमित्तकत्वे इत्यर्थः। अस्य 'लटि तिङोऽभावापत्ति' रित्यत्रान्वयः। लटि तिङोऽभावे तत्सामानाधिकरण्यनिमित्तकप्रथमाया अभावापत्तिः, एवं च पचति चैत्र इत्यादौ प्रथमाया अप्रवृत्त्यापत्ति रित्याशयः। तिङ्समानाधिकरणे प्रथमाया अप्रथमासमानाधिकरणे शतृशानचोश्च वाक्य संस्कारपक्ष एवो पपत्ति रित्याशयेन प्राथमिकी प्रक्रियां दर्शयति – **चैत्र इति** निर्विसर्गः पाठः। तिङां लकारस्य स्थाने विधाना त्तत्प्रवृत्तियोग्यं रूपं दर्शयति – **पच् + लृ इति इति स्थितिदशायामिति** इति प्राथमिकावस्थाया मित्यर्थः। तिङोऽभावात् = तिङोऽनुत्पत्तेः। **प्रथमानिमित्तेति** प्रथमाया यन्निमित्तं तिङ्सामानाधिकरण्यं तस्या भावादित्यर्थः। निरुक्तदशायां यावत्तिङो नोत्पद्यन्ते तावत्तिङ्सामानाधिकरण्यरूपनिमित्ताभावेन प्रथमायाः प्रवृत्ति र्नेत्याशयः। इदं च तिङपवादशतृशानचोः प्रवृत्तौ निमित्त मिति बोध्यम्। ननु स्थानिनो लकारस्य सत्त्वा त्तिङ् प्रवर्तेत इत्यत

आह – **अप्रथमासमानाधिकरणेति** अप्रथमान्तं यत्समानाधिकरणं पदं तद्रूपस्येत्यर्थः। प्रथमाया अप्रवृत्तौ चैत्र इत्यस्या प्रथमान्तनया तत्समानाधिकरणपदरूपस्येत्यर्थः ननु शतृशानचोरेव प्रवृत्तौ किं विनिगमक मत आह – **विशेषविधिनेति** तिङां लकारसामान्यं स्थानम्। शतृशानचोस्तु लङ्मात्रम् अतः शानज्विधिर्विशेषशास्त्रम्, अतो पवादत्वा त्तिङ्बाधनेन शतृशानचावेव प्रवर्तेते इति भावः, लटि = तद्विषये। तर्हि तिङां विषयापहार एवेत्यत आह – **तिङादेशस्येति** अस्य 'उपपत्ते' रित्यत्रान्वयः, तिङ्रूपस्या देशस्येत्यर्थः। तिङ इति क्वचित्पाठः, स च सुगम एव तिङादे रिति क्वचित्पाठो दृश्यते, तत्रादिपदस्य फलं मृग्यम्। **लिङादिविषयत्वेनापीति** आदिपदेन लृडतिरिक्तलकारस्य ग्रहणम्। तिङां लकारसामान्यस्य स्थानित्वादाह – **सामान्यविधिवशादिति** प्रकृतार्थमाह – **लटितिङोऽभावापत्तिरिति** तिङभावे तत्सामानाधिकरण्यनिमित्तकप्रथमाया अप्रवृत्त्यापत्तिः तथाच पपाच देवदत्त इत्यादय एव प्रयोगाः साधवः स्युः, नतु पचति देवदत्त इत्यपीति भावः **वाच्यमिति** नचेत्यस्यात्र संबन्धः। अयमर्थः – **चैत्र पचल्** इत्यवस्थायां तिङोऽभावा त्प्रथमाया अप्रवृत्त्या चैत्र इत्यस्या प्रथमान्ततया तत्सामानाधिकरण्यरूप-निमित्तसद्भावा त्तिङ्बाधनेन विशेषविहितत्वा च्छतृशानचो रापत्त्या लटि प्रथमायाः प्रयोग एव न स्यात्। तिङस्तु लडतिरिक्तो लकारो वकाशः। स एव प्रथमाया अप्यवकाशः। तथाच "अभिहिते प्रथमा" "तिङ्समानाधिकरणे प्रथमे" ति कात्यायनोक्तलक्षणस्या व्याप्तिः। एष एव दोषो वार्तिककृतोक्तः। शतृशानचो रप्रथमासमानाधिकरणरूपनिमित्त सत्त्वात्तयो रेव प्रवृत्त्या लटि प्रथमाया अभावः, तिङ्तु न, शतृशानचो स्तिङपवादत्वा दिति तदर्थ इति।

**एतादृशार्थस्य लटि शतृशानज्विधानमात्रेणैव सिद्धे 'रप्रथमासमानाधिकरण' इति पदवैयर्थ्यापत्ते स्तत्परिहारार्थं प्रथमाया लटयपि ज्ञापकबलेन सिद्धे, स्तस्या श्च प्रयोजकीभूत तिङादिसामानाधिकरण्यं विनाऽनुपपत्ते र्लटि तिङ्सिध्युपपत्तेः। अत एव ज्ञापकेन भावितिङादिकं निमित्तीकृत्य सर्वा एव विभक्तयो लटि भवन्तीति ज्ञाप्यते। तत्र च प्रथमाभिन्नविभक्तिसामानाधिकरण्ये शतृशानचो र्विधानेपि न तयोः पूर्वप्रमिततिङादि-बाधकत्वम्।**

**एतादृशार्थस्येति** लटि तिङोन प्रवर्तन्ते, अतस्तत्र प्रथमा न भवतीत्येतादृशार्थस्येत्यर्थः अयमर्थः – निरुक्तरीत्या लटि प्रथमा नैव प्रवर्तते, निमित्ता भावात्। तथाच प्रथमासामानाधिकरण्ये शतृशानज्वारणाय क्रियमाण 'मप्रथमासमानाधिकरणे' इतिनिषेधवचनं व्यर्थमेव नचेष्टापत्तिः, शास्त्रानर्थक्यस्य वृद्धिसंज्ञासूत्रे भाष्यकृता निराकृतत्वात्। अतस्तद्वचन बलेन "लटयपि प्रथमा प्रवर्तते' इति ज्ञाप्यते, प्रथमाप्रवृत्तेश्च तिङ्सामानाधिकरण्यमूलकतया मूलभूतातिङुत्पत्तिरपि लटि ज्ञाप्यते, 'यावताविना नुपपत्ति स्तावत्सर्वं ज्ञाप्यते' इति न्यायात्। एवं च प्रथमासामानाधिकरण्ये शत्रादिवारणाय सूत्रे निषेधवचनं स्वांशे चरितार्थम्। परंतु तत्सूत्रीयविध्यंशप्रयोजकद्वितीयादिविभक्त्युत्पत्ति रप्यनेन ज्ञाप्यते, तेन विना सूत्र प्रवृत्ते रयोगात्। तेन पचन्तं चैत्रं पश्येत्यादिः सिध्यति 'तिङ्समानाधिकरणे प्रथमे' ति सूत्रयत, स्तदुपरि "शतृनचोश्च निमित्त भावा त्प्रथमाऽभाव स्तयो रपवादत्वा" दिति दोष मुद्भाव्य तमपरिहृतवतो वार्तिककारस्या शयोऽयमेवेति निश्चेतुं शक्यते, प्रकारान्तरसद्भावे तद् वार्तिककृता वश्यं प्रदर्शनीयं स्यात् तत्तु न कृतम् यत्सूत्रप्रवृत्तिमूलको यं दोष, स्तेनैव पारेहारोपि सुकर इत्येव वार्तिककारस्य हृदयम् "एवं च वार्तिककृता दोषमात्रमुद्भावितम्, समाधिस्तु सुकर इत्याशयेन नोक्तः, स च निरुक्तरीत्या ज्ञापनरूप इति तदाशयः। अन्यत्राप्येतादृशी रीति र्दृश्यते वार्तिककारस्य यथा – "अनिगन्तोऽञ्चतौ वप्रत्यये" 6-2-52 इति स्वरविधायके पाणिनिसूत्रे वार्तिककृता "अनिगन्तप्रकृतिस्वरत्वेयणादेशे प्रकृतिस्वर भावप्रसङ्ग"

इति पूर्वपक्षमात्र मुक्तम् समाधिस्तु सुकरत्वा न्नोक्तो वार्तिककृता। **स च "नेन्द्रस्य परस्य"** 7-3-22 तिनिषेधेन सन्धेः पूर्व पूर्वोत्तरपदकार्यज्ञापनरूप इति वार्तिककृदाशयः। स्पष्टं चेदं **भाष्यप्रदीपोदद्योते।** तद्वत्प्रकृतेपी-ति **मात्रेणैव सिद्धेरिति** निषेधवचनं विना विधिवाक्यमात्रेणैव सिद्धे रित्यर्थः। **पदवैयर्थ्यापत्तेरिति** लटि तिङोऽभावेन प्रथमाया अप्रवृत्त्या व्यावर्त्याभावेन निषेधवचनवैयर्थ्यापत्ते रित्यर्थः। तत्परिहारार्थम् = वैयर्थ्यपरिहारार्थम्। ज्ञापकबलेन = अप्रथमासमानाधिकरणे, इतिनिषेध-वचनरूपज्ञापकबलेन। यावता विनेतिन्याया दाह – **तस्याश्चेति** लटि प्रथमाया इत्यर्थः। प्रयोजकी भूततिङ्सामानाधिकरण्य मिति पाठः। तिङादी ति त्वपाठः। आदिग्राह्यस्या भावात्। तत्पाठेतु आदिपदेन निपातस्य ग्रहणं ग्रन्थकृद्रीत्या। **तिङ्सिध्द्युपपत्तेरिति** तथाच तिङ्सामानाधिकरण्यरूपनिमित्त सद्भावात्प्रथमायाः प्रवृत्त्या तत्र शत्रादिवारणाय "अप्रथमासमानाधिकरणे" इति निषेध श्चरितार्थः। अन्यत्र प्रयोजनं चैत्रः पचतीति प्रयोगसिद्धिरिति भावः। ननु शत्रादि विधान मप्रथमासामानाधिकरण्ये न घटते। चैत्र पच् + ल् इत्यवस्थायां चैत्रादेः कर्मत्वादिनिरूपक भावनाभावेन कर्मत्वाद्यसिध्द्या तद्वाचकद्वितीयादीना मप्रवृत्ते रित्यत आह – **अत एव ज्ञापकेनेति** अत इत्यत्र सार्वविभक स्तसिः। अनेनैव ज्ञापाकेनेत्यर्थः। **भावितिङादिक मिति** आदिना इवादिनिपातस्य ग्रहणम्। चैत्र पच् ल् इत्यवस्थायां तिङादेरभावेपि चैत्रं पचन्तं पश्यति पचता चैत्रेण पीयते, पचते चैत्राय देहीत्यादिप्रयोगकाले तिङादेः सत्त्वा त्तदादाय प्रथमतो द्वितीयादीनां सर्वासा मपिविभक्तीना मुत्पत्तिः स्वीक्रियते। अत्र चेदमेव शत्रादिविधानं ज्ञापक मिति भावः, सर्वा एव = सर्वा अपि, **ज्ञाप्यते इति** तेन पचन्तं चैत्रं पश्यति, पचमाना च्चैत्रादाददाति इत्यादौ शत्रादिसिद्धि रिति भावः। ज्ञापितमर्थं प्रकृते योजयति **तत्रचेति** निरुक्तार्थस्वीकारे चेत्यर्थः, पचमानं चैत्रं पश्यति, गच्छन्तं मैत्रं पश्यति धावते मैत्राय ददाति इत्यादौ शतृश्शा न च श्चविधानेपि लटि **प्रथमाविषये** शत्रादिस्तिङं न बाधत इत्याह – **प्रथमाभिन्नेति** तयोः = शतृशानचोः। **पूर्वप्रमितेति अप्रथमासमानाधिकरणे** इति निषेधसामर्थ्या ल्लटि प्रथमा तदुपपादकस्तिङ् च स्वीक्रियते, तेन तिङः पूर्व **प्रमाणसिद्धत्वा** न्न तद्बाधकत्वं शत्रादे रिति भावः। एवं च चैत्र पच् ल् इत्यवस्थायां तिङ्बाधनेन न **शतृशानचौ** प्रवर्तेते, ज्ञापकवशेन तत्र तिङ एव प्रवृत्तत्वात्, अतो लटि प्रथमा प्रवर्तत एव **भावितिङादिनिमित्तकतया** द्वितीयादीनां ज्ञापकवशात्प्रवृत्त्या शत्रादिः प्रवर्तते। अतो न क्वापि विप्रतिपत्ति रिति तात्पर्यम्।

**एवं चा प्रथमासमानाधिकरण इत्यस्य पर्युदासत्वेपि लटि तिङुपपत्तिः, प्रसज्यप्रतिषेधत्वपक्षे तु सुतराम्।**

**महाभाष्यकारीया लटि तिङनुपपत्तिपरिहारास्तु दुरुपपादत्वादिह न लिखिताः। सर्वथा तिङ्निपातान्यतराभिहितकर्तृत्वकर्मत्वयोः प्रथमा-इत्याह।**

**तयोश्च द्वितीयाद्यर्थवदेव आख्यातोपात्त भावनान्वय इति सिद्धम्।**

एवं वार्तिकोक्तरीत्या लटि तिङनुपपत्तिं तत्परिहारं च प्रदर्श्य प्रातिपदिकार्थसूत्रे महाभाष्यकारोक्तिं कटाक्षयन्नाह – **एवञ्चेति** निरुक्तरीत्या अप्रथमासमानाधिकरणे, इति ज्ञापकेन लटि तिङा मुपपत्तौचेत्यर्थः। 'कर्मणि द्वितीये' त्यादौ कर्मादौ द्वितीयैवेत्यर्थनियमः, अप्रथमासमानाधिकरण इति **पर्युदास इति पक्षे** तिङा मुपपत्ति र्नास्तीति भाष्योक्तं, पर्युदासपक्षे द्वितीया कर्मण्येवेति विभक्तिनियमपक्षेपि **तिङामुपपत्ति** र्नास्त्येवेति हरदत्ताद्युक्तं चा संगत मेवेति ध्वनयन्नाह **अप्रथमासमासमानाधिकरणे इत्यस्य पर्युदासत्वेपीति तिङुपपत्तिरिति** अप्रथमासमानाधिकरणे इति ज्ञापकाश्रयणा त्पर्युदासपक्षेपि तिङामुपपत्तिः सुलभैवेति भावः। प्रसज्यप्रतिषेधे विमते रभावादाह – **प्रसज्यप्रतिषेधेत्विति** एतत्पक्षे लटि

तिङुत्पत्तेः सर्वै रप्यभ्युपगतत्वादाह – **सुतरामिति** ज्ञापकाश्रयणात्सर्वेष्वपि पक्षेषु लटि तिङा मुपपत्तिर्निराबाधैवेति भावः। ननु भाष्योक्तरीत्यैव तिङा मुपपत्तिः प्रदर्श्यताम्। किं तदनुक्तज्ञापकाश्रयणे-नेत्यत आह – **महाभाष्यकारीया इति तिङनुपपत्तिपरिहारा इति** वार्तिककारोक्त तिङनुपपत्तेः परिहारा इत्यर्थः। अयमर्थः – शतृविधायके "अप्रथमासमानाधिकरणे" इत्यत्र पक्षद्वयम्, १. प्रथमान्तभिन्न-विभक्त्यन्तसमानाधिकरणे इति पर्युदासः, २. प्रथमान्तंसमानाधिकरणे नेति प्रसज्यप्रतिषेध इति। तथा "स्वौजसमौट्" 4-1-2 इत्यादि सामान्यसूत्रेण विभक्तिविधाने पक्षद्वयम्।१.कर्मादिरर्थस्य विभक्त्यन्तर-संबन्धनिवर्तकः 'कर्मणिद्वितीयैवे' त्येवंरूपोऽर्थनियमः, २. विभक्ते रर्थान्तरसंबन्धनिवर्तकः 'कर्मण्येव द्वितीये' त्येवंरूपो विभक्तिनियम इति। एवं ह्याहत्य पक्ष च तुष्टयं संपद्यते – १. पर्युदासार्थनियमौ २. प्रसज्यप्रतिषेधार्थ नियमौ, ३. पर्युदासविभक्तिनियमौ, ४. प्रसज्यप्रतिषेधविभक्तिनियमा-विति। तत्र पर्युदासार्थनियमपक्षाश्रयणे कर्मणि द्वितीयैवेति नियमे द्वितीयादीना मनियमना त्प्रातिपदिकार्थमात्रेपि स्वादिसूत्रेण सप्तानामपि विभक्तीनां समूहालम्बनबुद्धिविषयतया स्थितत्वा त्प्रथमाया विद्यमानत्वेपि प्रथमाभिन्नद्वितीयादिसामानाधिकरण्यरूपनिमित्तसद्भावा त्तिङपवादतया शतृशानचौ स्याताम्। अत स्तत्पक्षे एव "शतृशानचोश्चे" त्यादिवार्तिकोक्तदोषो लगति। द्वितीयपक्षेतु द्वितीयादीनां सत्त्वेपि प्रथमाया अपि विद्यमानत्वा त्तदाश्रयः प्रतिषेधः प्रवर्तते। तथाच शतृशानचो रभावात्तिङिसति तत्सामानाधिकरण्या त्प्रथमैवेति नियमेन द्वितीयादीनां व्यावर्तना न्न दोषः। तृतीयचतुर्थयोरपि चैत्र पच् ल् इत्यवस्थायां कर्मण्येव द्वितीयेत्येवं द्वितीयादीनां कर्माद्यर्थेषु नियमनात्तादृशार्थाभावाद् द्वितीयादीना मप्रवृत्त्याऽनियतायाश्च प्रथमाया विधाना त्पर्युदासे प्रतिषेधे वा नास्ति शतृशानचोः प्रसङ्ग इति नदोषः। एवं च प्रथमपक्षे दोषः, द्वितीयादिपक्षत्रये तिङामुपपत्तिसद्भावात्प्रथमा निराबाधेति तात्पर्यम् प्रथमपक्षाश्रयणेन वार्तिकं प्रवृत्तम्। तत्पक्षेदोष मभ्युपेत्य पक्षान्तराश्रयणेन समाहितं भाष्यकृते-ति तथाच प्रातिपदिकार्थसूत्रे समाधानभाष्यम्, – "पाक्षिक एष दोषः। कतरस्मिन् पक्षे? शतृशानचो द्वैतं भवति अप्रथमा वा विधिना श्रीयते, प्रथमा प्रतिषेधेनेति। विभक्तिनियमे चापि द्वैतं भवति। विभक्तिनियमो वास्या, दर्थनियमोवेति। तद्यदा तावदर्थनियमोऽप्रथमा च विधिना श्रीयते तदा एष दोषो भवति। यदि हि विभक्तिनियमस्तदा यद्येव मप्रथमा विधिना श्रीयतेऽथापि प्रथमा प्रतिषेधेन न तदा दोषो भवती" ति। एवं च भाष्ये परिहारा स्त्रयः कथिताः। तेच निरुक्तदिशाद्रष्टव्या इति बोध्यम्। तेषा मुपेक्षणेबीजमाह **दुरुपपादत्वादिति** दुष्टः, उपपादः उपपादनं प्रमाणं येषां ते, दुरुपपादाः = निष्प्रमाणाः तेषां भावः तस्मादित्यर्थः अयं भावः – भाष्यकृता पर्युदासेपि विभक्तिनियमपक्षे शतृशानचौ न प्रवर्तेते इत्युक्तम् तदयुक्तम्, तत्पक्षेपि तयोर्दुर्वारत्वात्। तथाहि कर्मण्येव द्वितीयेति विभक्तिनियमेन द्वितीयादीना मनुत्पत्तावपि शेषषष्ठी दुर्वारा, साहि शेष एवेति नियम्यते, यत्र च विभक्तयन्तरस्य नियमो न प्रवृत्तः स शेषः। ततश्च तिङ्सामानाधिकरण्या त्प्राक् शेषलक्षणषष्ठ्यां सत्यां तिङ्बाधनेन शतृशानचौ प्रवर्तेते एव। अतो निर्दुष्टत्वेन भाष्यकृता प्रतिपादिते स्मिन्पक्षेपि तद्दोषतादवस्थ्या देतद्भाष्यस्य प्रौढिवादमात्रत्वा त्तद्बलेन लटि तिङुपपत्तिकल्पनापेक्षया मदुक्तसरणिरेव ज्यायसी। अत एव "अर्थनयमे विभक्ति नियमे च पर्युदासे दोष एव, नियमद्वयेपि प्रसज्य प्रतिषेधे न दोष" इति हरदत्ताद्युक्ति रपि ना दर्तव्या, पर्युदासेपि मदुक्तरीत्या लटि तिङुपपत्ते स्सुकरत्वा-दिति एतत्सर्वमभिप्रेत्यैव "एवं चा प्रथमासमानाधिकरण इत्यस्य पर्युदासत्वेपि लटि तिङुपपत्ति" रित्युक्तम्, कात्यायनमत मुपसंहरति **सर्वथेति** सर्वैः प्रकारै रित्यर्थः। उद्भावितदोषाणां वारणादिति भावः। एते न "तिङसमानाधिकरणे प्रथमे" ति लक्षणान्तरे "शतृशानचोश्च निमित्त भावात्तिङोऽभावस्तयो रपवादत्वा" दित्यनेन प्रत्याख्याते "प्रातिपदिकार्थलिङ्गपरिमणे" 2-3-45 इति आद्याचार्यीयमेव लक्षण व्यवस्थापित" मिति हेलाराजोक्तिरपि परास्तेति तात्पर्यम्, **इत्याहेति** इत्यर्थक माहेत्यर्थः। "अभिहिते

प्रथमा'' ''तिङ्समानाधिकरणे प्रथमा शतृशानचोश्च निमित्ता भावा त्तिङोऽभाव स्तयो रपवादत्वादि'' त्युक्त कात्यायनेन। तत्र तिङ्ग्रहणं निपातस्याप्युपलक्षण मिति निरुक्तार्थसिद्धः, इतरत्तु तत्तात्पर्यवर्णनमिति बोध्यम् तयोश्च = प्रथमार्थयोः कर्तृत्वकर्मत्वयोः।

**न चैवमपि प्रथमार्थस्य आख्यातार्थभावनायामन्वयः, द्वितीयार्थस्तु कृदाद्यर्थेपीति कथं कार्यकारणभावैक्य मिति वाच्यम्। सुबर्थप्रकारकशाब्दत्वावच्छिन्नं प्रति विभक्त्यन्यपदजन्योपस्थिते र्धर्मिविशेष्यतासंबन्धेन कारणत्वेपि प्रमाणान्तरजन्याभिहितत्वाद्युपस्थितिरूपकारणान्तर वशेन विशेषणता नोपपद्यते रिति दिक्।**

**इति कात्यायनमतेन प्रथमार्थनिरूपणं समाप्तम्।**

'द्वितीयाद्यर्थव' दिति विषमो दृष्टान्त इत्याशयेन शङ्कते **नचैवमिति** आख्यातार्थ एवे त्येवशब्देन कृतो व्यावृत्तिः **कृदाद्यर्थेपीति** ओदनं पचमान इत्यादौ कर्तृकृत्प्रत्ययलक्ष्यभावनायां द्वितीयार्थान्वयादिति भावः।

इति प्रथमार्थनिरूपणं समाप्तम्।

# अथ द्वितीयार्थनिरूपणम्

**द्वितीयार्थस्तु "कर्मणि द्वितीया" 2-3-2 इति सूत्रात् कर्मत्वम्, तदपि भावनाया मन्वेति।**

**अत्र विवदन्ते। तत्र नवीनतार्किका स्तावत् – धात्वर्थानधिकरणत्वे सति धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्। पच्यादिधात्वर्थो हि फलावच्छिन्नो व्यापारः, तदवच्छेदकीभूतफलस्य विक्लृत्यादे र्देवदत्तवृत्तिव्यापारानधिकरणीभूतौदनवृत्तित्वा दोदनादेः कर्मत्वमिति लक्षणसमन्वयः। गमनफलस्य संयोगस्य ग्राम इव चैत्रेपि सत्त्वा 'द्धात्वर्थानधिकरणत्वे सती' ति। चैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात्। गमनजन्यपूर्वदेशविभागशालिनि पूर्वदेशे गमनानधिकरणत्वविशिष्टधात्वर्थजन्यफलशालित्वस्य सत्त्वा दति व्याप्तिः, एवं वृक्षाद्भूमौ पर्णं पततीत्यत्र पतनक्रियाजन्यसंयोगविभागरूपफलाश्रययो र्भूमिवृक्षयो रति व्याप्तिः, अतो धात्वर्थतावच्छेदकेति फलविशेषणम्। एवं च गमेः संयोग एव, त्यजेर्विभाग एव, पततिस्पन्दत्यादे र्नैव किञ्चित्फलं धात्वर्थतावच्छेदक मिति नोक्तातिव्याप्तिः।**

**फलपदं च क्रियाजन्यफलपरम्। तेन धात्वर्थतावच्छेदकव्यापारत्व मादाय व्यापारे, अधोदेश मादाया धोदेशावयवे च नातिव्याप्तिः। पतते रधोदेशसंयोगः फलम्। अत एव नरकं पततीत्यपि प्रयोग इति केचित्।**

अथ द्वितीयार्थनिरूपणम्

क्रमप्राप्तं द्वितीयार्थं निरूपयति – **द्वितीयार्थस्त्विति** सूत्रे कर्मशब्दो धर्मपर इत्याह – **कर्मत्वमिति** कर्मैव द्वितीयार्थ इति वैयाकरणमत मूल एव निराकरिष्यते। तत्र = विवदमानानां मध्ये, धात्वर्थानधिकरणत्वे = तदर्थव्यापारानधिकरणत्वे। लक्षणं समन्वेतु प्रथमतो धात्वर्थमाह – **पच्यादि धात्वर्थ इति** व्यापारः फूत्कारादिः। **देवदत्तेति** देवदत्तवृत्तिर्यः फूत्कारादि व्यापारः तदनधिकरणभूतो य ओदनस्तद्वृत्तित्वादित्यर्थः। विशेषणदलं सफलयति। **गमनफलस्येति** संयोगस्य द्विष्ठत्वादाह – **ग्राम इव चैत्रेऽपि सत्वादिति** अतिव्याप्तिवारणाय विशेषणदलमिति भावः। विशेषणे दत्ते तद्वारणं विशदयति – **चैत्रस्य गमनरूपेति** संयोगानुकूलव्यापाराधिकरणत्वादित्यर्थः। विशेष्यदलस्य प्रयोजनमाह – **गमनजन्येति गमनजन्यो यः पूर्वदेशविभागः तच्छालिनि। पूर्वदेशे विशेषणदलमप्यस्ती त्यतिव्याप्ति**-रित्याह – **गमनानधिकरणत्वेति अतिव्याप्तिरिति** एकैव क्रिया पूर्वदेशविभागमुत्तरदेशसंयोगं च जनयतीति पूर्वदेशेऽतिव्याप्तिरिति भावः। पतति समभिव्याहारेऽपि तद्वारणं फलमित्याह – **एवमिति पतनक्रियेति पतनक्रियाजन्य संयोगरूपफलाश्रयत्वेन भूम्याः, तज्जन्यविभागरूपफलाश्रयत्वेन** वृक्षस्य च कर्मत्वं प्राप्नोति। अतस्तद्वारणाय तदिति भावः। एवं च = दत्ते विशेष्यदले। संयोग एव = गमिशक्यतावच्छेदकफलम्, न विभागः। विभाग एव = त्यजेः शक्यतावच्छेदकफलं विभाग एव न संयोगः। अतो नातिव्याप्तिरिति भावः। पततियोगे तां वारयति – **पततिस्पन्दतीति नैव किञ्चित्फलमिति** अत एव तयोरकर्मकत्वमिति बोध्यम्। उक्तातिव्याप्तिः = कर्मधारयः। सप्तमी तत्पुरुषो वा। ननु धात्वर्थतावच्छेदकशालित्वं कर्मत्वमित्येवास्तु, किं फलपदनिवेशेनेत्यत आह – **फलपदं चेति** चशब्दस्तुशब्दार्थकः। **धात्वर्थतावच्छेदकेति** धात्वर्थः = विक्लित्यनुकूल व्यापारः तत्राऽवच्छेदकत्वं व्यापारत्वस्येति तदाश्रयत्वेन व्यापारे कर्मत्वापत्तिः। अतः फलपदम्। फलपदस्य क्रियाजन्यफलपरत्वे फलमाह – **अधोदेशमादायेति** पतति समभिव्याहारेऽधोदेशावयवे धात्वर्थतावच्छेदकफलशालित्वसत्त्वादतिव्याप्तिः, अतः फलपदं निरुक्तार्थकमाश्रयितव्यम्। अवयवे क्रियाजन्य फलत्वाभावान्न दोष इति भावः।

मतान्तरमाह – **पततेर्गति फलमिति** तथाच तदाश्रयत्वेन भूम्याः कर्मत्वाद् वृक्षाद् भूमिं पर्णं पततीति प्रयोग इष्ट एवेति भावः। तत्र मानं दर्शयति – **अत एवेति** तस्य तदर्थकत्वादेवेत्यर्थः। **प्रयोग इति** अत एव "द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" 2-1-24 इति सूत्रेण पतित शब्दस्य द्वितीयान्तेन समासविधानं सङ्गच्छते।

**ननु ग्रामं गमयति चैत्रो मैत्रमित्यत्र मैत्रे कर्मत्वलक्षणस्याव्याप्तिः। मैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात्। न च "सनाद्यन्ता धातवः" 3-1-32 इति वचनाद् णिजन्तस्य धातुसंज्ञात्वावगते र्णिजन्तगमिधात्वर्थस्य गमनानुकूलव्यापारस्य मैत्रेऽभावा न्नाव्याप्तिः। तदर्थतावच्छेदकस्य गमनाख्यफलस्य मैत्रे सत्त्वेन विशेष्यदलस्यापि सत्त्वा दिति वाच्यम्। तथात्वे ग्रामस्य कर्मत्वानुपपत्तेः। न च णिजन्तस्य धातुत्वेपि गमेरपि धातुत्वानपायाद् ग्रामस्य तत्कर्मत्वोपपत्तिः। तथात्वे पाचयति चैत्रो मैत्रेणेत्यत्रापि मैत्रस्य कर्मत्वापत्तेः। न चेष्टापत्तिः, द्वितीयान्तत्वापत्तेः। "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणा मणि कर्ता सणौ, 1-4-52 इत्यनेन सूत्रेण गत्यादीनां धातूना मण्यन्तानां यः कर्ता, स ण्यन्तानां कर्मेत्यर्थकेन गत्यादिभिन्नधातुयोगे कर्मसंज्ञानिषेधेन तत्रापीष्टापत्तेः कर्तु मशक्यत्वात्। "हृक्रोरन्यतरस्याम्" 1-4-53 इति सूत्रेण हारयतिकारयति धातुयोगे विकल्पेन कर्मसंज्ञाविधानाद् हारयति कारयति कटं भृत्येन, हारयति कारयति कटं भृत्य मितिप्रयोगद्वयावगते स्तत्र भृत्ये धात्वर्थतावच्छेदकीभूतप्रयोज्यव्यापार-रूपफलाश्रयत्वस्य सर्वदा सत्त्वेन कर्मत्व– तदभावयो र्वक्तु मशक्यत्वाच्च।**

**एतेन – स्वप्रकृत्यर्थभिन्नसमवेतक्रियाजन्य धात्वर्थतावच्छेदकफलशालित्वं कर्मत्व-मित्यप्यपास्तम्। पाचयति चैत्रो मैत्रेणेत्यादा वतिव्याप्ते रिति चेत्।**

गमि समभिव्याहारे प्रयोज्ये कर्मत्वमव्याप्तमिति शङ्कते **नन्विति** अस्य "पाचयति चैत्रो मैत्रेणेत्यादा वतिव्याप्तेरिति चेत्, इत्यत्राऽन्वयः। **गमयतीति** गच्छन्तं प्रेरयतीत्यर्थे गम् धातोः "हेतुमति च" 3-1-26 इत्यनेन प्रयोजकव्यापारे प्रेरणारूपे णिच् प्रत्ययः, तदन्तात्कर्तरि लः। मैत्रे = संयोगानुकूलव्यापाराश्रये प्रयोज्ये मैत्रे। विशेषणदलार्थाभावादव्याप्तिरित्याह – **गमनरूपेति** संयोगानुकूलव्यापारो गमेरर्थः। मैत्रस्य तद्व्यापाराधिकरणत्वेन विशेषणदलाभाव इति भावः। **सनाद्यन्ता इति** सन्, क्यच्, काम्यच्, क्यङ्, क्यष् आचारे क्विप्, णिच्, यङ्, यक्, आय, ईयङ्, णिङ्, एते द्वादश सनादयः। एतदन्ता धातुसंज्ञका भवन्तीति तत्सूत्रार्थः। वचनात् = पाणिनि सूत्ररूपात्। **गमनानुकूलव्यापारस्येति** संयोगानुकूलव्यापारो गमेरर्थः। तदनुकूल व्यापारो णिजर्थः। तथाच संयोगानुकूलव्यापारानुकूलव्यापारस्य प्रयोजके चैत्रे सत्त्वेन। तस्य प्रयोज्ये मैत्रेऽसत्त्वान्नाव्याप्तिरिति भावः। ननु विशेष्यदलाभावादव्याप्तिरेवेत्यत आह – **तदर्थतावच्छेदकस्येति** ण्यन्तधात्वर्थतावच्छेदकस्येत्यर्थः। गमनाख्यफलस्य = व्यापाररूपफलस्य, तथात्वे = णिजन्तधातुग्रहणे, **कर्मत्वानुपपत्तेरिति** ण्यन्तधात्वर्थतावच्छेदकत्वस्य प्रयोज्यव्यापारे एव सत्त्वेन संयोगेऽभावात्तदाश्रयत्वेन ग्रामस्य कर्मत्वानापत्तिरिति भावः।

**नचेति** ण्यन्तधातमादाय प्रयोज्यस्य णिच्प्रकृतिभूतगमिमादाय ग्रामस्य कर्मत्वमिति भावः। धातुत्वेऽपि = "सनाद्यन्ता धातव" इत्यनेन तत्त्वेऽपि। गमेरपि = णिच्प्रकृतिभूतगमेरपि। धातुत्वानपायात् "भूवादयो धातवः" 1-3-1 इत्यनेन विहित धातुत्वस्य, अनपायात् = अनपगमात्। तत्कर्मत्वोपपत्तिः = प्रकृतधातुशक्यतावच्छेदक संयोगाश्रयत्वेन कर्मत्वोपपत्तिः। समाधत्ते – **तथात्वे इति** धातुभेदेनो भयोः कर्मत्वोपपादने इत्यर्थः। **कर्मत्वापत्तेरिति** पच् रूपप्रकृतिधातमादाय ओदनात्

कर्मत्वस्येष्टत्वेऽपि ण्यन्त धातुमादाय विक्लित्यनुकूलव्यापाररूपफलाश्रयत्वेन गमयति-समभिव्याहार इव प्रयोज्यस्य मैत्रस्यापि कर्मत्वापत्तिरिति भावः। ननु **लक्षणानुगतत्वाद्** द्वितीयान्तत्वमिष्टमेवेत्यत आह – **गतिबुद्धीति** सूत्रार्थमाह – **गत्यादीनामिति अण्यन्तानां यःकर्तेति** गच्छति ग्रामं मैत्र इत्यण्यन्तावस्था, शुद्ध धातुप्रयोग इति यावत्। तत्र कर्ता = मैत्रः, सः = कर्ता, ण्यन्तानाम् = गमयतीन्यादीनाम्, कर्म स्यादित्यर्थकेन। **गत्यादिभिन्नेति** निरुक्तरीत्या धातुभेदेन ग्रामस्य प्रयोज्यस्य च कर्मत्वसिध्या गतिबुद्धीत्यादिसूत्रं नियमार्थं-ण्यन्तेनाप्यमानस्य यदि कर्मत्वं तर्हि गत्यादियोग एवेति। तेन तद्भिन्न धातुयोगे प्रयोज्यस्य न कर्मत्वमिति भावः। **कर्मसंज्ञा निषेधेनेति** नियमशास्त्राणां फलतो निषेधे तात्पर्यमिति भावः। तत्रापि = गत्यादिभिन्ने पच्यादियोगेऽपि इष्टापत्तेः = कर्मत्वे। तथाच धातुभेदेन **कर्मत्वस्यानुपपादनाद्** गमयति योगे प्रयोज्येऽव्याप्तिस्तदवस्थैवेति भावः।

निरुक्तकर्मत्वलक्षणे दोषान्तरमाह – **हृक्रोरिति** हृञ् कृञ् अनयोरण्यन्तावस्थायां यःकर्ता स **णौ** वा कर्म स्यादिति तत्सूत्रार्थः। भृत्यः कटं हरति करोतीत्यण्यन्तावस्थायां कर्तुर्भृत्यस्य णौ वा कर्मत्वम्। कर्मत्वे द्वितीया, तदभावे भृत्यस्यापि कर्तृत्वात्तत्र तृतीयेति प्रयोगद्वयमवगम्यते इति भावः। तत्र = तत्सूत्रोदाहरणे। **धात्वर्थतावच्छेदकेति** धातुः = ण्यन्तः; तदर्थतावच्छेदकीभूतं यत् प्रयोज्यनिष्ठव्यापाररूपं फलं, **तदाश्रयत्वस्येत्यर्थः। सर्वदेति** **विकल्पसंज्ञा विधानमात्रेण न तदपैतीति भावः। वक्तुमशक्यत्वादिति** एवं निरुक्तलक्षणानुसारेण हारयति कटं भृत्यमित्येकप्रयोग एव सिध्यति। नतु प्रयोगद्वयम्। तच्च सूत्रानुरोधादावश्यकमेवेति भावः। तथाच गमयति योगे **प्रयोज्येऽव्याप्ति** निरुक्तकर्मत्वस्य, हारयति कारयति योगे द्वितीयान्ततृतीयान्तरूपप्रयोगद्वयानापत्तिः **प्रकृतलक्षण** इति भावः।

**एतेन = पाचयति योगे दोषतादवस्थ्येन। स्वप्रकृत्यर्थेति स्वं = द्वितीया, तत्प्रकृतिः = ओदनादि प्रातिपदिकं,** तदर्थादभिन्नश्चैत्रादिः, तत्समवेता क्रिया = फूत्कारादिः, तज्जन्यं धात्वर्थतावच्छेदकं यत्फलं = विक्लित्यादि तच्छालित्वमित्यर्थः। **अतिव्याप्तेरिति मैत्रभिन्न चैत्रसमवेतप्रेरणामादाय मैत्रे प्रयोज्ये** कर्मत्वापत्तिरिति भावः।

**तत्तत्क्रियाव्यक्तिभेदेन कर्मत्वानां भेदात्। इतरथा उभयकर्मजसंयोगस्थले चैत्रस्य स्व भिन्नमैत्रसमवेत कर्मजन्यसंयोगाश्रयत्वा च्चैत्रो मैत्रं गच्छतीत्यत्र चैत्रस्य कर्मत्वापत्तेः। अन्यथा मैत्रस्यापि क्रियासमानाधिकरणफलाश्रयत्वात्कर्मत्वानापत्तेः। अत स्तत्तत्क्रियान्त र्भावेणैव लक्षणं निर्वाच्यम्। तथात्वे चैत्रनिष्ठक्रियायाः परसमवेतत्वा भावादेव तत्र नातिव्याप्तिः। ततश्च यत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालि सत् यत् यत्क्रियानधिकरणं तत् तत्क्रिया-कर्मेति विशिष्यैव कर्मत्वनिरुक्तिः।**

समाधत्ते – **तत्तत्क्रियेति तत्तत्क्रियामन्तर्भाव्यैव** कर्मत्वं निर्वाच्यम्। क्रिया भेदेन कर्मत्वं भिद्यत एव। अनुगतैककर्मत्वस्य निर्वक्तुमशक्यत्वादिति भावः। तदाह – **कर्मत्वानां भेदादिति** अन्यथा = तत्तत् क्रियान्तर्भावेणा निरुक्तौ। **उभयकर्मजेति** चैत्रमैत्रयोः परस्परं गच्छतोस्सतोस्तदुभयनिष्ठव्यापारेण **जन्यो यः संयोगः, तत्स्थल इत्यर्थः। चैत्रस्य कर्मत्वापत्तिमुपपादयति – स्वभिन्नेति स्वं = चैत्रः; तत्रैव** दोषान्तरमाह – **अन्यथेति** तत्तत्क्रियान्तर्भावेण कर्मत्वस्यानिरुक्तावित्यर्थः। मैत्रस्य कर्मत्वानापत्ति-मुपपादयति – **समानाधिकरणेति** कर्मत्वलक्षणे "धात्वर्थानधिकरणत्वे" इति विशेषणेन प्रकृते मैत्रस्य गमिव्यापाराधिकरणत्वात् कर्मत्वानापत्तिरिति भावः। तथात्वे = तत्तत्क्रियान्तर्भावेण निरुक्तौ च। चैत्रस्य कर्मत्वापत्तिं वारयति। **परसमवेतत्वाभावादिति** यदा चैत्रनिष्ट क्रियामादाय मैत्रस्य प्रकृते कर्मत्वमुच्यते तदा चैत्रक्रियायाः परसमवेतत्वाभावान्न चैत्रस्य कर्मत्वं, तदा मैत्रस्य तत्त्व सिध्यति। तत्र =

चैत्रे। मैत्रनिष्ठ क्रियाया ग्रहणे तु चैत्रस्य कर्मत्वं, मैत्रस्य तदभावश्च सिध्यतीति भावः। निष्कृष्टलक्षणं दर्शयति – **ततश्चेति यत्क्रियेति** याचासौ क्रिया चेति कर्मधारयः। कर्तर्यतिव्याप्तिवारणायाह – **यत्क्रियानधिकरणमिति।**

**परसमवेतक्रियाजन्य धात्वर्थतावच्छेदकफलशालि यत् तत् तत्क्रियाकर्मेति वा निरुक्तिः। पच्यादिक्रिया मादायैव लक्षणसमन्वयः स्पष्ट एव।**

**चैत्रो मैत्रं गच्छति मैत्र श्चैत्र मित्यत्र तत्तत्कर्तृनिष्ठक्रिया मादाय, गमयतीत्यादौ च गमिक्रियामादाय ग्रामस्य, तदनुकूलव्यापाररूपणिजर्थ मादाय मैत्रस्य कर्मत्वं निर्वाच्यम्। घटं भावयतीत्यादौतुणिजर्थ मादायैव, भूधातो रकर्मकत्वात्। पाचयतीत्यादौ च पच्यर्थ मादायैव ओदनस्य, नत्वनुकूलव्यापार मादाय मैत्रस्य, उक्तसूत्रानुरोधात्। अत एव तत्र णिजर्थोऽकर्मक एव। अथवा तस्यापि ओदन एव कर्म, विक्लृत्त्यनुकूलत्वाविशेषात्।**

**एवं च हारयति-कारयतिनिरूपितकर्मत्व निरुक्तौ तृतीयान्तपदानभिधेयत्व मपि देयम्। तेन हरणादिकर्तुः पाक्षिककर्मत्वाविघातः। एवं गमिपतत्यादौ विवक्षा, सप्तम्यन्तपदानभिधेयत्वं वा देयम्। तेन ग्रामे गच्छति नरके पततीत्यादिप्रयोगस्याप्युपपत्तिः।**

निरुक्त्यन्तरमाह – **परसमवेतेति** उभयकर्मजसंयोगस्थले समन्वय दर्शयति – **चैत्रो मैत्रं गच्छतीति तत्तत्कर्तृनिष्ठेति** यस्य कर्तृत्वमिष्यते, तन्निष्ठक्रियामादायेत्यर्थः। णिजन्ते प्रक्रान्तामव्याप्तिं वारयति **गमयतीति** गमिक्रियां = प्रकृत्यर्थप्रयोज्यनिष्ठां संयोगानुकूलक्रियाम्। मैत्रस्य = प्रयोज्यस्य। अकर्मकधातुप्रकृतिकण्यन्ते कर्मत्वमुपपादयति – **घटं भावयतीति** घटो भवतीत्यण्यन्तावस्थायां कर्तुर्घटस्य ण्यन्ते "गतिबुद्धी" त्यादिना कर्मत्वम्। गमेः सकर्मकत्वात्तत्र ग्रामस्यापि कर्मत्वमिति विशेषः। पाचयति योगे प्रयोज्ये कर्मत्वापत्तिं वारयति – **पाचयतीति** पच्यर्थम् = विक्लित्यनुकूलव्यापारः पच्यर्थः, फूत्कारक्रियामादायौदनस्य कर्मत्वम्। मैत्रस्य = मैत्रस्यापि। **उक्तसूत्रेति** "गतिबुद्धि" इत्यादि सूत्रानुरोधादित्यर्थः। अत एव = णिजर्थमादाय प्रयोज्यस्य कर्मत्वाभावादेव। तत्र = गत्यादिभिन्न धातुयोगे, **अकर्मक एवेति** भावयतीत्यत्र धातुरकर्मकः, णिजर्थः सकर्मकः, पाचयतीत्यत्र पचिः सकर्मकः, तमादायौदनादेः कर्मत्वम्। णिजर्थोऽकर्मकः, परंतु उभयोरपि कर्त्रोर्मध्ये प्रयोजके प्रथमा, प्रयोज्ये तृतीया, गमयतीत्यत्र तु प्रयोज्यस्यापि कर्मत्वमिति विवेकः। **अथवेति** अकर्मक धातुयोगे णिजर्थस्य सकर्मकत्वे सकर्मकधातुयोगेऽपि तस्य सकर्मकत्वमेव न्याय्यमित्याशयः। ओदन एवेत्येव शब्देन प्रयोज्यस्य व्यावृत्तिः। एवञ्च = तत्तत्क्रियान्तर्भावेण कर्मत्वनिरुक्त्या सकलदोषवारणे च। **तृतीयान्तेति** ण्यन्तहृकृधात्वर्थक्रियान्तर्भावेण कर्मत्वलक्षणे एतदपि निवेशनीयम्। तेन धात्वर्थतावच्छेदकीभूत प्रयोज्यव्यापाररूप फलाश्रयत्वसत्वेपि न दोष इति भावः। तेन = एतद्विशेषणदानेन। **पाक्षिककर्मत्वेति** हारयति भृत्यं कटम्, भृत्येन वेत्यादि प्रयोगेष्वित्यर्थः। प्रसङ्गादाह – **एवं गमीति** अत्राऽपि **प्रयोगद्वय दर्शनादाह विवक्षेति परसमवेतक्रियाजन्यफलशालित्वमात्रं न कर्मत्वप्रयोजकम्। किन्तु कर्मत्वेन विवक्षितत्वमपि, प्रकृते ग्राम-नरकादेस्तत्वेन विवक्षायां कर्मत्वाद्द्वितीया, अधिकरणत्व-विवक्षायां तु सप्तमीति भावः।** लाघवादाह **सप्तम्यन्तेति** तेन = रीतिद्वयाश्रयणेन। प्रयोगस्यापि = अपिना ग्रामं नरकमिति प्रयोगस्य ग्रहणम्।

**नचैवं तत्तत्कर्मत्वानां भेदाद् द्वितीयायाः शक्तिग्रहानुपपत्तिः, लाघवेन वृत्तित्वे अभावे च द्वितीयायाः शक्तेः। पदार्थान्तराणा मन्यलभ्यत्वेन तत्र शक्तिकल्पनायां गौरवात्। तथाहि ग्रामं**

**गच्छतीत्यत्र द्वितीयार्थो वृत्तित्वं धात्वर्थतावच्छेदके संयोगेऽन्वेति, तज्जनकं गमनं धात्वर्थ एव। एवं द्वितीयार्थोऽभावोपि प्रतियोगितासंबन्धेन धात्वर्थ एव ग्रामादिश्च प्रकृत्यर्थो द्विविधेपि द्वितीयार्थे। एवं च ग्रामनिष्ठ भावप्रतियोगिग्राम वृत्तिसंयोगजनकगमनानुकूल-कृतिमानित्यादिः शाब्दबोधः।**

**नचेति** एवं = तत्तत्क्रिया व्यक्तिभेदेन कर्मत्वनिर्वचने। भेदात् = क्रिया भेदेन [illegible]। शक्तिग्रहानुपपत्तिः = शक्यानां, शक्यतावच्छेदकानाञ्च नानात्वात्तदनुपपत्तिः। समाधत्ते – **लाघवेनेति** अतिरिक्तपदार्थानां कथं लाभोऽत आह – **अन्यलभ्यत्वेनेति** ''अनन्यलभ्यः शब्दार्थ'' इति न्यायादिति भावः। शक्तिकल्पनायां = द्वितीयायास्तत्कल्पनायाम्। अन्यलभ्यत्वमेव दर्शयति – **तथाहीति** गमनं = संयोगरूपफलजनकं व्यापाररूपम्। **धात्वर्थ एवेति** – एवञ्च तस्य धातुलभ्यत्वेन न तत्र द्वितीयायाश्शक्तिरिति भावः। एवं = वृत्तित्ववत्। धात्वर्थे एव = अन्वेतीत्यनुसन्धेयम्। द्विविधेपि = वृत्तित्वरूपे, अभावरूपे च। तथाच ग्रामादेः प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन द्वितीयार्थे वृत्तौ, आधेयता सम्बन्धेन तदर्थेऽभावे चान्वयः। वृत्तित्वस्य धात्वर्थसंयोगेऽन्वयः। अभावस्य प्रतियोगिता संबन्धेन गमनक्रियायामन्वय इति भावः। एवञ्च = निरुक्तार्थस्वीकारे च। **ग्रामनिष्ठेति** ग्रामे गमनं नास्तीत्याकारकप्रतीतिसिद्धो ग्रामनिष्ठोऽभावः, तत्प्रतियोगि ग्रामवृत्तिर्यस्संयोगः तज्जनकं च यद्गमनं तदनुकूलकृतिमानित्यर्थः। अभावस्य द्वितीयार्थत्वादेव चैत्रश्चैत्रं गच्छतीति न प्रयोगः, गमनवति चैत्रे गमनं नास्तीत्यभावस्याभावात्।

**यदितु गमनात्यन्ताभावोपि चैत्रे कालिकाव्याप्यवृत्तित्वा दाशङ्कयेत, तदा परसमवेतेत्या-द्यन्योन्याभावाघटितलक्षणमादाय भेदो द्वितीयार्थः। सच प्रतियोगितासमवायोभयघटित-सामानाधिकरण्यसंबन्धेन गमनान्वयी। ततश्च ग्रामनिष्ठभेदप्रतियोगिसमवेत ग्रामवृत्ति-संयोगजनकगमनवानित्यादिशाब्दबोधः।**

नन्वेवमपि चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिः, क्रियायाः कालिकाव्याप्यवृत्तित्वेन क्रियावति कालान्तरावच्छेदेन क्रियाभावसत्त्वेन तादृशक्रियायाः कालान्तरे चैत्रनिष्ठाभावप्रतियोगित्वादित्याशयेनाह – **यदित्विति कालिकाव्याप्यवृत्तित्वादिति** स्वाधिकरणनिरूपित किञ्चित्कालावच्छिन्नवृत्तिमदत्यन्ता-भावप्रतियोगित्वादित्यर्थः। स्वं = क्रिया। भेदस्य द्वितीयार्थत्वान्न दोष इत्याह – **परसमवेतेति प्रतियोगितेति** स्वाधिकरणवृत्तित्वं सामानाधिकरण्यम् – स्वाधिकरणत्वं प्रतियोगिता संबन्धेन, वृत्तित्वं समवायसंबन्धेन। स्वं = भेदः, गमनवान्नेति प्रतीतिसिद्धः। प्रतियोगिता संबन्धेन तदधिकरणं गमनवाँश्चैत्रादिः (भेदप्रतियोगी) तत्र समवायेन वृत्तित्वं व्यापारस्य। ततश्च प्रतियोगिता संबन्धावच्छिन्न स्वनिष्ठाधेयता निरूपिताधिकरणतावन्निरूपित समवायसंबंधावच्छिन्न वृत्तित्वं व्यापार इति पर्यवस्यति। एवं च गमनवति चैत्रादौ कालान्तरे क्रियाभावसत्वेऽपि क्रियावद्भेदस्यासंभवान्न चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिरिति भावः। ततश्च = निरुक्तार्थस्वीकारात्। **ग्रामनिष्ठेति** ग्रामनिष्ठो यो भेदः ''गमनवान्नेति, तत्प्रतियोगी = गमनवाँश्चैत्रादिः, तत्समवेतं, ग्रामनिष्ठसंयोगजनकञ्च यत् गमनं, तद्वानित्यर्थः, तदनुकूलकृतिमानिति भावः।

**वस्तुतस्तु भेदाव्याप्यवृत्तित्वमते चैत्रे गमनवद्भेदस्य तुल्यत्वा त्तद्वारणाय प्रकृत्यर्थो ग्रामो भेदे प्रतियोगितासंबन्धेनान्वेति। भेदश्चा भावीयविशेषणता समवायोभयघटितसामानाधि-करण्यसंबन्धेन गमनेऽन्वेति। ततश्च ग्रामप्रतियोगिक भेदवत्समवेतग्रामवृत्तीत्यादि शाब्द-बोधः।**

**अत एवा धेयत्वापरपर्यायवृत्तित्वार्थकसप्तमीतो वृत्तित्वार्थकद्वितीयाया भेदः, भेदाद्यर्थस्याधिकत्वात्। अयं चापरो विशेषः, यद् द्वितीयार्थो वृत्तित्वं धात्वर्थतावच्छेदके फल एवा न्वेति, सप्तम्यर्थस्तु वृत्तित्वं धात्वर्थे नामार्थेवेति।**

ननु भेदस्य द्वितीयार्थत्वेऽपि तत्प्रयोगो दुर्वारः, गमनवत्यपि कालान्तरे गमनवद्भेदस्य सत्वात्। अव्याप्यवृत्तिमद्भेदस्याव्याप्यवृत्तित्वमिति मथुरानाथोक्तेरित्याशयेनाह — **वस्तुतस्त्वति। भेदाव्याप्यवृत्तित्वमत इति** अव्याप्यवृत्तिमद्भेदस्याप्यव्याप्यवृत्तित्व मिति मथुरानाथ सम्मते मते इत्यर्थः। **तुल्यत्वादिति** — तथाच गमनवत्यपि गमनवद्भेदस्य सत्वात्तत्प्रयोगापत्तिरिति भावः। द्वितीयार्थो भेद एव, परन्तु तत्र प्रकृत्यर्थस्याधेयतासंबन्धेन नान्वयः, किन्तु प्रतियोगितासम्बन्धेन, तथाच प्रतियोगिता संबन्धेन ग्रामविशिष्टभेदस्य चैत्रे सत्वासमवायेन तत्र व्यापारस्यापि सत्वाद् ग्रामभेद-समानाधिकरणत्वाद्गमनस्य **चैत्रो ग्रामं गच्छतीति प्रयोग उपपद्यते। चैत्रभेदस्य चैत्रेऽसंभवात् चैत्रश्चैत्र** गच्छतीति न प्रयोग इत्याशयेनाह — **प्रकृत्यर्थो ग्राम इति** अभावीयविशेषणता = स्वरूपसंबन्धः। तथाच स्वरूपसंबन्धेन ग्रामभेदाधिकरणे चैत्रादौ गमनस्य समवायेन वर्तमानत्वात्तद्घटिसामानाधिकरणसंबन्धेन धात्वर्थे गमनेऽन्वेतीति भावः। ततश्च = निरुक्तार्थस्वीकारात्। **ग्रामप्रतियोगिकेति** ग्रामप्रतियोगिको भेदः, ग्रामो नेति, स्वरूपसंबन्धेन तद्वान् = चैत्रादिः, तत्समवेतं, ग्रामवृत्तिसंयोगजनकं च यद्गमनं तदनुकूलकृतिमानित्यर्थः।

द्वितीयायां भेदार्थकत्वस्वीकारेण द्वितीया सप्तम्योः पर्यायत्वमपि वार्यत इत्याह — **अत एवेति** द्वितीयाया भेदार्थकत्वस्यापि स्वीकारादेवेत्यर्थः। **आधेयत्वापरपर्यायेति आधेयत्वस्यापरपर्यायं** = रूपान्तरं यद्वृत्तित्वं, शब्दान्तरबोध्यत्वरूपं तदर्थकसप्तमीविभक्तेरित्यर्थः। पञ्चम्यान्तात्तसिल्। अत एवेत्यस्य विवरणमाह — **भेदाद्यर्थस्याधिकत्वादिति**। विशेषः = भेदः। फल एव = ग्राम गच्छतीत्यादौ संयोगरूपे एव। एवेन नामार्थव्यवच्छेदः। धात्वर्थे = स्थाल्यां पचति तण्डुलमित्यादौ। नामार्थे वा = भूतले घट इत्यादौ। भूतलवृत्ति घट इति तत्र बोधः।

**एवं ग्रामस्य गन्तेत्यादौ कर्मणिषष्ठीस्थलेपि बोध्यम्। एवं चैत्रेण ग्रामो गम्यत इत्यात्मनेपदेन फलं भेदश्चा भिधीयते। तत्र प्रथमान्तपदोपस्थाप्यो ग्रामः प्रतियोगिताकत्व-संसर्गेण भेदान्वयी। स च धात्वर्थगमने सामानाधिकरण्यसंबन्धेन। स च धात्वर्थो गमनं पुन रात्मनेपदार्थे फले जन्यत्वसंबन्धेन। तच्चा श्रयत्वेन नामार्थे ग्रामे। ततश्च चैत्रकर्तृकग्राम-भिन्नसमवेत गमनजन्यसंयोगाश्रयो ग्राम इत्येवं शाब्दबोधः।**

**एवं पक्व ओदन इत्यत्र कर्मकृत्प्रत्ययस्थलेपि। तत्रत्वयं विशेषः-कृदर्थः प्रतियोगी, भेदः, वृत्तित्व, माश्रयश्च। ओदनोऽभेदेन प्रतियोगिनि। स च भेदे। स च क्रियायाम्। सा च फलद्वारा वृत्तित्वे, तच्चाश्रये। स चा भेदेन ओदन इति। अनुभवानुसारेण व्युत्पत्तिवैचित्र्यस्या दोषत्वात्।**

एवं = कर्मद्वितीयान्तस्थलवत्। **ग्रामस्येति** गन्तेति कृदन्तयोगे कर्मणि द्वितीया बाधनेन "कर्तृकर्मणोः कृति" 2-3-65 इत्यनेन षष्ठी। ग्रामप्रतियोगिकभेदवत्समवेत ग्रामवृत्तिसंयोगजनकगमनाश्रय इति बोधः। परन्तु द्वितीया भेदेऽर्थे शक्ता, षष्ठी तु लाक्षणिकीति विशेषः।

कर्मणि लकारे बोधप्रकारमाह — **एवमिति** कर्तृलकारवदित्यर्थः। आत्मनेपदेन = कर्मार्थकेनात्मने-पदेन, कर्तृप्रत्ययस्थलाद्विशेषमाह — **फलमिति** संयोगादिफलमित्यर्थः। तत्र = कर्मप्रत्ययान्तघटित-वाक्यस्थले। सः = आत्मनेपदार्थो भेदश्च। सामानाधिकरण्यसंबन्धेन = अभावीयविशेषणता-समवायो-भयघटितेन। फलव्यापारयोर्जन्यजनकभावः संबन्ध- इत्याशयेनाह — **जन्यत्वसंबन्धेनेति** तच्च =

संयोगादिफलं च। ततश्च = निरुक्तार्थस्वीकारात्, **चैत्रकर्तृकेति** चैत्रकर्तृकं, ग्रामभिन्नचैत्रसमवेतं, च यद्गमनं = व्यापाररूपम्, तज्जन्यो यस्संयोगः, तदाश्रयो ग्राम इति भावः।

न केवलं कर्माख्यातस्य भेदार्थकत्व, मपितु कर्मकृतोपीत्याह — **एवमिति** कर्मार्थकात्मनेपदवदित्यर्थः। **पक्व इति** पच् धातोः कर्मणि क्तः, "पचो वः" 8-2-52 इति तस्य वः। आत्मनेपदात्कृतिभेदमाह **तत्रात्विति** कर्मकृत्प्रत्यय इत्यर्थः। प्रतियोगिनि = कृदर्थे प्रतियोगिनि। सच = प्रतियोगी च। भेदे = स्वनिष्ठप्रतियोगिता निरूपकता संबन्धेन। सच = भेदश्च। क्रियायाम् = अभावीयविशेषणता समवायोभयघटित सामानाधिकरण्यसंबन्धेन। सा च = क्रिया च। फलद्वारा वृत्तित्वे = स्वजन्यफलवृत्तित्वसंबन्धेन। तच्च = फलञ्च। आश्रये = कृत्प्रत्ययार्थे आश्रये निरूपकत्वसंबन्धे- **नान्वेति। यद्यपि कर्मणि क्तः, कर्म च फलाश्रयः तथापि फलस्य धातुना लाभादाश्रयः कृदर्थ इति भावः; स च = आश्रयश्च, ओदन इति तथाच ओदनाभिन्नप्रतियोगिक भेदवद्वृत्ति क्रियाजन्यफलनिष्ठाधेयता निरूपकाश्रयाभिन्न ओदन इति विशिष्टबोध इति ज्ञेयम्। नन्विदमयुक्तम्, अनन्तपदार्थानामनन्तकार्य- करणभावानां च कल्पनेगौरवादत आह। अनुभवानुसारेणेति अनभवा पहनवस्या न्याय्यतया तदनुरोधेन** कर्तरि लकारे कर्मणि लकारे कर्मणि कृत्प्रत्यये चानन्तव्युत्पत्तिकल्पना न दुष्यतीति भावः।

**नन्वेवं भेदे प्रतियोगिनः प्रतियोगितामात्रेण वान्वयः, अन्वयितावच्छेदकावच्छिन्नप्रतियोगिता- कत्वेन वा, नाद्यः, वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताक भेदस्य चैत्रेपि सत्त्वेन स्वं गच्छतिचैत्र इति प्रयोगापत्तेः, अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्ति भङ्गापत्ते श्च। नान्त्यः जलं गच्छति जल मित्यत्र जलत्वावच्छिन्नप्रतियोगिताकभेदस्य जलेऽभावा दिति चेत्,**

**धात्वर्थतावच्छेदकफलाश्रयत्वं यद्व्यक्तेः, तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेन प्रति- योग्यन्वयस्य वाच्यत्वात्। एवं च व्युत्पत्ति भङ्गभिया जलपदं जलविशेषे लाक्षणिकम्। तत्सिद्धं वृत्तित्वं भेदश्च द्वितीयार्थ इति।**

**नचैवं तृतीयान्तपदानभिधेयत्वादेरपि वाच्यत्वापत्तिः, तस्या न्यलभ्यत्वेन वाच्यत्वे गौरवात्। कारयति कटं मैत्र मित्यादिप्रयोगस्ये ष्टत्वेन वाच्यतया प्रवेशे प्रयोजनविरहात्। भेदस्यावाच्यत्वे 'स्वं गच्छती' ति प्रयोगापत्तिर्बाधिका, नत्वत्र तथा किञ्चिद्बाधकम्, अतो न तस्य वाच्यत्वमिति दिक्।**

भेदस्य द्वितीयार्थत्वस्वीकारेऽतिव्याप्तिख्याप्तिश्च स्यादिति शङ्कते **नन्विति** एवम् = भेदस्य द्वितीयार्थत्वे तत्र प्रतियोगितया प्रकृत्यर्थस्यान्वये चेत्यर्थः। भेदे = द्वितीयार्थे भेदे। प्रतियोगिनः = प्रकृत्यर्थस्य। प्रतियोगिता मात्रेण = स्वनिष्ठ प्रतियोगिकत्वसंबन्धेन। **अन्वयितावच्छेदकेति** घटं पश्यतीन्यादौ अन्वयी घटः घटत्वमन्वयितावच्छेदकम्, तदवच्छिन्नप्रतियोगिताकत्वेनेत्यर्थः। आद्यः = प्रतियोगिता मात्रेणान्वयः। **वैशिष्ट्येति** वैशिष्ट्यावच्छिन्नप्रतियोगिताकभेदस्य, उभयत्वादिरूप- व्यासज्यवृत्ति धर्मावच्छिन्नप्रतियोगिताक भेदस्य चेत्यर्थः। **चैत्रेपि सत्वेनेति** आकाशवृत्तित्वविशिष्ट चैत्रो नेति भेद आकाशवृत्तित्व वैशिष्ट्यावच्छिन्न प्रतियोगिताकः, तादृशभेदश्चैत्रे वर्तते, तथा स्ववृत्ति व्यासज्यवृत्ति धर्मावच्छिन्नप्रतियोगिको भेदः स्व-घटोभयं नेति भेदः, तद्वृत्तित्वस्य चैत्रीयक्रियाया सत्वात् स्वं गच्छति चैत्र इति प्रयोगापत्तिरिति भावः। **व्युत्पत्तीति** अत एव नीलघटवति भूतले "भूतले घटो **नास्ती" ति व्यवहारो नेति बोध्यम्। भङ्गापत्तेश्चेति एवं चात्रपक्षेऽव्याप्तिर्व्युत्पत्तिभङ्गापत्तिश्चेति** भावः। ननु द्वितीयपक्षे स्वत्वावच्छिन्न प्रतियोगिताकभेदस्य चैत्रेऽभावात् स गृह्यतामत आह — **नान्त्य**

**इति जलं गच्छतीति** एकत्र प्रदेशे वर्तमानं जलमन्यत्र प्रदेशे वर्तमानेन जलेन संयुनक्तीति तद्वाक्यार्थः। एकं कर्तृपदं द्वितीयं कर्मबोधकम्। कर्तरि जले निरुक्तभेदस्याभावादत्राऽव्याप्तिः। तथा चैत्रो मैत्रं गच्छतीति तात्पर्येण प्रयुक्ते चैत्रो द्रव्यं गच्छतीत्यत्रा व्याप्ति, द्रव्यत्वावच्छिन्न प्रतियोगिताकभेदस्य मैत्रेऽभावादिति बोध्यम्। **धात्वर्थतेति** धात्वर्थतावच्छेदकं फलं संयोगादि, तदाश्रयत्वं यस्या व्यक्तेः तद्व्याक्तित्वावच्छिन्न प्रतियोगिताकत्वसम्बन्धेन प्रकृत्यर्थस्य भेदे द्वितीयार्थेऽन्वयः स्वीक्रियते। चैत्रे चैत्रव्यक्तित्वा**वच्छिन्न प्रतियोगिताक भेदाभावाद् नातिव्याप्तिः, तज्जल व्यक्ति भेदस्यान्यस्मिन् जले सत्त्वान्नाव्याप्तिरिति भावः। नन्वेवमपि सार्वजनीन व्युत्पत्तिभङ्गः, अत आह – एवं चेति अतिव्याप्तेरव्याप्तेश्च परिहृतत्वे चेत्यर्थः। ननु पदार्थान्तराणामन्यलभ्यत्वाद्वृत्तित्वं भेदश्च द्वितीयार्थ इत्ययुक्तम्। हारयति कारयति योगे भृत्यादीनां कर्मत्वप्रयुक्तद्वितीयाया उपपत्तये तृतीयान्तानभिधेयत्वस्यापि द्वितीयार्थताया अवश्यस्वीकर्तव्यत्वादित्याशयेम शङ्कते – नचेति तृतीयान्तेति तेन हारयति भृत्येन कटं, कारयति भृत्येन कटं चैत्र इत्यादौ भृत्यस्य न कर्मत्वमिति भावः। वाच्यतापत्तिरिति तथाच वृत्तित्वं भेदश्च द्वितीयार्थ इत्ययुक्तमिति भावः। समाधत्ते – तस्येति तृतीयान्तपदानभिधेयत्वस्येत्यर्थः। अन्यलभ्यत्वेनेति "हृक्रोरन्यतरस्या" 1-4-53 मिति सूत्रेण कर्मत्वस्य वैकल्पिकतया कर्मत्वपक्षे द्वितीयाया एव प्रवृत्त्या तदनभिधेयत्वस्यार्थसिद्धत्वादिति भावः। वाच्यत्वे = द्वितीयाया वाच्यत्वे। किञ्च तस्य द्वितीयार्थत्वं प्रयोजनाभावादेव न युक्तमित्याह। कारयति कटं मैत्रमिति इष्टत्वेनेति। तथाच तस्य तत्त्वाङ्गीकारे मैत्रस्य तृतीयान्तपदेनाभिहितत्वात्ततो द्वितीयानापत्तिः। प्रयोजनविरहादिति। तस्य लक्ष्यसिद्धिरूपं प्रयोजनं नास्ति, प्रत्युत द्वितीयान्तत्वानापत्तिर्दोषोऽतिरिच्यत इति भावः। तर्हि भेदेऽप्ये तत्तुल्यमत आह – भेदस्येति बाधिकेति एषा समनन्तरं मूल एवोपपादिता। अत्र = तृतीयान्त पदानभिधेयत्वस्या वाच्यत्वे। तथा = भेदवत्। अत इति तस्यावाच्यत्वेऽपि बाधकाभावादित्यर्थः।**

**एवं च यत्र एतादृशकर्मत्वबाध, स्तत्र घटं जानाति, मैत्र इच्छति कुरुते, घटस्य ज्ञातेत्यादौ सविषयपदार्थाभिधायिधातुयोगे द्वितीयाषष्ठ्यो र्विषयत्वे लक्षणा। घटविषयकज्ञानाश्रयो मैत्र इति शाब्दबोधः,**

**मैत्रेण ज्ञायते घट इत्यादौ तु कर्मप्रत्ययेन विषयत्वं लक्ष्यते। मैत्राश्रितज्ञानविषयो घट इति च बोधः। ज्ञातो घट इत्यादिकर्मकृत्सुतु विषयेलक्षणा तस्य च घटेऽभेदान्वय इति द्रष्टव्यम्।**

**नष्टइत्यादौ प्रतियोगिनि, न त्वत्र परसमवेतत्वप्रवेशः, वैयर्थ्यात्। स्वात्मानं जानामि, आत्मान मात्मनावेत्सीत्यादिप्रयोगा च्च।**

**एवमकथितकर्मादौ कर्मप्रवचनीययोगनिमित्तकद्वितीयायां च लक्षणैवेत्याहुः।**

नन्वेवं घटं जानातीत्यादौ द्वितीयानापत्तिः। त्वदुक्तार्थासंभवादत आह – **एवञ्चेति** चैत्रो ग्रामं गच्छति **इत्यर्थे चैत्रश्चैत्रं गच्छतीत्यादेर्वारणाय द्वितीयाया निरुक्तार्थकत्वे चेत्यर्थः। घटं जानातीत्यादिसिद्धये आह – यत्रेति** – एतादृश कर्मत्वबाधः = परसमवेतेत्यादिकर्मत्वबाधः। **सविषयेति** सविषयपदार्थाः = ज्ञानेच्छाकृतयः, तद्वाचक ज्ञा इष कृञ् धातुयोगे इत्यर्थः। तेषां ज्ञानादिक्रियामात्रवाचितया तद्योगे घटादीनां निरुक्तकर्मत्वासंभव इति तात्पर्यम्। आख्यातस्य न कृत्यर्थकत्वम संभवात्, अतः तस्याश्रयत्वे लक्षणेत्याशयेनाह **घटविषयकज्ञानाश्रय इति** कर्मप्रत्ययसमभिव्याहारे आह – **मैत्रेण ज्ञायत इति** कर्मप्रत्ययेन = कर्माख्यातप्रत्ययेन। कर्मकृत्प्रत्यये आह – **ज्ञातो घट इति** तस्य च = लक्षितस्य विषयस्य। **अभेदान्वय इति** तथाच मैत्राश्रित ज्ञानविषयाभिन्नो घट इति बोध इति भावः। तादृशं स्थलान्तरमाह – **नष्ट इत्यादाविति** नाश प्रतियोग्यभिन्नो घट इति बोधः। **प्रतियोगिनीति** यद्यप्यत्राप्याश्रयत्वे लक्षणया

निर्वाहः, तथापि प्रतियोगित्वेन बोधानुभवात् तत्परित्यागः। **एतादृशकर्मत्वबाध** इत्युक्तं तमेवाभिप्रेत्याह – **नत्विति** अत्र = जानातीत्यादिसमभिव्याहारे। परसमवेतत्वप्रवेशः = द्वितीयार्थे तत्प्रवेशः। **वैयर्थ्यादिति** विरोधाय इदं = व्यर्थम्, तस्य भावः वैयर्थ्यम्। शाकपार्थिववत्वाद्रोधशब्दस्य लोपः, विरोधश्चात्र घटादीनां कर्मत्वासिद्धिरेव। द्वितीयायाः परसमवेतेत्याद्यर्थकत्वे घटप्रतियोगिकभेदवच्चैत्रनिष्ठज्ञानक्रियाजन्यफलाभावात् घटादीनां कर्मत्वासिद्धिरिति भावः। विरोधान्तरमपि दर्शयति। **स्वात्मानं जानातीति प्रयोगाच्चेति** मतान्तराश्रयणेन। विषयता रूपफलाश्रयत्वेन घटादीनां कर्मत्वोपपादनेपि चैत्रश्चैत्रं गच्छतीतिवत् स्वात्मानं जानातीति प्रयोगासिद्धिरिति तात्पर्यम्। एवं चात्र सर्वथा गत्यभावात् द्वितीयायां विषयत्वे लक्षणाश्रयणेनैव तदुपपत्तिः कार्येति भावः। एषा रीतिरन्यत्राप्यावश्यकीत्याह – **एवमिति** जानात्यादियोगवदित्यर्थः। **अकथितकर्मादाविति** "अकथितञ्च" 1-4-51 इत्यनेन विहितकर्मत्वेत्यर्थः। आदिना "उपान्वध्याङ्वसः" 1-4-48 "अधिशीङ्स्थासां कर्म" 1-4-46 "अभिनिविशश्च" 1-4-47 इत्यादि विषयस्य ग्रहणम्। विषयान्तरेऽप्याह – **कर्मप्रवचनीयेति लक्षणैवेति** सा च अत्रैव प्रकरणे स्पष्टं भविष्यति। एषां लाक्षणिकानुशासनत्वमेवेति भावः। एव शब्देन शक्ते व्यावृत्तिः। एवञ्च तत्तत्क्रियाव्याक्ति भेदेन भिन्नानां कर्मत्वानां निर्वचनं न घटते, शक्तिग्रहानुपपत्तेः। अतो वृत्तित्वं भेदश्च शाक्तो द्वितीयार्थः। घटं जानातीत्यादौ तु लक्षणैव स्वीकार्येति नैयायिकाशय इति बोध्यम्।

## (नैयायिकमतखण्डनम्)

**अत्रेद मवधेयम् – यदि फलावच्छिन्नो व्यापारो धात्वर्थः, तदा द्वितीयाद्यर्थवृत्तित्वस्य पदार्थैकदेशे संयोगादौफलेऽन्वया देकदेशान्वयनिबन्धनो व्युत्पत्तिभङ्गः। न च चैत्रस्य नप्ता, चैत्रादन्य इत्यादाविव तदाश्रयणम्। षष्ठ्यर्थस्य परम्परासंबन्धस्य विशेष्य एवा न्वयोपपत्तेः, पञ्चम्यर्थस्यापि प्रतियोगित्वादेः परम्परासंबन्धेना न्वयाङ्गीकाराच्च।**

तदेतद्दूषयति – **अत्रेदमवधेयमित्यादिना** अत्र = उपपादिते नैयायिकमते। इदं = व्युत्पत्तिभङ्गनानाशक्तिकल्पना व्युत्पत्यानन्त्यादिरूपम्। प्रथमतः "पदार्थः पदार्थेनान्वेति, न पदार्थैकदेशेने" ति व्युत्पत्तिभङ्गं दर्शयति। **यदीति** विशिष्टशक्ति पक्षमाश्रित्याह – **फलावच्छिन्न इति** संयोगादावित्यादिपदेन विक्लित्यादेर्ग्रहणम्। व्युत्पत्तिभङ्गः = "पदार्थः पदार्थेनान्वेती" ति व्युत्पत्तिभङ्गः। पदार्थः = पदजन्यप्रतीतिविशेष्यः। पदार्थेन = पदजन्यप्रतीतिविशेष्येण। तत्फलितार्थकथनं न पदार्थैकदेशेनेति। विशिष्टशक्तिपक्षे संयोगादेः फलस्य पदार्थैकदेशत्वात्तत्र द्वितीयार्थस्य वृत्तित्वस्यान्वये तद्भङ्गः स्पष्ट इति भावः। **चैत्रस्य नप्तेति** स्वजन्यशरीरजन्यशरीरावच्छिन्नो नप्तृपदार्थः। तदेकदेशजन्यत्वे चैत्रनिरूपितत्वादिरूपषष्ठ्यर्थस्यान्वयः। **चैत्रादन्य इति** भेदवानन्यपदार्थः, तदेकदेशे भेदे पञ्चम्यर्थचैत्रप्रतियोगित्वस्यान्वयः। आदिपदेन घटात् पृथगित्यादे ग्रहणम्। तदाश्रयणम् = एकदेशान्वयाश्रयणम्। समाधत्ते – **षष्ठ्यर्थस्येति** परम्परा संबन्धस्य = स्वशरीरजन्य जन्यत्वरूपस्य, विशेष्ये = पौत्रे।

## (कर्मत्वस्याखण्डत्वसमर्थनम्।)

**किंच किमिदं फलस्या वच्छेदकत्वम्। न तावत्तत्द्धातुशक्यतावच्छेदकत्वम्। विशिष्टशक्तौ प्रमाणाभावात्। चैत्रो ग्रामं गमयति मैत्र मित्यादिणिजर्थरूपधात्वर्थस्या वच्छेदकीभूते गमनरूपे फलेऽव्याप्तेश्च।**

ननु कारकाणां धात्वर्थांशे नित्यसापेक्षत्वादेकदेशान्वयः स्वीकार्य एव, चैत्रस्य नप्तेत्यादावपि

षष्ठ्यर्थस्यैकदेशान्वय एवानुभवसिद्धः। अत एव "समर्थः पदविधिः" 2-1-1 इति सूत्रे महाभाष्ये देवदत्तस्य गुरुकुलमित्यादौ समुदायापेक्षा षष्ठीति पक्षे देवदत्तस्य यो गुरुः, तस्य पुत्र इत्यर्थो नियोगतो न लभ्येतेति दोषमुद्भाव्य एकदेशान्वय एव स्वीकृतः। अत एव "शरैः शातितपत्र" इत्यादौ शराणां शातनेऽन्वयः सङ्गच्छते इत्यतो दोषान्तरमाह। **किञ्चेति** फलावच्छिन्न व्यापारे धातोः शक्तिग्रहाङ्गीकारे धातुशक्यतावच्छेदकत्वमेवा वच्छेदकत्वमिति वक्तुं शक्यते परन्तु तत्रैव मानाभावान्न युज्यत इत्याह — **न तावदिति प्रमाणाभावादिति** अत एव वैयाकरणनव्यैरपि "फलव्यापारयोर्धातुः" इति द्विवचनान्तनिर्देशेन धातोः फले, व्यापारे च पृथगेव शक्तिरिति पक्ष आदृतः। ननु फलावच्छिन्नव्यापारे **धातुश्शक्तिरित्यनुभव एव विशिष्टशक्तौ प्रमाणम्, नहि त्वदीयानुभवादेव वस्तुनः सिद्धयसिद्धी, इत्यत आह — चैत्रो ग्रामं गमयति मैत्रमिति अत्र णिजर्थतावच्छेदकतया गमनरूपव्यापारस्य प्रयोज्यनिष्ठस्य फलत्वेन** तदाश्रयत्वेन प्रयोज्यस्य मैत्रादेः कर्मत्वमिष्टम् तन्नसिध्येत्। शुद्धधातोः विशिष्टे शक्तिस्वीकारेऽपि ण्यन्ते तत्स्वीकारायोगात्। गमनस्य णिजर्थतावच्छेदकत्वायोगात्, नहि सनाद्यन्तधातोः विशिष्टे शक्तिः प्रामाणिकी। अतः संयोगानुकूले ग्रामे; व्यापारे णिचश्च पृथगेव शक्तिः कल्प्या। अतो विशिष्टशक्तिपक्षे अवच्छेदकत्वं ण्यन्ते गमनरूपे फलेऽव्याप्तमिति भावः। तदाह — **णिजर्थेति** णिजर्थः = व्यापारः, तद्रूपस्य धात्वर्थस्य शुद्धणिजर्थस्येत्यर्थः। गमनरूपे = तद्रूपे संयोगानुकूले प्रयोज्यनिष्ठे, **अव्याप्तेरिति** समास इव ण्यन्तेऽपि समुदाय शक्तेरस्वीकार्यत्वात्तत्राऽव्याप्तिरित्यर्थः।

**अथ फले पृथगेव धातोः शक्तिः, तस्य व्यापारे प्रकारत्वमेवा वच्छेदकत्व मितिचेत्। न, तृतीयाद्यर्थ करणत्वादौ पाचयतीत्यत्र णिजर्थविशेषणीभूते पाके चातिव्याप्तेः। अतः स्वरूपसंबन्धात्मक मवच्छेदकत्वं पदार्थान्तरमेव वा कल्प्यम्। तच्च धर्मिग्राहकप्रमाणेन यदाश्रये द्वितीया प्रामाणिकी, तत्रैव कल्प्यते, नान्यत्रेति वाच्यम्। न च तत्र शाब्दव्यवहारातिरिक्तं किञ्चित्प्रमाण मस्ति। अतश्च तद्वदेव वक्ष्यमाणविधया कर्मत्वादिकारकाणा मखण्डोपाधिरूपाणां द्वितीयादिवाच्यत्वकल्पनोपपत्ते र्नाधेयत्वादे रनेक-व्युत्पत्तिकल्पनापादिका वाच्यत्वकल्पना युक्ता समाश्रयितुम्। तथाहि — द्वितीयाया स्तावद् वृत्तित्वे भेदे च शक्ति रित्यनेकशक्तिकल्पना, धातोश्च फलावच्छिन्न व्यापारे एका, फले व्यापारे च नाना शक्ति रिति कल्पना। अस्मन्मते तु पूर्वोक्तविधया तत्तत्फलावच्छिन्न-व्यापारवृत्तिपाकत्वगमनत्वादिक मेव तत्तद्धातुशक्यतावच्छेदकमिति नानेकशक्तिकल्पना।**

एतद्दोषपरिहाराय शङ्कते — **अथेति पृथगेवेति** एवशब्देन विशिष्टशक्तिव्युदासः। तस्य च = फलस्य। **अवच्छेदकत्वमिति** तथाच द्वितीयार्थस्य फलेऽन्वये एकदेशान्वयापत्तिरिति **दोषो** न। गमयतीत्यत्र च व्यापारमात्रस्य णिजर्थत्वेऽपि तत्र गमनस्य प्रकारत्वेनावच्छेदकतया तद्रूपफलाश्रयत्वेन प्रयोज्यस्य कर्मत्वसिद्धिः। गम्यर्थव्यापारे तदर्थसंयोगस्य प्रकारत्वात्फलत्वमिति भावः। **तृतीयाद्यर्थेति** आदिना चतुर्थ्यादीना संप्रदानत्वादीनां च ग्रहणम्। तेषां व्यापारे प्रकारत्वात् फलत्वापत्तिरिति भावः। **पाचयतीति** विक्लित्यां व्यापारे च पचेः, व्यापारे णिचश्च शक्तिस्वीकारेण व्यापारे प्रकारत्वात् विक्लित्तेः फलत्वमिष्टं सिध्यति। परन्तु णिजर्थव्यापारे प्रकारत्वात् प्रयोज्यनिष्ठव्यापारस्यापि फलत्वापत्त्या गमयति योग इव पाचयति योगेऽपि प्रयोज्यस्य कर्मत्वापत्त्या द्वितीयान्तत्वापत्तिः। तथाच चैत्रः पाचयति मैत्रमिति प्रयोगापत्तिरिति भावः। तदाह — **णिजर्थविशेषणीभूते इति** णिजर्थे व्यापारे विशेषणतामापन्ने इत्यर्थः। पाके = णिच्प्रकृतिभूतपचिधात्वर्थ व्यापारे।

अतः = सखण्डस्यावच्छेदकत्वस्य निर्वक्तुमशक्तेः। स्वरूपसंबन्धात्मकं = तत्तद्धर्मरूपम्, अतोपि

लाघवादाह – **पदार्थान्तरमिति** अखण्डमित्यर्थः। तच्च = अखण्डोपाधिरूपमवच्छेदकत्वञ्च **धर्मिग्राहकेति** धर्मि = अवच्छेदकत्वम्, तद्ग्राहकं प्रमाणं गमनजन्यसंयोगाश्रयो ग्रामः, व्यापारजन्य विक्लित्त्याश्रयस्तण्डुलः इत्यादि शाब्दरूपम्, ग्रामं गच्छति तण्डुलं पचतीत्यादि शब्दप्रयोगात्मक-व्यवहाररूपं च, तेनेत्यर्थः। तदाह – **यदाश्रये इति** **यस्य विक्लित्त्यादेराश्रये तण्डुलादौ, द्वितीया =** तद्वाचकद्वितीया. प्रामाणिकी = प्रमाणसिद्धा। तत्रैव = विक्लित्यादावेव, वाच्यम् = वक्तव्यम्। तथाच **गच्छति पचतीत्यादियोगे संयोग-विक्लित्याद्याश्रये ग्रामतण्डुलादौ द्वितीयायाः शास्त्रानुशिष्टतया संयोगादाववच्छेदकत्वं कल्प्यते, तथा गमयति योगे संयोगानुकूलव्यापाराश्रये द्वितीयायाः प्रामाणिकतया तत्रापि तत् कल्प्यते, पाचयति योगे "गतिबुद्धिप्रत्यवसानार्थ शब्दकर्माकर्मकाणामणि कर्ता स णौ" इति शास्त्रबलेन विक्लित्यनुकूलव्यापाराश्रये द्वितीयाया निवारणात्तत्र तन्न कल्प्यत इति भावः। ननु तथैव कल्पने किं विनिगमकं?** अन्यथैव कल्प्यतामत आह – **नचेति** नहीत्यर्थः। **तत्र = अतिरिक्तावच्छेदकत्व-स्वीकारे। शाब्देति शाब्दः = तज्जन्यं ज्ञानम्। व्यवहारः = शब्दप्रयोगः, ताभ्यामतिरिक्त मित्यर्थः। अतश्च = सखण्डस्यावच्छेदकत्वस्य निर्वक्तुमशक्तेः। तद्वत् = अवच्छेदकत्ववत्। वक्ष्यमाणविधया =** करणत्वाना धात्वर्थस्य च ग्रहणम्। **नाधेयत्वादेरिति** आधेयत्वादेर्वाच्यताकल्पना समाश्रयितुं न युक्तेति योजना। तद्विशेषेणमनेकव्युत्पत्तिकल्पनापादिकेति। व्युत्पत्तिः = शक्तिः कार्यकारणभावश्च। **प्रथमतोऽनेकशक्तिकल्पनां प्रदर्शयति – द्वितीयाया स्तावदित्यादिना – तदेवं भवन्मते शक्त्यानन्त्यं तावत् स्फुटमेवेत्यन्तेन।** एवं धातोरपि नानाशक्तिकल्पना स्वीकार्या इत्याह – **धातोश्चेति।** ननु धात्वर्थविषये का तवाप्यावश्यकीत्यत आह। **अस्मन्मतेत्त्विति** पूर्वोक्तविधया = मण्डनमिश्रवैयाकरण-मतनिराकरणावसरे, अखण्डोपाधिरूपसामान्यं पच्यादि धातुशक्यतावच्छेदकमित्युक्तविधया। तदेव स्मारयति – **तत्तत्फलावच्छिन्नेति।**

**पुनश्च भवन्मते फलस्य तत्त्वेन बोधे पूर्वदेशविभागस्यापि क्रियाजन्यत्वाविशेषा त्पूर्वदेशं गच्छतीति प्रयोगापत्तिः। संयोगत्वादिना बोधे वृक्षस्थि तस्यैव सर्पस्य मूलदेशा दग्रदेशं गच्छतो वृक्षं गच्छतीति प्रयोगापत्तिः, तत्तदवयवसंयोगनाशेना वयविसंयोगानां नाशा त्तया क्रियया जनिताग्र संयोगेना भिनवस्यैवा वयविसंयोगस्योत्पत्तेः। न ह्यवयविसंयोगो न धात्वर्थता-वच्छेदकः, ग्रामं गच्छतीति प्रयोगानापत्तेः। अत स्तत्तदुत्तरदेशसंयोगस्यैव फलत्वं वाच्यम्। उत्तरत्वं च तत्तत्क्रियापूर्वदेश घटित मित्यनन्तशक्तिकल्पना, लक्षणा वा। न च तत्तत्फलानुभवबलादेव सा न दोषः, अनुभवस्या नुमानादिनापि संभवेन शाब्दत्व एव विप्रतिपत्तौ धातुजन्यत्वे सुतरां प्रमाणा भावात्। इतरथा फलस्य धातुवाच्यत्वं द्वितीयावाच्यत्वं वेति भवद्ग्रन्थेपि नानापक्ष प्रतिपादनानुपपत्तेः। नहि घट मानयेत्यत्र घटो धातुवाच्यो नामपदवाच्योवेति पक्षान् कश्चि त्प्रतिपादयति। अत एव गमनत्वादिनैव क्रियाया धातुतोऽनुभवा द्वस्तुत स्तत्फलावच्छिन्नक्रियावृत्तिगमनत्वादिक मेव तत्तद्धातुशक्यतावच्छेदक मित्युक्तं प्राक्। तदेवंभवन्मते शक्त्यानन्त्यं तावत् स्फुटमेव।**

तत्त्वेन = फलत्वेन सामान्यरूपेण। **क्रिया जन्यत्वेति** एकयैव क्रियया उत्तरदेशसंयोगस्येव पूर्वदेशविभागस्यापि जननात् तदविशेषात् उत्तरदेशसंयोगाभिप्रायेणोत्तरदेशं गच्छतीतिवत् पूर्वदेशं गच्छतीति प्रयोगापत्तिरिति भावः। **संयोगत्वादिनेति** संयोगत्वादिरूपविशेषधर्मेणेत्यर्थः। **बोधे इति** तथाच नोक्तापत्तिः परन्तु दोषान्तरं प्रसज्यत इत्याह – **वृक्षस्थितस्यैवेति प्रयोगापत्तिरिति** प्रदेशान्तरादागत्य सर्पस्य वृक्षारोहणे सर्पो वृक्षं गच्छतीति प्रयोग इष्ट एव। परन्तु आरोहणानन्तरं मूलदेशादग्रदेशं गच्छति सर्पे तदापि वृक्षं गच्छतीति प्रयोगापत्तिः, संयोगत्वेन रूपेण भासमानसंयोगा-

श्रयत्वाद्वृक्षस्येति भावः। गच्छतः = गच्छतः सतः। ननु नेयमापत्तिः, सर्पस्य वृक्षारोहणे वृक्षे सर्पस्याग्रदेशगमनसमयेऽपि सर्पसंयोगस्य तत्र सत्त्वेन संयोगान्तराजननादत आह — **तत्तदवयवेति** अयमर्थः — अग्रदेशं प्रति सर्पस्य गमने पूर्वपूर्वावयवसंयोगा नश्यन्ति, तन्नाशेना वयविसंयोगा अपि **नश्यन्ति। अपसर्पणक्रिययाभिनवा एवावयविसंयोगा जायन्ते। तैश्चाभिनवा एवावयविसंयोगा जायन्ते। तादृशावयविसंयोगाश्रयत्वेन वृक्षस्य कर्मत्वात्तदापत्तिरिति — तया क्रियया = गमनक्रियया,**

नन्ववयवसंयोगस्य धात्वर्थतावच्छेदकत्वं, न त्ववयविसंयोगस्येत्यदोषोऽत आह — **नहीति** संयोगत्वाविशेषात्तस्यापि तत्वात् तत्प्रयोगापत्तिरिति भावः। विपक्षे बाधकमाह — **ग्रामं गच्छतीति प्रयोगानापत्तेरिति** अतः = फलत्वेन संयोगादिना च फलस्य बोधे दोषसत्वात्, **तत्तदुत्तरदेशसंयोगस्यैवेति** तद्देशसंयोगस्यावयवि संयोगरूपतया मूलदेशादुत्तरदेशं गच्छतीति प्रयोगोऽस्तु नाम। तत्संयोगस्यावयविसंयोगरूपत्वाभावात् वृक्षं गच्छतीति प्रयोगो वार्यत इति भावः। तर्हि तथैवास्तु, अत आह — **उत्तरत्वं चेति तत्तत्क्रियेति तया तया क्रियया स स पूर्वदिशः त्यज्यते, यो देशोऽनाक्रान्तः स उत्तरदेशः, एवञ्च** अनन्तक्रिया घटितं पूर्वपूर्वदेशघटितं **च**। तथाचोत्तरत्वेन सामान्यरूपेण धातुवाच्यत्वे तस्या प्रयोजकत्वेन तत्तदुत्तरत्वेन विशेषरूपेण तत्त्वं स्वीकार्यम्। ततश्चोक्तरीत्या शक्त्यानंत्यापत्तिरिति भावः। धातोस्तत्रासंकेतितत्वादाह — **लक्षणावेति तत्तत्फलानुभवेति** संयोगत्वादिना संयोगादिफलान्यनुभूयन्ते। तद्बलादनेकशक्तिकल्पना न दुष्यतीति भावः। सा = अनेकशक्तिकल्पना। समाधत्ते — **अनुभवस्येति** तत्तत्फलानुभवस्येत्यर्थः। अनुमानादीत्यादिशब्देन मनसो ग्रहणम्। धातुवाच्यत्वे = फलस्य तत्वे, इतरथा = शाब्दत्व-धातुवाच्यत्वयोः स्वीकारे। भवद्ग्रन्थेऽपि = **नैयायिकग्रन्थेपि**। अनुपपत्तेः = धातुवाच्यत्वनिश्चयेन तत्प्रतिपादनानुपपत्तेः। धातुवाच्यः = नीधातुवाच्यः। **प्रतिपादयतीति** घटस्य शाब्दत्वनामवाच्यत्वयो र्निश्चितत्वेन सन्देहाभावात्तद्विषये नानापक्षा नोपन्यस्यन्ते, फलविषये **नानापक्षोपन्यासात्तस्य शाब्दत्वं तत्रापि धातुवाच्यत्वं च विचिकित्सितमेवेति भावः। अत एव = फलस्य** धातुवाच्यत्वे शक्त्यानन्त्यसत्वादेव। वस्तुतः = वस्तुगत्या, उक्त प्राक् = मण्डनमिश्रवैयाकरणमत निरूपणावसरे शक्त्यानन्त्यदोषग्रस्तत्वान्नैयायिकमतमयुक्तमिति निगमयति — **तदेवमिति**

**(नैयायिकमते व्युत्पत्त्यानन्त्यबोधः।)**

**व्युत्पत्त्यानन्त्यमपि-ग्रामं गच्छतीत्यत्र तावत् प्रातिपदिकार्थस्य ग्रामस्य तत्तत्संसर्गभेदेन वृत्तित्वे भेदे चाऽन्वयाद् व्युत्पत्तिद्वयम्। पुनश्चा न्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्व-व्युत्पत्तिभङ्गः, तदभङ्गाय वा ग्रामप्रातिपदिकेन ग्रामविशेष लक्षणेति बोधः। द्वितीयार्थस्य च भेदस्य निरुक्तसामानाधिकरण्यसंबन्धेन क्रियायां, वृत्तित्वस्य च साक्षात्संबन्धेन फल इति व्युत्पत्तिद्वयम्। स्वं गच्छतीति प्रयोगवारणार्थं भेदो वा द्वितीयार्थः, समवायो वा, ग्रामस्य च तस्मिन् समवाये स्वप्रतियोगिक भेदवद्वृत्तित्वं संसर्गः। समवायस्य च साक्षात्संबन्धेन क्रियाया मन्वय इत्यस्यापि सुवचत्वेन विनिगमनाविरहश्च।**

व्युत्पत्यानन्त्यमपि = शक्त्यानन्त्यमूलकं एतदपि तव मते। तदेव प्रदर्शयति — **ग्रामं गच्छतीति** तत्तत्संसर्गभेदेन = वृत्तित्वे समवायसंबन्धेन, भेदेप्रतियोगिता **संबन्धेन, वृत्तित्वं** = विभक्त्यर्थे वृत्तित्वे। व्युत्पत्तिद्वयम् = कार्यकारणभावद्वयम्। तत्रैव दोषान्तरमाह — **पुनश्चेति** व्युत्पत्तिभङ्गः = भेदे प्रतियोगिनः प्रतियोगितामात्रेणान्वये तद्भङ्गः। ननु **अन्वयितावच्छेदकावच्छिन्न** प्रतियोगिताकत्वेन प्रतियोगिनो भेदेऽन्वयः स्वीक्रियते। अतो न तद्व्युत्पत्ति**भङ्ग इत्यत** आह — **तदभङ्गायवेति ग्रामविशेषलक्षणेति** तत्पक्षे जलं जलं गच्छतीति **प्रयोगनिर्वाहाय** तत्तप्रातिपदिकं तत्तद्विशेषेऽर्थे लाक्षणिकमिति स्वीकार्यम्। अतो लक्षणा स्वीकारो दोष इति भावः। एवं प्रातिपदिकार्थस्य विभक्त्यर्थान्वये

व्युत्पत्तिद्वय प्रदर्श्य विभक्त्यर्थस्य धात्वर्थान्वये तद्दर्शयति – **द्वितीयार्थस्येति निरुक्तेति** अभावविशेषणता समवायोभयघटित सामानाधिकरण्यसंबन्धेनेत्यर्थः।

तन्मते विनिगमना विरहोऽपि प्रसज्यत इत्याह – **स्वं गच्छतीति** एतत्प्रयोगवारणाय भेदस्य द्वितीया वाच्यत्वं भवद्भिः स्वीक्रियते। समवायस्य तद्वाच्यत्वस्वीकारेणापि तद्वारणसंभवाद्भेदो द्वितीयार्थः, उत समवाय इत्यत्र विनिगमकाभाव इति भावः। समवायस्य द्वितीयार्थत्वे तद्वारणोपायमाह – **ग्रामस्येति स्वप्रतियोगिकेति** स्वं = ग्रामः, तत्प्रतियोगिको भेदः = ग्रामो नेति भेदः, तद्वान् = चैत्रः, तद्वृत्तित्वं = क्रिया समवायस्य। चैत्रे चैत्रभेदाभावात्तत्प्रयोगापत्तिर्वार्युत इति भावः। **क्रियान्वय इति** तथाच निरुक्तसंबन्धेन ग्रामविशिष्टसमवायवर्तिक्रियानुकूलकृतिमाँश्चैत्र इति बोधस्तन्मते।

## (फलं भेदश्च द्वितीयार्थ इतिनिराकरणम्।)

**एतेन-फलं भेदश्च द्वितीयार्थः। आधेयत्वं फले प्रकृत्यर्थसंसर्गः। फलस्य च जनकत्वेनावच्छेद्यत्वे न वा व्यापारे न्वयः। व्यापारमात्रं धात्वर्थः। तत्तद्धातुसमभिव्याहाराच्च द्वितीयायाः फलविशेषबोधकत्व-मित्यप्यपास्तम्। अनेकशक्तिकल्पनादे स्तदवस्थत्वात्।**

**एवं ग्रामस्य गन्तेत्यादिकर्मणि षष्ठीस्थले शक्त्यनेकत्वं व्युत्पत्त्यनेकत्वं विनिगमनाविरहश्चेति बोध्यम्।**

## (कर्मप्रत्ययस्थले दोषापादनम्)

**ग्रामो गम्यत इति कर्माख्याते चात्मनेपदस्य फले भेदे च शक्त्यन्तरकल्पनं, ग्रामस्य प्रथमान्तपदोपस्थाप्यस्यापि आख्यातार्थे भेदेऽन्वयकल्पनं, तस्य भेदस्य प्रत्ययार्थस्यापि धात्वर्थव्यापारे न्वयकल्पनं, तस्य च व्यापारस्य धातूपस्थापितफलं प्रतिविशेष्यभूतस्यापि पुनर्जन्यत्वसंबन्धेनात्मनेपदार्थे फलेन्वयकल्पनं, तस्य फलस्य चाश्रयता संबन्धेन प्रथमान्तपदोपस्थाप्ये ग्रामे न्वयकल्पनमिति दोषाः।**

फलं भेदश्च द्वितीयार्थ इति वादिनां मतं दूषयति – **एतेनेति** फलम् = तत्सामान्यम्। विशेषबोधः कथमत आह – **तत्तद्धात्विति** एतेनेत्यस्याशयं विशदयति – **अनेकशक्तीति** सर्वमतसाधारण्येनाह – **एवं ग्रामस्येति** अत्र द्वितीयाबाधनेन "कर्तृकर्मणोः कृति" 2-3-65 इत्यनेन कृद्योगे कर्मणि षष्ठी।

कर्माख्याते शक्त्यानन्त्यव्युत्पत्त्यानन्त्यदोषान् प्रदर्शयति – **ग्रामो गम्यत इति** प्रथमान्तपदोपस्थाप्यस्पीत्यत्रापिना मुख्यविशेषस्याप्यन्यत्र प्रकारत्वापत्तिः, साच अयुक्तेति ध्वनयति – तथा प्रत्ययार्थस्यापीत्यत्रापिशब्देन "प्रत्ययार्थः प्रधानमिति न्यायविरोधो ध्वन्यते।

**किंच ग्रामपदस्यात्मनेपदस्य च न तावद्युगपदेव प्रकारतया विशेष्यतया च बोधजनकत्वं, विरोधात्। विशेषणतावच्छेदकप्रकारकविशेषणनिश्चयस्यानुदयेन विशिष्टवैशिष्ट्यबोधात्मकस्यानुभूयमानस्यापलापापत्तेश्च। नापि क्रमिकबोधद्वयजनकत्वं, जनितान्वयबोधे नैराकाङ्क्ष्यात्। एकतरशाब्दबोधवेलायामितरशाब्दबोधानुत्पत्तौ प्रतिबन्धकान्तरकल्पनापत्तेश्च।**

**एवं पक्व ओदन इत्यत्र कर्मकृत्स्थलेपि द्रष्टव्यम्।**

नन्विदमयुक्तम्, तत्तद्व्युत्पत्त्यनुसारेण तथा तथाबोधस्य तेषां तेषां जायमानत्वेन तथा तथा कार्यकारणभावानां सर्वेषामावश्यकत्वात् तल्लाघवगौरवविचारस्यायुक्तत्वाच्चेत्यतो दोषान्तरमाह –

**किञ्चेति प्रकारतया विशेष्यतया चेति** ग्रामस्याख्यातार्थभेदे प्रकारतया, आख्यातार्थफलं प्रतिविशेष्यतया च युगपदेव बोधनं न युज्यते। तथा भेदस्य धात्वर्थव्यापारे प्रकारतया, ग्रामं प्रति विशेष्यतया च युगपदेव बोधनं न युज्यते, एकेन पदेन युगपदेव विशेषणतया, विशेष्यतया च स्वार्थोपस्थापनायोगादिति भावः। युगपत्तथा बोधने दोषान्तरमाह – **विशेषणतावच्छेदकेति** यथा – दण्डिमत् भूतलमित्यादौ। भूतले विशेषणं पुरुषः, तत्र विशेषणं दण्डः, तथाच दण्डरूपविशेषणतावच्छेदकप्रकारकपुरुषरूप विशेषण-निश्चयस्य दण्डवान्पुरुषः इत्येवं विधस्य पूर्वं विद्यमानत्वेन संयोगेन दण्डविशिष्टपुरुषविशिष्टं भूतलमिति विशिष्टवैशिष्ट्यबोधः। तथा प्रकृते न, तादृशविशेषणनिश्चयाभावात्। विशिष्टबुद्धौ तादृशविशेषण निश्चयस्य हेतुत्वादिति भावः। बोधात्मकस्य = बोधात्मकस्य शाब्दबोधस्य। अपलापापत्तेः = त्वद्रीत्या तदुपपादनासंभवात्तस्यापलापापत्तेः। ननु ग्रामपदेनाख्यातपदेन च युगपदेव **विशेषणतया विशेष्यतया च न स्वार्थोपस्थापना, किन्तु विशेषणतया स्वार्थोपस्थापनानन्तरं विशेष्यतया** स्वार्थोपस्थापनेति तयोः क्रमिकबोधजनकत्वस्वीकारा न्न दोष इत्यत आह – **नापीति** तत्र दोषमाह – **जनितान्वयबोध इति नैराकाङ्क्ष्यादिति** तथाच द्वितीयबोधस्य संभव एव नेति भावः। तत्र दोषान्तरमाह – **एकतरेति** एकतरबोधजननकाले सामग्रीवशात् द्वितीयबोधेनावश्यमुत्पत्तव्यम्। **तदनुत्पत्तौ** प्रतिबन्धकान्तरं कल्प्यम्। तथाच गौरवमिति भावः। **द्रष्टव्यमिति** युगपदेव विशेषणतया, विशेष्यतया च बोधजनकत्वे दोषद्वयम्, क्रमिकबोधजनकत्वे दोषद्वयं द्रष्टव्यमिति भावः।

## (भेदार्थकत्वं विनैव स्वं गच्छतीतिप्रयोगवारणम्।)

**यत्तु – भेदो न द्वितीयार्थः। अपित्वाधेयत्वादिकमेव। न चैवं चैत्र श्चैत्रं गच्छतीति प्रयोगापत्तिः। "आकडारादेका संज्ञा" 1-4-1 इति सूत्रेण एकसंज्ञाप्रयुक्तकार्यसत्त्वे संज्ञान्तरप्रयुक्तकार्यनिषेधात्। प्रकृते च परत्वा त्कर्तृसंज्ञाप्रयुक्तकार्यस्या वश्यकत्वेन कर्मसंज्ञाप्रयुक्त द्वितीयाद्यनापत्तेः। अतो न तत्प्रयुक्तशक्त्यन्तरकल्पनाद्यापत्ति-रिति–**

नन शक्त्यानन्त्यव्युत्पत्त्यानन्त्यविनिगमना विरहाणामापादनमयुक्तम्। द्वितीयाया **भेदार्थकत्वा**-स्वीकारात्। तदस्वीकारे चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिस्तु न, वैयाकरणोक्तरीत्या तद्वारणसंभवा-दित्यभिप्रयतां केषाञ्चित् मतमाह – **यत्त्विति नचैवमिति** भेदस्य द्वितीयार्थत्वाभावे संयोगरूपफला-श्रयत्वेन चैत्रस्यापि कर्मत्वात् द्वितीयापत्तिरित्याशयः। वैयाकरणमतेनापत्तिं वारयति। **आकडारादिति** अयमर्थः – "आकडारादेका सञ्ज्ञा" 1-4-1 इति पाणिनि सूत्रेण इत आरभ्य कडाराः कर्मधारयेत्यतः 2-2-38 प्राक् एकस्य वस्तुनः एकैव संज्ञा भवति, न तु संज्ञाद्वयमिति नियम्यते। तत्र या संज्ञा प्रवर्तते तन्निमित्तकमेव कार्यं प्रवर्तते। तत्रापि या संज्ञा परा अनवकाशा च सा संज्ञान्तरं बाधित्वा प्रवर्तते। यथा वैकुण्ठमधिशेते हरिरित्यत्र वैकुण्ठस्य आधारोऽधिकरण" 1-4-45 मित्यनेनाधिकरणसंज्ञा, "अधि-शीङ्स्थासां कर्म" 1-4-46 इत्यनेन कर्मसंज्ञा च प्राप्ता। तयोर्मध्ये अधिकरणसंज्ञां बाधित्वा परत्वात् कर्मसंज्ञैव प्रवर्तते, तेन तन्निमित्तिका द्वितीयैव भवति, नत्वधिकरणत्वनिमित्तिका सप्तमीति। तदाह – **एकसंज्ञा प्रयुक्तेति** निषेधात् = प्रकृतनियमेन तदप्रवृत्तेः, नियमशास्त्राणां निषेधेपर्यवसानात्। प्रकृते च = चैत्रश्चैत्रं गच्छतीति गमिसमभिव्याहारे च। **परत्वादिति** गमिसमभिव्याहारे धात्वर्थतावच्छेदक संयोगरूपफलाश्रयत्वेन "कर्तुरीप्सिततमं कर्म" त्यनेन 1-4-49 चैत्रस्य कर्मसंज्ञा, तद्व्यापाराश्रयत्वेन "स्वतन्त्रः कर्ता" 1-4-54 इत्यनेन कर्तृसंज्ञा च प्राप्ता। तत्र परसूत्रविहितत्वात् कर्मसंज्ञा बाधनेन कर्तृसंज्ञैव प्रवर्तते, न कर्मसंज्ञा। अतः कर्मसंज्ञायाश्चैत्रेऽभावात् द्वितीया न भवति। कर्तृसंज्ञायाः सत्वात् तिङा कर्तुरुक्तत्वात् तृतीया ततो न, किन्त्वभिहितप्रथमैवेति भावः। तदाह – **कर्तृसंज्ञेति द्वितीयाद्यनापत्तेरिति** तत्प्रयोजककर्मसंज्ञाया अभावान्न द्वितीया। विभक्तीनामुत्पत्तौ तत्तत्संज्ञानामेव प्रयोजकत्वात्। अतः

प्रकृते निरुक्तरीत्या द्वितीयाया वारणसंभवात्। **तत्प्रयुक्तेति** द्वितीयाया भेदार्थकत्वप्रयुक्तेत्यर्थः। **कल्पनाद्यापत्तेरिति** आदिना व्युत्पत्यन्तर विनिगमना विरहसंग्रहः।

## (तन्निराकरणम्।)

**तन्न, स्वं जानामि, चैत्रोहं स्वात्मानं जानामि। आत्मान मात्मना वेत्सीत्यादा वेकसंज्ञावरोधेपि संज्ञान्तरप्रयुक्तकार्यदर्शनात्। न च शरीरमनोरूपावच्छेदक भेद मादाय तत्रा साङ्कर्योपपादनम्। तथात्वे स्वपदप्रयोगानुपपत्तेः, चैत्र श्चैत्रं गच्छतीति प्रयोगेपि शरीरप्रदेशान्तरावच्छिन्नात्मादिभेदकल्पनोपपत्ते श्च। इतरथा चैत्रो मैत्रं गच्छतीति प्रयोगस्याप्यनापत्तेः।**

आकडारादेका संज्ञे'' ति वैयाकरणपरिभाषणमयुक्तम्। एकत्रानेकसंज्ञाप्रयुक्तकार्याणां समावेश दर्शनात्, अतो न तया व्यवस्थया चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तेरनिवार्यतया द्वितीयाया **भेदार्थकत्वस्वीकारेणैव तस्या निवार्यतया तत्र शक्त्यानन्त्यादि दोषाः प्रसज्यन्त एवेत्याशयेन वैयाकरणानां व्यवस्थां दूषयति – तन्नेति। स्वं जानामीति अत्रैकस्यैव चैत्रस्य ज्ञानाश्रयत्वं ज्ञानविषयत्वं चेति एकत्रैव** कर्तृत्वं कर्मत्वं च निविशते, अन्यथा स्वमिति द्वितीयान्तो नोपपद्येत। इतोपि स्पष्टप्रतिपत्तये आह – **चैत्रोहं स्वात्मानमिति आत्मानमात्मनेति** अत्र कर्तृत्वकर्मत्वकरणत्वनिमित्तकं विभक्तित्रयं समाविशति। वैयाकरणपरिभाषणरीत्या तु न युज्यते। 'आत्मा न मात्मनेत्यादौ आत्मनो भिन्नत्वात् विभक्तित्रय युज्यते। नन्वेकस्यैवानेकसंज्ञा' इति वैयाकरणमतं दूषयति – **नचेति शरीरमनोरूपेति** तथाच ''णेरणौ'' इत्यादि सूत्रे भाष्ये यदेकमेव वस्तु बद्ध्या विभज्य कर्मत्वेन कर्तृत्वेन च विवक्ष्यते तदात्मनेपदं प्राप्नोतीत्याशङ्क्य ''द्वावात्मानौ अन्तरात्मा, शरीरात्मा च। अन्तरात्मा तत्कर्म करोति, येन शरीरात्मा सुखदुःखे अनुभवति ''शरीरात्मा तत्कर्मकरोति येनान्तरात्मा सुखदुःखेऽनुभवति'' इत्युक्तम्। ''वस्तुत एवात्रात्मभेदो, नन्वेकस्यैव कर्तृत्वं कर्मत्वं च इत्यर्थ'' इति कैयटः। ''कर्मवत्कर्मणा तुल्यक्रियः'' 3-1-87 इति सूत्रे भाष्येपि स्पष्टमिदम्। एवञ्चात्मन एकस्याप्युपाधिभेदेन भिन्नतया नैकत्र संज्ञाद्वयकार्यप्रवृत्तिरिति भावः। तथात्वे = आत्मनोभेदे। **स्वशब्देति** ज्ञात्रपेक्षया ज्ञेयस्य भिन्नतया स्वमिति पदस्य प्रयोगो नोपपद्यत इति भावः। अन्यथा चैत्रश्चैत्रं गच्छतीति प्रयोगोपि स्यात्, एकस्यैव चैत्रस्य आत्मन इवावान्तरभेदमादाय भेदस्य सुलभत्वादित्याह – **चैत्रश्चैत्रमिति शरीरप्रदेशेति** पूर्वोत्तररूपतत्प्रदेशेत्यर्थः। अन्यथा = निरुक्तरीत्या शरीरस्य भेदाकल्पने। **चैत्रोमैत्रमिति** निरवच्छिन्नस्यात्मनो गमनासंभवाद्गामि कर्तृत्वकर्मत्वासंभवान्निरुक्तप्रयोगानापत्तिः। अतः शरीरस्यावच्छेदकत्वं स्वीकार्यम्। भवतापि स्वीकृतमेव तस्य तत्वम्। शरीरस्य तत्वस्वीकारे **किमपराद्धं** शरीरावयवैरिति भावः।

**वस्तुतः फलाश्रयत्वसत्त्वे चैत्रेपि द्वितीयाप्रसक्तौ सूत्रवशेनापि संज्ञान्तरप्रयुक्तकार्योपस्थिते स्तत्प्रतिबन्धकत्वकल्पने तवापि गौरवस्य सत्त्वा च्च।**

किञ्च वैयाकरणमतमेव गुरुभूतमित्याह – **वस्तुत इति** – वस्तुस्थित्येत्यर्थः। अयमर्थः – ग्राममित्यभिव्याहारे चैत्रस्य स्वतःसंयोगरूपफलाश्रयत्वसत्वात् द्वितीया प्रसक्ता। सा आकडारसूत्रेण वारयितुमशक्या। एकस्यैकैव संज्ञेत्युक्तावपि फलाश्रयत्वसत्त्वाद् द्वितीया **प्रवृत्तेर्व्याघातात्।** अतः परसंज्ञा प्रयुक्तकार्योपस्थितेः **पूर्वसंज्ञा** प्रयुक्तकार्यप्रतिबन्धकत्व पर्यन्तं सूत्रस्य तात्पर्यं स्वीकार्यम्। अतस्तत्र प्रतिबन्धकता कल्पनायां गौरवम्। ततो वरं द्वितीयाया भेदार्थकत्व स्वीकार इति। सूत्रवशेनापि = द्वितीयाया दुर्वारतया सामर्थ्यात्तद्वशेनापि। **संज्ञान्तरेति** परसंज्ञा प्रयुक्तेत्यर्थः। प्रतिबन्धकत्वकल्पने = पूर्वसंज्ञाप्रयुक्तकार्यप्रवृत्तिप्रतिबन्धकत्वकल्पने। तवापि = आकडारादेकासंज्ञेति व्यवस्थापयतो

वैयाकरणस्य, तमनुसरतश्च तवापि। **सत्वाच्चेति** द्वितीयाया भेदार्थकत्वस्वीकारेणैव चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तेर्वारणीयतया तत्र निरुक्तरीत्या शक्त्यानन्त्यादिदोषोद्भावनं युक्तमेवेति भावः।

**ममतु अखण्डोपाधिरूपस्य कर्मत्वस्य परसमवेतक्रियाजन्यफलशालित्वसमनियतस्यैव कल्पनाच्चैत्रे तस्या प्रसक्तत्वादेव न प्रतिबन्ध्यप्रतिबन्धकभावकल्पनेति विशेषः।**

ननु तवाप्येतद्वारणाय द्वितीयायाः तदर्थकत्वस्वीकारात् दोषता दवस्थ्यम्। अत आह — **ममत्विति** कल्पनात् = स्वीकारात्, तस्य = कर्मत्वस्य, अप्रसक्तत्वादेव = परिचायकस्य परसमवेतेत्याद्यर्थस्य तत्राऽभावात्।

**अत उक्तयुक्त्या लाघवा त्कर्मत्व मखण्डोपाधिरूपमेव द्वितीयार्थः। तच्चो क्तकर्मत्व लक्षणसम नियतमेव। तत्रैव गोकर्मक मानयनम्, ओदनकर्मकः पाकः, ग्रामकर्मकं गमनमिति व्यवहारात्। तच्च धर्मिग्राहकप्रमाणेन ससंबन्धिकमेव कल्प्यत इति तस्य तत्तद्धात्वर्थ निरूपितत्वसिद्धिः। तत्तद्धात्वर्थ स्तु तत्तत्फलावच्छिन्नव्यापारविशेषत्वसमनियताखण्डोपाधि-रूपपाकत्वगमनत्वादिरूपशक्यतावच्छेदक धर्मावच्छिन्नो व्यापार विशेष इत्युक्तमेव। तत्तद्धात्वर्थनिरूपिततत्तत्कर्मत्वानां भेदेपि च भवन्मते आधेयत्वत्वस्येव कर्मत्वत्वस्या प्यखण्डस्य स्वीकारा त्तस्यैकस्य शक्यतावच्छेदकत्वेन ना नेकशक्तिकल्पना। निरूपकीभूततत्त-द्धात्वर्थतावच्छेदकावच्छिन्नगमनाद्यन्वयवशा च्च चैत्रस्य घट इतिव त्कर्मत्वविशेषलाभः। अत श्चचैत्र श्चैत्रं गच्छति, चैत्रः पाचयति मैत्र मित्यादिप्रयोगापत्तिशङ्कैव दुर्लभा।**

उपसंहरति — **अत इति** उक्तयुक्त्या = शक्त्यानन्त्यादि दोषग्रस्तत्वात्सखण्डस्य कर्मत्वस्य निर्वक्तुमशक्यत्वमित्युक्तयुक्त्या। ननु कर्मत्वस्य अखण्डत्वे तस्यैकत्वेन सर्वक्रियां प्रति सर्वस्य कर्मत्वापत्तिरत आह — **तच्चेति** अखण्डं कर्मत्वञ्चेत्यर्थः। **उक्तकर्मेति** परसमवेतक्रियाजन्येत्याद्युक्त-कर्मलक्षणेत्यर्थः। कर्मत्वस्याखण्डत्वादस्मन्मते पूर्वोक्तदोषो नेति भावः। तत्रैव = अखण्डकर्मत्व एव। **व्यवहारादिति** परसमवेतक्रियाजन्य इत्यादि कर्मत्वाज्ञानेपि निरुक्तव्यवहारादित्यर्थः। व्यवहारः = शब्दप्रयोगः, ततोबोधादपि तत्सिद्धिर्बोध्या। **धर्मिग्राहकप्रमाणेनेति** धर्मि = अखण्डं कर्मत्वम्, तद्ग्राहकं प्रमाणं "कर्तुरीप्सिततमं कर्म" ति तेनेत्यर्थः। तस्य = कर्मत्वस्य। **निरूपितत्वसिद्धिरिति** तेन सर्वक्रियां प्रति सर्वस्य कर्मत्वापत्तिर्नेति भावः।

कर्मत्वनिरूपकं धात्वर्थं विशदयति — **तत्तद्धात्वर्थस्त्विति** उक्तमेव = मण्डनमिश्रमतादिनिराकरणा-वसरे। ननु कर्मत्वस्याखण्डत्वेपि तत्तन्निरूपकभेदेन तस्य भेदः स्यादेवेत्यत आह — **तत्तद्धात्वर्थेति** भवन्मते = सखण्डकर्मत्ववादिनो नैयायिकस्य भवतोमते। अतश्च = मम मते कर्मत्वस्याखण्डत्वात्। **पाचयति मैत्रमितीति** कर्मत्वस्य सखण्डत्वे मैत्रे चैत्रप्रतियोगिकभेदस्य सत्वात् तस्य कर्मत्वमापद्यते। तद्वारणाय यत्नान्तरमास्थेयम्। मन्मते तु तच्छङ्काया अवकाश एवनेति भावः।

**ग्रामेगच्छति कारयति चैत्रो मैत्रेणेत्यादौतु कर्मत्वाविवक्षाया मधिकरणत्वादिविवक्षया सप्तम्यादिप्रयोगोप्यविरुद्धः। एवं च द्वितीयाया मेकैव शक्तिः, प्रातिपदिकार्थस्य च तृतीयादिसाधारण्येन सुबर्थे कर्मत्वादावन्वया देकैव व्युत्पत्तिः। तस्य च निरूपकत्वेन स्वनिरूपकधात्वर्थजनकत्वेनैव वा ख्यातार्थकृता वन्वयावपरेति लाघवम्। एवं कर्मषष्ठी-स्थलेपि।**

ननु ग्रामस्य कर्मत्वे ग्रामे गच्छतीत्यादि सप्तम्यन्तप्रयोगाणां का गतिरत आह – **ग्रामे गच्छतीति** अधिकरणत्वादीत्यत्रादिपदेन कर्तृत्वस्य सप्तम्यादीत्यत्रादिपद्रेन तृतीयायाश्च ग्रहणम्। स्वमतमुपसंहरति – **एवञ्चेति एकैव शक्तिरिति** एवञ्च मन्मते लाघवं स्पष्टमेवेति भावः। परमते वृत्तित्वे भेदे च शक्तिः। एकैव व्युत्पत्तिः = परमते व्युत्पत्तिद्वयम्, एवमाख्यातार्थान्वयेऽपि। कर्मणि षष्ठीस्थलेऽपि = ग्रामस्य गन्तेत्यादौ।

**कर्माख्यातस्थले तु पूर्वोक्तरीत्या ख्यातेन कर्मत्वलक्षणायामपि प्रथमार्थस्य पूर्वोक्तविधया प्रातिपदिकार्थस्य स्ववृत्तिकर्मत्वनिरूपकधात्वर्थजनकत्वसंसर्गेण कृतावन्वयः। कर्मत्वस्य प्रथमार्थत्वे तु स्वनिरूपकधात्वर्थजनकत्वसंसर्गेणैव।**

**कर्मकृत्स्थलेतु पक्व ओदनो स्तीत्यादौ पाकस्य कृत्प्रत्ययलक्ष्यायां कृतौ। तस्या श्च निरूप्यत्वसंसर्गेण तल्लक्ष्य एव कर्मत्वे। तस्य चाधारत्वसंबन्धेन कृत्प्रत्ययार्थे कर्मणि। तस्य चास्तीत्याख्यातार्थ इति वक्ष्यते। कर्मकृत्स्वपि पाककर्मीकृत इति विवरणानुरोधेन कारकान्वयानुरोधेन च कृतिलक्षणाया वक्ष्यमाणत्वा च्च।**

**अत श्च लाघवाद् द्वितीयार्थकर्मत्वस्यो क्तसंबन्धेन कृतावेवा न्वय इति सिद्धम्।**

कर्माख्यातस्थले परमते दोषाः प्रदर्शिताः। स्वमते तदभावं प्रतिपादयति – **कर्माख्यातेति पूर्वोक्तरीत्येति** प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधवादिमतनिराकरणावसरे प्रथमतः कर्तरि, कर्मणि चाख्यातस्य लक्षणा प्रतिपादिता। ततः = यत्र षष्ठोक्तन्यायेनेत्यादिना कर्तृत्वत्वेन कर्तृत्वे (तुल्ययुक्त्या) कर्मत्वत्वेन कर्मत्वे सा स्वीकृता। पूर्वोक्तविधया = प्रातिपदिकस्य तण्डुलादेर्योऽर्थस्तण्डुलादिः स एव प्रथमार्थ इति पाणिनि मतोक्तरीत्या। तदाह – **प्रातिपदिकार्थस्येति** तण्डुलः पच्यते चैत्रेणेत्यादौ तण्डुलादेरित्यर्थः। तन्मते प्रातिपदिकं **तात्पर्यग्राहकमित्युक्तम्। स्ववृत्तीति** स्वं = तण्डुलादि, तद्वृत्ति यत् कर्मत्वं, तन्निरूपको धात्वर्थः पच्याद्यर्थः। तज्जनकत्वं कृतावित्यर्थः। अभिहितकारकत्वं प्रथमार्थ इति कात्यायनमते नाह – **कर्मत्वस्य प्रथमार्थत्वेत्विति संसर्गेणैवेति** एवञ्च परमत इवास्मन्मते आख्यातस्य विशेष्यतया विशेषणतया च युगपदेव स्वार्थाबोधकत्वात् न विरोधादि दोषप्रसङ्ग इति भावः। कर्मकृदन्तस्थलेपि नास्माकं मते दोष इत्याह – **कर्मकृत्स्वपीति** तत्रकृतेः कथं भानमत आह – **पाककर्मीभूतं इतीति** पक्व इत्यादेस्तथा विवरणानुरोधेनेत्यर्थः। उक्तसंबन्धेन = स्ववृत्ति कर्मत्वनिरूपक धात्वर्थजनकत्वादिना संसर्गेण।

**न च द्वितीयार्थकर्मत्वस्य निरूपकतासंबन्धेन धात्वर्थ एवान्वयो स्त्विति वाच्यम्। धात्वर्थस्यापि कारकत्वेन भावनान्वयस्यो पपादितत्वात्। तत्साधारण्येन कारक प्रकारक-शाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारण-मित्येकेनैव कार्यकारणभावेन कर्मत्वादीनामपि अन्वयोपपत्तौ तदनेकत्वे गौरवाच्च। धात्वर्थान्वयार्थमुपस्थितस्य भावनाविशेष्यत्वस्यैव कर्मत्ववृत्तिप्रकारता निरूपकत्वकल्पनो-पपत्ता वनुपस्थितस्य धात्वर्थविशेष्यत्वस्य तत्कल्पनानुपपत्ते श्च। काष्टै रोदनं पचतीत्यस्य काष्टैः पाकेनौदनं करोतीति विवरणा द्विवरणवाक्ये च काष्टादीनां कृञर्थेन्वयावश्यकत्वे न पचतीत्यत्रापि तत्रैवान्वयप्रतीते श्च।**

**तत्सिदं कर्मत्वाद्यखण्डमेव द्वितीयार्थो भावनान्वयीति।**

**नचेति** कारकाणां धात्वर्थे एवान्वय इति वादिनोऽयमाक्षेपः। धात्वर्थ एवेत्येव शब्देनाख्यातार्थकृतेर्व्य-वच्छेदः। कारकत्वेन = करणत्वकर्मत्वान्यतरकारकत्वेन। उपपादितत्वात् = "धात्वर्थश्च क्वचिच्छक्यार्थ एव प्रकारः" इत्यादिना ग्रन्थेन। तत्साधारण्येन = धात्वर्थसाधारण्येन। अन्वयोपपत्तौ = आख्यातार्थभावनान्वयोपपत्तौ। तदनेकत्वे = कार्यकारणभावानेकत्वे। धात्वर्थान्वयार्थ = तस्य भावनायां करणत्वेन, कर्मत्वेन वाऽन्वयार्थम्। ननु धात्वर्थस्य करणत्वेनान्वय एव किं विनिगमकम्? यदनुरोधेन निरुक्तकल्पनाया आवश्यकत्वमत आह — **काष्ठैरोदनं पचतीत्यस्येति** पचतीत्यत्रापि = विक्रियमाणोऽपि। तत्रैव = करोत्यर्थत्वेनाभिमताख्यातार्थ-भावनायामेव। स्वसिद्धान्तं निगमयति — **तत्सिद्धं कर्मत्वेति**

## (द्वितीयादे धर्मिवाचित्वमेव न धर्मवाचित्व मिति वैयाकरणमतम्।)

**यत्तु — न कर्मत्व माश्रयत्वं वा द्वितीयार्थः। तथात्वे आश्रयत्वत्वादे र्गुरुभूतस्य शक्यतावच्छेदकत्वापत्तेः, कर्मत्वत्वादिरूपाखण्डोपाधिसत्त्वे प्रमाणा भावाच्च।**

**अपित्वाश्रयस्यैव द्वितीयार्थत्वम। तस्यैव धातूपात्ते फले न्वयः। एवं करणादिरे व तृतीयाद्यर्थः। एवं च "कर्तृकरणयो स्तृतीया" 2-3-18 "कर्मणिद्वितीये" 2-3-2 त्याद्यनुशासन मपि संगच्छत-इति कैश्चिदुक्तम्।**

द्वितीयादि विभक्तीनां कर्मादिधर्मिबोधकत्वमेव न कर्मत्वादिधर्मबोधकत्वमिति वैयाकरणमतमुपाक्ष-पति। **यत्त्विति गुरुभूतस्येति** आश्रयत्वत्वस्याश्रयेतरावृत्तित्वे सति निखिलाश्रयवृत्तित्वरूपतया गुरुभूतत्वमिति भावः। **प्रमाणाभावाच्चेति** सखण्डस्यानिर्वचनासंभव एवा गतिकतया अखण्डपदार्थ-स्वीकारः। प्रकृते क्लृप्तेन फलाश्रयत्वेन तद्व्यवहारस्योपपन्नत्वात् न तत्कल्पनम्। **आश्रयस्यैवेति** अयमर्थः — "कर्तुरीप्सिततमं कर्म" इति सूत्रेण क्रियाजन्यफलाश्रयः कर्मेत्यर्थीस्सिद्ध्यति। तत्र क्रियायाः, फलस्य च धातुनैव लाभाज्जन्यजनकभावस्य संसर्गलभ्यत्वादाश्रयमात्रं कर्मपदार्थः। 'अनन्यलभ्यश्‍-शब्दार्थ' इति न्यायात्। अत आश्रय एव द्वितीयार्थ इति। फलेऽन्वयः = आधेयता सम्बन्धेन। करणादिरेवेत्येव शब्देन करणत्वादि रूपधर्मव्यवच्छेदः। एवञ्च = विभक्तीनां धर्मिबोधकत्वे च। **संगच्छत इति** द्वितीयादीनां धर्मवाचकत्वे तु धर्मिणि विभक्तीनां शक्तिग्राहकस्यानुशासनस्यासङ्गतिः स्पष्टैवेति भावः। कैश्चित् = भर्तृहरि हेलाराज कैयटवामनजयादित्य हरदत्त दीक्षित कौण्डभट्टप्रभृतिभि वैयाकरणैः।

## (तन्निराकरणम्।)

**तन्न, संबन्धवाचिषष्ठीस्थले प्रातिपदिकार्थस्य प्रत्ययार्थे संबन्धे भेदेना न्वयाङ्गीकारा दिहापि व्युत्पत्त्यरकल्पनागौरवपरिहारार्थं भेदसंबन्धबोधाय कर्मत्वादावेव द्वितीयादेः शक्तिकल्पनात्।**

**नचैव "मैन्द्रं दधी" त्यादौ तद्धितस्य देवताविशिष्टद्रव्यवाचिनो र्थे देवताया मिन्द्रप्रातिपदिकार्थस्ये न्द्रस्याभे देनान्वयदर्शनाद् व्युत्पन्तरस्या प्यावश्यकत्वम्। तद्धितस्यापि देवतात्वविशिष्टद्रव्य एव शक्त्यङ्गीकारेण तत्रापी न्द्रस्या धेयतासंबन्धेनैवा न्वयाङ्गी-कारात्।**

**नचैवं षष्ठ्यादौ सर्वत्र लाघवा द्धर्मिण्येव शक्तिकल्पना दभेदान्वयेनैव सर्वत्र प्रकृत्यर्थ-प्रकारतास्त्विति वाच्यम्। तथात्वे ग्रामाभिन्नो य आश्रयत्ववान् तदाधेयसंयोगजनकं गमनमिति शाब्दबोधापत्तेः आश्रयत्वादिकं किंनिरूपित मिति जिज्ञासाया अपरिहार्यत्वात्।**

**अतो न धर्मी द्वितीयाद्यर्थः, अपित्वाधेयत्वं, कर्मत्वमेववाऽखण्डम्। उभयथापि फलस्य व्यापारस्यैव वा निरूपकस्य शाब्दबोध एव लब्धत्वा न्न निरूपकजिज्ञासापत्तिः। कर्मत्वत्वस्यापि चाखण्डस्यैकस्यैव शक्यतावच्छेदकत्वाङ्गीकारा न्न गौरवम्। आधेयत्वमेव च तत्तन्निरूपकभेदेन भिन्न मिति तवैव गौरव मिति दिक्। अत एव "समर्थः पदविधि" 2-1-1 रितिसूत्रे "क्रियाकारकयोः संबन्धस्य द्वितीया वाचिका भवती" ति महाभाष्यं संगच्छते।**

वैयाकरणमतं दूषयति – **तन्नेति सम्बन्धवाचीति** प्रकृत्यर्थस्य प्रत्ययार्थे पाचको गार्ग्य इत्यादौ भेदेनान्वयो दृष्टः। सुबन्तेऽपि राज्ञः पुरुष इत्यादौ शेषषष्ठचन्ते तथैवान्वयो भवतापि स्वीकार्यः, स्वीकृतश्च। कर्मद्वितीयादिस्थलेऽपि तथैवान्वयः स्वीक्रियताम्। किमर्धजरतीयेन, अन्यथाऽनेककार्य-कारणभावकल्पनापत्तिः, पाणिनि सूत्रेषु कर्मादिपदानि भावनिर्देशपरतया "द्व्येकयो र्द्विवचनैकवचने" 1-4-22 इत्यादाविव कर्मत्वादिधर्मपराण्येवेति भावः। इहापि = कर्मणि द्वितीयेत्याद्युदाहरणेष्वपि।

**नचैवमिति** अवच्छेदकावच्छेदेन प्रकृत्यर्थस्य प्रत्ययार्थे भेदेनैवाऽन्वय इति नियमो न घटते। क्वचिदभेदेनान्वयदर्शनात्। अतो मयापि सुबर्थस्थले व्युत्पत्यन्तरस्वीकारे बाधकाभाव इति भावः। ऐन्द्रम् = इन्द्रो देवता अस्य। तद्धितस्य = अणः। "सास्य देवता" 4-2-24 इति शास्त्रबलादाह – **देवताविशिष्टेति** देवतायाम् = प्रत्ययार्थैकदेशभूतायां तस्याम्। व्युत्पत्यन्तरस्यापि = प्रकृत्यर्थस्य प्रत्ययार्थेऽभेदेनान्वयनियामकस्य व्युत्पत्यन्तरस्यापि। समाधत्ते – **तद्धितस्यापीति अन्वयाङ्गीकारा-दिति** एवञ्चावच्छेदकावच्छेदेनैव प्रकृत्यर्थस्य प्रत्ययार्थे भेदेनान्वये बाधकाभावात्तन्मते व्युत्पत्यन्तर-कल्पनापत्तिरिति भावः।

**नचैवमिति** सर्वत्राभेदेनैव प्रत्ययार्थान्वयः संभवतीति भावः। **अपरिहार्यत्वादिति** तथाचाकाङ्क्षाया अशान्तत्वादस्य वाक्यस्याप्रामाण्यापातस्त्वन्मत इति भावः। सिद्धान्तरीत्याह – **कर्मत्वमेवाखण्डमिति** त्वदीयपातञ्जलमहाभाष्यादप्य स्मदुक्तार्थ एव लभ्यते इत्याह – **अत एवेति** द्वितीयायाः कर्मत्वरूपधर्मवाचित्वादेवेत्यर्थः। सूत्रे = "परस्परव्यपेक्षां सामर्थ्यमेके" इति व्यपेक्षा सामर्थ्यविचारा-वसरे, "इह राज्ञः पुरुष इत्युक्ते राजा पुरुषमपेक्षते ममायमिति, पुरुषोपि राजानमपेक्षते-अहमस्येति। तयोरभिसंबंधस्य षष्ठी वाचिका भवति। तथा कष्टं श्रित इति"। इत्यस्मात् भाष्यात् परं भाष्यं दर्शयति – "क्रियाकारकयोरभिसम्बन्धस्य द्वितीया वाचिका भवतीति। **सङ्गच्छत इति**। भाष्ये क्रिया कारकयोरभिसम्बन्धपदेन कर्मत्वमेवाभिधीयते। निरूपकत्वाश्रयत्वाभ्यां क्रियाकारकोभयनिष्ठत्वेन तस्य सम्बन्धत्वाक्षतेः। धर्मवाचकता वादिमते भाष्यमिदं प्रतिकूलमेवेति स्पष्टमेव। नच क्रियाकारकभावरूपसंबन्धो द्वितीयार्थः। प्रकृतभाष्यं चात्रार्थे प्रमाण, मतो न भाष्यमस्माकं प्रतिकूलमिति वाच्यम्। वाक्यजन्यबोधे क्रियाकारकभावस्याभानेन तस्यास्तदर्थकत्वायोगात्। अतो मदुक्ताशयकमेव महाभाष्यम्। तच्च भवतः प्रतिकूलमेवेत्यास्तां तावत्।

## (सविषयकधातुयोगेद्वितीयार्थकथनम्।)

**एवंविधकर्मत्वबाधेतु सविषयकधातुसमभिव्याहारे तार्किकरीत्यैव विषयत्वादिकं द्वितीया-विना लक्षयित्वा आख्यातेन चा श्रयत्व लक्षयित्वा घटविषयकज्ञानाश्रयत्वं चैत्रीयमिति चैत्रो जानाति घटमित्यत्र शाब्दबोधः। एवं कर्मषष्ठीकर्माख्यातकर्मकृत्स्वपि बोध्यम्। नत्विह परसमवेतत्वस्या वश्यकता। अत एव स्वात्मानं जानामीत्यादि प्रयोगः। न ह्यत्र मुख्यं कर्मत्वमस्ति क्रियाजन्यफलाभावात्। अपितु विषयत्वे लक्षणा। सापि नानुशासनकी, येन तदर्थमपि कर्मसंज्ञा प्रसज्येत, अपितु गङ्गायां घोष इतिवत् साम्प्रतिकी। अतश्च कर्मत्वाभावेन कर्मसंज्ञाया अभावात् न "आकडारा देकासंज्ञा 1-4-1 इत्यस्य बाधः।**

सविषयकधातुस्थले द्वितीयान्तप्रयोगस्योपपत्तिमाह — **एवं विधेति** फलाश्रयत्वरूपकमन्वबाधेन्विन्यर्थः। जानाति करोत्यादीनां ज्ञानादिक्रियामात्रवाचित्वात् धात्वर्थतावच्छेदकफलाभावात् तदाश्रयत्वेन घटादीनां कर्मत्वं नोपपद्यत इति भावः। तार्किकमतात् स्वमते विशेषं दर्शयति — **घटविषयकेति** तार्किकमते न् तादृशज्ञानाश्रयत्ववाँश्चैत्र इति प्रथमान्तार्थविशेष्यको बोधः। **एवं कर्मषष्ठीति** घटस्य ज्ञाना, ज्ञायते घटश्चैत्रेण, ज्ञातो घट इत्यादावपीत्यर्थः। इह = सविषयकधातुसमभिव्याहारे। अत एव = अत्र तस्यानवश्यकत्वादेव। **स्वात्मानमिति** अन्यथा स्वस्मिन् स्वप्रतियोगिकभेदाभावात् तत्प्रयोगानुपपत्तिः स्पष्टैवेति भावः। "एवंविधकर्मत्वबाधेतु" इत्येतदेव विवृणोति — **नहृत्यत्रेति** मुख्यम् = धात्वर्थतावच्छेदकफलशालित्वरूपम्। **फलाभावादिति** ज्ञाकृञादीनां केवलव्यापार वाचित्वादिति भावः।

ननु गां दोग्धि पय इत्यादौ गवादीनां कर्मत्वबोधकस्य "अकथितञ्च" त्यनुशासनस्येव विषयत्वबोधकस्यानुशासनस्याभावात् तत्र कथं लक्षणेत्यत आह। **सापि नानुशासनिकीति** प्रकृते **लक्षणा अनुशासनमूलिका नेत्यर्थः। येन = लक्षणाया अनुशासनमूलकत्वेन। तदर्थमपि = आनुशासनिकत्वार्थमपि। सांप्रतिकीति** लक्ष्यानुसारेण कल्प्येत्यर्थः। एतच्च मूले समनन्तरमेव स्पष्टीभविष्यति। कर्मत्वाभावेन = क्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वाभावेन **न आकडारादिति** अन्यथा आकडारीयसंज्ञात्वेन परत्वाद्बलीयस्या कर्तृसंज्ञया कर्मसंज्ञा बाध्येत। तदबाधनार्थं यत्नान्तरमन्वेषणीय स्यादिति भावः।

## (विभक्तौ लक्षणा नयुक्तेति शङ्का।)

**ननु विभक्तौ लोके न लक्षणा—**

**"सुपां कर्मादयोप्यर्थाः, संख्याचैव तथा तिङाम्।**
**प्रसिद्धोनियम स्तत्रनियमः प्रकृतेषु वा।।"**

**इति कात्यायनवचनविरोधात्। अत्र हि सुपां तिङांच कर्मत्वादि संख्याचै कत्वादिका येन शास्त्रेणार्थ इति प्रतिपाद्यते, तत्रार्थनियमः प्रसिद्ध इति तृतीयचरणस्यार्थः। स च एकत्वे एकवचन मेव कर्मणि द्वितीयैवेत्याकारकः। चतुर्थचरणेतु प्रकृतार्थापेक्षया प्रत्ययनियमः, सच कर्मण्येव द्वितीया, एकत्व एवैकवचन मित्याकारकः। उभयथापि विभक्ते रर्थान्तरे वारणा न्न विभक्तौ लक्षणा। अत एव "च्छन्दसि सुपां सुपो भवन्ती" ति लक्षणाप्रतिप्रसवरूपं व्यत्ययानुशासनं छन्दस्युपपद्यते। इतरथा लोकवदेव वेदेपि तदुपपत्तेर्व्यत्ययानुशासनवैयर्थ्यापत्तिः।**

**एवं कर्मणि षष्ठी त्यादिलक्षणानुशासनस्यापि वैयर्थ्यम्। शक्यसंबन्धावगमस्य प्रमाणान्तरेणैव सिद्धेः। अतो न लोके विभक्त्या वनुशासनं विना क्वापि लक्षणेति चेत्।**

ननु घटं जानातीत्यादौ सविषयकार्थक धातुसमभिव्याहारे द्वितीयाया विषयत्वे आख्यातस्याऽऽश्रयत्वे च नैयायिकरीत्या लक्षणामाश्रित्य बोधोपवर्णनमयुक्तम्। विभक्तौ लक्षणाऽभावस्य प्रामाणिकत्वादित्याशयेन शङ्कते — **नन्विति** — विभक्तौ = सुपि तिङि च। छन्दसि "सुपां सुपो भवन्ति" "सुपां सुलुक्" 7-1-39 इत्यादेः प्रतिप्रसवस्य सत्त्वादाह — **लोके इति न लक्षणेति** तथा च निरुक्तरीत्या विषयत्वादौ लक्षणा न प्रामाणिकीति भावः, तदेवोपपादयति — **सुपामिति** — सुपां कर्मादयोप्यर्थाः, इत्येकं वाक्यं सुब्विषयकम्। कर्मादय इत्यत्रादिपदेन अपादानसम्प्रदानकर्तृकरणाधिकरणानां ग्रहणम्। अपि शब्देन एकत्वादि संख्याया ग्रहणम्। "कर्मणि द्वितीया" "कर्तृकरणयोस्तृतीया" "अपादाने पञ्चमी" "चतुर्थी सम्प्रदाने" "सप्तम्यधिकरणे च" "द्वयेकयोर्द्विवचनैकवचने" "बहुषु बहुवचन" मिति शास्त्रबलात्कर्मादिकारकषट्क मेकत्वादिसंख्या च सुपामर्थ इति प्रथमवाक्यस्यार्थः। **कर्मत्वादिरूपा शक्तिरपि शक्तिमताऽभेदमा-**

**पन्नैव विभक्त्यो च्यते। अतो न "शक्तिः कारक" मिति पक्षेण विरोधः। "संख्या चैव तथा तिङ" मिति** तिङ्विषयकं द्वितीयं वाक्यम्, एकत्वादिसंख्या चेन कर्तृकर्मणी तिङामर्थ इति तदर्थः। "लः कर्मणि च भावे चाकर्मकेभ्यः" "**द्वयेकयोर्द्विवचनैकवचने**" "बहुषु बहुवचन" मिति शास्त्रबलात्कर्तृकर्मणी एकत्वादि-संख्या च तिङामर्थ इति भावः। सुपां कर्मादयोप्यर्थाः संख्या चैव इत्येतत्तु न प्रथमं वाक्यम्। चा-पि शब्दयोरन्यतरस्य वैयर्थ्यापत्तेः। उत्तरवाक्ये कर्तृकर्मरूपमात्रेष्टसंबन्धस्यासिद्धेश्च। अत्रेदं बोध्यम् प्रत्ययनियमः, अर्थनियमश्चेति नियमो द्विविधः, आद्योपि एकत्वकर्मत्वादिप्रकृतार्थापेक्षः सामान्यापेक्ष-श्चेति द्विविधः। तत्र सामान्यापेक्षप्रत्ययनियमपक्षस्यासंभवोऽनेन वार्तिकपूर्वार्धेन बोध्यते। एकत्वाद्यर्थान्तरस्यापि सत्त्वे कर्मत्व एव द्वितीयेति नियमायोगात्। एतदाशयेनैव सुपां तिङां चार्थद्वयं प्रदर्शितं वार्तिककृता। अतोर्थनियमः प्रकृतार्थापेक्षप्रत्ययनियमश्चेति द्वयमेवात्र वार्तिके प्रदर्श्यते। तदेवावलम्ब्य "अतः सिद्धं विभक्त्यन्तरार्थभिन्ने विषयत्वादौ लक्षणे" त्यन्तेन ग्रन्थेन प्रकृतार्थो विचार्यते-इति। **तत्र = तच्छास्त्रविषये। अर्थनियमः = अर्थविषयो नियमः = कर्मणि द्वितीयैवेत्येवं विधः। प्रसिद्धः = शास्त्रबलात् वा = यद्वा प्रकृतेषु = सजातीयेष्वर्थेषु, नियमः = प्रत्ययनियम इति वार्तिकार्थः। वार्तिकेति इदं च "बहुषु बहुवचनम्" 1-4-2 "सार्वधातुके यक्" 3-1-67 इत्यादि सूत्रेषु पठितम्, विरोधं प्रतिपादयितुं वार्तिकार्थं विशदयति — अत्र हीति — कर्मत्वादीति इदं च सूत्रवार्तिकभाष्येषु स्थितं कर्मादिपदं कर्मत्वादि धर्मपरमिति स्वसिद्धान्तानुसारेण। येन शास्त्रेण = "कर्मणि द्वितीया" लः कर्मणि** चेत्यादि शास्त्रेण **तत्र = शास्त्रे अर्थनियमः = अर्थस्य कर्मत्वादेर्विभक्त्यन्तरसंबन्धनिवर्तको नियमः, तमेव** दर्शयति — **स च एकत्वे एकवचनमेवेति प्रकृतार्थापेक्षयेति एकत्वापेक्षया द्वित्वबहुत्वयोः प्रकृतत्वम्। तेन एकस्मिन्नेव एकवचनम्, न द्विबहुषु। कर्मत्वापेक्षया करणत्वादीनां प्रकृतत्वम्, तेन कर्मत्व एव द्वितीया, न तु करणत्वादावित्यर्थः सिध्यति। प्रत्ययनियमः = प्रत्ययस्या र्थान्तरसंबन्धनिवर्तको नियमः। तमेव दर्शयति — स च कर्मत्व एव द्वितीयेति उभयथापि = नियमद्वयेपि। विभक्तेः = सुपस्तिङश्च। अर्थान्तरे = विषयत्वा-श्रयत्वादौ। वारणादिति कर्मणि द्वितीयैवेत्यर्थ नियमे घटं जानातीत्यादौ कर्मणोऽभावाद् द्वितीया न, तस्याऽ-भावादेव द्वितीया कर्मण्येवेति प्रकृतार्थापेक्षप्रत्ययनियमपक्षेपि तत्र सा नेति भावः। फलितार्थमाह — न विभक्तौ लक्षणेति** लक्षणयाऽर्थान्तरबोधने नियमस्य व्यर्थतया तत्सार्थक्यान्यथानुपपत्या विभक्तेर्लक्षणयाऽ-र्थान्तरबोधकत्वाभावे वार्तिकतात्पर्यावगमादिति भावः।

उक्तार्थे ज्ञापकान्तरमाह — **अत एवेति** विभक्तौ लक्षणाया अभावादेवेत्यर्थः। "क्त्वापि **छन्दसि**" 7-1-38 त्यतच्छन्दसीत्यनुवर्तमाने "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्या याजालः" 7-1-38 इति सूत्रे पठितं "सुपां सुपो भवन्ती" ति भाष्यवार्तिकमुदाहरति — **छन्दसि सुपां सुपो भवन्तीति** सूत्रेण सुपां स्थाने सु आदेशो विधीयते, यथा — "ऋजवः सन्तु पन्थाः" पन्थान इति प्राप्ते जसः स्थाने सुः। एवं च **प्रथमैकवचनमेवा नेनादेशो लब्धः, सुपां स्थानेऽन्येपि सुप आदेशा यथा स्युरित्याशयेन भाष्यं प्रवृत्तम्। यथा** — "युक्ता माताऽऽसीद्धुरि दक्षिणायाः" अत्र धुरीति सप्तम्यन्तानुरोधेन दक्षिणस्यामिति प्राप्तेऽनेन सप्तम्याः स्थाने षष्ठी विधीयते। **लक्षणा प्रतिप्रसवरूपमिति** निषिद्धत्वादप्राप्तौ पुनर्विधानं प्रतिप्रसवः, प्रकृते लक्षणाया निषिद्धत्वात्सप्तम्यर्थे षष्ठी न प्रवर्तेत, अतस्तदर्थं "सुपां सुप" इत्यारब्धमिति भावः। **व्यत्ययानुशासनमिति** वि अतिपूर्वकाद् इण् गताविति धातोः एरच् 3-3-50 **इत्यनेन भावे अच् प्रत्ययः** व्यतिक्रम्य गमनं = व्यत्ययः। अन्योन्यविषयावगाहनमिति यावत्, व्यत्ययेन अनुशासनमिति तृतीयातत्पुरुषः। अन्यस्याविभक्तेः स्थानेऽन्यस्याविभक्तेर्विधानामिति फलितोर्थः। **ज्ञापकत्वमुपपादयति — इतरथेति** विभक्तौ लक्षणायाः स्वीकारे इत्यर्थः। लोकवदेव = गङ्गायां घोष इत्यादाविव, तदुपपत्तेः = लक्षणया षष्ठ्या एव सप्तम्यर्थबोधनोपपत्तेः। **वैयर्थ्यापत्तिरिति** निरुक्तोदाहरणेषु सप्तम्याः स्थाने विभक्त्यन्तरस्याविधानेपि लक्षणया निर्वाहात्तद्वैयर्थ्यमिति भावः। एवं तद्व्यर्थीभूय 'विभक्तौ लक्षणा न स्वीकार्ये' ति ज्ञापयतीति भावः।

अत्रार्थे ज्ञापकान्तरमाह – **एवं कर्मणि षष्ठ्यादीति** "कर्तृकर्मणोः कृति" 2-3-65 इत्यनेन कर्तरि कर्मणि च कृद्योगे षष्ठी विधीयते। आदिपदेन "ल्यबलोपे कर्मण्यधिकरणे च" त्यादेर्ग्रहणम्। लक्षणानुशासनस्य = लक्षणयार्थप्रतिपादकस्यानुशासनस्य लाक्षणिकानुशासनस्येति यावत्। **वैयर्थ्यमिति** – कृष्णस्य कृतिः, जगतः कर्ता कृष्णः इत्यादौ शेषे षष्ठ्या विधानेपि गङ्गायां घोष इत्यादाविव लक्षणया शेषषष्ठ्या कर्तृत्वकर्मत्वबोधनसंभवात्तद्वैयर्थ्यमिति भावः। तदाह – **शक्यसंबन्धावगमस्येति** लक्षणाज्ञानस्येत्यर्थः। प्रमाणान्तरेणैव = प्रत्यक्षादिनैव। **सिद्धेरिति** विभक्तौ लक्षणायाः सत्त्वे तु एतत्सूत्रादेरावश्यकतैव न, गङ्गायां घोष इत्यादाविव मनसा संबन्धावगमाल्लक्षणयाऽभिमतार्थबोधसिद्धेरित्यर्थः। अतस्तदारम्भादपि विभक्तौ लक्षणाभावः प्रतीयत इति भावः। पूर्वपक्षमुपसंहरति – **अत इति अनुशासनं विनेति** अनुशासनसत्त्वे तु लोकेपि विभक्तौ लक्षणा स्वीकार्या, यथा चोराद् बिभेतीत्यत्र "भीत्रार्थानां भयहेतुः" 1-4-25 इत्यनुशासनाद्धेतुमत्त्वे पञ्चम्या लक्षणा, यवेभ्यो गा वारयतीत्यत्र "वारणार्थानामीप्सितः" 1-4-27 इत्यनुशासनात्पञ्चम्याः प्रतियोगित्वे लक्षणा। प्रकृते विषयत्वे द्वितीयाया लक्षणाश्रयणे न किञ्चिदनुशासनमस्तीति भावः। एवं च "विभक्तौ न लक्षणे" ति वचनं प्रमाणवत्, तत्प्रतिप्रसवसत्वे न चोराद्बिभेतीत्यादौ लक्षणा स्वीक्रियते, घटं जानातीत्यादौ विषयत्वादौ तदाश्रयणे प्रतिप्रसवाभावाल्लक्षणाया अप्रसरात्कथं तार्किकमतावलम्बनेन शाब्दबोधोपपादनमिति प्रकृत पूर्वपक्षस्याशयः।

## (तच्छङ्कानिरासः।)

**न, प्रातिपदिकादिष्विव विभक्तावपि लक्षणायां बाधकाभावात्। उक्तवार्तिकस्य लक्षणायामप्यविरोधात्। तथाहि – अर्थनियमपक्षे तावत् कर्मणि द्वितीयैव न तु तृतीयादिविभक्त्यन्तरमिति सजातीयशब्दान्तर व्यावृत्तावपि द्वितीयाया अर्थान्तरे निवारणाभावस्य महाभाष्ये स्पष्टत्वात्। इतरथा निस्संख्येभ्योऽव्ययेभ्योपि सुपामनापत्तेः। एवं करणत्वादौ तृतीयैवेत्यस्यापि। नियमा द्विभक्त्यन्तरार्थे विभक्त्यन्तरस्य परं न लोके लक्षणा, न तु विषयत्वादावपि। विषयत्वादावपि।**

व्याकरणशास्त्रे कर्मत्व कर्तृत्व करणत्वसंप्रदानत्वा पादानत्वाधिकरणत्वैकत्व द्वित्वबहुत्वरूपा येऽर्था विभक्त्यर्थत्वेन निर्दिष्टा, स्तेषां मध्ये यस्मिन्नर्थे या विभक्तिरनुशिष्टा शास्त्रेण, तस्मिन् सैव साधु, नान्या **विभक्ति लक्षणयापि, यथा – "कर्मणि द्वितीये" त्यनेन कर्मत्वे द्वितीयानुशिष्टा, तत्र तृतीयादि विभक्त्यन्तरं** लक्षणयापि न साधु, एतदाशयकमेव "विभक्तौ न लक्षणे" ति वचनम्। एतदर्थोपष्टम्भकान्येव "सुपां कर्मादयोप्यर्थाः" इत्यादीनि मुनिवचनानि, येत्वर्थाः शास्त्रे न निर्दिष्टा विषयत्वाश्रयत्वप्रतियोगित्वादय, स्तत्र नास्य निषेधवचनस्य प्रवृत्तिः। अतो द्वितीयायाः विषयत्वे आख्यातस्याऽऽश्रयत्वे च लक्षणा युक्तैव। तदर्थस्य व्याकरणशास्त्रेऽनिर्दिष्टत्वेन प्रकृतनिषेधाविषयत्वादित्याशयेन समाधत्ते **नेति प्रातिपदिकादिष्विवेति** गङ्गायां घोष इत्यादौ गङ्गापदे लक्षणा स्वीकृता। आदिना "पृष्ठै रुपतिष्ठते" इत्यादौ धात्वादेर्ग्रहणम्। तत्रात्मनेपदानुरोधेन धातोः समीपस्थितिः शक्यार्थः, तद्विशिष्टाभिधाने यथा धातोर्लक्षणा स्वीकृता, तद्वदित्यर्थः। विभक्तावपि = सुप्तिङ्रूपविभक्तावपि। लक्षणायां = विषयत्वाश्रयत्वादौ लक्षणायाम्। बाधकाभावात् = विभक्तौ न लक्षणेत्यस्य प्रकृतेऽप्रवृत्तेः। उक्तवार्तिकस्य = "विभक्तौ न लक्षणे" ति निषेधोपजीव्यस्य "सुपां कर्मादयोप्यर्थाः" इत्यादि वार्तिकस्य। लक्षणायामपि = विभक्तौ तस्यां स्वीकृतायामपि। अविरोधमुपपादयति – **तथाहीत्यादिना – विषयत्वादौ युक्तैव लक्षणेत्यन्तेन**, अर्थनियमपक्षे = अर्थस्य कर्मत्वादेर्विभक्त्यन्तर संबन्धनिवर्तको नियमः, तत्पक्षे। **कर्मणि द्वितीयैवेति**

इदमर्थनियमस्वरूपम्। 'यत एवकारस्ततोन्यत्र नियम' इति वृद्धव्यवहारः। नियमव्यावर्त्यमाह — **न तु तृतीयादीति** इति = इत्येवरूपेऽर्थनियमपक्षे इति योजना, **सजातीयेति** कर्मत्वे द्वितीयैवेति नियमेन तत्सजातीयास्तृतीयादिविभक्तयस्तत्र वार्यन्त इत्यर्थः। अर्थान्तरे = कर्मत्वरूपाच्छास्त्रे निर्दिष्टादर्थाद्भिन्ने विषयत्वादौ। महाभाष्ये = "**बहुषु बहुवचन**" 1-5-21 मित्यादि सूत्रस्थे। तत्र हि "बहुषु बहुवचन" मित्यादीनां नियमसूत्रत्वमिति **सिद्धान्ते उच्चैर्नीचै**रित्यादावव्ययेभ्यः सुबनुत्पत्तिमाशङ्क्य "अर्थनियमे सिद्ध" मिति समाहितम्। **अत्र कैयट एवं व्याचष्टे** "अर्था नियता इति तेषु वचनान्तराभावः, प्रत्ययास्तु अनियतत्वादव्ययेभ्योपि सिध्यन्ती" ति। **एवं चार्थपक्षे** विभक्तीनां कर्मत्वादावेवेति नियमाभावादर्थान्तर-बोधकत्वमविरुद्धमिति भावः। नन्वर्थनियमपक्षेपि प्रत्ययनियमत्यागे मानाभावात्कर्मत्वादावेव द्वितीयादीनां नियमनान्न भवदभीष्टार्थ सिद्धि रित्यत आह — **इत्तरथेति** अर्थ नियमपक्षेपि "'द्व्येकयो' रित्यादावपि एकत्व एव एकवचनमिति **प्रत्ययनियमस्यापि स्वीकारात्**तावव्ययेभ्यः संख्याया — अभावात्सुपामनुत्पादात्पदत्वाभावा **त्तन्निबन्धनरुत्वाद्यभावप्रसङ्गः**। अत एकवाक्येनोभयविध-नियमस्याऽलाभादर्थनियमपक्षे प्रत्ययनियमो **न परिग्राह्य एव**। अत एवा र्थनियमपक्षाश्रयणेन निस्संख्येभ्योऽव्ययेभ्यः सुबुत्पत्तिसाधनं **महाभाष्यकारस्य संगच्छत इति** भावः। स्पष्टप्रतिपत्तये सूत्रान्तरसिद्धं नियमं दर्शयति — **एवं करणत्वादावितीत्यस्यापीति** इति नियमस्यापि सजातीयद्वितीयादिशब्दान्तरव्यावर्तकत्वेपि **तृतीयाया अर्थान्तरबोधकत्वं** न निवार्यत इत्याशयः। स्वाभीष्टमर्थं संगृह्णाति — **नियमादिति अस्य एवंचेत्यादिः**। भाष्यपर्यालोचनया निरुक्तार्थसिद्धौ चेत्यर्थः। नियमात् = प्रत्ययनियमासंवलितादर्थनियमात्। **विभक्त्यन्तरार्थे** = द्वितीयारूपविभक्त्यन्तरार्थे कर्मत्वे। विभक्त्यन्तरस्य = तृतीयादेः। **न लोके लक्षणा = लोके लक्षणा** न स्वीकार्येत्येवाशयः, **न तु विषयत्वादावपीति** विषयत्वादावपि न **लक्षणेति न त्वाशय इति** भावः। एवं च शास्त्रानिर्दिष्टार्थविषये प्रकृतनियमस्य व्यापाराभावात् **विषयत्वादौ द्वितीयादीनां लक्षणाश्रयणे** न किञ्चिद्बाधकमिति प्रकृतप्रघट्टकार्थः। तथा चोक्तं **व्युत्पत्तिवादे षष्ठी प्रकरणे श्रीगदाधरभट्टाचार्यैः** "विभक्तौ न लक्षणेति प्रवादस्या नुशासनाभावे एकविभक्त्यर्थेऽपरविभक्ते **र्न लक्षणेत्येवं** परत्वादि" ति।

**प्रत्ययनियमपक्षेपि प्रकृतकर्मत्वैकत्वादिरूपसुप्तिङर्थापेक्षयैव तन्नियमकरणा दप्रकृतविषयत्वादिलक्षणायां न कोपिक्षेपः। स्पष्टंचैवमपि तत्रैव। अत एव जानातीत्यादौ तिङोपि आश्रयत्वादौ लक्षणेत्युक्तं प्राक्।**

**एवं च छन्दसिव्यत्ययानुशासन मपि प्रकृतविभक्त्यन्तरार्थविषये प्रतिप्रसवरूपतया ना सङ्गतम्। कर्मणि षष्ठीत्यादिकं च लोकवेदसाधारण्येन।**

**न चैवं लोके "अक्षीणि मे प्रदर्शनीयानि, पादा मे सुकुमाराः" इत्यादिमहाभाष्योदाहृतप्रयोगेषु प्रतिप्रसवाभावा त्प्रकृतद्वित्वे बहुवचनस्य प्रयोगानुपपत्तिः। तत्राक्षित्वादिजातिविवक्षायां "जात्याख्याया मेकस्मिन् बहुवचन मन्यतरस्याम्" 1-2-58 इति वचनेन प्रतिप्रसवात्।**

**अतः सिद्धं विभक्त्यन्तरार्थभिन्ने विषयत्वादौ युक्तैव लक्षणेति।**

एवमर्थनियमपक्ष वार्तिकविरोधं परिहृत्य प्रत्ययनियमपक्षेपि तं परिहरति — **प्रत्ययनियमपक्षेपीति** कर्मत्व एव द्वितीयेत्यादि शुद्ध (सामान्यापेक्ष) प्रत्ययनियमस्याऽसंभवादाह — **प्रकृतकर्मत्वेति स्वादितिबादिसूत्रैकवाक्यतापन्न कर्मणि द्वितीया लः कर्मणि चेत्यादि सूत्रनिर्दिष्टाः प्रकृतार्था इत्युच्यन्ते। तथा** च प्रकृता य कर्मत्वादिकारकैकत्वादिसख्यारूपाः सुप्तिङामर्था स्तदपेक्षयैवेत्यर्थः। तन्नियमकरणात् = विभक्त्यर्थनियमकरणात्। **अप्रकृतेति** अर्थेऽप्रकृतत्वं च स्वादितिबादि विध्येकवाक्यतापन्नसूत्रा-

निर्दिष्टत्वरूपम्। न हि विषयत्वादिकं तदेकवाक्यतापन्न कर्मणि द्वितीयेत्यादि सुत्रेषु निर्दिष्टम्। **अतोऽप्रकृतेऽर्थे तन्नियमस्याप्रसरा त्तत्रलक्षणाश्रयणे न किञ्चिद्बाधकमिति भावः। तदाह — न कोपि दोष इति शास्त्रविरोधरूपो** दोषः कोऽपि नेत्यर्थः। एतदपि = प्रत्ययनियमस्य प्रकृतार्थविषयकत्वमपि, तत्रैव = महाभाष्य एव। तथा च "बहुषु बहुवचनम्" 1-4-21, "सार्वधातुके यक्" 3-1-67 इति सूत्रयो र्भाष्यम्-"नियमः प्रकृतेषु वा, अथवा प्रकृतानर्थानपेक्ष्य नियमः क्रियते, के च प्रकृताः? एकत्वादयः, एकस्मिन्नेवैकवचनम्। न द्वयो, र्न बहुषु। द्वयोरेव द्विवचनम्, नैकस्मिन्, न बहुषु। बहुष्वेव बहुवचनम्, नैकस्मिन्, न द्वयो, रिति। "तुल्यजातीयस्य नियमेन व्यावृत्तिः क्रियते" इति च तत्र कैयटः। **संख्याप्रसङ्गाद् भाष्ये एकत्वादय उदाहृताः, तत्साम्यात्कर्मत्वादिविषयकमपीदं भाष्य, मतः प्रकृतार्थसिद्धि-**रिति बोध्यम्, अत एव = "विभक्तौ न लक्षणे" त्यस्य निरुक्तरीत्या व्यवस्थितत्वादेव, तिङोपि = विभक्तेरपि तिङः। उक्तं प्राक् = पाणिनिमतेन प्रथमार्थविचारावसरे "चैत्रो जानातीत्यादावाश्रयत्वलक्षणायाः शिरोमणिसंमताया अनापत्ते" रिति ग्रन्थेन।

अत एव छन्दसि व्यत्ययानुशासनमपि नास्माकं प्रतिकूलमित्याह — **एवं चेति** "सुपां कर्मादयोप्यर्था" इति कात्ययनवचनविरोधे परिहृते चेत्यर्थः। व्यत्ययानुशासनमपि = "सुपां सुपो भवन्ती" ति व्यत्ययेनानुशासनमपि, **प्रकृतविभक्त्यन्तरार्थेति** प्रकृतस्य = शास्त्रनिर्दिष्टस्य विभक्त्यन्तरार्थस्य सप्तम्यर्थस्य विषये इत्यर्थः। अयमर्थः — "कर्मणि द्वितीये" त्यनुशासनेन कर्मत्वरूपोऽर्थो निर्दिष्टः। अतस्तत्रार्थे लक्षणया तृतीया न प्रयोज्या, "विभक्तौ न लक्षणे" ति निषेधस्य तत्र प्रवृत्तेः। तथा च **"सप्तम्याधिकरणेचे"** त्यनुशासनेनाधिकरणत्वरूपोऽर्थो निर्दिष्टः। तत्र लक्षणयापि षष्ठी न साधुः, प्रकृतनिषेधात्। एवं निर्दिष्ट सप्तमीरूपविभक्त्यन्तरार्थेऽधिकरणत्वे षष्ठ्या निषिद्धत्वात्तत्प्रतिप्रसव-रूपतया "धुरि दक्षिणाया" इत्यादौ सप्तम्यर्थे षष्ठी विधानं संगच्छते-इति। एवं चैतदपि नास्माकं प्रतिकूलमिति भावः।

विभक्तौ लक्षणाया अनाश्रयणे "कर्तृकर्मणोः कृती" त्येतदनुशासनमुपष्टम्भकतया यदुक्तं, तदपि नास्माकं प्रतिकूलं, प्रत्युतानुकुलमेवेत्याह — **कर्मणि षष्ठीत्यादिकमिति** आदिपदेन "ल्यब् लोपे **कर्मण्यधिकरणे चेत्यादेर्ग्रहणम्। एतेषां छन्दसीति नियमाभावादाह — लोकवेदेति अत्र "प्रकृत-विभक्त्यन्तरार्थविषये प्रतिप्रसवरूपतया नासङ्गत" मिति संबध्यते, कर्मत्व कर्तृत्वाधिकरणत्वा-**दीनामन्यविभक्त्यर्थत्वेपि "कर्तृकमणोः कृति" ल्यबलोपे" इत्यादिसूत्रवार्तिकाभ्यामनुशिष्टत्वान्न लक्षणायां विरोधः। कर्मत्वत्वादिना कर्मत्वादिबोधे विवक्षितेपि द्वितीयादिकं न भवति, अपि तु षष्ठ्येव सप्तम्येवेति नियमस्य "विभक्तौ न लक्षणे" ति निषेधप्रतिप्रसवरूपतया लक्षणातात्पर्यग्राहकत्वपर्यवसन्नस्य सूत्रवार्तिकफलत्वेन न तद्वैयर्थ्य प्रसङ्ग इति भावः।।

प्रयोगासिद्धिमुद्भावयति — **न चेति** एवम् = प्रकृतेष्वर्थेषु अनुशासनं विना लक्षणा नेत्यर्थस्वीकारे। वेदे **व्यत्ययानुशासनस्य सत्वादाह — लोके इति महाभाष्येति इदं "बहुषु बहुवचन" 1-4-21 मिति सूत्रे। प्रकृतद्वित्व इति** प्रकृते **"द्वयेकयोर्द्विवचनैकवचने" 1-4-20 इति शास्त्रनिर्दिष्टे द्वित्व इत्यर्थः। प्रयोगानुपपत्तिरिति** अक्षिपादगत द्वित्वमादाय **द्विवचनस्य न्याय्यत्वाद् बहुवचनान्तप्रयोगस्यानुपपत्ति-**रित्यर्थः। **जात्याख्यायामिति** जात्याख्यायाम् = **जातेः प्राधान्येनाऽऽख्यायाम् एकस्मिन्नर्थे वर्तमानः शब्दः** अन्यतरस्यां = विकल्पेन, बहुवचनम् = बहूनामर्थानां वाचक इति सूत्रार्थः। सूत्रे वचनमिति सामान्ये नपुंसकम्। एवं चानेन एकत्वेऽर्थे बहुत्वप्रयुक्तं कार्यमतिदिश्यत इति पर्यवस्यति। अक्ष्यादि शब्दानां जातिपरत्वाज्जातेश्चैकत्वादेकवचनमेव प्राप्नोति। बहुवचनं तु लक्षणया तत् प्रतिपादयितुं नाऽलम्। विभक्तौ लक्षणाया निषेधात्। अतस्तत्प्रतिप्रसवतयाऽनेन बहुवचनमभ्यनुज्ञायते। एकत्वं च बहु-वचनस्यार्थः। सुकुमारा इत्याद्यन्वयस्तु व्यक्तिघटितपरम्परयेति बोध्यम्। वचनेन = अतिदेशवचनेन। एवं

च 'सुपां कर्मादयोप्यर्थाः' इत्यादि कात्यायन वार्तिकेनार्थ नियमः प्रकृतार्थापेक्ष प्रत्ययनियमश्च प्रतिपाद्यते। उभयथापि निरुक्तरीत्या घटं जानातीत्यादौ सुप्तिङोर्विषयत्वाश्रयत्वयोर्लक्षणा स्वीकारो निराबाध एवेति स्वसिद्धान्तं निगमयति — **तत्सिद्धमिति** विभक्त्यन्तरार्थभिन्ने = प्रकृतविभक्त्यन्तरार्थः करणत्वादिः, तद्भिन्ने शास्त्रानिर्दिष्टे, तदाह **विषयत्वादाविति** आदिनाऽऽश्रयत्व प्रतियोगित्वादेर्ग्रहणम्।

## (शुद्धप्रत्ययनियमपक्षेपि विषयत्वादौ लक्षणोपपादनम्।)

**यदातु सामान्यापेक्ष एवप्रत्ययनियम इति महाभाष्यकारीयं व्याख्यानान्तर मभ्युपगम्यते, तदा कात्यायनीयं नियमद्वयमपीदं 'शक्तिनियामकं निरूढलक्षणानियामकं च। तस्याः 'शक्तितुल्यत्वात्। तथा च प्रकृतेऽप्रकृते वार्थेऽनुशासनं विना न 'शक्तिः, निरूढलक्षणा वा। साम्प्रतिकलक्षणायास्तु न क्वापि प्रकृतेऽप्रकृते वा निषेधः।**

ननु अर्थनियम — प्रकृतार्थापेक्षप्रत्ययनियमरूपे पक्षद्वयेपि निरुक्तव्यवस्थाश्रयणेन सुप्तिङोर्विषयत्वाश्रयत्वयो र्लक्षणा स्वीकारे बाधकाभावेपि कर्मत्वे एव द्वितीयेति सामान्यापेक्षप्रत्ययनियमस्यापि भाष्यसंमतत्वेन तत्पक्षे **कर्मत्वातिरिक्तेऽर्थे** द्वितीयाया **निवारणलाभा** न्न भवदभीष्टार्थ सिद्धिरित्यत आह — **यदात्विति सामान्यापेक्ष एवेति** सामान्यापेक्षोपीत्यर्थः। अयं शुद्धप्रत्ययनियम इत्यप्यभिधीयते, प्रत्ययनियमः = कर्मत्व एव द्वितीयेत्येवं रूपः। महाभाष्यकारीयम् = "बहुषु बहुवचनम्" — 1-4-21 "अव्ययादाप् सुपः" 1-4-82 इति सूत्रयोः। **व्याख्यानान्तरमिति** इत्थं हि तद्भाष्यम् — "अथवा **आचार्यप्रवृत्ति ज्ञापयति-उत्पद्यन्तेऽव्ययेभ्यः स्वादय इति, यदयम् "अव्यया दाप् सुप" इत्यव्ययाल्लुकं** शास्ती" ति। एकत्वे एवैकवचनमिति सामान्यापेक्ष प्रत्ययनियमेऽव्ययेषु संख्याया अभावात्तेभ्यः सुपामनुत्पत्तिरिति दोष मर्थनियमप्रकृतार्थापेक्ष प्रत्ययनियमपक्षयोराश्रयणेन परिहृत्य शुद्धप्रत्ययनियमपक्षेपि तद्दोषपरिहारार्थमिदं भाष्यं प्रवृत्तम्। प्रत्ययनियमेन यद्यपि सुपोऽव्ययेभ्यो नोत्पद्यन्ते, तथापि अव्ययात्परस्य सुपो लुग्विधायक शास्त्रबलात्तदुत्पत्तिः, अन्यथा प्रतियोग्यप्रसिध्द्या तल्लुग्विधानं व्यर्थमेव स्यादिति तद्भाष्याशयः। इदमेव भाष्यं प्रकृतपक्षसाधकम्। "भवतु प्रत्ययानां सामान्येन नियम, स्तथापि ज्ञापकादव्ययेभ्यः स्वादि सिद्धि" रिति अथवे त्यादि भाष्य प्रतीके कैयटः। **कात्यायनीयमिति** अयमर्थः — वार्तिके प्रसिद्धशब्दो नियमशब्दद्वयेन संबध्यते, प्रसिद्धो नियम इत्यत्र नियमशब्दः शक्तिपरः। प्रसिद्धो नियमः = शक्तिः। नियमः प्रकृतेष्वित्यत्र नियमशब्दो निरूढलक्षणापरः, प्रसिद्धो नियमः = निरूढलक्षणा, प्रसिद्धपदसंयोगात्। प्रकृतेषु वेत्यत्र वाशब्देना प्रकृतानामर्थानां ग्रहणम्। तत्रशब्दः शास्त्रपरः, **शास्त्राधीनेत्यर्थः। सुपां कर्मादय इत्यस्य यद्यपीत्यादिः। तदयमर्थः — यद्यपि सुपां कर्मादयोप्यर्थाः संख्या चैव** तथा तिङाम्। तथापि प्रकृतेष्वप्रकृतेषु वाऽर्थेषु प्रसिद्धो नियमः = शक्तिरूपो नियमः, प्रसिद्धोनियमः = निरूढलक्षणारूपो नियमश्च, तत्र = शास्त्राधीनैवेति। यत्र कुत्राप्यर्थे सुप्तिङां शक्तिर्निरूढलक्षणा च शास्त्रमनुरुध्यैव स्वीकार्या, न तु तदुल्लङ्घनेनेति। एतदाशयकमेव प्रकृतभाष्यमपि। विभक्तौ न लक्षणेत्यस्य विना शास्त्रं विभक्तौ निरूढलक्षणा न स्वीकार्येत्येवार्थः। एवं चानशासनं विना शक्तिनिरूढलक्षणयोरस्वीकारकथनेन तद्भिन्नायाः साम्प्रतिकलक्षणाया अर्थमात्रे विनापि शास्त्रं स्वीकारलाभाद् द्वितीयाया विषयत्वे लक्षणाया आश्रयणे न कोप्यनुशासनविरोधः। वार्तिके **प्रसिद्धपदमहिम्ना शक्तिनिरूढलक्षणयोरेवं ग्रहणम्। न तु साम्प्रतिकलक्षणाया अपि। अतोत्रापि पक्षे लक्षणा** निराबाधैव-इति, तदेतदाह — **नियमद्वयमपीदमिति** प्रसिद्धपदसंबद्धनियमशब्दद्वयबोधित **नियमद्वयम** पीत्यर्थः, तदाह — **शक्तिनियामकं निरूढलक्षणा नियामकं चेति** ननु कथं नियमशब्देन निरूढलक्षणाया ग्रहण, मत आह — **तस्याः शक्तितुल्यत्वादिति** तस्याः = निरूढलक्षणायाः, शक्तितुल्यत्वादित्यनेन कात्यायनवार्तिके साम्प्रतिकलक्षणाया ग्रहणाभावो द्योत्यते। पर्यवसितवार्तिकार्थमाह — **तथा चेति** वा

शब्देन लब्धमर्थमाह — **प्रकृतेऽप्रकृतेवार्थे इति।** तत्रशब्दासिद्धमर्थमाह — **अनुशासनं विनेति निरूढलक्षणावेति** एतदाशयिकैव "विभक्तौ न लक्षणे" ति वृद्धोक्तिरिति भावः। तयोरनुशासनं विनाऽप्रवृत्तिकथनात्परिशेषन्यायलब्धमर्थमाह — **साम्प्रतिकेति** शक्तिनिरूढलक्षणयोरनुशासनानुरोधेन स्वीकारे इयं व्यवस्था, यत् शक्यतावच्छेदकैक्य लाभे विभक्तेः शक्तिः स्वीकार्या, यथा — "कर्तुरीप्सिततमं कर्म" "तथा युक्तं चानीप्सित" मिति शास्त्रीयोदाहरणेषु, यत्र न तल्लाभो यथा "अकथितं चे" ति शास्त्रीयोदाहरणेषु, तत्र निरूढलक्षणे" ति। प्रकृते = शास्त्रनिर्दिष्टे पचतीत्यादौ कर्तरि, पाचक इत्यादौ कृतौ, अप्रकृते = शास्त्रानिर्दिष्टे घटं जानातीत्यादौ

**न चैव मव्ययेभ्योपि संख्याभिन्नेर्थे साम्प्रतिकलक्षणया सुबुत्पत्तेः "अव्यया दाप्सुपः" 2-4-82 इति ज्ञापकबला दव्ययेष सुबुत्पत्तिपक्षो महाभाष्यकारीयो न संगच्छत इति वाच्यम्। तस्य लाक्षणिकार्थाविवक्षायामपि शब्दसाधुत्वार्थमपि सुबुत्पत्ति रित्येवंज्ञापनार्थत्वात्।**

उक्तार्थस्वीकारे भाष्यविरोध इत्याशङ्कते **नचेति** एवम् = विनापि शास्त्रं साम्प्रतिकलक्षणायाः **स्वीकारे।** संख्याभिन्ने = प्रकृतार्थभिन्ने, अर्थे = प्रातिपदिकार्थे, **ज्ञापकेति** समनन्तरप्रदर्शित ज्ञापकेत्यर्थः। **न संगच्छत इति** लक्षणावशसिद्धमर्थमादाय सुबुत्पत्त्या तल्लोपविधानार्थं लुग्विधायकशास्त्रस्य चरितार्थतया वैयर्थ्याभावाद् भाष्यकृतो निरुक्तज्ञापकत्वोपवर्णनं तस्य न संगच्छत इति भावः। तस्य = ज्ञापकपरभाष्यस्य, साम्प्रतिकलक्षणाया असार्वत्रिकत्वादाह — **लाक्षणिकार्थाविवक्षायामपीति** ज्ञापनार्थत्वात् = तत्रैव भाष्यस्य तात्पर्यात्।

## (शुद्धप्रत्ययनियमपक्षे व्यत्ययानुशासनस्य सार्थक्यप्रदर्शनम्।)

**नचैवं छन्दसि व्यत्ययानुशासनवैयर्थ्यम्। तस्य निरूढलक्षणात्वज्ञापनार्थत्वात्। निषिद्ध लक्षणार्थत्वप्रतिप्रसवार्थत्वाच्च। तथाच — साम्प्रतिकी लक्षणा क्वचि न्नैव भवति। अत एव भट्टवार्तिके "यत्र यो लाक्षणिकेर्थे प्रयोगः अनुपपत्तिस्फुरणं विनाप्यर्थस्मरणं, तत्र निरूढलक्षणा। यत्र तत्स्फुरणपूर्वकं काव्याद्या धुनिक प्रयोगः, तत्र साम्प्रतिकी लक्षणे ति लक्षणाभेदं व्युत्पाद्य "काश्चि न्नैवा प्रयोगत" इत्यनेन प्रयोगाभावे न लक्षणे" त्युक्तम्। उदाहृतं च — "रूप वस्त्र" मिति। इतरथा मत्वर्थलक्षणया प्रयोगः केन वार्येत। अत एव एनां निषिद्धलक्षणेत्याचक्षते। तस्याश्च वेदेपि प्रसक्तौ प्रतिप्रसवार्थं व्यत्ययानुशासन मिति**

**सर्वथा सिद्धं घटं जानामीत्यादौ विषयत्वे लक्षणेति।**

शुद्धप्रत्ययनियमपक्षे व्यत्ययानुशासनस्य वैयर्थ्यमाशङ्कते — **न चेति** एवं = विनाप्यनुशासनं **साम्प्रतिकलक्षणायाः** स्वीकारे। **वैयर्थ्यमिति** "धुरि दक्षिणायाः" इत्यादावपि लक्षणया षष्ठ्या अधिकरणत्वबोधकत्व संभवात्तद्वैयर्थ्य मिति भावः। समाधत्ते — **तस्येति** — "सुपां सुपो भवन्ती" ति व्यत्ययानुशासनस्येत्यर्थः। **ज्ञापनार्थत्वादिति** अनुशासनं विना तस्या आश्रयितुमशक्यत्वादिति भावः। ननु विशेषाभावात् साम्प्रतिकलक्षणायाः स्वीकारे तद्वैयर्थ्यमेवेत्यत आह — **निषिद्धलक्षणेति** समनन्तरवक्ष्यमाणे रूपं वस्त्रमित्यत्रेव "धुरि दक्षिणाया" इत्यत्रापि लक्षणाया निषिद्धत्वावगमेन तत्प्रतिप्रसवार्थत्वादित्यर्थः। एतत्फलितार्थमाह — **तथा चेति** नैव भवति = अप्रमितस्थले तदयोगात्। एतादृशलक्षणाभेदं प्रमाणयति — **अत एवेति** निरुक्तलक्षणा व्यवस्थायाः स्वीकारादेवेत्यर्थः। भट्टवार्तिके = अरुणाधिकरणे। आर्षः = धुरि दक्षिणायाः" तत्स्फुरणपूर्वकम् = अनुपपत्तिस्फुरणपूर्वकम्। घटं जानातीत्यादौ ज्ञानानुकूलकृतेरबोधात्तिङः कृतौ प्रयोगेऽनुपपत्तिः धात्वर्थतावच्छेदक फलस्याभावाद् घटस्य कर्मत्वानुपपत्तिः। **काश्चिदिति** —

'निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्।
क्रियन्ते साम्प्रतं काश्चि, त्काश्चिन्नैवाप्रयागतः।।

इति तत्र सम्पूर्णं पद्यम्। इतरथा = साम्प्रतिकलक्षणायाः सार्वत्रिकत्वे। प्रकृते उपयोजयति — **तस्याश्चेति** निषिद्धलक्षणाया इत्यर्थः। तार्किकरीत्या प्रतिपादितं द्वितीयाया विषयत्वे लक्षणास्वीकारपक्षं निगमयति — **सर्वथेति**

**(ज्ञातताङ्गीकारेण घटं जानातीत्यादौ मुख्यकर्मत्वोपपादनम्।)**

**वस्तुतस्तु नात्र लक्षणा, मुख्यकर्मत्वस्यैवोपपत्तेः। तथाहि — ज्ञातो घट इति प्रतीत्या ज्ञानजन्या ज्ञेयनिष्ठा ज्ञाततापरनामविषयता फलम्। तच्छालित्वं घट इति मुख्यकर्मत्वोपपत्तिः।**

**न च भावकार्यस्य समवायिकारणजन्यत्वनियमाद् भूतभाविस्थलेच तदभावा त्फलाभावः, ध्वंसस्य प्रामाणिकत्वेन भावत्वस्य व्याप्यतावच्छेदककोटिप्रवेशवत विषयताया अपि प्रामाणिकत्वे लघुना समवेतत्वेनैव कार्यत्वस्य विशेषणात्। अतश्च ध्वसवदेव विषयताया अपि निमित्तकारणमात्रजन्यत्वमेवेत्यन्यत्र विस्तरः।**

**एवं च परसमवेतत्वसिध्द्यर्थं स्वं जानातीत्यादौ शरीरमनोभेदकल्पनात आकडारा देका संज्ञा" 1-4-1 इत्यस्या प्युपपत्तिः।**

एवं तार्किकमतरीत्या घटे जानातीति प्रयोगमुपपाद्य तत्प्रसङ्गेन विभक्तौ न लक्षणेत्यस्य विषयव्यवस्थां प्रसाध्य स्वसिद्धान्ते जानातीत्यस्यो पपत्तिं दर्शयति — **वस्तुतस्त्विति अत्र** = विषयत्वे, आख्यातस्या श्रयत्वे लक्षणा नाऽस्त्येव। तर्हि द्वितीयार्थः कः. कथं वा तदुपपत्ति, रत आह — **मुख्यकर्मत्वेति** तदेवोपपादयति — **तथाहीति** प्रतीत्या = प्रतीत्यासिद्धा। फलम् = जानात्यर्थः। **कर्मत्वोपपत्तिरिति** तण्डुल पचतीत्यादौ तण्डुलादोरव जानातियोगे घटादेरपि "कर्तुरीप्सिततमं कर्म" त्यनेन कर्मत्वस्योपपत्ति रित्यर्थः।

तदभावात् = घटादिरूपसमवायिकारणस्याभावात्। **व्याप्यतावच्छेदकेति** यत्र यत्र भावकार्यत्वं, तत्र समवायिकरणजन्यत्वमिति व्याप्तिः यत्र यत्र कार्यत्व मित्येतावन्मात्रोक्तौ ध्वंसे समवायिकारण-जन्यत्वस्या भावाद् व्यभिचारः, तद्वारणाय तदवच्छेदककोटौ भावत्वं निविष्टम्। ध्वंसे भावरूपकार्यत्वा भावा न्न दोषः, तद्वदित्यर्थः। **लघुनेति** समवायसामानाधिकरण्यान्यतरसंबन्धेन सत्तावत्वं भावत्वम्। तदपेक्षया लघुभूतं समवेतत्व मिति भावः। **विशेषणादिति** तथाच यत्र यत्र समवेतकार्यत्वं तत्र **समवायिकारणजन्यत्व मिति व्याप्त्या ध्वंसे विषयताया च समवेतकार्यत्वा भावा न्न समवायिकारण-**जन्यत्वनियम इति भावः। अतश्च = निरुक्तव्यवस्थाया **आश्रयणात्**। ध्वंसवदेव = ध्वंसस्येव। नन तार्किकमते जानाति योगे घटादौ मुख्यकर्मत्वा भावात्तत्र परसमवेतत्वस्या नावश्यकत्वात् स्वात्मान जानामीत्यादिप्रयोगनिवाहेपि त्वन्मते तदनिर्वाह एव। तव घटादीनां मुख्यकर्मत्वा त्तत्र परसमवेतत्वस्या-वश्यकतया स्वस्मिन् स्वप्रतियोगिक भेदाभावा, दत आह — **एवंचेति** निरुक्तरीत्या घटादीनां मुख्यकर्मत्वे चेत्यर्थः। वैयाकरणरीति माश्रयति — **शरीरेति**। एवं च ज्ञानाश्रयस्य कर्तृत्वं, तज्जन्यज्ञाततारूपफला-श्रयस्य कर्मत्वं चाविरुद्ध मिति भावः। **उपपत्तिरिति** एकस्य संज्ञाद्वयप्रयुक्तकार्यद्वयस्या भावा दिति भावः।

**अथवा परसमवेतत्वादिघटितलक्षणसमनियता खण्डोपाधिरूपकर्मत्वे शक्तिः, तद्बाधात्तु स्वं जानातीत्यादौ धात्वर्थतावच्छेदकफलशालित्वमात्रे विषयित्वमात्रे वा लक्षणेति न विरोधः। चैत्रः स्वं गच्छतीत्यादौ तु न लक्षणयापि प्रयोगः। अप्रयोगेण निषिद्धलक्षणात्वा दिति ध्येयम्।**

**तत्सिद्धं ''कर्मणि द्वितीये'' 2-3-2 ति सूत्रात्कर्मत्व मखण्डोपाधिरूपं द्वितीयार्थ आख्यातार्थान्वयीति। उक्तं च तन्त्रवार्तिके – ''विभक्तयो हि कारकशक्तिं निष्कृष्याभिधाय क्रियां विशिंषन्ती'' ति।**

शरीरादीना मवच्छेदकत्वे तदवयवानामपि तत्त्वापत्तिरिति पूर्वप्रदर्शितदोपापत्तिरित्याशयेन प्रकारान्तरेण स्वं जानातीत्यादीना मुपपत्तिं दर्शयति – **अथवेति** शक्तिः = द्वितीयायाः। तद्वा धात्तु = विषयताया जानात्यर्थत्वे स्वस्मिन् स्वप्रतियोगिक भेदाभावेन निरुक्तकर्मत्वस्य बाधात्तु। फलशालित्वमात्रे = विषयतारूपफलशालित्वमात्रे। इतोपि लाघवादाह – **विषयित्वमात्रे इति** नन्वेवं स्वं चैत्रो गच्छतीत्यपि स्यादित्यत आह – **चैत्रः स्वमिति चैत्रः** स्वंजानातीत्यस्य लोक सिद्धतया तदुपपत्ति लक्षणयो पपादिता, **चैत्रः** स्वं गच्छतीत्यस्या भावेन न तत्र लक्षणाश्रयणं युक्तम्'' इत्याशयेनाह – **अप्रयोगेणेति** रूपं वस्त्रमित्यस्येवास्यापि लक्षणाविषयत्वा भाव इत्याह – **निषिद्धेति** कर्मत्व मखण्डोपाधिरूपम्, तस्य च भावनाया मन्वय इति स्वसिद्धान्तं निगमयति **तत्सिद्धमिति** पाणिनिसूत्रस्याप्यत्रैव तात्पर्यमित्याह **कर्मणिद्वितीयेति सूत्रादिति** स्वोक्तार्थे मीमांसकवृद्धानां संमतिं दर्शयति **उक्तंचेति** अरुणाधिकरणे वार्तिककारैः पार्थसारथिमिश्रैश्चोक्तमित्यर्थः। **निष्कृष्येति** द्रव्यात् परसमवेतत्वादेश्च पृथक्कृत्येत्यर्थः। अनेन विभक्त्यर्थस्या खण्डत्व मुक्तम् क्रियां विशिंषन्तीत्यनेन क्रियान्वयः प्रतिपादित इति भावः।

**न्यायसुधाकारस्तु – ''कर्तुरीप्सिततमं कर्म '' 1-4-49 इति सूत्रा दीप्सितकर्मत्व मेव द्वितीयार्थः। ''तथायुक्तं चानीप्सित'' 1-4-50 मितिसूत्रा दनीप्सितत्वे निरूढलक्षणेत्याह।**

**तन्न, ईप्सितानीप्सितत्वरूपविशेषस्य प्रमाणान्तरलभ्यत्वेन लाघवात्कर्मत्व एव शक्तेः। यथाचैवं सति न सूत्रद्वयवैयर्थ्यं तथा कौस्तुभे विस्तरः।**

'कर्तुरीप्सिततमं कर्मे' तिसूत्रं शक्यार्थबोधकम्। ''तथायुक्तं चामीप्सित'' मित्यादीनि लक्ष्यार्थबोधकानीति **द्वितीयाध्यायप्रथमपादे पञ्चमे संमार्गाधिकरणे भट्टसोमेश्वरोक्त मयुक्तं, तथायुक्त मित्यस्यापि** शक्यार्थबोधकत्वा दित्याशयेन तन्मतं दूषयति **न्यायसुधेति प्रमाणान्तरेति** अनुमान लभ्यत्वादित्यर्थः। **लाघवात्कर्मत्व एवेति** सुधाकृन्मतेतु सूत्रद्वयबलेन कर्मत्वस्या नेकविधत्वावगमात् **गौरवम्। नचैकत्र शक्ति,** रपरत्र लक्षणेति वाच्यम्। कुत्र शक्तिः, कुत्र लक्षणेत्यत्र विनिगमनाविरहात्। **तथाच सर्वेषां वाच्यत्वापत्तौ** शक्यतावच्छेदकैक्या भावेना नेकशक्तिकल्पनागौरवापत्ते र्दुर्वारत्वात्। **अत ईप्सितानीप्सितसा धारण्येन** व्याप्यत्वापरपर्यायस्य क्रियाजन्यफलाश्रयत्वरूपस्य कर्मत्वस्य तत्समनियताखण्डोपाधेर्वा **द्वितीयावाच्यत्वं** युक्त मिति भावः। नन्वेवं ''व्याप्यं कर्मे''त्येव सूत्रयितव्ये ''कर्तुरीप्सिततमं कर्म'' **''तथायुक्तं चानीप्सित''** मितिसूत्रद्वयं व्यर्थ, मत आह – **यथाचेति** एवं सति = **ईप्सितत्वानीप्सितत्वयोः प्रमाणान्तरसिद्धत्वात्फला**श्रयत्वमात्रस्य द्वितीयार्थत्वे। **तथेति** अयमर्थः – **व्याप्यं कर्मेतिन्यासेपचिगम्यादियोगे कर्मत्वस्यचरितार्थत्वा** द्वारयतियोगे विशेषविहितेन अपादानत्वेन कर्मत्वस्य **बाधाद् यवेभ्यो गां वारयतीत्यादौ** गोरप्यपादानत्वात्पञ्चम्यापत्तिः। अतः ''कर्तुरीप्सिततमं कर्मे'' **तिसूत्र मावश्यकम्। तथाच ईप्सिते** ''वारणार्थानामीप्सितः'' इत्यपादानत्वस्य चरितार्थतया **ईप्सिततमे अपादानत्वबाधनेन परत्वाद् गवि कर्मत्वमेव प्रवर्तते। एवंच ईप्सितेऽपादानत्व, मीप्सिततमे कर्मत्व मिति यवेभ्यो गां वारययतीति प्रयोगः सिध्यति। एवं हि ''कर्तुरीप्सिततमं कर्मे'' त्युक्तौ ग्रामं गच्छन् तृणंस्पृशति विषं भुङ्क्ते इत्यादौ द्वेष्योदासीनयो**रसंग्रहः स्यात् अत स्तत्संग्रहाथ ''तथायुक्त'' मिति द्वितीयसूत्रमप्यारब्धव्यम्। एवं चैतत्सूत्रद्वय साधारण्येन फलाश्रयत्वरूपं कर्मत्वमेव द्वितीयार्थः। ''अकथितं चे'' त्यादित्वगत्या लाक्षणिकानुशासनमेव, तत्साधारण्येनैकशक्यतावच्छेदकालाभात्। तदेतदभिप्रेत्याह – **कौस्तुभे विस्तर इति** द्वितीयाध्याये **प्रथमपादे संमार्गाधिकरणे, ''न तदर्थत्वा ल्लोकवत्तस्य च शेषभूतत्वात्'' 2-1-12** इति सूत्रे विस्तरः।

**तच्च कर्म चतुर्विधम् – उत्पाद्यम् आप्यम् विकार्यम् संस्कार्यं चेति। घटं करोति, घटं जानाति, व्रीहीन् वहन्ति, व्रीहीन् प्रोक्षतीत्युदाहरणानि।**

निर्दिष्टं कर्म विभजते – **तच्चेति** कर्तुरीप्सिततममिति सूत्रलक्षित मित्यर्थः। संस्कार्यानुरोधेनाह **चतुर्विधमिति** उत्पाद्यम् = उत्पादनार्हम् निर्वर्त्यम्। **आप्यमिति** यत्र क्रियाकृतो विशेषो न लक्ष्यते, तत्। न हि ज्ञाताज्ञाते घटे विशेषो वगन्तुं शक्यते। एवं विधमाप्यम्। विकार्यम् = विकारार्हम्। संस्कार्यं = संस्कारार्हम्। **क्रमेणोदाहरति घटंकरोतीति व्रीहीनिति अवस्थान्तरप्राप्तिरेव खलु विकारः, व्रीहीन् प्रोक्षतीति** आदर्शं विमलीकरोतीत्यादि लौकिकमुदाहरणम्। यस्यो त्तरत्रकार्यान्तरेषु पयोगो भवति, ततुसंस्कार्यम्। **अत्रायं विशेषः – लौकिकवाक्येन यस्य संस्कार्यकर्मत्वमवगम्यते, तस्य लौकिके कार्यान्तरे** विनियोगः। वैदिकवाक्येन यस्य तत्त्वमवगम्यते, तस्य वैदिकेकार्यान्तरे विनियोगः। यथा व्रीहीन् प्रोक्षती'' **ति प्रकृतोदाहरण वाक्ये संस्कार्यकर्मत्वेनावगतानां व्रीहीणां ''व्रीहिभिर्यजेते'' ति वाक्यान्तरेण यागे विनियोगः।**

**पार्थसारथिस्तु-साध्यत्वमेव द्वितीयार्थः। आप्यकर्मादावपि तत्फलोपहितत्वेन साध्यते-त्याह, तदपि जन्यत्वत्वस्य शक्यतावच्छेदकत्वे गौरवाद् पेक्षितम्।**

**शक्त तावच्छेदकं तु द्वितीयात्व ममादिनिष्ठो व्यापकोधर्मः। एव मग्रेपि।**

परसमवेतधात्वर्थतावच्छेदकफलशालित्वसमनियत मखण्डोपाधिरूपं कर्मत्वं शाक्तद्वितीयार्थ इति स्वमतमुपपाद्य साध्यत्वं द्वितीयार्थ इति पार्थसारथिमत मुपन्यस्यति – **पार्थसारथिस्त्वति साध्यत्वमेवेति** अयमर्थः – ''कर्तुरीप्सिततमं कर्म'' त्यनेन ईप्सितस्य क्रियया साध्यात्मना संयुक्तस्य कर्मसंज्ञा विधीयते। तथा साध्यात्मनैव क्रिययासंयुक्तस्यानीप्सितस्यापि ''तथायुक्तं चानीप्सित'' मिति सूत्रान्तरेण कर्मसंज्ञा विधीयते। तथाचे प्सितानीप्सितानुवर्ति साध्यरूपं कर्मेति सूत्रद्वयेन प्रतिपाद्यते। ''कर्मणिद्वितीये'' **त्यनुशासनेन तादृशे कर्मणि द्वितीयाया विधानात्साध्यत्वं द्वितीयार्थ इति स्पष्टमेव लभ्यते। नच निर्मूल मिदं** पाणिनीयानुशासन मिति वाच्यम्। घटं करोति, ''व्रीहीनवहन्ती'' ति लोकवेदयोः प्रयोगसद्भावात्। नापि वल्वजान् शिखण्डकान् कुरु, 'सक्तून् जुहोती' ति लोकवेदयोः प्रयोगदर्शना न्न साध्यत्वं द्वितीयार्थः, किंतु साधनत्वमेव। घटं करोतीत्यत्रापि एवमाकारो घटः कर्तव्य इति बुद्धावुल्लेखनानन्तरमेव तत्र कृतेरुत्पत्ते र्बुद्धिस्थत्वेन घटस्यापि साधनत्वं संभवतीति वाच्यम्। केवलप्रयोगापेक्षया व्याकरणस्मृत्यनुगृहीतप्रयोगस्य बलवत्त्वा त्तदनुसारेण द्वितीयायाः साध्यत्वार्थकत्वस्यौ चित्यात्। बुद्धिस्थत्वं बुद्धौ विषयत्वमात्रं नतु वस्तुनः सद्भाव इति साध्यत्वमेव घटस्य। व्रीहीनिति वैतुष्यविशिष्टत्वेन व्रीहीणां साध्यत्वमविरुद्धम्। सक्तून् जुहोतीत्यत्र द्वितीया लक्षणया करणत्वार्थिकेति न कश्चिद्दोष-इति **तत्फलेति** ज्ञाततावैतुष्यादि-फलोपहितत्वेनेत्यर्थः। आह = द्वितीयाध्याये प्रथमपादे संमार्गाधिकरणे। यद्यपि ''साध्यं कर्म'' त्येव सूत्र **मुचितं, तथापि यवेभ्यो गां वारयतीत्यादौ यवाना मपादानत्वं, गोः कर्मत्वमिति संज्ञाद्वयव्यवस्थासिध्द्यर्थ-मित्यादिपूर्वोक्तरीत्या सूत्रद्वय मावश्यकमिति मयूरवमालिकायां श्रीमत्सोमनाथसर्वतोमुखयाजिभि र्विस्तरेण** प्रतिपादितम्। **गौरवादिति** तदव्यवहितोत्तरत्वे सति तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्ध्यनिरूपकत्व जन्यत्वम्, अतो जन्यत्वस्य गुरुभूतस्य शक्यत्वे जन्यत्वत्वस्य शक्यतावच्छेदकत्वे गौरवं स्पष्टमेवेति भावः। ननु ''कर्मणि द्वितीये'' ति सूत्रेण द्वितीया विधीयते। साच अम् औ शस् इत्यवयवत्रयविशिष्टा, ते चा **वयवा अनेकधा विपरिणमन्ते, तथाच तेषां सर्वेषामपि शक्ततावच्छेदकत्वेऽत्यन्तगौरव मित्यत आह – शक्ततावच्छेदकत्वं त्विति द्वितीयात्वमिति** सूत्रेण द्वितीया कर्मत्वे विहिता, अतो द्वितीयात्वमेव शक्ततावच्छेदकम्। अवयवानां तद्विकाराणां च न तत्त्व, मतो न गौरवमिति भावः। तदाह – **अमादिनिष्ठो व्यापको धर्म इति** अग्रेपि = तृतीयाचतुर्थ्यादिष्वपि।

**यानि त्वन्यानि द्वितीयार्थानुशासनानि, तानिप्रचुरप्रयोगाभावा ल्लाक्षणिकानुशासनानि। तथाहि – दुह् याच् पच् दण्ड् रुधि प्रच्छ चिञ् ब्रूञ् शास् जि मथ् मुष् नीञ् हृ कृष् वह् रूपधातुसमानार्थकधातूनां यत्कर्मकारकं तत्संबन्धिनोऽपादानादिकारकत्वाविवक्षायां "न माषाणा मश्नीया" दितिवद् धात्वर्थ संबन्धमात्रविवक्षायां संबन्धसामान्यवाचिषष्ठीप्राप्तौ "अकथितं च" 1-4-51 इत्याद्यनुशासनेन भाक्तकर्मसंज्ञाकरणाद् द्वितीयादि। यथा – गां दोग्धि पय इत्यादौ। अत्र च गोदोहनसंबन्ध एव द्वितीयार्थः। सच स्वनिरूपकदोहनानुकूलत्व-संसर्गेण भावनायामेवान्वेति, न तु धात्वर्थे, व्युत्पत्त्यन्तरकल्पनापत्तेः। तद्योगप्रतिपादकानुशासनं च संसर्गप्रतिपादनपरम्।**

"कर्तुरीप्सिततमं कर्म" तथा युक्तं चानीप्सितम् इत्यनयोरिव "अकथितञ्चे" त्यादीनामपि शक्यार्थबोधकत्वमेवेति वैयाकरणानां मतं दूषयति – **यानि त्वन्यानीति** "कर्तुरीप्सितमं, तथायुक्त इति सूत्रद्वयादन्यानि, अकथितञ्चेत्यादीनीत्यर्थः। तेषां लाक्षणिकानुशासनत्वे बीजमाह – **प्रचुरप्रयोगेति** अयमर्थः – येषामर्थानां तत्तत्सूत्रैः कर्मसंज्ञा विधीयते, तत्र "कर्मणि द्वितीये" त्यनेन द्वितीयायाः शक्तिः कल्प्या, तेषामर्थानां नानात्वाच्छक्त्यानन्त्यापत्तिः, नहि तेषामानन्त्येऽपि गवादिपदस्थल इव शक्यतावच्छेदकैक्यमपि संभवति। शक्यतावच्छेदकानामपि नानात्वात्। अतो द्वितीयायास्तेषु शक्तिः कल्पयितुं न शक्यते, नच शक्यानां तदवच्छेदकानां च नानात्वेपि हर्यादिपदस्थल इव शक्तिः कल्प्यतामिति वाच्यम्। हर्यादिपदानां तत्तदर्थे प्रचुरप्रयोगदर्शनात् तत्कल्पनेऽप्यत्र तथा कल्पनायोगात्। अकथितादि सूत्रविषयाणां बहुलप्रयोगाभावात्। अतो गङ्गायां घोष इत्यादौ गङ्गादिपदानामिव एतत्सूत्रविहित-कर्मत्वनिमित्तकद्वितीयाया अपि लाक्षणिकार्थबोधकत्वमेव युक्तम्। एवं विभक्त्यन्तरेष्वपि द्रष्टव्यर्मिति। **तेषु प्रथमम् "अकथितञ्चे" ति सूत्रं व्याचष्टे – तथाहीति – नटस्य श्रृणोतीत्यादौ धात्वन्तर-प्रयोगेऽनेन कर्मत्वं माभूदित्यर्थं परिगणनं कर्तव्यमित्याह – दुह्याच् इति दुहादयो द्वादश नीञ् प्रभृतयश्चत्वारश्चेति षोडश दुहादिवह्यन्तरूपा ये धातवः तत्समानार्थकानां धातूनामित्यर्थः। अनेन** अर्थनिबन्धनेयं संज्ञा, न स्वरूपाश्रयेति दर्शयति। अत एव "अहमपीदमचोद्यं चोद्ये" इति तद्राजस्येति 2-4-62 सूत्रे पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वं भाष्ये प्रदर्शितम्। तथाच भट्टिः –

"स्थास्नुं रणे स्मेरमुखो जगाद मारीचमुच्चैर्वचनं महार्थम्" इति।

कालिदासोऽपि –

"शिलोच्चयोपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थ मभाषतेव" इति।

भारविश्च –

"उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः" इति।

एवञ्च दुहादीनामेव धातूनां प्रयोगेऽकथितस्य कर्मत्वमिति परिगणनात् नटस्य श्रृणोतीत्यादौ नातिव्याप्तिरिति भावः। परिगणनलभ्यमंशं दर्शयति **यत्कर्मकारकं तत्संबन्धिन इति** गां पयो दोग्धीत्यादौ "कर्तुरीप्सिततमं कर्मे" ति सूत्रविहित कर्मसंज्ञकं पयःप्रभृति, तत्संबन्धिनो गवादेरित्यर्थः। कर्मसंबधश्च ब्रूञ्शास्यतिरिक्त धातुस्थले धात्वर्थव्यापारात्प्रागेव विद्यमानो ग्राह्यः। अत एव गां पयो दोग्धि, **कांस्यपात्र्यामित्यादौ कांस्यपात्र्यदे र्नानेन कर्मत्वम्। ब्रूञ् शासिस्थले तु धात्वर्थव्यापारादनन्तरकालिक** एव सम्बन्धो ग्राह्यः, ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूञ्धातोरर्थः, प्रवृत्तिपर्यवसायी स शासेरर्थः। अत्र कर्तृव्यापारादनन्तरमेव ज्ञानाश्रयत्वरूपो माणवकस्य **धर्मेण**-संबन्ध इति बोध्यम्। सूत्रे कथ = वाक्यप्रबन्धे इति चुरादिधातोर दन्तान्निष्पन्नोऽविवक्षित इत्यर्थकः क्रियाशब्दो गृह्यते, नत्वप्रधानार्थको

रूढशब्दः। अन्यथा पाणिना कांस्यपात्र्यां गां पयो दोग्धीत्यत्र पाणिकांस्यपात्र्यो रपि कर्मत्वापत्तिः, दुहयादिव्यतिरिक्तस्थले सावकाशाधिकरणत्वापादानत्वविषये गोः पयोदोग्धीत्यादाववधित्वविवक्षायामपि परत्वादनेन कर्मत्वापत्तिश्चेत्याशयेनाह – **अपादानादिकारकत्वाविवक्षायामिति** अपादानादिकारकत्वेनाविवक्षायामित्यर्थः। आदिपदेन संप्रदानत्वाधिकरणत्वयोरेव ग्रहणम् नतु करणत्वस्य, हस्तादेः करणस्य दोहनक्रियातः प्राक् पयसा कर्मणा सम्बन्धाभावात्। इह "कारके" इत्यधिकारस्यानुवर्तनात् सत्येव कारकत्वेऽकथितस्य कर्मसंज्ञया भाव्यमिति सामर्थ्यादपादानकारकत्वेनाऽविवक्षितमित्यर्थलाभ इत्याशयेनेदमुक्तम्। अविवक्षा च द्विविधा – अपादानत्वाधिकरणत्वसंप्रदानत्वानां प्राप्तौ, तेषामविवक्षा एका, सर्वथा तदप्राप्तिरूपा द्वितीया। गां दोग्धि पय इत्यत्र गोरपादानत्वं, व्रजमवरुणद्धि गामित्यत्र व्रजस्याधिकरणत्वं, माणवकं धर्मं ब्रूते इत्यत्र माणवकस्य संप्रदानत्वं च सूत्रान्तरैः प्राप्तं, तदविवक्षायां तेषामनेन कर्मत्वम्। बलिं याचते वसुधामित्यत्र बलेः , माणवकं पन्थानं पृच्छतीत्यत्र माणवकस्य **चापादानत्वादीनां मध्ये कस्यापि प्राप्त्यभावरूपाविवक्षायामनेन कर्मत्वम्। ब्रूशासियोगे सर्वथा** पूर्वावधिविषयाऽप्राप्तियोग्यविषये नानेन कर्मत्वम्। तेन माणवकाय धर्मोपदेशकाले शूद्रेणापि तच्छ्रवणे शूद्रं धर्मं ब्रूते इति न प्रयोग इति बोध्यम्। षष्ठ्याः प्राप्तौ दृष्टान्तमाह **न माषाणामिति षष्ठीप्राप्ताविति** तद्बाधनेनेति शेषः। षष्ठ्याः प्राप्तौ तद्बाधनेन द्वितीयेति भावः। अपादानादि संज्ञाविशेषैरविवक्षितं **कारकंकर्मसंज्ञं स्याद्दुहादियोगे इति सूत्रार्थः पर्यवस्यति। इत्याद्यनुशासनादित्यत्र "द्वितीयादीत्यत्र चादिपदं** संपातायातम्। यद्वा प्रकृत्यादिभ्य उपसङ्ख्यानमित्याद्यनुशासनसंग्राहकतया तृतीयादिसंग्राहकतया च तच्चारितार्थ्यं बोध्यम्। **गां दोग्धीति** अन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारो दुहेरर्थः। कृतिराख्यातार्थः। विभागाश्रयत्वेन गोरपादानत्वं प्राप्तम्। तस्याविवक्षायां षष्ठी प्राप्ता। तां बाधित्वाऽनेन कर्मत्वाद्द्वितीया। एतत्सूत्रविहितं कर्म गौणकर्मेत्युच्यते। अतो गौणकर्मणि लादयः **गौर्दुह्यते पयः, गौर्दोग्धव्यापयः, गौः सुदोहा पय इति लकारकृत्यखलर्थाः प्रत्ययाः। इत्यादाविति आदिपदेन बलिं याचते वसुधाम्, अविनीतं विनयं याचते, तण्डुलानोदनं पचति, गर्गान् शतं दण्डयति, बलिं याचते वसुधाम्, अविनीतं विनयं याचते, तण्डुलानोदनं पचति, गर्गान् शतं दण्डयति, व्रजमवरुणद्धि-गाम्, माणवकं पन्थानं पृच्छति, वृक्षमवचिनोति फलानि, माणवकं धर्मं ब्रूते शास्ति वा, शतं जयति देवदत्तम्, सुधां क्षीरनिधिं मथ्नाति, देवदत्तं शतं मुष्णाति, ग्राममजां नयति हरति कर्षति वहति वा, इत्येतेषामुदाहरणानां** सिद्धिर्बोध्या। लक्ष्यार्थमेव विशदयति **अत्रचेति** निरुक्तोदाहरण इत्यर्थः। द्वितीयार्थः = द्वितीया लक्ष्यार्थः। **तस्या अपि भावनायामेवान्वय इत्याह – सचेति द्वितीयार्थ संबन्धोऽपीत्यर्थः। स्वं = सम्बन्धः, तन्निरूपकं यद्दोहनं**, तदनुकूलत्वं कृताविति तेन संबन्धेनान्वय इति भावः। धात्वर्थ एव कुतो नान्वय इत्यत आह – **व्युत्पत्यन्तरेति** द्वितीयार्थसंवन्धप्रकारकबोधं प्रति धातुजन्योपस्थितेः कारणत्वमिति व्युत्पत्यन्तर-कल्पनायां गौरवमिति भावः। ननु गवादीनां प्रकृतसूत्रेण कर्मत्वविधानात्तदर्थकत्वस्यैव द्वितीयाया वाच्यत्वावश्यकत्वे लक्ष्यसंवन्धार्थकत्वकथनमयुक्तमत आह – **तद्योगेति** दुहादि धातुयोगे कर्मत्वप्रति-पादकानुशासनमपीत्यर्थः। **संसर्गप्रतिपादनपरमिति** द्वितीयायाः संबन्धार्थकत्व प्रतिपादनपरमित्यर्थः। अकथितमित्यादिसूत्राणामभावे सर्वत्र षष्ठी प्राप्ता, तद्बाधनार्थत्वादेषां सूत्राणां षष्ठीवत्तदपवादभूत द्वितीयाया अपि संबन्धार्थकत्वम्। अत्रैव सूत्रतात्पर्यमिति भावः।

**गोरपादानत्वविवक्षायां तु 'गोः पयो दोग्धी" तिपञ्चम्यन्तप्रयोगः। गोः पयोरूपकर्मकारक-संबन्धविवक्षायां तु षष्ठ्यन्तप्रयोगोपि। अत्र पयसः संबन्धसामान्येन धात्वर्थाद्यन्वयविवक्षायां पयसः कर्मत्वा भावात् तत्संबन्धिन्या अपि गो र्नकर्मत्वमित्येतदर्थं 'कर्मसंबन्धिन' इति विशेषणम्। अत एव गां पयसो दोग्धीति न प्रयोगः, अत स्तदा 'गोः पयसो दोग्धी' त्येव प्रयोगः।**

अविवक्षायामित्यस्य प्रयोजनमाह — **गोरपादानत्वेति गोः पयो दोग्धीति** गवापादानकं पयः कर्मकं दोहनं वाक्यार्थः। षष्ठ्यन्तप्रयोगस्याप्युपपत्तिं दर्शयति — **गोः पयोरूपेति** तुशब्देन धात्वर्थसंबन्धव्यवच्छेदः। **यत्कारकं तत्संबन्धिन इति विशेषणस्य फलमाह अत्रेति प्रस्तुतवाक्ये इत्यर्थः। धात्वर्थादीत्यत्रादिपदेना-** व्यातार्थभावनाया ग्रहणम्। तत्संबन्धिन्या अपि = पयस्संबन्धिन्या अपि। **कर्मसंबन्धिन इति विशेषणमिति** एतत्समानार्थकं पठ्यते वैयाकरणैः परिगणनावसरे "कर्मयुक् स्यादकथित" मिति। दुहियाचीत्यादि वार्तिकेऽपि "उपयोगनिमित्त" मित्युक्तम्। "उपयुज्यत इत्युपयोगः = पयः फलादि, तस्य निमित्तं गवादी" ति कैयटः। अत एव = कर्मकारकसंबन्धिन इति विशेषणेन प्रकृतार्थे गवादेः कर्मत्वाप्राप्तेरेव। उपसंहरति **अत इति** उक्तहेतोरित्यर्थः।

**नच त्यजनोपसर्जनं त्याजनं दुहेरर्थः। तथाच धात्वर्थतावच्छेदकत्यजनाश्रयत्वा न्मुख्यमेव गोः कर्मत्वमिति कथमत्र द्वितीयायाः संबन्धे लक्षणेतिवाच्यम्। तथा विवक्षायां मुख्यकर्मत्वेपि धात्वर्थसंबन्धसामान्यविवक्षाया मानुशासनिकद्वितीयायां संबन्धलक्षणोपपत्तेः। अत एव न "अकथितं चे" त्याद्यनुशासनवैयर्थ्यम्। अत एव वस्तुतोत्रापादानत्वाख्य एव गोः संबन्धः संबन्धत्वेन रूपेण द्वितीयार्थ इति ध्येयम्।**

अकथितसूत्रवैयर्थ्यमाशङ्कते — **नचेति त्यजनोपसर्जनमिति** पयोविभागानुकूलव्यापारविशेषणक-मित्यर्थः। त्याजनं = तदनुकूलो व्यापारः। अत्र च गौः पयस्त्यजति, गवा पयस्त्याजयतीति लोकप्रतीतिः प्रमाणम्। तथाच = दुहेर्व्यापारद्वयार्थकत्वे च। **धात्वर्थतावच्छेदकेति** द्रवद्रव्यविभागानुकूलव्यापारानु-कूलव्यापारो धात्वर्थः। प्रधानव्यापारश्चैत्रनिष्ठः, तदवच्छेदकं त्यजनं = विभागानुकूलव्यापारो गोनिष्ठः, **तद्रूपफलाश्रयत्वाद्गोः "कर्तुरीप्सिततम" मिति सूत्रेणैव कर्मत्वम्, विभागाश्रयत्वे न तु पयसस्तेन तत्वम्।** तथाच मुख्यकर्मत्वमेव गवि स्यादिति भावः। अत्र = उदाहरणे। संबन्धे = गोदोहनसंबन्धे। गवादीनां कर्मत्वेन विवक्षायां निरुक्तरीत्या सामान्यसूत्रेण कर्मत्वसिद्धावपि तेषां शेषत्वेन विवक्षायां सामान्यशास्त्रस्याप्राप्त्या शेषलक्षणषष्ठ्या एव प्राप्ततया तद्बाधनेन द्वितीयायाः सिद्ध्यर्थमिदं सूत्रमावश्यकमित्याह — **तथा विवक्षायामिति** फलाश्रयत्वेन विवक्षायामित्यर्थः। षष्ठी प्राप्तौ बीजमाह — **धात्वर्थसंबन्धेति** आनुशासनिकद्वितीयायाम् = षष्ठीबाधनेन तस्याम्, संबन्धलक्षणोपपत्तेः = संबन्धे लक्षणाया उपपत्तेः। तदेव द्रढयति **अत एवेति** निरुक्तार्थस्वीकारादेवेत्यर्थः। अकथितञ्चेत्यादीत्यादिपदं संपातायातम्। अत एव = शेषषष्ठ्यपवादतया द्वितीयाया विधानादेव, संबन्धः = दोहनेन संबन्धः। संबन्धत्वेन रूपेण = संबन्धसामान्यरूपेण।

**अन्येतु "अकथितं चे" तिसूत्रवैयर्थ्यापत्तिभियैव पाचयतीत्यादिवद् दुहेरपि त्यजनं धात्वर्थतावच्छेदकं न भवत्येवेति क्व मुख्यकर्मत्वप्रसक्ति रित्याहुः।**

**दुहादीनां व्यापारद्वयार्थकत्वे गवादीनामपि सामान्यसूत्रेणैव कर्मत्वसिद्धावपि त्यजनमात्रार्थकत्वे तेना-** सिद्धत्वात्तदर्थमकथितसूत्रमिति वादिनां मतमाह — **अन्येत्विति पाचयतीत्यादिवदिति** पचन णिच्प्रकृतेरर्थः। ओदनं पाचयति मैत्रेणेत्यत्रौदनस्य पच्यर्थमादायैव कर्मत्वं, नत्वनुकूलव्यापारमादाय मैत्रस्य, "गतिबुद्धी" त्यादि सूत्रानुरोधात्। अत एव णिजर्थोऽकर्मक एव, एवञ्च पाचयतीत्यत्र पचनं ण्यन्तधात्वर्थतावच्छेदकं न **भवत्येव**, तद्वदित्यर्थः। आदिपदेन नाययति **भारं** भृत्येन चैत्र इत्यादेर्ग्रहणम्। त्यजनं = विभागानुकूलव्यापारः, **न भवत्येवेति** दुहेस्त्यजनोपसर्जनपूर्वकं त्याजनं नार्थः, किन्तु त्यजनमात्रम्। अतो दुहि धात्वर्थतावच्छेदकं तन्न भवत्येवेति तदाश्रयत्वेन गवादीनां न सामान्यसूत्रेण कर्मत्वमिति भावः। तदाह — **क्व मुख्यकर्मत्वप्रसक्तिरिति** संबन्धरूपलक्ष्यार्थबोधकतया द्वितीया

**सिद्धयर्थमकथितसूत्रमावश्यकमेवेति भावः।** आहुरित्यनेनारुचि **स्सूचिता, तद्बीजं तु व्यापारद्वयार्थकत्वेपि** दुहादीनां निरुक्तरीत्याऽकथितसूत्रस्य चारितार्थ्यसंभव इति। अत एव "सूत्रवैयर्थ्यभियैवे" त्युपात्तम्।

**एवम् "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक" इत्यनुशासनात् कुरून् स्वपिति, मासमास्ते, गोदोह मास्ते क्रोश मास्ते इत्यादौ द्वितीया। अत्र द्वितीयार्थोऽवच्छेदकत्वम्। तच्च देशस्या ध्वनश्च। कालभावयोस्त्वाधेयत्वं कालिकं साक्षा द्भावनान्वयि।**

लाक्षणिक मनुशासनान्तरं व्याचष्टे – **एवमकर्मकधात्विति इत्यनुशासनादिति** इत्यर्थकानुशासनादित्यर्थः। अकथितसूत्रे इत्थं हि वार्तिकम् "कालभावाध्वगन्तव्याः कर्मसंज्ञा **ह्यकर्मणां देशश्च"** इति। **वार्तिके देशशब्देन ग्रामसमूहरूपकुरूपाः पञ्चालादयो गृह्यन्ते, तेने "अधिशीङ्स्थासा" मित्यादेर्न वैयर्थ्यम्।** तद्ध्वनयन्नुदाहरति – **कुरून् स्वपितीति** कालस्य कर्मत्वे उदाहरति **मासमास्ते इति** वार्तिके भावशब्दः क्रियावचनः। तमुदाहरति **गोदोहमिति** यावता कालेन गौर्दुह्यते, तावन्तं कालमास्ते इत्यर्थः। यद्यपि जन्यमात्रं कालोपाधिरिति पक्षे गोदोहादेः कालत्वादेव सिद्धम्, तथापि लोके मासादेरेव तथात्वेन प्रसिद्धेः कालात्पृथग्वार्तिके भावग्रहणमिति बोध्यम्। वार्तिके गन्तव्यमिति विशेषणादध्वशब्देन गन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरेव गृह्यते, तेन अध्वानमास्ते इत्यादयो न प्रयोगाः, तदाशयेनाह **क्रोशमास्ते इति** द्वितीयाया लाक्षणिकमर्थं दर्शयति **अत्रेति** एतदुदाहरणेष्वित्यर्थः। तच्च न सर्वत्र, किन्तु देशाध्वोदाहरणयोरेवेत्याह **तच्च देशस्याध्वनश्चेति** तच्च = अवच्छेदकत्वं च। तथाच कुरुनिष्ठावच्छेदकत्वनिरूपिका स्वापक्रिया, क्रोशनिष्ठावच्छेदकत्वनिरूपिका आसक्रियेति बोधः। कालभावयोस्तु = कालभावोदाहरणयोस्तु। **आधेयत्वमिति** तथाच निरूपितत्वसंबन्धेन मासविशिष्टं यत् कालिकसंबन्धावच्छिन्नमाधेयत्वं तद्वती भावना चैत्रवृत्तिः, निरूपितत्वसंबन्धेन गोदोहनविशिष्टं यत् कालिकसंबन्धावच्छिन्नमाधेयत्वं तद्वती भावना चैत्रवृत्तिरिति बोधः।

**एवम् "अधिशीङ्स्थासां कर्म" 1-4-46 "अभिनिविशश्च" 1-4-47 "उपान्वध्याङ्वसः" 1-4-48 इत्यनुशासनाद् अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरि रिति द्वितीया। अत्र द्वितीयाया अर्थ आधेयत्वम्। अभिनिविशते सन्मार्गमित्यत्र च। क्वचि न्न, पापेऽभिनिवेशः। उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरि रित्यत्र च। अभुक्त्यर्थस्य न, वने उपवसति। अत्र सर्वत्राधेयत्वस्य स्वाश्रयकर्तृकत्वसंबन्धेन भावनाया मन्वयः।**

लाक्षणिकं सूत्रत्रयं व्याचष्टे – **एवमधिशीङिति** अधिशीङिति सूत्रे "आधारोधिकरण" 1-4-45 मिति सूत्रादाधार इत्यनुवर्तते। अधीत्युपसर्गपूर्वकाणां शीङ्स्था आस् इत्येतेषां धातूनामाधारः कर्मसंज्ञकः स्यादिति तदर्थः। एवम् अभिनि इत्येतत्पूर्वकस्य विशधातोराधारः कर्म स्यादित्यर्थः अभिनिविशश्चेति सूत्रस्य। उप अनु अधि आङ् एतदुपसर्गपूर्वकस्य वस निवासे इति धातोराधारः कर्मेति तृतीयसूत्रार्थः। प्रत्येकानुशासनाभिप्रायेण "अनुशासनादि" त्येकवचनान्त प्रयोगः। प्रथमसूत्रोदाहरणानि अधिशेते इत्यादीनि। अत्र = एतत्सूत्रोदाहरणे। द्वितीयसूत्रोदाहरणमाह – **अभिनिविशते सन्मार्गमिति** अभिनिवेशः = आग्रहः। "नेर्विशः" 1-3-17 इत्यात्मनेपदम्। इत्यत्र च = अत्राप्याधेयत्वं द्वितीयार्थः। ननु पापेऽभिनिवेश इत्यत्राप्यनेन कर्मत्वे द्वितीयापत्तिरत आह – **क्वचिन्नेति** "परिक्रयणे **संप्रदान मन्यतरस्या" 1-4-44 मिति सूत्राद् मण्डकप्लुत्या तत्सूत्रे "अन्यतरस्यां" ग्रहणमनुवर्तते, तस्य च** व्यवस्थितविभाषात्वाश्रयणेन प्रकृतसूत्रस्याप्रवृत्त्या आधारसप्तम्या प्रकृतप्रयोगस्य साधुत्वं लभ्यते। अत्र च "एष्वर्थेष्वभिनिविष्टानाम्मिति समर्थसूत्रस्थभाष्यप्रयोगो मानं भवितुमर्हति। यद्वा प्रकृतसूत्रे अभिनिविश्

इत्यानुपूर्व्यास्सत्त्वेन यत्राविकृतायास्तस्याः श्रवणं, तत्रैव कर्मत्वमिति स्वीकारेण पापेऽभिनिवेश इत्यत्र गुणेनानुपूर्व्या विकृतत्वान्नानेन पापस्य कर्मत्वमिति न दोषः। तृतीयसूत्रोदाहरणान्य धिवसतीत्यादीनि। इत्यत्र च = इत्यत्र चाधेयत्वं द्वितीयार्थः। प्रकृतसूत्रे "वसेरश्यर्थस्य प्रतिषेध" इति भाष्ये उक्तम्। अशधातोर्भोजनमर्थः। अर्थशब्दो मशकार्थो धूम इत्यादाविव निवृत्तिवचनः। भोजननिवृत्त्यर्थकस्य वसनिवासे इति धातोः प्रयोगे न कर्मत्वमिति तदर्थः। तत्फलितमाह — **अभुक्त्यर्थस्य नेति** "उपोष्य रजनीमेकाम्", "हरिदिनमुपोषित" इत्यादौ तु "कालाध्वनोरत्यन्तसंयोगे" इत्यनेन द्वितीया बोध्या। अत्र सर्वत्र = एतत्सूत्रत्रयोदाहरणेषु। त्रिष्वपि आधारपदस्यानुवर्तनादाह — **आधेयत्वस्येति** निरूपितत्व-संबन्धेन प्रकृत्यर्थविशिष्टस्याधेयत्वस्येत्यर्थः। **स्वाश्रयेति** स्वम् = आधेयत्वम्, तदाश्रयो यः कर्ता प्रकृते हरिः, तत्कर्तृकत्वं भावनाया इति तेन संबन्धेन भावनान्वय इति भावः। अधिकरणत्वस्य भावनासंबन्धे कर्तृकर्मान्यतरद्वारकत्वनियमादेवमुक्तम्।

**एवं "क्रुधद्रुहोरूपसृष्टयोः कर्म" 1-4-38 इत्यनुशासनात् 'शत्रुमभिक्रुध्यति अभिद्रुह्यतीति द्वितीया। उपसृष्टयोः = उपसर्गयुक्तयोः। अत्रो द्वेश्यत्वं द्वितीयार्थः साक्षाद् संबधेन भावनान्वयी। अकर्मकत्वाच्च न मुख्यकर्मत्वम्।**

तादृशमनुशासनान्तरं व्याचष्टे — **एवं कृधद्रुहोरिति** "कृधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" 1-4-37 इत्यनेन संप्रदानत्वे प्राप्ते तदपवादतयानेन कर्मत्वं विधीयते। तत्सूत्रादत्र 'यं प्रति कोप' इत्यनुवर्तते। सोपसर्गयोः कृधद्रुहोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं स्यादिति प्रकृतसूत्रार्थः। "नोपसृष्टं न वारिस्र्शमि" त्यादावुपसृष्टपदस्यान्यार्थकत्वदर्शनात्तद्व्यावृत्त्यर्थमाह — **उपसृष्टयोः = उपसर्गयुक्तयोरिति** वैया-करणनिकाये एष शब्द एतदर्थकतया प्रसिद्ध इति भावः। **साक्षात्संबन्धेनेति** निरूपकत्वसंबन्धेनेत्यर्थः। **स्वनिरूपकक्रोधानुकूलत्व संबन्धेनेति** तु नार्थः, तस्य परम्परासंबन्धरूपत्वात्। ननु कर्तुरीप्सिततममिति सूत्रेण शत्रोर्मुख्यकर्मत्वमेवास्ता मत आह — **अकर्मकत्वाच्चेति** एतच्च चतुर्थीप्रकरणे कृधद्रुहेत्यादि सूत्रार्थविचारे मूल एव स्पष्टं भविष्यति। सूत्रे उपसृष्टयोरित्युक्त्या केवलयोः प्रयोगे क्रुधद्रुहेत्यादिना संप्रदानत्वाच्चतुर्थी — 'शत्रवे कृध्यति, द्रुह्यति।

**एवम् —**

**"उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।<br>द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।**

**"अभितः परितः समया निकषा हा प्रतियोगेपि" "अन्तरान्तरेण युक्ते" 2-3-4 इत्यनुशासनाद् 'उभयतः कृष्णं गोपाः सर्वतः कृष्णं गोपाः धिक् कृष्णाभक्तम्। उपर्युपरि लोकं हरिः, अध्यधि लोकम्, अधोधो लोकम्, अभितः कृष्णं, परितः कृष्णम्। ग्रामं समया निकषा, हा कृष्णाभक्तम्, बुभक्षितं न प्रति भाति किञ्चित्, अन्तरा त्वां मां हरिः, अन्तरेण हरिं न सुखमित्यादावुपपदयोगे तत्तल्लाक्षणिकार्थेषु द्वितीया।**

**तत्राद्ययोः प्रतियोगित्वं द्वितीयार्थः। सच साक्षात्संबन्धेन नाम्न्येवा न्वेति, उपपदविभक्तित्वा दिति बहवः।**

उपपदविभक्तिविधायकानि लाक्षणिकानुशासनानि व्याचष्टे **एवमुभसर्वतसोरिति** उभसर्वयोस्तसा-विति षष्ठीसमासः। वार्तिके उभयशब्दैकदेशोभशब्दो नुकृतः। तथाचोभयशब्द प्रकृतिकतस् प्रत्ययान्तयोगे सर्वशब्दप्रकृतिकतसुप्रत्ययान्तयोगे च द्वितीयाकार्येत्यर्थ वाक्यम्। उभयतः उभय

सप्तम्यन्तात् "आद्यादिभ्य उपसख्यान" मिति वार्तिकेनाद्यादित्वात्तसिः, सर्वत इति तसिलन्तम्। धिगित्यत्र सप्तम्या "अव्ययादाप्सुपः" 2-4-82 इति लुक्। तथाच धिक् = धिक् शब्दयोगे द्वितीया कार्येति द्वितीयं वाक्यम्। आम्रेडितान्तेषु = कृतद्विर्वञ्चनेषु, उपर्यादिषु त्रिषु = उपरि, अधि, अधः इत्येतेषु द्वितीया कार्येति तृतीयं वाक्यम्। उपरि, अधि अध इत्येतेषाम् "उपर्यध्यधसस्सामीप्ये" 8-1-7 इत्यनेन सामीप्येऽर्थे द्विर्भावः, "तस्य परमाम्रेडित" 8-1-2 मित्यनेन द्विरुक्तस्य पररूपं यत्तस्याम्रेडित संज्ञा। ततोन्यत्रापि = यथोक्तादन्यत्रापि द्वितीया दृश्यत इति चतुर्थं वाक्यं प्रयोगानुसारेन द्वितीयेत्यर्थकं व्यापकम्। "समयानिकषाहायोगेषूपसंख्यानमि" ति कात्यायनस्य वार्तिकम्। "अभितः परितस्समयानिकषाहाप्रतियोगेषूपसंख्यानमि" ति ऋष्यन्तरस्य वार्तिकम्। ततोन्यत्रापि दृश्यते, बुभुक्षितं न प्रतिभाति किञ्चिदि" ति भाष्यम्। उभसर्वतसोरित्यप्यन्यस्य ऋषे र्वचनम्। एतत्सर्वसंकलनलब्धमर्थं दर्शयति – **अभितः परितस्समया निकषा हा प्रतियोगेऽपीति** अन्तरा न्तरेणेत्युभे परस्परसाहचर्यादव्यये गृह्येते। अभितः = उभयतः, परितः = सर्वतः उपपदयोगे = उप = समीपे उच्चारितं पदम् = उपपदं, तद्योगे।

लाक्षणिकमर्थं दर्शयति – **तत्रेति** उदाहरणानां मध्ये इत्यर्थः। आद्ययोः = उभयतः कृष्णं गोपाः, सर्वतः कृष्णमित्यनयोः। सच = द्वितीयार्थश्च। नाम्न्येव = नामार्थ एव। उपपदविधित्वात् = उपपदनिमित्तकविधित्वात्। तथाच यन्निमित्तिका विभक्तिः, तदर्थ एव विभक्त्यर्थान्वयो न्याय्य **इत्याशयः**। तथाच कृष्णनिष्ठप्रतियोगित्वनिरूपकोभयपार्श्ववर्तिनो गोपा इति बोधः। बहवः = शाब्दिका नैयायिकाः प्राञ्चो मीमांसकाश्च।

**वस्तुतस्तु व्युत्पत्त्यन्तरकल्पनापत्ते स्तत्रापि भावनायामेवा क्षिप्तायां श्रुतायां वा न्वयः। स च स्वनिरूपकोभयपार्श्वस्थितगोपवृत्तित्वेनेति। उपपदार्थस्य संसर्गघटकत्वा दुपपदविभक्तित्वम्। एव मभितः कृष्णम्, परितः कृष्ण मित्यत्रापि द्रष्टव्यम्।**

तन्मतं दूषयन् स्वमतमाह – **वस्तुतस्त्विति व्युत्पत्यन्तरेति** उपपदविभक्त्यर्थप्रकारकशाब्दबोधं प्रति विशेष्यतया नामजन्योपस्थितेः कारणत्वकल्पानापत्तेरित्यर्थः। तत्रापि = उपपदविभक्तिस्थलेपि, आक्षिप्तायाम् = तिङन्तरहिते उभयतः कृष्णं गोपा इति वाक्ये आक्षिप्तायां सन्तीति भावनायाम्। श्रुतायाम् = उभयतः कृष्णं गोपाः सन्तीति तिङन्तसहितवाक्ये। तर्हि केन संबन्धेनान्वय इत्यत आह – **सचेति** द्वितीयार्थश्चेत्यर्थः। **स्वनिरूपकेति** स्वं = प्रतियोगित्वम्। तन्निरूपकौ यावुभयपार्श्वौ तत्र स्थिता ये गोपास्तद्वृत्तित्वं भावनाया इति भावः। तथाच स्वनिरूपकोभयपार्श्वस्थितगोपवृत्तित्व संबन्धेन कृष्णनिष्ठप्रतियोगित्वविशिष्टा भावनेति ततो बोधः। ननु उपपदविभक्त्यर्थस्यापि भावनाया मेवान्वये तस्या अपि क्रियान्वयित्वेन कारकविभक्तित्वापत्त्या "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" ति शाब्दिकव्यवहारासंगतिरत आह – **उपपदार्थस्येति उपपदविभक्तित्वमिति** शाब्दिकव्यवहारोप्येतन्मूलक एवेति भावः। एतच्च चतुर्थीप्रकरणे "नमः स्वस्तीत्यादि सूत्रार्थविचारावसरे मूल एव स्पष्टं भविष्यति। उक्तमर्थमन्यत्रातिदिशति **एवमिति** अभितः = उभयतः, परितः = सर्वतः। **द्रष्टव्यमिति** सन्तीत्यध्याहारेण द्वितीयार्थप्रतियोगित्वस्य निरुक्तसंबन्धेन भावनायामेवान्वय इति भावः।

**धिक् कृष्णाभक्तमित्यत्राधारत्वं तदर्थः। तस्य च स्वनिरूपक धिक्काराश्रयत्वसंसर्गेण तस्यामेवान्वयः। नचैवं 'धिङ् मूर्खे' ति प्रथमानापत्तिः। तत्र मुर्खस्य संबोधनद्वारा क्रियान्वयेन धिक्कारघटितसंसर्गेण क्रियान्वयविरहात्।**

धिक् शब्दयोगे विभक्त्यर्थमाह – **धिगिति स्वनिरूपकेति** स्वं = आधारत्वं, तन्निरूपको धिक्कारः = निन्दा, तदाश्रयत्वं भावनायामिति भावः। तथाच निरुक्तसंबन्धेन कृष्णाभक्तनिष्ठाधारत्ववती भावनेति =

बोधः। तस्यामेव = आक्षिप्तायां श्रुतायां वा भावनायामेव। एवम् = धिक् शब्दयोगे द्वितीयाया विधाने। **क्रियान्वय विरहादिति** सर्वत्रापि क्रियायामेवान्वयः, परन्तु संसर्गभेदा द्विभक्तिद्वयमिति भावः। एतेन "क्रियाध्याहारे प्रथमा, अन्यथा द्वितीये" ति शाब्दिकोक्त मयुक्तमिति ध्वन्यते।

**उपर्युपरि लोकमित्यादौ च निरूपितत्वं द्वितीयार्थः। लोकनिरूपितोपरितनत्वविशिष्ट-देशनिरूपितोपरितनत्वविशिष्ठतत्तद्देशस्थहरिकर्तृका क्रियेति शाब्दबोधः।**

**"उपर्युपरिबुद्धीनां चरन्ती श्वरबुद्धयः"**

**इत्यादा वुपरिबुद्धीनाम् = उत्तानबुद्धीना, मुपरि ईश्वरबुद्धय श्चरन्तीत्यर्थकरणेना म्रेडितान्तत्वा भावा न्न द्वितीया,**

**एवं ग्रामं समया ग्रामं निकषा इत्यत्रापि निरूपितत्वं द्वितीयार्थः। तस्य च समयादिपदवाच्यसामीप्यद्वारकोऽन्वयः। हा कृष्णाभक्त मित्यत्र विषयत्वं तदर्थः। हाशब्दार्थः खेदास्तित्वम्। तद्विषयकखेदोस्तीत्यर्थः।**

उपर्यादिषु त्रिष्वित्यस्योदाहरणे आह – **उपर्युपरि लोकमिति** – आदिपदेन अध्यधि लोकम्, अधोधो लोकमित्यनयोर्ग्रहणम्। **लोकेति** लोकनिरूपितं यदुपरितनत्वं तद्विशिष्टो यो देशः, तन्निरूपितोपरि तनत्वविशिष्टो यस्तत्तद्देशः, तत्स्थो यो हरिस्तत्कर्तृका क्रियेत्यर्थः। एवमध्यधिलोकमित्यत्रापि। अधोधो लोकमित्यत्र अधस्तनत्वं द्विरुक्तशब्दार्थः। बोधः प्राग्वत्। अतिप्रसङ्गं निराकरोति **उपर्युपरि बुद्धीनामिति** अत्रापि द्वितीयया भाव्यमित्याक्षेपः। इत्यादौ = इत्यादौ तु। नात्रोपरि शब्दस्य द्विर्भावे रूपम्। किन्तु उपरीति भिन्नं पदम्। उपरिबुद्धीनामित्यनन्तरं योज्यम्। उपरिबुद्धीनामिति बहुव्रीहिः। तदाह – **उपरि बुद्धीनाम् = उत्तानबुद्धीनामुपरीति** इत्यर्थकरणेन = इत्यर्थस्वीकारेण। आम्रेडितत्वाभावात् = द्विर्भावाभावेन "तस्य परमाम्रेडित" मित्याम्रेडितसंज्ञाया अभावेनाम्रेडितान्तोपरिशब्दाभावात् न द्वितीया। किञ्चोपरि शब्दस्य द्विर्भावेपि नात्र द्वितीया। वार्तिके "उपर्यध्यधसस्सामीप्ये" 8-1-7 इत्यनेन विहितस्य प्रातिपदोक्तस्य द्विर्वचनस्य ग्रहणात्। प्रकृते च "नित्यवीप्सयो 8-1-4 रित्यनेन वीप्सायां द्विर्वचनम्। अत एव "सर्वेषां मद्यमम्लान मुपर्युपरि वर्तते" इत्यादौ न द्वितीया। उपर्युपरि बुद्धीनामित्यस्यातिशयोऽर्थः, न सामीप्यमित्यपि बोध्यम्।

अभितः परित इत्यनयोर्योगे विभक्त्यर्थस्य निरूपितत्वात् समया निकषा योगे तं दर्शयति – **एवं ग्रामं समयेति** अन्वयः = स्वाश्रयसामीप्याश्रय निरूपितत्वसंबन्धेना सुधात्वर्थेन्वयः। तदर्थः = द्वितीयार्थः। **तद्विषयकखेद इति** तस्य खिद्यत इति यावत्।

**बुभुक्षित मित्यत्रचाधेयत्वं द्वितीयार्थः। विषयत्वं चाख्यातार्थः। स्वरूपसंबन्धः प्रथमार्थः। तथाच किञ्चिन्निष्टप्रतिभाविषयत्वं बुभुक्षितवृत्त्यभावप्रतियोगिप्रतिभानिष्ट विषयिता-निरूपितम्, किञ्चिन्निष्टाभावप्रतियोगि वा प्रतिभाविषयत्वं बुभुक्षितवृत्तिप्रतिभानिष्ठ-विषयितानिरूपितमिति शाब्दबोधः।**

**बुभुक्षितमिति** भुज धातोस्सन्नन्तात् "मतिबुद्धिपूजार्थेभ्यश्चे 3-1-188 त्यनेन कर्तरि क्तः। सूत्रे मति शब्द इच्छापरः, बुद्धेः पृथगुपादानात्। यद्वा बुभुक्षा अस्य सञ्जातेत्यर्थे तारकादित्वादितच्प्रत्यये बुभुक्षित शब्दो निष्पन्नः। तेन बुभुक्षितस्य देवदत्तादे र्न कोपि विषयः स्फुरतीति वाक्यार्थः। "न देवदत्तं प्रतिभाति किञ्चित्" इत्युदाहरणान्तरं भाष्ये दत्तम्। पदवाक्यरत्नाकरे "माणवकं प्रतिभान्ति वेदा" इत्युदाहृतम्।

शब्दशक्ति प्रकाशिकायां ''प्राज्ञं प्रतिभोय्मर्थः'' प्राज्ञस्य या प्रतिभा = झटिति स्फूर्तिस्तद्विषयतावानयमर्थ इत्येवं तत्र बोध'' इत्युक्तम्। ''बुभुक्षितसंबन्धी यत्किञ्चिद्विषय प्रतिभाभाव'' इति मञ्जूषायां नागेशः। ''बुभुक्षितस्य न भाती'' ति शब्दरत्नम्। एवञ्च बुभुक्षितशब्दो बुभुक्षावद्देवदत्तादिबोधकः, नतु कर्मक्तान्ततया बुभुषाविषयान्नादिपर इति स्पष्टमेव। एवञ्च ''यत्किञ्चित्प्रतिभाति तन्न बुभुक्षितम्'' यद्बुभुक्षितं प्रतिभाति तन्न किञ्चि'' दिति विषयग्रन्थिभेदिनीटिप्पणी नातीवादर्तव्या। किञ्च बुभुक्षितशब्दस्य तदुक्तरीत्यान्नादिविषयपरत्वे तस्य प्रथमान्तत्वावश्यकतया प्रकृतवार्तिकस्यानुदाहरणत्वापत्तिः। पदार्थमुक्त्वा बोधस्वरूपं दर्शयति। **तथाचेति किञ्चिन्निष्ठेति** किञ्चिद्वस्तुनिष्ठं यत्प्रतिभाविषयत्वं तद् विषयितानिरूपितमित्यन्वयः। प्रतिभा = झटिति स्फूर्तिः ज्ञानविशेषः। **बुभुक्षितेति** बुभुक्षितो यश्चैत्रादिस्तद्वृत्तिर्योऽभावः = प्रतिभाभावः, तत्प्रतियोगिनी प्रतिभा, तन्निष्ठा या विषयिता, तन्निरूपितमित्यर्थः। अत्र पक्षे चैत्रादौ प्रतिभाभावो बोध्यते। पक्षान्तरमाह – **किञ्चिन्निष्ठेति** तन्निष्ठो योऽभावः प्रतिभाविषयत्वाभावस्तत्प्रतियोगीत्यर्थः। बुभुक्षितवृत्ति प्रतिभा निरूपितं प्रतिभा विषयत्वं किञ्चिन्निष्ठाभावप्रतियोगीति योजना। अत्र पक्षे चैत्रीयप्रतिभायाः किञ्चिद्वस्तुविषयत्वाभावो बोध्यते।

**अन्तराशब्दस्य मध्यवाचित्वात् त्वां मा मित्यत्र संबन्धित्वं द्वितीयार्थः। तव मम च मध्ये इत्यर्थः। अन्तरेण हरि मित्यत्र प्रतियोगित्वं द्वितीयार्थः। तत्परं योग्यतत्तत्संबन्धावच्छिन्ना मिति ध्येयम्।**

**मध्ये इति** त्वन्मत्संबन्धी यो मध्यस्तद्वृत्तिर्हरिरिति बोधः। तत् परम् = प्रतियोगित्वं तु। **योग्येति** प्रकृते भक्तिः प्रतियोगितावच्छेदकस्संबन्धः, स्वविषयक भक्तिसंबन्धेन हरेः प्रतियोगित्वेन्वयः। तथाच हरिविषयक भक्तिसंबन्धावच्छिन्न प्रतियोगिताकाभाववद्वृत्तिः सुखाभाव इति बोधः। हरि शब्दस्य तद्भक्तिपरत्वे तु समवायस्तदवच्छेदकस्संबन्धः। तथाच हरिभक्तिनिष्ठ समवायसंबन्धावच्छिन्नप्रतियोगिताकाभाववद्वृत्तिः सुखाभाव इति बोधः।

**एवं कर्मप्रवचनीयसंज्ञकशब्दप्रयोगेपि द्वितीया तत्तदर्थेषु लाक्षणिकी। तथाहि – कर्मप्रवचनीया स्तावत् अनु उप प्रति परि अभि अधि सु अति अपि इत्यादयः। तत्र हेतुत्वसमानाधिकरणं लक्षण मनोरथः। यथा – जपमनु प्रावर्षत्। जपरूपहेतूपलक्षितं वर्षणमित्यर्थः। अत्र द्वितीयार्थ आधेयत्वम्, तस्य हेतुत्वे लक्षणत्वे चान्वयः। तयोश्च निरूपकतासंसर्गेण वर्षणे तस्य च कृतावित्येवं संसर्गः।**

**कर्मप्रवचनीयेति** कर्म = क्रियां प्रोक्तवन्तः = कर्मप्रवचनीयाः, प्रपूर्वकाद्वच धातोः ''कृत्यल्युटो बहुल''. 3-4-113 मित्यत्र बहुलग्रहणात् कर्तरि भूते अनीयर् कृत्यप्रत्ययः, एवञ्च ये क्रियासंबन्धे तद्गतं विशेषं द्योतयन्ति। क्रियासंबन्धाभावे क्रियाया नामार्थस्य च विद्यमानं संबन्धं द्योतयन्ति, ते कर्मप्रवचनीय संज्ञका इति पर्यवस्यति। यथा – अनुभूयते। अत्रानु धात्वर्थगतं विशेषं द्योतयति अत एव स उपसर्गसंज्ञको जातः। जपमनुप्रावर्षदित्यत्रा नुः वर्षणगतं विशेषं न द्योतयति, किन्तु वर्षणस्य क्रियाया जपस्य च विद्यमानं लक्ष्यलक्षणभावरूपं संबन्धं द्योतयति। प्रशब्दस्तु वर्षणगतं प्रकर्षं द्योतयतीत्युपसर्ग एव। एवञ्च संप्रति क्रियां न द्योतयन्ति, किन्तु क्रिया निरूपितं संबन्धविशेषं द्योतयन्ति ये ते कर्मप्रवचनीया इति लभ्यते। कर्मप्रवचनीय इति महासंज्ञाकरणान्निरुक्तार्थलाभः। इयञ्च संज्ञा गत्युपसर्गसंज्ञयोरपवादः। तेन निघातः, षत्वञ्च न भवति। द्वितीया = ''कर्मप्रवचनीययुक्ते द्वितीया'' 2-3-8 इति सूत्रेण। के ते कर्मप्रवचनीयसंज्ञकाश्शब्दा इत्यतस्तान् निर्दिशति – **कर्मप्रवचनीयास्तावदिति इत्यादय इति** आदि

शब्देन अप, आङ् अनयोर्ग्रहणम्। लाक्षणिकार्थान् निर्दिशति – **तत्रेति** तेषां मध्ये इत्यर्थः। "अनुर्लक्षणे" 1-4-84 इति सूत्रस्य लक्षणे द्योत्येऽनुः कर्मप्रवचनीयसंज्ञक इत्यर्थकस्य विषयमाह – **हेतल्वेति** एतत्सूत्र विहितकर्मप्रवचनीयसंज्ञानिमित्तकद्वितीयाया हेतुतृतीयापवादत्वा देतदर्थलाभः। **लक्षणमिति** ज्ञानजनक-ज्ञानविषयत्वं लक्षणत्वम्। आधेयत्वं = वृत्तिः। **संसर्ग इति** तथाच जपवृत्तित्ववद्धेतुत्वलक्षणत्व-निरूपकवृष्टयनुकूला कृतिर्देवनिष्ठेति बोधः। कदा वृष्ट इति प्रश्ने इदमुत्तरम्।

**एवं तृतीयार्थश्च अनोरर्थः। नदी मन्ववसिता सेना, अत्र साहित्यरूप स्तृतीयार्थ अनोरर्थः। स्थितिर्धात्वर्थः। निरूपितत्वं द्वितीयार्थः। नद्या सह संबध्य स्थितेत्यर्थः।**

"तृतीयार्थे" 1-4-85 इति सूत्रस्य विषयमाह **एवं तृतीयार्थश्चेति** सूत्रे तृतीयाशब्द स्तृतीयाविभक्ति प्रयोजकशब्दपरः सच सह शब्दः तद्योगे "सह युक्तेऽप्रधाने 2-3-19 त्यनेन तृतीया विधानात्। तेन तृतीयार्थे = सहशब्दार्थे द्योत्येऽनुःकर्मप्रवचनीयसंज्ञ स्स्यादिति तत्सूत्रार्थः। सहार्थश्च साहित्यम्, इत्याशयेनाह – **साहित्यरूपस्तृतीयार्थ इति** धात्वर्थः = अनु अवपूर्वकस्य षिञ् बन्धने इति धातोरर्थः। **स्थितेति** उदाहरणे क्तः कर्तरीति भावः।

**हीनत्वं चानो रर्थः। अनु हरिं सुराः। हरे हीना इत्यर्थः। अत्र प्रतियोगित्वं द्वितीयार्थः। हीनत्व मधिकत्वं च उपार्थः। उपहरिं सुराः। बोधः प्राग्वत्। अधिकत्वे सप्तमीवक्ष्यते।**

"हीने" 1-4-86 इति सूत्रस्य विषयमाह – **हीनत्वं चानोरर्थ इति** हीनत्वे द्योत्येऽनुरित्यव्ययं कर्मप्रवचनीयसंज्ञमिति तदर्थः। हीनत्वम् = अपकृष्टत्वम्। अत्र = उदाहरणे। **प्रतियोगित्वमिति** हरिप्रतियोगिकापकर्षवन्त इति बोधः। "उपोधिके च" 1-4-87 इत्यस्य सूत्रस्य विषयमाह – **हीनत्वमधिकत्वञ्चेति** सूत्रे चशब्देन हीन इत्यस्यानुवृत्त्या हीनार्थकत्वमपि उपेत्यस्य। उपार्थः = उपेत्यव्ययस्यार्थः। **उपहरिमिति** हरिप्रतियोगिकापकर्षवन्त इत्यर्थः। उत्कृष्टादेव द्वितीया **नत्वपकृष्टात्, शब्दशक्तिस्वभावात्। वक्ष्यते = सप्तमी प्रकरणे, उपपरार्थे हरेर्गुणाः, यस्मादधिकमिति** सप्तमी

**प्रतिपर्यनूनां च सामान्यतो लक्षणमर्थः। वृक्षं प्रति परि अनु वा विद्योतते चन्द्रः। अत्र द्योतकत्वं प्रत्यादेरर्थः आधेयत्वं द्वितीयार्थः। स्वाश्रयद्योतकत्वनिरूपकद्योतनाश्रयत्वं चन्द्रवृतीति शाब्दबोधः। पूर्वं हेतुत्वसमानाधिकरण लक्षण मनोरर्थ इति सामान्यतोलक्षणार्थकानोः पृथग्ग्रहणम्।**

"लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" 1-4-90 इति सूत्रस्य विषयमाह – **प्रतिपर्यनूनां चेति** लक्षणे इत्थंभूताख्याने, भागे वीप्सायाञ्च विषये प्रति परि अनु इत्यव्ययानि कर्मप्रवचनीयसंज्ञकानि स्युरिति सूत्रार्थः। एषां त्रयाणामपि लक्षणाद्यर्थचतुष्टयेपि संज्ञा बोध्या। तदाह – **सामान्यत इति** अविशेषेणेत्यर्थः। लक्षणे उदाहरति **वृक्षं प्रतीति** द्योतकत्वं = प्रकाशकत्वम्। **स्वाश्रयेति** स्वं = वृक्षः, तदाश्रयो यद्द्योतकत्वं, **तन्निरूपकं यद्द्योतनं तदाश्रयत्वमित्यर्थः। ननु लक्ष्णे नेन सूत्रेणैवा नोः कर्मप्रवचनीयत्वस्य सिद्धत्वात्** पृथक् "अनुर्लक्षणे" ति सूत्रं व्यर्थमत आह – **पूर्वमिति** पूर्वम् = पूर्वस्मिन् सूत्रे, अनोः = अनु इत्यव्ययस्य, **इति** = इति हेतोः। **सामान्यतो लक्षणेति** हेतुत्वासामानाधिकरणं यल्लक्षणं तन्मात्रेत्यर्थः, तदर्थकस्यानोरपेक्षयेत्यर्थः। पृथग्ग्रहणम् = अनुर्लक्षणे इति पृथग्ग्रहणम्। अयमर्थः – "लक्षणेत्थं भूते" ति **सूत्रेण लक्षणे नुशब्दस्य संज्ञाविहिता, तद्योगे द्वितीया यद्यपि सिद्धा, तथापि "हेताविति" सूत्रेण** परत्वात्तृतीया प्राप्ता, तद्बाधनेन हेतुत्वसमानाधिकरणे लक्षणे द्वितीयासिद्धये संज्ञाविधानाय "अनुर्लक्षणे" ति

पृथकसूत्र मावश्यकम्। एवञ्च "लक्षणेत्थं भूते" ति सूत्रे लक्षणशब्देन लक्षणमात्रस्य हणम्। "अनुर्लक्षणे" ति सूत्रे हेतुत्वसमानाधिकरणस्य लक्षणस्य ग्रहणमिति न पृथक्सूत्रस्यवैयर्थ्यमि-ति।

**एव मित्थंभूताख्यानेपि एतेत्रयः। भक्तोऽयं विष्णुं प्रति परि अनु वा। इत्थंभूत इत्यर्थः। विषयित्वं प्रत्याद्यर्थः। निरूपितत्वं द्वितीयार्थः। भागेप्येते 'लक्ष्मीर्हरिं' प्रति परि अनु वा। हरे र्भाग इत्यर्थः। भागः = स्वत्वं प्रत्याद्यर्थः। निरूपितत्वं द्वितीयार्थः। वीप्सायां चैते। वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति।**

तेषामेव इत्थंभूताख्याने उदाहरणान्याह – **एवमित्थं भूताख्यानेपीति** कञ्चित्प्रकारं प्राप्तस्याख्याने इत्यर्थः। एतच्च तृतीया प्रकरणे "इत्थंभूतलक्षण" इत्यत्र विविच्य दर्शयिष्यते। **भक्तोयं विष्णुमिति** पूर्व स्वेच्छया वर्तमानो देवदत्तादिः पूर्वजन्मपुण्यकर्मवशेन विष्णुं सेवते, स एवंभूत इत्युच्यते सन्निहितेन जनेन। विषयित्वं = **भक्तनिष्ठम्। निरूपितत्वमिति** तथाच हरिनिरूपितविषयितावद्भक्तिमानिति ततो बोधः। भागे उदाहरति **भागेप्येते इति** एते = प्रत्यादयः। भागशब्दार्थमाह **भागः = स्वत्वमिति निरूपितत्वमिति** तथाच हरिनिरूपितस्वत्ववती लक्ष्मीरिति वाक्यार्थः। वीप्सायामुदाहरति – **वीप्सायां चैते इति** व्याप्तुमिच्छा = वीप्सा। वृक्षं वृक्षं प्रति = प्रतिवृक्षम्।

**अत्र मुख्यकर्मत्वं यदा जलादे स्तदा जलं सिञ्चतीति प्रयोगः। यदातु वृक्षनिरूपितसंयोगा-श्रयत्वमविवक्षितं जलनिरूपितसंयोगाश्रयत्वमेव वृक्षे विवक्षितं तदा वृक्षं जलेन सिञ्चतीति प्रयोगः। तदा तस्य मुख्यमेव कर्मत्वम्। यदातु जले मुख्यकर्मत्वं विवक्षित्वा प्रत्यादेश्च लक्षणार्थत्वमङ्गीक्रियते तदा वृक्षं प्रति जलं सिञ्चतीत्यपि प्रयोगः, नचैवं वीप्साऽभावेपि प्रत्यादेः कर्मप्रवचनीयसंज्ञात्वे 'वीप्सासु प्रतिपर्यनवः' इत्यनुशासनवैयर्थ्यम्। प्रत्यादे र्लक्षणार्थ-कत्वाभावेपि आभिमुख्यादिरूपार्थान्तरकत्वे वीप्सायां सत्यामेव कर्मप्रवचनीयसंज्ञेत्येवंपरत्वात्। अत एव वीप्साया न प्रत्याद्यर्थत्वं, द्विर्वचनेनैव लाभात्। अतश्च तत्रा भिमुख्यादिकं प्रत्याद्यर्थः। निरूपितत्वं द्वितीयार्थः।**

एवं सूत्रं व्याख्याय वीप्सा विषये विशेषं वक्तुमुपक्रमते – **अत्र मुख्यकर्मत्वमिति** द्रवद्रव्यक्रियानुकूलो व्यापार **स्सिञ्चतेरर्थः, तत्र वृक्षनिरूपितसंयोगाश्रयत्वविवक्षायां तादृशसंयोगाश्रयत्वेन "कर्तुरीप्सिततम"** मिति सूत्रेणैव कर्मत्वमिति भावः। **जलं सिञ्चतीति** तदावृक्षस्य संप्रदानत्वे वृक्षाय जलमासिञ्चतीति प्रयोगः। प्रयोगान्तरोपपत्तये आह – **यदात्विति वृक्षंजलेनेति** सेचनेजलस्य करणत्वात्तृतीयेति भावः। तस्य = वृक्षस्य। प्रयोगान्तरोपपत्तये आह – **यदात्विति मुख्यकर्मत्वमिति** वृक्षन्निरूपितसंयोगाश्रयत्व विवक्षायां जलस्य मुख्यं कर्मत्वमिति भावः। **वृक्षं प्रति जलं सिञ्चतीति** वृक्षमित्यत्र द्वितीया लक्ष्यार्थ बोधिका, जलमित्यत्र द्वितीया शक्यार्थबोधिकेति विशेषः। **नचेति** अस्य अनुशासनवैयर्थ्यमित्यत्रान्वयः। एवं = निरुक्तरीत्या प्रयोगोपपादने। **वीप्साभावेपीति** वीप्साया यदुदाहरणं, तत्रापि लक्षणार्थकत्व-स्वीकारेण प्रयोगोपपादने वीप्साभावेपि कार्यनिर्वाहात्सूत्रेण वीप्सायां संज्ञाविधानमनर्थकं स्यादित्याशयः। संज्ञात्वे = लक्षणार्थकतया तत्त्वे। अनुशासनवैयर्थ्यम् = तदुदाहरणेपि प्रकारान्तरेण संज्ञायास्संपादि-तत्वा त्संज्ञाविधानस्य वैयर्थ्यम्। समाधत्ते – **प्रत्यादेरिति इत्येवं परत्वादिति** इत्येतदर्थकत्वादित्यर्थः। अत एव = प्रत्यादेराभिमुख्याद्यर्थान्तरकत्वादेव। **लाभादिति** नच प्रत्यादेर्वीप्सार्थकत्वाभावे तत्रानेन संज्ञानापत्तिरिति वाच्यम्। अन्यद्योत्याया अपि वीप्सायाः संज्ञां प्रति निमित्तत्वे बाधकाभावात्। अतश्च = आभिमुख्यार्थकत्वे च प्रत्यादेः।

**एवं भागभिन्नेषु लक्षणादिषु अभिरपि कर्मप्रवचनीय संज्ञः स्यात्। हरि मभिवर्तन्ते भक्ताः, हरि मभि, देवंदेव मभिसिञ्चति। एवम् अधि अति सु अपि इत्यादीनामपि उदाहरणानि बोध्यानि, एवं कालाध्वनो रत्यन्तसंयोगेपि द्वितीया, मासमधीते क्रोशमधीते। अत्र निरन्तरसंनिकर्षो द्वितीयार्थः। सच साक्षात्संबन्धेनैव भावनान्वयी। तदेवं तत्र तत्र लाक्षणिकानुशासनान्यन्यान्यपि द्रष्टव्यानि। मुख्यकर्मत्व संभवे तु तदेव द्वितीयार्थः।**

''अभिरभागे'' 1-4-91 इति सूत्रस्य विषयमाह **भागभिन्नेष्विति** स्यादित्यन्तेन सूत्रार्थ एव निर्दिष्टः। लक्षणे उदाहरति – **हरिमभिवर्तन्ते भक्ता इति**। इत्थं भूताख्याने उदाहरणं हरिमभीति। वीप्सायां देवं देवमिति। सूत्रे अभागे इति प्रतिषेधात् ''यदत्र ममा भिष्यात्तद् दीयता'' मित्यादौ कर्मप्रवचनीयत्वा-भावान्न द्वितीया। उपसर्गसंज्ञायास्सत्वा दभिष्यादित्यत्र ''उपसर्गप्रादुर्भ्या'' मित्यादिना 8-3-87 षत्वम्। ग्रन्थगौरवभया द्विविच्य प्रदर्शनस्याधिकफलाभावाच्चाह – **एवमधीति** ''अधिरीश्वरे'' 1-4-97 इति स्वस्वामिभावे अधेः कर्मप्रवचनीयत्वम्। अधि भुवि रामः, ''यस्मादधिकम्'' 2-3-9 इति सप्तमी। ''अतिरतिक्रमणे च'' 1-4-95 त्यनेन अतिक्रमणे पूजायां चाते स्तत्संज्ञायाम् – अतिदेवान् कृष्ण इत्यादौ द्वितीया। ''सुः पजाया'' 1-4-94 मित्यनेन सु इत्यस्य पूजायां कर्मप्रवचनीयत्वम्। तेनोपसर्गसंज्ञाया बाधितत्वात् ''सु स्तुतमि'' त्यादावनुपसर्गत्वान्न षत्वम्। पूजायामित्युक्ते स्तदभावे सुषिक्तं किं तवात्रे त्यादौ क्षेपे एतदप्रवृत्त्या उपसर्गत्वा त्षत्वम्। ''अपिः पदार्थ संभावनान्ववसर्गगर्हासमुच्चयेषु'' 1-4-56 इत्यनेन अपि शब्दस्य कर्मप्रवचनीयसंज्ञा। पदार्थद्योतने सर्पिषोऽपि स्यात्। अत्र न षत्वम्। संभावनम् = शक्त्युंत्कर्ष माविष्कर्तु मत्युक्तिः, अपि स्तुयाद्विष्णुम्। अन्ववसर्गः = कामचारानुज्ञा, अपि स्तुहि, गर्हा = निन्दा, धिग्देवदत्तम् अपि स्तुयाद्वृषलम्। समुच्चये अपि सिञ्च अपि स्तुहि। अत्र ''अधि, परि, अति'' इति मूले पाठो दृश्यते, परंतु परेरुदाहरणस्य मूल एव दर्शितत्वादस्माभिः परिशब्दोत्र त्यक्त इति बोध्यम्। ''कालाध्वनोरत्यन्तसंयोगे'' 2-3-5 इत्यस्य विषयमाह – **एवं कालाध्वनोरिति** द्वितीयेत्यन्तेन सूत्रार्थ एव दर्शितः। अध्वन उदाहरणं – क्रोशमधीते इति अत्र क्रोशमास्तेति पाठो दृश्यते, परंतु तत्र ''अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक'' इत्यनेन सिद्धत्वा त्सपाठ उपेक्षितः। अत एव ग्रन्थकृतापि ''अकर्मकधातुभि'' रित्यत्र ''क्रोशमास्ते'' इत्युदाहृतमिति बोध्यम्। **निरन्तरसंबन्ध इति** मासशब्द स्त्रिंशदि्दनसमूहपरः, तत्रै कदिनेप्यध्ययनाभावे नायं प्रयोगः। दिनावान्तर दण्डादावध्ययनाभावेपि स प्रयोगो निराबाधः। एकदिनेऽध्ययनेपि नाऽयं प्रयोगः। प्रकरणार्थमपसंहरति – **तदेवमिति** अन्यान्यपि = ''दिवः कर्म च'' 1-4-43 ''मन्यकर्मण्यनादरे विभाषाऽप्राणिषु'' 2-3-17 ''गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि'' 2-3-12 इत्यादीनि। एतान्यपि तत्तत्प्रकरणे व्याख्यास्यन्ते। मुख्यकर्मत्वसंभवे तु = वृक्षं जलेन सिञ्चति, वृक्षं प्रति जलं सिञ्चतीत्यादौ। तदेव = मुख्यकर्मत्वमेव।

**यत्रतु मुख्यस्य अमुख्यस्य वा विशेषणम्, शुक्लमोदनं पचति शुक्लां गां दोग्धिपय इत्यादौ, तत्र पदद्वयेन शुक्लगुण विशिष्टौदनकर्मत्वस्यैव लक्षणात् तस्य च भावनायामन्वयेपि ''गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ती'' त्यनुशासनादुपस्थितत्वा द्विशेषण-विभक्तिः शुक्लपदोत्तरद्वितीया साधुत्वार्था, नत्वरुणैकहायन्यादिव द्विशेषणस्य पृथगेव भावनान्वयः, तस्या एककर्मत्वभङ्गापत्तेः। नापि शुक्लपदार्थस्या भेदेनौ दनान्वयः, नामार्थस्य स्वोत्तरविभक्त्यर्थेन क्लृप्तान्वयस्य नामार्थान्तरेणान्वये व्युत्पत्त्यन्तरकल्पनापत्तेः। अत एव भावनाया एककर्मत्वकत्व भङ्गभिया द्विकर्मक धातुस्थलेपि एकमेव कर्मत्वेन भावनान्वयि,**

**अपरं तु द्वितीयालक्षितकरणत्वादिनैव भावनान्वयि। पाश्चात्यधात्वर्थान्वयस्तु कर्मत्वेनैवेति न धातो द्विकर्मकत्वबाध इति व्यक्तं कौस्तुभे। तत्सिद्धं सर्वत्र द्वितीयार्थस्य भावनान्वय-इति।**

ननु धात्वर्थनावच्छेदकफलशालित्वादोदनादेः कर्मत्वसिद्धावपि तद्विशेषणस्य शुक्लादेस्तत्त्वा-भावात्कर्मत्वानापत्तिः, नचात्र गुणविशिष्टस्यौदनादेरे वेप्सिततमत्वाद्विशिष्टस्य कर्मत्वेन विशेषणस्यापि तत्त्व मिद्धिरिति वाच्यम्। एवं हि भावनाया एककर्मकत्वसिद्धान्तभङ्गापत्तेः, नचेष्टापत्ति उद्देश्यभेदेन वाक्यभेदापत्तेः। एतच्च धात्वर्थस्य भावनायां प्रकारत्व निरूपणावसरे मूले प्रतिपादितमेवेत्यत आह – **यत्रत्विति** मुख्यस्य = "कर्तुरीप्सिततमं कर्म" "तथायुक्तं चानीप्सित" मिति सूत्रद्वयविहितस्य। अमुख्यस्य = "अकथितञ्चे" त्यादि सूत्रविहितस्य कर्मणः। प्रथमस्यो दाहरणं – शुक्लमोदनमिति। द्वितीयस्योदाहरणं – शुक्लां गामिति, तत्र = तादृशे स्थले। **पदद्वयेनेति** शुक्लं पच, ओदनं पचेति पदार्थद्वयस्य न भावनायां पृथगन्वयः, येन द्विकर्मकता भावनाया आपद्येत, किन्तु पदद्वये शुक्लगुणविशिष्टौदने लक्षणा स्वीकारेण विशिष्टस्यैव भावनान्वय स्स्वीक्रियते। अतो न दोष इति भावः। तदाह – **लक्षणादिति** लक्षणया प्रतिपादनादित्यर्थः। यद्वा विशेष्यवाचकपदस्यैव विशिष्टे लक्षणा विशेषणवाचकपदं तात्पर्यग्राहकमित्यपि बोध्यम्। एवञ्च विशेषणस्य कर्मत्वाभावान्न दोषः। तर्हि द्वितीया कथमत आह – **गुणवचनानामिति** विशेषणानामित्यर्थः। आश्रयतः = विशेष्यात्। लिङ्गवचनानि = लिङ्गानि, वचनानि = संख्याश्च। **अनुशासनादिति** "विशेषणानां चाजाते" 1-2-52 रिति सूत्रार्थसिद्धमिदं "सरूपाणामेकशेष एकविभक्ता" 1-2-64 विति सूत्रस्थं, शब्दानामिति पदराहित्येन "विशेषणाना चाजाते" 1-2-52 रिति सूत्रस्थं च भाष्यवचनम्। विशेषणानां = "गुणवचनानामित्यर्थ" इति कैयटः। लिङ्गसख्ययोरतिदेशे तद्बोधकविभक्तिरप्यतिदिष्टैव, अन्यथा तद्बोधानापत्तिरेव, तथाच विशेषणाद्विभक्ति रेतदनुशासनेन लभ्यते। ननु द्वितीयाया एव प्रवृत्तौ किं विनिगमकमत आह – **उपस्थितत्वादिति** विशेष्यवाचका त्कर्मत्वार्थकाया द्वितीयाया अनुशिष्टत्वे विशेषणस्य तदेकयोग-क्षेमत्वादुपस्थितविभक्तित्यागे मानाभावात्ततोऽपि सैवविभक्तिः प्रवर्तते। अन्यथा विभिन्नविभक्ति-कत्वात्पाश्चात्यबोधे विशेषणविशेष्ययो रभेदबोधानापत्तिरिति भावः। अर्थान्तराभावादाह – **साधुत्व-मात्रार्थेति** "न केवलाप्रकृतिः प्रयोक्तव्येति" नियमस्यावश्यपालनीयतया विरुद्धविभक्त्या तत्परिपालना-पेक्षया नुवादकविभक्त्या तत्पालनस्योचितत्वादिति भावः। शाब्दिकैरप्येषा रीति राश्रिता "अनभिहिते" इति सूत्रे "तिङ्कृत्तद्धितसमासै" रिति परिगणनप्रत्याख्याने कटं भीष्मं कुरु इत्यादौ "विशिष्टं कर्मे" ति पक्षे द्वितीयासाधनावसरे। परन्तु तैस्तत्र लक्षणा नाभ्युपेता। **नत्विति** अस्य पृथगेव भावनान्वय इत्यत्रान्वयः। **अरुणैकहायन्यादिवदिति** अरुणावाक्ये त्रयाणामपि क्रयणभावनायामेव पृथगन्वयः। तद्वत्प्रकृते नेति व्यतिरेकदृष्टान्तः। तस्याः = भावनायाः। ननु नैयायिकमत इव "समानाधिकरणनामार्थयोरभेदान्वय" इति व्युत्पत्त्या विशेषणार्थस्याभेदेन संसर्गेण विशेष्येन्वयोस्त्वित्यत आह – **नापीति** अभेदेन = समानाधिकरणनामार्थयो" रिति व्युत्पत्त्याऽभेदेन संसर्गेण। समाधत्ते – **नामार्थस्येति** स्वोत्तर-विभक्त्यर्थेन = ओदन मित्यादावोदनादेर्विभक्त्यर्थकर्मत्वादौ, क्लृप्तान्वयस्य = क्लृप्तान्वयकस्य। **नामार्थान्तरेणेति** शुक्लमोदनमित्यादौ शुक्लाद्यर्थस्यौदनादिना नामार्थान्तरेणान्वयस्वीकारे। **व्युत्पत्त्यन्तरेति** अभेदसंबन्धेन विशेषणवाचकनामार्थ प्रकारकबोधे विशेष्यवाचकनामार्थोपस्थितिर्हेतु-रिति व्युत्पत्त्यन्तरकल्पनापत्तिरित्यर्थः। निरूपितं चेदं पाणिनिमतेन प्रथमार्थनिरूपणावसरे मूल एव। ननु सविशेषणस्थले निरुक्तरीत्या भावनाया एककर्मकत्व नियमस्य पालनेपि गां दोग्धि पय इत्यादौ द्वयोरपि कर्मत्वावश्यभावात्तत्र भावनाया द्विकर्मकत्वापत्तिरनिवार्येत्यत आह – **अत एवेति** सविशेषणे निरुक्तरीत्या भावनाया एककर्मकत्वनियमसंरक्षणादेवेत्यर्थः। प्रकृते आह – **द्विकर्मकधातुस्थलेपीति**

एकमेव = प्रधानकर्मैव पयःप्रभृति। अपरंतु = गवादिकमप्रधानकर्मतु। **द्वितीयार्थलक्षितेति** द्वितीयार्थेन लक्षितं यत्करणत्वं तेनैव। गवा पयो दोग्धीत्यर्थः। बल्वजान् शिखण्डकान् कुर्वित्यत्र बल्वजैः शिखण्डकान् कुर्वित्यर्थः। एवञ्च कर्मद्वयसत्तास्थले प्रकृतिवाचकाद्द्वितीया करणत्वार्थिका, विकृति वाचकाद्द्वितीया कर्मत्वार्थिका। उभयोरपि भावनायां करणत्वेन, कर्मत्वेन चान्वयः। तर्हि धातोः द्विकर्मकत्वानापत्तिरत आह — **पाश्चात्यधात्वर्थेति** प्राथमिकबोधे कारकाणां भावनायामेवान्वयः। द्वितीयबोधेऽप्रधानकर्मत्वस्यापि धात्वर्थेन्वयः। तमादाय धातूनां द्विकर्मकत्वव्यवहार इति भावः। तदाह — **न धातोर्द्विकर्मकत्वबाध इति व्यक्तं कौस्तुभे इति** द्वितीयाध्यायस्य प्रथमपादे सम्मार्गाधिकरणे व्यक्तमित्यर्थः। तत्र हि ''स्रुचः संमार्ष्टि, परिधिं सम्मार्ष्टि'' इति दर्शपूर्णमासे पठितमुदाहृत्य संमार्गादिकं स्रुगादिसंमार्गार्थत्वेन विधीयते। अतश्च गुणकर्म? अत स्रुगादिसाधनकं स्वतन्त्रादृष्टार्थकं सत् प्रधानकर्म इति विचार्य गुणकर्मत्वावेदकप्रमाणाभावात् स्रुगादिविशिष्टसंमार्गविधिरेवायम्। एवञ्च प्रधानकर्मेति पूर्वपक्षे गुणकर्मैवेति सिद्धान्तितम्। तत्र ''सक्तून् जुहोति'' ''बल्वजान् शिखण्डकान् कुरु'' ''मैत्रावरुणाय दण्डं प्रयच्छती'' त्यादिवाक्यार्थविचारावसरे करोते स्तत्समानार्थकाख्यातस्य च प्रयोगे तयोरेककर्मकत्व-मेवेति प्रतिपादितम्। कौस्तुभे भावार्थाधिकरणे फलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वमिति मतं निरस्य अविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वं सकर्मकत्वमिति स्वमतं व्यवस्थाप्य करोतियतत्योः पर्यायत्वेपि करोतेस्सकर्मकत्वं यततेरकर्मकत्वमित्यादिकं प्रतिपादितम्। नतु तत्र प्रकृतप्रघट्टकार्थः प्रतिपादितः। अतो ''व्यक्तं कौस्तुभे'' इति प्रकृतप्रतीके संमार्गाधिकरणकौस्तुभ ग्रन्थार्थ एव प्रतिपादयितव्यः। एवञ्चात्र भावार्थाधिकरणस्थ कौस्तुभग्रन्थप्रदर्शनपरा विषमग्रन्थिभेदिनी टिप्पणी नातीवादर्तव्या। एवञ्च द्वितीयान्तस्थले निरुक्तरीत्या विशिष्टे लक्षणया विशिष्टार्थस्य भावनान्वयः, नत्वरुणैकहायनीन्यायेन पृथगन्वयः। द्वितीयान्तातिरिक्तस्थलेऽरुणैकहायनीन्यायेन विशेषणस्य, विशेष्यस्य च पृथगेव भावनायामन्वय इति बोध्यम्। प्रकरणार्थमुपसंहरति — **तत्सिद्धमिति** सर्वत्र = शक्यलक्ष्यसाधारणे।

**नन्वेवं 'मृदुमोदनं पचति, स्तोकमोदनं पचती' त्यादौ कर्मकारकविशेषणत्वाद् द्वितीयोपपत्ता-वपि यत्र ''क्रियाविशेषणानां नपुंसकत्व'' मित्यनुशासनाद् 'मृदु पचति, स्तोकं पचती' त्यादि नपुंसकलिङ्गनिर्देशः, तत्र क्रियाविशेषणत्वा दभेदसंबन्धेन क्रियान्वयेपि द्वितीयोत्पत्तौ प्रमाणाभावः, न हि किञ्चिदनुशासनं तत्रास्ति। साधुत्वार्थं तत्र द्वितीयेति चेत्, साधुत्वार्थं चतुर्थ्यादेरप्यापत्तेः, प्रथमातिक्रमणे कारणाभावेन प्रथमाया एवापत्तेश्च। किञ्च नामार्थस्य स्वोत्तरविभक्त्यर्थे क्लृप्तान्वयस्या भेदसंबन्धेनापि धात्वर्थान्वयाभ्युपगमे व्युत्पत्त्यन्तरकल्पना-पत्तिः। 'सुखं स्वपिति, सुखमास्ते, सुखं गच्छती' त्यादा वभेदान्वयानुपपत्तिश्च। नचात्रकर्मणि द्वितीया, धात्वर्थतावच्छेदकफलशालित्वस्य सुखेबाधात्। सुखमोदनं पचतीत्यादौ द्विकर्मकता-पत्तेश्च। अकर्मकस्वप्यादिकर्मत्वस्यानुक्तिसहत्वाच्च, सुखादेः कर्मत्वे 'सुखमोदनः पच्यते, स्तोकमोदनः पच्यते' इत्यादौ द्वितीयानापत्तेश्च, कृद्योगे ओदनस्येव षष्ठ्यापत्तौ 'सुखमोदनस्य पक्ता, स्तोकमोदनस्य पक्ते' त्यादौ द्वितीयानापत्तेश्च। अतः कथं क्रियाविशेषणानामन्वय-इति चेत्।**

[1] ओदनादेर्धात्वर्थतावच्छेदकफलशालित्वात्कर्मत्वेपि, तद्विशेषणस्य शुक्लादे ''गुणवचनानामाश्रयतो लिङ्गवचनानी'' ति भाष्याद् द्वितीयान्तत्वेपि स्तोकं पचति मृदुपचतीत्यादौ द्वितीया नोपपद्यत इत्याक्षेपं वैयाकरणमतनिराकरणपूर्वकं समाधातुमुपक्रमते। **नन्वेवमिति** एवम् = गुणवचनानामित्यादेराश्रयणे।

**कर्मकारकविशेषणत्वादिति** कर्मकारक = मोदनादि, तद्विशेषणत्वादित्यर्थः। **नपुंसकत्वमिति** इदं नपुंसकत्वमात्रमनिर्दिशतीत्याशयः। "क्रिया विशेषणानां कर्मत्वं द्वितीयान्तत्वं, नपुंसकत्वञ्चे" ति वचनबलात् सन्दर्भ स्पष्टम्। तत्र = स्तोकं पचतीत्यादौ। क्रिया विशेषणत्वात् = प्रकृते क्रिया = फलं विक्लित्यादि, तदभेदेन विशेषणत्वादित्यर्थः। क्रियान्वयेपि = स्तोकाभिन्नाविक्लित्तिरित्यन्वयेपि। **नहीति** शुक्लमोदनं पचतीत्यादौ कर्मविशेषणत्वात्तत्र "गुणवचनाना" मित्यनुशासनेन द्वितीया सिद्धा। प्रकृते न तादृशं न किञ्चिदनुशासनमस्तीति भावः। **साधुत्वार्थमिति** "न केवला प्रकृतिः प्रयोक्तव्ये" ति नियमपरिपालनाय ययाकयाचिद्विभक्त्यो त्पत्तव्यम्। सा च द्वितीया स्यादित्याशयः। **चतुर्थ्यादेरपीति** द्वितीयाया एवोत्पत्तौविनिगमका भावादिति भावः। **प्रथमातिक्रमे इति** अयं च कपिञ्जलाधिकरणन्यायमूलकः। "स्वौजसमौड" त्यादि 4-1-2 सुब्विधायकसूत्रे प्रथमाविभक्तेः प्रथमत उपात्तत्वात्क्रियाविशेषणे तस्या एवापत्तिः, तदतिक्रमेण द्वितीयायाः प्रवृत्तौ मानाभाव इति भावः। ननु अनभिहिते 2-3-1 इत्यधिकारे विभक्ति विधाने द्वितीयायाः प्रथमत उपात्तत्वान्नियमेन द्वितीयाया एव तस्या ऽभीष्टासिद्धिरत आह – **किञ्चेति** क्लृप्तान्वयस्य = क्लृप्तान्वयकस्य। **व्युत्पत्त्यन्तरेति** नञ्‌थकसमभिव्याहृतनामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतया धातुजन्योपस्थितिः कारणमिति व्युत्पत्त्यन्तरकल्पनापत्तिरित्यर्थः। इदं च क्रिया विशेषणानां धात्वर्थेऽभेदेनान्वयमभ्युपगम्योक्तम्, वस्तुतः स नोपपद्यत एवेत्याह – **सुखं स्वपितीति अभेदान्वयानुपपत्तिरिति** सुखाभेदस्य स्वापेऽभावादिति भावः। ननु कर्मणि द्वितीया स्वीकारेण भेदान्वयोस्त्वत आह – **नचात्रेति सुखे बाधादिति** स्वाप्स्थ्याश्रयत्वं देवदत्तादौ, नतु सुखे इति भावः। विपक्षे बाधकमाह – **सुखादेः कर्मत्वेति द्वितीयानापत्तेरिति** कर्माख्याते कृते वाच्यत्वं, कर्मत्वस्य लक्ष्यत्वमिति प्राक्प्रतिपादितत्वात्प्रकृते तिङाभिधानादनभिहिताधिकारीय द्वितीयानापत्तिरिति भावः। तुल्ययोगक्षेमत्वादाह – **कृद्योगे इति** कृत्प्रत्ययान्तयोगे इत्यर्थः। **ओदनस्येवेति** सर्वसंमतत्वादस्य दृष्टान्तत्वम्। षष्ठ्यापत्तौ = "कर्तृकर्मणोः कृति" 2-3-65 त्यनेन कर्मणि स्तोकादौ षष्ठ्या आपत्तौ। **द्वितीयानापत्तेरिति** तथाच मूल एव कुठार इति भावः। पक्तृशब्दस्य कर्तृतृजन्ततया तद्योगे कर्मणि षष्ठ्याः प्राप्तिः। पूर्वपक्षमुपसंहरति – **अतःकथमिति**

## (अत्र वैयाकरणानां समाधानम्।)

**अत्रवैयाकरणाः – धात्वर्थीभूतफूत्कारादिव्यापारस्य फलं विक्लित्तिरपि धात्वर्थः। तद्विशेषणं च स्तोकादिकमिति तस्य कर्मत्वा त्तद्विशेषणस्य द्वितीयान्तत्वम्। न च विक्लृत्त्यादिफलस्यैव क्रियाजन्यफलाश्रयत्वरूपमुख्यकर्मत्वाभावः। विक्लृत्तेरि वतदुत्पत्तेरपि विक्लृत्तिमुत्पादयती ति विवरणानुरोधेन धातुवाच्यत्वात्, क्रियाजन्योत्पत्त्याश्रयत्वेन विक्लृत्तेरपि मुख्यकर्मत्वा, त्तद्विशेषणे द्वितीयोपपत्तेः।**

क्रियाविशेषणस्यो द्वितीयाया उत्पत्तौ वैयाकरणोक्तं समाधानं निराकर्तुमनुवदति – **अत्र वैयाकरणा इति** वैयाकरणाः = वृत्तिपदमञ्जरीकाराः। **धात्वर्थीभूतेति** पच्यादि धात्वर्थभूतो यः फूत्कारादिव्यापारस्तस्य फलं = प्रयोजनभूतम्। विक्लृत्तिरपि = विक्लृत्त्यादिरपि। धात्वर्थः = सकलधातुवाच्यः। तद्विशेषण = फलेऽभेदेन विशेषणम्, इति = इति हेतोः। तस्य = फलस्य। तद्विशेषणस्य = फलेऽभेदेनान्वितस्य विशेषणस्य स्तोकादेः। **द्वितीयान्तत्वमिति** अयमर्थः – धात्वर्थफलस्य कर्मत्वे धातोरप्रातिपदिकत्वात्ततः कर्मत्वनिमित्तक कार्यं नास्ति। किन्तु तस्य कर्मत्वे तत्समानाधिकरणस्य स्तोकादेरपि कर्मत्वात् कर्मणि द्वितीया प्रवर्तते, फलाश्रयत्वादेरिव सामानाधिकरण्यस्यापि विभक्त्युत्पत्तिप्रयोजकत्वस्यानभिहितसूत्रभाष्यसम्मतत्वादिति। **नचेति** विक्लृत्त्यादेर्धात्वर्थफलस्यैव कर्मत्वासिद्ध्या कथं तत्सामानाधि-

करणानां स्तोकादीनां द्वितीयान्तत्वासिद्धिरित्याशयः। **कर्मत्वाभाव इति** स्वस्य स्वाश्रयत्वायोगादिति भावः। समाधत्ते – **विक्लृत्तेरिवेति** तस्या धातुवाच्यत्वस्य बहुवादिसंमतत्वादस्य दृष्टान्तत्वम्। तदुत्पत्तेरपि = विक्लृत्त्युत्पत्तेरपि। तत्र प्रमाणं विवरणमेवेत्याह **विवरणेति** पचतीत्यादेर्निरुक्त-विवरणदर्शनानुरोधेनेत्यर्थः। **द्वितीयोपपत्तेरिति** पचति = विक्लृत्तिमुत्पादयति, गच्छति = संयोगमुत्पादयति, तिष्ठति = स्थितिमुत्पादयतीति सकलधातूनां विवरणदर्शनादुत्पादनस्यापि धात्वर्थतया विक्लृत्तिसंयोगाद्याश्रयतया तण्डुलग्रामादेरिवो त्पत्त्याश्रयत्वेन विक्लृत्तिसंयोगस्थित्यादीनामपि कर्मत्वात्तत्समानाधिकरणस्य स्तोकादे द्वितीयान्तत्वे न कापि विप्रतिपत्तिरिति भावः।

**नचैवं विक्लृत्तिं पचतीतिप्रयोगापत्तिः, तस्या धातुनैवोक्ततया उक्तार्थाना मप्रयोगात्। अकर्मकधातुस्थलेपि धातुवाच्यफलस्य शरीरलाघवादेः सुखसाधनत्वात्, सुखपदेन सुखसाधनं लक्षयित्वा तस्य द्वितीयान्तत्वोपपत्तिः।**

**नचेति** धात्वर्थफलस्य कर्मत्वसपादनायो त्पत्तेरपि धात्वर्थत्वाङ्गीकारे पाकं करोतीतिवद्विक्लित्तिं पचतीति प्रयोगापत्तिरित्याशयः। समाधत्ते – **तस्या इति** उत्पत्तेरित्यर्थः। **उक्तार्थानामिति** अर्थसंप्रत्ययनाय शब्दः प्रयुज्यते, धातुनैव तस्या अभिधाना 'दुक्तार्थानामप्रयोग' इति न्यायेन तादृशप्रयोगाभाव इति भावः। सकर्मकधातुसमभिव्याहार एवैषा रीतिरिति भ्रमं व्यावर्तयति। **अकर्मकेति धातुवाच्यफलस्येति** एवञ्च स्वपितीत्यादेः शरीरलाघवाद्यन्तर्भावेण शक्तिकल्पनान्न दोष इति भावः। तस्य = सुखमित्यादेः। **द्वितीयान्तत्वोपपत्तिरिति** धातुवाच्यं फलं यस्य तस्य, धातुवाच्योत्पत्तिरूप-फलाश्रयस्येत्यर्थः। एवं चाकर्मकधातुस्थलेऽपि क्रियाविशेषणं कर्मद्वितीयान्तमेव, न द्वितीया साधुत्वार्थेति भावः।

**न चैवं तस्य धातो रकर्मकत्वानापत्तिः, स्वव्यधिकरणफलाश्रयकव्यापार वाचित्वा भावेना कर्मकत्वोपपत्तेः। अतस्तस्य सकर्मकाकर्मकसाधारण्येनो त्पत्त्याश्रयरूपकर्मसत्त्वेपि नक्षतिः। अतो युक्तैवे दृशकर्मणि सर्वत्र द्वितीया। अत एव तादृशविषय एव "क्रियाविशेषणानां नपुंसकत्व" मित्यादिना नपुंसकत्वम्। तच्चा नियतलिङ्गविषयम्। नियतलिङ्गानां तु तत्तल्लिङ्गत्वे सत्येव द्वितीयान्तत्वम्। अत एव 'आदिं पचती' त्यादिप्रयोगः, आदिभूता या विक्लृत्ति, स्तज्जनको व्यापार इत्यर्थः।**

कर्मद्वितीयान्तत्वे तेन कर्मणा धातोस्सकर्मकतापत्तिरिति दोषं परिहरति **नचेति** एव = क्रिया विशेषणस्य कर्मद्वितीयान्तत्वे। तस्य धातोः = क्रिया विशेषणसहितस्य धातोः। **स्वव्यधिकरणेति** स्वं = व्यापारः, तद्व्यधिकरणः फलाश्रयो यस्य, तादृशव्यापारवाचित्वं सकर्मकत्वं, यथा पच्यादेः, तत्र व्यापारश्चैत्रादि वृत्तिः, विक्लृत्तिरूपफलाश्रयस्तण्डुलस्तद्व्यधिकरणः प्रकृते व्यापारः शरीरलाघवरूपफलाश्रयव्यधि-करणो न, किन्तु समानाधिकरणः, अतो व्यधिकरणफलाश्रयकव्यापार वाचित्वाभावात् स्वप्यादेर-कर्मकत्वमेव, न सकर्मकत्वमिति भावः। तस्य = क्रियाविशेषणस्य। **उत्पत्त्याश्रयरूपेति** स्तोकं पचतीत्यादौ उत्पत्त्याश्रयविक्लृत्तिरूपं कर्म, सुखं स्वपितीत्यादावुत्पत्त्याश्रयशरीरलाघवरूपं कर्मेति भावः। न क्षतिः = धातोरकर्मकत्वानापत्तिरूपा क्षतिर्न। ईदृशकर्मणि = उत्पत्त्याश्रयविक्लृत्तिरूप कर्मसमानाधिकरणत्वेन कर्मसंज्ञके। सर्वत्र = धातुसामान्ये। अत एव = निरुक्तरीत्या स्तोकादेः कर्मत्वस्य सिद्धत्वादेव। तादृशविषय एव = तादृशद्वितीयान्तस्थल एव, **नपुंसकत्वमिति** तथाच "क्रिया विशेषणाना

कर्मत्वमेकवचनान्तत्वं नपुंसकत्वं चे" ति त्रयमपि न्यायसिद्धार्थानवाद एव, नापर्वमिति भावः। तद्ध्वनयन्नाह – **तच्चेति** नपुंसकत्वं चेत्यर्थः। **अनियतलिङ्गेति** लिङ्गसर्वनाम नपुंसकमिति "दाण्डिनायने" ति 6-4-174 सूत्रे भाष्ये स्पष्टम्। "क्रिया विशेषणानां नपुंसकत्व" मित्यस्य वाचनिकत्वे सर्वत्रापि तत्त्वापत्तिः, तद्ध्वनयन्नाह – **नियतलिङ्गानां त्विति** अत एव = तस्यानियतलिङ्गविषयकत्वा-देव। **आदिमिति** आदिशब्दो हि नित्यं पुमान्। तदेवोपपादयति – **आदिभूतेति**

**न च तादृशकर्मकारकमादाय कर्मणि लकारः कृद्योगनिमित्तिका षष्ठीचा पद्येतेति वाच्यम्, व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयरूपकर्मण्येव तयोः प्रवृत्तेः, उत्पत्तेरमुख्यफलत्वेन तदाश्रये तयोरप्रवृत्तेः। "लः कर्मणि च भावे चा कर्मकेभ्यः" 3-4-69 "कर्तृकर्मणोः कृति" 2-3-65 इत्यादिसूत्रेषु कर्मपदेन तादृशकर्मग्रहणस्यैव निर्णीतत्वात्। इतरथा सर्वेषामेव सकर्मकत्वेन 'अकर्मकेभ्य' इति पदोपादानानुपपत्तेः। अतश्च "स्तोकमोदनः पच्यते, स्तोकमोदनस्य पक्ते" त्यादौ द्वितीयान्तत्वोपपत्तिः।**

**नचेति** क्रियाविशेषणस्य कर्मद्वितीयान्तत्वे एतद्दोषतादवस्थ्यम्, उपपदविभक्तिकत्वे नेयमापत्तिरिति निगूढाशयः। कर्मणि लकारः = स्तोकं पचतीत्यादौ, षष्ठी = स्तोकं पक्तेत्यादौ, वा शब्दस्समुच्चये। **व्यापारव्यधिकरणेति** व्यापारव्यधिकरणं धातुवाच्यं च यद् मुख्यं फलं विक्लित्तिसंयोगादि, तदाश्रये कर्मण्येवेत्यर्थः। तयोः = लकारषष्ठ्योः। प्रवृत्तेः = ओदनः पच्यते चैत्रेण, ओदनस्य पाक इत्यादौ। तदाश्रये = उत्पत्त्याश्रयविक्लत्ति समानाधिकरणे स्तोकादौ। उक्तार्थे मानमाह – **"लः कर्मणी" ति तादृशकर्मेति** धात्वर्थमुख्यफलाश्रयरूपकर्मेत्यर्थः। निर्णयमेव विशदयति **इतरथेति** निरुक्तकर्मण एवाग्रहणे इत्यर्थः। **पदोपादानानुपपत्तेरिति** तत्तत्कार्याणामसाङ्कर्येण प्रवृत्तये धातवो द्वैराश्येन निर्दिष्टाः, निरुक्तरीत्यना-श्रयणे उत्पत्तिरूपार्थमादाय सर्वधातूनामपि सकर्मकत्वस्यैवापत्याऽकर्मकाप्रसिध्द्या सूत्रेऽकर्मकग्रहणं व्यर्थमेव स्यात्। अतस्तद्बलेन निरुक्तार्थसिद्धिरिति भावः। अकर्मक ग्रहणेन ज्ञापितमर्थं लक्ष्ये योजयति **अतश्चेति** अकर्मकग्रहणेन तदर्थज्ञापनादित्यर्थः। **द्वितीयान्तत्वोपपत्तिरिति** अन्यथा कर्मणि लकारे स्तोकात्प्रथमायाः कृद्योगे षष्ठ्याश्चापत्त्या द्वितीयान्तत्वभङ्ग इति भावः। एवञ्चौदनादेः कर्मणि द्वितीयान्तत्वं, शुक्लादौ तद्विशेषणे, "गुणवचनाना" मित्यनुशासनाद्द्वितीयान्तत्वम्। स्तोकादेस्त्वनयो-पपत्त्या तत्त्वमिति बोध्यम्।

**यत्रतु विधिवशाद् धात्वर्थस्य करणत्वम्, तत्र तद्विशेषणे तृतीया। यथा 'ज्योतिष्टोमेन यजेते' ति। तत्रापि 'समीचीनं ज्योतिष्टोमेन यजेते' ति यद्विशेषणं न तद्धात्वर्थस्य, अपितु भावनायाः। तत्रा त एव सा प्रथमा, न द्वितीया-इत्याहुः।**

क्रिया विशेषणानां कर्मत्वमित्यस्य वाचनिकत्वे सर्वत्रापि तत्र द्वितीयापत्तिः, अतो न्यायसिद्धार्थानु-वादकत्वमेव तस्येति ध्वनयन्नाह – **यत्रत्विति** विधिवशात् = उत्पत्तिवाक्ये विधिप्रत्ययवशात्। **करणत्वमिति** धात्वर्थस्य कर्मत्वकरणत्वान्यतरसंसर्गेण भावनायामन्वय इति प्राक्प्रतिपादितम्। उत्पत्तिवाक्ये यागादिर्धात्वर्थः करणत्वेनान्वेति। यागेन भावयेदिति, तादृशे स्थले इत्यर्थः। तृतीया = यागस्य करणत्वे तत्समानाधिकरणस्यापि तत्त्वात्तृतीयेति भावः। क्रियाविशेषणानां कर्मत्वस्य सार्वत्रिकत्वेऽत्र तृतीयानापत्तिरिति भावः। तत्रापि = क्रिया विशेषणस्य तृतीयान्तत्वस्थलेपि। यद्विशेषणम् = समीचीनमित्यादि। तद् = विशेषणम्। धात्वर्थस्य = यज्यर्थस्य। अन्यथा तस्यापि तृतीयान्तत्वापत्तिरिति भावः। अत एव = भावनाया मन्वयादेव, **न द्वितीयेति** धात्वर्थे फलरूपे कर्मणि

अनन्वयादिति भावः। क्रियाविशेषणाना मेकवचनान्तत्वमित्यपि संख्यान्तराभावादनवादरूपमेव। अत एव "हतशायिकाश्शय्यन्ते, उष्ट्रासिका आस्यन्ते" त्यादौ बहुवचनान्तत्वमपि सङ्गच्छत इति बोध्यम्।

## (वैयाकरणमतनिराकरणम्।)

**तन्न, व्यापारव्यधिकरण धातुवाच्यमुख्यफलाश्रयरूपकर्मण्येव लकारषष्ठ्योः प्रवृत्तौ 'चैत्रेणास्यते मासः, सुप्यते रात्रि' रिति कर्मलकारानापत्तेः। न हि तत्र तादृशं फलमस्ति। तथात्वे तस्य स्वाभाविकाकर्मकत्वानापत्तेः। धातूपात्तफलसमानाधिकरणव्यापार वाचित्वं हि भवन्मतेऽकर्मकत्वम्। अतस्तत्र तादृशफलाप्रसिद्धेर्न द्वितीयाकर्मलकाराद्यापत्तिः। अत एव न परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकीभूतफलशालित्वं कर्मत्वम्। नापि तत्समनियता-खण्डोपाधिः कर्मत्वम्, तदभावेपि 'चैत्रो मासमास्ते, आस्यते मास' इत्यादौ कर्मत्वावश्यकत्वेन व्यभिचारात्, अपितु तद्व्यापकं तत्समानाधिकरणमात्रं वा।**

वैयाकरणमतं निराकरोति – **तन्नेति** क्रियाविशेषणे लकारषष्ठीवारणोपायं तदुक्तं दूषयति – **व्यापारव्यधिकरणेति आस्यते मास इति** "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक" इति वचनेन आस = उपवेशने इति धातोर्योगे मासस्य कर्मत्वमतिदिष्टम्। तेन कर्मणा धातोस्सकर्मकत्वात्तस्मिन् कर्मणि लकार इष्टः, स न सिध्येदिति भावः। तदेवोपपादयति – **नहीति** तादृशं फलं = मुख्यं फलम्। विपक्षे बाधकमाह **तथात्वे इति** तत्र मुख्यफलस्य सत्त्वे। **स्वाभाविकेति** तथा च चैत्रेणास्यते चैत्रेणेति भावे लकारस्यानापत्तेः। अकर्मकत्वानापत्तौ बीजमाह – **धातूपात्तेति** स्वमतेन्यादृशस्योक्तत्वादाह – **भवन्मते इति** वैयाकरणमत इत्यर्थः। दूषणमुपसंहरति **अत इति** तत्र चैत्रेणास्यते मास इत्यादौ। **तादृशेति** मुख्यफलाप्रसिद्धेरित्यर्थः। **न द्वितीयेति** द्वितीयाकर्मलकाराद्या-पत्तिरित्यर्थः। मुख्यफलाप्रसिद्ध्यैव "अकर्मकधातुभिः", "अधिशीङ्", "अभिनिविशश्च" इत्यादि लाक्षणिकार्थानुशासन सङ्गच्छते। अत एव = उक्तस्थलेऽनिर्वाहादेव। **न परसमवेतेति** ओदनं पचतीत्यादाविव चैत्रेणास्यते मासः, मासमास्ते इत्यादौ तादृशफलशालित्वं नास्ति। अतस्तदव्यापक-मिति भावः। अत एवाह – **नापि तत्समेति** तदेवोपपादयति **तदभावेपीति** तादृशफलशालित्वाभावे-पीत्यर्थः। तर्हि सिद्धान्तेपि का गतिरत आह – **अपित्विति**

**अथवा किमित्याद्याकाङ्क्षापूरकत्वसमनियतमेवा खण्डोपाधिरूपं कर्मत्वम्। तच्च पचतीत्यादा वोदनस्येव आस्यत इत्यादौ मासादेरप्यविशिष्टमिति युक्तमेवात्र द्वितीयादि। तच्च तत्तद्धातुसमभिव्याहारगम्यमित्युक्तं कौस्तुभे। सुखादिरूपक्रियाविशेषणानां तु न किमित्या-काङ्क्षापूरकत्वम्। अपितु कथमाकाङ्क्षापूरकत्वमेव। अत एव किं पचति, स्वपिति वा सुखम् कीदृशं पचति स्तोकं मृदुवेत्यादिप्रश्नोत्तर भावोपि संगच्छते। अतो न तत्र कर्मत्वसंभवः। नापि तदनुरोधेन उत्पत्तेः फलस्य वाधातुवाच्यत्वकल्पनम्, अन्यलभ्यत्वा त्तयोः। अत एव पाकत्वयागत्वादिनैव धातोः शक्ति रित्युक्तं प्राक्।**

स्वसिद्धान्तानुसारेणाह **अथवेति** तच्च = तादृशं कर्मत्वं च। **मासादेरपीति** किं पचतीति प्रश्ने ओदनं पचतीति समाधानमस्ति, तद्वत् कियदास्त इति प्रश्ने मासमास्त इति समाधानमस्ति। अत्र = आस्यादियोगे। **द्वितीयादीति** आदिना कर्मणि लकारादेर्ग्रहणम्। तच्च = किमित्याकाङ्क्षापूरकत्वं च। **तत्तद्धात्विति** करोति यतत्योस्समानार्थकत्वेपि करोतियोग एव तत्त्वं, न यततियोगे। तथाऽर्थभेदेनैकस्यैव तत्त्वाऽ... यथा – ग्रथधातुयोगे। कौस्तुभे = द्वितीयाध्याये प्रथमपादे भावार्थाधिकरणे। एतच्च करोतेर्व्यापारमात्रार्थ

कत्वमेवेति पार्थसारथिमतनिराकरणावसरे प्रदर्शितम्। सुखादीनां तत्त्वाभावान्न कर्मत्वमित्याह – **सुखादीति कथमाकाङ्क्षापूरकत्वमेवेति** तथाच सुखादीनां कर्मत्वाभावात्तत्र द्वितीयया न भाव्यमेवेति भावः। अत एव = सुखादीनां तत्त्वाभावादेव।कथं स्वपितीति प्रश्नः, स्वपिति सुखमित्युत्तरम्। कीदृशं पचतीति प्रश्नः, स्तोकं पचतीति समाधानम्। **सङ्गच्छत इति** तथाच तदाकाङ्क्षा पूरकत्वरूपं कर्मत्वं स्तोकादीनामिति तत्र द्वितीया, सुखादीनां कर्मत्वाभावान्न द्वितीयेति बोध्यम्। अतः = निरुक्तरीत्या सुखादेः कर्मत्वायोगात्। तत्र = सुखमित्यादौ क्रिया विशेषणे। वैयाकरणमतखण्डनं निगमयति – **नापीति** तदनुरोधेन = क्रिया विशेषणेभ्यः कर्मद्वितीयान्तत्वानुरोधेन। अन्यलभ्यत्वात् = प्रत्यक्षलभ्यत्वात्। एवञ्च स्तोकादीनां कर्माकाङ्क्षापूरकत्वा त्कर्मत्वेन द्वितीया सिद्धा। सुखादीनां न कर्मत्वमिति द्वितीया न भवत्येवेति तत्र द्वितीयोपपादनलोभेनोत्पत्तेः फलस्य च धातुवाच्यत्वस्वीकारो वैयाकरणानामसङ्गत एवेति भावः। स्वसिद्धान्तं स्मारयति – **अत एवेति** तयोरन्यलभ्यत्वादेव, प्राक् = फूत्कारादीनां धातुवाच्यत्वमिति वैयाकरणमतखण्डनावसरे स्वमतप्रदर्शने।

## (स्वमते द्वितीयोपपादनम्।)

**कथं तर्हि द्वितीयानियमः.**

**''उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु,**
**द्वितीयाऽऽम्रेडितान्तेषु ततोन्यत्रापि दृश्यते''**

**इत्यनुशासनादिति गृहाण। अत्र ततोन्यत्रापि = प्रतिपदोक्तादन्यत्र क्रियाविशेषणेपीत्यर्थः। अत एव अन्यत्रापि दृश्यत इत्युक्तम् तदेवाह अभितः परितः समयानिकषा हा प्रतियोगेपि इत्यग्रिमप्रतिपदोक्तपरतया भाष्यानारूढं व्याख्यानमप्यसंगतम्। वैयर्थ्यापत्तेः। तस्मा त्सिद्धं क्रियाविशेषणेषु द्वितीयामात्रानुशासनम्। अत एवात्र द्वितीयामात्रग्रहणा न्न लकारषष्ठ्यौ।**

वैयाकरणमतस्य दूषितत्वात्तदनुरोधेन क्रियाविशेषणानां द्वितीयान्तत्वायोगात् पूर्वपक्ष एवाव तिष्ठते इत्याक्षिपति – **कथं तर्हि द्वितीया नियम इति** क्रियाविशेषणेभ्यो वार्तिककारवचनेन द्वितीयेति युक्तमित्याह – **उभसर्वतसोरिति** अनुशासनात् = वार्तिकरूपादनुशासनात्। एवञ्चौदनादेः पाणिनिसूत्रेण, तद्विशेषणेभ्यो ''गुणवचनानामाश्रयत'' इति भाष्येण,क्रिया विशेषणेभ्यः ''उभसर्वतसोरिति वार्तिकेन च द्वितीया सिद्धेत्येव कल्पना ज्यायसी, नतु वामनहरदत्तादिरीत्या क्रियाविशेषणेभ्यः कर्मद्वितीयेति तात्पर्यम्। ननुवार्तिके निर्दिष्टैः ''उभयतः, सर्वतः, धिक्'' इत्यादिभिर्योगाभावात्कथमत्र द्वितीयेत्यत आह – **अत्रेति** वार्तिके इत्यर्थः। चतुर्थचरणादत्र द्वितीयेत्याशयेन तदर्थमाह – **ततोन्यत्रापि = प्रतिपदोक्तादन्यत्रापीति** उभयतः, सर्वतः, धिक् उपर्युपरि, अध्यधि, अधोधः एभिर्योगे द्वितीयां विधाय 'ततोन्यत्रापी' त्युक्त्या पादत्रये येप्रोक्ता स्तद्भिन्न स्तच्छब्दार्थ इत्यस्य न्याय्यतया एतदर्थलाभः। प्रकृतोपयोगितया विवृणोति **क्रियाविशेषणेपीत्यर्थ इति** एवञ्च लक्ष्यानुसारेण द्वितीयाकार्येति चतुर्थपादेन बोध्यते। तेन 'यावच्छीतम्', 'पुरुषाराधनमृते' इत्यादौ यावत् ऋते इत्यादियोगेपि द्वितीयाऽनेन सिध्यति। प्रतिपदोक्तादन्येन योगे द्वितीया, शब्दविशेषयोगानपेक्षया न्यत्रापि द्वितीयेति च वार्तिकार्थः। आद्योदाहरणं – यावच्छीतमित्यादि। द्वितीयस्योदाहरणं क्रिया विशेषणम्। तदेतत्सर्वमभिप्रेत्योक्तं – क्रिया विशेषणेपीति। अत एव वार्तिकेपि अन्यत्रापीति सप्तम्यन्त प्रयोगः। एतेन प्रतिपदोक्तादन्येन = अव्ययेन योगे'' इत्यर्थेन क्रिया विशेषणे कथमनेन द्वितीयेति शङ्का परास्ता। ननु ततोन्यत्रापीत्यस्यापि ''अभितः परित'' इत्यादि प्रतिपदोक्तपरतयैव कैश्चिद्व्याख्यातत्वेन तेनापि कथमत्र द्वितीयेत्याशङ्क्य तथा व्याख्यानमयुक्त, मतो न

दोष इत्याह – **अत एवेति** ऋषिणा तस्य सामान्यरूपेण प्रणीतत्वादेवेत्यर्थः। परोक्तमनुवदति – **ततोन्यत्रापि दृश्यत इत्युक्तं – तदेतदाह – अभितः परितस्समया निकषा हा प्रतीति अग्रिमेति** वार्तिके आद्यं पादत्रयं प्रतिपदविधिरेव, चतुर्थपादोपि वक्ष्यमाणप्रतिपदविधिरेवेति भावः। **भाष्यानारूढमिति** अनेन तद्व्याख्यानस्य निर्मूलत्वमुक्तम्। **वैयर्थ्यापत्तेरिति** शब्दविशेषमनाश्रित्य प्रवृत्तस्य चतुर्थपादस्य वैयर्थ्यापत्तेरित्यर्थः। अस्यापि प्रतिपदविधिरूपत्वे अभितः परित इत्यादि शब्दोच्चारणेनैव सिद्धे व्यापकवचनप्रणयनस्य वैयर्थ्यमिति भावः। **तस्मादिति** ततोन्यत्रापीत्यस्य सामान्यरूपत्वादित्यर्थः। **द्वितीयामात्रानुशासनमिति** अनुशिष्ट रनुशासनं = साधुत्वम्, मात्रपदेन प्रथमातिक्रमणे मानाभावात्प्रथमा स्यादित्यस्य निरासः, द्वितीया मात्रस्य साधुत्वमित्यर्थः। किञ्च मात्रपदेन कर्मत्वस्य निरासः, इयं केवलमुपपदविभक्तिरेव, नतु कर्मत्वार्थिकेति भावः। तदेतदाह – **अत एवात्र द्वितीया मात्रेति** अत एव = वार्तिकेनो पपदद्वितीयायाः प्रवृत्तत्वादेव, अत एव कर्मत्वव्यावर्तकं-मात्रेति। न लकारषष्ठ्यौ = स्तोकं तण्डुलः पच्यते इत्यादौ कर्मणि स्तोके लकारो न, स्तोकमोदनस्य पक्तेत्यादौ कर्मणि कृद्योग लक्षणा षष्ठी च न। वैयाकरणोक्तरीत्याश्रयणे तु ते दुर्वारे एवेति भावः।

**अत-स्तेषामपि तात्पर्यानुरोधेन फलद्वारकः, धातूपात्तव्यापारद्वारकः साक्षादेव वा भावनाया-मन्वयः। सर्वथैव द्वितीयान्तत्वम्। तत्र स्तोकं मृदु समीचीन मित्यादौ द्वितीयार्थो लक्षणयाऽऽश्रयत्वम्। स्तोकत्वादिकं च लक्षणया शक्त्यैव वा प्रातिपदिकार्थः। तदाश्रयत्वं च यदि फलसंबन्धे तात्पर्य तदा स्वनिरूपकफलजनक व्यापारानुकूलत्वसंसर्गेण कृतावन्वेति। यदि व्यापारसंबन्धे तदा स्वनिरूपकव्यापारानुकूलत्वसंसर्गेण, यदितु भावनासंबन्धे तदा साक्षादेवेति विवेकः। एतेन भावनासंबन्धे प्रथमैवेति परास्तम्। भावनासंबन्धविवक्षया 'आदिः पचती' ति प्रयोगापत्ते श्च। न चेष्टापत्तिः भवद्ग्रन्थेष्वलेखनात्।**

एवं क्रिया विशेषणेभ्यो द्वितीयां सप्रमाणं संसाध्य तेषामपि भावनायामेवान्वय इत्याह – **अत इति** तेभ्यो द्वितीयायास्सिद्धत्वादित्यर्थः। तेषामपि = क्रिया विशेषणानामपि। अनेकत्रान्वयसंभवादाह – **तात्पर्येति** फलद्वारकः = विक्लित्त्यादि फलद्वारकः। अत्र विक्लित्त्यां स्तोकत्वं भासते। **धातूपात्तेति** अत्र फूत्कारादिव्यापारे तत्त्वं, तृतीये प्रयत्ने तत्त्वमिति विशेषः। फलान्वये द्वितीयान्तत्वं नपुंसकत्वं च स्तोकं पचति, व्यापारान्वये प्रथमान्तत्वं नपुंसकत्वं च स्तोकं पचति, घञर्थान्वये प्रथमा, पुंलिङ्गता च स्तोकः पाक इति वैयाकरणमतमयुक्तं, सर्वत्रापि "ततोन्यत्रापी" त्यस्य प्रवृत्त्या द्वितीयाया एव लाभादिति सूचयन्नाह **सर्वथैव द्वितीयान्तत्वमिति** सर्वथैव = फले, व्यापारे, भावनायां वान्वयेपि द्वितीयान्तत्वमेव।

क्रिया विशेषणानामभेदेन संसर्गेण धात्वर्थेऽन्वय इति वैयाकरणानां नैयायिकानां च मतमयुक्तमिति सूचयन् स्वमतमाह – **तत्रेति** क्रिया विशेषणानां मध्य इत्यर्थः। "ततोन्यत्रापि दृश्यते" इत्यस्य लाक्षणिकानुशासनत्वादाह – **लक्षणयाश्रयत्वमिति** स्तोकत्वविशिष्टः स्तोकशब्दस्यार्थ इति वादिनां मतेनाह – **लक्षणयेति** आकृत्यधिकरणन्यायेन स्तोकशब्दः स्तोकत्ववाचक इति स्वमतेनाह – **शक्त्यैवेति तदाश्रयत्वं चेति** स्तोकत्वाश्रयत्वं चेत्यर्थः। अस्य "कृतावन्वेती" त्यत्रान्वयः। फलसंबन्धे = फलेन संबन्धे। **स्वनिरूपकेति** स्वम् = आश्रयत्वं, तन्निरूपकं यत् फलं विक्लित्यादि, तज्जनको व्यापारः = फूत्कारादिस्तदनुकूलत्वं कृताविति बोध्यम्। व्यापारसंबन्धे = व्यापारेण संबन्धे तात्पर्यम्। एतेन = सर्वथापि द्वितीयान्तत्वमेवेति स्वीकारेण। **प्रथमैवेति** स्तोकः पाक इति घञर्थ भावनान्वये प्रथमैवेति भावः।
**भावना संबन्धविवक्षयेति** भावनया संबन्धस्य विवक्षायामित्यर्थः। घञन्ते इष्टापत्त्या समाधानं

शक्यत्वात्तत्संमतत्वाच्चा न्यत्र तिङन्ते दोषमुद्भावयति **आदिः पचतीति अलेखनादिति** पाक इति घञन्तस्थले स्तोकः पाक इति प्रथमैति भवद्भिर्लिखितम्, न तिङन्त इति भावः।

**ज्योतिष्टोमेनेत्यत्रापि न क्रियाविशेषणत्व, मपितु धात्वर्थस्य करणत्वेन भावनान्वयव न्नामार्थस्यापि करणत्वेनैवान्वयः। नामार्थोहि यद्यपि धात्वर्थ एव, तथापि धातुना विजातीययागत्वादिना बोधाद् नाम्नाच ज्योतीरूपस्तोमकत्वादिना बोधा न्न पर्यायत्वम्। अभेदबोधस्तु अरुणैकहायनीवदिति वक्ष्यते। अत एव 'ज्योतिष्टोमेनेत्यत्राभेदार्थिका तृतीये' ति तार्किकमत मपास्तम् अभेदलक्षणायां प्रमाणाभावात्। 'धान्येन धनी' त्यादावपि धनसंबन्धे धान्यस्य करणत्वोपपत्ते रभेदलक्षणायाः क्वाप्यदर्शनाच्च करणत्वविवक्षाऽभाव एव च क्रियाविशेषणत्वनिमित्तिका द्वितीया, ''स्वाहाकारं यजती'' तिवत् लोकिकवाक्ये न विरुध्यते। स्वाहाकार वाक्ये तु व्यत्ययानुशासने न करणत्वलक्षणा।**

ज्योतिष्टोमेनेत्यत्र क्रियाविशेषणत्वात् तृतीयेति वैयाकरणोक्तं दूषयति — **ज्योतिष्टोमेनेति** तर्हि तृतीया कथमत आह — **अपित्विति करणत्वेनैवेति** कारकाणां धात्वर्थान्वियस्या व्युत्पन्नत्वादकणैकहायनीयायेन नामार्थस्यापि भावनायामेवान्वयः, ज्योतिष्टोमेन भावयेत् यागेन भावयेदिति पृथगेव तयोर्भावनायामन्वय इति भावः। नामार्थधात्वर्थयोरेकरूपत्वा त्पौनरुक्त्यमाशङ्क्य परिहरति **नामार्थो हीति** बोधात् = लक्षणया बोधात्, ज्योतिष्टोमस्य यागेऽभेदेन बोधः कथमत आह — **अभेदबोधस्त्विति** पाश्चात्यबोधविषय स्स इत्याह — **अरुणैकेति** तार्किकमतं निराकरोति **अत एवेति** नामार्थस्यापि कारकत्वेन धात्वर्थेऽन्वयायोगादेवेत्यर्थः। धात्वर्थस्यापि भावनायां करणतयान्वयः। एवञ्चोभयोः कारकत्वेन परस्परमन्वयायोग इति भावः। अभेदार्थिका = लक्षणया, लक्षणायां मानभाव इत्याह — **अभेदलक्षणायामिति** ननु धान्येन धनीत्याद्यनुरोधेनाऽभेदलक्षणा स्वीक्रियत इत्यत आह — **धान्येनेति** तृतीयार्थोऽभेदः, सच प्रतियोगितावच्छेदकरूपः, तथाच तृतीयार्थाभेदस्य धान्यत्वस्य धनेन्वय इति लक्षणावादिन आशयः। तत्र करणत्वमेव तृतीयार्थ इत्याह **धनसंबन्धे इति** पाणिनिमतेन प्रथमाया अर्थकथनावसरे स्तोकं पचतीत्यादौ द्वितीयार्थो लक्षणयाऽभेद इत्युक्तं मूले। तत्परवासनयैव। तद्ध्वनयन्नाह — **क्वाप्यदर्शनादिति** नन्वेवं सर्वत्रापि यथाकथञ्चित्करणत्वस्य संभवात् क्रियाविशेषणाद् द्वितीयानापत्ति, रित्यत आह — **करणत्वविवक्षाऽभाव एवेति** तत्र संप्रतिपन्नं दृष्टान्तमाह — **स्वाहाकारमिति** प्राथमिकबोधे धात्वर्थफलशालित्वा त्स्वाहाकारस्य कर्मत्वाद् द्वितीया, तद्वदत्रा-पीत्याशयः। सिद्धान्ते उभयत्रापि द्वितीयाया न कर्मत्वार्थकत्वान्नदोष इत्याह — **न विरुध्यत इति** दृष्टान्ते सिद्धान्ताश्रयणेन विशेषमाह — **स्वाहाकारवाक्येत्विति** व्यत्ययानुशासनेन = ''सुपां सुपो भवन्ती'' ति भाष्यकारीयवचनेन, **करणत्वेति** तथाच स्वाहाकारनामकेन यागेनेष्टं भावये दिति तद्वाक्यार्थ इति भावः।

**सुखं स्वपितीत्यादावपि जनकत्वं द्वितीयार्थः। सुखजनकः स्वाप इत्यर्थः। यद्वा सुखपद मनायासपरम्। द्वितीयार्थः पूर्वकत्वम्। आयासाभावपूर्वकस्वापादिरित्यर्थः। सर्वथा सिद्धं सर्वत्र द्वितीयार्थो भावनान्वयीति। भावनाच लिङ्गानन्वयिपदोपस्थाप्या। तच्च तिङ्कृन्निपाताद्यपि, न तु, प्रथमायामिव तिङन्येव। अत एव 'ओदनं पचति, ओदनं करिष्यन्, ओदनं भुङ्क्ते' इत्यादौ सर्वत्र द्वितीयार्थस्य भावनान्वय इति संक्षेपः।**

**इति द्वितीयार्थनिरूपणं समाप्तम्**

सुखं स्वपितीत्यादौ सुखपदं लक्षणया सुखसाधनपरमित्यपि न युक्तमित्याह — **सुखं स्वपितीति** द्वितीयार्थः = लक्षणया, स्वप्नस्य सुखजनकत्वायोगादाह — **यद्वेति** प्रकरणार्थमुपसंहरति **सर्वथेति** वस्त्वादि पदोपात्तभावनायामन्वयवारणायाह — **लिङ्गानन्वयीति** तच्च = पदं च। **तिङ्कृदिति** ओदनं पचति, ओदनं पचन्, अत्र शतुः कर्तरि शक्तिः, भावनायां लक्षणा। विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्, आदिना ओदनं पचेत्यादौ शबादिविकरणस्य ग्रहणम्। शपो भावनाभिधायित्वं कौस्तुभे भावार्थाधिकरणे स्पष्टमभिहितम्। **तिङ्ग्रहेवेति** चैत्रः पचति, अत्र कृतो न ग्रहणम्, तत्र प्रथमार्थान्वयाभावस्य प्रथमार्थविचारे उक्तत्वात्। किन्तु निपातस्य, चैत्र इव मैत्रो गच्छतीत्युदाहरणम्। अत एव = द्वितीयार्थस्य कृदुपात्तभावनाया मप्यन्वयादेव। **करिष्यन्निति** कर्तरि शक्तस्य शतु र्भावनालक्षकत्वा त्तत्रान्वयः।

इति द्वितीयार्थनिरूपणं समाप्तम्।

# अथ तृतीयार्थनिरूपणम्।

## (प्राचीनमतेन कर्तृत्वनिर्वचनम्।)

**एवं "कर्तृकरणयोस्तृतीये" 2-3-18 तिसूत्रात् कर्तृत्वं करणत्वं च तृतीयार्थः। सोपि तथैव भावनान्वयी। तत्र "स्वतन्त्रः कर्ते" 1-4-54 तिसूत्रेण कर्तृत्वस्य निर्वचनम्। तथाहि – इतरकारकाप्रयोज्यत्वे सति कारकान्तरप्रयोक्तृत्वं कर्तृत्वम्। कारकान्तरनिष्ठव्यापारजनकत्वं विशेष्यदलार्थः। अस्तिचेदं कुविन्दादौ, तन्त्वादिनिष्ठपटजनकसंयोगरूपव्यापारजनकत्वात्। कुठारेपि काष्टनिष्ठसंयोगजनकत्वेन कर्तृत्वापत्तौ सत्यन्तम्, तस्य पुरुषजन्यसंयोगाश्रत्वेन तत्प्रयोज्यत्वादिति सर्वदर्शनानुयायिनः प्राञ्चः।**

अथ तृतीयार्थनिरूपणम्।

द्वितीयार्थस्येव तृतीयार्थस्यापि भावनायामेवान्वय इत्याह – **एवमिति सूत्रादिति** अनभिहिते कर्तरि करणेच तृतीयास्यादिति तदर्थः। रामेण बाणेन हतो वालीत्युदाहरणम्। सूत्रे कर्तृकरणपदयो-र्धर्मपरत्वमेव, नतु शाब्दिकमत इव धर्मिपरत्व मित्यांह – **कर्तृत्वं करणत्वंचेति** तथैव = द्वितीयार्थ इव। तत्र = कर्तृत्वकरणत्वयोर्मध्ये। कारकाधिकारादाह – **इतरकारकेति कारकान्तरप्रयोक्तृत्वमिति** एतच्च स्वातन्त्र्यस्य निर्वचनम्। तदुद्देशेन कर्तृत्वस्य सूत्रेण विधनादर्था त्कर्तृत्वनिर्वचन सिद्धिरिति बोध्यम्। ननुकारकान्तरप्रयोक्तृत्वं नामतज्जनकत्वम्। तच्च कुविन्दादावसिद्धम्, तस्य तन्त्वाद्यजनकत्वा, दत आह – **कारकान्तरेति** व्यापारः = संयोगादिः। कुविन्दादौ = तन्तुवायादौ। **तन्त्वादीति** तन्त्वादिनिष्ठः पटादिजनको यः संयोग, स्तद्रूपव्यापारजनकत्वादित्यर्थः। तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारत्वम्। संयोगे कुविन्दजन्यत्वस्य तज्जन्यपटजनकत्वस्य च सत्त्वात्समन्वयः स्पष्टः। विशेषणदलस्य प्रयोजन माह – **कुठारेपीति** तत्र विशेष्यदलसत्त्व मुपपादयति – **काष्टनिष्ठेति** अत स्तावन्मात्रोक्तौ कर्तृत्वापत्ति रिति भावः। दत्ते विशेषणदले नातिव्याप्तिरित्याह – **तस्येति** कुठारस्येत्यर्थः। कारकान्तरजन्यव्यापाराश्रयत्वं विशेषणदलार्थइत्याह – **पुरुषनिष्ठेति** तथांच कारकान्तरजन्यव्यापारानाश्रयत्वे सति कारकान्तर-निष्ठव्यापारजनकत्वं कर्तृत्वमिति फलितार्थ इति भावः।

## (तन्निरासेन वैयाकरणनव्यमतेन कर्तृत्वनिर्वचनम्।)

**तत्र, ईश्वरप्रयोज्यजीवेऽव्याप्तेः। दण्डजन्यसंयोगाश्रयत्वेन कुलालेऽव्याप्तेश्च। अतो धातूपात्तव्यापाराश्रयत्वं कर्तृत्व मिति वैयाकरणनव्याः। 'चैत्रः पचति, घटो भवती' त्यादौ चैत्रघटादौ पाक-भवनादिरूपव्यापाराश्रयत्वा ल्लक्षणसमन्वयः। व्यापारपदोपादाना न्न फलाश्रये कर्मण्योदनादा वतिव्याप्तिः। पाचयति चैत्रो मैत्रेणेत्यादौ पाकस्य णिजर्थस्य चोभयो र्धातूपात्तव्यापारत्वा त्तदाश्रययो रुभयोरपि कर्तृत्वोपपत्तिः। परंतु चैत्रवृत्त्येव कर्तृत्वं तिङुपात्तमिति तस्यैव तदुपात्तसंख्यान्वयो, नतु मैत्रस्य, न चैवं चैत्रोमैत्रं गमयतीत्यत्र मैत्रे कर्तृत्वापत्तिः, तस्मिन्नपि तद्व्यापारसत्त्वेने ष्टत्वात्। तृतीयाया स्त्वनुशासनबलात्कर्मसंज्ञा-वरोधा न्न प्रसङ्गः। एवं स्थाली पचतीत्यादौ स्थालीनिष्ठव्यापारस्यैव धातुनोक्तत्वात्कर्तृत्वा-विरोध-इत्याहुः।**

**जीवेऽव्याप्तेरिति** "एष एवकारयती" त्यादिश्रुतिभिरीश्वरे कारकत्वसत्त्वेन तदीयप्रेरणाजन्य-व्यापाराश्रयत्वस्यैव जीवेसत्त्वादव्याप्तिः। "कर्ता शास्त्रार्थवत्त्वा" 2-3-33 दित्यादिशास्त्रप्रामाण्येन तस्य

तत्रेष्टत्वात्। एतच्च सर्ववेदान्तिसंमतम्। अर्द्वैतिनाम प्यविद्यादशायां तस्य संमतत्वादिति भावः। दोषान्तरमाह – **दण्डजन्येति** कारकान्तरजन्यव्यापारानाश्रयत्वस्य विशेषणदलार्थत्वेन प्रकृते तादृशसंयोगरूपव्यापारानाश्रयत्वा भावा त्कुलालेऽव्याप्तिरिति भावः।

वैयाकरणमत मुत्थापयति – **अत इति** प्राचीनोक्तलक्षणस्यायुक्तत्वादित्यर्थः। **ननु वितता स्तन्तव** स्तन्त्रम् = संनिवेशविशेषविशिष्ट स्तन्तुसमूहः। स्वं = स्वीयं तन्त्रं यस्येतिव्युत्पत्त्या **स्वतन्त्रशब्द** स्तन्तुवायवाचकः। तथाच स्वतन्त्रः = तन्तुवायः कर्ता = कर्तृसंज्ञकः स्यादितिसूत्रार्थलाभेन तन्तुवायस्यैव सूत्रेण कर्तृसंज्ञापत्तौ चैत्रो ग्रामं गच्छतीत्यादौ चैत्रादे स्तत्संज्ञानापत्तिः। तन्तुवाया त्पटं गृह्णातीत्यत्र परत्वादपादानत्वबाधेन तन्तुवायस्य कर्तृत्वापत्तिश्चेत्यतो विवक्षितार्थमाह – **धातूपात्तेति** अयमर्थः – अधिकृतेन कारके इत्यनेन क्रियामात्रोपस्थिते स्तस्मिंश्च तन्तुवायस्य तन्तुवायत्वेन रूपेणानुपयोगाद् बहुलक्ष्यसंस्कारानुरोधाच्च सूत्रे स्वतन्त्रशब्दो धातूपात्तव्यापाराश्रयपरो गृह्यते, न तु तत्तुवायवाचकः। उक्तं च वाक्यपदीये भर्तृहरिणा –

"धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते" इति।धातुना उक्तक्रिये = धातूपात्तव्यापाराश्रये कारके कर्तृता = कर्तृसंज्ञा नित्यमिष्यत इति तदर्थः। सर्वेष्वपि-कारकेषु फलोत्पत्त्यनुकूला व्यापारा विद्यन्ते। तत्र यत्कारकनिष्ठो व्यापारो धात्वर्थत्वेन विवक्ष्यते, तस्य कर्तृसंज्ञा विधीयत इति न दोष इति भावः। **कर्तृत्वमिति** कर्तृसंज्ञेत्यर्थः। कुविन्दादौ वयनरूपधात्वर्थव्यापाराश्रयत्वा त्कर्तृत्वम्। **कुठारेण छिनत्तीत्यादै** कुठारनिष्ठव्यापारस्य धात्वर्थत्वेना विवक्षणा न्न दोषः। तन्निष्ठव्यापारस्य तत्त्वेन विवक्षायां तु कुठारश्छिनत्तीति कर्तृत्वमिष्टमेव। जीवेपि तद्वाक्योपात्त धात्वर्थव्यापाराश्रयत्वविवक्षणात्कर्तृत्वं नाव्याप्तम्।

एतच्च लक्षणं भूषणकृतः कौण्डभट्टस्य संमतम्। तन्मते पच्यते तण्डुलः स्वयमेवेत्यादौ **कर्मकर्तरि** विक्लित्त्यादौ फलेपि व्यापारत्वारोपेण तद्रूपव्यापाराश्रयत्वेन तण्डुलादेः कर्तृत्वसिद्धेः। अध्यारोपितप्रेषण-पक्षवादी खलु कौण्डभट्टः। निवृत्तप्रेषणपक्षवादि भट्टोजिदीक्षितमते निरुक्तस्थले व्यापारस्य धात्ववाच्यत्वा त्तण्डुलादेः कर्तृत्वासिद्धिः। अतस्तन्मते प्रधानधात्वर्थाश्रयत्वं कर्तृत्वमिति स्वीकार्यम्। स्पष्टंचेदं "स्वतन्त्रः कर्ता" 1-4-54 तिसूत्रे शब्दकौस्तुभे। धात्वर्थे प्राधान्यं च कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वम्। एतच्च विस्तरेण निरूपितं भूषणसारव्याख्यायां मदीयतत्त्वदर्शिन्याम्।

लक्ष्येलक्षणं संगमयति – **चैत्रः पचतीति** घटो भवतीत्यत्रोत्पत्ति र्भूधात्वर्थः। लक्षणे व्यापारपदग्रहणस्य फलमाह – **व्यापारपदेति** 'इतरकारकाप्रयोज्यत्वे' इति प्राचीनोक्तलक्षणं प्रयोज्यकर्तर्यव्याप्तमिति सूचयन् स्वमते हेतुमण्यन्ते प्रयोज्यप्रयोजकयो रुभयोरपि कर्तृत्वमुपपादयति – **पाचयतीति** पाकस्य = प्रयोज्यनिष्ठस्य विक्लित्त्यादिफलानुकूलस्य फूत्कारादिव्यापारस्य। णिजर्थस्य = प्रकृत्यर्थानुकूलस्य प्रयोजकनिष्ठस्य प्रेरणारूपस्य। उभयोः = निरुक्तरीत्या प्रदर्शितयोः। **धातूपात्तेति** पचादेः "भूवादयो धातवः" 1-3-1 इत्यनेन 'पाचि' इत्यादे र्यन्तस्य "सनाद्यन्ता धातवः" 3-1-28 इत्यनेन च धातुसंज्ञाविधानात्तदुपात्तव्यापारत्वाविशेषादित्यर्थः। तदाश्रययोः = तादृशव्यापाराश्रययोः। उभयोरपि = प्रयोज्यप्रयोजकयो रुभयोरपि। कर्तृत्वोपपत्तिः = कर्तृसंज्ञाया उपपत्तिः। नन्वेव मुभयोरपि तिङाभिधाना दुभयत्रापि प्रथमापत्तिः। कर्तृद्वित्वमादाय द्विवचनापत्त्या पाचयतीत्येकवचनानुपपत्तिश्चेत्यत आह – **परंत्विति** चैत्रवृत्त्येव = चैत्रादिप्रयोजककर्तृवृत्त्येव। **तिङुपात्तमिति** तिङ्प्रकृतिभूत णिजन्त धातूपात्तप्रेरणारूपव्यापारनिमित्तकमेवेत्यर्थः। तस्यैव = प्रयोजककर्तुरेव। एवेन प्रयोज्यकर्तु मैत्रादे र्व्यावृत्तिः। **तदुपात्तेति** तिङुपात्त संख्यासंबन्ध इत्यर्थः। एवशब्दव्यावर्त्यमेव दर्शयति **नतु मैत्रस्येति**

प्रयोज्यकर्तुरित्यर्थः। अयमर्थः — पाचयतीत्यादौ णिजर्थस्य प्रकृत्यर्थापेक्षया प्रधानत्वा त्तन्निमित्तिकायाः कर्तृसंज्ञायाः प्रधानत्वात् "प्रधानकर्तरि लादयो भवन्ती" त्यादि "सहयुक्तेऽप्रधाने" 2-3-19 इतिसूत्रस्थ भाष्योक्तरीत्या प्रधानकर्तरि लकारप्रवृत्त्या तेन तत्कर्तुरभिधाना त्प्रातिपदिकार्थमात्रे प्रथमा। तत्सामानाधिकरण्यात्तद्गतसंख्याबोधकत्वमेव तिङः। अप्रधानकर्तुः प्रयोज्यस्य तिङानभिधाना त्तत्र तृतीया। अत एव 'गुरुः शिष्याभ्यां पाचयती' त्यादौ प्रयोज्ये भिन्नसंख्यात्वेपि न दोष इति। निरुक्तरीत्याश्रयणेऽतिप्रसङ्ग माशङ्कते — **नचेति** एवम् = हेतुमण्ण्यन्ते प्रकृत्यर्थव्यापाराश्रयस्यापि कर्तृत्वस्वीकारे। मैत्रे = प्रयोज्ये। **कर्तृत्वापत्तिरिति** उत्तरदेशसंयोगानुकूलव्यापारस्य गम्यर्थतया तदाश्रयत्वेन प्रयोज्यस्य कर्तृत्वापत्त्या चैत्रो मैत्रेण पाचयतीतिवद् गमयति चैत्रो मैत्रमिति प्रयोगापत्तिरिति भावः। समाधत्ते — **तस्मिन्नपीति** गम्यादिप्रकृतिकण्यन्तस्थले प्रयोज्येपीत्यर्थः। तद्व्यवहारस्य कर्तृत्वव्यवहारस्य। अत एव णौ तस्य कर्मत्वसिद्धिः, अणौ कर्तुरेव णौ तद्विधानादिति भावः। तर्हि तत्र स्तृतीयापि स्या, दित्यत आह — **तृतीयायास्त्विति** अस्य 'न प्रसङ्ग' इत्यत्रान्वयः। **अनुशासनबलादिति** "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" 1-4-52 वित्यनुशासनेन गत्याद्यर्थकधातु-समभिव्याहारे अणौ कर्तुः णौ कर्मत्वं विधीयते। तच्च कर्तृसंज्ञाबाधकमित्याह — **कर्मसंज्ञावरोधादिति** कर्मसंज्ञया कर्तृसंज्ञाया अवरोधादित्यर्थः। **न तृतीयेति** विभक्त्युत्पत्तौ तत्तत्संज्ञाया एव नियामकत्वा त्प्रकृते संयोगानुकूलव्यापाराश्रयत्वेन प्रयोज्यस्य प्राप्तां कर्तृसंज्ञां बाधित्वा "गतिबुद्धी" त्यादिना कर्मसंज्ञाया एव प्रवृत्ततया तन्निमित्तिका द्वितीयैव प्रवर्तते, न तृतीया। पाचयतियोगेतु "गतिबुद्धी" त्यादेरप्राप्त्या प्रयोज्यस्य कर्तृसंज्ञाया एव सत्त्वात् तृतीयेति विशेषः। लक्षणे व्यापारस्य प्रवेशेन तस्य च चेतनाचेतननिष्ठतया चैत्रादेरिवाऽचेतनस्थाल्यादेरपि कर्तृत्वं निराबाधमित्याह **एवमिति** चैत्रादाविवेत्यर्थः। **स्थाली-पचतीत्यादाविति** आदिना काष्ठानि पचन्ति, तण्डुलः पच्यते स्वयमेवेत्यादे र्ग्रहणम्। **स्थालीनिष्ठेति** तन्निष्ठो य स्तण्डुल धारणादिरूपोव्यापार, स्तस्यैवेत्यर्थः। एवशब्देन चैत्रादिनिष्ठफूत्कारादिव्यापारस्य व्यावृत्तिः। लक्षणे कृते निवेशेन स्थाल्यादीनां कर्तृत्वासिद्धिरिति बोध्यम्। तदाह — **कर्तृत्वाविघात इति** एवं च चैत्रीयव्यापारस्यैव पच्याद्यर्थत्वविवक्षायां तण्डुलकाष्ठस्थालीना कर्मकरणा धिकरणसंज्ञा एव स्युः। चैत्र स्तण्डुलं काष्ठैः स्थाल्या पचतीति प्रयोगः। चैत्रीयव्यापारस्य पच्याद्यविवक्षया तण्डुलादिनिष्ठ-व्यापारस्यैव तत्त्वेन विवक्षायांतु प्रयोगान्तरे तेषां कर्तृत्वमेव-तण्डुलः पच्यते स्वयमेव, काष्ठानिपचन्ति, स्थालीपचतीत्यादयः प्रयोगाः। ब्राह्मणाय गां ददाति, वृक्षात्पर्णं पततीत्यादौ संप्रदानापादानयो र्ब्राह्मणवृक्षयो स्तदाप्यनया रीत्या प्रयोगान्तरे कर्तृत्वम्। तन्निष्ठव्यापारस्य ददातिपततिधात्ववाच्यत्वात्। शब्दशक्तिस्व भाव त्वीजमिति दिक्।

(वैयाकरणनव्यमतनिराकरणम्।)

**तत्र, चैत्रो न पचति, भूतले घटो नास्तीत्यादौ धातूपात्तव्यापारा भावाश्रये चैत्रादावव्याप्तेः। न च तत्र चैत्रवृत्तिः पाकोऽभावप्रतियोगीति भूतलवृत्तिघटनिष्ठा सत्ताऽभावप्रतियोगिनीत्येवं शाब्दबोधाङ्गीकारा न्नाव्याप्तिः। ह्रदेवह्निर्नास्तीत्यादौ प्रतियोगितावच्छेदकावच्छिन्नप्रति-योगिनोऽ प्रसिध्याऽव्याप्त्यापत्तेः। न च तत्र वह्निवृत्तिसत्ता ह्रदवृत्त्य भावप्रतियोगिनीत्येवं शाब्दबोधाङ्गीकारा त्तन्निवारणम्, तथात्वेपि 'शुक्लोघटो भवती' त्यादौ शुक्लगुणस्यैव भवनाश्रयत्वेन तत्रा तिव्याप्तिप्रसङ्गात्, घटेऽव्याप्तेश्च। अथ तत्र विशेषणविशेष्ययो रुभयो र्भवनाश्रयत्वम्। तदा 'चक्रे घटो भवती' त्यादौ चक्रस्यापि तदापत्तिः। अथ यद्धात्वर्थाश्रयत्वेन यो विवक्षितः स तत्कर्तेत्युच्यते, चक्रे च विवक्षाभावान्नातिप्रसङ्गः तदा 'पटो घटो ने' त्यादावन्योन्याभावप्रतियोगिनि घटादौ धात्वर्थाश्रयत्वा भावादव्याप्तिः।**

वैयाकरणमतमपि दूषयति **तन्नेति** तदपि नेत्यर्थः **अव्याप्तेरिति** विक्लित्त्यनुकूलव्यापाराभाववांश्चैत्र इति ततो बोधेन चैत्रे व्यापाराश्रयत्वाभावात् तत्र लक्षणमव्याप्तम्। एवं सत्ताऽभाववान् घटो भूतलवृत्ति रितिबोधेन व्यापाराश्रयत्वाभावा दचेतने घटेऽव्याप्तम्। धात्वर्थस्य नञर्थाभावे तस्य च चैत्रादावन्वयादिति भावः। अव्याप्तिमुद्धर्तुं शङ्कते – **नचेति** तत्र = नञ्समभिव्याहृतनिरुक्तस्थले। **चैत्रवृत्तिरिति** चैत्रस्य धात्वर्थे तस्य च नञर्थाभावे न्वया न्न दोष इत्याशयः। तदाह – **नाव्याप्तिरिति** चैत्रघटयो र्धात्वर्थाश्रयत्वात्कर्तृलक्षणस्य तत्र नाव्याप्तिरिति भावः। अप्रसिद्धप्रतियोगिकाभावस्थले तल्लक्षण मव्याप्तमित्याह – **ह्रदेवह्निनरिति** महानसाद्यन्तर्भावेण प्रतियोगिप्रसिद्धे रप्रसिद्धिकथनमनुचित. मत आह –**प्रतियोगितावच्छेदकेति** ह्रदेवह्निर्नास्तीत्यत्र ह्रद वृत्तिवह्निर्निष्ठसत्ताऽभावप्रतियोगिनीति-शाब्दबोधो वक्तव्यः। तत्र ह्रदवृत्तित्वविशिष्टवह्निनिष्ठसत्तारूपप्रतियोगितावच्छेदकविशिष्टप्रति-योगिनोऽप्रसिध्द्या तत्रा भावप्रतियोगित्वबोधासंभवाद् वह्न्यदा वव्याप्तिरिति भावः। अव्याप्ति मुद्धर्तुं शङ्कते – **नचेति** तत्र = ह्रदेवह्नि र्नास्तीत्यत्र। **शाब्दबोधेति** ह्रदस्यनञर्थेऽभावे तस्य च सत्तायां तत्र च वह्ने रन्वयेन वह्निवृत्तिसत्ता ह्रदनिष्ठाभावप्रतियोगिनीतिशाब्दबोधाङ्गीकारेण वह्नेर्धात्वर्थसत्ता श्रयत्वस्य निराबाधत्वा त्तत्र कर्तृत्वं नाव्याप्तमित्याशयः। नञ्समभिव्याहारे निरुक्तरीत्या दोषवारणेपि विशेषणविशेष्यसमभिव्याहारे विशेषणेऽतिव्याप्ति लक्षणस्य, विशेष्येऽव्याप्तिश्चेत्याह **तथात्वेपीति** नञ्स्थले दोषवारणेपीत्यर्थः। तत्र = विशेषणे। **अतिव्याप्तेरिति** वैयाकरणमते धात्वर्थभवनाश्रयत्वेन कर्तृत्वं वाच्यम्। स्वरूपेण घटः सिद्ध एव। तत्र शुक्लरूपसंबन्धप्रतिपादकमिदं वाक्यम्। घटः स्वरूप धारयन् शुक्लरूपेण भवतीति तदर्थः। तथाच भवनाश्रयत्वं गुणे एवेति शुक्लस्य कर्तृत्वापत्ति तदनाश्रयत्वाद् घटे तदनापत्तिरिति भावः। उभयोरपि कर्तृत्वं मनसिकृत्याह – **अर्थेति भवनाश्रयत्वमिति** एकतरपरित्यागेनान्यस्यावर्तना दुभयोरपि भवनाश्रयत्वेन कर्तृत्वमिति भावः। व्यधिकरणविशेषणस्थले दोषमाह – **चक्रेघट इति तदापत्तिरिति** कर्तृद्वारा चक्रस्यापि क्रिया-श्रयत्वात्कर्तृत्वापत्तिरित्यर्थः। इमंदोषमुद्धर्तुमाह **अर्थेति विवक्षाभावादिति** घटस्य भूधात्वर्थभवना-श्रयत्वविवक्षा, न चक्रस्य। चक्रस्यैव तत्त्वेन विवक्षायां तु चक्रं भवतीति तस्य कर्तृत्वमेवेति भावः। अन्योन्या भावार्थकनञ्स्थले दोषमाह – **घटः पटोनेति** अत्र पटभेदोघटे प्रतीयते। न तत्र धात्वर्थाश्रयत्व मिति भावः।

**न च तत्र भवतिपदाध्याहारेण घटपटोभयवृत्तितादात्म्यभवनं भूधातुना लक्षयित्वा तादृशभवनमभावप्रतियोगीति शाब्दबोधाङ्गीकारा दर्थाच्चान्योन्याभावाभावबोधोपपत्ते, स्तदात्मत्वेन भवनस्योभयवृत्तित्वा दुभयकर्तृत्वोपपत्तिरिति वाच्यम्। तथात्वे उभयत्रापि तिङुपात्तसंख्याकत्वापत्तेः 'घटो न पटा' विति प्रयोगानापत्तेः।**

तत्र = घटः पटोनेत्यत्र, **लक्षयित्वेति** एवंच लक्षणयोपस्थापितधात्वर्थाश्रयत्वेना नुयोगिनो घटस्य प्रतियोगिनः पटस्य च कर्तृत्वं सिध्यतीति भावः। तादृशभवनम् = घटपटो भयभवनम्। नन्वेवं घटपटयोरन्योन्याभावबोधानापत्तिरित्यत आह – **अर्थाच्चेति** अर्थापत्तिप्रमाणादित्यर्थः। घटपटो भयतादात्म्य भवनस्यात्यन्ता भावप्रतियोगित्वस्य तयोर्भेदं विनाऽनुपपन्नतया तत्सामर्थ्यात्तयोर्भेदबोध सिध्यतीति भावः। तथात्वे = उभयोरपि भूधात्वर्थाश्रयत्वे। **तिङुपात्तसंख्याकत्वेति** निरुक्तरीत्योभयो कर्तृत्वे तिङुपात्त संख्यान्वयस्यापि तत्रैव वक्तव्यतया प्रतियोग्यनुयोगिनोरुभयोरपि समानवचनकत्वा-पत्तिः। तथाच घटः पटोनेत्यस्योपपत्तावपि घटो नपटाविति भिन्नवचन घटितस्य प्रयोगस्यानुपपत्तिरिति भावः। तदेतदाह **घटो नपटाविति प्रयोगानापत्तिरिति।**

**एतेन-घटो न पट इत्यत्र घटपदं घटप्रतियोगिकान्योन्या भाववल्लक्षकम्। नञ्पदं च तात्पर्यग्राहकम्। अन्वयश्चो भयोरपि 'शुक्लोघटः 'अघटः पट' इतिवत्पार्ष्टिका भेदसंबन्धमादाय विशेषणविशेष्य भावेन वाऽध्याहृतक्रियाया-मित्यपास्तम्। तथात्वे तद्वदेव ''घटो न पटावि'' ति प्रयोगानापत्तेः। ''घटो नश्यती'' त्यादौ कथमपि कर्तुत्वानुपपत्तेश्च।**

भेदस्थले प्रकारान्तरेण कर्तृत्वमुपपादयतां मतं निराकरोति – **एतेनेति** घटोन पटाविति प्रयोगसिध्द्यना-पत्त्येत्यर्थः। नन्वेवं नञ्पदानर्थक्य मत आह **नञ्पदमिति** उभयोरपि = घटपदलक्षितस्य पटपदार्थस्य च। **शुक्लोघट इति** विशेषणस्यापि मीमांसकमते भावनायामेवान्वया त्सत्ताश्रयत्वं शुक्लवृत्तीत्येव प्राथमिको बोधः। तयो रभेदान्वयानुभवमुपपादयति **पार्ष्टिकाभेदेति** परैरेव मनङ्गीकारा दाह – **विशेषणविशेष्यभावेनवेति** एतेनेत्यस्यार्थमाह – **तथात्वे इति** वैयाकरणमते वज्रलेपायितं दोष माह – **घटो नश्यतीति** नाशाश्रयत्वस्य घटादौ कदाप्यसंभवादिति भावः। तदाह – **कथमपीति**

## (स्वमतेन कर्तृत्वनिर्वचनम्।)

**अतो यद्धात्वर्थावच्छिन्नलिङ्गानन्वयिपदोपस्थाप्यार्थाश्रयत्वं यस्य, तस्य तत्कर्तृत्वम्। अस्ति चेदं 'पच्यते चैत्रेणः, पचति चैत्र' इत्यादौ। चैत्रस्य धात्वर्थावच्छिन्नकृत्याश्रयत्वात्। कर्मलकारेणापि कृतेरुक्तेः। 'घटो भवती' त्यादावाख्यातेना श्रयत्वस्य लक्षणात्, घटो नश्यतीत्यादौ प्रतियोगित्वस्य तेन लक्षणात्, तत्रापि लक्षणसमन्वयः। अवच्छिन्नत्वं च स्वरूपसंबन्धविशेषः, नतु जनकत्वाद्येव। तेन प्रतियोगित्वादे र्नाशाजनकत्वेपि न क्षतिः, चैत्रः पाचकः पक्तेत्यादौ कृतैव पाकानुकूलकृते र्लिङ्गानन्वयिन्या उक्तत्वा त्तस्य कर्तृत्वोपपत्तिः, चैत्रस्य पाक इत्यादिघञन्ते घञर्थे लिङ्गान्वयेपि पचिधातुनोक्तस्य लक्षणया पाकावच्छिन्नव्यापारस्य लिङ्गानन्वया त्तदाश्रये चैत्रे कर्तृत्वाविरोधः। घञावा लक्षणया कृतेः, शक्त्या पाकाख्यस्य भावस्योक्तेः पाकावच्छिन्नकृतिसाध्यः पाक इति शाब्दबोधः। कृतौ चैत्रस्यान्वया त्कर्तृत्वोपपत्तिः। शेषे षष्ठीत्वाद्वा कर्तृत्वाभावेपि न क्षतिः। प्रधानभूताध्याहृतक्रियायामेव च तस्यान्वयः। 'चैत्रस्य पाककृति' रित्यादिप्रयोगोपपत्त्यर्थं चेद मावश्यकम्। चैत्रेण कृत इत्यादिकर्मकृत्स्वपि धातुना पाकानुकूलव्यापारस्यैव वस्तुत उक्ते स्तदाश्रयत्वेन चैत्रे कर्तृत्वाविघातः। एवं पाचयति चैत्रो मैत्रेणेत्यादावपि मैत्रस्य धातूक्तपाकानूकूलकृत्याश्रयत्वा त्कर्तृत्वम्। चैत्रस्य त्वाख्यातोपात्तकृत्याश्रयत्वादेव। अत्र पाकं कारयतीति विवरणात्कृत्य-नुकूलव्यापारो णिजर्थ इति लक्षणसमन्वयः।**

एवं वैयाकरणमतं दर्शयित्वा स्वसिद्धान्तेन तल्लक्षणमाह – **अत इति** वैयाकरणोक्तकर्तृलक्षणस्या व्याप्त्यादिदोष दुष्टत्वादित्यर्थः, **यद्धात्वर्थेति** यद्धात्वर्थावच्छिन्नो लिङ्गानन्वयी पदोपस्थाप्यश्च योर्थः, कृतिप्रतियोगित्वाश्रयत्वादिरूपः, तदाश्रयत्वमित्यर्थः, यस्य = चैत्राद्यर्थस्य; तत्कर्तृत्वम् = तद्धात्वर्थ कर्तृत्वम्। लक्ष्ये संगमयति **अस्तिचेदमिति** इदम् = निरुक्तं कर्तृत्वम्। **धात्वर्थेति** कर्मलकारेधात्वर्थ व्यापारः, कर्तृलकारेर्विक्लृत्त्युनकलव्यापारः, तदवच्छिन्ना या कृति स्तदाश्रयत्वादित्यर्थः। ननु कर्मलकार फलस्या ख्यातार्थतया कृते रवाच्यतया कथं तदाश्रयत्वेन चैत्रादेः कर्तृत्व, मत आह – **कर्मलकारेणापीति कृतेरुक्तेरिति** ओदनः पच्यते चैत्रेणेत्यादौ पच्यते पाकः क्रियते इति कृत्यर्थककर्माख्याता विवरणात् कर्मलकारस्यापि कृतिवाचकत्वादित्यर्थः, फलं तु न कस्यापि वाच्यम्, किंतु संसर्गलभ्य मित्याख्यातार्थस्यान्वयनिरूपणावसरे ग्रन्थकृतान्वक्ष्यमिति बोध्यम्। ननु घटो नश्यतीत्यादौ वाख्यातस्य

प्रतियोगित्वे लाक्षणिकतया तस्य च नाशाजनकत्वेन तत्र जनकत्वरूप धात्वर्थतावच्छेदकत्वस्या भावाद् घटादा वव्याप्ति, रत आह — **अवच्छिन्नत्वं चेति** स्वरूपसंबन्धविशेषः = तत्तत्संबन्धरूपः। नन कर्तृकृदन्तस्थले "कर्तरि कृत्" 3-4-67 इत्यनुशासनेन प्रत्ययस्य धर्मिवाचकतया कृते रभावा त्तदाश्रयत्वेन कथं चैत्रादेः कर्तृत्व, मत आह — **चैत्रः पाचक इति** कृतैव = ण्वुल्तृजादिकृत्प्रत्ययेनैव। **उक्तत्वादिति** कृतो धर्मिवाचकत्वेपि तदपेक्षितायाः कृते र्लक्षणया तेनो क्तत्वादित्यर्थः, पचतीत्यादा वाख्याते भावनाया वाच्यत्वं-तदपेक्षितस्य कर्तुर्लक्ष्यत्वम्, कृतितु कर्तु र्वाच्यत्वं भावनाया लक्ष्यत्वमिति मीमांसकसिद्धान्तादिति भावः, तस्य = चैत्रादेः। चैत्रः पाचक इत्यादौ चैत्रादेः पाककर्तरि पार्ष्टिकोऽभेदान्वयः, न तु लक्षितायां कृतौ, अतस्तस्या लिङ्गानन्वयित्वा त्तदाश्रयस्य कर्तृत्वाविघातः। नन्वेव मपि भावार्थकघञ्क्तिन्ल्यडा-द्यन्तस्थले प्रत्ययार्थस्य पुंस्त्वादिलिङ्गनियमसत्त्वा त्तत्समभिव्याहारे चैत्रादेः कर्तृत्वानापत्ति, रत आह— **चैत्रस्य पाक इत्यादाविति** आदिना चैत्रस्य पक्तिः पचनम्, लव इत्यादेर्ग्रहणम्। अत्र कृताकर्तुरनभिधानात् कर्तरि तृतीयाबाधनेन "कर्तृकर्मणोः कृती" 2-3-65 ति षष्ठी। **लिङ्गान्वयेपीति** "पुंसि संज्ञायां घ प्रायेण" 3-3-118 "स्त्रियांक्तिन्" 3-3-94 इत्यादिशास्त्रेण लिङ्गान्वयित्वबोधनादित्यर्थः। तदाश्रये तादृशधात्वर्थाश्रये। नन्विदमयुक्तम्, कारकाणां धात्वर्थान्वयस्या व्युत्पन्नत्वा, दत आह **घञा इति शाब्दबोध इति** धात्वर्थः पाकः, तदनुकूला कृति र्लक्षणया घञर्थः। शक्त्या पाकोपि, कृतिपाकयो साध्यसाधनभावः संबन्ध इति भावः। षष्ठीप्रकरणे 'केचित्त्वि' त्यादिवक्ष्यमाणमतरीत्याह — **शेषषष्ठीत्वाद्वेति** शेषषष्ठ्यन्तार्थस्या कारकत्वान्न क्रियायामन्वयः किंतु नामार्थ एवेति तार्किक शाब्दिकप्राचीनमीमांसकाना मुक्तिरयुक्तेति सूचयन्नाह — **प्रधानभूतेति** तस्य = शेषषष्ठ्यन्तार्थस्य। **अन्वय इति** अन्यथा षष्ठीभिन्नसुबर्थस्थले एकाव्युत्पत्तिः, षष्ठीस्थलेचान्येति व्युत्पत्तिद्वयकल्पनापत्तिः, एतच्च षष्ठीप्रकरणे "वस्तुतस्त्व" त्यादिना ग्रन्थकृता प्रदर्शयिष्यते। शेषषष्ठ्याश्रयणस्यावश्यकतां दर्शयति — **चैत्रस्य कृतिरिति** पाचयतीत्यादिण्यन्तसमभिव्याहारे प्रयोज्यप्रयोजकयो रुभयोरपि कर्तृत्वमुपपादयति — **एवमिति** मैत्रस्य = प्रयोज्यस्य। **धातूक्तेति** धातुः = पचिः, तत्प्रकृतिकण्यन्तश्च तत्र पाकः पचेरर्थः, कृत्यनुकूलव्यापारो णिचोर्थः। णिजर्थकृत्याश्रयत्वेन तस्य कर्तृत्वमित्यर्थः। चैत्रस्य = प्रयोजकस्य। एवशब्दः प्रसिद्धिद्योतकः, ननु णिचः प्रेरणार्थकतया कृत्यर्थकत्वाभावात्कथं प्रयोज्यस्य कृत्याश्रयत्वेन कर्तृत्व मत आह — **अत्रेति** ण्यन्ते इत्यर्थः। **विवरणादिति** कृत्यर्थककरोतिना विवरणादित्यर्थः। **णिजर्थ इति** एवं च णिजर्थैकदेशकृत्याश्रयत्वेन प्रयोज्यस्य, आख्यातार्थकृत्याश्रयत्वेन प्रयोजकस्य च कर्तृत्वं सिद्धमिति भावः।

**कर्मलकारस्थले च फलस्य संसर्गमर्यादयैव भानाङ्गीकारेण पदोपस्थाप्यत्वा भावा त्र तदाश्रय ओदनेऽति व्याप्तिः। विक्लिद्यन्ति तण्डुला इत्यादावाख्यातेन धात्वर्थाश्रयत्वलक्षणा त्तद्वति तण्डुले ना व्याप्तिः। एवं स्थाली पचतीत्यादावपि धातुना स्थालीनिष्टस्यैव व्यापारस्योक्ते र्न कर्तृत्व विघातः। कर्मकर्तृस्थले च फलस्यैवा स्मिन् पक्षे आख्यातेन लक्षणा दोदनस्य कर्तृत्वाविघातः। तत श्च वस्तुपदाभिधेय भावनाया श्चैत्रान्वयवारणार्थं लिङ्गानन्वयीति।**

लक्षणघटकदलानां सार्थक्यं दर्शयति — **कर्मलकारेति** पदोपस्थाप्येत्यस्य प्रयोजनं दर्शयति — **फलस्येति** विक्लित्त्यादेः फलस्येत्यर्थः, **संसर्गमर्यादयैवेति** चैत्रेणौदनः पच्यते इत्यादौ कर्माख्याते तदर्थैकत्वादि संख्यायाः स्वाश्रयभूतकर्मवृत्तिफलप्रयोजकत्वसंबन्धेन भावनायामन्वयः। स्वं = संख्या, विक्लित्त्यादिफलत्वेन न कस्यापि पदस्यार्थ इति भावः। तदाह — **पदोपस्थाप्यत्वा भावादिति** अधिकरणस्य कर्तृत्वविवक्षास्थले लक्षणं संगमयति **एवमिति स्थालीपचतीति** सौकर्यद्योतनाय चैत्रादिव्यापारस्य धात्वर्थत्वाविवक्षया स्थाल्यादिनिष्ठव्यापारस्यैव तत्त्वविवक्षायां स्थाल्यादीनामपि कर्तृत्वमिष्ट मिति बोध्यम्। आदिपदेन

काष्ठानिपचन्तीत्यादे र्ग्रहणम् **स्थालीनिष्ठस्येति** तण्डुल धारणरूपस्य व्यापारस्येत्यर्थः। काष्ठानि पचन्तीत्यत्र काष्ठनिष्ठज्वलनस्य धात्वार्थत्वा त्तेषां कर्तृत्वं बोध्यम्। **कर्मकर्तृस्थल इति** चैत्र स्तण्डुलं पचतीति प्रयोगे तण्डुलस्यकर्मत्वम्। पाकक्रियागतसौकर्यद्योतनाय चैत्रीयव्यापारस्य धात्वर्थत्वाविवक्षया तण्डुलनिष्ठव्यापारस्यैव तत्त्वाविवक्षायां तस्य कर्तृत्व मिष्टम्। तण्डुलः पच्यते स्वयमेवेति तत्प्रयोगः। अत्र "कर्मवत्कर्मणा तुल्यक्रियः" 3-1-87 इत्यतिदेशेन आत्मनेपदादिकम्। तदुपपत्तिं दर्शयति **फलस्यैवेति** विक्लित्त्यादिफलस्यैवेत्यर्थः। कर्तृत्वमखण्डोपाधिरूपमिति "वस्तुतस्त्वि" त्यादिवक्ष्यमाणकल्पे लक्षणाया अभावादाह — **अस्मिन् पक्षे इति** कर्तृत्वं सखण्डोपाधिरूपमित्यस्मिन् पक्ष इत्यर्थः। **कर्तृत्वाविघात इति** लक्षितविक्लृत्त्याश्रयत्वात्कर्तृत्वं सिध्यतीति भावः। तथाच स्थाली पचतीत्यादावधिकरणकर्तरि, काष्ठानिपचन्तीत्यादौ करणकर्तरि, तण्डुलः पच्यते स्वयमेवेत्यादौ कर्मकर्तरि च कर्तृत्वं निष्प्रत्यूहमिति बोध्यम्। **ततश्चेति** तच्छब्दात्सप्तम्यन्तात्सार्वविभक्तिकस्तसिः, तत्रेत्यर्थः। कर्तृत्वलक्षण इति यावत्। **वस्तुपदेति** वस्तु व्यक्तिः पदार्थ इत्यादिपदोपात्त भावनाया इत्यर्थः। **चैत्रान्वयेति** चैत्रान्वये प्रसक्त कर्तृत्ववारणार्थमित्यर्थः।

## (नञ्घटितस्थलेषु कर्तृत्वलक्षणसमन्वयः।)

**चैत्रो न पचति भूतले घटो नास्तीत्यादौ चैत्रवृत्तिपाक भावना भूतलाधिकरणकघटसत्ताश्रयत्वं चा भावप्रतियोगीति शाब्दबोधाङ्गीकारा न्न चैत्रादेः कर्तृत्वविघातः। अभावे चैत्रवृत्तित्वं समभिव्याहारात्। नञोवा चैत्रवृत्त्य भावलक्षणेति न विरोधः। वायौ रूपं नास्ति, जातौ समवायेन सत्ता नास्ति, ह्रदेवह्निर्नास्ती त्यादौ चोक्तविधशाब्दबोधाङ्गीकारे प्रतियोगिप्रसिध्यनापत्ते रगत्या रूपादिवृत्तितत्तत्संबन्धावच्छिन्नविद्यमानाश्रयत्वं वाय्वादिनिष्ठाभावप्रतियोगीति शाब्दबोधाङ्गीकारान्न रूपादेः कर्तृत्वविघातः। प्रकारान्तरं तु सप्तमीप्रकरणे वक्ष्यते।**

एवं लक्षणघटकपदानां साथक्यं प्रदर्श्य वयाकरणमते नञ्समभिव्याहारे आपादितान् दोषान् स्वमते परिहरति — **चैत्रो न पचतीति चैत्रवृत्ति पाक भावनेति** पचिधात्वर्थावच्छिन्नपाकभावनाश्रयत्वेन चैत्रस्यकर्तृत्वं सिद्धमिति भावः। **अभावप्रतियोगीति** अभावप्रतियोगिनी च अभावप्रतियोगि च अभावप्रतियोगि "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" 1-2-69 मित्यनेन नपुंसकैकशेषः एकवद्भावश्च, पाकभावनाऽभावप्रतियोगिनी, सत्ताश्रयत्वमभावप्रतियोगीति योजना कार्या। ननु पाकभावनायां चैत्रवृत्तित्वेन कर्तृत्वोपपादनेऽभावे चैत्रवृत्तित्वं नावगम्येत, अत आह — **अभावे चैत्रवृत्तित्वमिति** समभिव्याहारात् = नञ्घटित वाक्यवलात् **उक्तविधशाब्दबोधेति** रूपवृत्तिसत्ता वायुवृत्त्यभाव प्रतियोगिनीति शाब्दबोधाङ्गीकार इत्यर्थः, **प्रसिध्यनापत्तेरिति** तथाच रूपादीनां कर्तृत्वानापत्तिरिति भावः। **वाय्वादिनिष्ठेति** वायुनिष्ठाभाव निरूपितनिरूपकतासंबन्धावच्छिन्नप्रतियोगितावदित्यर्थः। यथाश्रुते रूपानिष्ठविद्यमानत्वाश्रयत्वं कदापि वायौ न प्रसक्तमिति वायुनिष्ठाभावप्रतियोगित्वविधानेऽप्रसक्तप्रतिषेध आसद्येतेति बोध्यम्। **प्रकारान्तरमिति** ह्रदनिष्ठाधिकरणतानिरूपकवृत्तित्वाह्निवृत्ति वर्तमानसत्ताश्रयत्वं वह्निनिष्ठाभावप्रतियोगीत्यादिप्रकारान्तरमित्यर्थः।

**घटः पटो नेत्यादौ भवतिक्रियाध्याहाराद् घटपदेन च घटप्रतियोगिकान्योन्याभाववल्लक्षणाद् नञ्पदस्य च तात्पर्यग्राहकत्वात् शुक्लो घटोस्तीतिव त्पार्ष्टिकान्वयलभ्याभेदमादायोभयोः क्रियान्वया दुभयोरपि कर्तृत्वोपपत्तिः।**

भेदार्थकनञ् समभिव्याहारेऽव्याप्तिं वारयति — घटः पटोनेति

**वस्तुतस्तु 'घटो न पटा' वित्यादौ विभिन्नसंख्याकत्वानुपपत्त्या ना भाववल्लक्षणा, अपित्वध्याहृतक्रियावाचकाख्यातेन प्रतियोगित्वाश्रयत्वयो रुभयोरपि लक्षणा, तयोश्च यथातात्पर्यं घटपटान्वयाद् घटपटसंबन्धिनी यथाक्रममन्योन्या भावीये विद्यमानत्वसंबन्धिनी प्रतियोगित्वाश्रयत्वे, इति च शाब्दबोधाङ्गीकारादुभयोः कर्तृत्वोपपत्तिः। परंत्वनुयोगिवृत्ति-संख्यावचनमेवा ख्याते, न तु प्रतियोगिवृत्तिसंख्यावचन मिति नियमोप्यनु भवानुसारेण प्रकृते कल्प्यत इति। नैतादृशोपि बोधः अपितु 'घटो भवति' 'पटौ न भवत' इति क्रियाद्वयाध्याहारेण एकघटवृत्तिभवनाश्रयत्वं पटद्वयवृत्ति भवनाश्रयत्व प्रतियोगिकान्योन्याभाववदित्येवं नञ्पदस्य तात्पर्यग्राहकत्व मङ्गीकृत्य द्वयोराख्यातयोः पश्यमृगोधावतीतिवत् स्वप्रतियोगिकान्योन्या-भाववत्त्वसंसर्गेणान्वयः। मानसश्च भवनाश्रययो र्भेदबोधः, एवं च स्वस्वसंख्यान्वयः कर्तृत्व चोभयोरुपपन्नमिति ध्येयम्। एवं 'सत्ता न समवायेन जातिवृत्ति' रित्यादि प्रयोगा अपि लक्षणाध्याहारादिना व्याख्येयाः, अयोग्यावेत्यन्यत्र विस्तरः।**

अत्र पक्षे प्रतियोग्यनुयोगिनो र्विभिन्नविभक्तिकत्वानुपपत्ति भिया प्रकारान्तरमाह — **वस्तुतस्त्विति** नाभाववल्लक्षणा = घटपदे। **अध्याहृतेति** अध्याहृतभवतिपदघटकाख्यातेनेत्यर्थः। अन्योन्याभावीये अन्योन्याभावनिरूपिते। उभयोः = प्रतियोग्यनुयोगिनोः. **कर्तृत्वोपपत्तिरिति** एकस्य आख्यातलक्ष्यप्रति-योगित्वाश्रयत्वेन अन्यस्य तल्लक्ष्याश्रयत्वाश्रयत्वेन च तत्त्वोपपत्ति रित्यर्थः। भवतीत्येकवचनान्तस्यो-पपत्ति माह — **परंत्विति** अनुभवानुसारेण = अनुभूतप्रयोगानुसारेण। इतिशब्दो "वस्तुत" स्त्वित्यादिपक्षसमाप्तिसूचकः, नियमाश्रयणस्या गतिकगतिकत्वात् तत्परित्यागेन पक्षान्तरमाह — **नैतादृशोपि बोध इति** अस्य 'अथवे' त्यादिः। **अपित्विति** अत्र पक्षे आख्यातस्य आश्रयत्वे लक्षणा, न प्रतियोगित्वेपि। **क्रियापदाध्याहारेणेति** कर्तृवाचकपदानुरोधेन तदध्याहार इति भावः। इत्येवम् = इत्येवं बोधः। आख्यातयोः तदर्थयोः। **पश्यमृग इति** धावनस्य स्वनिष्ठकर्मतानिरूपकतासंबन्धेन दर्शन भावनायामन्वय। तद्वदित्यर्थः। **अन्वय इति** तथाच एकघटवृत्तिभवनाश्रयत्वं स्वप्रतियोगिकान्योन्या-भाववत्त्वसंसर्गेण पटद्वयवृत्ति भवनाश्रयत्ववदिति शाब्दबोध इति बोध्यम्। ननु भवनाश्रययो र्घटपटयो भेदबोधानापत्ति रत आह — **मानस इति** चस्त्वर्थः। भवनाश्रययोः = घटपटयोः। प्रकृतार्थमुपसंहरति **एव चेति** निरुक्तरीत्याश्रयणेनेत्यर्थः। स्वस्वसंख्यान्वयः एकत्वद्वित्वादिसंख्यान्वयः। **कर्तृत्व मिति** आख्यातलक्ष्याश्रयत्वरूपा श्रयत्वमित्यर्थः। **लक्षणाध्याहारादिनेति** प्रतियोगित्वाश्रयत्वयो राख्यातस्य लक्षणास्वीकारे सत्ता जाति जातिसम्बन्धिनी अन्योन्याभावीय समवायसंबन्धावच्छिन्नविद्यमानत्वसंबन्धिनी प्रतियोगित्वाश्रयत्वे इति बोधात्तदुपपत्ति। द्वितीये सत्तानिष्ठसमवायसंबन्धावच्छिन्नविद्य-मानत्वाश्रयत्वं स्वप्रतियोगिकान्योन्याभाववत्त्वसंसर्गेण जातिवृत्तिनिष्ठभवनाश्रयत्ववदिति बोधात्तदुपपत्ति रिति भावः। क्लिष्टकल्पनाश्रयणेन तस्य साधुत्वकल्पनापेक्षयाऽसाधुत्व स्वीकार एव युक्त इत्याशयेनाह **अयोग्यावेति** वा शब्दोऽनास्थायाम्। अत्र याऽऽशर्था सप्तमीप्रकरणे मूल एव स्पष्टं भविष्यति।

(निष्कृष्टार्थकथनम्।)

**अत्रचा श्रयत्वमेव तृतीयाप्रथमातिबादीनामर्थः, अन्यत्तु सर्वं प्रमाणान्तरेण लभ्यमिति ध्येयम्।**

निरुक्तकर्तृत्वस्य तृतीयावाच्यत्वे गौरवादाह **अत्रचेति** कर्तृत्वस्य मध्य इत्यर्थः। तिबादीना मित्यादिपदेन कर्तरिप्रत्ययाना ग्रहणम्। **अन्यदिति** धात्वर्थादिकमित्यर्थः। **ध्येयमिति** अत्रच मूल चारु।

पचति, स्थाली पचति घटो भवतीत्यादौ चैत्रस्येव स्थाल्यादीनामपि कर्तृत्व मविशिष्टं, तल्लक्षणाक्रान्तत्वा दिति बोध्यम्।

**अथवा कृत्याश्रयत्वमेव मुख्यकर्तृत्वम्। यत्नवाचिकृञ्धातुघटितत्वा त्कर्तृशब्दस्य। अन्यत्र कर्तृत्वव्यवहारो भाक्त एव द्रष्टव्यः।**

स्थाल्यादीनां कर्तृत्वं न चैत्रीयकर्तृत्वसदृश मिति वादिनां नैयायिकानां मत माह – **अथवेति कृत्याश्रयत्वमिति** कृतिः = प्रयत्न आत्मधर्मः। अन्यत्र = घटादावचेतने। भाक्तः=निरूढलक्षणया। कृञो यत्नवाचित्वं पूर्वमुपपादितमेव। यद्यपि स्वतन्त्रव्यापारमात्र एव तृतीयादे रनुशासनम्। तथाच पाणिनेः सूत्रम् – "स्वतन्त्रः कर्ता" 1-4-54 "कर्तृकरणयोस्तृतीया" 2-3-18 इति, तथापि लाघवात्कृतिरूपे एव कर्तृत्वे तृतीयादेः शक्तिः, अचेतने निरूढलक्षणया तद्व्यवहारः। अनुशासनं त्वनादितात्पर्यमात्रग्राहक मिति बोध्यम्।

**वस्तुतस्तु "धर्मेचार्थेच कामेच नातिचरितव्या त्वयेयम्" (आपस्तम्ब. गृ. सू 2-21) "पत्युर्नो यज्ञसंयोगे" 4-1-33 "जायापती अग्नीना दधीयाता" मित्यादिप्रमाणान्तरानुरोधात् स्त्रिया अपि यजमानवदेव कर्तृत्वेऽवगते "वसन्ते ब्राह्मणोग्नीना दधीत" "यजेत स्वर्गकाम" इत्यादा वेकत्वश्रवणं निषादस्थपत्यधिकरणन्यायेन लक्षणायां प्रमाणाभावादुभयोर्व्यासज्यवृत्त्येकं कर्तृत्वं गमयति। तच्च न सखण्डोपाधिरूपं, बाधात्। अपितु पूर्वोक्तसखण्डोपाधिव्यापक मखण्डोपाधिरूपं कर्तृत्वम्, तद्गतमेव चैकत्वादिकमित्युक्तं प्राक्। अस्मिंश्च पक्षे कर्मकर्तृस्थलेपि न लक्षणा, अपित्वाख्यातलक्ष्यस्या खण्डोपाधिरूपस्य कर्तृत्वस्यैवा ख्यातोपात्त-कृतावेव स्वसमानाधिकरणफल प्रयोजकत्वसंसर्गेणान्वय इत्युक्तं कौस्तुभे। इदमेव च कर्तृत्वं तृतीयार्थः। तस्य च चैत्रेण पच्यत इत्यत्र स्वनिरूपकपाकानुकूलत्वसंसर्गेण निरूपकत्वेनैववा लिङ्गानन्वयि भावनाया मन्वयः। इदमेव च कात्यायनमते प्रथमार्थः, कर्त्राख्यातलक्ष्यम्, कृत्प्रत्यय शक्यतावच्छेदकं कृद्योगनिमित्तक षष्ठीबोध्यं च।**

एवं कर्तृत्वं परिष्कृत्य आख्यातस्य कर्तरि लक्षणेत्यर्थनिरूपणावसरे प्रदर्शितं कर्तृत्व मखण्डोपाधिरूप मिति स्वसिद्धान्तमुद्घाटयति – **वस्तुतस्त्विति** स्त्रिया अपि कर्तृत्वे आपस्तम्बगृह्यसूत्रं प्रमाणयति – **धर्मेचेति** पाणिनिसूत्र मुदाहरति – **पत्युर्नेति** अनेन सूत्रेण स्वामिवचना त्पतिशब्दात् स्त्रियां यज्ञसंयोगे प्रत्ययस्य प्रातिपदिकान्तस्य नकारादेशस्य च विधानेन पत्नीशब्दव्युत्पादनेन स्वामिवाचित्वलाभात् स्त्रिया अपि यागाधिकारः सिद्ध इति भावः। इत्यादीत्यादिशब्देन "पाणिग्रहणात्तु सहत्वं कर्मसु तथापुण्यफलेषु द्रव्यपरिग्रहेषुच" "ये यज्ञपत्नीवर्धानी" त्यादेर्ग्रहणम्, **एकत्वश्रवणमिति** आख्यातार्थैकत्वश्रवणमित्यर्थः। अस्य 'गमयती' त्यत्रान्वयः, **निषादस्थपतीति** अयमर्थः – "रौद्रवास्तुमध्येचरुं निर्वपे" दिति प्रक्रम्य "एतया निषादस्थपतिं याजये" दिति श्रुतम्। तत्र निषादानां स्थपतिरिति षष्ठीसमासः उत निषादश्चासौस्थपतिश्चेति कर्मधारय इति संशये लाघवात्कर्मधारय एव, न तु षष्ठीसमासः, पूर्वपदेसंबन्धिनि लक्षणाश्रयणप्रयुक्तगौरवात्। तथापि निषादस्य तद्यागोपयोगिमन्त्रानुपदिश्य तेन यागं कारयेदिति षष्ठाध्यायप्रथमपादान्ते सिद्धान्तितम्। तद्दृष्टान्तेना त्रापि द्वित्वे न लक्षणाश्रयणीये-ति लक्षणायां = द्वित्वेलक्षणायाम्। **प्रमाणाभावादिति** व्यासज्यवृत्त्येक कर्तृत्वे आख्यातार्थैकत्वस्य योग्यतया न्वयसंभवेन तदाश्रयणं न प्रमाणवदित्यर्थः। उभयोः = जायापत्योः। तच्च = व्यासज्यवृत्तिकर्तृत्वं च। **बाधादिति** सखण्डत्वे कृत्याश्रयत्वरूपस्य तस्य प्रत्यात्मं कृतिभेदेन भेदाद् व्यासज्यवृत्तित्वानुपपत्ते-

रित्यर्थः। **पूर्वोक्तेति** यद्धात्वर्थावच्छिन्नलिङ्गानन्वयी'' त्यादिपूर्वोक्तेत्यर्थः। तद्गतमेव अखण्डोपाधिरूपकर्तृत्वगतमेव। प्राक् = आख्यातस्य न कर्तरि लक्षणा, किन्त्वखण्डोपाधिरूपेकर्तृत्व इत्ये तदर्थनिरूपणावसरे। अत्र पक्षे कर्मकर्तृस्थले आख्याते फललक्षणापि न स्वीकार्येति लाघवमपीत्याह – **अस्मिंश्च पक्षे इति** कर्तृत्वमखण्डोपाधिरूपमिति पक्ष इत्यर्थः। **कर्मकर्तृस्थलेपीति** तण्डुलं पचतीत्यादौ तण्डुलादिनिष्ठ कर्मत्वरूपाखण्डोपाधे रविवक्षणात् कर्तृत्वरूपाखण्डोपाधे र्विवक्षास्थलेपि, तण्डुल पच्यते स्वयमेवेत्यादावित्यर्थः। न लक्षणा = आख्यातस्य फले न लक्षणा। **स्वसमानाधिकरणेति** स्व कर्तृत्वम्, समवायेन तदधिकरणे तण्डुले तेन संबन्धेन विक्लित्तिरूपफलस्य वृत्ते स्तत्प्रयोजकत्वस्य कृतौ सत्त्वा तस्य निरुक्तसंसर्गेण कृतावन्वय इति भावः। एवं च कर्माख्यातस्थल इवात्रापि फलस्य संसर्गलभ्यत्वान्न तत्र लक्षणेति लाघवम्। अत्र यद्यपि चैत्रस्य साक्षात्संबन्धेन कर्तृत्वाभावेन प्रथमाया अप्रवृत्तावपि तृतीया प्राप्ता, तथापि चैत्रनिष्ठकर्तृत्वस्या ख्यातेनानभिधानेपि कृतिनिरूपितकर्तृत्वस्य तेनाभिधाना दनभिहिताधिकारीया तृतीया न प्रवर्तते, नच प्रथमैव स्या दिति वाच्यम्। तस्या स्तिङुपात्तसंख्यान्वयिवाचित्वव्याप्तत्वेन व्यापकाभावे आपादयितु मशक्यत्वात्। अत एतादृशेस्थले चैत्रस्य तण्डुलः पच्यते स्वयमेवेति संबन्धसामान्यवाचिनी षष्ठ्येव युक्तेति बोध्यम्। स्पष्टं चेद द्वितीयाध्यायप्रथमपादे भावार्थाधिकरणे कौस्तुभे। तदाह – **इत्युक्तं कौस्तुभे इति** इदमेव अखण्डोपाधिरूपमेव। **तृतीयार्थ इति** अन्यथा चैत्रेण तण्डुलः पच्यत इत्यत्र चैत्रेण पाकः क्रियत इति विवरणे चैत्रेण पाक इत्येतवतैव चैत्रनिष्ठकृतिसाध्यः पाक इत्यर्थबोधोपपत्तेः पुनः क्रियत इति कृतिवाचकपदप्रयोगस्य वैयर्थ्यापत्तिरिति बोध्यम्। तस्य च = अखण्डोपाधिरूपतृतीयार्थकर्तृत्वस्य, स्व कर्तृत्वम् लाघवादाह – **निरूपकत्वेनैववेति** इदमेव = अखण्डोपाधिरूपमेव कर्तृत्वं कर्मत्वं वा। कात्यायनमते = ''अभिहिते प्रथमे'' ति तदुक्तेः, **कर्त्राख्यातेति** कृतिवाचकेना ख्यातेन कर्तृत्वं लक्ष्यते, तदप्यखण्डमित्यर्थः, निरूपितं चैतत्प्राक्। **कृत्प्रत्ययेति** पक्ता पाचक इत्यादौ कर्तृकृता कर्तावाच्यः, तच्छक्यतावच्छेदक मप्यखण्डोपाधिरूप मेवेत्यर्थः। **कृद्योगेति** कृष्णस्य कृति रित्यादौ ''कर्तृकर्मणोः कृती'' 2-3-65 त्यनेन लाक्षणिकानुशासनेन कर्तृत्वत्वेन कर्तृत्वे षष्ठी विधीयते, तदप्यखण्डमेवेत्यर्थः, षष्ठीबोध्यमित्यस्य लक्षणया षष्ठीबोध्यमित्यर्थः।

## (प्राचीनमतेन करणत्वनिरूपणम्।)

**करणत्वं च ''साधकतमं करण'' 1-4-42 मिति सूत्रेण निरुक्तम्। तच्च कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वा भावे सति क्रियाहेतुत्वम्। सत्यन्तेन कर्तृकर्मणोः करणनिष्ठव्यापारद्वारा क्रियाहेतुत्वा, दधिकरणकारकस्य 'गृहे स्थाल्यामोदनं पचती' त्यादौ कर्तृकर्मान्यतर निष्ठव्यापारद्वारा क्रियाहेतुत्वात्, संप्रदानस्य च स्वानुमतिद्वारक कर्त्रिच्छोत्पा-दनद्वारा क्रियाहेतुत्वा, दपादानस्यापि पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनहेतुत्वा दतिव्याप्तिवारणम्। चरमकारणस्यैव लक्ष्यत्वेन कुठारादेरपि कर्त्रादिनिष्ठव्यापारद्वारा क्रियाहेतुत्वा न्नाऽव्याप्तिररिति सर्वदर्शनानुयायिनः प्राञ्चः।**

एवं ''कर्तृकरणयो स्तृतीये'' 2-3-18 ति सूत्रघटक कर्तृ पदार्थं निरूच्य तद्घटक करण पदार्थं निर्वक्ति **करणत्वं चेति सूत्रेणेति** क्रियायां प्रकृष्टोपकारकं कारकं करणसंज्ञं स्यादिति तदर्थः। तमप्प्रत्ययलब्ध-मर्थमभिप्रेत्याह – **कारकान्तरेति करणनिष्ठेति** चैत्रस्तण्डुलं काष्ठैः पचतीत्यादौ काष्ठ निष्ठ ज्वलन व्यापारद्वारा पाक हेतुत्वा न्नाति व्याप्ति रिति भावः। **कर्तृ कर्मान्यतरेति** कर्तृ निष्ठव्यापार द्वारा गृहस्य कर्मनिष्ठ क्रिया द्वारा स्थाल्याश्च क्रिया हेतुत्वा न्नाति व्याप्ति रिति भावः। स्वम् = संप्रदानम्, **पतनेति**

तत्प्रतिबन्धको यः संयोगः तन्नाशकविभागेत्यर्थः। नन्वेवं कुठारस्यापि कर्त्रादिनिष्ठव्यापारद्वारा क्रियाजनकत्वात्तत्र करणत्व मव्याप्तमित्याशङ्क्य तस्या लक्ष्यत्वा न्न दोष इत्याह **चरम कारणस्यैवेति** कुठारस्या तथात्वा त्तत्र लक्षणस्या प्रवृत्तावपि न दोष इति भावः.

## (तन्निराकरणम्।)

**तन्न, कुठारेण च्छिनत्ती त्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात्।**

कुठारादीनां करणत्वं मुख्यमेवेति सार्व जनीन व्यवहारादाह — **भाक्तत्वे प्रमाणाभावादिति**

## (नव्यवैयाकरणमतेन तन्निरूपणम्।)

**अतो यद्व्यापाराव्यवहितोत्तरं यत्क्रियानिष्पत्ति र्विवक्ष्यते, तत् तत्क्रियाकरणम्। अधिकरणादिव्यापारानन्तरमेव यदा पच्यादिक्रियानिष्पत्ति र्विवक्षिता तदा तेषामपि करणत्व-मिष्टमेव। पचिधातोश्च तदा तत्क्रियैव विवक्षिता। अत एव गवा दानं संपादयति, ब्राह्मणेन दानं साधयति, स्थाल्या पचतीत्यादयः प्रयोगा अपि संगच्छन्त इति वैयाकरणनव्याः,**

**यद्व्यापारेति** कुठारेण च्छिनत्ति, काष्टेन पचतीत्यादौ कुठारकाष्टनिष्टच्छेदनज्वलनादिरूपक्रियाया अव्यवहितोत्तरमेव द्विधाभवनविक्लित्तिरूप फलोत्पत्तेर्विवक्षणात् कुठार काष्टादीनां करणत्वं सिध्यति इति भावः। यत्क्रियोत्पत्ति रित्यत्र क्रियापदं क्रियतेऽसाविति व्युत्पत्त्या फलपरम्। विवक्ष्यत इत्यनेन सूचितमर्थमाह — **अधिकरणादीति** आदिपदेन कर्म संप्रदानयो र्ग्रहाणम्। तदा = तत्र। **तत्क्रियैवेति** करणत्वप्रयोजकक्रियैव विक्लित्यनुकूल चैत्र निष्ठ फूत्कारादि क्रियैवेत्यर्थः। तदा स्थाली निष्ठ व्यापार व्यवधानेन फलोत्पत्ते र्विवक्षणात्, स्थाल्याः करणत्वम्। स्थालीनिष्ठ व्यापारस्यैव धात्वर्थत्वेन विवक्षायां तु तस्याः कर्तृत्व मेव, स्थाली पचतीति बोध्यम्। अत एव = करणत्वस्य विवक्षाधीनत्वादेव। **गवादानमिति** पचियोगे विवक्षावशेन स्थाल्यां पचति, स्थाल्या पचति स्थली पचतीति प्रयोगात्रयं संपद्यते। ददातियोगेतु नैवं संभवति, शब्दशक्तिरेवात्र बीजम्। अतः कर्मणः संप्रदानस्य च प्रयोगान्तरे करणत्वं प्रदर्शितम्, इत्यादय, इत्यादिशब्देन बलेन लुनाति आलोकेन पश्यतीत्यादीनां ग्रहणम्। वैयाकरणनव्याः = दीक्षित कौण्डभट्टादयः,

## (तन्मतनिराकरणम्।)

**तदपि न, औषधभोजनेन परम्परया क्रमेण पुष्टिं संपादये, त्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात्।**

वैयाकरण मतमपि प्रतिक्षिपति **तदपिनेति भाक्तत्वे प्रमाणाभावादिति** औषध भोजनस्य स्वाव्यवहितो[illegible] पुष्टि जनकत्वालाभा न्मुख्यं करणत्वं न संभवति। करणत्वं तु तस्येष्टम्-तत्त भाक्तमेवेति स्वीकारस्य[illegible] तत्र प्रमाणाभाव इति भावः।

## (अन्यमतेन तन्निरूपणम्।)

**अतो व्यापार वदसाधारणकारणत्वं करणत्वम्। कर्त्रादीनां च करणत्वेपि न क्षतिः, उपाधिसाङ्कर्यस्या दोषत्वात्। विवक्षातश्च कारकविभक्तय इत्यप्यन्ये।**

**अतोव्यापार वदिति** व्यापारवत्वे सति असाधारण कारत्वमित्यर्थः। तज्जन्यत्वे सति तज्जन्य जनकत्व व्यापारत्वम्। काष्टैः पचतीत्यादौ काष्ट जन्यत्वस्य काष्ट जन्यपाक जनकत्वस्य च ज्वालाया सत्त्वा[illegible]

स्तत्वम्। कार्यत्वातिरिक्त धर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्व मसाधारण कारणत्वमिति बोध्यम्। नन्वेवं कर्त्रादा विदमतिव्याप्ति मित्याशङ्का मिष्टापत्त्या परिहरति **कर्त्रादीनां चेति** उपाधि साङ्कर्यस्य तत्तद्धर्माणामेकत्र समावेशस्य। तर्हि कर्तृत्व करणत्व रूप धर्म निमित्तक विभक्तीनामपि साङ्कर्यापत्ति, रत आह **विवक्षातश्चेति** यदा यो धर्मो विवक्ष्यते तद्धर्म निमित्तिकैव विभक्तिः प्रवर्तते, अतस्तासां न साङ्कर्यमिति भावः।

## (तन्निराकरणम्।)

**तदपिन, 'भ्रम्या घटं करोति, पुण्येन स्वर्गं भुङ्क्ते इत्यादि प्रयोगाणां भाक्तत्वे प्रमाणाभावात्।**

तदपि प्रतिक्षिपति **तदपि नेति भाक्तत्वे प्रमाणाभावादिति** भ्रम्याः स्वतो व्यापारत्वेन तत्र व्यापारान्तराभावात् पुण्यस्य गुणत्वेन तत्र व्यापाराभावा त्तयोर्मुख्य करणत्वा संभवाद्गौणं तदिति वाच्य लोकानां तु न तथात्वमत्र इति भावः।

## (स्वमते करणत्वनिर्वचनम्।)

**अतः करणत्वं करणंकरण मित्याद्यनुगतप्रतीत्याऽखण्डोपाधिरूपमेव, कारणत्वादिवत्। तदेव च तृतीयार्थः। तस्य च कर्त्रादा वतिप्रसङ्गनिरासः पूर्ववत्। तस्य च स्वनिरूपकधात्वर्थावच्छिन्नत्वस्संसर्गेण भावनान्वयः, पूर्ववदेव एककार्यकारणभावकल्पने लाघवात्, प्रकृत्यर्थान्वय स्त्वाधेयतया तत्र बोध्यः।**

स्व सिद्धान्तमाह – **अत इति** सखण्डस्य तस्य निर्वक्तुमशक्ते रित्यर्थः। **कारणत्वेति** अयं भावः-कारणत्व मतिरिक्तः पदार्थो न तु अनन्यथा सिद्धनियतपूर्ववर्तितावच्छेदक धर्मवत्व रूपं सखण्डम्, अन्यथा प्रतिबन्धकाभावस्य तत्त द्व्यक्तित्वेन हेतुतापत्तिः यथा दाहं प्रति मण्य भावस्य कारणत्वं वाच्यम्, स च दैशिक विशेषणतासंबन्धावच्छिन्न मणित्वावच्छिन्नप्रतिप्रतियोगिता का भावरूपतया गुरुभूतः, अत स्तेन रूपेण कारणत्वमन्यथासिद्धम्, अभावनिष्ठतत्त त्तद्व्यक्तित्वस्य लघु भूततया तेनैव रूपेण कारणतापत्तिः, लघु धर्मावच्छिन्नस्य कारणत्वसंभवे गुरु धर्मावच्छिन्नस्या न्यथासिद्धत्वात्। न चेष्टापत्तिः, मण्य भावत्वादिना कारणतायाः सकल वादि संमतताया भङ्गापत्तेः। न च नैतादृशं कारणत्वं स्वीक्रियते, किंतु यद्य द्धर्मावच्छिन्ने न कारणत्व व्यवहार स्तत्तद्धर्म भिन्नधर्मस्यैव कारणत्वमङ्गीक्रियते, अतो नोक्तदोष इति वाच्यम्, तत्तद्व्यक्ति भेद कूटवद्धर्मत्वस्य सर्वज्ञेनैव सज्ञाततया कारणतावच्छेदकभिन्न सकल धर्माणां तत्त द्व्यक्तित्वेनास्मदादीना ज्ञानासंभवात्। ननु यद्यद्धर्मावच्छिन्ने न कारणत्व व्यवहार स्तत्त द्व्यक्ति भेद कूटकत्व सबन्धेन प्रकृत कार्यविशिष्टो यो धर्मस्तद्वत्त्वमेव कारणत्व, सतो नोक्त दोषः, विशिष्ट वह्नौ संसर्ग ज्ञानस्याहेतुत्वेन पर्वमनुपस्थितानामपि तत्तद्व्यक्ति भेदानां संसर्ग घटकतया भाने बाधका भाव इति चेत्, न तादृश भेदकूटस्य संबन्धत्व संदेहात्। अतः कारणत्वं न सखण्डम्। किन्त्वखण्डोपाधि रूपमेवत्याश्रयणीयम्। तद्वत्करणत्वमप्य खण्डोपाधिरूपमेव, तस्य सखण्डत्वे निरुक्त दोषतादवस्था -- दिति। तदेव अखण्डोपाधिरूप करणत्वमेव, अति प्रसङ्ग निरासः कर्तृत्व करणत्वादीना मेक समावेशरूपातिप्रसङ्गनिरासः। **स्वनिरूपकेति** करणत्वस्य "साधकतमं करणं" 1-4-42 मिति सूत्र रूप धर्मिग्राहक प्रमाणेन ससंबन्धिकत्व कल्पनात्, निरूपकापेक्षया धात्वर्थस्यैव तत्त्वगम्यत इति भाव। एवं वदेव द्वितीयार्थवदेव, तत्र अखण्डोपाधिरूपे करणत्वे,

## (तार्किकमतेन तृतीयार्थः।)

**नवीनतार्किकास्तु – प्रकृत्यर्थनिरूपितजन्यत्वमेव तृतीयार्थः। तस्य चाश्रयतया धात्वर्थान्वय-इत्याहुः,**

नव्य न्यायविदां मतमाह – **नवीनतार्किकास्त्विवति धात्वर्थान्वय इति** तथाच दण्डेन घटो भवतीत्यादौ दण्डजन्यत्वाश्रयभवनाश्रयो घट इति बोध इति भावः,

## (तत्खण्डनम्।)

**तन्न, अनुशासनबाधे प्रमाणाभावात् नच परशुना छिनत्ति, न दात्रेणेत्यादौ दात्रजन्यत्वाभावस्य क्रियायां बोधानापत्तिः, निरूपकतासंबन्धेन परशुनिष्ठकरणत्वस्य निरूपतासंबन्धावच्छिन्न प्रतियोगिताक दात्रनिष्ठकरणत्वाभावस्य च क्रियायां बोधेना र्थाज्जन्यत्वाभावबोधोपपत्तेः,**

**अनुशासन बाध इति** करणत्वे तृतीयायाः शक्ति ग्राहकस्य "कर्तृकरणयो स्तृतीये" त्यनुशासनस्य बाध इत्यर्थः। **बोधानापत्तिरिति** जन्यत्वस्य तृतीयार्थत्वे छेदन क्रियायां दात्र जन्यत्वाभावो बोध्यते, तस्य तदर्थत्वाभावे स न बुध्येत, तथा चा नुभव विरोध इति भावः। **प्रतियोगिताकेति** दात्र करणत्व निष्ठप्रतियोगिताकेत्यर्थः। **अर्थादिति** निरूपकता संबन्धावच्छिन्न करणत्वा भावः करणत्वनिरूपकत्वा भावश्च एकरूप एव, करणत्व निरूपकत्वं जन्यत्वम्, तथाच निरूपकतासंबन्धावच्छिन्न करणत्वाभावो जन्यत्वाभावे पर्यवस्यतीत्यर्था त्तादृश बोधोपपत्तिरिति भावः।

**अतः प्रचुरप्रयोगाविशेषा त्कर्तृत्वकरणत्वयो रुभयोरपि तृतीयायाः शक्तिः, योग्यतादिरूपतात्पर्यग्राहकानुरोधेन च विशेषनिर्णयः।**

प्रकरणार्थमुपसंहरति **अत इति** कर्तृत्व करणत्वयो रुभयोरप्यर्थयो स्तृतीयायाः शास्त्रेणानुशिष्टत्वादित्यर्थः। **प्रचुर प्रयोगा विशेषादिति** एतेन एकत्र शक्ति, रपरत्र लक्षणा, तत्रापि किं कर्तृत्वे लक्षणा, उत करणत्वे, इति शङ्का परास्ता। ननु कुत्र तृतीयायाः कर्तृत्वमर्थः कुत्रवा करणत्वमर्थः इति कथं ज्ञायेत इत्यत आह – **योग्यतादीति**

**एवं द्वितीयावदेव तृतीयाया अप्यनुशासनानुरोधेन लाक्षणिकार्था अनुसन्धेयाः। तथाहि – "प्रकृत्यादिभ्य उपसंख्यान" मितिवार्तिकात् "प्रकृत्या चारुः, प्रायेण याज्ञिकः, गोत्रेण गार्ग्यः, समेन एति, द्विद्रोणेन धान्यं क्रीणाति, सुखेन याती" त्यादौ करणत्वातिरिक्तार्थान्तरलक्षणा। प्रकृतिपदेन हि स्वाभाविकी सामग्री उच्यते, तज्जन्यचारुत्ववानित्यर्थः। नचैवं करणत्वस्यैव तृतीयार्थत्वा त्पृथगनुशासनवैयर्थ्यम्, जन्यत्वस्य तत्त्वेन तृतीयार्थत्वमङ्गीकृत्य तत्सार्थक्यात्। अत एव तृतीयार्थस्य जन्यत्वस्य स्वाश्रयचारुत्वाश्रयवृत्तित्वसंबन्धेनाऽऽक्षिप्तक्रियायामन्वयः**

शक्यार्थबोधकं "कर्तृ करणयो स्तृतीये" ति सूत्रं व्याख्याय लक्ष्यार्थबोधकान्यनुशासनानि व्याख्यातुमुपक्रमते – **एवमिति** शक्यार्थवदित्यर्थः। द्वितीयावद् = द्वितीयाया इव; निषिद्ध लक्षणा वारणायाह – **अनुशासनानुरोधेनेति** पाणिन्यादि वचनानुसारेणेत्यर्थः। तत्र प्रथमं "कर्तृकरणयोस्तृतीये" 2-3-18 ति सूत्रस्थं कात्यायनस्य वचनं व्याचष्टे – **प्रकृत्यादिभ्य इति** इत्यादा वित्यादिपदेन पञ्चकेन पशून् क्रीणाति इत्यादे ग्रहणम्। एषूदाहरणेषु क्रियापदाश्रवणा त्कर्तृकरणसंज्ञयो रभावात्सूत्रेण तृतीयाया

असिद्दिरित्याशयेन वार्तिक मारब्धम्। तदाह **करणत्वातिरिक्तेति** जन्यत्वा भेदावच्छिन्नत्वाद्यर्थान्तरे लक्षणा तृतीयाया इत्यर्थः। यद्यपि समेनैतीत्यादौ क्रियाप्यस्ति, तथापि नात्र समशब्दार्थः करणत्वेन विवक्षितः किंतु कर्मत्वेन। ततश्च कर्मणि प्राप्ता द्वितीयाऽनया बाध्यते। इयं च यथा योगं सर्व विभक्त्य पवादः, प्रकृति प्रायद्विद्रोणशब्देभ्यः षष्टी गोत्र शब्दत्प्रथमाषष्टी वा, द्विद्रोण शब्दात् सुख शब्दाच्च षष्टी समशब्दद् द्वितीया सप्तमी वा प्राप्ता। तदपवाद इयम्, तृतीयाया अति रिक्तार्थकत्वमेव विशदयति **प्रकृतिपदेन हीति** स्वाभाविकी = अयत्न सिद्धा। सामग्री = चारुत्व सम्पादनसमर्थाऽवयव सम्पत्। जन्यत्वं तृतीयार्थ इत्याशयेनाह – **तज्जन्येति** स्वाभाविकसामग्रीजन्येत्यर्थः। **इत्यर्थ इति** प्रकृत्याचारुत्व वां श्चैत्रः न त्वलङ्कारादिनेति तात्पर्यम्। ननु गणे प्रकृति शब्द पाठो व्यर्थः, गम्यमान करोति क्रिया मादाय प्रकृतेः करणत्व संभवात्; स्पष्टं चेदं प्रकृत वार्तिक व्याख्यान भाष्ये, इत्याशङ्कां निराकर्तुमाह – **नचेति** एवं = जन्यत्वस्य तृतीयार्थत्व स्वीकारे, पृथग् = "कर्तृकरणयो स्तृतीये" त्यनु शासनात्पार्थक्येन। अनुशासन वैयर्थ्यम् = गणे प्रकृति शब्द पाठेन तृतीया विधायकस्य वैयर्थ्यम्। अयमर्थः – प्रकृति निरूपित जन्यत्वस्यतन्निष्ठकरणता निरूपकत्वस्य चैकरूपत्वेन जन्यत्वस्य करणत्वे पर्यवसन्नतया गम्यमान करोति क्रियामादाय प्रकृतः करणत्वस्य सुवचत्वेन सूत्रेणैवतृतीयायाः सिद्धतया गणे तत्पाठस्य वैयर्थ-मिति। प्रकृतेः करणत्व विवक्षायां तत्र तृतीयासिद्धावपि तस्यां जन्यत्वस्य जन्यत्वत्वेन विवक्षायां सूत्रेण तृतीयाया असिद्धतया तद्विधानाय गण पाठ आवश्यक इत्याशयेन समाधत्ते – **जन्यत्वस्येति** तत्वेन = जन्यत्वत्वेन। तत्सार्थ क्यात् = गण पाठस्य सार्थक्यात्। महाभाष्य कारस्यप्यत्रैव तात्पर्यमिति न तद्विरोधः। अत एव = करणत्व परित्यागेन जन्यत्वस्य तृतीयार्थत्व स्वीकारादेव। **स्वाश्रयेति** स्वं = जन्यत्वं तदाश्रयो यच्चारुत्वं, तदाश्रय श्चैत्रादिः, तद्वृत्तित्वं भावनायाः, अनेन परम्परासंबन्धेन प्रकृति जन्यत्व विशिष्टा भावना चैत्रीयेति बोधः, प्रकृत्या चारुरित्यत्रा ख्यातस्या श्रवणादाह – **आक्षिप्तेति अन्वय इति** परम्परा संबन्धेनान्वय इत्यर्थः। करणत्वस्य तृतीयार्थत्वे तु तस्य साक्षादेव भावनान्वयः स्यात्, अतोऽनुभवानुरोधेन जन्यत्वत्वेन जन्यत्वस्य प्रत्ययार्थत्वं स्वीकार्यमिति भावः। प्रकृत्या कृपण इत्यादौ तु प्रकृति शब्दो यावदाश्रय वृत्ति धर्मबोधकः, अभेद स्तादात्म्यं वा तृतीयार्थः। तथाच स्वाश्रयाधिकरणयावत्कालवृत्ति कार्पण्यवानिति बोधः। स्पष्टं चेदं शब्द शक्ति प्रकाशिकायाम्। प्रकृत्या चरुरित्यत्रापि पृकृति शब्दस्य यावदाश्रय वृत्तिधर्म बोधकस्वीकारस्तु नयुक्तः, अनुभव विरोधात्,

**प्रायशब्दस्या वच्छेदकत्वावच्छिन्नत्वराहित्यविशिष्टबाहुल्यमर्थः, तृतीयाया अवच्छिन्नत्व-मर्थः। तथाच किञ्चिन्न्यूनबहुत्वावच्छिन्नयज्ञविद्यासंबन्धवानित्यर्थः,**

**अवच्छेदकेति** अवच्छेदकेन अवच्छिन्नम्, अवच्छेदकावच्छिन्नं तस्य भावः, तस्य राहित्यं, तेन विशिष्ट मित्यर्थः। अवच्छेदकावच्छिन्नं बाहुल्यमिति यावत्, प्रकृते यज्ञविद्यायाश्चैत्र संबन्धः प्रतिपाद्यते, यज्ञ विद्यात्वमवच्छेदकं, तदवच्छिन्नत्वं न चैत्रसंबन्धे, तत्सम्बन्ध रहितास्वपि कासुचिद्विद्यासु विद्यात्वस्य सत्वात्, एवं च यज्ञ विद्यानां सामानाधिकरण्येन चैत्र संबन्धो, न त्ववच्छेदेनेति भावः। **बाहुल्यमिति** तेनात्यल्प विद्यावति नायं प्रयोग इति भावः, तदेत दाह – **तथाच किञ्चिन्न्यूनेति** किञ्चिन्न्यूनं यद् बाहुल्यं तदवच्छिन्नो यो यज्ञ विद्या संबन्धः, तद्वानित्यर्थः। चैत्रादौ यज्ञ विद्याः साकल्येन न सन्ति, किंतु किञ्चिन्न्यूना इति प्रकृति वाक्यार्थः। एवं च कल्पप् प्रत्यय समानार्थकोऽयं प्राय शब्द इति तात्पर्यम्।

यद्वा प्राय शब्दो बह्वर्थकः, बहुश्चाचारादिः, ज्ञाप्य ज्ञापक भाव स्तृतीयार्थः। बह्वाचार ज्ञाप्य याज्ञि-कत्व वानिति बोधः, यद्वा प्राय शब्दः संभावनार्थकः, संभावनाविषय याज्ञिकत्व वानिति बोधः। विशिष्ट वेष पुरुष दर्शनेऽस्य शब्दस्य प्रयोगात्। प्रायेणात्र याज्ञिका इत्यादौ तु बहवो याज्ञिका इति बोधः,

**एवं गोत्रशब्दस्य सबंन्धविशेषवाचित्वेपि गोत्रत्वपरत्वमङ्गीकृत्य गोत्रत्वावच्छिन्न गर्गसंबन्धवानित्यर्थः। तृतीयाया वाऽभेदार्थकत्वमङ्गीकृत्य गोत्राभिन्नसंबन्धवानित्यर्थः। अस्मिंश्च पक्षे गोत्रत्वं तृतीयार्थः। अवच्छिन्नत्वं संसर्गः। गोत्रवृत्ति गोत्रत्वावच्छिन्नसंबन्धवानित्यर्थः। अनयैव च रीत्या समवायेन रूपवानित्यादिप्रयोगा उपपादनीयाः।**

**संबन्धविशेषेति** अगस्त्याष्टम सप्तर्ष्यपत्यं गोत्रशब्देनोच्यते, तथापि प्रकृते तस्य धर्म परत्वमाश्रीयत इति भावः। अवच्छिन्नत्वं तृतीयार्थ इत्याशयेनाह – **गोत्रत्वावच्छिन्नेति** तदवच्छिन्नो यः संबन्धः, तद्वानित्यर्थः, गोत्र शब्दस्य धर्मि परत्वेप्याह – **तृतीयाया वेति गोत्रा भिन्नेति** गोत्रत्वावच्छिन्न संबन्ध वानित्यर्थः। तदेव विशदयति **अस्मिंश्च पक्ष इति** तृतीयाया अभेदार्थकत्वमिति पक्ष इत्यर्थः। **गोत्रत्वं तृतीयार्थ इति** अभेदः = भेदाभावः, स च प्रतियोगितावच्छेदकरूपः, अन्योन्याभावाभावस्य प्रतियोगितावच्छेदक रूपत्व मिति सिद्धान्तात्, एवं च गोत्रेणेत्यत्र प्रकृते गोत्रमर्थः, तृतीयाया अभेदोर्थः स च गोत्र भेदाभावरूपः गोत्र भेदा भावो निरुक्तरीत्या गोत्रत्व मेवेति भावः। **गोत्रवृत्ति गोत्रत्वेति** प्रकृत्यर्थस्य प्रत्ययार्थे वृत्तितासंबन्धेनान्वयः, गोत्रवृत्ति यद् गोत्रत्वं-तदवच्छिन्नो यः संबन्धस्तद्वानित्यर्थः, एवं चाद्यकल्पे अवच्छिन्नत्वं प्रत्ययार्थः द्वितीय कल्पे अवच्छिन्नत्वं संसर्ग इति विशेषः, बोधस्तु समान एवेति बोध्यम्, अस्याऽऽकृति गणत्वादाह **अनया चरीत्येति** गोत्रेण गार्ग्य इत्यत्र प्रादर्शितया द्विविधया रीत्येत्यर्थः। **समवायेनेति** आद्ये समवाय शब्दः, समवायत्वपरः, अवच्छिन्नत्वं तृतीयार्थः, समवायत्वावच्छिन्नोयो रूप संबन्ध, स्तद्वान् घट इति बोधः। द्वितीये तृतीयाऽभेदार्थिका, समवायाभेदश्च समवायत्व रूपः, अवच्छिन्नत्वं संसर्गः तथाच समवाय वृत्ति यत्समवायत्वं तदवच्छिन्नरूप संबन्धवानिति बोध इति भावः। अवच्छेद्यत्वादीनां संबन्धत्व विवक्षायां घटत्वेन जन्यत्वं प्रकारत्व मभाव इत्यादयोपि प्रयोगाः साधवः, अस्याकृति गणत्वात्। तदाह – **इत्यादयोपीति**

**धान्येन धनीत्यादौ तु तृतीयार्थाभेदस्य धान्यत्वस्य धान्येऽन्वय इति विशेषः। धनसंबन्धं प्रति धान्यस्य करणत्वादेव वा तृतीयेति कौस्तुभेस्पष्टम्। समेनेत्यत्रावच्छिन्नत्वं तृतीयार्थः। समदेशावच्छिन्ना गमन भावनेत्यर्थः। द्वयो र्द्रोणयोः समाहारो द्विद्रोणम्, पात्रादित्वात् स्त्रीत्वा भावः। परिमितत्वं तृतीयार्थः। द्रोणद्वयपरिमितं धान्यं क्रीणातीत्यर्थः। करणत्वेनाप्यन्वयसंभवेपि परिमितत्वेन बोधार्थं पृथगनुशासनम्। सुखेन यातीत्यादौ सुखपदं दुःखाभावपरम्। तृतीयार्थश्च प्रयोजकत्वम्। तच्च प्रतियोग्यनुत्पादकत्वरूपम्। तथाच दुःखाजनकं यानमित्यर्थः।**

गोत्रेण गार्ग्यः, समवायेन रूपवानिति प्रयोगापेक्षया विशेषं प्रदर्शयन् अस्याकृतिगणत्वे फलान्तरमाह – **धान्येनेति तृतीयार्था भेदस्य धान्यत्वस्येति** तृतीयाया अभेदोर्थः अभेदः = भेदाभावः स च, प्रतियोगितावच्छेदक धान्यत्वरूप इत्यर्थः। 'तु' शब्द सूचितं विशेषं दर्शयति **धनेऽन्वय इति** प्रत्ययार्थस्य धान्यत्वस्य धन एवान्वयः, न तु धन संबन्ध इति भावः, अयं भावः, गोत्रेण गार्ग्यः समवायेनरुपावानित्यादौ गोत्रत्व समवायत्वे संबन्ध वृत्ति धर्मौ, अत स्तयो रन्यत्र संबन्ध एव विशेषणत्वम्। प्रकृते धान्यत्वस्या तथात्वेन द्रव्यमात्रवृत्तित्वेन धने द्रव्य एव विशेषणत्वं, न धनसंबन्धे, तथाच तत्र गोत्र वृत्ति गोत्रत्वा वच्छिन्नो यः संबन्धः तद्वानिति बोधः, प्रकृते तु धान्य वृत्ति यद्धान्यत्वं तद्विशिष्टं यद्धनं तत्संबन्धवानिति बोध-इति। इदं चौत्सर्गिकीं रीति मनुसृत्योक्तम्, वस्तुतस्तु तृतीयाया लक्षणयाऽभेदार्थकत्वं न प्रमाणवत्, धान्येन धनीत्यादौ करणत्वार्थिकैव तृतीयेत्याशयेन क्रियाविशेषणेभ्यो द्वितीयोपपादनावसरे द्वितीया प्रकरणोक्तमर्थ मति दिशति -- **धन संबन्धं प्रतीति** चैत्रस्य धन संबन्धोत्पत्तौ

धान्यस्य करणत्व विवक्षणात् करणत्वार्थिकैव तृतीया, न त्वभेदार्थिकेति भावः, न च धन धान्ययो रभेदानुभवानुरोधेन तृतीयाया अभेदे लक्षणा वश्यकीति वाच्यम्, अरुणैक हायनीन्यायेना भेदानुभवस्य पार्ष्टिकान्वय लभ्यत्वात्। विशेषजिज्ञासूना मुपकारायाह – **कौस्तुभे इति** धात्वर्थस्य कारकत्वेन भावान्वय प्रतिपादनावसरे द्वितीयाध्याय प्रथमपादेभावार्थाधिकरणे कौस्तुभे इत्यर्थः, **स्पष्टमिति** इत्थं हि तत्रत्योग्रन्थः – "धात्वर्थस्यान्यत्र कारकत्वेना न्वयाभावे तृतीयान्तानां ज्योतिष्टोमादिना मनन्वयापत्तिः, न च साधुत्वार्था अभेदार्थावा तृतीयेति वाच्यम्, करणत्व रूप श्रौतार्था विवक्षायां कारणाभावात्, अभेद लक्षणार्थाया स्तृतीयायाः क्वाप्य दर्शनाच्च। धान्येन धनवानित्यादावपि च न धान्याभिन्न धनवानित्यर्थः, धान्यस्य धनसंबन्धोत्पत्तिं प्रति करणत्वोपपत्ते र्दण्डेन घटो भवतीति-वल्लक्षणायां प्रमाणाभावात्, अत एव भासमानोपि धन धान्याभेदः पार्ष्टिकान्वय लभ्य एवेति न तदर्थमपि लक्षणा अतो लक्षणायाः क्वाप्य दर्शनात् तृतीयान्तनाम धेयानुरोधेनापि धात्वर्थस्य करणत्व **मवश्यमङ्गीकर्तव्य**" मिति,

यद्यपि समेन यातीत्यादौ समेन पथा यातीत्यर्थावगमात्पथो यानं प्रति करणत्वा त्तृतीया सिध्यति, तथापि अवच्छिन्नत्व रूपेण बोधानु भवात्तदर्थं गणे पाठ आवश्यक इत्याह – **अवच्छिन्नत्वं तृतीयार्थ इति** सम शब्दो देश पर इत्याह – **सम देशेति** ननु द्रोण शब्दस्य पुंस्त्वेपि द्विद्रोणेति समासस्य अकारान्तोत्तरपदक द्विगुत्वेन "अपथं नपुंसक" 2-4-30 मिति सूत्र पठितेन "अकारान्तोत्तर पदो द्विगुः स्त्रिया" मिति वार्तिकेन स्त्रीत्वातिदेशात् त्रयाणां लोकानां समहारः = त्रिलोकीत्यत्रेव "द्विगोः" 4-1-21 इति सूत्रेण स्त्रियां ङीपः प्रसक्त्या कथ द्विद्रोणमिति रूप मित्यत आह – **पात्रादित्वात्स्त्रीत्वा भाव इति** "अकारान्तोत्तरपद" इति स्त्रीत्वं "पात्रादिषु प्रतिषेधः" इति वचनान्तरेण प्रतिषिद्धम्, पात्रादिगणपठितशब्दान्तस्य स्त्रीत्वं नेति तदर्थः। पञ्चपात्रम्, त्रिभुवन मित्यादि तदुदाहरणम्। पात्रादेराकृति गणत्वादत्राप्यस्य प्रवृत्तिः। ततश्च "सनपुंसकम्" 2-4-17 इति नपुंसकत्वात् ङीब भाव इति भावः, पात्रादित्वात् = पात्रादिगणपाठात्। स्त्रीत्वा भावः = अकारान्तोत्तरपदो द्विगुः स्त्रिया" मिति वार्तिकातिदिष्टस्य स्त्रीत्वस्या भाव इत्यक्षरार्थः। गणे द्विद्रोणशब्दपाठस्य वैयर्थ्यमाशङ्क्य परिहरति **करणत्वेनापीति** द्विद्रोणादि शब्दस्य द्विद्रोणाद्यर्थ मूल्येवृत्ति स्वीकारेण तस्य क्रयं प्रति करणत्वा त्सूत्रेणैव तृतीया सिध्यति, द्विद्रोणादीनां च यन्मूल्यं तेन द्विद्रोणाद्येव क्रीयत इत्यर्थ भेदोपि नास्ति, अतोगणे तत्पाठो व्यर्थ इतिपूर्वपक्षाशयः। समाधत्ते – **परिमितत्वेनेति** पृथगनुशासनम् = कर्तृकरणयो स्तृतीयेत्यनु शासनात्पार्थक्येन, प्रकृत्यादिभ्य इत्यनुशासनम्, तथाचानुभूयमान विलक्षणबोधोपपत्तये परिमितत्वे लक्षणया तृतीयाविधानाय गणे पाठ आवश्यक इति भावः,

**एवं "दिवः कर्मच" 1-4-43 इतिसूत्रेण दिवुधात्वर्थस्य साधकतमं कर्मसंज्ञं स्यात्, लक्ष्यानुरोधेन स्वरितत्वानुगतेः पूर्वसूत्रस्थकरणशब्दानुवृत्त्या करणसंज्ञं चेत्यर्थकेन साधक-तमस्यैव संज्ञाद्वयकरणा 'दक्षै' रक्षानु वा दीव्यतीति प्रयोगद्वयम्। अत्र पणपूर्वकाक्षसाध्य क्रियाया धात्वर्थत्वा त्तत्राक्षाणां मुख्यमेव करणत्वम्। तत्र च द्वितीया लाक्षणिकी।**

द्वितीयांशे लाक्षणिकं पाणिनीय मनुशासनं व्याचष्टे – **एवं दिव इति** "साधकतमं करण" 1-4-42 मिति सूत्रात् साधकतममित्यनुवर्तते, तदाह – **साधकतममिति** अक्षाणां देवने साधकतमत्वात्प्राप्तां करणसंज्ञां प्रकृतसूत्र विहितं कर्मत्वं बाधेत, तन्माभूत्, तेषां करणत्वस्या पीष्टत्वादित्याह – **लक्ष्यानुरोधेनेति** अक्षै र्दीव्यतीति तृतीयान्तपदघटितलक्ष्यानुरोधेनेत्यर्थः। स्वरितत्वानुगतेः = करण पदेपि स्वरितत्व प्रतिज्ञानात्। **पूर्व सूत्रेति** "साधकतमं करण" 1-4-42 मिति पूर्वसूत्रस्थेत्यर्थः। **संज्ञाद्वयेति** एकस्यैव कर्म

करणरूप संज्ञाविधानादित्यर्थः। एवं च करण शब्दानुवृत्त्या एकस्यैव संज्ञाद्वय विधान सामर्थ्यादाकडारीयत्वेपि तयोः समावेश एव, न पर्यायत्वमिति भावः। एतेन संज्ञाद्वय समावेशार्थश्चकार इति शाब्दिकोक्तमयुक्तमिति ध्वन्यते। चकारस्य प्रयोजनमाह – **प्रयोग द्वय मिति** संज्ञाद्वय प्रयुक्त कार्यद्वय समावेशार्थश्चकारः, तेन संज्ञाद्वय कार्ययो द्वितीयातृतीययोः पर्यायेण प्रवृत्त्या प्रयोग द्वय सिद्धिरिति भावः। एवं च संज्ञाद्वय विधान सामर्थ्यादेव संज्ञाद्वयस्य समावेशः, तत्प्रयुक्तकार्यद्वय समावेशश्चकारस्य प्रयोजनम्। संज्ञा द्वय समावेशार्थश्चकार इति वैयाकरणोक्त मयुक्तमेवेति ग्रन्थ कृदाशय इति बोध्यम्। एतच्चानुपदमेव मूलेस्पष्टम्, ननु **अक्षान्**, दीव्यतीत्यत्रपातयतीत्यर्थावगमात्तत्राक्षाणां "कर्तुरीप्सिततमं कर्म" 1-4-49 त्यनेनैव कर्मत्वात् द्वितीयायाः अक्षै र्दीव्यतीत्यत्र क्रीडतीत्यर्थावगमात्तत्राक्षाणां "साधकतमं करण" 1-4-42 मित्यनेन करणत्वा तृतीयायाश्च प्रवृत्त्या निरुक्त प्रयोग द्वयस्य सिद्धत्वाद्, "दिवः कर्म चे" 1-4-45 ति सूत्र **वैयर्थ्य** मित्याशङ्कां परिहरति **अत्रेति** एतत् सूत्रोदाहरणे इत्यर्थः, **पणपूर्वकेति** पणपूर्विका अक्षसाध्या च या क्रिया तस्या इत्यर्थः। तत्र = तद्भावनायाम्। **मुख्यमेवकरणत्वमिति** "साधकतमं करण" मित्यनेने करणत्वस्य प्राप्त्या तस्य मुख्यत्वमेवेत्यर्थः, तत्र + च = तत्रैवार्थे। अक्षाणां साधकतमत्व विवक्षायामेव, द्वितीया लाक्षणिकी, = अनेन कर्मत्व विधानात्तन्मूलिका द्वितीया लाक्षणिकी। अक्षकरणिका क्रीडभावनेत्यर्थे अक्षैर्दीव्यतीतिव दक्षान् दीव्यतीति प्रयोगस्यापीष्टत्वात्तदर्थ मेतत्सूत्रारम्भः। तत्रेदं लाक्षणिकानुशासानमेव, विशेषविहितेनानेन कर्मत्वेन करणत्वस्य बाधा भावाय करणत्वस्याप्यनेन विधानम्। करणत्वांशे सूत्र मिदं शक्यार्थ बोधकमेव, अक्षान्, पातयतीत्यर्थे अक्षैर्दीव्यतीति नेष्टमेव, एवं च दिवुधातोः क्रीडार्थकत्वेऽक्षाणां साधकतमत्व विवक्षायामेव कर्मत्व करणत्व निमित्तक द्वितीयातृतीया रूप विभक्तिद्वय घटित प्रयोगद्वय सिध्यर्थं सूत्रमिद मावश्यकमिति

**न च करणसंज्ञाया देवना अक्षा इत्यत्र ल्युटि सावकाशत्वात् कर्मसंज्ञायाश्च दीव्यन्तेऽक्षा इति कर्मलकारे सावकाशत्वाद् दीव्यतीत्यत्र कर्त्राख्याते संज्ञाद्वयप्रयुक्तकार्यद्वयप्रसङ्गे संज्ञागत-परत्वाद् द्वितीयाया एवापत्तौ तृतीयान्तस्य प्रयोगस्य कथं साधुत्वम्। विभक्तिगतपरत्वाद्वा वैपरीत्यमिति वाच्यम्। संज्ञाद्वयविधानबलादेव व्यवस्थितकार्यसिद्धौ चशब्देनैकत्र संज्ञाद्वय-प्रयुक्तकार्यद्वयविधानप्रतीत्या तत्सिद्धेः। अत एव कार्ययोरेवानेन समुच्चयो विधीयते, संज्ञयोः समुच्चयस्य संज्ञाद्वयविधानबलादेव सिद्धेः। अत एव चशब्दा भावेपि 'मनसादेव' इत्यादौ करणसंज्ञया तृतीयायाः कर्मसंज्ञया च कर्मोपपदत्वलाभेन देव इत्यणुप्रत्ययस्यापि सिद्धिरविकला। अत श्चैशब्दस्य द्वितीयासिद्धिरेव प्रयोजनम्।**

ननु संज्ञाद्वय समावेशे प्रयोग द्वयासिद्धिः, मूलोक्तरीत्या तृतीयान्त घटितस्यैव द्वितीयान्त घटितस्यैव वा साधुत्वलाभात्। अतः संज्ञयोः पर्यायत्वमेव युक्तम्, तत्र हि करणत्व सत्वे कर्मत्वस्याभावात्, कर्मत्व पक्षे करणत्वस्या भावान्निरपवादं विभक्तिद्वय प्रवृत्त्या प्रयोग द्वयस्य साधुत्व लाभादित्याशङ्कां परिहर्तुं शङ्कते – **नचेति** अन्यत्र सावकाशयो र्द्वयोः शास्त्रयोरेकत्र युगपत्प्रवृत्तौ "विप्रति षेधे परं कार्य" 1-4-2 मिति सूत्रं परशास्त्र प्रवर्तकतया नियामकम्, अत स्तत्सूत्र प्रवृत्युपयोगतया प्रथमं द्वयोरन्यत्र सावकाशत्वं दर्शयति **करणसंज्ञाया इत्यादिना कर्म लकारे सावकाशत्वा दित्यन्तेन। देवना अक्षा इति** दिवि धातोः "करणाधिकरणयोश्चे" 3-3-17त्यनेन करणे ल्युट् क्रीडा साधन भूता इत्यर्थः। **अत्र** कर्मत्वप्रयुक्तं कार्य नास्ति, ल्युटि = तद्विषये। एवं चात्र विविक्ते करणत्वं सावकाशमिति भावः। **दीव्यन्तेक्षा इति** अक्षरूपेण कर्मणा धातोः सकर्मकत्वात्ततः कर्मणि लकार संपादनेन कर्मत्वं सावकाशम्, अत्र करणत्व प्रयुक्तं कार्य नास्ति। एवं द्वयोः सावकाशत्वं प्रदर्श्य एकत्र तयोः समावेशे दोष मुद्भावयति **दीव्यतीत्यत्रेति संज्ञा द्वयेति**

करण कर्मरूपं यत्संज्ञाद्वयं तत्प्रयुक्तं तृतीया-द्वितीयाप्रवृत्तिरूपं यत्कार्यद्वयं, तस्य प्रसङ्ग इत्यर्थः। **प्रथमं** संज्ञाद्वयमाश्रित्य दोष माह **संज्ञागतेति** ''साधकतमं करण'' 1-4-42 मिति सूत्रापेक्षया ''कर्तुरीप्सितमं कर्म'' 1-4-49 तिसूत्रस्याष्टाध्ययीपाठे परत्वात्तन्मूलिकाया द्वितीयाया एव प्रवृत्तौ तद्घटित प्रयोगस्यैव साधुत्वं लभ्यते, न तृतीयान्त घटितस्य। तृतीयान्तस्यापि साधुत्वमिष्टं, तन्न सिध्येदिति भावः। कार्यगत परत्वाश्रयणेन दोषमाह – **विभक्तीति** ''कर्मणि द्वितीये'' 2-3-2 ति सूत्रापेक्षया ''कर्तृकरणयो स्तृतीये'' 2-3-18 ति सूत्रस्य परत्वात्प्रवृत्तौ तृतीयाया एव प्रवृत्त्या द्वितीयान्तस्य साधुत्वं न स्यादिति भावः, **वैपरीत्यमिति** पूर्वत्र तृतीयान्तस्य साधुत्वं न लब्धम्, अत्रतु द्वितीयान्तस्य तत्वं न लब्धमिति भावः, एवं च संज्ञाद्वय विधानसामर्थ्यात्तद् द्वयस्य समावेशे निरुक्त दोष ध्रौव्यात्तस्य पर्यायत्वमेव स्वीकार्यमिति पूर्वपक्षिण आशयः। अयं चाक्षेप श्चब्देन संज्ञाद्वयस्य समावेश इति वादिनां वैयाकरणानां, संज्ञा द्वयविधान बलेन तत्समावेश इति वादिनः खण्डदेवस्य च तुल्य एवेति बोध्यम् कार्यकालपक्षे ''कर्मणि द्वितीये'' त्यत्र यदस्योपस्थानं तस्यानवकाशत्वाद् द्वितीये'' ति हरदत्त दीक्षिताद्युक्तं समाधानमयुक्तम्, तृतीयाविषयेप्येवं सुवचत्वादिति सूचयन् स्वयं समाधत्ते – **संज्ञाद्वयेति** दिवेः साधकतमस्यैकस्यैव कर्म – करणरूप संज्ञा द्वय विधान सामर्थ्यादेवेत्यर्थः। **व्यवस्थितकार्येति** अक्षा देवना इत्यत्र करणे ल्युट्, दीव्यन्तेऽक्षा इत्यत्र कर्मणि लकार इत्यसाङ्कर्येण कार्यद्वयस्य सिद्धावित्यर्थः, एवं च संज्ञाद्वय समावेश फलको न चकारः, तत्समावेशस्य निरुक्तरीत्याऽन्यथासिद्धत्वादित्यर्थः। **चशब्देनेति** सूत्रेऽतिरिक्तेन चशब्देनेत्यर्थः। एकत्र = एकस्मिन्नेवाक्षादिशब्दे। **संज्ञाद्वयेति** ''विप्रतिषेधे परं कार्य'' मितिशास्त्र बाधनेन कर्म-करणरूपसंज्ञा द्वय प्रयुक्तस्य द्वितीया-तृतीया रूपस्य कार्य द्वयस्य पर्यायेण विधान लाभेनेत्यर्थः। च शब्देन कार्य द्वयस्य समुच्चय प्रतीतावपि प्रकृत विभक्तिरूप कार्य द्वयस्यैक प्रकृतेः समुच्चयासंभवात्पर्यायत्वे पर्यवसानात्प्रयोग द्वय सिद्धिरिति तात्पर्यम्, तत्सिद्धेः = तृतीयान्त-द्वितीयान्तरूप प्रयोग द्वय सिद्धेः। अयमर्थः, संज्ञयोः समुच्चयः संज्ञाद्वयविधान बललभ्यः, तत्प्रयोजनं भिन्न भिन्नस्थले तत्तत्कार्य प्रवृत्तिः, यथा देवना अक्षा इत्यत्र करणेल्युट्। दीव्यन्तेऽक्षा इत्यत्र कर्मणि लः। तदुक्तं ''व्यवस्थित कार्य सिद्धौ'' इति। संज्ञा प्रयुक्त कार्यद्वय समुच्चय श्चशब्दबललभ्यः. तत्प्रयोजन मेकत्रैव स्थले पर्यायेण विभक्तिद्वय प्रवृत्तिः, यथा अक्षैः अक्षान् वा दीव्यति तदुक्तम्,'' चशब्देन... कार्यद्वय विधान प्रतीत्ये'' ति। न च संज्ञा द्वय मवलम्ब्यैकत्रपर्यायेण विभक्ति द्वयस्यापि सिद्धिरिति भ्रमितव्यम्, मूलोक्तरीत्या विप्रतिषेधविचारे एकस्या एव विभक्तेः प्रवृत्ति सिध्द्या प्रयोग द्वयासिद्धेः। एवं च करणशब्दानुवृत्या संज्ञाद्वय विधानबलेन आकडारशास्त्र बाधनेन संज्ञाद्वय समावेशः, च शब्दबलेन विप्रतिशेध शास्त्र बाधनेन तत्प्रयुक्त कार्यद्वय समुच्चयश्चा वश्यमाश्रीयते-इति एतदेवोपपादयति – **अत एवेति** च ग्रहणान्यथानुपपत्तेरेवेत्यर्थः। कार्ययोरेव = एक प्रकृते र्द्वितीया-तृतीया रूप कार्ययोरेव। एवेन संज्ञा व्यावृत्तिः। अनेन = चकार घटितेन ''दिवः कर्मचे'' ति सूत्रेण। **विधीयत इति** सामर्थ्यात् विप्रतिषेधे परमिति सूत्र बाधनेन विधीयत इत्यर्थः। ननु संज्ञाद्वय समावेश एव चकारस्य फलम्। अन्यथा ''आकडारादेका संज्ञा 1-4-1 इति शास्त्रेण संज्ञयोः पर्यायतापत्ति रत आह **संज्ञयोरिति** करणशब्दानुवृत्त्या विहितयोः कर्म-करण संज्ञयोरित्यर्थः। **संज्ञा द्वयेति** ''कर्तुरीप्सितमं कर्म'' ''साधकतमं करणं'' मिति सूत्राभ्यामेव तयोः संज्ञयोः सिद्धत्वात्पुनरनेन साधकतमस्य तत्संज्ञाद्वय विधानं व्यर्थ स्यात्, अतस्तत्सामर्थ्या दाकडारशास्त्रबाधनेन समावेशः सिध्यतीति भावः। सिद्धेः = आकडार शास्त्र बाधनेन संज्ञयोः समावेशस्य सिद्धेः। एतदेवोपपादयति **अत एवेति** संज्ञयोः समावेशस्य संज्ञाद्वयविधान मूलकत्वादेवेत्यर्थः। चकाराभावेपि = दिवः कर्म, इति सूत्रकरणेपि। **मनसादेव इति** मनसा दीव्यतीति विग्रहः, इयं च कस्यचित्संज्ञा, अत्र मनसः संज्ञाद्वयम्, तत्र करण संज्ञां सफलयति, **करण संज्ञयेति तृतीयाया इति** अस्य सिद्धिरविकले, त्यत्रान्वयः। तृतीयायां समासे ''मनसः संज्ञायाम्'' 6-3-4 इति तृतीयाया अलुक्। कर्म संज्ञां सफलयति – **कर्मसंज्ञया चेति कर्मोपपदत्व लाभेनेति**

मनसः कर्मत्वे "तत्रोपपदं सप्तमीस्थ" 3-1-92 मित्यनेन उपपद संज्ञायां मनश्शब्दस्य कर्मबोधकोपपदत्वं लब्धमित्यर्थः। तत्प्रयोजनमाह **देव इत्यण् प्रत्ययस्येति** कर्मण्युपपदे दिवु धातोः कुम्भं करोतीति कुम्भकार इत्यादाविव "कर्मण्यण्" 3-2-1 इत्यनेन अण् प्रत्ययः सिद्ध इति भावः। **अविकलेति** विभिन्न स्थले कार्यद्वय सिद्धिः संज्ञाद्वय समावेशस्य फलम्, सोपि संज्ञाद्वय विधान लभ्य एव, चकारं विनापि निरुक्तरीत्या तत्सिद्धेरिति भावः। एवं च संज्ञाद्वय समुच्चये न कश्चिद्दोषः चकार बलेन विप्रतिषेध शास्त्रं बाधित्वा कार्यद्वयस्य पर्यायेण प्रवृत्त्या प्रयोग द्वय सिद्धे र्निष्प्रत्यूहत्वा दित्युपसंहरति – **अतश्चकारस्येति**, एकस्मिन्नेवार्थे साधकतमत्व विवक्षया तृतीयया पर्यायेण द्वितीया सिद्धि श्चकारस्य प्रयोजन मित्यर्थः। प्रत्युत पर्यायत्व पक्ष एव दुष्टः, साधकतमत्व विवक्षायां द्वितीयान्त प्रयोगस्यऽसिद्धत्वादिति तात्पर्यम्।

**न च तथापि दीव्यन्तेऽक्षा इत्यत्र कर्मत्वाभिधानेपि करणत्वस्या नभिधानात् तृतीयापत्तिः देवना अक्षा इत्यत्र च करणत्वस्य ल्युटाऽभिधानेपि कर्मत्वस्या न भिधाना 'दक्षानि' ति द्वितीयापत्ति रिति वाच्यम्, एकस्यैव साधकतमस्यो भयसंज्ञकत्वेनो भयत्रा प्युभया भिधानोपपत्तेः।**

संज्ञयोः समावेशे दोषान्तर मुद्भाव्य वारयितुं शङ्कते **नचेति** तथापि = संज्ञयोः समावेशे दोष वारणेन प्रयोगद्वयस्य सम्पादनेपि। **अनभिधानात्तृतीयापत्ति रिति** अक्षा दीव्यन्ते चैत्रेणे त्यत्राक्षाणां प्रकृत सूत्रेण कर्मत्वं करणत्वं च विधीयते, कर्मत्वमादाय तत्र लकारः प्रवर्तते। तेन कर्मत्वस्या ख्यातेनाभिधानाद् द्वितीया न भवति, परं तु अक्ष गत करणत्वस्य केनाप्यनभिधाना दनभिहिताधिकारीया तृतीया दुर्वारा, तथाचाक्षै र्दीव्यते इति प्रयोगापत्तिः, संज्ञयोः पर्यायत्वे तु कर्मत्व पक्षे करणत्वस्या भावा न्नदोष इति भावः, दोषान्तरमाह – **देवना अक्षा इति** अक्षगत करणत्वस्य ल्युटाऽभिधानेपि केनापि कर्मत्वं नाभिहितं, अत स्तत्रानभिहिताधिकारीयद्वितीया स्यादिति भावः, दूषण द्वयमपीदं पदमञ्जर्यादिषु स्पष्टम्, एकस्यैव = अक्षादेः। उभय संज्ञकत्वेन = कर्मकरण रूपोभय संज्ञकत्वेन। उभयत्रापि = दीव्यन्तेऽक्षा इति कर्म लकारे देवना अक्षा इति करण कृदन्ते च। उभयाभिधानोपपत्तेः = कर्मत्व करणत्वयोरुभयोरप्यभिधानस्य युक्तत्वात्। अत्र कर्मत्व करणत्वयोर्दिवु धात्वर्थ भावना साधकतमत्व रूपतया कर्मणि करणे वा प्रत्यये उभयमप्युक्तमेवेति नोक्ताति प्रसङ्गः, क्रियाभेदे तुना भिहितत्व मिति भावः,

**एव "मपवर्गे तृतीये" 2-3-6 ति सूत्रेण फलप्राप्तिरूपापवर्गे द्योत्ये कालाध्वनो रत्यन्तसंयोगे तृतीया स्या, दन्यथा द्वितीयेत्यर्थकेन मासेना धीतोनुवाक इत्यत्र तृतीयया फलप्राप्ति र्द्योत्या, अन्यथा मासमधीतो नायात इति च बोध्यः।**

लाक्षणिक मनुशासनान्तरं व्याचष्टे – **एवमपवर्गे इति फल प्राप्तिरूपापवर्गे इति** फल प्राप्ति पूर्वक क्रियात्याग रूपेऽपवर्गे इत्यर्थः, अयमर्थः – अत्र "कालाध्वनोरत्यन्तसंयोगे" इत्यनुवर्तते, अत्यन्त संयोगस्य फलरूप मपवर्गे इति विशेषणम्, तच्च क्रियात्यन्त संयोगस्यैव संभवति, नान्यस्येति सामर्थ्यादत्र क्रियात्यन्त संयोग एव गृह्यते, सर्वस्या अपि क्रियायाः समाप्त्या भाव्यमेवेति विशेषणोपादान सामर्थ्या त्फलप्राप्तौ सत्यां क्रिया समाप्ति रिहापवर्ग शब्दार्थः। तथाच अपवर्गे = फल प्राप्ति पूर्वक क्रियात्यागरूपापवर्ग विशिष्टे, अत्यन्त संयोगे कालाध्वनो स्तृतीया स्यादिति सूत्रार्थः। कालाध्वनो र्द्वितीयाया इयमपवादः। एवं च क्रियापवर्गे इयं तृतीया प्रवर्तते, न साधनापवर्गे इति लभ्यते। तथाच प्रकृतसूत्रे भाष्यम् "क्रियापवर्ग इति वक्तव्यम्, साधनापवर्गे मा भूत् – मास मधीतोऽनुवको, न चानेन गृहीतः" इति। साधने कर्तर्यालस्यादि रहिते सत्यपि प्रयोजनलाभादेव क्रियायाः समाप्ति र्भवति। सा

क्रियापवर्ग इत्युच्यते। प्रयोजनालाभे तदर्थं क्रियाया आवृत्त्यावश्यकत्वेपि अलसत्वादिना कर्तुः क्रियातो निवृत्तिः साधनापवर्ग इत्युच्यते, तत्र अपवर्ग इति विशेषणोपादान सामर्थ्या त्क्रियापवर्ग एव तृतीया, न साधनापवर्गे, तदपवर्गे हि कर्तु रशक्ति मात्रं गम्यते, न तु फल प्राप्तिरिति तद्भावः। तथाच कर्तुः प्रयोजन लाभेन यः क्रियाया स्त्यागः, तद्रूपेऽपवर्गे तृतीयेति फलती-ति। तत्र त्यागः फल प्राप्तिश्च न तृतीयार्थः किंतु तद्द्योत्य एव। तृतीयार्थस्तु संबन्धमात्रम्। अनुवाक विषयकं मास संबन्ध्यतीत मध्ययन मिति बोध इत्याशयेनाह – **द्योत्ये इति** तत्र त्यागः अधीत इति क्त प्रत्ययार्थातीतत्व व्यङ्ग्यः, त्यागः फलप्राप्तिश्चेत्युभयं तृतीया व्यङ्ग्यम्, फलितार्थमाह **अन्यथेति** क्रियापवर्गाभावे इत्यर्थः, द्वितीया = "कालाध्वनो रत्यन्त संयोगे" इत्यनेन। उक्तमेवार्थं विशदयति **तृतीययेति** इत्यर्थकेन सूत्रेण मासेनानुवाकोऽधीत इत्यत्र विहितया तृतीययेत्यर्थः। फलप्राप्ति रित्यस्य क्रिया त्याग पूर्वक फलप्राप्ति रित्यर्थः। **फल प्राप्ति द्योत्येति** प्रत्युदाहरण माह **अन्यथेति** फलप्राप्त्यभावे इत्यर्थः नायात इत्यनेन फला प्राप्तिरेव स्फुटमुच्यते। प्रत्युदाहरणेपि अनुवाक विषयकं मास संबन्ध्यध्ययन मित्येव बोधः। प्रयोगयोरर्थ विशेष प्रतीतिस्तु व्यङ्ग्यार्थ मादायैवेति बोध्यम्, अध्वन उदाहरणं क्रोशेनानुवाकोऽधीत इति। इति च = इति प्रयोगेपि।

**एवं "सहयुक्तेऽप्रधाने" 2-3-19 एवं साकं, सार्धम्, समं योगेपी त्यनुशासनेन, पुत्रेणसहागतः पितेति तृतीया|अत्रच पुत्रस्या प्राधान्यं न क्रियानन्वयित्वेनैव –**

**"सहैव दशभिः पुत्रैर्भारं वहति गर्दभी"**

**त्यादिवत्। अपितु यस्य क्रियासंबन्धः शाब्द, स्तत्प्रधानम्। यस्यत्वार्थ, स्तस्या प्राधान्यम्, अत एव पुत्रेण सहेत्यत्र पुत्रस्याप्यागमनप्रतीतिः।**

लाक्षणिकं सूत्रान्तरं व्याचष्टे – **एवं सहयुक्त इति** "पृथग्विनानानाभि" रितिवत् "सहेनाऽप्रधाने" इत्येव सिद्धे सूत्रेऽति रिच्यमानं युक्त ग्रहणं शब्दविशेषानादरेणार्थयोगे तृतीयासिद्ध्यर्थम्। तेन सहार्थक पर्याय योगे क्वचिच्छब्दप्रयोगं विनापि तदर्थ प्रतीतौ च तृतीया प्रवर्तते, तदाह – **एवं साकं सार्थं समं योगेपीति** तत्पर्याय शब्दैर्योगे अपिना तदप्रयोगे चेत्यर्थः। अस्याप्यर्थस्यानुशासनमूलकत्वा दाह – **इत्यनुशासनेनेति**। इति = इत्यत्र। ननु क्रियानन्वयित्व मप्रधानत्व मित्युक्तौ पुत्रेण सहागतः पितेत्यत्र पुत्रेऽव्याप्तिः, तस्याप्यागमन क्रियान्वय प्रतीतेरानुभविकत्वात्, नापि अन्याधीनत्व मप्रधानत्वम्, तच्च पित्रधीने पुत्रेऽव्याहतमिति वाच्यम्, पितर्यापि आर्थस्या प्रधानत्वस्य प्रतीत्या तत्राति व्याप्ते| पुत्रे प्रधानत्व प्रतीत्याऽव्याप्तेश्च, अत एव सम कक्षयो श्चैत्र मैत्रयो "रन्यतरस्यान्यतरेणा गन्तव्य" मित्युक्ते स्वस्मिन्न प्रधानत्व बुद्ध्या दुःखमनुभूयमानं संगच्छते, नापि प्रधानत्वं मुख्यत्वम्, अत्र नगरे अयं प्रधान मितिवत्। तदभावरूपं चाप्रधानत्वमिति वाच्यम्, राज्ञा सह सेना गच्छतीत्यादौ राज्ञि तृतीयानापत्ते, रित्यत आह, **अत्र चेति** एतत्सूत्र विषय इत्यर्थः। **इतिवदिति** व्यतिरेके दृष्टान्तः। सहैव दशभि रित्यत्र पुत्राणां वहन क्रियानन्वयित्वा न्निरुक्त मप्रधानत्वं पुत्रेषु सिध्यति, तद्वदत्र न, पुत्रस्यापि क्रिया संबन्धावगमादिति भावः। किंत्वन्यादृशं ग्राह्यमित्याह – **अपित्विति** यस्य = पित्रादेरर्थस्य। **क्रिया संबन्ध इति** क्रियाग्रहणं द्रव्य गुणयोरप्युप लक्षणम्, पुत्रेण सह पितुर्गौः, पुत्रेण सह स्थूल इति तयोरुदाहरणे, **शाब्द इति** तत्त्वं चेतर संबन्धं विना प्रतीयमानत्वम्, **आर्थ इति** सहार्थ बला त्प्रतीयमानै र्द्रव्यगुण क्रियाभिः संबन्ध इत्यर्थः। **अप्रधानमिति** एवं चात्र शाब्दगुणाद्यन्वयित्वा भावरूपमप्राधान्यं स्वीकार्यम्, उदाहरणेषु आगमनादिभिः पितुः शाब्दः संबन्धः, पुत्रस्य तु सहार्थ बलात्प्रतीयमानै रागमनादिभि रन्वयादार्थः। पुत्र साहित्यवान् पिता आगत इति बोधे साहित्यस्य पुत्रेणागमन संबन्ध एव संभवो, नान्यथेति पश्चात्तस्यापि मानस स्तत्संबन्ध

बोधः। पुत्र कर्तृकागमन समान कालिका गमनं पितरि पुत्रस्वामिकत्व समान कालिक पितृस्वामिकत्वं गवि, पुत्र वृत्ति स्थौल्य समान कालिक स्थौल्यं च पितरि भासते, तथाच पुत्रे शाब्दत्व रूप विशेषणाभाव कृतो विशिष्टाभाव इत्यप्रधानत्वा त्तत्र तृतीया। "सहैव दशभिः" रित्यादौ विद्यमानता वाचि सहशब्दयोगे विशेष्याभाव कृत विशिष्टाभावमादायाऽप्रधानत्वा त्तृतीयेति बोध्यम्। पुत्रस्यापि क्रियादि संबन्धे फलमाह – **अत एवेति** पुत्रस्यप्यार्थिक क्रियादि संबन्धादेवेत्यर्थः। **आगन प्रतीतिरिति** साच पुत्रोप्यागत इत्याकारिका, अन्यथा साहित्यस्या नुपपत्तिरेव। उक्तं च काव्य प्रकाशे "सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचक" मिति। शब्द शक्त्या एकार्थाभिधायक पदं सहार्थान्वय बलादनेकार्थाभिधायकं यथा कथञ्चित् यत्, सा सहोक्ति रिति तदर्थः। तत्रैकस्यार्थस्य वाचकं पद, मन्यस्याक्षेपकम्, आगत इत्येत दुभय वृत्त्यागमन बोधक मिति तद्व्याख्यातारः। अयमत्र निष्कृष्टार्थः – द्वयोस्तावत्क्रिया संबन्धे सति सहशब्दः प्रयुज्यते, तत्र यदा द्वयोरपि क्रियादि संबन्धः शब्देनो च्यते, तदा द्वयोरपि प्रधानत्वा न्नतृतीया, यथा-सहागतौ पिता पुत्रा-विति, यदात्वेकस्य क्रियासंबन्धः शब्देन प्रतिपादयिषतः, अपरस्य सहार्थान्यथानुपपत्या मानसः सः, तदा अपरस्या प्रधानत्वात्तद्वाचकात्तृतीया, पुत्रेण सहागतः पित्रेत्यादौ, पुत्रस्यक्रिया संबन्ध शाब्दश्चेत्, पित्रासह पुत्र आगत इति भवति, शाब्दक्रियान्वयित्वाभावरूपं चा प्रधानत्व-मिति।

**अत्र न सहशब्दप्रयोग एव न विवक्षितः, "वृद्धो यूना" 1-2-65 इति तद भावेपि तृतीयादर्शनात्। अत एव सहत्व मत्र तृतीयार्थः। सहशब्दः क्वाचित्क स्तात्पर्यग्राहकः। तदन्वयस्त स्वनिरूपकपित्राश्रयकत्वसंबन्धेन क्रियायामेव। साहित्यं च 'सहैव दशभिः पुत्रै' रित्यादौ तत्काले विद्यमानत्वम्, पुत्रेण सहागत इत्यादौ चैकक्रियान्वयित्व मित्यादियोग्यता-नुसारेण बोध्यम्।**

युक्त ग्रहणलब्धमेवार्थं विशदयति, **अत्र चेति** अनेन तृतीयाप्रवृत्तावित्यर्थः, **न विवक्षित इति** किंतु तदभावेपि तदर्थप्रतीतिरपीत्यर्थः। एष चार्थो निरुक्त रीत्या युक्तग्रहणा ल्लभ्यत इति भावः, न्याय सिद्धेऽर्थे लिङ्गमप्याह – **वृद्धो यूनेतीति** "वृद्धो यूना तल्लक्षणश्चेदेव विशेष" 1-2-65 इत्येकाशेष विधायकं सूत्रम्, गार्ग्यश्च गार्ग्यायणश्च-गार्ग्यौ इत्युदाहरणम्, अत्र सह शाब्दा प्रयोगेपि यूना इति तृतीयाप्रयोगादपि निरुक्तार्थो ज्ञाप्यत इति भावः। इति = इत्यादि सूत्रे। तदभावेपि = सह शब्दयोगाभावेपि। तृतीयादर्शनात् = तस्मादपि, अत एव = तदयोगेपि तदर्थयोगे तृतीयायाः साधुत्वादेव। अत्र = एतत्सूत्रोदाहरणेषु। तर्हि तृतीययैव साहित्यबोध सिध्द्या पुत्रेण सहागत इत्यादौ सह शब्द प्रयोगानर्थकय मत आह – **सह शब्द इति** क्वाचित्क; = पुत्रेण सहेत्यादौ तृतीयासमभिव्याहृतः। **तात्पर्यग्राहक इति**, द्वौ ब्राह्मणा वित्यादिवदयं प्रयोगः, "संभेदे नान्यतर वैयर्थ्य" मिति न्यायादिति भावः, एक कार्यकारण भाव कल्पना लाघवानुरोधेनाह – **तदन्वयस्त्विति – स्वनिरूपकेति** स्वं = साहित्यं, तन्निरूपकः यः पिता तदाश्रयकत्वं भावनायाम्। तथाचानेन परम्परा संबन्धेन पुत्र निरूपित साहित्य विशिष्टाऽऽगमन भावना पितृनिष्ठेति स्वमते बोध इति भावः। नामार्थेऽन्वय वारणायाह – **क्रियायामेवेति** साहित्यं च नैकरूपं, किंतु विषय भेदेन भिद्यत इत्याह **साहित्यं चेति सहैवेवेति** यद्यपि पुत्रा भारं वहन्ति, गर्दभी च भारं वहतीत्यर्थः प्रकृत वाक्यस्य। तदा एक क्रियान्वयित्वरूपमेव साहित्यमिति न दोषः। भारमुद्वहतः पुत्रान् गर्दभी वहतीत्यर्थेपि न दोषः तथापि पुत्राभारं न वहन्ति, पुत्रानपि गदभी न वहति किंतु दश संख्याक पुत्र सत्वेपि गर्दभी भारं वहतीत्यर्थः प्रकृत वाक्यस्य। तदा गर्दभीकर्तृक वहनकाले विद्यमानत्वं साहित्यमिति विवक्षणीयमिति भावः। अत एव "पुत्रस्या प्रधानत्वं न क्रियानन्वयित्वेनैव, सहैव दशभि, रित्यादिवत्, इति दृष्टान्तकथनमिति बोध्यम्, योग्यतानुसारेणाह – **पुत्रेण सहेति** इत्यादावित्यादि शब्देन "पुत्रेण सहयः, सगतः, प्रासोष्ट शत्रुघ्न मुदग्रचेष्टमेका सुमित्रा सहलक्ष्मणेन" तिलैः सह माषान् वपन्ती, त्यादे ग्रहणम्। माषवागोत्तरं तत्रैव

क्षेत्रे तिलवापः कृत इति तृतीयवाक्यार्थः। एकक्रियान्वयित्वमित्यादीत्यादि शब्देन वैशिष्टयादिरूप, स्थूलकाल घटितं समानदेशत्वरूप च साहित्यं ग्राह्यम्। योग्यतानुसारेण = तत्तदर्थस्यान्वय योग्यतानुसारेण।

**एवं "येनाङ्गविकारः" 2-3-20 इत्यनुशासनाद् येन = अङ्गेन विकृतेन, अङ्गिनोविकारो लक्ष्यते, तत स्तृतीयास्या दित्यर्थका दक्ष्णा काण इत्यादौ तृतीया। अत्रचा क्षिपदं चक्षु र्गोलकपरम्। वृत्तित्वं तृतीयार्थः, काणपदं चक्षुरूपघातवद्गोलकवत्परम्। तथाच चक्षुर्गोलक वृत्ति चक्षुरूपघातवद्गोलकवानिति बोधः। तृतीयार्थवृत्तित्वस्य तेन संबन्धेन भावनाया मन्वयात्।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं येनाङ्गेति** ननु प्रसिध्द्या "अङ्गं प्रतीकोवयव" इति कोश बलेन च अङ्गशब्दस्या वयववाचितया एवं सूत्रार्थः स्यात्-अङ्गस्या-वयवस्य विकारः, येन = गुणेन काणत्वादिना द्योत्यते तत स्तृतीया स्यादि-ति, ततश्च अक्षि काण मयस्येत्यादौ प्रथमां बाधित्वा गुणवाचकात्काण शब्दादेव तृतीया स्यात्, अक्ष्णा काण इत्यादौ तु तृतीया न स्यादित्यतोऽन्यथा व्याचष्टे – **येनाङ्गेन विकृतेनाङ्गिनो विकार इति** अयमर्थ-अङ्ग ग्रहणं विनापि "येन विकार" इत्युक्तावपि येन गुणेन गुणिनो विकार स्तत स्तृतीयायाः काणादिशब्देभ्य सिद्धतयाऽङ्गग्रहण वैयर्थ्यस्य स्पष्टत्वा त्तद्ग्रहण सामर्थ्य मूलकाद् "अङ्ग शब्दोऽयं समुदाय वचन" इति भाष्यकार वचन बलात्सूत्रेऽङ्ग शब्द अर्श आद्यजन्तः, अङ्गानि अस्य सन्तीति = अङ्गः = अङ्गी = अवयवी, तस्य विकारः, अङ्ग विकारः, येनेति करण तृतीयान्तेन अर्श आद्यच्प्रकृत्यर्थ भूतोऽवयवो, गृह्यते। संनिधानात्। सोपि सामर्थ्या द्विकृत एव, न हय विकृतेनावयवेना वयविनो विकारो लक्ष्यो भवति। अनया रीत्या मूलोक्तार्थः सिध्यति। स्पष्टं चेदं प्रदीप हरदत्तादिग्रन्थेषु-इति। लक्ष्यते = द्योत्यते, इत्यादावित्यादिपदेन पादेन खञ्जः, पाणिना कुणि रित्यादे र्ग्रहणम्। उदाहरणे कण निमीलने इति चुरादि धातु प्रकृतिक कर्म घञन्तः काणशब्दः काणत्व गुणविशिष्टाक्षि वाचकः। अवयव धर्मस्यावयिविन्यारोपेण अक्ष्णा काण इति प्रयुज्यते, तेनाक्ष्णाऽवयवेन विकृतेनाङ्गिनो देवदत्तस्य विकारो लक्ष्यत इति ततस्तृतीया सिद्धिर्बोध्या। तदेतदाह – **अत्र चेति** उदाहरण भूते गौणे प्रयोग इत्यर्थः। तृतीयार्थः = आनुशासनिक लक्षणया। **चक्षुरूपघातेति** चक्षुष उपघातः = कनीनिकाद्यपगमरूपः, तद्वद् यद्गोलकं तद्वान् देवदत्तादिः, तत्परमित्यर्थः। एतादृशगौण प्रयोगाणां साधुत्वे च निरुक्त प्रकृत सूत्रस्थं भाष्यमेव मानम्। अक्षिकाण मस्येति तु मुख्य एव प्रयोगः। अतो न तत्र तृतीया, तथाच = अस्य प्रयोगस्य निरुक्तार्थकत्वे च। **चक्षुरिति** तद्वृत्तिः यश्चक्षुरूप घातः = कनीनिकाद्यपगमरूपः तद्वद् यद्गोलकं तद्वानित्यर्थः, तेन संबन्धेन = चक्षुर्गोलवृत्ति चक्षुरूपघातवद्गोलक-वद्वृत्तित्वसंबन्धेन,

**तथा "इत्थंभूतलक्षणे" 2-3-29 इत्यनुशासना ज्जटाभिस्तापस इत्यादौ तृतीया। अत्र लक्षणवत्त्वापरपर्यायं ज्ञाप्यत्वं तृतीयार्थः। जटाज्ञाप्यतापसत्ववानित्यर्थः, लक्षणत्वं च विशेषणोपुलक्षणसाधारणम्। तेन शमेन तापस इत्यपि साधु।**

तादृशं सूत्रान्तरं व्याचष्टे – **तथा इत्थं भूतेति** संनिकृष्टार्थ वाचिन इदं शब्दात् "इदमस्थमु" 5-3-24 रिति सूत्रेण प्रकार वचने थमु प्रत्यये, "एदेतौ रथोः" 5-3-4 इत्यनेन इदं शब्दस्य इदादेशे च, इत्थम्, इति रूपम्, अनेन प्रकारेणेति तदर्थः, अत्र न किञ्चित्संनिहितं वस्त्वस्तीति कृत्वा तदंशपरित्यागेन प्रकारमात्र वचन इत्थं शब्दो गृह्यते, सामान्यस्य भेदको विशेषः प्रकार इत्युच्यते। भूप्राप्ता विति चौरादिकाद्धातोः

''आधृषाद्वा'' इतिगण सूत्रेण णिज भावे ''गत्यर्थाकर्मके'' 3-4-72 त्यादिना कर्तरिक्तः। भूतः = प्राप्तः। कर्म विभक्त्यन्तेत्थंशब्देन भूतशब्दस्य समासः। लक्ष्यते = चिह्न्यतेऽनेनेति लक्षणशब्दः करण साधनः, तस्य कर्म षष्ट्यन्तेन इत्थंभूत शब्देन समासः, इत्थंभूतः = कञ्चित्प्रकारं प्राप्तः। तस्य लक्षणम् = इत्थं भूतलक्षणम्, तत्र तृतीयेति सूत्रार्थः, येन श्वेतच्छत्रादिना राजत्वादि प्रकार विशेषापन्नतयाऽन्यो लक्ष्यते, तदित्थं भूत लक्षणमिति बोध्यम्, **जटाभिस्तापस इति** मनुष्यत्वं सामान्यम्, तस्य तापसत्वं प्रकारः, तस्य तापसत्वं प्राप्तस्य जटा लक्षणम्, अतस्तत्र तृतीया। आदिना अपि भवान् कमण्डलुना छात्र मद्राक्षीत्, छात्रेणो पाध्यायम्, शिखया परिव्राजक मित्यादीनां ग्रहणम्, आद्ये छात्रोपाध्याययो र्गच्छतोश्छात्रस्य हस्ते कमण्डलुर्भवति, छात्रत्वस्य कमण्डलु र्लक्षणम्, द्वितीये उपाध्यायत्वस्य छात्रः, तृतीये परिव्राजकत्वस्य शिखा लक्षणम्, अत्र = एतत्सूत्रोदहरणेषु। **लक्षण वत्वेति**, जटादिरूप चिह्नवत्वेत्यर्थः। **तृतीयार्थ इति** तस्य च स्वाश्रय वद्वृत्तित्व संबन्धेन भावनान्वयो बोध्यः। **जटाज्ञाप्येति** जटाभिर्ज्ञाप्यं यत्तापसत्वं तद्वानित्यर्थः। इदानीं जटाना मविद्यमानत्वेपि प्राक्कालिकाभिस्ताभिस्तत्वं ज्ञाप्यत इति भावः। नन्वेव मुपलक्षणरूप लक्षणत्वे तृतीयेत्यर्थस्य पर्यवसानात् शमेन तापस इत्यादौ विशेषणे एतदनापत्ति, रत आह — **लक्षणत्वं चेति साधारणमिति**, अयमर्थः, लक्षणत्वं च व्यावर्तकत्वम्, तच्च विशेष्यतावच्छेदक समानाधिकरणा भावप्रतियोगित्वम्, तापस मात्रस्य जटानामभावा त्तत्संबन्धस्य विशेष्यतावच्छेदकताप-सत्व समानाधिकरणाभाव प्रतियोगित्वं संभवति। गन्धेन पृथिवी, जटाभिः स इत्यत्र तु नानेन तृतीया उद्देश्यतावच्छेदक पृथिवीत्व तदव्यक्तित्वादिमति गन्ध संबन्धजटा संबन्धाभावा सत्त्वेन प्रकृत सूत्रप्रवृत्ते रयोगात्, किंतु ज्ञापक हेतौ तृतीया। विस्तरस्तु गूढार्थतत्त्वा लोके द्रष्टव्यः। तदाश्रयश्च धर्मो द्विविधः। विशेषण मुपलक्षणं चेति। तत्र विद्यमानं सद्व्यावर्तकं विशेषणम्, यथा — पुरुषादौ वर्तमान कालवच्छेदेन विद्यमानो दण्डादिः। अविद्यमानं सद् व्यावर्तक मुपलक्षणम्-यथा — तापसादेः कालान्तरीण जटादिकम्, प्रकृते शमो विशेषणम् । अतस्तत्रापि तृतीया सिध्यति। क्वचिद्विद्यमानमपि अत द् व्यावृत्ति न्यूनाधिक वृत्तितया तत्र न विशेषण मित्युच्यते. किंतु उपलक्षण मित्येव, यथा-विद्यमाना अपि जटास्तापस उपलक्षणम्, न तूपलक्ष्यतावच्छेदकशमादिव द्विशेषणम्-इति। तेन = उभय साधारणत्वेन लक्षणत्वस्य स्वीकारेण। **शमेनेति** विशेषण रूपलक्षणत्वस्योदाहरणमिदम्

**एवं ''संज्ञोऽन्यतरस्यां कर्मणि'' 2-3-22 इत्यनुशासनात् संपूर्वस्य जानातेः कर्मणि तृतीया द्वितीया वा। पित्रा सञ्जानीते, पितरं सञ्जानीते।**

तादृशं सूत्रान्तरं व्याचष्टे **एवं संज्ञ इति** जनी प्रादुर्भावे इति दैवादिकस्य न ग्रहणम्, तस्याकर्मकत्वाद्, किंतु ज्ञा अवबोधने इति क्रैयादि कस्येत्याशयेनाह — **जानातेरिति** कर्मणि द्वितीयायामेव प्राप्तायां पक्षे तृतीयाविधानार्थमिदम्, तृतीयाया अभावपक्षेद्वितीया प्रवर्तते। तदाह — **द्वितीयावेति** द्वितीया चेत्यर्थः। अत्र तृतीया लाक्षणिकी, द्वितीया तु शक्यार्थबोधिकैव। उदाहरणे ''संप्रतिभ्यामनाध्याने'' 1-3-46 इत्यनेना त्मनेपदम्। अवेक्षत इति तदर्थः।

**''हेतौ'' 2-3-23 इति सूत्रेण हेतुत्वं तृतीयार्थः। तच्च यद्यपि करणत्वरूपमेव, तथापि द्रव्यादिनिरूपितत्वघटितसंसर्गेण क्रियान्वयि हेतुत्वम्, यथा-दण्डेन घट इत्यादौ। धात्वर्थ-निरूपितत्वेन संसर्गेण क्रियान्वयितु करणत्व मिति विशेषः। अत एव हेतुत्वे लक्षणा।**

**अथवा अखण्डोपाधिरूपकरणत्वे शक्तिः, तत्परिचायके सखण्डोपाधौ लक्षणेति पृथग-नुशासनम्। फलादिसाधारणं च तत्, अध्ययनेन वसति, तादर्थ्यमात्रं तृतीयार्थः।**

तादृशं सूत्रान्तरं व्याचष्टे – **हेताविति** सूत्रे हेतु शब्देन ''तत्प्रयोजको हेतुश्चे'' 1-4-55 ति शास्त्रेण परिभाषितस्य हेतो र्नग्रहणम्, तत्र चकारेण तस्य कर्तृ संज्ञाया अपि विधानात् ''कर्तृ करणयोस्तृतीये'' त्यनेन कर्तर्येव तृतीयायाः सिद्धत्वात्। किंतु निमित्ताद्यपरपर्यायस्य लौकिकस्य हेतोर्ग्रहणम्। ननु लौकिकस्य ग्रहणेपि दोषतादस्त्यम्, तस्य क्रिया निर्वर्तकतया करणत्वा त्करणे तृतीययैव गतार्थत्वादित्याशयेनाह – **तच्चेति** लौकिक हेतुत्वं चेत्यर्थः। **करणत्वरूपमेवेति** अग्निना पाक इत्यादौ हेतुत्वेनाभिमतस्यग्न्यादेः क्रिया निर्वर्तकत्वेन करणत्व संभवात्करण तृतीययैव निर्वाहा ''द्धेता'' विति पृथक् सूत्रं नारम्भणीयमिति भावः। समाधत्ते – **तथापीति द्रव्याविति** आदिना गुण क्रिययोर्ग्रहणम्, दण्डेन घट इत्यत्र जन्यत्वं तृतीयार्थः, तस्य च स्वाश्रय (घट) निरूपित वृत्तित्व संबन्धेन भावनाया मन्वयः, तत्संसर्गे घटरूपद्रव्य निरूपितत्वस्य घटकत्वात्तद्घटित संसर्गेण क्रियाया मन्वया द्दण्डादे र्हेतुत्व व्यवहार इति भावः, ''द्रव्यादि विषयो हेतु'' रिति 3-7-25 हरिग्रन्थस्याप्ययमेवाशयः, **दण्डेनघट इत्यादाविति** आदिना बीजेनाङ्कुरः, धनेन कुलम्, कन्यया शोकः, विद्यया यशः, शिल्पाभ्यासेन नैपुण्यम्, अग्निना पाक इत्यादे र्ग्रहणम्, तथाच द्रव्यगुण क्रिया साधन समर्थं वस्तु द्रव्यादीनां हेतुः, क्रियासाधन समर्थमप्यानाश्रित व्यापारं हेतुरेवेति बोध्यम्, हेतुत्वात्करणत्वस्य भेदं दर्शयति **धात्वर्थेति** काष्टैः पचतीत्यत्र करणत्वं तृतीयार्थः। तस्य च स्वनिरूपक विक्लित्त्यनुकूल व्यापारा वच्छिन्नत्व संसर्गेणाख्यातार्थभावनायामन्वयः। तत्संसर्गे धात्वर्थस्य घटकत्वात्काष्टादेः करणत्व व्यवहार इति भावः। **विशेष इति** द्रव्यादि विषयको हेतुः, क्रियाविषयकं करण मिति तयोर्भेदसत्त्वा त्पृथगनुशासनमिति भावः। अत एव = हेतुत्व करणत्वयोर्भिन्नत्वादेव। **लक्षणेति** ''कर्तृकरणयोस्तृतीये'' ति सूत्रं शक्ति ग्राहकम्। तदतिरिक्त शास्त्रेण कर्तृत्वकरणत्वातिरिक्तार्थे विधानात् लक्षणा तृतीयायाः, साहित्यादौ तृतीयाया इवेति भावः। सखण्डोपाधिरूपं करणत्वमिति पक्षे इदम्, अखण्डोपाधिरूपं तदिति स्वसिद्धान्तानुसारेणाह – **अथवेति** तत्परिचायके = तदुपलक्षण भूते। पृथगनुशासनम् = हेतावित्यनुशासनम्। वक्ष्यमाण प्रयोगोपपत्तय आह **फलादीति** तत् = हेतुत्वम्, फलस्यापि स्वज्ञान द्वाराजनकत्वा त्तत्त्व मिति भावः। अध्ययनफलको वास उदाहरण वाक्यार्थः। तदाह **तादर्थ्यमात्रमिति** एवं च तादर्थ्यचतुर्थ्या अध्ययनाय वसतीति प्रयोगोपि साधुरिति भावः।

**एव ''मशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वाच्या'' इति वार्तिकात्तृतीया, यथा – दास्या संयच्छते, ददातीत्यर्थः। शिष्टव्यवहारे तु भार्यायै संयच्छति।**

लाक्षणिकं वार्तिकं व्याचष्टे – **एवमशिष्टेति** वार्तिके अशिष्टः= अविहितः व्यवहार इति न कर्मधारयः, दास्यै संयच्छति कामुक इत्यत्रापि तृतीयाया आत्मनेपदस्य चापत्तेः। किंत्वशिष्टानां व्यवहार इति षष्टी समासः, अशिष्ट शब्दश्च न शिष्टभिन्नार्थकः किंतु प्रति षिद्ध कर्मकर्तृषु रूढः। तथाच अशिष्टानां = प्रतिषिद्धकर्म कर्तृणां = संकीर्णाचाराणाम्, व्यवहारे = क्रियारूपे तद्वाचक शब्द प्रयोगे प्रत्यासत्त्या यत्संबन्धेन व्यवहारस्य संकीर्णाचारत्वं, तद्वाचकात्, चतुर्थ्यर्थे तृतीया वाच्या दाण् दाने इति धातोः प्रयोग इति वार्तिकार्थः। चतुर्थ्याः प्राप्ता वनेन तदपवादतया तृतीया विधीयते, उदाहरणे दाण् धातोः कर्तरि लटि ''दाणश्च साचेच्चतुर्थ्यर्थे'' 1-3-55 इत्यनेनात्मनेपदम् ''प्राघ्राध्मा'' 7-3-78 इत्यनेन दाणु धातोर्यच्छ इत्यादेशः। कामुक पद प्रयोगेण दासी संबन्धा वगमात्संकीर्णाचारत्व प्रतीतिः। कामुक पदाप्रयोगेपि आत्मनेपदतृतीययो र्बलेन तत्प्रतीतिः। अत एव ''दाणश्चे''ति सूत्रे भाष्ये कामुक पदरहित मेवोदाहरणं प्रदर्शितम्'' दास्या संप्रयच्छते, वृषल्या संप्रयच्छते-इति, इदंच नापूर्वं वार्तिकम्, किंतु ''दाणश्च साचे च्चतुर्थ्यर्थे'' 1-3-55 इति सूत्रार्थानु वादक मित्यन्यत्र विस्तरः। प्रत्युदाहरणे आत्मनेपदं न, नापि तृतीयेति बोध्यम्, ब्राह्मणीभ्यः संप्रयच्छतीत्याद्यपि प्रत्युदाहरणं भवितु मर्हति।

**अयच सर्वोपि शक्यलक्ष्यसाधारण स्तृतीयार्थः पूर्ववदेव लिङ्गानन्वयिपदोपात्त भावनायां श्रुतायां, गम्यमानायां वा न्वेतीति बोध्यम्, यथा — शतेन वत्सान् पाययति पयः। शतेन परिच्छिन्नानित्यर्थः। परिच्छेदं प्रति तस्य करणत्वात्। अत्र गम्यमानत्व मध्याहृतपदेन बोध्यत्वम्। अलं श्रमेणेत्यत्र तु नाऽनुमेया, अलमिति निपातेनैव साध्यं नास्तीत्यर्थकेन साधनक्रियाया उपात्तत्वात्, अयमर्थश्च विभक्तिमात्रे बोध्यः।**

## इति तृतीयार्थनिरूपणम्

उक्तमेवार्थं विशेषाभिधित्सया स्मारयति — **अयं चेति** सर्व शब्दार्थमेव विवृणोति — **शक्य लक्ष्य साधारण इति** कर्तृत्व करणत्व रूपः शक्यार्थः जन्यत्वावच्छिन्नत्व परिमितत्व प्रयोजकत्वादयो लक्ष्यार्थाः। तदुभयरूप इत्यर्थः। पूर्ववदेव = द्वितीयार्थ इव। वस्त्वादि पदोपात्त भावनायामन्वय वारणायाह — **लिङ्गानन्वयि पदेति** श्रुतायाम् = तद्वाक्य घटक शब्दोपस्थितायाम् — यथा चैत्रैण पच्यते तण्डुलः, काष्टैः पचति, द्विद्रोणेन धान्यं क्रीणाति। श्रुतायामेव नाग्रह इत्याह — **गम्यमानायांवेति** सर्वत्रापि पदार्थस्य भावनायामेवान्वयः, न तु नैयायिकानामिव क्रियापदरहिते नामार्थे इति भावः, द्वितीये उदाहरति **यथा शतेनेति** तदेवोपपादयति — **परिच्छेदमिति** तस्य = शतस्य। वैयाकरणा अपि ''गम्यमानापि क्रियाकारक विभक्तीनां प्रयोजिके'' ति वदन्ति। तेषामय माशयः शतेन वत्सा नित्यादौ शतेनेति पदमेव शतेन परिच्छिन्नानित्यर्थे शक्तम्, न तु तत्र परिच्छिन्नानिति शब्दान्तरापेक्षा, पिण्डीमित्यादावपि पिण्डीमिति पदं तत्कर्मक भक्षणे शक्तम्, न तु भक्षयेति पदान्तरापेक्षा, अयमेव वाक्यैक देशन्यायशब्देनाभिधीयते, एवं पदैकदे शन्यायेनापि प्रयोगाः साधवः। सत्या, भामा, भीमः — इति। तन्नयुक्तम् अन्विताभि धानवादोक्त दूषण प्रसङ्गादिति सूचयन्नाह — **अत्र गम्यमानत्व मिति** आकाङ्क्षितार्थपूरणाया नुसन्धीयमानपदेन बोध्यत्वमेवात्र गम्यमानत्वमिति भावः। गम्यमानक्रियया कारकत्वस्य अलं श्रमेणे त्युदाहरणं शाब्दिकाना मसंगत मिति ध्वनय न्नाह — **अलं श्रमेणेत्यत्रत्विति** नानुमेया = साधन क्रिया, न गम्यमाना, किंतु श्रुतैवेत्याह — **अलमितीति** तुना शाब्दिकमतेऽरुचिं सूचयति।

इति तृतीयार्थनिरूपणम्।

## अथ चतुर्थ्यर्थनिरूपणम्।

**(न्यायसुधाकृदादिमतेन संप्रदानत्वनिर्वचनम्।)**

**एवं "चतुर्थी संप्रदाने" 2-3-13 इति सूत्रात्संप्रदानत्वार्थिका चतुर्थी भावनान्वयिन्येव। तच्च "कर्मणा यमभिप्रैति स संप्रदान" 1-4-32 मिति सूत्रेण निरुक्तम्। दानक्रियाकर्मकारकेण यमभिप्रैति = संबध्नाति, स संप्रदानमिति सूत्रार्थः। संप्रदीयतेऽस्मै इत्यन्वर्थसंज्ञाबलाद्दान-क्रियालाभः। तथाच त्यज्यमानद्रव्योद्देश्यत्वेसति स्वीकारवत्त्वं संप्रदानत्वमिति न्यायसुधा-कारादयः। तेषामयमाशयः — स्वीकारः — यथेष्टविनियोगयोग्यतोपधायकः प्रतिग्रहः विप्राय गां ददातीत्यत्र लक्षणसमन्वयः स्फुटः। उद्देश्यत्वस्वीकारौ च गवा विप्रस्य संबन्धः। तत्रो द्देश्यत्वं त्यागकालीनचतुर्थ्यन्तपदोच्चारणजन्यज्ञानविषयत्वम्।**

अथ चतुर्थ्यर्थनिरूपणम्

चतुर्थ्यर्थस्यापि भावनायामेवान्वय इत्याह — **एवमिति**। तृतीयार्थवदित्यर्थः। सूत्रे सम्प्रदानशब्दो धर्मपर इत्याह — **सम्प्रदानत्वार्थिकेति**। सूत्रे कर्मशब्दो न क्रियापरः, किन्तु "कर्तुरिप्सिततम कर्मे" ति परिभाषितकृत्रिमकर्मपरः, "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय" इति न्यायादित्याह — **कर्मकारकेणेति**। ननु सूत्रे दाधातोरनुपादानाद्दानक्रियेत्यर्थलाभः कथमत आह — **सम्प्रदीयत इति**। महासंज्ञाकरणादन्वर्थत्वमित्याह — **अन्वर्थेति। दानक्रियालाभ इति**। तेन अजां नयति ग्रामम्, हस्तं निदधाति वृक्षे इत्यादौ नातिप्रसङ्ग इति भावः। पर्यवसितार्थमाह — **त्यज्यमानेति। न्यायसुधेति**। द्वितीयाध्याये द्वितीयपादे चतुर्थे उपांशुयाजाधिकरणे तैरुक्तम्। **यथेष्टेति** विनियोगश्च प्रतिग्रहीतुः। उपधायकः = सम्पादकः। **स्फुट इति**। त्यज्यमानं द्रव्यं गौः तदुद्देश्यत्वस्य, स्वीकारवत्वस्य च विप्रे सत्त्वाल्लक्षणसङ्गति रिति भावः। **त्यागकालीनेति**। 'इदं विप्राय, न मम' त्यभिलप्यमानरूप इच्छा विशेषस्त्यागः, तत्कालीनं यच्चतुर्थ्यन्त विप्रादिपदोच्चारणं, तज्जन्यं यज्ज्ञानं, विप्रादिविषयकं तद्विषयत्वं विप्रादावित्यर्थः।

**नच तत्र प्रमाणा भावः, शिष्टाचारस्यैव प्रमाणत्वात्।**

> **"नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो ददेत्।**
> **संकीर्त्य देशकालादि तुभ्यं संप्रददे इति।।**
> **न ममेति स्वसत्ताया निवृत्तिमपि कीर्तयेत्।**
> **दान होमादिकं कुर्या देवं श्रद्धासमन्वितः।।"**

**इति हेमाद्रिधृतवृद्धवसिष्ठवचनाच्च। अत एव पूर्वदलमिन्द्रादिदेवताया मति व्याप्तमतः स्वीकारेति। तत्र प्रतिग्रहस्य नवमे निषेधात्। अत एव त्यज्यमानद्रव्योद्देश्यत्व मुक्तविध मिन्द्रादिरूपेऽर्थे, शब्दे च त्यागकालीनचतुर्थ्यन्तपदोच्चारणकर्मत्वरूपं दादेवतात्वं तद्धित-वाच्यम्, वृद्धव्यवहारात्। यदितु संप्रदानभूतब्राह्मणादौ देवतात्वव्यवहाराभाव, स्तदा देवतात्वलक्षणे स्वीकाराभावोपिनिवेशनीयः। "प्रजापतये जुहोती" त्यादौ च तादृशदेवतात्वे लक्षणेति तस्या स्ततो दौर्बल्य मुक्त माकरे। क्रेत्रादौच स्वीकारसत्त्वेपि पूर्वदलनैयत्या भावा दाद्यदलम्।**

तत्र = स्वीकारपर्यन्तमर्थवर्णने, अत एव = स्वीकारपर्यन्तं स्वीकारादेव। पूर्वदलं = त्यज्यमानद्रव्योद्देश्यत्वरूपं पूर्वदलम्। तथापि तत्रातिव्याप्तिः कथं वार्यत इत्यत आह — **तत्रेति।** देवतायामित्यर्थः। **निषेधादिति।** नवमे प्रथमपादे चतुर्थे धर्माणामदेवता प्रयुक्तत्वाधिकरणे इत्यर्थः। तत्र हि किं यागो देवताराधनार्थः? तस्याश्चाराधितायाः फलम्? उत अपूर्वद्वारं यागस्य साधनत्व? मिति विचारे देवताया विग्रहहविः स्वीकार तद्भोजन तृप्ति प्रसादलक्षण विग्रहादिपञ्चकाभावात् देवताप्रयुक्तत्वा भावाद्धर्माणा मपूर्वप्रयुक्तत्वमेवेति सिद्धान्तितम्। तस्मिन् पञ्चके स्वीकारः परिगणित इति बोध्यम्। अत एव = सम्प्रदानत्वस्य स्वीकारवत्वघटितत्वादेव, अर्थे = इन्द्र शब्दवाच्ये। **त्यागकालीनेति।** त्यागकालिकं यच्चतुर्थ्यन्त पदोच्चारणं तत्कर्मत्व रूपमित्यर्थः। **वृद्धव्यवहारादिति।** इदं 'सास्यदेवते' 4-2-24 तिस्मृतेरप्युपलक्षणम्। एतादृशं देवतात्वं सम्प्रदानभूत ब्राह्मणादावतिव्याप्तमिति वादिनां मतमाश्रित्याह — **यदित्विति। स्वीकाराभावोपीति** सम्प्रदाने स्वीकारस्य सत्त्वान्नातिव्याप्तिरिति भावः। सम्प्रदानत्वस्य स्वीकारत्त्वघटितत्वे देवतात्वस्य तदघटितत्त्वे च प्राचां संमतिमाह — **प्रजापतय इत।** तादृशदेवतात्वे = स्वीकाराभावविशिष्ठत्यज्यमान द्रव्योद्देश्यत्वरूपे देवतात्वे। लक्षणा = सम्प्रदानत्व बोधिकायाश्चतुर्थ्याः। इति = हेतोः। नस्याः = चतुर्थ्याः। ततः = तद्धितात्। **उक्तमिति**

''तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परम्परम्।।

इति भट्टपादैरुक्त मित्यर्थः। आकरे = द्वितीयाध्याय द्वितीयपादे उपां शुयाजाधिकरणे भाष्ये वार्तिके च। अयमर्थः — देवताप्रमाणेषु दौर्बल्यक्रमो निरूपित आकरे। सर्वापेक्षया तावत्प्रबलो हविः पदसमभिव्याहृत स्तद्धितः, तस्य स्मृति वृद्धव्यवहाराभ्यां त्यज्यमानद्रव्योद्देश्यकत्व रूपे देवतात्व एव शक्तत्वात्। ततो दुर्बला चतुर्थी, तथाहि-सा हि सम्प्रदानत्ववाचिनी। तच्च त्यज्यमानद्रव्योद्देश्यत्व विशिष्टप्रतिग्रहीतृत्व-रूपम्। तच्च ब्राह्मणादौ सम्भवति, न देवतायाम्। तत्र प्रतिग्रहाभावात्। अत एकदेशलक्षणया देवतात्वापरपर्याय त्यज्यमानद्रव्योद्देश्यत्वरूप भाक्तसम्प्रदानत्वपरा चतुर्थी। एवञ्च तद्धिताद्देवाता प्रतीतिः शक्त्या, चतुर्थ्यास्तु लक्षणयेति तद्धिताच्चतुर्थ्या दौर्बल्यम्। सम्प्रदानत्वस्य स्वीकारवत्वाघटितत्वे उभयोरपि शक्त्यैव देवताबोधकत्वात्तयोः प्रबलदुर्बलभावस्तदुक्तो न घटेत-इति। आद्यदलस्य प्रयोजनमाह — **क्रेत्रादाविति।**

**तत्रापि सर्वं त्यागादिकमन्यलभ्यम्, केवलमुद्देश्यत्वं स्वीकारश्च चतुर्थ्यर्थः। तयोश्चोक्त-परम्परासंबन्धेन विषयताघटितसामानाधिकरण्येन च त्यागद्वारको भावनान्वयः। एवं चै तादृशलक्षणानाक्रान्ते यत्र यत्र चतुर्थीप्रयोग स्तत्र सर्वत्र लक्षणे-ति। काशिकावृत्तिकारस्याप्य-मेवाभिप्रायः।**

तत्रापि = चतुर्थ्यर्थ मध्येऽपि। **त्यागादीति।** त्यागो धातुना, द्रव्यं गवादि पदेन च लभ्यते, अतस्तदंशे चतुर्थ्या न शक्तिः कल्प्या, 'अनन्यलभ्यः शब्दार्थः' इति न्यायात्। परिशेषादाह — **केवलमिति। तयोश्चेति।** चतुर्थ्यर्थयोस्त्यागद्वारको भावनान्वयः। तत्रोद्देश्यत्वस्य त्यागेऽन्वये संबन्धः — **उक्तपरम्परेति।** स्वनिरूपक ज्ञान जनक चतुर्थ्यन्त पदोच्चारण कालकत्व सम्बन्धेनेत्यर्थः। स्वं = विप्रवृत्तिविषयत्वम्। स्वीकारस्य त्यागेऽन्वये सम्बन्धः — **विषयताघटितेति।** स्वाधिकरणनिरूपित विषयतासंबन्धावच्छिन्नवृत्तित्वसबधेनेत्यथ स्वीकारस्य संयोगरूपत्वे तस्य समवायेन विप्रवृत्तित्वम्। स्वाधिकरणं-विप्रः, तन्निरूपित विषयतासबन्धावच्छिन्नवृत्तित्वेन त्यागो विप्रे, त्यागविषयत्वाद्विप्रस्य। तथाच निरुक्तसम्बन्धेनोद्देश्यत्ववान् निरुक्तसंबन्धेन स्वीकारवांश्च यस्त्यागस्तदनुकूल भावना

चैत्रवृत्तिरिति बोधः। स्वोक्तार्थे वृद्धवैयाकरणानां संमतिं दर्शयति – **काशिकाकारस्यापीति**। अयं हि तदीयो ग्रन्थः – ''अन्वर्थ संज्ञा विज्ञानाद्ददाति कर्मणेति विज्ञायते'' इति

## (वैयाकरणमतेन संप्रदानत्वनिर्वचनम्।)

**वैयाकरणनव्यास्तु यत्क्रियाकर्मसंबन्धजन्यफलभागित्वेनो द्देश्यं यत्तत् तत्क्रियासंप्रदानम्। विप्राय गां ददातीत्यत्र दानक्रियाकर्मकारकेण गोद्रव्येण यः स्वत्वाख्यो विप्रस्य संबन्धस्तज्जन्यं फलं सुखादि तद्भागित्वरूपेणो द्देश्यत्वं विप्रे इति स दानक्रियासंप्रदानमिति लक्षणसमन्वयः। पितृस्वर्गोद्देशेन ब्राह्मणसंप्रदानक धनदाने पितुः स्वर्गादिरूपफल भागित्वेपि न संप्रदानत्वम्। तत्फलस्य पितरि धनसंबन्धाभावेन तत्संबन्धजन्यत्वा भावात्। अत एव कर्मकारकजन्यत्वं पितृस्वर्गादावपि कदाचित्संभाव्येतेति संबन्धजन्यत्वानुधावनम्। अत्र कर्मणा'यमिति द्वितीयानिर्देशात् कर्मकारकं प्रति संप्रदानस्येप्सितत्वं लभ्यते। तेन फलभागित्वेनेप्सितत्वं संप्रदानत्वमित्यर्थः। 'विप्राय गां ददाति स्वर्गकाम' इत्यादौ च कर्मकारकस्य स्वर्गाङ्गभूतदानाङ्गत्वेपि दानसाद्गुण्यजनकत्वेनेप्सितत्वाद् विप्रे संप्रदानत्वाविघातः।**

काशिकाकारस्याप्ययमेवाभिप्राय इत्युक्त्या ततो नवीनानामाशयो भिन्न इत्यवगम्यते, तं प्रतिपादयति – **वैयाकरणनव्यास्त्विति**। सम्प्रदानसंज्ञाया अन्वर्थत्वानङ्गीकारादाह – **यत्क्रियाकर्मेति**। दानक्रियैवेति नियमो नेति भावः। कर्मसंबन्धेन जन्यं यत्फलं, तद्भागित्वेनेत्यर्थः। यद् = ब्राह्मणादि। लक्ष्ये लक्षणं सङ्गमयति – **दानक्रियाकर्मेति**। सुखादि = क्षीरदधिघृत भोजनजन्यं सुखादि। आदिना धनलाभादि। कर्मसंबन्धजन्येति फले विशेषणस्य प्रयोजनमाह – **पितृस्वर्गेति**। 'पितुः स्वर्गोभवतु' इत्युद्देशेन ब्राह्मणाय धनं ददाति, तेन पितुः स्वर्गफलं जायते, अतस्तस्यापि सम्प्रदानत्वं प्राप्नोति तद्वारणार्थमिदमिति भावः। तेन कथं वारण, मत आह – **तत्फलस्येति**। स्वर्गफलस्येत्यर्थः। धनसंबन्धजन्यत्वाभावेहेतुः **पितरि धनसंबन्धाभावेनेति**। पुत्रदत्तधनसंबन्धो ब्राह्मणस्य, न पितुः। धनरूपकर्मसंबन्धजन्यत्वं स्वर्गे नास्तीति न दोषः। तर्हि कर्मजन्यफलेत्येवास्तु, तावतापि पितरि संज्ञा वार्यते, किं संबन्ध निवेशेने, त्यत आह – **अत एवेति**। पित्रादीनां सम्प्रदानत्वाभावादेवेत्यर्थः। ननु फल भागित्वेन उद्देश्यमित्यर्थलाभः सूत्रात्कथमत आह – **अत्रेति**। ''कर्मणा यमभिप्रैति स सम्प्रदान'' मिति पाणिनिसूत्र इत्यर्थः। **द्वितीयानिर्देशादिति**। 'कर्तुरीप्सिततमं कर्मे' त्यनेन ईप्सितस्य कर्मत्वात्तत्र विहिता द्वितीया ईप्सितत्वं गमयतीति भावः। तदाह – **कर्मकारकं प्रतीति**। लक्ष्यस्थगवादिकं प्रतीत्यर्थः। **ईप्सितत्वं लभ्यत इति**। एवञ्च द्वितीयापेक्षया चतुर्थीश्रुतेः प्राबल्यं लभ्यते, सम्प्रदानत्वे कर्मत्वस्य निमित्तत्वलाभात्। अत एव चतुर्थे द्वितीयपादे ''प्रासनवन्मैत्रावरुणायदण्डप्रदान'' मिति षष्ठेऽधिकरणे ''क्रीते सोमेमैत्रावरुणाय दण्डं प्रयच्छती'' ति वाक्यविहितं दण्डदानं न प्रतिपत्तिः, किन्तु चतुर्थीश्रुत्याऽऽर्थकर्मेति निर्णीतं संगच्छत इति बोध्यम्। ननु स्वर्गोद्देशेन विप्राय गोदानस्थले विप्रस्य सम्प्रदानत्वानापत्तिः, गोरूपकर्मसंबन्धजन्य क्षीरादिफल भागित्वेनोद्देश्यत्वाभावादत आह – **विप्राय गामिति**। इत्यादौ च = इत्यादौ तु। कर्मकारकस्य = गोः। **स्वर्गाङ्गेति**। दातुः स्वर्ग उद्देश्यः, तदङ्गं-दानं, तदङ्गत्वेपीत्यर्थः। एवञ्च गोसंबन्धजन्य फलभागित्वेनोद्देश्यत्वाभावात्तस्य संज्ञानापत्तिरिति भावः। **दानसाद्गुण्येति**। अयमर्थः– प्रकृते गोकर्मसंबन्धजन्यं फलंदानसाद्गुण्यजनकत्वं, तत्त्वेन ईप्सितत्वाद्विप्रस्य सम्प्रदानत्वमविरुद्धम्। 'गवा ब्राह्मणो दानसाद्गुण्य जनको भव' त्वितीच्छाया यजमानस्य सत्त्वात्। विगुणस्य दानस्य फलाजनकत्वात्तत्साद्गुण्य जनकतया विप्र ईप्सित एव। तेनविना तदसिद्धेरिति।

**'अजां ग्रामं नयती' त्यत्राऽजासंबन्धजन्यफलवत्त्वेन ग्रामस्येप्सितत्वा भावा न्न ग्रामस्य संप्रदानत्व प्रसङ्गः। तादृशफलवत्त्वेन ग्रामस्ये प्सितत्वेऽजां ग्रामायनयतीति प्रयोग इष्ट एव।**

ननु सम्प्रदानत्वस्यान्वर्थत्वाभावे धातुमात्र प्रयोगेपि कर्मसंबद्धस्य सम्प्रदानत्वापत्तिः। तथाच अजां ग्रामाय नयतीत्यपि स्यादत आह – **अजां ग्राममिति। अजासंबन्धेति।** गौर्ब्राह्मणसंबद्धाभवत्वितीच्छा-सत्त्वाद्ब्राह्मणे सम्प्रदानत्वं सिध्यति। प्रकृते ग्रामोऽजासंबद्धो भवत्विति नेच्छा नेतुः, किन्तु अजाग्रामसंबद्धा भवत्विति। अतस्तत्संबन्धफल भागित्वेनेप्सितत्वा भावा न्न ग्रामस्य तत्त्वमिति भावः। तत्त्वेनेप्सितत्त्वेतु तस्य तत्त्वमिष्टमेवेत्याह – **तादृशफलवत्त्वेनेति।** अजारूपकर्मसंबन्धफलभागित्वे-नेत्यर्थः। ग्रामोऽजासंबद्धो भवत्वितीच्छा नेतुः। अजासंबंधेनाजामूत्रपुरीषसंसर्गेण ग्रामस्य सस्याभिवृद्धिरूप फलभागित्वाद्ग्रामस्य तत्त्वमिष्टमेवेति भावः। प्रत्युतान्वर्थत्ववादिन एतत्प्रयोगासिद्धि-र्दोष इत्याकूतम्।

**एवमेवच 'रजकाय वस्त्रं ददाति' 'रजकस्य वस्त्रं ददाती' त्यादयः प्रयोगा अप्युपपादनीयाः, एव 'मुपाध्यायस्तस्मै चपेटा ददाती' ति महाभाष्यप्रयोगोपि संगच्छते। इतरथा स्वस्वत्वनिवृत्ति-पूर्वकपरस्वत्वापादनरूपदानघटितसंप्रदानत्वे ईदृशप्रयोगाणां भाक्तत्वापत्तेः। अतो बहुतर-प्रयोगसाधारणमिदं संप्रदानत्वम्।**

अन्वर्थत्वाभावे फलान्तराणि दर्शयति – **एवमेवचेति।** विवक्षाभेदेन प्रयोगद्वयसिद्धिवदित्यर्थः। **रजकाय वस्त्रमिति।** वस्त्रसंबन्धा द्रजकस्य धनलाभः फलमिति तद्भागितया सम्प्रदानत्वमिति भावः। संबन्धसामान्य विवक्षायामाह – **रजकस्य वस्त्रमिति। महाभाष्येति।** वृद्धिसंज्ञासूत्रस्थमिदं भाष्यम् – ''य उदात्ते कर्तव्ये अनुदात्तं करोति, खण्डिकोपाध्यायस्तस्मै चपेटां ददाति, अन्यत् त्वं करोषी'' ति, इति हि तत्र भाष्यम्। खण्डिकोपाध्यायः = बालोपाध्यायः। इतरथा = संज्ञाया अन्वर्थत्वाश्रयणे। **स्वस्वत्वेति।** स्वस्वत्वनिवृत्तिपूर्वकं यत् परस्वत्त्वापादनं, तद्रूपदानघटित सम्प्रदानत्वे चतुर्थी इत्यर्थः। उपसंहरति – **अत इति।**

## (अत्र मते शाब्दबोधप्रकारः।)

**अत्र च 'विप्राय गां ददाती' त्यत्र फलजनकत्वरूपमुद्देश्यत्वं निरूपितत्वं च चतुर्थ्यर्थः। प्रकृत्यर्थ श्चतुर्थ्यर्थे फले निरूपितत्वे च साक्षात्संबन्धेनान्वेति। चतुर्थ्यर्थयोश्च परस्वत्वा पादकस्वस्वत्वनिवृत्त्यनुकूलक्रियावाचि धात्वर्थतावच्छेदकपरस्वत्वे न्वयः। द्वितीयार्थ-वृत्तित्वस्यापि तत्र स्वस्वत्वे चान्वयः। तथाच विप्रवृत्तिसुखजनक विप्रनिरूपितगोवृत्तिस्वत्व-जनकगोवृत्तिस्वस्वत्वनिवृत्तिजनकक्रिया चैत्रनिष्ठेति शाब्दबोधः। 'रजकाय वस्त्रं ददाती' त्यादौ समर्पण एव धात्वर्थतावच्छेदके चतुर्थ्यर्थयो रन्वयः। चपेटां ददातीत्यत्र चपेटासंयोग एव धात्वर्थतावच्छेदके तयोरन्वयः। 'वृक्षायोदकं सिञ्चती' त्यत्रापि वृक्षनिष्ठपुष्टिजनकत्व वृक्षनिरूपितत्वयो र्धात्वर्थतावच्छेदके उदकनिष्ठसंयोगे न्वयः-इत्याहुः।**

एवं सम्प्रदानत्वं निरुच्य विभक्त्यर्थमाह – **अत्र चेति।** सूत्रोदाहरणविषये इत्यर्थः। अन्यस्य मानान्तरलभ्यत्त्वादाह – **उद्देश्यत्वं निरूपितत्त्वं च चतुर्थ्यर्थ इति। परस्वत्वेति।** परस्वत्वापादिका या स्वस्वत्वनिवृत्त्यनुकूला क्रिया तद्वाचक धात्वर्थतावच्छेदकेत्यर्थः। तत्र = परस्वत्वे। **विप्रवृत्तीति।** विप्रवृत्ति सुख जनकं विप्रनिरूपितं च यत् गोवृत्तिस्वत्वं तज्जनिका, गोवृत्तिस्वस्वत्वनिवृत्ति जनिका च या

क्रिया, सेत्यर्थः। समर्पणे = आधीनीकरणे, चपेटा = प्रसृतकरतलम्। तयोः = उद्देश्यत्व निरूपकत्वयोः।

## (वैयाकरणमतनिराकरणम्।)

**तत्र, संप्रदानशब्दस्या वयवार्थबाधेन शक्त्यन्तरकल्पने प्रमाणाभावात्। ग्रामं गच्छतीत्यत्र चैत्रस्य गमनक्रियाकर्मकारकग्रामसंयोगजन्यसुखभागित्वेन संप्रदानत्वापत्तेश्च। न चेष्टापत्तिः, 'ग्रामं गच्छति चैत्राये' ति प्रयोगापत्तेः। न च "आकडारादेका संज्ञा" 1-4-1 इत्यनुशासनात् संज्ञाद्वयप्रयुक्तकार्यानुपपत्तेः "विप्रतिषेधे परं कार्यं" 1-4-2 मिति स्मृतिवचनाद् गच्छतीत्यत्र कर्त्राख्याते कर्तृसंज्ञाया आवश्यकत्वे पूर्वायाः संप्रदानसंज्ञाया बाधोपपत्तिरिति वाच्यम्। तथात्वे चैत्रेण ग्रामो गम्यत इतिव च्चैत्राय ग्रामौ गम्यते इति प्रयोगापत्तेः कर्तृत्वविवक्षायां तृतीयाप्रयोगवत्संप्रदानत्वविवक्षायां चतुर्थीप्रयोगस्य निवारयितु मशक्यत्वात्। इतरथा 'ग्रामं गच्छति, ग्रामे गच्छती' ति विवक्षाभेदेन प्रयोगद्वयानापत्तेः। न च 'चैत्रः स्वस्मै गच्छती' तिवत्तादृशप्रयोगे इष्टापत्तिः, स्वस्मै गम्यत इत्यस्य स्वार्थं गम्यत इति विवरणानुरोधेन तादर्थ्य चतुर्थीत्वेन संप्रदानविभक्तित्वानुपपत्तेः।**

वैयाकरणमत दूषयति — **तत्रेति**। अवयवार्थबाधेन = सम्यक् प्रदीयते अस्मै तत्सम्प्रदानमित्यवयव-लभ्यार्थबाधेन्। शक्त्यन्तरकल्पने = फलभागित्वेन उद्देश्येऽर्थे सम्प्रदान शब्दस्य शक्तिकल्पने, **प्रमाणाभावादिति**। अत एव पाणिनिना महासंज्ञा कृता। अन्यथा टिघु भादिवल्लघ्वी संज्ञा क्रियेत। ननु महासंज्ञाकरणं प्राचामनुरोधादेव अत एव भाष्यकृता सर्वनामादिसंज्ञानामिव संप्रदानसंज्ञाया अन्वर्थत्वं नोपन्यस्तम्। अत एव "क्रियाग्रहण मिति वार्तिकस्य "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीति 2-3-12 सूत्रस्य च प्रत्याख्यानं भगवतः संगच्छते। अन्यथा पत्ये शेते, ग्रामायगच्छतीत्यादि सिध्यर्थं तयोरावश्यकतया तदसङ्गतिः स्पष्टैवेत्यत आह — **ग्रामं गच्छतीति**। कर्तुश्चैत्रादेः सम्प्रदानत्वापत्ति-मुपपादयति — **गमनक्रियेति**। तस्याः यत्कर्मकारकं ग्रामादि, तत्संयोगजन्यं सुखं, तद्भागित्वं चैत्रस्येति तस्य संप्रदानसंज्ञापत्तिरिति भावः। इष्टापत्तिः = कर्तुश्चैत्रादेः संप्रदानसंज्ञायामिष्टापत्तिः। **प्रयेणापत्तेरिति**। संज्ञायाः कार्यार्थत्वात्तन्निमित्तक चतुर्थीप्रत्ययापत्तेरित्यर्थः। **नचेति**। वैयाकरण-प्रक्रियाश्रयणेन नेयमापत्तिरित्याशयः। तामेव दर्शयति — **आकडारादिति** — द्वितीयाप्रकरणेव्याख्यातमिदं सूत्रम्। 1-4-1 इत्याश्भ्य 2-2-38 सूत्रात्प्राक् एकस्य संज्ञाद्वयं निषिद्धम्। अतस्तत्प्रयुक्तं कार्यद्वयमपि न भवति। किन्तु एकैव संज्ञा। तत्प्रयुक्तं कार्यं चैकमेवेति भावः। तत्र व्यवस्थां दर्शयति — **विप्रतिषेधे इति - आवश्यकत्वे इति**। "स्वतन्त्रः कर्ता" 1-4-54 इति कर्तृसंज्ञाविधायकं सूत्रम् "कर्मणा यमभिप्रैति स सम्प्रदान" 1-4-32 मिति संप्रदानसूत्रात्परम्। अतः कर्तृसंज्ञैव प्रवर्तते, न संप्रदान संज्ञेति भावः। तदाह — **पूर्वाया इति**। पूर्वसूत्रविहिताया इत्यर्थः। आकडारसूत्रं सर्वत्र व्यवस्थापकं नैव भवितुमर्हति, एक संज्ञावरोधेऽपि संज्ञान्तर प्रयुक्तकार्यदर्शना, दित्याशयेन दूषयति — **तथात्वे इति** स्पष्टप्रतिपत्तये कर्माख्याते दोषमाह — **चैत्रेणेति** चैत्रस्य संप्रदानत्वे चतुर्थ्यापत्तिरित्याह — **चैत्रायेति**। आपत्तिमुपपादयति — **कर्तृत्वविवक्षायामिति। अशक्यत्वादिति**। कारकाणां विवक्षाधीनत्वादिति भावः। नन्वत्रापि आकडारसूत्रप्रवृत्त्या संप्रदानत्व बाधनेन कर्तृसंज्ञाया एव प्रवृत्त्या नायं दोष, इत्यत आह — **इतरथेति**। विवक्षामननुसृत्य आकडारसूत्रबलेनैव विभक्तिप्रवृत्त्यभ्युपगमे इत्यर्थः। **विवक्षाभेदेनेति**। ग्रामस्य कर्मत्वेन विवक्षायां द्वितीया, आधारत्वेन विवक्षायां सप्तमीति विवक्षाभेदेनेत्यर्थः। इदं तृतीया प्रकरणे उक्तम्। सप्तमीप्रकरणे वक्ष्यते च। **प्रयोगद्वयानापत्ते रिति**। अत्रापि "आधारोऽधिकरण" 1-4-45 मिति अधिकरण संज्ञा विधायक सूत्रापेक्षया "कर्तुरीप्सिततमं कर्म" 1-4-49 ति कर्मसंज्ञाविधायक सूत्रस्य

परत्वादाकडार सूत्रनियमानुसारेणाधिकरणत्वस्य कर्मसंज्ञया बाधाद् द्वितीयाया एव प्रवृत्त्या सप्तम्यन्त-प्रयोगानापत्तिः। अत आकडार सूत्रस्याव्यापकत्वात्तदनाश्रयणस्यैव न्याय्यत्वाच्चैत्रस्य संप्रदानत्वापत्ते र्दुर्वारत्वा द्वैयाकरणमतमयुक्तमेवेति भावः। **नचेति**। इष्टापत्त्या दोषवारणाद्वैयाकरणमतं युक्तमेवेति भाव्रः। स्पष्टप्रतिपत्तये कर्माख्यातप्रयोगे उदाहरति – **स्वस्मै गम्यत इति। संप्रदानविभक्तीति**। चैत्रेण **स्वार्थं गम्यते इतिवच्चैत्रेण चैत्रार्थं** गम्यत इति अर्थासङ्गतेर्नाङ्गीकार्यम्। स्वशब्दयोगेतु **स्वार्थमित्यर्थोऽनुभवसिद्धः। यथा** – 'सर्वः स्वार्थं प्रवर्तते' इति। अतः स्वशब्दसाम्यमादाय चैत्राय गम्यत इति प्रयोगे इष्टापत्ति र्न कार्येति भावः।

**नचैतद्दोषवारणाय क्रियाकरणत्वमिति कर्मविशेषणम्। ग्रामश्च न गमनकरणम्, देयंतु दानक्रियाकरणमिति नासंभव इति वाच्यम्। देयस्यापि स्वत्वरूपफलांशे करणत्वं, न तु तदनुकूलक्रियांशे इति गमनेपि तदविशिष्टम् गमनफलस्य संयोगस्यापि ग्रामजन्यत्वाविशेषात्।**

**नचेति**। वैयाकरणस्यायं पर्यनुयोगः। **क्रियाकरणत्वमिति**। क्रियायाः साधनभूतं यत्कर्म, तेनाभिप्रेयमाणस्य संप्रदानत्वं सिध्यतीति सूत्रार्थ इति भावः। तेन चैत्रस्य संप्रदानत्वं वार्यत इत्याह – **ग्रामश्चेति**। गमेर्ग्रामः कर्म। स च गमिक्रियाया न करणम्। अतो ग्रामेण संबद्धस्यापि चैत्रस्य न संप्रदानत्वमिति भावः। नन्वेवं लक्षणस्यासंभवोदोषः अत आह – **देयं त्विति**। देयं गवादित्वित्यर्थः। **दानकरणमिति**। गवाविना दानक्रियाया अनिष्पत्तिरेवेति भावः। अतो दानक्रियायाः करणभूतयागवा-कर्मणाभि प्रेयमाणत्वाद्ब्राह्मणस्य सप्रदानत्वं सिध्यतीति नासंभवो लक्षणस्येति भावः। तदाह – **नासंभव इति**। लक्षणस्या संभवदोषोनेत्यर्थः। देयस्यापि = गवादेरपि। तदनुकूल क्रियांशे = तत्फलानुकूलदानक्रियांशे। तत् = क्रियाकरणत्वम्। अविशिष्टम् = समानम्। **ग्रामजन्यत्वेति**। तथाच क्रियाकरणत्वमिति कर्मविशेषणमिति स्वीकारेऽपि चैत्रस्य संप्रदानत्वापत्तेरनिवारणादयुक्तमेव तल्लक्षण-मिति भावः।

**विप्रनिष्ठफलसामान्याभावेपि 'विप्राय मया गौ र्दत्ता, न तु तस्य कश्चिद् भोगोजात' इत्यादिव्यवहारानुपपत्ते र्न फलघटितसंप्रदानत्वं युक्तम्। यस्तु प्रतिग्रहाभावेपि –**

**"मनसा पात्र मुद्दिश्य जलमध्ये जलं क्षिपेद्" (ना.स्मृ – 1-2)**

**इति वचना त्पात्रोद्देश्यकत्यागमात्रेणास्मै मया दत्ता, न त्वनेन गृहीतेति व्यवहारः, स दानस्यैव तत्र परस्वत्वोत्पत्त्यभावेना जातत्वाद् भाक्त एवेति न पूर्वमते तादृशस्थलेऽव्याप्त्यापत्तिः।**

किंच फलघटिततया लक्षणस्वीकारोप्ययुक्त इत्याह – **विप्रनिष्ठेति**। तन्निष्ठं यत् फलं पयोलाभादि। तत्सामान्याभावेपीत्यर्थः। लोकानुभूतमर्थ माभिलापेन दर्शयति। **विप्रायमयेत्यादिना – भोगो जात इत्यन्तेन। फलघटितेति**। वैयाकरणोक्तरीत्यातु विप्रस्य गोक्षीरादि फलालाभात्संप्रदानत्वानापत्तिर्दोष इति भावः। ननु स्वीकारवत्त्वघटितं न्यायसुधाकृदुक्तं लक्षणमप्ययुक्तम्। स्वीकाराभावेपि पात्रोद्देश्यकत्वमात्रेण संप्रदानत्वसिद्धेः स्मृतिषूक्तत्वात्। तथाच फलघटितं लक्षणमपि सम्यगेवेत्यत आह – **यस्त्विति**। यस्तु व्यवहारः, स भाक्त एवेति योजना। व्यवहारमेव दर्शयति – **प्रतिग्रहाभावेपीति**। स्वीकाराभावेपीत्यर्थः। वचनात् = नारदस्मृतिरूपा द्वचनात्। **त्यागमात्रेणेति**। मात्रशब्दः प्रतिग्रहव्यावृत्त्यर्थः। सः = व्यवहारः। भाक्तत्वे हेतुमाह – **तत्रेति**। मनसोद्दिष्टे पात्रे इत्यर्थः। प्रतिग्रहाभावादाह – **परस्वत्वेति**। दानस्याजातत्वाद् भाक्त इति भावः। पूर्वमते = न्यायसुधाकृदुक्ते मते। तादृशस्थले = प्रतिग्रहाभावेपि पात्रोद्देश्यकत्यागमात्रस्थले। तस्यालक्ष्यत्वादेव नाव्याप्तिरिति भावः। वैयाकरणोक्तं तु दुष्टमेवेति भावः।

**(संप्रदानत्वस्या खण्डोपाधिरूपत्वमिति स्वसिद्धान्तः।)**

**वस्तुतस्तु मतद्वयेपि पदार्थद्वयेपि शक्तिकल्पनस्या वश्यकत्वा दन्यमतेच पदार्थैकदेशेफले प्रकृत्यर्थस्यान्वयापत्ते, निरुक्तसंप्रदानत्वाज्ञानेपि च 'विप्राय गां ददाती' ति वाक्याद् विप्रसंप्रदानकं गोकर्मकं दान मिति बोधोदयाद् देयद्रव्यनिष्ठस्वत्वनिरूपकत्वरूपम्, तत्समनियतमखण्डोपाधिरूपमेव वा संप्रदानत्वं युक्त माश्रयितुम्। तदेव च शाक्तश्चतुर्थ्यर्थः। तत्र प्रकृत्यर्थो विप्रः साक्षादा धेयत्वेनैवा न्वेति। तस्य च धर्मिग्राहकप्रमाणेन ससंबन्धिकत्वकल्पनाद् निरूपकत्वापेक्षायां "कर्मणायमभिप्रैती" 1-4-32 तिसूत्रात्कर्मकारकनिरूपकत्वावगतेः स्वनिरूपकदेयद्रव्यकर्मकदानानुकूलत्वसंसर्गेण कृतावन्वयः।**

न्यायसुधाकारमतं वैयाकरणनव्यमतं च दूषयित्वा स्वमतं वक्तुमुपक्रमते – **वस्तुतस्त्विति। पदार्थद्वयेपीति।** भट्टसोमेश्वरमते उद्देश्यत्वे स्वीकारे च शक्तिः कल्प्या। वैयाकरणमते उद्देश्यत्वे निरूपितत्वे च शक्तिः कल्प्येति भावः। वैयाकरणमते विशिष्य दोषमाह – **अन्यमत इति।** अन्येषां = वैयाकरणानां मते इत्यर्थः। फले = संप्रदानत्वशरीर प्रविष्टे फले। प्रकृत्यर्थस्य = ब्राह्मणादेः। मतद्वयसाधारण्येन दोषमाह – **निरुक्तेति।** सुधाकृद्वैयाकरणोक्तसंप्रदानत्वस्याज्ञानेपीत्यर्थः। **देयद्रव्येति।** देयं द्रव्यं गवादि, तन्निष्ठं यत् स्वत्वं तन्निरूपकत्वमित्यर्थः। सखण्डत्वे गौरवादाह – **तत्समनियतेति।** शाक्तः = शक्त्या लभ्यः। स्वमतेऽन्वयमाह – **तत्रेति।** प्रत्ययार्थे संप्रदानत्वे इत्यर्थः। तस्य च = चतुर्थ्यर्थसंप्रदानत्वस्य। **धर्मिग्राहकेति।** धर्मि = अखण्डसंप्रदानत्वम्। तद्ग्राहकं = तद्बोधकं, प्रमाणं = "कर्मणा यमभि प्रैती" त्यादि पाणिन्यनुशासनं, तेनेत्यर्थः। **कर्मकारकेति।** सूत्रे कर्मणेति पदोपादानात्कर्मकारकस्य गवादेस्तन्निरूपकत्वमवगम्यत इत्यर्थः। संप्रदानत्वस्य निरूपकमिति भावः। **स्वनिरूपकेति।** स्वं = संप्रदानत्वं, तन्निरूपकं यद्देयं द्रव्यं = गवादि, तत्कर्मकं यद्दानं, तदनुकूलत्वमाख्यातार्थकृतौ, तत्संसर्गेणेत्यर्थः।

**मुख्यदानातिरिक्ते च सर्वत्र भाक्तसंप्रदानव्यवहारः। अत एव "प्रजापतये जुहोती" त्यादौ लक्षणयैव देवतात्वं प्रतिपाद्यत इति चतुर्थ्या स्तद्धितापेक्षया दौर्बल्यम्। अत एव दानातिरिक्त यत्किञ्चित्क्रियाजन्यफलभागित्वरूप भाक्तसंप्रदानत्वेपि चतुर्थीविधानार्थं "क्रियाग्रहणं कर्तव्य" मिति वार्तिकं क्रियया यमभिप्रैति सोपि संप्रदानसंज्ञः स्यादित्यर्थकम्। नचैवं क्रियाजन्यफलशालित्वेन घटं करोतीत्यादौ चतुर्थ्यापत्तिः, परत्वेन द्वितीयया चतुर्थ्या बाधात्। यत्किञ्चित्क्रियाजन्यफलशालित्वात्मकस्य भाक्तसंप्रदानत्वस्य सकर्मकाकर्मकसाधारणस्य सकर्मकमात्र विषयिण्या द्वितीयया बाधोपपत्तेश्च। अत एव 'पत्ये शेते' इत्यत्र चतुर्थी। अत एव मुख्यदानातिरिक्तसकर्मकधातुस्थलेपि यत्र 'वृक्षायोदकं सिञ्चती' त्यादौ कर्मकारकान्तरं लब्धं तत्रापि वृक्षे निरुक्तसंप्रदानत्वविवक्षायां चतुर्थी भवत्येव। कर्मान्तरा भावे तु द्वितीयैव।**

'शाक्तश्चतुर्थ्यर्थ' इत्यनेन सूचितमर्थं विशदयति – **मुख्यदानेति।** पत्येशेते इत्यादौ दाधातोरप्रयोगे, तत्प्रयोगेऽपि रजकाय वस्त्रं ददातीत्यादौ अन्यार्थकदाधातुप्रयोगे चेत्यर्थः। तत्र मानमाह – **अत एवेति।** तस्य भाक्तत्वादेवेत्यर्थः। **लक्षणयैवेति।** अयमर्थः – संप्रदानत्वे चतुर्थी विहिता। त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वं संप्रदानत्वम्। तच्च देवतायां न संभवति। तत्र प्रतिग्रहीतृत्वस्यासंभवात्। अतो लक्षणया त्यज्यमानद्रव्योद्देश्यत्वमात्रं चतुर्थ्यर्थैकदेशो वक्तव्यः। तदेवच

देवतात्वम्। तद्धितस्तु न चतुर्थीतुल्यः। तस्य शक्त्यैव देवताबोधकत्वात्-इति, तदाह — **तद्धितापेक्षया दौर्बल्यमिति। अत एवेति।** तदतिरिक्तार्थक चतुर्थ्यर्थस्य भाक्तत्वादेवेत्यर्थः। **दानातिरिक्तेति।** तदतिरिक्ता याकाचित् क्रिया तज्जन्यं यत् फलं तद्भागित्वरूपेत्यर्थः। 'कर्मणा यमभिप्रैति स संप्रदान' मिति सूत्रे पठित वाक्यकारस्य वचनमाह — **क्रियाग्रहणमिति।** मुख्यदानार्थकधातुयोग एव सूत्रप्रवृत्त्या पत्येशेते इत्यादौ तदप्राप्त्या चतुर्थ्यर्थं वार्तिकमारब्धम्। **नचेति।** धातुविशेषमनाश्रित्य वार्तिकस्य प्रवृत्तत्त्वादियमाशङ्केति बोध्यम्। **क्रियाजन्येति।** क्रिया = व्यापारः। तज्जन्यं फल = मुत्पत्तिः, तच्छालित्वेनेत्यर्थः। समाधत्ते — **परत्वेनेति।** 'विप्रतिषेधे परं कार्यं' 1-4-2 मितिशास्त्रेण परकार्यस्य प्राबल्यबोधनात्संप्रदानसूत्रापेक्षया कर्मसंज्ञासूत्रस्य परत्वाद् द्वितीया चतुर्थी बाधते। अतो नोक्तदोष इति भावः। वस्तुतश्चतुर्थ्यपवाद एव द्वितीयेत्याह — **यत्किञ्चिदिति।** वार्तिके धातुविशेषानादरेण क्रियाग्रहणमित्युक्त्या या कांचिदपि क्रियामादाय भाक्तसंप्रदानत्वं चरितार्थम्। तदाह **सकर्मकाकर्मक-साधारणस्येति।** मुख्यकर्मत्वस्य सकर्मकधातुमात्रविषयकतया प्राबल्यमित्याह — **सकर्मकमात्रेति। बाधोपपत्तेश्चेति।** "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती" ति न्यायेन द्वितीया चतुर्थी बाधत इति भावः। अत एव = भाक्तसंप्रदानत्वविधानादेव। वार्तिकं सकर्मक धातुविषयकमपीत्याह — **अत एवेति।** वार्तिकस्य धातुविशेषमनाश्रित्य प्रवृत्तत्वादेवेत्यर्थः। **सिञ्चतीति।** द्रवद्रव्यक्रियानुकूलो-व्यापारः सिञ्चतेरर्थः। जलसंबन्ध जन्य पुष्टिरूपफलाश्रयत्वेन वृक्षस्य वार्तिकेन संप्रदानत्वम्।

**तत्रापि गम्यादिसकर्मकधातुविशेषस्थले पुनः प्रतिप्रसवार्थं "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" 2-3-12 इत्यनुशासनं चेष्टारूपगत्यर्थकर्मणि अध्वभिन्ने द्वितीयाचतुर्थ्यौ स्याता मित्यर्थकम्। ग्रामं गच्छति ग्रामाय गच्छति। अचेष्टायां तु मनसा हरिं व्रजति, अध्वनि तु पन्थानं गच्छति। गन्त्राऽधिष्ठित एव पथ्ययं चतुर्थीपर्युदासः। यदातूत्पथात् पन्था एवा क्रमितु मिष्यते, तदोत्पथेन पथे गच्छतीति भवत्येवचतुर्थी। अत्र सर्वत्रा श्रयत्वं लक्षणया चतुर्थ्यर्थः। तच्च स्वनिरूपकफलजनकक्रियानुकूलत्वसंसर्गेण कृतावन्वेति।**

भाक्तमनुशासनान्तरं व्याचष्टे — **तत्रापीति।** लक्ष्यार्थबोधकेष्वपीत्यर्थः। "क्रियाग्रहण" मिति वार्तिकं सामान्येन प्रवृत्तम्। इदं तु विशेषधातुविषयकमित्याह — **गम्यादिसकर्मकेति।** चेष्टारूपगत्यर्थकर्मणि = चेष्टा = शारीरोव्यापारः, तद्रूपो यो गत्यर्थः, तस्य कर्मणि। अत्र द्वितीया शक्यार्थमेव बोधयति। चतुर्थीतुलाक्षणिकीति विवेकः। **हरिं व्रजतीति।** मानस व्यापारार्थकोऽत्र व्रजिः। "आस्थितप्रतिषेधश्चायं वक्तव्य" इति भाष्यार्थमभिप्रेत्याह — **गन्त्रेति।** आस्थितः = आक्रान्तः। तथाचानाक्रान्ते पभि नायं निषेध इति भावः। **उत्पथादिति** ल्यब्लोपे कर्मणि पञ्चमीयम्। उत्पथं परित्यज्येत्यर्थः। इष्यते = नाक्रान्तः, अतो निषेधो न। **उत्पथेनेति।** अस्य गन्तुमशक्त इति शेषो बोध्यः। अत्र सर्वत्र = एतत्सूत्रोदाहरणेषु। **स्वनिरूपकेति।** स्वम् = आश्रयत्वम् तन्निरुपकं यत्फलं सुखादि, तज्जनिका क्रिया गमनक्रिया तदनुकूलत्वं कृताविति भावः। तथाच निरुक्तसंबंधेन आश्रयत्वविशिष्टा भावनेति बोधः।

**(क्रियाग्रहणमिति वार्तिकं प्रत्याख्यात मित्यभिप्रयता वाक्यपदीयकारादीना माशयप्रदर्शनम्।)**

**यत्तु — "कर्मणा यमभिप्रैती" तिसूत्रस्थयथाश्रुत भाष्यस्वरसा द्वाक्यपदीयकैयटादौ 'क्रियाग्रहणं कर्तव्य' मिति वार्तिकप्रत्याख्यानं कृतम्।**

ननु पत्ये शेत इत्यत्र "क्रिया ग्रहण" मिति वार्तिकेन पत्यु .नत्वकथनमयुक्तम्। "कर्मणा यमभिप्रैति इति सूत्र एव भाष्यकृता तद्वार्तिकस्य प्रत्याख्यातत्वात्। तद्भाष्यस्य च हरिकैयटादिभिस्तदा-

शयकत्वेनैव व्याख्यातत्वात्। अतः प्रत्याख्यानरीत्या पत्युः संप्रदानत्वं वक्तुमुचितम्, "यथोत्तरं मुनीना प्रामाण्य" मिति शाब्दिकसिद्धान्तादित्याशङ्कायां भाष्यकारस्य वार्तिकप्रत्याख्याने न तात्पर्यम्। अननुभूतार्थप्रदर्शनेन तत्करणात्, किन्तु वार्तिकस्य विधायकत्व एव भाष्यकृतस्तात्पर्यम्। सूचितश्चायमर्थो "गत्यर्थकर्मणी" 2-3-12 त्यादि सूत्रे भाष्यकृता। हरिकैयटादीनां व्याख्यानमयुक्तमेव। तैर्निगूढभाष्यकाराशयस्यानाकलनादुपपत्तिविरहाच्चेति प्रतिपादयितुं प्रथमतो हरिकैयटादीनामाशयमनुवदति – **यत्त्वित्यादिना मुख्यसंप्रदानत्वाविरोध इत्यन्तेन** भाष्यदर्शने आमुखे वार्तिकं प्रत्याख्यातमिति धीर्जायते, विमृष्टे तु भाष्ये वार्तिकं न प्रत्याख्येयमित्येव भासत इत्याशयेनाह – **यथाश्रुतेति** तत्त्व **च** तत्रानुभवविदूरार्थप्रदर्शनात्, हर्यादयस्तु भाष्यार्थं यथा श्रुतमेवाऽग्रहीषुरिति तात्पर्यम्। **भाष्येति** इत्थं हि तत्र भाष्यम्– "क्रिया ग्रहणमपि कर्तव्यम्, इहोपि यथा स्यात् – श्राद्धाय निगर्हते, युद्धाय संनह्यते, पत्ये शेते, इति, तत्तर्हि वक्तव्यम्? न वक्तव्यम्, क्रियाऽपि कृत्रिमं कर्म, क्रियाऽपि क्रियया ईप्सिततमा भवति, कया क्रियया? संदर्शनक्रियया प्रार्थयतिक्रियया अध्यवस्यति क्रियया। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स बुद्ध्या तावत्कञ्चिदर्थं पश्यति। संदृष्टे प्रार्थना, प्रार्थनायामध्यवसायः, अध्यवसाये आरम्भः, आरम्भे निर्वृत्तिः, निर्वृत्तौ फलावाप्तिः, एवं क्रियाऽपि कृत्रिमं कर्म" इति। प्रेक्षापूर्वकारी = विचारपूर्वं क्रियाकर्ता, बुध्या = बुद्धिवृत्त्या, तावत् = प्रथमम्। कञ्चिदर्थम् = फलरूपमर्थम्, पश्यति फलविषयकसंकल्पोऽत्र दर्शनम्। तज्जन्यः फलोपायविषयोऽभिलाषः प्रार्थना, तज्जन्यः क्रियाविशेषस्य फलसाधनत्वनिश्चयः = अध्यवसायः, अभिलाषे सति तन्निश्चयकरणात्।तज्जन्या मानसी प्रवृत्तिरारम्भः, तज्जन्या भौतिकक्रिया निर्वृत्तिः, ततः फलावाप्तिरिति तद्भाष्यार्थः। एतच्च भाष्यं भर्तृहरिणा वाक्यपदीये तृतीयकाण्डे साधनसमुद्देशे एवं व्याख्यातम्–

> "संदर्शनं प्रार्थनायां व्यवसायेत्वनन्तरा।
> व्यवसायस्तथाऽऽरम्भे साधनत्वाय कल्पते।। 16
> पूर्वस्मिन् या क्रिया सैव परस्मिन् साधनं मता।
> संदर्शने तु चैतन्यं विशिष्टं साधनं विदुः।। 17

इति भाष्ये संदृष्टे इत्यादि सप्तम्यन्तनिर्देशैः, प्रार्थयति क्रियया इत्यादि तृतीया निर्देशैश्च पूर्वपूर्वक्रियाया उत्तरोत्तरक्रियां प्रति कारणता बोधिता। तेन पूर्वस्मिन् या क्रिया सैव परस्मिन् साधनमिति स्पष्टं प्रतीयते। अयमर्थः – यदपेक्षया यत् सिद्धं, तत् तस्य साधनं निष्पादकं कारकं भवति। पत्ये शेते इत्यत्र कर्तुः क्रियानिष्पत्तौ करणान्तरं नास्ति, भावी च क्रियांशो भूतेन क्रियांशेनाऽऽप्यमानत्वात्कम भवति कर्ता हि क्रियया यदीप्सति, तत्कर्मसंज्ञां लभते, प्रकृते क्रियांश एवेप्सितो भवति अपरेण सिद्धेन क्रियांशेनेति संदर्शन प्रार्थनाध्यवसाय जन्यारम्भेण मानसव्यापारेणाऽऽप्यमानत्वाद्भौतिकी शयनादिक्रिया "कर्तुरीप्सिततमं कर्म" 1-4-49 इत्यनेन कर्मसंज्ञां भजते। एवञ्च साध्यस्वभावाया अपि क्रियाया उत्तरक्रियां प्रति साधनभावस्य न्याय्यतया तदपेक्षया उत्तरक्रियायाः कर्मत्वात्तादृशधात्वर्थशयनादि कर्मणाऽभिप्रेयमाणस्य पत्यादेः "कर्मणा यमभिप्रैति स संप्रदान" 1-4-32 मिति पाणिनिसूत्रेणैव संप्रदानत्वस्य सिद्धत्वात् "क्रिया ग्रहण" मिति वार्तिकं न वक्तव्यमिति भाष्याशयः।

अयमत्र संग्रहः – "कर्मणा यमभिप्रैति स संप्रदान" मिति सूत्रेण कर्मणाभिप्रेयमाणस्य संप्रदानत्वं विहितम्। तच्च पत्ये शेत इत्यादावव्याप्तम्। कर्मणोऽभावादित्याशयेन कात्यायनेन "क्रिया ग्रहण" मित्यपूर्वं वचनमारब्धम्। तेन पत्ये शेत इत्यादेस्संग्रहाददोषः सूत्रकारमते तु अत्र न सिद्धिरित्येव वार्तिककाराशयः। निरुक्तरीत्या शयनादि धात्वर्थक्रियाया अपि कर्मसंज्ञकत्वेन तेनाभिप्रेयमाणत्वात्पत्यादेः सूत्रेणैव संप्रदानत्वस्य सिद्धत्वाद्वचनं नारम्भणीयमेव। सूत्रमते पत्यादावव्याप्तेरभावादिति भाष्यकारीयो निर्णयः"-इति।

आत्मनेपदविधायके "कर्तरि कर्मव्यतीहारे" 1-3-14 इति पाणिनिसूत्रे देवदत्तस्य धान्यं व्यतिलुनन्तीत्यत्राऽतिव्याप्तिं, व्यतिलुनते, व्यतिपुनते इत्यत्राव्याप्तिं चाशङ्कमानः कात्यायनः सूत्रस्य स्थाने "क्रिया व्यतीहार" इति वक्तव्यमिति शिक्षितवान्। तदसहमानो भाष्यकारः"क्रियाऽपि कृत्रिमं कर्म" इत्यादि निरुक्तानुपूर्व्या धात्वर्थक्रियायाः कर्मसंज्ञां प्रसाध्य वार्तिकं प्रत्याचख्यौ।

अत्रेदं बोध्यम् – संदर्शनादि क्रियाणां धात्वर्थ प्रकृतक्रियायाश्च साध्यसाधनभावावगमात्प्रकृतक्रियायाः कर्मत्वात्तेनाभिप्रेयमाणस्य पत्यादेः संप्रदानत्वमिति पर्यवस्यति। तत्रत्वियान् विशेषः-भेदेन विवक्षायां धात्वर्थाक्रियायाः कर्मत्वम्। तथाच हरिः – भेदस्य च विवक्षायां पूर्वा पूर्वा क्रियां प्रति।
परस्याङ्गस्य कर्मत्वा न्न क्रिया ग्रहणं कृत" मिति।

यदा तु संदर्शनादिक्रियासमुदायः परस्परमङ्गाङ्गिभावमनापन्नः समकक्षतया समुच्चीयमानरूप एकफलोद्देशेन प्रवृत्तत्वादभेदेन धातुनाऽभिधीयत इत्यङ्गीक्रियते, तदा भेदनिबन्धनसाध्यसाधन–भावस्याप्रतीत्या धातुवाच्यक्रियायाः कर्मत्वाभावादप्रतिलब्ध कर्मभावया धात्वर्थक्रियया संबध्यमानस्य ग्रामादेः कर्मत्वमेव, न संप्रदानत्वम्। एवञ्च भेदविवक्षायां धात्वर्थक्रियायाः कर्मत्वात्तत्संबद्धस्य संप्रदानत्वम्। अभेदाविव क्षायां क्रियायाः कर्मत्वाभावात् तत्संबद्धस्य कर्मत्वमिति निर्गलितोऽर्थः। तथाच गत्यर्थकधातुसमभिव्याहारे विवक्षाद्वयाश्रयणेन ग्रामादेः संप्रदानत्वकर्मत्वयोः सिद्ध्या तत्प्रयुक्तविभ–क्तिद्वयलाभाद् "गत्यर्थकर्मणिद्वितीया चतुर्थ्यौ चेष्टायामनध्वनी" 2-3-12 ति संपूर्ण सूत्रं प्रत्याख्येयम्। सूत्रप्रत्युदाहरणेषु तण्डुलं पचति, अध्वानं गच्छति, मनसा हरिं व्रजति स्त्रियं गच्छतीत्यादिषु विद्यमानानामपि संदर्शनादीनां धात्वर्थक्रियाणां चाभेदस्यैव विवक्षणात्तण्डुलादेः कर्मत्वस्यैव प्रवृत्त्या द्वितीयैव, न चतुर्थ्यपि। पत्ये शेते उत्पथेन पथे गच्छतीत्यादौ तेषां भेदस्यैव विवक्षणाच्चतुर्थ्येव। तथाच गत्यर्थविषये विवक्षाद्वयं, तत्प्रत्युदाहरणेषु अभेदविवक्षैव। पत्ये शेते इत्यादौ भेदविवक्षैवेत्याश्रयणेन नियतप्रयोगाणामुपपन्नत्वात् "क्रिया ग्रहण" मिति वार्तिकं, "गत्यर्थकर्मणी"- त्यादि सूत्र चानारम्भणीय-मेवेति महल्लाघवमिति। तदेतत्सर्व मभिप्रेत्याह – **वाक्यपदीयेति** तृतीयकाण्डे साधनमुद्देशे 16, 17, 131, 132, 133, 134, 135 कारिकाभिर्निरुक्तोऽर्थस्तत्र प्रतिपादितः। **कैयटेति** "कर्तरि कर्मव्यतीहारे" 1-3-14 "कर्मणा यमभिप्रैति स संप्रदानम्" 1-4-32 "गत्यर्थकर्मणि द्वितीया चतुर्थ्यौ चेष्टायामनध्वनी" 2-3-12 ति सूत्रेषु भाष्यं प्रदर्शित हर्युक्तदिशा व्याख्यातं कैयटेन। कैयटादीत्यादिपदेन पदमञ्जरी शब्दकौस्तुभयोर्ग्रहणम्। **वार्तिकप्रत्याख्यानमिति** वार्तिकग्रहणं "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनी" ति सूत्रस्याप्युपलक्षणम्। एतत्सूत्रप्रत्याख्यानं खण्डदेवस्यापि संमतम्। परंतु तत्संमतः प्रत्याख्यानप्रकारो भिन्नः। किञ्च "गत्यर्थकर्मणी" ति सूत्रे विध्यंश एव प्रत्याख्यातः, न निषेधांश इत्यभिप्रैति खण्डदेव इति बोध्यम्। वाक्यपदीयकैयटादौ यत्तु वार्तिकप्रत्याख्यानं कृतं तन्नेति योजना।

**तथाहि – सर्वा हि पाकादि क्रिया ज्ञानेच्छादिक्रियाकर्म, तद्यत्र,'पत्ये शेते' इत्यादौ चतुर्थ्यन्तप्रयोग स्तत्रानुमेयां ज्ञानादिक्रयां भेदेन विवक्षित्वा तत्कर्मत्वेन शयनं विवक्ष्यते, तत्र ज्ञानादिक्रियाकर्मकारक भूतशयनं प्रती प्सितत्वेन पत्युः संप्रदानत्वोपपत्तेर्नार्थो वार्तिकेन।**

तदुक्तं प्रत्याख्यानप्रकारं विशदयति – **तथाहीति** पाकादिक्रिया = प्रेक्षापूर्वकारिणा क्रियमाणा पाकगमनादिक्रिया। **ज्ञानेच्छादीति** फलविषयकसंकल्पः ज्ञानम्। फलोपायविषयोभिलाष इच्छा, आदिशब्देनाध्यवसायारम्भयोर्ग्रहणम्। तत्क्रियायाः कर्म = "कर्तुरीप्सिततमं कर्म" ति सूत्रविहितं कृत्रिमं कर्म भवति, कर्ता क्रियया यदीप्सति, तत्कर्म, यथा – चैत्र ओदनं पचतीत्यादौ पाकादिक्रियया ईप्सितं बाह्यमोदनरूपं द्रव्यं कर्म, तद्वत् ज्ञानेच्छादिक्रियया कर्तुरीप्सिता पाकादिक्रियापि तत्सूत्रविहितं कृत्रिमं कर्म

भवतीति भावः। तच्च न सार्वत्रिकं, किन्तु प्रयोगानुसारेण वैवक्षिकमित्याह — **तदिति** कर्मेत्यर्थः। अस्य प्रयोगानुसारेण वैवक्षिकमिति शेषः। चतुर्थ्याः प्रयोगे प्रकृतधात्वर्थक्रिया कृत्रिमं कर्म, द्वितीयायाः प्रयोगे सा न कर्म, उभयप्रयोगे सा कर्म भवति, न भवति चेति भावः। तदेव क्रमेण दर्शयति **यत्रेति** वाक्ये इत्यर्थः। इत्यादावित्यादि शब्देन श्राद्धाय निगर्हते, युद्धाय संनह्यते इत्यादेर्ग्रहणम्। नास्तिकत्वात् श्राद्धं निन्दति, युद्धविषयं संनह्नपूर्वकं निश्चयं करोतीति तदर्थः। तत्र = वाक्ये। तत्रा श्रुतत्वादाह **अनुमेयामिति** शारीरक्रियान्यथानुपपत्त्याऽनुमितामित्यर्थः। ननु साध्यस्वभावानां धात्वर्थक्रियाणां कथं साध्यसाधनभावोऽत आह — **भेदेनेति** प्रकृत धात्वर्थक्रियातो ज्ञानादिक्रियाणां भेदेन विवक्षणात्तन्मूलकस्तासां साध्यसाधनभावो घटते, तेन उत्तरक्रियांशस्य पूर्वकालिकक्रियांशेनाऽऽप्यमानत्वात्कर्मत्वं निराबाधमिति भावः। तदाह — **तत्कर्मत्वेनेति** पूर्वकालिकज्ञानादिक्रियायाः कर्मत्वेनेत्यर्थः। शयनं = प्रकृत धात्वर्थः शयनादिः, तत्र = तादृशविवक्षायाम्, **ज्ञानादिक्रियेति** तत्क्रियायाः कृत्रिमकर्मभूतं प्रकृतधात्वर्थरूपं शयनादिकं प्रतीत्यर्थः। ईप्सिततत्वेन = अभिप्रेयमाणत्वेन। संप्रदानत्वोपपत्तेः = "कर्मणा यमभिप्रैति स संप्रदान" मिति पाणिनिसूत्रेणैव संप्रदानसंज्ञाया उपपत्तेः, वार्तिकेन = "क्रिया ग्रहणं कर्तव्य" मिति कात्यायनवचनेन। एवंच धात्वर्थक्रियारूपकर्मणाभिप्रेयमाणत्वात्पत्यादेस्सूत्रेणैव संप्रदानत्वलाभाद्वार्तिकं प्रत्याख्येयमिति भावः। ज्ञानादि क्रियाणां, शयनादि धात्वर्थस्य च भेदेन विवक्षया कर्मत्वसंपादने लक्ष्येषु पत्ये इत्यादि चतुर्थीप्रयोगो बीजम्।

**यत्रतु 'घटं करोति, ओदनं पचति, हरिं मनसा व्रजति, पन्थानं गच्छती' त्यादौ द्वितीयान्तप्रयोग, स्तत्र ज्ञानादिक्रिययाऽभेदं पाकादिक्रियाया विवक्षित्वा त प्रति ईप्सिततमस्यौदनादेः कर्मत्वम्। ग्रामं गच्छतीत्यादौ तु द्विविधप्रयोगसत्त्वा द्भेदाभेदोभयविवक्षयो भयम्। संप्रदानत्वस्य दानक्रियामात्रनिरूपितत्वानङ्गीकाराच्च 'पत्ये शेते, इत्यादावपि मुख्यसंप्रदानत्वाविरोधः-इति।**

नन्वेवमन्यत्रापि निरुक्तरीत्या धात्वर्थक्रियायाः कर्मत्वाद् घटौदनादेरपि संप्रदानत्वापत्तिः, कर्मसंज्ञातु धात्वर्थक्रियावयवेषु चरितार्थेत्याशङ्कायां तत्र विद्यमानानामपि ज्ञानादिक्रियाणां पाकादिक्रियाभि (र्भेदस्याविवक्षणेन) रभेदस्यैव विवक्षणाद्भेदनिबन्धन साध्यसाधनभावाप्रतीत्या न क्रियायाः कृत्रिमकर्मत्व मित्याह — **यत्रत्विति** पूर्वोक्तार्थस्य वैलक्षण्यसूचकस्तुशब्दः। "गत्यर्थकर्मणी" त्यादि सूत्रे गत्यर्थेति विशेषणाद् घटं करोति ओदनं पचतीत्यादौ न चतुर्थी, चेष्टायामिति वचनान्मनसा हरिं व्रजतीत्यत्र न चतुर्थी। पन्थानं गच्छतीत्यत्र अनध्वनीति पर्युदासान्न सा, आदिपदेन स्त्रियं गच्छतीत्यादेर्ग्रहणम्। अत्र "असंप्राप्ते" इति वार्तिकान्न चतुर्थी, किन्तु निरुक्तप्रयोगेषु द्वितीयैव। चेष्टायामनध्वनि, असंप्राप्ते गत्यर्थकर्मणीत्येतेषां प्रत्याख्याने चतुर्थीवारणेन द्वितीया मात्रस्य सिद्धये आह **अभेदमिति** अभेदमेवेत्यर्थः। तथाच भेदनिबन्धनसाध्य साधनभावाभावान्न धात्वर्थक्रियायाः कृत्रिमकर्मत्वमिति भावः। **तं प्रतीति** अलब्धकर्मभावं धात्वर्थक्रियारूपमर्थं प्रतीत्यर्थः। तादृशक्रिययेति भावः। कर्मत्वं = तदेव, ज्ञानादिक्रियाणां पाकादिधात्वर्थस्य चाभेदविवक्षायां लक्ष्ये द्वितीयाप्रयोगो बीजम्।

गम्यादिविषये विवक्षाद्वयाश्रयणेन संज्ञाद्वयप्रयुक्त विभक्तिद्वयसिद्ध्या "गत्यर्थकर्मणी" त्यापि प्रत्याख्येयमित्याह **ग्रामं गच्छतीत्यादाविति** आदिपदेन उत्पथेन पथे गच्छतीत्यादेर्ग्रहणम्। **द्विविधप्रयोगेति** ग्रामाय गच्छती, ग्रामं गच्छतीति चतुर्थीद्वितीयादिरूपप्रयोगदर्शनादित्यर्थः। **भेदाभेदेति** ज्ञानादीनां गम्यर्थक्रियायाश्च भेदविवक्षायां तन्निबन्धनसाध्यसाधनभावावगत्या गमिक्रियायाः कर्मत्वात्तेनाभिप्रेयमाणस्य ग्रामस्य "कर्मणा यमभिप्रैती" ति सूत्रेण संप्रदानत्वाच्चतुर्थी, अभेदविवक्षायां तु

अप्राप्तकर्मभावया गमिक्रियया कर्तुरीप्सिततमत्वाद्ग्रामस्य "कर्तुरीप्सिततम" मिति सूत्रेण कर्मत्वाद् द्वितीया च सिध्यतीति भावः। **उभयमिति** संप्रदानत्वं कर्मत्वं चेत्यर्थः। एवञ्च "गत्यर्थकर्मणी" त्यादि सूत्रमपि प्रत्याख्येयमिति भावः। स्पष्टं चेदं प्रकृतसूत्रे भाष्ये। एवञ्च गत्यर्थविषये विवक्षाद्वयम्, पचत्योदनं, मनसा हरिं व्रजति, पन्थानं गच्छति, स्त्रियं गच्छतीत्यादावभेदविवक्षैव, पत्ये शेते इत्यादौ भेदविवक्षैवेत्याश्रयणेन सर्वेष्टसिद्ध्या "क्रिया ग्रहण" मिति वार्तिकं "गत्यर्थकर्मणि द्वितीया चतुर्थ्यौ चेष्टायामनध्वनी" ति संपूर्णं सूत्रं, तदारम्भपक्षे प्रवृत्तं "असंप्राप्ते" इति वार्तिकं च प्रत्याख्येयमेव, लौकिकप्रयोगस्य प्रसिद्धत्वात्तदुद्देशेनान्वाख्याने तदुपायतया भेदाभेदपरिग्रह इति भावः।

ध्वनितश्चायं भेदाभेदविवक्षानियमो "गत्यर्थकर्मणी" ति सूत्रं प्रत्याचक्षाणेन भगवता भाष्यकृता, अन्यथा प्रत्याख्यानपक्षे ओदनं पचतीत्यादौ सर्वत्रापि द्वितीयाचतुर्थ्योरापत्त्या तद्वारणाय गत्यर्थकधातुयोग एव विभक्तिद्वयमिति नियमाय तत्सूत्रस्य चरितार्थतया तत्सूत्रं भाष्यकारो न प्रत्याचक्षीत, यदा तु भेदाभेदविवक्षानियम श्चेतसि भाष्यकारस्य स्फुरति, तदा आरम्भप्रत्याख्यानयोरविशेषं मन्यमानो युक्तं, यत् सूत्रं प्रत्याचक्षीत। एवंच निरुक्तविवक्षा नियमस्य निरुक्त भाष्यसंमततया तेनैव प्रयोगव्यवस्थायाः संपन्नतया वार्तिकं सूत्रं च प्रत्याख्येयमेवेति प्रकरणार्थः।

ननु पत्ये शेत इत्यादौ धात्वर्थस्य कर्मत्वं संपाद्यतेनाभिप्रेयमाणस्य पत्यादेः "कर्मणा यमभिप्रैती" ति सूत्रेण संप्रदानत्वकथनमसंगतम् स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपार्थवाचकदाधातुयोग एव तत्सूत्रेण संप्रदानत्वविधानलाभादत आह **संप्रदानत्वस्येति** संप्रदानसंज्ञाया इत्यर्थः। **अनङ्गीकारादिति** अत एव भाष्यकृता सम्यक् प्रदीयते अस्मै इत्यन्वर्थत्वं संज्ञाया नोक्तम्। अत एव भाष्यकृता "क्रिया ग्रहण" मिति वार्तिकं प्रत्याख्यातम्। अत एव रजकाय वस्त्रं ददाति, खण्डिकोपाध्यायः शिष्याय चपेटां ददातीत्यादयः प्रयोगा उपपद्यन्त इति बोध्यम्।

**(तन्निराकरकणम्, वार्तिकारम्भपक्ष एव भाष्यसंमत इति प्रतिपादनं च।)**

**तन्न, पच्यादिधातुभ्यो ज्ञानाद्यनु भवाभावात्, नियमेना रोपे प्रमाणा भावाच्च। विध्यभावे कारणाभावेन प्रयोगगत साधुत्वज्ञानाभावात्, भेदाभेदव्यवस्थाप्रतीत्यनुपपत्ते श्च। तस्मात् 'क्रियाग्रहणं कर्तव्य' मिति न प्रत्याख्येयम्। अत एव भाष्यकारेणापि 'कर्मणे' तिसूत्रे प्रत्याख्यातमपि "गत्यर्थकर्मणी" तिसूत्रे "क्रियाग्रहणमपि तत्र चोद्यते" इति ग्रन्थेन विधित्वं तस्या श्रितमेव।**

हरिकैयटादीनामाशयं दूषयति — **तन्नेति पच्यादीति** पचादीनां विक्लित्त्यादिकं प्रधानं फलम्, तज्जनकत्वात्फूत्कारादिरपि पच्यर्थ इत्यभिप्रैति लोकः, परंतु तत्तत्फलोपाधायकव्यापारवृत्ति अखण्डोपाधिरूपं पाकत्वमेव पच्यादि धातुशक्यतावच्छेदकम्, एवञ्च ज्ञानादेः पच्यर्थत्वे का वार्ता, अतोऽनुभवविदूरार्थप्रतिपादकत्वाद्भाष्यं प्रौढिवादः। तदाह **ज्ञानाद्यनुभवाभावादिति** आदिना प्रार्थनादेर्ग्रहणम्। ननु पाकशयनादौ नियमेन प्रवृत्तिदर्शनात्तदन्यथानुपपत्त्या ज्ञानादीनां पच्यादिभ्यो भानमावश्यकम्। अन्यथा सर्वत्रापि सर्वस्य प्रवृत्त्यापत्तेः। अतो धात्वन्तरार्थान्तर्भावेण पच्यादीनां वृत्तिराश्रीयत इत्यत आह **नियमेनेति** नैयत्येनेत्यर्थः। **आरोपे इति** धात्वन्तरार्थस्यापि प्रकृतधात्वर्थत्वेनाश्रयणमेवात्रारोपपदार्थः। **मानाभावादिति** वलाहकाद् विद्योतते विद्युदित्यत्र निस्सरणान्तर्भावेण द्युते र्वृत्तिराश्रिता हर्यादिभिः, तदप्ययुक्तमिति पञ्चमीप्रकरणे वक्ष्यते। यदितु लक्षणा श्रीयत इत्युच्यते तदपि न, सति गत्यन्तरे लक्षणाश्रयणस्यान्याय्यत्वादिति भावः। 'क्रियापि कृत्रिमं कर्म, क्रियापि क्रियया ईप्सिततमा भवती" त्यादि भाष्यस्याननुभूतार्थकथनेन प्रौढिवादमात्रत्वेन तदवलम्बनेन वार्तिकप्रत्याख्यानमयुक्तमिति

प्रदर्श्य, हर्युक्तां भेदाभेदविवक्षां दूषयति — **विध्यभाव इत्यादिना व्यवस्थाप्रतीत्यनुपपत्तेश्चैत्यन्तेन** अयं प्रयोगः साधुः, अयमसाधुरिति निर्णयो व्याकरणाधीनः, यो व्याकरणानुगतः स साधुः, अन्योऽसाधुरिति व्यवह्रियते शिष्टैः, "गत्यर्थकर्मणी" त्यादि सूत्रप्रत्याख्याने चतुर्थ्यन्तः साधुः, उत द्वितीयान्तः, उत उभयमपीति नैव ज्ञातुं शक्यते, नहि अस्मदादयो लक्ष्यैकचक्षुष्काः। एवं स्थिते चतुर्थ्यन्तमात्रप्रयोगे भेद एव विवक्ष्यते, द्वितीयान्तमात्रप्रयोगेऽभेद एव विवक्ष्यते, उभ प्रयोगदर्शने विवक्षाद्वयमिति व्यवस्था नोपपद्यते, तन्नियामकप्रयोगज्ञानस्यैव सूत्राभावेऽसंभवादि भावः, विध्यभावे = "गत्यर्थकर्मणि" "क्रियाग्रहण" मिति सूत्रवार्तिकरूपविधेरभावे, कारणाभावेन = साधुशब्दज्ञापकाभावेन, **प्रयोगगतेति** प्रयोगगतं साधुत्वं = व्याकरणव्यङ्ग्य जातिविशेषरूपम्, तद्विषयकज्ञानासंभवादित्यर्थः। **भेदाभेदेति** पत्ये दौ चतुर्थ्यन्तमात्रप्रयोगे संदर्शनादीनां प्रकृत धात्वर्थशयनादिक्रियायाश्च भेद एव, तण्डुलं पचति पन्थानं गच्छतीत्यादौ द्वितीयान्तमात्रप्रयोगेऽभेद एव, ग्रामं ग्रामाय गच्छतीत्यादौ विभक्ति द्वयप्रयोगे पर्यायेण भेदोऽभेदश्च विवक्ष्यत इति नियतव्यवस्थाया अनुपपत्तिः, तत्प्रयोजकज्ञानाभावः सूत्राभावे इति भावः। "गत्यर्थकर्मणी" त्यस्य प्रत्याख्यानं ग्रन्थकृतोऽपीष्टमेव, परंतु हर्युक्तव्यवस्था न युज्यते। क्रियाग्रहणमिति वार्तिकं भाष्ये प्रत्याख्यातमिति मन्यन्ते हरिकैयटादयः, वार्तिकप्रत्याख्याने न भाष्यतात्पर्यं, किंतु तस्यानन्यथासिद्धार्थबोधकतया विधायकत्व एवेति प्रकृतग्रन्थकृदाशयः। परमतखण्डनमुपसंहरन् स्वसिद्धान्तमाह — **तस्मादिति** "क्रियापि कृत्रिमं कर्मे" त्यादि भाष्यस्य प्रौढिवादत्वादित्यर्थः। **न प्रत्याख्येयमिति** योग्यार्थे, शक्यार्थे च यत् वार्तिकं प्रत्याख्यातुमयोग्यमशक्यं चेत्यर्थः। अयमर्थः — वार्तिकफलानामन्यथासिद्धत्वे हि वार्तिकं प्रत्याख्येयं स्यात्। "क्रियापि कृत्रिमं कर्मे" त्यादि भाष्यस्य प्रौढिवादतया तेन शयनादि धात्वर्थक्रियायाः कृत्रिमकर्मसंज्ञायाः प्रत्येतुमशक्यतया "कर्मणा यमभिप्रैती" त्यादि सूत्रेण पत्यादेस्संप्रदानत्वस्य वक्तुमशक्यतया तत्रापूर्वतया संप्रदानत्वविधानाय वार्तिकस्यावश्यकतया तन्न प्रत्याख्येयमिति एवंच पत्ये शेत इत्यादौ पत्यादेस्संप्रदानत्वस्य वार्तिकेन कथनं युक्तमेवेति भावः। स्वोक्तार्थं फणिभाष्योक्त्यैव भूषयति — **अत एवेत्यादिना तस्याश्रितमेवेत्यन्तेन** अत एव = प्रौढ्या उक्तस्य "क्रियापि कृत्रिमं कर्मे" त्याद्यर्थस्य भाष्यकृतोऽनभिमतत्वादेव। कर्मणेति सूत्रे = "कर्मणा यमभिप्रैति स संप्रदान" 1-4-32 मिति सूत्रे। **प्रत्याख्यातमपीति** तत्प्रत्याख्यानपरं भाष्यं हर्यादिमतविवरणावसरे प्रदर्शितमेव। प्रत्याख्यातमपि वार्तिकमित्यर्थः। **गत्यर्थकर्मणीति सूत्र इति** "गत्यर्थकर्मणि द्वितीया चतुर्थ्यौ चेष्टायामनध्वनी" 2-3-12 ति सूत्रे तत्सूत्रप्रत्याख्यानावसर इत्यर्थः। भाष्यं दर्शयति — **क्रियाग्रहणमपि तत्र चोद्यत इति** सूत्रेण कर्मणाभिप्रेयमाणस्य संप्रदानत्वमुक्तम्, तावता नेष्टसिद्धिः, अतः क्रिययापि यमभिप्रैति तस्यापि संप्रदानत्वं वक्तव्यमिति वार्तिकाशयः। तत्र = "कर्मणा यमभी" ति सूत्रे। विधित्वम् = अनन्यथासिद्ध संप्रदानसंज्ञा विधित्वम्, तस्य = "क्रियाग्रहणमि" ति वार्तिकस्य **आश्रितमेवेति** "कर्मणा यमि" ति सूत्रोक्तस्य "क्रियापि कृत्रिमं कर्मे" त्याद्यर्थस्य प्रौढिवादतया स्वानभिमतत्वात्तद्रीत्या ग्रामस्य संप्रदानत्वानिर्वाहादपूर्वतया तन्निर्वाहो वार्तिकायत्त इति भाष्याशयः। अन्यथा "कर्तरि कर्म व्यतीहारे" 1-3-14 "कर्मणा यमभिप्रैति स संप्रदान" 1-4-32 इति सूत्रयोरिवात्रापि क्रियायाः कृत्रिमकर्मत्वाश्रयणेन ग्रामस्य संप्रदानत्वं प्रदर्शयेद् भाष्यकारः, यतो नैव, मतो ज्ञायते, क्रियापि कृत्रिमं कर्मेति पूर्वोक्तार्थे भाष्यकृतो न तात्पर्यमिति। एवच भाष्यकृदसंमतार्थाश्रयणेन वार्तिकप्रत्याख्यानं हरिकैयटादीनामयुक्तमेवेति प्रकृतग्रन्थाशयः। एतत्सर्वं मनसि कृत्वैव "कर्मणा यमभिप्रैती" ति सूत्रस्थ यथाश्रुतभाष्यस्वरसादित्युपक्रमे सोल्लुण्ठनवाक्यं प्रयुक्तम्। तुल्यन्यायात् "कर्तरि कर्म व्यतीहारे" 1-3-14 इति सूत्रे "क्रिया व्यतीहारे" इति वार्तिकमपि न प्रत्याख्येयमेव। प्रकृते भाष्यकारमतापेक्षया वार्तिकमतस्यैव प्रामाण्यम्। "कर्तरि कर्म व्यतीहारे" इति सूत्रविषयेतु सूत्रमतापेक्षया वार्तिकमतमेव ज्याय इति खण्डदेवस्याशय इति बोध्यम्।

**नचैवं ''गत्यर्थकर्मणी'' ति सूत्रप्रत्याख्यानानुपपत्तिः, धात्वर्थतावच्छेदकफलशालित्वरूपे तत्समनियता खण्डोपाधौ वा विवक्षिते द्वितीया, तदनवच्छेदकक्रियाजन्यफलभागित्वे विवक्षिते चतुर्थीत्येव उभयोपपत्तेः सूत्रवैयर्थ्यमित्याशयात्। गमनजन्यस्वास्थ्याद्याश्रयत्वेन 'ग्रामाय गच्छती' तिप्रयोगोपपत्तेः।**

क्रियाग्रहणमिति वार्तिकस्वीकारे प्रसक्तं गत्यर्थकर्मणीत्यादि सूत्रप्रत्याख्यानपरभाष्यविरोधं परिहर्तुमाशङ्कते – **नचेति** एवम् = हर्याद्युक्तार्थनिराकरणेन वार्तिकस्वीकारे। **सूत्रप्रत्याख्यानानुपपत्तिरिति** भाष्योक्तस्य तत्सूत्रप्रत्याख्यानस्यानुपपत्तिरित्यर्थः। अयमर्थः – इत्थं हि तत्र भाष्यम् ''किमर्थं पुनरिदमुच्यते? चतुर्थी यथा स्यात्। अथ द्वितीया सिद्धा? सिद्धा-कर्मणि इत्येव। चतुर्थ्यपि सिद्धा कथम्? संप्रदान इत्येव, न सिध्यति ''कर्मणा यमभिप्रैति स संप्रदान'' मित्युच्यते, ''क्रियया चासौ ग्राममभिप्रैति, कया क्रियया? गमिक्रियया, क्रिया ग्रहणमपि तत्र चोद्यते''-इति। चैत्रादेः कर्तुर्गमनक्रियया ग्रामस्योप्सिततमत्वा ''त्कर्तुरीप्सिततमं कर्मे'' त्यनेन 1-4-49 कर्मत्वं सिद्धम्। ग्रामस्य कर्मणानभिप्रेयमाणत्वाद्यद्यपि ''कर्मणा यमभिप्रैतीति'' 1-4-32 सूत्रेण संप्रदानत्वं न प्राप्नोति तथापि तत्सूत्रे ''क्रिया ग्रहणमपि कर्तव्य'' मिति कात्यायनेन वचनस्य चोदितत्वाद्गमिक्रिययाऽभिप्रेयमाणत्वाद्ग्रामस्य संप्रदानत्वं सिद्धम्। एवञ्च ''कर्तुरीप्सिततम्'', ''क्रिया ग्रहण'' मिति सूत्र वार्तिकाभ्यां ग्रामस्य संज्ञाद्वयस्य सिद्धत्वात्तन्निमित्तक विभक्तिद्वयस्यापि सिद्धत्वान्नार्थो ''गत्यर्थकर्मणी'' त्यादि सूत्रेणेति सूत्रप्रत्याख्यानपर भाष्याशयः। ग्रामस्य वार्तिकेन संप्रदानत्वाच्चतुर्थीति भाष्यात् स्पष्टमेव प्रतीयते, तद् भवतोपि संमतम्। परंतु पत्ये शेत इत्यादाविव घटं करोतीत्यत्रापि वार्तिकरीत्या प्राप्ता चतुर्थी परत्वादपवादत्वाच्च द्वितीयया बाधनाद्भवता वारिता। तद्रीत्या गमिसमभिव्याहारेपि चतुर्थी बाधनेन द्वितीयाया एव प्रवृत्या प्रयोगद्वयासिद्धिः। अतोनेन चतुर्थी विधेया, तथा सति विशेषविहितत्वाच्चतुर्थी द्वितीयां बाधेत। अतोऽनेन विभक्तिद्वयस्याप्यवश्यं विधातव्यतया सूत्रप्रत्याख्यानं नोपपद्यते। हर्यादीनां मतेतु वार्तिकस्याभावाद्गमिसमभिव्याहारे भेदाभेदविवक्षावशेन संज्ञाद्वयप्रयुक्त विभक्तिद्वयस्य, कर्मणि द्वितीया, ''चतुर्थी संप्रदाने'' इति सूत्राभ्यां सिद्धत्वात्तत्प्रत्याख्यानोपपत्तिः स्पष्टैव। एवञ्च तद्भाष्यं भवतः प्रतिकूलं हर्यादीनामनुकूलमिति नचैवमित्यादि ग्रन्थाशय इति। ममापि तद्भाष्यं न प्रतिकूलं, किंत्वनुकूलमेवेत्याह – **धात्वर्थतेति** पचेर्विक्लित्त्यनुकूलव्यापारे गमेश्चोत्तरदेश संयोगावच्छिन्नव्यापारे शक्तिः, अतस्तत्र विक्लित्ति-संयोगादीनां धात्वर्थतया तदवच्छेदकविक्लित्त्यादिफलशालित्वात्तण्डुलग्रामादेः कर्मत्वात्तत्र द्वितीया सिध्यतीति भावः। कर्मत्वस्य सखण्डत्वे द्वितीया प्रकरणे दोषाणामुक्तत्वादाह – **तत्समनियतेति** तर्हि चतुर्थ्याः का गतिरित्याशङ्क्य विवक्षापदेन सूचितमर्थमाह – **धात्वर्थतानवच्छेदकेति** धात्वर्थतान-वच्छेदकं क्रियाजन्यं च यत्फलं तदाश्रयत्व इत्यर्थः। वृक्षायोदकमासिञ्चतीत्यत्र सिञ्चत्यर्थतानवच्छेदकं सेकक्रियाजन्यं च फलं वृद्धिरूपं, पत्ये शेत इत्यादौ तादृशं फलं सुखरूपं, तद्भागित्वेन विवक्षणाद्वृक्षपत्यादेस्संप्रदानत्वाच्चतुर्थी। ''क्रिया ग्रहणं कर्तव्य'' मिति वार्तिकस्यायमेवार्थ इति भावः। **इत्येवेति** एवशब्देन हर्याद्युक्तिव्यवच्छेदः। उभयोपपत्तेः = ग्रामं ग्रामाय वा गच्छतीति प्रयोगद्वयोपपत्तेः, सूत्रवैयर्थ्यम् = गत्यर्थकर्मणीत्यादि सूत्रवैयर्थ्यम्। आशयात् = प्रत्याख्यानपरभाष्याशयात्। ग्रामाय गच्छतीत्यत्र चतुर्थ्या उपपत्तिं दर्शयति – **गमनजन्येति** संयोगोधात्वर्थतावच्छेदकं फलम्, तदनवच्छेदकं गमनक्रियाजन्यं फलं स्वास्थ्यं, तदाश्रयत्वेनेत्यर्थः। अग्निजलचौर्यादिना ग्रामे उपप्लुते तदपनयनेन ग्रामस्य स्वास्थ्यं सम्पादयितुमुत्तमः पुरुषो गच्छति, तदभिप्रायकोऽयं प्रयोग इति बोध्यम्। **प्रयोगोपपत्तेरिति** ''कर्तुरीप्सिततमं कर्म'' क्रिया ग्रहणमिति विधिद्वयसत्वेन मन्मते तादृशविधिमूलक प्रयोगद्वयस्य सुज्ञानतया तदनुरोधेन फलस्य धात्वर्थतावच्छेदकत्वानवच्छेदकत्वविवक्षयोस्सुलभतया तदाश्रयणेन सूत्रप्रत्या-

ख्यानस्य सूपपादतया भाष्यं ममैवानुकूलम्। "क्रियाग्रहणं कर्तव्यम्, "गत्यर्थकर्मणी" त्यनयोरुभयोरप्य-भावाद्धर्यादीनां मते निरुक्तरीत्या भेदाभेद विवक्षा नैव घटते, अतस्तेषामेव भाष्यं प्रतिकूलमिति निगूढो भावः श्रीखण्डदेवस्येति बोध्यम्।

**नचैव मध्वादिरूपापवादविषयेपि प्रयोगद्वयापत्तिः, तदंशेऽप्रत्याख्यानस्य भाष्यसिद्धत्वात्। भाष्यकारोहि अध्वादीनां न स्वरूपेणा पवादविषयता, स्त्रियं गच्छतीत्यत्र द्वितीयानियमानापत्तेः, अपितु संप्राप्तत्वेन, प्राप्त एव पन्थाः स्त्री च। तत्र पन्थानं गच्छति स्त्रियं गच्छतीति द्वितीयानियम इति प्रतिपादयन् "असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत इति वक्तव्य" मित्याह। वृत्तिकारोप्यमुमेवार्थ मनुमन्यते। अतः सिद्धं धात्वर्थतानवच्छेदकं यत् क्रियाफलं, तदाश्रयत्वमेव एवमादिस्थले भाक्तसंप्रदानत्व-मिति।**

धात्वर्थतावच्छेदकफलाश्रयत्वेन विवक्षायां कर्मत्वं, तदनवच्छेदकफलाश्रयत्वेन विवक्षायां वार्तिकेन संप्रदानत्वमित्यर्थाश्रयणेन गत्यर्थेत्यादिसूत्रस्य प्रत्याख्यानमिति स्वीकारेऽतिप्रसङ्गमाशङ्कते – **नचेति** एवम् = निरुक्तरीत्या प्रयोगद्वयसमर्थनेन सूत्रप्रत्याख्याने। **अध्वादीति** आदिना स्त्र्यादेर्ग्रहणम्। अध्वादिरूपो यः अपवादविषयस्तत्रापीत्यर्थः। तदुदाहरणभूते मनसा हरिं व्रजति, पन्थानं गच्छतीत्यादावपि, यथास्थित सूत्र प्रत्युदाहरणेऽपीति यावत्। **प्रयोगद्वयापत्तिरिति** ग्रामं ग्रामाय वा गच्छतीतिवत् पन्थानं, पथे वा गच्छति, मनसा हरिं हरये वा व्रजतीति द्वितीया चतुर्थीविभक्तिद्वय घटित प्रयोगद्वयस्य साधुत्वापत्तिः, अत्रापि स्वास्थ्यादि रूपधात्वर्थतानवच्छेदकफलाश्रयत्वविवक्षायास्संभवात्। हर्यादिमतेतु संदर्शनादीनां प्रकृत धात्वर्थक्रियायाश्चाभेदस्यैव विवक्षणात्संप्रदानत्वाप्राप्त्या कर्मत्वस्यैव सत्वेन द्वितीयाया एव प्रवृत्त्या न दोष इति भावः। अत्र भाष्यकृतैव समाहित मित्याह – **तदंशे इति** अध्वादिरूपापवादविषय इत्यर्थः। **भाष्यसिद्धत्वादिति** "किमर्थं पुनरिदमुच्यते" इत्यादिना "क्रिया-ग्रहणमपि तत्र चोद्यते" इत्यन्तेन ग्रन्थेनोदाहरणेषु द्वितीयाचतुर्थ्योरन्यथासिद्धि र्भाष्ये दर्शिता। अतस्तदंशः प्रत्याख्यात इति स्पष्टमेव प्रतीयते। तद्वत् पन्थानं गच्छतीत्यादावपि विभक्तिद्वयस्य प्राप्त्या तत्र चतुर्थी वारणध्रौव्ये तदकरणेना पवादभागस्याप्रत्याख्येयत्वमेव भाष्यकृतः संमतम्। अतस्तन्निषेधात्प्रत्युदाहरणेषु न चतुर्थी, किंतु द्वितीयैवेति भावः। नन्विदमयुक्तम् – असंप्राप्ते कर्मणि द्वितीया चतुर्थ्यौ भवत इति वक्तव्यम्। एवंच कृत्वा अनध्वनीत्येतदपि न वक्तव्यं भवती" ति तत्सूत्रशेषस्थ भाष्येणा ध्वादिरूपाप-वादवचनस्यापि प्रत्याख्यानलाभात्। अतो ग्रामाय गच्छतीत्यत्र "क्रिया ग्रहणमि" ति वार्तिकेन चतुर्थी साधनवत् पन्थानं गच्छतीत्यत्र "असंप्राप्ते" इति वार्तिकेन चतुर्थीवारणं युक्तम्, संपूर्णसूत्रप्रत्याख्यान एव भाष्यतात्पर्यमत आह – **भाष्यकारो हीति** एषोऽर्थो भाष्ये प्रसिद्ध इति द्योतनाय हिशब्दप्रयोगः। अध्वादीनाम् = अनध्वनीति निषेधविषयाणाम्। स्वरूपेण = अध्वत्वेन, अपवादविषयता = निषेधप्रतियोगिता। तेषां तत्वेन निषेध प्रतियोगित्वस्वीकारे दोषमाह – **स्त्रियं गच्छतीति द्वितीया नियमेति** द्वितीयैवेति नियमस्यानुपपत्तेरित्यर्थः। तर्हि तेषां केन रूपेण तत्त्वमत आह – **अपितु संप्राप्तत्वेनेति** एवंच योर्थस्संप्राप्तः सोऽस्यापवादस्य विषयः, तत्र चतुर्थी नेति भावः, तदाह – **प्राप्त एव पन्था इति** ग्रामं जिगमिषुः पन्थानमधितिष्ठति, अतः प्राप्तत्वात्तत्र चतुर्थी न। अत एवोत्पथेन पथे गच्छतीत्यत्र चतुर्थी सिद्धा। द्वितीयस्य पथोऽप्राप्तत्वात्। **स्त्रीचेति** स्त्रीच प्राप्तैवेत्यर्थः। स्त्रियं गच्छतीत्यत्र स्त्रीशब्दसन्निधानाद् गमेर्मैथुनार्थकत्वात् स्त्रियाः प्राप्तत्वलाभः। अतोऽत्र न चतुर्थी। एवञ्चासंप्राप्तं यद्वस्तु मार्गरूपं वा, तद्भिन्नं वा गमनेन प्रेप्स्यते, तस्मिन् कर्मणि चतुर्थीति लभ्यते, प्रकृते निरुक्तरीत्या पथः स्त्रियाश्च प्राप्तत्वेन न चतुर्थी, किंतु कर्मणि द्वितीया मात्र मिति भावः। तदाह – **तत्रेति**

अपवादविषय इत्यर्थः। द्वितीया नियमः = द्वितीयैवेति नियमः, प्रतिपादयन् = बोधयन्। भाष्यं दर्शयति — **असंप्राप्ते इति** असंप्राप्तं यद्वस्तु गमनेन प्रेप्स्यते, तत्रेत्यर्थः। **इति वक्तव्यमिति** इत्यर्थकं व्याख्येयमित्यर्थः। अनध्वनीत्यतो निरुक्तार्थो यथा सिध्यति, तथा व्याख्येयमिति भावः। एवंचानध्वनीत्यस्य लक्षणया गन्त्रसंप्राप्त इत्यर्थकत्वान्न लक्ष्यदोष इति तात्पर्यम्। यद्वा अनध्वनीत्येतदपहाय तत्स्थाने "असंप्राप्ते" इति वक्तव्यमिति भाष्यतात्पर्यम्। तथाच आद्ये "एवंच कृत्वा अनध्वनीत्येतदपि न वक्तव्यं भवती" ति भाष्यस्य अनध्वनीत्येतदर्थक "मसंप्राप्त" इति वचनमपूर्वतया न वक्तव्यम्। लक्षणया अनध्वनीति पाणिनिवचनेनैव तदर्थलाभादित्यर्थः। द्वितीये स्त्रियं गच्छतीत्यादावति प्रसङ्गवारणाय "असंप्राप्ते" इत्यस्यावश्यकतया तेनैवाध्वानं गच्छतीत्यादावपि दोषवारणसंभवात्पाणिनीयमनध्वनीति न वक्तव्यमित्यर्थः। एवं चासंप्राप्त इत्यर्थकमनध्वनीति पाणिनीयं वचनमपूर्वतया "असंप्राप्ते" इति कात्यायनवचनं वा स्वीकार्यमिति स्पष्टं भाष्यतो लाभादपवादवचनमप्रत्याख्येयमित्येव ततो लाभात्तद्भाष्य मस्माकमनुकूलमेवेति न काश्चिद्दोषः। प्रत्युत संपूर्णं सूत्रं प्रत्याख्यातमिति वादिनां हर्यादीनामेव तद्भाष्यं विरुणद्धीति निगूढाशयो ग्रन्थकृतोऽवगन्तव्य इति बोध्यम्। वस्तुतस्तु वक्तव्यमित्यस्य व्याख्येयमित्यर्थ एव स्वीकार्यः। "अध्वादीनां न स्वरूपेणापवादविषयता, अपितु असंप्राप्तत्वेन, "प्रतिपादयन्" इति प्रकृतग्रंथसंदर्भस्वारस्यात्। एवं चापवादांशेऽप्रत्याख्यानं भाष्यारूढमेवेति तात्पर्यम्। स्वोक्तार्थे वृद्धसंमतिमाह — **वृत्तिकारोपीति** वृत्तिकारः = जयादित्यः। अमुमेवार्थम् = अनध्वनीत्यस्य लक्षणयाऽसंप्राप्त इत्यर्थ इत्येतमेवार्थम्। **अनुमन्यते इति** अयं हि "गत्यर्थकर्मणी" 2-3-12 त्यादिसूत्रे वृत्तिग्रन्थः, अध्वनीत्यर्थग्रहणम् "पन्थानं गच्छति, मार्गं गच्छति", आस्थितप्रतिषेधश्चायं विज्ञेयः आस्थितः = संप्राप्तः इति। अनेन अनध्वनीत्यस्यासंप्राप्तार्थकत्वं स्पष्टमेव लभ्यते। प्रकरणार्थमुपसंहरति **अत्र इति** "क्रिया ग्रहण" मिति वार्तिकस्य भाष्यकृताऽप्रत्याख्यातत्वा देवेत्यर्थः। **धात्वर्थतानवच्छेदकमिति** तच्च पत्ये शेत इत्यत्र सुखम्, वृक्षायोदकमासिञ्चतीत्यत्र वृद्धिरूपम्, ग्रामाय गच्छतीत्यत्रोपद्रववारणेन स्वास्थ्यरूपम्, तदाश्रयत्वमित्यर्थः।

"क्रियाग्रहण" मिति वार्तिकं "गत्यर्थकर्मणी" 2-3-12 त्यादि संपूर्णसूत्रम्, "असंप्राप्ते" इति वार्तिकं च सर्वमपि प्रत्याख्यातमिति हरिकैयटादीनामाशयः। क्रियाग्रहणमिति वार्तिकं न प्रत्याख्येयम्, गत्यर्थकर्मणीति विधिभाग एव प्रत्याख्यातः, अनध्वनीति अपवादांशस्तु न प्रत्याख्यातः। पत्ये शेते इत्यादौ वार्तिकेनैव संप्रदानत्वमिति खण्डदेवस्याशय इति बोध्यम्।

**एवं "रुच्यर्थानां प्रीयमाणः" 1-4-33 इत्यनुशासनाद् रुच्यर्थधातुयोगे प्रीयमाणः = रुचिविषयीभूतद्रव्यजन्यप्रीतिमानर्थोपि संप्रदानसंज्ञः स्यादित्यर्थकात् चैत्राय रोचते मोदक इत्यादौ चतुर्थी। अत्र मोदकेपि धातुयोगसत्त्वा त्तद्वारणाय 'प्रीयमाण' इति वास्तवं च विशेषणम्। वृत्तित्वं लक्षणया चतुर्थ्यर्थः स्वनिरूपकरुचिनिरूपकत्वेना ख्याताऽन्वयि। विषयत्वं लक्षणया ख्यातार्थः। अभिलाषो धात्वर्थः। चैत्रवृत्तित्ववद् रुचिविषयत्वं मोदकवृत्तीतिशाब्द-बोधः।**

भाक्तसंप्रदानसंज्ञाविधायकं सूत्रान्तरं व्याचष्टे — **एवं रुच्यर्थानामिति** सूत्रे रुचिः, अर्थो येषां ते-रुच्यर्थाः तेषाम्, तेच रोचते मोदते, स्वदते स्वर्दते इत्यादयः। प्रीञ्तर्पणे इति क्रैयादिकात्सकमकाद् धातोः कर्मणि लटः शानजादेशे प्रीयमाण इति रूपम्, तृप्यमाण इति तदर्थः। प्रीयमाणशब्दार्थमाह — **रुचिविषयीति इत्यादाविति** आदिना चैत्राय स्वदते मोदकः, स्वर्दते मोदकः "अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा" इत्यादेर्ग्रहणम्। प्रीयमाण इत्यस्य कृत्यमाह **अत्रेति** सूत्रे इत्यर्थः। अस्य —

प्रीयमाण इति विशेषणमित्यत्रान्वयः। तत्पदाभावे रुच्यर्थकधातुयोगे कारकं संप्रदानमित्यर्थेन मोदकस्यापि कर्तृकारकत्वात्तत्रातिव्याप्तिः स्यादिति भावः। तदाह — **धातुयोगस्येति** धात्वर्थसंबन्धस्येत्यर्थः। तद्वारणाय = मोदके संप्रदानत्ववारणाय। वास्तवं = वस्तु सत् नतु ''अन्तर्धौ येनादर्शन'' मित्यत्रेव इच्छादिप्रयुक्तम्। **विशेषणमिति** ननु कारकत्वव्याप्य कर्तृत्वादीनामविवक्षायां कर्त्रादिसंज्ञान्तराप्राप्ति-विषये (शेषषष्ठीविषये) प्रकृतसूत्रस्य चरितार्थतया प्रत्युदाहरणे प्रीयमाणपदाभावेपि परत्वात्कर्तृसंज्ञया मोदके संप्रदानत्वस्य बाधसिद्धे र्नदोषः। एवं वैयाकरणैः स्वीकृते देवदत्ताय रोचते मोदकः पथीति प्रत्युदाहरणेपि परत्वादधिकरणसंज्ञया बाधसंभवा ददोषः। एवंच प्रीयमाणपदं व्यर्थमेवेति, चेन्न, कर्त्रादि संज्ञाभिरिव विनिगमनाविरहात्कर्मसंज्ञयापि बाधापत्तौ (देवदत्त रोचते इत्यस्याप्यापत्या)इष्टस्थलेपि संप्रदानत्वानापत्तेः। तत्सत्वेतु अस्य कर्मसंज्ञापवादत्वान्न दोषः। किंच ''रुच दीप्तावभिप्रीतौ'' चेति धातुपाठादस्य द्व्यर्थकत्वात्तत्र रुच्यर्थकस्यैव ग्रहणं, न दीप्त्यर्थकस्येत्यर्थबोधनाय सूत्रे प्रीयमाणग्रहणम्, अत एव आदित्यो रोचते = दीप्यते इत्यादौ न संप्रदानत्वम् मुख्यसंप्रदानत्वासंभवादाह — **वृत्तित्वमिति स्वनिरूपकेति** स्वाश्रयेत्यर्थः। समनन्तरमेव वदति — चैत्रवृत्तित्ववद्रुचीति, स्वं = वृत्तित्वम्, अचेतने मोदके कृतेर्बाधादाह — **विषयत्वमिति अभिलाषो धात्वर्थ इति** नचैवं चैत्रो मोदकमभिलष्यतीत्यत्रापि संप्रदानत्वापत्तिरिति वाच्यम्। विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारो रुचेरर्थः, तादृशः प्रीतिव्यधिकरणो व्यापारो भिलषतेरर्थः, इति रीत्या अभिलष्यते रुच्यर्थत्वाभावेनादोषात्। एवंच प्रीत्यनुकूलव्यापाररूपार्थैक्येपि तयोर्निरुक्तरीत्या भेदा न्नाभिलष्यतियोगे संप्रदानत्वमिति बोध्यम्, बोधमाह — **चैत्रेति** चैत्रवृत्तित्ववती या रुचिस्तदाश्रयत्वमित्यर्थः।

**एवं ''श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः'' 1-4-34 इत्यनुशासना देषां धातूनां प्रयोगे बोधयितु मिष्टः संप्रदानसंज्ञः स्यादित्यर्थकात् कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वेत्यादौ चतुर्थी। श्लाघा = स्तुतिः। ह्नुवनं = संगोपनम्। अत्र वास्तवे ज्ञापयितु मिष्यमाणत्वे सति चतुर्थी। अत्राऽऽद्यधातुद्वये सकर्मकत्वात् कर्मत्वं चतुर्थ्यर्थः। द्वितीयाबाधनेन च चतुर्थी। तृतीयचतुर्थयो स्त्वकर्मकत्वात् षष्ठीबाधेन। संबन्धश्चतुर्थ्यर्थः।**

तादृशं सूत्रान्तरं व्याचष्टे **एवं श्लाघ ह्नुङिति** सूत्रे श्लाघृ कत्थने, ह्नुङ् अपनयने, ष्ठागतिनिवृत्तौ, शप आक्रोशे, ज्ञीप्स्यमान इत्यत्र ज्ञापनवचनात् ज्ञपेः सन्नन्तात्कर्मणि लटः शानजादेशः। तदाह — **बोधयितुमिष्ट इति कृष्णाय श्लाघत इति** अस्य गोपी स्मरादित्यादिः, कृष्णं स्तौतीत्यर्थः एवं हि कृष्णः शक्यते ज्ञापयितुमिति भावः, एवमुत्तरत्रापि बोध्यम्। ह्नुते = अपलपति **तिष्ठत इति** ''प्रकाशनस्थेयाख्ययोश्चे'' 1-3-24 त्यनेना भिप्रायप्रकाशने आत्मनेपदम्, अहमीदृशीति स्थानेन प्रकाशयतीत्यर्थः। **शपते इति** ''शप उपलम्भने'' इति वार्तिकादात्मनेपदम्। उपलम्भनं = प्रकाशनम्, शपथेन प्रकाशयतीत्यर्थः। स्तुतिः = गुणवत्व प्रतिपादक शब्दप्रयोगादिः, संगोपनम् = इतरादर्शनयोग्यदेशस्थापनम्, अत्र = एतदुदाहरणेषु, वास्तवे = वस्तुसति, इष्यमाणत्वे सति = नतु तज्ज्ञानापेक्षेति भावः। अत्र = उदाहरणेषु। आद्यधातुद्वये = श्लाघ ह्नुङ् धातुद्वये। **सकर्मत्वादिति** गुणि निष्ठ गुणज्ञानाद्यनुकूलव्यापारवाचित्वात्तयोस्तत्वर्मिति भावः। चतुर्थी = प्रकृतसूत्रेण। तृतीयचतुर्थयोः = स्था शपधात्वोः, **अकर्मकत्वादिति** स्थितिशपथार्थकत्वात्तयोस्तत्वमिति भावः। **षष्ठीबाधेनेति** चतुर्थीत्यनुकृष्यते।

**अथवा सर्वत्र श्लाघादिज्ञापनं लक्षणया धात्वर्थः। तंप्रति कृष्णस्य कर्मत्वेन द्वितीयाप्राप्तौ चतुर्थी।**

इदं च श्लाघादि धातूनां केवलस्तुत्यादिरेवार्थ इति मतेन, वस्तुतस्तु तन्न युक्तम्। तन्मात्रार्थकत्वे कृष्णं श्लाघते ह्नुते इति कर्मत्वस्यैवेष्टत्वात्। ज्ञीप्स्यमान इति पदस्वारस्य भङ्गापत्तेश्चेत्यतो मतान्तरमाह – **अथवेति** सर्वत्र = धातुचतुष्टयेऽपि। **श्लाघादि ज्ञापनमिति** श्लाघादिना ज्ञापनमित्यर्थः। शुद्धधातुतस्तदर्थाप्रतीतेराह **लक्षणयेति धात्वर्थ इति** एवंच स्तुत्यादिस्वार्थोपसर्जनको णिजन्तजानात्यर्थः श्लाघ्यादि धात्वर्थ इति भावः। तं प्रति = तादृशधात्वर्थं प्रति, सच ज्ञापनरूपणिजन्तार्थः, णिच्प्रकृतिभूतजानात्यर्थश्च। **कृष्णस्येति** उभयथापि तस्य कर्मत्वेनेत्यर्थः। द्वितीयाप्राप्तौ = धातुचतुष्टयेपि तत्प्राप्तौ। चतुर्थी = तद्बाधनेनानेन चतुर्थी। अयं भावः – ण्यर्थकर्मणो ग्रहणे इत्थं समन्वयः – कृष्ण आत्मानुरागं बुध्यते, गोपी कृष्णमात्मानुरागं बोधयति, अणौ कर्तुः कृष्णस्य णौ "गतिबुद्धी" 1-4-52 त्यादिना कर्मत्वम्, एवंच कृष्णस्य ण्यर्थकर्मत्वाद् द्वितीयाबाधनेन चतुर्थ्यां गोपी कृष्णाय श्लाघते इति प्रयोगः साधुः, गोपी स्तुत्या कृष्णं स्वानुरागं बोधयतीति तदर्थः। एवं ह्नुत्या स्थित्या शपथेन च तं स्वानुरागं बोधयतीत्यर्थः। ह्नुतिश्च कृष्णस्यैव जानात्यर्थकर्मणो ग्रहणे तु समन्वय इत्थम्-सखीजनः कृष्णं बुध्यते, गोपी सखीजनं कृष्णं बोधयति, अणौ जानातिकर्मत्वं कृष्णस्येति तद्बाधनेना नेन संप्रदानत्वाच्चतुर्थी, स्तुत्या ह्नुत्या स्थित्या शपथेन कृष्णं स्वसखीजनं गोपी ज्ञापयतीत्यर्थः। एवंच णिजर्थकर्मणस् तत्प्रकृत्यर्थ-कर्मण श्च ज्ञीप्स्यमानपदेन ग्रहणम्। उभयथापि कृष्णस्य संप्रदानत्वम्, स्पष्टमधिकमन्यत्रेति।

**एवं "धारे रुत्तमर्णः" 1-4-35 इतिसूत्रेण धारयते र्योगे उत्तमर्ण उक्तसंज्ञः स्यादित्यर्थकेन 'चैत्राय शतं धारयती' त्यत्र चतुर्थी। अत्र चतुर्थ्यर्थ उत्तमर्णत्वापर पर्यायप्रत्यर्पणीयत्वाख्यः संबन्धः। तस्यच स्वनिरूपकद्रव्यकर्मकधारणानुकूलत्वेन कृतावन्वयः। तथाच चैत्रप्रत्यर्पणीयं शतं धारयतीत्यर्थः। यदातु स्वत्वाख्यसंबन्धविवक्षा तदा चैत्रस्य शतं धारयतीति प्रयोगः। न चास्य मुख्यसंप्रदानत्वविवक्षयैव चतुर्थ्युपपत्तेः सूत्रान्तर वैयर्थ्यम्। दानक्रियाऽभावेन तस्या अप्राप्तेः। प्रत्यर्पणीयत्वविवक्षया तत्सार्थक्याच्च। अत एव "क्रियाग्रहण कर्तव्य" मित्यनेनापि न वैयर्थ्यम्।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं धारेरिति** धृङ् अवस्थाने इति तौदादिकोऽकर्मको धातुः, शतं ध्रियते = स्वरूपेणावतिष्ठते। ततो हेतुमण्णिचि धारयतीति रूपम्। धत्ते इत्यर्थः। अणौ कर्तुः शतस्य णौ कर्मत्वम्, उत्कृष्टार्थ वाचकाद् उत् शब्दात्तमपि उत्तममिति रूपम्। द्रव्य प्रकर्षत्वात् "किमेत्तिङव्यये" 5-4-11 त्यादिना आम् न, उत्तमं ऋणं यस्य सः उत्तमर्णः। "जतिकालसुखादिभ्यः परा निष्ठा वाच्ये" ति वार्तिका दृणशब्दस्य पर्रानिपातः। यद्वा ऋणे उत्तमः उत्तमर्ण इति सप्तमीसमासः। अस्मादेव निपातनात्समासः, ऋणशब्दस्य परनिपातश्चेति बोध्यम्। सूत्रार्थमाह – **धारयतेरिति चैत्रायेति** अवस्थानानुकूलो व्यापारो धारयतेरर्थः। अवस्थित्याश्रयस्य शतस्य कर्मत्वम्, तत्संबन्धिनश्चैत्रादेः संप्रदानत्वमनेन। अत्र = उदाहरणे। प्रकृतसूत्रादाह – **उत्तमर्णत्वेति** प्रत्यर्प्यतेऽस्मै इति प्रत्यर्पणीयः, बाहुलकात्संप्रदानेऽनीयर्। तथाच उत्तमर्णत्वापरपर्यायः प्रत्यर्पणीयत्वरूपः संबन्धश्चतुर्थ्यर्थ इत्यर्थः। इयं चतुर्थी शेषषष्ठ्यपवादः। तथाहि – अत्रोत्तमर्णौ द्रव्यदानक्रियया धारणस्य निमित्तम्। यतो सौ तदृणं ददाति, ददातिश्च न श्रूयते इत्यश्रूयमाणक्रियात्वाच्छेषे षष्ठी प्राप्तेति दीक्षितादयो वैयाकरणाः। तस्य च = चतुर्थ्यर्थसंबन्धस्य। फलितार्थमाह **तथाचेति चैत्र प्रत्यर्पणीयमिति** चैत्रस्य प्रत्यर्पयितुं योग्यमित्यर्थः। यद्वा प्रत्यर्प्यतेऽस्मै इति प्रत्यर्पणीयः, संप्रदानेऽनीयर्, चैत्रः प्रत्यर्पणीयो यस्येत्यर्थः। **धारयतीति** धत्ते इत्यर्थः। तच्च धारणमृणग्रहणपूर्वकम्, प्रकृतसूत्रानुरोधात्, नतु चौर्येण, नापि अदृष्टार्थदानेन। इयं चतुर्थी शेषषष्ठ्यपवाद इति दीक्षिताद्युक्तमयुक्तमिति ध्वनयन्नाह – **यदात्विति** "स्पृहेरीप्सित" 1-4-36 इति

सूत्रविहित संप्रदानत्व विषये तत्वेनाविवक्षायां शेषे षष्ठी स्वीक्रियते शाब्दिकैरपि। तद्वदत्रापि स्यादिति भावः। सूत्रवैयर्थ्य माशङ्कते — **नचेति** अस्य = उदाहरणे चैत्रादेः। **मुख्य संप्रदानत्वेति** अयं भावः — चैत्राय शतं धारयति मैत्र इत्यादौ कर्मणा शतादिना कर्तुर्मैत्रादेरभिप्रेयमाणत्वा च्चैत्रादेः ''कर्मणा यमभिप्रैति स संप्रदान'' मिति सूत्रेणैव संप्रदानत्वं सिध्यति, उत्तमर्णाधमर्णयोश्च दानक्रियामूलकः संबन्धोऽस्ति, एष ददाति, स प्रत्यर्पयति, तेनाधमर्णः शतेन कर्मणोत्तमर्णमभिप्रैति, एवंच मुख्यमेव संप्रदानत्वं चैत्रादेरिति। ''कर्मणा यमभिप्रैती'' ति सूत्रमेव मुख्यसंप्रदानत्वबोधकम्। अन्यत्तु भाक्तसंप्रदानत्वबोधकमित्याशयेनोक्तं-मुख्येति, **सूत्रान्तरेति** ''धारेरुत्तमर्ण'' इति प्रकृतसूत्रान्तरेत्यर्थः। समाधत्ते — **दानक्रियाऽभावेनेति** प्रकृतोदाहरणे धारयतिः श्रूयते। तस्य स्वरूपावस्थित्यनुकूलो व्यापारोऽर्थः। तत्र दानक्रियाया अभावेन ''कर्मणाय'' मिति सूत्रेण संप्रदानत्वं न सिध्यति। मुख्यदानक्रियामादायैव तेन संप्रदानसंज्ञाविधानात्। निरूपितं चेदं समनन्तरमिति भावः। ननु उदाहरणवाक्याच्चैत्रदत्तं मैत्रो गृह्णाति, मैत्रश्चैत्राय शतं प्रत्यर्पणीयं मत्वैव धारयतीत्यर्थावगमात्तादृशदानक्रियामादाय सामान्यसूत्रेण संप्रदानत्वं सिद्ध्यत्येवेत्यत आह — **प्रत्यर्पणीयत्वेति** ''कर्मणाय'' मिति सूत्रीयोदाहरणेषु स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनं भासते। तत्र स्वीकृतस्य वस्तुनः प्रत्यर्पणीयत्वं नास्त्येव। प्रकृतोदाहरणे तु गृहीतवस्तुसदृशस्य वस्त्वन्तरस्य प्रत्यर्पणीयत्वं नियमेन विवक्ष्यते, अतः सामान्यशास्त्रेणाऽसिद्धत्वात्संप्रदानत्वविधानाय प्रकृतसूत्रस्य सार्थक्यमिति भावः। द्वितीयहेतुना शङ्कान्तरमपि निरस्तमित्याह — **अत एवेति** प्रत्यर्पणीयत्वविवक्षायामन्येनागतार्थतया तद्विधानाय प्रकृतसूत्रस्य सार्थकत्वादेवेत्यर्थः। **न वैयर्थ्यमिति** न गतार्थत्वमित्यर्थः। अन्यथा धारयति क्रिययाऽभिप्रेयमाणत्वादुत्तमर्णस्य ''क्रिया गृहण'' मिति वार्तिकेनैव सिद्ध्या एतत्सूत्रस्य वैयर्थ्यमेव स्यादिति भावः।

भक्ताय धारयति मोक्षं हरिः इत्यपि प्रकृत सूत्रोदाहरणं भवितुमर्हति। यद्यपि ऋणं नाम सजातीय द्रव्यदानमङ्गीकृत्य परदत्तपरकीयद्रव्यादानम्, तज्जन्योऽधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो वा, उभयथापि नेह प्राप्तिः, मोक्षस्योक्तऋणत्वाभावेन भक्तस्योत्तमर्णत्वाभावात्. तथापि अवश्यदेयत्वेन मोक्षेपि ऋणव्यवहारसत्वादुदाहरणसंगतिः, ऋणग्रहणस्यावश्यदेयोपलक्षणार्थत्वात्, अत एव उत्तमर्ण इति शब्दस्य ऋणदातरि प्रयोगः सिध्यति। अन्यथा ''ऋणमाधमर्ण्ये'' 3-2-60 इति शास्त्रेण अधमर्णव्यवहार एव ऋणशब्दस्य साधुत्वबोधनेन तत्र तदसंगतिरेव। अत एव ''कृत्यैः ऋणे'' 2-1-43 इत्यनेन मासे देयमृणमित्यादाविव पूर्वाह्णे गेयं सामेत्यादावपि सप्तमीसमाससिद्धिः। एतेन — उत्तमर्णत्वं च गृहीत धनवृद्धिभागित्वं, वृद्धिजन्यसुखभागित्वं वा। एतेन भक्ताय धारयति मोक्षं कृष्ण इत्युदाहरणं सूत्रविरुद्धमिति भाट्टचिन्तामण्युक्त मपास्तम्।

**एवं ''स्पृहे रीप्सितः'' 1-4-36 इत्यनुशासनात् स्पृहयतियोगे इष्टः संप्रदानसंज्ञः स्यादित्यर्थकात् 'पुष्पेभ्यः स्पृहयती' त्यत्र चतुर्थी। अत्र चतुर्थ्यर्थः कर्मत्वं, संबन्धत्वेन विषयत्वरूपसंबन्धश्च। तयोश्च तात्पर्यानुरोधेन एकैकशः समुदितयो र्वा बोधः। तेन निरवकाशत्वा त्संप्रदानसंज्ञा कर्मसंज्ञाशेषषष्ठ्यो र्बाधिकेति वाक्यपदीयप्रभृतयः।**

तादृशं सूत्रान्तरं व्याचष्टे — **एवं स्पृहेरिति** स्पृह ईप्सायामिति चुरादिरदन्तो धातुः, तत्र स्वार्थे णिचि अल्लोपे तस्य स्थानिवत्वान्न लघूपधगुणः। आप्लृ व्याप्ताविति धातो रिच्छासन्नन्तात् ''मतिबुद्धिपूजार्थेभ्यश्चे'' 3-1-188 ति क्तः। तथाच स्पृहयतेः प्रयोगे आप्तुमिष्टोर्थः संप्रदानसंज्ञकः स्यादिति सूत्रार्थः सिध्यति। तदाह — **स्पृहयति योगे इति** एतद्विहितं संप्रदानत्वं शेषत्वकर्मत्वयोरपवाद इति भर्तृहरिमतमुपक्षिपति — **अत्रेति** प्रकृतसूत्रोदाहरणेष्वित्यर्थः। कर्मत्वशेषत्वापवादेन विधीयमान

संप्रदानचतुर्थ्या अपि कर्मत्वं संबन्धश्चार्थ इत्याह **चतुर्थ्यर्थः कर्मत्वमिति तात्पर्यानुरोधेनेति** कर्मत्वस्य कर्मत्वत्वेन विवक्षा, यद्वा संबन्धत्वेन, यद्वोभयरूपेणेति विवक्षानुरोधेनेत्यर्थः। **एकैकश इति** एकैकमित्यर्थः। ननु एकैकश इत्यस्य कथं साधुत्वम्, एकशब्दात् "संख्यैक वचनाच्च वीप्यासा" 5-4-43 मिति विहितेन तद्धित शस् प्रत्ययेनैव वीप्साया उक्तत्वेन वीप्सायां द्विर्वचनायोगात् "येननाप्राप्ते" इति न्या– येन द्विर्वचनापवादः शस् इति सिद्धान्तादिति चेत्, अत्राहुः – "संख्यैकवचनाच्च वीप्साया" मिति सूत्रे चकारो वीप्सायामित्यनन्तरं द्रष्टव्यः, संख्यावाचिन एकत्वविशिष्टाच्च वीप्सायां च शस् स्यादिति तत्सूत्रार्थः। चकारात् स्वार्थेऽपि, सचाभिधान स्वाभाव्यादेकशब्दादेव। तेन एकशब्दाद्वीप्साबोधक शसुप्रत्ययस्याभावे तस्य वीप्सायां द्विर्भावे एकैकमिति जाते ततो निरुक्तरीत्याऽत्यन्तस्वार्थिके शसुप्रत्ययेकृते एकैकश इत्यस्य साधुत्वं निराबाधम्। पक्षे एकैकमित्यपि भवती-ति। तेन विभक्त्या र्थद्वयबोधनेन। **निरवकाशत्वादिति** कर्मत्वबोधने द्वितीयायाः शेषत्वबोधने षष्ठ्याश्चावश्यं प्राप्त्या अस्या निरवकाशत्वमिति भावः। **वाक्यपदीयप्रभृतय इति** प्रभृतिशब्देन हेलाराजीयप्रकाशग्रन्थस्य ग्रहणम्, इत्थं हि संप्रदानप्रकरणे भर्तृहरेर्वाक्यपदीयग्रन्थः साधनसमुद्देशे –

हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम्।
रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते।।130

इति। "रुच्यर्थानां प्रीयमाण" 1-4-33 इत्यादिनवसूत्री विषये हेतुत्वं, कर्मसंज्ञा शेषत्वं च यथासंभवं प्राप्नोति, तद्बाधनेनाऽनया नवसूत्र्या संप्रदानसंज्ञोच्यत इति तदर्थः। प्रकृते कर्मत्वं शेषत्वं च प्राप्नोति। तथाच तद्व्याख्याने हेलाराजः – "पुष्पेभ्यः स्पृहयति" पुष्पाणामीप्सिततमत्वात्कर्मसंज्ञा प्रसङ्गः" "विशेषविवक्षाया अभावे चात्र सर्वत्रैव क्रियानिमित्तत्वमात्राश्रयेण शेषत्वे प्राप्ते संप्रदानतोदाहार्या" इति।

**वस्तुतस्तु ईप्सितग्रहणा दीप्सिततमत्व प्रयुक्तकर्मसंज्ञायाः संबन्धसामान्यप्रयुक्तशेषषष्ठ्या वा बाधे प्रमाणाभावः। तेन विषयित्वमेव तत्त्वेन चतुर्थ्यर्थः। तस्य च स्वाश्रयस्पृहानिरूपितत्वेना ख्यातार्थाश्रयत्वे न्वयः। कर्मत्वविवक्षायां 'पुष्पाणि स्पृहयती' ति प्रयोगः। शेषत्वविवक्षायां च पुष्पस्य स्पृहयती ति। अत एव –**

**"परस्परेण स्पृहणीयशोभ"**

**मिति कर्मत्वार्थकः प्रत्ययः।**

**"कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च"**

**इति षष्ठीप्रयोगोपि संगच्छते। हरदत्तादयोप्येवम्।**

"वाक्यपदीयप्रभृतय" इत्यनेन सूचितामरुचिं प्रकटयन् सिद्धान्तमाह – **वस्तुतस्त्विति** कर्मत्व-संप्रदानत्वयोः शेषत्वसंप्रदानत्वयोश्च भिन्नविषयत्वाद् बाध्यबाधकभावो नास्तीत्याशयः। तदेव विशदयति – **ईप्सितग्रहणादिति** प्रकृतसूत्रे तमप्रत्ययं विना केवलेप्सितशब्दग्रहणादित्यर्थः। अनेन ईप्सितमात्रे अस्य संप्रदानत्वस्य चारितार्थ्यमिति दर्शयति, कर्मत्वं तु ईप्सिततमस्येत्याह **ईप्सितत-मत्वप्रयुक्तेति** एवंच ईप्सितमात्रे संप्रदानत्वं सावकाशम्, नहि तत्र कर्मत्वस्य प्राप्तिः, कर्मसंज्ञासूत्रे तमपो ग्रहणादिति भावः। अयमर्थः – "कर्तुरीप्सिततमं कर्म" ति कर्मसंज्ञासूत्रे तमपो ग्रहणेन फलस्य धातुवाच्यत्वरूपप्रकर्षलाभेन धात्वर्थतावच्छेदकफलाश्रयस्य कर्मत्वं सिध्यति "स्पृहेरीप्सित" इति संप्रदानसूत्रे तमपोऽभावेन तदनवच्छेदकफलाश्रयस्य संप्रदानत्वं सेत्स्यति।स्पृहयतिश्च विषयतारूपफला-वच्छिन्नेच्छावाची, केवलेच्छावाची च, आद्ये कर्मत्वम्, द्वितीये संप्रदानत्वमिति व्यवस्थया कर्मत्व-

संप्रदानत्वयोर्भिन्नविषयकत्वान्न बध्यबधकभावः। एवंच संप्रदानसूत्रे ईप्सितत्वं धात्वर्थक्रियाजन्य-फलाश्रयत्वम्, नतु फलस्य धात्वर्थत्वाग्रहः। कर्मसंज्ञायां तु फलस्य धातुवाच्यत्वाग्रहः-इति। शेषत्वस्यापि नापवाद इत्याह – **संबन्धसामान्येति** पुष्पाणां धात्वर्थतानवच्छेदकफलाश्रयत्वेन विवक्षायां संप्रदानत्वं चरितार्थम्, नहि तत्र शेषत्वप्रसक्तिरिति भावः। बाधे = संप्रदानत्वेन बाधे। **प्रमाणाभाव इति** निरवकाशं शास्त्रं सावकाशं बाधते, संप्रदानत्वं च निरुक्तरीत्या सावकाशम्। अतो न संप्रदानत्वं कर्मत्वशेषत्वयोर्बाधकमिति भावः। तेन = संप्रदानत्वस्य कर्मत्वाद्यबाधकत्वेन। मुख्यसंप्रदानत्वासंभवादाह **विषयित्वमेवेति** तत्त्वेन = विषयित्वत्वरूपेण। तस्य च = चतुर्थ्यर्थविषयित्वस्य। **स्वाश्रयेति** स्वं = विषयित्वम्, तस्याश्रयः स्पृहा = इच्छा, तन्निरूपितत्वेनेत्यर्थः। आख्यातार्थो लक्षणयाश्रयत्वमित्याह **आख्यातार्थाश्रयत्वे इति** एवंच स्वाश्रय स्पृहानिरूपितत्वसंबन्धेन पुष्पविषयित्ववदाश्रयत्वं चैत्रीयमिति बोधः। एवं स्पृहयतेरिच्छामात्रवाचित्वाश्रयणेन संप्रदानत्वं पुष्पाणामुपपाद्य, तेषां कर्मत्वमुपपादयति **कर्मत्वविवक्षायामिति** विषयतारूपधात्वर्थतावच्छेदक फलाश्रयत्वविवक्षया कर्मत्व इत्यर्थः। षष्ठ्या अप्युपपत्तिं दर्शयति **शेषत्वेति** ईप्सितस्य ईप्सिततमस्य च शेषत्वेन विवक्षायामित्यर्थः। स्वमते लक्ष्यसिद्धिरपि प्रयोजनमित्याह – **अत एवेति** संप्रदानत्वस्य तदनपवादत्वादेवेत्यर्थः। **स्पृहणीयशोभ-मिति** स्पृहणीया शोभा यस्य तत्अत्र शोभारूपे कर्मणि स्पृहयतेः अनीयर् प्रत्ययः। शोभाकर्मणा धातोस्सकर्मकत्वात्। कर्मत्वस्य संप्रदानत्वेन बाधने तु एतदसिद्धिरेव, "तयोरेव कृत्यक्तखलर्थाः" 3-4-70 इत्यनेन कृत्यप्रत्ययस्य कर्मणि सकर्मकादेव नियमनात्। तदाह – **कर्मत्वार्थक इति** प्रत्ययः = अनीयर् कृत्यप्रत्ययः। तद्योगे षष्ठ्यन्तमुदाहरति – **कुमार्य इति** षष्ठी प्रयोगोपि = षष्ठी प्रयोगश्च **संगच्छते इति** हर्यादिमते त्वेतदसिद्धिरिति भावः। स्वोक्तार्थे वृद्धसंमतिं दर्शयति **हरदत्तादयोऽपीति** अपिना नव्यानां दीक्षितादीनां ग्रहणम्। इत्थं हि हरदत्तग्रन्थः – "ईप्सितमात्रे इयं संज्ञा, प्रकर्षविवक्षायां तु परत्वात्कर्मसंज्ञैव भवति। यदातु ईप्सितमीप्सिततमं च शेषत्वेन विवक्ष्यते, तदा षष्ठी भवति"-इति। भट्टोजीदीक्षितोऽपि प्रौढमनोरमायां, शब्दकौस्तुभे च हरदत्तमनुसरन् परस्परेणेत्यादि प्रयोगानपि प्रादर्शयत्। अनन्तरकालिको वैयाकरणनागेशोऽपि एनमेव पन्थानमाशिश्राय। एवम् = एवमेवाशेरते। एवंच कर्मसंप्रदानसंज्ञासूत्रयोस्तमपो ग्रहणाग्रहणाभ्यां तत्संज्ञयोर्भिन्नविषयत्वलाभान्न तयोर्बाध्यबाधकभाव इति भावः।

अत्र वाक्यपदीयानुसारिणः प्रत्यवतिष्ठन्ते – अपादानप्रकरणे भाष्यकृता भीत्रार्थादिविषयेपि बौद्धापायस्य सत्त्वाद् "ध्रुवमपायेऽपादान" 1-4-24 मिति सूत्रेणैवापादानसंज्ञां संसाध्य "भीत्रार्थानां भयहेतु" रित्यादिसूत्राणि प्रत्याख्यातानि। अबुधबोधनार्थं च "भीत्रार्थाना" मित्यादिना भेदेन कथनमिति तद्भाष्याशयः। तन्न्यायेन कर्मप्रकरणेपि "कर्तुरीप्सिततमं कर्म" 1-4-49 ति सूत्रे तमग्रहणपरित्यागेन तथायुक्तादिविषयेपि "कर्तुरीप्सिततम" मिति सूत्रेणैव सर्वत्र कर्मत्वं सिध्यति। कर्तुः क्रिययाऽऽप्य-मानत्वस्य सत्वात्। मन्दबुध्यनुग्रहाय तु "तथायुक्त" मित्यादि कर्मसंज्ञाविधायकोत्तर सूत्रप्रपञ्चः। उक्तं च साधनसमुद्देशे कर्माधिकारे गुरुणा भर्तृहरिणा –

> "यथैवेकमपादनं यथा भेदेन दर्शितम्।
> तथैकमेव कर्मापि भेदेन प्रतिपादितम्।। इति 79

"तमब्ग्रहणस्य च प्रत्याख्यानादीप्साप्रकर्षानाश्रयणम्। यत्तु तमब्ग्रहणस्योदाहरणं "दध्ना भुञ्जीये" ति तत्र समकक्षतया दध्योदनयोरीप्सितत्वे तमब्ग्रहणमकिञ्चित्करम्" इति तद्व्याख्याने हेलाराजः। "अहितेषु यथा लौल्या" 80 दित्यादिकारिका व्याख्यानेपि हेलाराजः – "तमब्ग्रहणं च प्रत्याख्यातमिति श्रमापनोदनार्थं ग्रामगमनेऽप्यन्तरा वृक्षमूलोपसर्पणमभिमहितमिति सिध्यतीप्सितमात्रस्य कर्मसंज्ञा पूर्वेणैव" इति।

ननु यवेभ्यो गां वारयतीत्यादौ यवादेरेवापादानत्वं, गवादेः कर्मत्वमेवेति कर्मत्वापादानत्वयोर्विषय-विभागप्रदर्शनार्थं कर्मसंज्ञा सूत्रे तमब्ग्रहणमावश्यकम्। अन्यथा पच्यादौ चरितार्थस्य कर्मत्वस्य विशेषविहितेन ''वारणार्थाना'' मित्यपादानत्वेन बाधापत्त्या गवादेरपि पञ्चम्यापत्तिरिति चेत्,

श्रृणु – ''वारणार्थाना'' मिति सूत्रस्य वारणार्थानां धातूनां योगे ईप्सितोऽपादानमिति नार्थः। किंतु वारणमर्थयन्त इति वारणार्थाः वारयितव्याः प्रतिषेद्धव्या इति यावत्, वारणार्थानां = प्रतिषेद्धव्यानां गवादीनां यदीप्सितं तदपादानमिति सूत्रार्थः। तथाच प्रतिषेद्धव्यानां गवादीनामीप्सिता यवादय एवेति तेषामेवापादानत्वं, गवादीनां कर्मत्वमेवेति तमब्ग्रहणाभावेपि तयोर्विषयविभागः स्सिद्धः।

एवंच कर्मसंज्ञा सूत्रे तमब्ग्रहणस्याभावादुभयत्रापि कर्तुः क्रिययाप्यमानत्वस्य तुल्यत्वात् स्पृहयतिभिन्ने पच्यादौ चरितार्थस्य कर्मत्वस्य विशेषविहितेन स्पृहयतियोगमात्रनिमित्तकेन संप्रदानत्वेनबाधनं युज्यत एव। स्पृहणीयमित्यत्र दानीयो विप्र इत्यत्रेव बाहुलकात्संप्रदाने अनीयर् कृत्यप्रत्ययः। ''कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्तिचे'' त्यत्र भोगायेत्यध्याहृत्य कान्तायेति विभक्तिविपरिणमेन वा व्याख्यानान्न दोषः।

तस्मात् स्पृहयतियोगे कर्मत्वबाधनेन संप्रदानत्वं प्रवर्तत इत्युपपद्यत एवे-ति।

तत्त्वदर्शिनस्तु – इदमयुक्तम् अपादानप्रकरणस्थभाष्यार्थस्य कर्मसंज्ञाप्रकरणेतिदेशे मानाभावात्, भाष्यानुक्तत्वात् कस्यापि लिङ्गस्यादर्शनाच्च। सर्वत्रापि सामान्यसूत्रेण कर्मत्वसंपादन लोभेन भाष्यकारासंमतस्य तमब्ग्रहणप्रत्याख्यानस्यायुक्तत्वाच्च। अतो भर्तृहरेरियमुक्तिः प्रौढ्या, न सिद्धान्तरीत्या। किंच तमपोऽभावे कर्मत्वापादानत्वयोर्विषयव्यवस्थादुरुपपादा स्यात्। तत्सत्वे तु ईप्सितेऽपादानत्वमीप्सिततमे कर्मत्वमिति व्यवस्था घटते। नच वारणार्थानां = प्रतिषेद्धव्यानामिति सूत्रार्थस्वीकारेणादोष इति वाच्यम्। तदर्थस्य भाष्यानुक्तत्वेनाऽप्रामाणिकत्वात्। किंच ''वारणार्थाना'' मिति सूत्रे अग्नेर्माणवकं वारयतीत्यत्र माणवकेऽपादानत्वमाशङ्क्य कर्मणो यदीप्सितं तदपादानमित्यर्थ-केन ''कर्मणा यदीप्सित'' मिति वचनेन परिहृतं भाष्ये। त्वदुक्तार्थस्वीकारेतु तेनैव तत्र तद्वारणसंभवेन भाष्यकृतो वचनान्तरानुधावनं निष्फलमेव स्यात्। किञ्च माणवकेतिव्याप्तिवारणपरं ''कर्मणो यदीप्सित'' मिति वचनं, ''वारणार्थेषु कर्मग्रहणानर्थक्यं ''कर्तुरीप्सिततमं कर्म'' ति वचनात् इति भाष्येण प्रत्याख्यातम्। माणवकेऽपादानत्वं प्राप्नोति, तच्च कर्मत्वेन बाध्यत इति खलु तस्याशयः। ईप्सितेऽपादानत्वं चरितार्थम् वारयतिव्यतिरिक्ते पच्यादौ कर्मत्वं चरितार्थम्, ईप्सिततमे उभयप्राप्तौ परत्वात्कर्मत्वमिति भाष्यकृतो भावः। तमब्ग्रहणाभावेऽपादानबाधकत्वं न घटेत, अतस्तमब्ग्रहणप्रत्या-ख्यानं न भाष्यकृत्संमतम्। ननु वारणार्थानामिति सूत्रे इप्सित इति कर्मणा कर्तुराक्षेपोऽङ्गीकृतः तद्वत्कर्मसंज्ञा सूत्रेपि ईप्सित इति कर्मणा कर्तुराक्षेपेणैव सिद्धौ पुनः कर्तृग्रहणेन प्रकर्षलाभसंभवान्माण-वकादेः कर्मत्वसिद्ध्या तमब्ग्रहणप्रत्याख्यानस्यैव निरुक्तभाष्यात्प्रतीत्या हर्याद्युक्तं युक्तमेव। अत एव भाष्यकृता तमब्ग्रहणात्सिद्धमिति नोक्तमिति चेन्न, लघुना तमब्ग्रहणेन कर्तरि[illegible]स्य प्रत्याख्याने भाष्यतात्पर्यात्। अत एव ''कर्तुरीप्सिततमं कर्म'' ति सूत्रे भाष्ये तमब्ग्रहणस्यैव माणवकेऽपादानत्व-वारणेन कर्मत्वसिद्धिः फलमित्युक्तम् ''इह तमग्रहणे क्रियमाणे तदुपपन्नं भवति यदुक्तं ''वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचना'' दित्यनेन। अत एव भाष्ये कर्तुरित्यस्य प्रयोजनं नोपन्यस्तम्। अतो हर्याद्युक्तिरयुक्तैव। कर्मत्वसंप्रदानत्वयोर्बाध्यबाधकभावो नास्त्येव। अगतिकगतिना बहुलकेन स्पृहणीयशब्दसाधनमयुक्तम्। कुमार्य इत्यत्र अध्याहारेण, विभक्तिविपरिणामेन च व्याख्यानं गुरुभूतमेव। एवत्सर्वं मनसि निधायैव ''ईप्सितग्रहणादीप्सित तमत्वप्रयुक्तकर्मसंज्ञाया बाधे प्रमाणाभाव'' इति महानुभावेन खण्डदेवेनोक्त-मित्याहुः।।

**एवं "क्रुध द्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः" 1-4-37 इत्यनुशासनात् क्रुधद्रुहाद्यर्थानां धातूनां योगे यं प्रतिकोपः स संप्रदानसंज्ञः स्यादित्यर्थकात् 'शत्रवे क्रुध्यति, द्रुह्यति ईर्ष्यति असूयती' त्येवं चतुर्थी। अत्र क्रोधः = अमर्षः। द्रोहः = अपकारः, ईर्ष्या = असहनम्। असूया = गुणेषु दोषारोपः। अत्राऽऽद्ययोरकर्मकत्वात्तद्योगे षष्ठीप्राप्तौ, अन्त्ययोश्च सकर्मकत्वाद् द्वितीयाप्राप्तौ चतुर्थी विधि स्तद्बाधेन। 'यं प्रति कोप' इत्यनेन यत्संबन्धित्व-यत्कर्मत्वयोरुपादानात्। अत एव नात्र पूर्ववद् द्वितीयान्तादिप्रयोगोपि। चतुर्थ्यर्थोपि स एव। वास्तवो यत्र कोप, स्तत्र कर्मत्वादौ चतुर्थी त्यर्थः, कोपपदोपादानाद् 'भार्या मीर्ष्यति मा एना मन्यो द्राक्षी' दित्यत्र न चतुर्थी। अत एवाऽऽद्ययोर्धात्वर्थयोरुपसर्गयोगे कर्मसंज्ञाविधिः शत्रुमभिक्रुध्यति अभिद्रुह्यतीत्यादौ "क्रुधद्रुहोरुपसृष्टयोः कर्म" 1-4-38 इत्यनेन।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं क्रुधद्रुहेति** क्रुध कोपे द्रुह जिघांसायाम् ईर्ष्य ईर्ष्यायाम्, असूञ् इत्यस्मात् 'कण्ड्वादिभ्यो यक्' 3-1-27 इत्यनेन यक्प्रत्यये असूयेति सिध्यति, तस्य 'सनाद्यन्ता धातवः' 3-1-32 इत्यनेन धातुत्वम्। इत्येवम् = इत्येवं संप्रदानत्वे, अत्र = उदाहरणेषु, अमर्षः = वधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः। स च वाक्चक्षुरादिविकारानुमेयः प्ररूढः कोप एव। अपकारः = दुःखजनकक्रियारूपापकारजनकः सः, असहनम् = उत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनकः सः, गुणेषु = शौचाचारादिगुणविषये, दोषारोपः = दम्भादिकृतत्वरूपदोषारोपानुकूलः सः। कुप धातौ वाच्यत्वेन यदवस्थितं तत् क्रुधादीनां सर्वेषामपि साधारणम्। अतो विशेषणं सामान्येन'यं प्रति कोपः'इति। तेन कोपप्रभवा एव द्रोहादयो गृह्यन्ते। एतत्प्रयोजनं च मूले समनन्तरमेव सपष्टम्। "धारेरुत्तमर्णः" स्पृहेरीप्सितः इत्यत्रेवात्रापि चतुर्थी शेषषष्ठीद्वितीययोर्नापवाद इति भ्रमवारणायाह – **अत्रेति** सूत्रोपात्तधातु-चतुष्टयमध्ये इत्यर्थः, आद्ययोः = क्रुधद्रुहोः **अकर्मकत्वादिति** धात्वर्थोपसंगृहीतकर्मकत्वेनाकर्मकत्वा-दित्यर्थः। अयमर्थः – शत्रवे क्रुध्यति, शत्रवे द्रुह्यतीत्यनयोः शत्रुं हन्तुमिच्छति शत्रोरपकर्तुमिच्छ-तीत्यर्थः। तयोर्ज्ञानादिवत्सविषयकत्वेन सविषयकधातुस्थले विषयतायाः एव फलत्वेन तदाश्रययोर्हन-नापकारयोः कर्मणोर्धात्वर्थोपसंगृहीतत्वेन "धात्वर्थेनोपसंग्रहा" दित्यभियुक्तोक्त्याऽनयोरकर्मत्व-मिति। "हेतुत्वे कर्मसंज्ञाया" मित्यादि हरिकारिकाव्याख्यावसरे हेलाराजस्तु द्रुहेरपि सकर्मकत्वमिच्छति। षष्ठीप्राप्तौ = शेषषष्ठ्याः प्रात्पौ। अस्य चतुर्थीविधिरित्यत्रान्वयः अन्त्यययोश्च = ईर्ष्यत्यसूयत्योस्तु। **चतुर्थीविधिरिति** आद्ययोर्विषयतया तदर्थमूलभूत कोपसम्बन्धिनः शत्रोः षष्ठ्याः अन्त्ययो स्तद्धात्वर्थमूलभूतकोपविषयत्वे सति तद्धात्वर्थफलाश्रयस्य शत्रोः कर्मत्वनिमित्तकद्वितीययाश्च प्राप्तौ तदपवादेनाऽनेन संप्रदानत्वाच्चतुर्थीविधिरिति भावः, तद्बाधेन = षष्ठीद्वितीयाबाधेन। अस्य शेषत्वकर्मत्वोभय बाधकत्वमुपपादयति **यं प्रति कोप इत्यनेनेति** अयं भावः – एषां प्रयोगे यं प्रति कोपः स संप्रदानसंज्ञः स्यादिति सामान्यतः सूत्रार्थस्वीकारेऽपि क्रुधद्रुह्योर्योगे यं प्रति कोपः = यत्सम्बन्धी कोपः इत्यर्थावगमात्तत्र षष्ठीप्राप्त्या तदपवादत्वमस्य। तथा ईर्ष्यत्यसूयतियोगे यं प्रति कोपः = यत्कर्मकः कोपः इत्यर्थावगमात्तत्र द्वितीयाप्राप्त्या तदपवादत्वमस्येति **उपादानादिति** बोधनादित्यर्थः। सूत्रे यमिति तन्त्रेण सम्बन्धार्थकोपपदविभक्त्यन्तम्, कर्मविभक्त्यन्तं चाश्रीयते, तेन प्रकृतार्थसिद्धिरिति भावः। अत एव = शेषत्वकर्मत्वयोरनेन बाधनादेव। अत्र = प्रकृतसूत्रोदाहरणेषु पूर्ववत् = धारेरुत्तमर्णः, स्पृहेरीप्सितः इति सूत्रद्वयोदाहरणेष्विव। द्वितीयान्तादीत्यादि शब्देन षष्ठ्यन्तस्य ग्रहणम्। विवक्षाभेदेन चैत्राय धारयति शतम्, चैत्रस्य शतं धारयति, पुष्पेभ्यः स्पृहयति, पुष्पाणि स्पृहयति पुष्पाणां स्पृहयतीति पूर्वसूत्रविषये द्वितीयान्तषष्ठ्यन्तप्रयोगा अपि साधवः। अत्र तु चतुर्थ्यन्त एव साधुः, न तु द्वितीयान्तषष्ठ्यन्ता अपीति भावः। अपवादत्वादेवाह – **चतुर्थ्यर्थोपीति** स एव = शेषत्वकर्मत्वरूप एव। ननु सूत्रे कोपपदाभावे

यद्विषयकाः क्रोधादयः, स सप्रदानमित्यर्थलाभेन भार्यामीर्ष्यतीत्यादावपि भार्यादीनां संप्रदानत्वापत्तिः, तद्विषयकत्वादीर्ष्यायाः, अत स्तद्वारणाय कोप, इतिपदम्, कृतेपि तस्मिन् भर्तुः कोपसत्वादतिव्याप्तिरेवेत्यत आह – **वास्तव इति** निरुक्तार्थस्वीकारे मान कोपपदग्रहणमेवेत्याह – **कोपपदोपादानादिति** यं प्रतीति सहित तत्पदग्रहणसामार्थ्यादित्यर्थः। तत्पदसत्वे तस्य क्रुधादिविशेषणतया यत्र कोपमूलकाः क्रोधादयः तत्रैवैतत्प्रवृत्तिरित्यर्थलाभेन नातिव्याप्तिः, नात्र भार्यां प्रति कोपः, किन्तु परैर्दृश्यमानां तां न सहत इत्येव, एवं चात्र न कोपजन्येर्ष्या, किं त्वन्यपुरुषदर्शनजन्येति भावः, एतदेव स्पष्टीकृतं, वास्तवो यत्र कोप, इत्यनेन, तदेव दर्शयति **भार्यामीर्ष्यतीति** अस्य तेनेत्यादिः **द्राक्षीदिति** – दृशेः कर्तरि लुङ् "न माङ्योगे" 6-4-74 इत्यडागमस्य निषेधः। वस्तुतस्तु – कोपपदोपादानाद् भार्यामीर्ष्यति, मैना मन्यो द्राक्षीदित्यत्र न चतुर्थी" इति ग्रन्थादनन्तरं "वास्तवो यत्र कोपस्तत्र कर्मत्वादौ चतुर्थीत्यर्थः" इति ग्रन्थस्य पाठः साधीयान्, तत्रैवं व्याख्येयम् – कोपपदस्य फलमाह – **कोपपदेति** ननु सत्यपि तस्मिन् कथं तद्व्यावृत्ति रत आह – **वास्तव इति** अस्यार्थो निरुक्त एव। क्रुधद्रुहधातुयोगे तु भार्यायाः क्रुध्यति द्रुह्यतीति षष्ठ्यन्तं प्रत्युदाहार्यम्। ननु आद्यधातुद्वये षष्ठचपवादत्वम्, अन्त्य धातुद्वये द्वितीयापवादत्वमिति किं भेदेन कथनेन, सर्वत्रापि द्वितीयापवादत्वमेवोच्यताम्, अत एव "पुत्राय क्रुध्यतीत्यत्र, क्रुधद्रुहे" त्यादि सूत्रेण कर्मणः संप्रदानसंज्ञेति तार्किकाः, द्रुह्यादौ तु कर्मसंज्ञा प्रसङ्गः, द्रोहस्यापकारत्वात्तदर्थाः सकर्मकाः" इति हेलाराजश्चेत्यत आह **अत एवेति** आद्यधातुद्वयस्याकर्म–कत्वादेवेत्यर्थः। **कर्मसंज्ञाविधिरिति** अपूर्वतया कर्मसंज्ञाविधानमित्यर्थः। अस्य सङ्गच्छत इति शेषः। अयमर्थः – क्रुधद्रुहोः सकर्मकत्वे हि क्रूरमभिक्रुध्यति क्रूरमभिद्रुह्यतीत्यादौ क्रूरादीनां "कर्तुरीप्सिततमं कर्म" 1-4-49 इति सामान्यसूत्रेणैव कर्मत्वस्य सिद्धत्वात्" क्रुधद्रुहोरूपसृष्टयोः कर्म" 1-4-38 ति पृथक् तद्विधानं व्यर्थं स्यात्। ननु सामान्यसूत्रप्राप्तकर्मत्वबाधनेन "क्रुधद्रुहे" त्यादिना संप्रदानत्वं प्राप्नोति, उपसर्गयोगे तद्बाधनेन प्रतिप्रसवाय पुनः कर्मत्वविधानाय "क्रुधद्रुहोरूपसृष्टयो" रिति सूत्रं चरितार्थमिति चेत्, अत्राहुः – क्रुधद्रुहे त्यस्यानन्तरं संप्रदानत्वबोधकं 'क्रुधद्रुहोरनुपसृष्टयोः' इति सूत्रं भवतु, पूर्वसूत्रेणैवात्रापि संप्रदानत्वसिध्यानियमार्थं भविष्यति – क्रुधद्रुहोरनुपसृस्टयोरेव कारकं संप्रदान - मिति। यद्वा क्रुधद्रुहोरनुपसृष्टयोर्न" इति संप्रदानत्व निषेधकं सूत्रं भवतु। एवं च सोपसर्गयोः संप्रदानत्वाप्राप्यानिरपवादं सामान्यसूत्रेणैव क्रूरमभिक्रुध्यतीत्यादौ कर्मत्वसिद्धौ संप्रदानप्रकरणबाधनेन कर्मसंज्ञाविधाने निर्दलतापत्या क्रुधद्रुहोरूपसृष्टयोः कर्म" तिसूत्रप्रणयनान्यथानुपपत्या क्रुधद्रुहो रकर्मकत्वं भगवतः पाणिनेः सूत्रकारस्य संमतमित्यवश्यमवसीयते, एतद्विरोधा न्नैयायिकोक्ति र्हेलाराजोक्तिश्चानादेयैव, अत एव हरदत्तादयः सर्वेऽपि शाब्दिका अनयो रकर्मकत्व माशेरते-इति

**एवं "राधीक्ष्योर्यस्य विप्रश्नः" 1-4-39 इत्यनेन एतयोर्योगे विविधप्रश्नसंबन्धी संप्रदानसंज्ञः स्यादित्यर्थकेन 'कृष्णाय राध्यति ईक्षते वा' इत्यत्र चतुर्थी। विविधं पृष्टोगर्गः कृष्णसंबन्धि शुभाशुभं पर्यालोचयतीत्यर्थः। अत एव संबन्धित्वं चतुर्थ्यर्थः।**

तादृशं शास्त्रान्तरं व्याचष्टे – **एवं राधीक्ष्योरिति** राध संसिद्धौ ईक्ष दर्शने, तयोरिकानिर्देशः, राधिश्च ईक्षिश्च राधीक्षी तयोः राधीक्ष्योः। प्रकृते लक्षणया प्रश्नविषयशुभाशुभपर्यालोचनं धात्वोरर्थः। शुभाशुभरूपस्य कर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वं तयोः। अत एवोदाहरणे राध्यतीति श्यन् विकरणप्रत्ययः, अन्यथा स न स्यात्। "राधोऽकर्मकादेवे" ति नियमात्। तदाह **एतयोरिति** विरुद्धः प्रश्न इत्यर्थभ्रमवारणायाह **विविधप्रश्नेति** कियत् शुभकर्म कियदशुभकर्म, कियज्जीवितम्, कियद्धनमित्यादि विविधप्रश्नेत्यर्थः, यस्येत्यस्यार्थमाह – **संबन्धीति गर्ग इति** यादवानां गुरु गर्गमहर्षिः। कृष्णः, तज्जनको वसुदेवो वा गर्गमपृच्छत् तथा पृष्टो गर्गो ग्रहान् दृष्ट्वा तदीयं शुभाशुभं पर्यालोचयतीत्यर्थः। **अत एवेति** शुभाशुभपर्यालोचनपर्यन्तं धातो र्लक्षणास्वीकारादेवेत्यर्थः। चतुर्थ्यर्थ = लक्षणया, अत्रैव तात्पर्यग्राहकमिदं सूत्रम्।

''क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः'' 1-4-37 इति सूत्राद् 'यं प्रति' त्यस्यानुवृत्त्यैव सिद्धेऽत्र सूत्रे यस्य ग्रहण मनर्थकमिति हरदत्तादयः।

**एवं ''प्रत्याङ्भ्यां श्रुवः पूर्वस्यकर्ता'' 1-4-40 इत्यनुशासना वाभ्या मुपसर्गाभ्यां परस्य शृणोतेर्योगे पूर्वस्य = प्रवर्तनारूपव्यापारस्य, कर्ता संप्रदानसंज्ञः स्यादित्यर्थकाद् 'विप्राय गां प्रतिशृणोति आशृणोति वेत्यत्र चतुर्थी। प्रवर्तनापूर्वकोभ्युपगमो धात्वर्थः। वृत्तित्वं चतुर्थ्यर्थः। सच स्वाश्रयप्रवर्तनाजन्याभ्युपगमानुकूलत्वसंसर्गेण कृतावन्वेति। चैत्रनिष्ठप्रवर्तनाप्रवर्तितः प्रतिजानीत इत्यर्थः।**

तादृशमनुशासनान्तरं व्याचष्टे — **एवं प्रत्याङ्भ्यामिति** — शृणोतेः = श्रु श्रवणे इति धातोः। पूर्वशब्दार्थो व्यापारः, स च प्रेरणारूप इत्याह — **प्रवर्तनारूपव्यापारस्येति** दिदापयिषा व्यञ्जकस्य 'मह्यं देहीत्यभिलापरूपस्य व्यापारस्येत्यर्थः। कर्ता = आश्रयः, प्रेरकः प्रतिग्रहीता। एवं चात्र प्रयोजकत्वाद्धेतुत्वे प्राप्ते तद्बाधनेन संप्रदानत्वमनेन विधीयत इति बोध्यम्। सूत्रे 'प्रत्याङ्भ्या' मिति द्विवचननिर्देशात्प्रत्येकं धातोरुपसर्ग संबन्ध इत्याशयेनोदाहरति — **प्रतिश्रृणोति — आश्रृणोतीति** धनिकः कश्चिद्धर्मबुध्द्या गां दास्यतीति श्रुत्वा तामपेक्षमाणो विप्रस्तमुपसृत्य तां गां मह्यं देही' ति याचते, सैव प्रवर्तना, तच्छ्रुत्वा दातुमनाः स तथैव ददामीति प्रतिज्ञां करोतीति उदाहरणवाक्यार्थः। ननु श्रवणार्थकश्रुधातुप्रयोगे कथमीदृशार्थलाभोऽत आह — **प्रवर्तनेति** प्रवर्तना = प्रतिग्रहीतुः, अभ्युपगमो = दातुः, कृतौ = आख्यातार्थे। **चैत्रनिष्ठेति** चैत्ररूपविप्रनिष्ठेत्यर्थः, प्रतिजानीते = तुभ्यमवश्यं ददामीति प्रतिज्ञां करोति। याचमानस्यानेन संप्रदानत्वम्।।

**एवम् ''अनुप्रतिगृणश्च'' 1-4-41 इत्यनेनाभ्यां परस्य गृणातेर्योगे पूर्वव्यापारस्य कर्तृभूतकारकं संप्रदानसंज्ञं स्यादित्यर्थकेन होत्रेऽनुगृणाति प्रतिगृणाति वा इत्यत्र चतुर्थी। शंसनपूर्वकप्रोत्साहनं धात्वर्थः। वृत्तित्वरूपः संबन्धः कर्मत्वं च चतुर्थ्यर्थः। तयोश्च क्रमेण शंसन-प्रोत्साहनद्वारको भावनान्वयः। होता प्रथमं शंसति, त मध्वर्युः प्रोत्साहयतीत्यर्थः।**

तादृशमनुशासनान्तरं व्याचष्टे — **एवमनुप्रतीति** सूत्रे गॄ शब्दे इति धातोः क्रैयादिकस्य श्नाप्रत्ययान्तस्यानुकरणम् गृणा इति। तेन गॄ निगरणे इति तौदादिकस्य न ग्रहणम्। अनुश्च प्रतिश्च = अनुप्रती, अनुप्रतिभ्यां गृणाः = अनुप्रतिगृणाः, तस्य अनुप्रतिगृणः, यदि तु उपसर्गस्य धातुना समासो नेष्यते, **तर्हि** अनु प्रति इति भिन्ने पदे लुप्तपञ्चम्यन्ते, इत्याशयेनाह — **आभ्यां परस्येति गृणातेरिति** गॄ शब्दे इति क्र्यादिगणपठितस्येत्यर्थः। ''प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता'' इति सूत्रात् पूर्वस्य कर्तेत्यनुवर्तते इत्याह — **पूर्वव्यापारस्य कर्तृभूतेति** शस्त्रशंसरूपव्यापारस्य कर्ता होतेत्यर्थः। पूर्वसूत्रसाहचर्यादत्रापि उपसर्गयोः प्रत्येकं निमित्तत्वमित्याशयेनोदाहरति **अनुगृणाति प्रतिगृणातीति** प्रकृतोपयुक्तमर्थमाह — **शंसनेति** इन्द्रादिदेवतानिष्ठगुणकीर्तनरूपशस्त्राख्यमन्त्रकथनं शंसनं, तत्र कर्तृत्वं होतुः, ''ओथामोदैव'' इत्यादि शब्दोच्चारणमध्वर्योः प्रोत्साहनम्। शों सा मोद इव इति प्रत्याह्वयते, इति तैत्तिरीयसंहितायाम् 3-2-8 'ओ था मोदैव'' शतपथ ब्राह्मणे 4.3.2-12। तेन होतुरत्यन्तं हर्षो जायते **धात्वर्थ इति** अत्र च अनुगरः प्रतिगर इति व्यवहारो मूलम्। अनुगीर्यते = प्रोत्साह्यते येन शब्देन सः = अनुगरः एवं प्रतिगरः। हर्षरूपस्य शंसनरूपस्य वा धात्वर्थफलस्याश्रयत्वाच्छंसितु र्होतुः कर्मत्वम् तदाह — **कर्मत्वं चेति** एवं च तन्मूलकद्वितीया बाधनेन चतुर्थीसिद्धये सूत्रमिदमिति बोध्यम्।

**एवं ''परिक्रयणे संप्रदान मन्यतरस्याम्'' 1-4-44 इत्यनेन यन्नियतकालं भृत्या स्वीकरणं =**

**परिक्रयणं-तस्मिन् साधकतमं कारकं विकल्पेन संप्रदानसंज्ञं स्यादित्यर्थकेन 'शताय शतेन वा परिक्रीतः' इत्यत्र विकल्पेन चतुर्थी। करणत्वं चतुर्थ्यर्थः।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं परिक्रयणे इति** सूत्रे परिक्रीतिः परिक्रयणम् भावल्युडन्तम्, धनाद्यर्पणेनाऽऽत्यन्तिकस्वीकरणं क्रयणम्, क्रयणस्य समीपं = परिक्रयणम्। तच्च नियतकालं स्वीकरणम्, तत् आत्यन्तिकक्रयस्य संनिहितम्, क्रयणाद् न्यूनत्वात्, तथा च तुभ्य मेतावद्वेतनं दीयते, तद् गृह्णन् एतावन्तं कालं त्वं मम कर्मकरो भवे' ति नियम्यते। तेन परिमितकालं भृत्या स्वीकरणं परिक्रयणमिति लभ्यते। तदाह – **यन्नियतकालमिति** नात्यन्तिकः क्रय एवेति भावः। भृत्या = वेतनेन, "साधकतमं करण" 1-4-42 मिति सूत्रात्साधकतममित्यनुवर्तत इत्याह – **साधकतममिति** तथाच "साधकतमं करण" मित्यनेन करणसंज्ञायां प्राप्तायामनेन पक्षे संप्रदानसंज्ञा विधीयत इति भावः। **विकल्पेनेति** पक्षे करणसंज्ञा बोध्या। **चतुर्थ्यर्थ इति** चतुर्थ्यामपि वस्तुतः शतस्य करणत्वात्तदेव विभक्त्यर्थ इति भावः।

**एवं "तादर्थ्ये चतुर्थी वाच्या" इति वार्तिका दुपकारकापकारकसाधारणं तदुद्देश्यकत्वं लक्षणया चतुर्थ्यर्थः मुक्तये हरिं भजति, मशकायधूम इत्यादौ। तच्च जनकत्वादिना नेकप्रकारेण। तेन 'ब्राह्मणाय दधितिष्ठती' त्यादावपि द्रव्यद्वारकक्रियासंबन्धेपि चतुर्थी। अत एव "क्रियाग्रहणं कर्तव्य" मित्यनेनापि न गतार्थत्वम्।**

तादृशं कात्यायनवचनं व्याचष्टे – **एवं तादर्थ्ये इति** वार्तिकात् = "चतुर्थीसंप्रदाने" 2-3-13 तिसूत्रस्थात्। वार्तिके तस्मै इदं तदर्थमिति तत्पुरुषः। तच्छब्द उपकार्यापकार्यवाची, इदमर्थ उपकारकः, अपकारकश्च। तदर्थस्य भावः = तादर्थ्यम्, उपकार्योपकारकापकारसम्बन्धस्तादर्थ्यशब्दार्थः, तदाह **उपकारकेति** इदं लाक्षणिकानुशासनमित्याह – **लक्षणयेति** उपकारविषये उदाहरति **मुक्तये इति** मुक्त्युद्देश्यिका हरिकर्मिका भजनकृति र्वाक्यार्थः। अपकारकत्वं चतुर्थी – १) नाशकत्वम् – तापायोशीरम्, विषाय सुधा। २) अपचायकत्वम् – दन्तिने नवबन्धः, जलाशयेभ्य उष्णोपगमः। ३) अनुत्पादकत्वम् – दाहाय मणिः, नरकाय दीपदानम्। ४) दुःखजनकत्वम् तदुदाहरति – **मशकायधूम इति** आदिना मृगेभ्यो वागुरा इत्यादेर्ग्रहणम्, तच्च = उद्देश्यकत्वं च **जनकत्वादिनेति** पटाय तन्तवः, घटाय मृदित्यादौ। **अनेकप्रकारेणेति** साक्षात्परम्परयाचेत्यर्थः। साक्षात्तदुद्देश्यकत्वे उदाहृतमेव **तेनेति** परम्परया तदुद्देश्यकत्वस्वीकारेणेत्यर्थः। **द्रव्यद्वारकेति** दधिरूपद्रव्यद्वारकेत्यर्थः। एवं च दधिरूपद्रव्यद्वारकस्थितिक्रियासम्बन्धो ब्राह्मणस्य, तथा च क्रियाया द्रव्यद्वारा ब्राह्मणोद्देश्यकत्वात्तादर्थ्ये सिद्धा चतुर्थी। ननु क्रियासम्बन्धस्वीकारे 'क्रियाग्रहणं कर्तव्य' मिति वार्तिकेनैव संप्रदानत्वाच्चतुर्थ्याः सिद्धात्वात्तादर्थ्यचतुर्थ्या नेदमुदाहरणमत आह – **अत एवेति** द्रव्यद्वारकसम्बन्धस्वीकारादेवेत्यर्थः। पत्ये शेते इत्यादाविवात्र ब्राह्मणादेः साक्षात्क्रियासम्बन्धाभावान्न तेन वार्तिकेनात्र गतार्थतेति भावः, यदि तु ब्राह्मणाय दधीत्यत्र ब्राह्मणकर्तृक भोजनोपकारकत्वेन दध्नो ब्रह्मणोपकारकत्वं विवक्ष्यते, तदा 'क्रियाग्रहण' मिति वार्तिकस्य प्रवृत्तिरेव नेति बोध्यम्।

**एवं "क्लृपिसंपद्यमाने च" इत्यनेन प्रकृतिरूपं कारणं कार्यात्मना यदासंपद्यते, तदा कार्यवाचका च्चतुर्थी स्यात् क्लृप्त्यर्थकधातुयोगे। "मृद् घटाय कल्पते, संपद्यते, जायते वे"त्यादौ। मृद् घटाकारेण परिणमत इत्यर्थः। इदं च कार्यकारणयो र्भेदविवक्षायाम्। पार्ष्टिका भेदविवक्षायां मृद् घटः कल्पते इति प्रथमैव, "जनिकर्तुः प्रकृतिः" 1-4-30 इत्यनेन मृदोऽपादानत्वविवक्षायां तु मृदो**

**घटः कल्पते इत्यत्र कारणे पञ्चमी। कार्येत्वभिहितत्वात्प्रथमैव। न च 'तादर्थ्ये चतुर्थी'' त्यनेन गतार्थत्वम्। परिणामत्वेन बोधस्य विवक्षितत्वात्, एवमग्रेपि।**

तादृशं वार्तिकान्तरं व्याचष्टे — **एवं क्लृपीति** च शब्दरहितं वार्तिकम्। व्याख्यातृभिश्चशब्दः संयोजितः। वार्तिके क्लृपीति सप्तम्यन्तम् , तस्य च परिणामोऽर्थः, स च रूपान्तरप्राप्तिः। क्लृपीति चार्थपरं व्याख्यानात्। संपूर्वकपदधातो रभूतप्रादुर्भावरूपोत्पत्तिरर्थः, ततः कर्तरि लटः शानजादेशः। दिवादित्वात् श्यन् विकरणः, संपत्तिकर्तेत्यर्थः। तथा च क्लप्त्यर्थक धातुयोगे अभूतप्रादुर्भावकर्तृवाचकात्प्रातिपदिकाच्चतुर्थीति वार्तिकार्थः। सा च संपद्यमाने इत्युक्त्या विकारवाचकाद्भवति, स च विकारः कारणस्य रूपान्तरमेव, एवं च कारणस्य कार्यात्मना विपरिणामे विकारवाचकाच्चतुर्थीति वार्तिकार्थः फलति, तदेतदाह — **प्रकृतिरूपं कारणमिति** यदा = यत्र, संपद्यते = अभूतरूपेण भवति, तदा = तत्र, संपद्यमाने इति पदलब्धमाह — **कार्यवाचकादिति** वार्तिके क्लृपीत्येतदर्थपरमित्याशयेनोदाहरति **संपद्यते जायते इति** उदाहरणवाक्यार्थं दर्शयति **मृद्घटाकारेणेति** एवं च कारणवाचकसमानाधिकरणात्कार्यवाचकादपि प्रथमा प्राप्ता, तद्बाधनेन चतुर्थी अनेन विधीयत इति बोध्यम्, प्रयोगव्यवस्थां दर्शयति **इदञ्चेति** चतुर्थ्यन्तरूपमित्यर्थः। भेदविवक्षायामित्यनेन सूचितमर्थान्तरमाह **पार्ष्टिकेति** स्वमते सर्वेषामपि पदार्थानां भावनान्वयनियमेन नामार्थानामभेदः पाश्चात्यबोधविषय एवेत्याशयेन, पार्ष्टिके त्युक्तम्। कल्पते = भवति कल्पते रुत्पत्त्यर्थकत्वे आह — **अनिकर्तुरिति** ननु विकारवाचकात्प्रकृतवार्तिकेन चतुर्थी कुतो नेत्यत आह — **कार्येत्विति** घटस्य कर्तृत्वेन ''उपपदविभक्तेः कारकविभक्तिर्बलीयसी'' तिन्यायेनोपपदविभक्तिं चतुर्थी बाधित्वा प्रथमैव भवतीत्याशयः। कर्तरि तृतीयां वारयति **अभिहितत्वादिति** तिङ्निपातान्यतराभिहितकर्तृत्वं प्रथमाप्रयोजकमित्युक्तं प्राक्। **प्रथमैवेति** एवशब्देन चतुर्थ्या व्यावृत्तिः। ननु मृदादीनां घटाद्यर्थत्वेन यूपाय दार्वित्यादाविवात्रापि तादर्थ्यचतुर्थ्या सिद्धे वार्तिकमिदं व्यर्थमित्याशयेन शङ्कते — **न चेति** समाधत्ते **परिणामत्वेनेति** तदर्थत्वेनरूपेण बोधे तद्वार्तिकेन चतुर्थी, परिणामत्वेनरूपेण बोधे तेन सा न सिध्यति। अतो वार्तिकमिदमावश्यकमेवेति भावः, मूत्राय कल्पते यवागूरित्यादौ भाष्योदाहृते यवाग्वा मूत्रार्थत्वाभावान्नतादर्थ्यचतुर्थ्या गतार्थतेत्यपि बोध्यम्, अग्रिमेपि = वाताय कपिला विद्युदित्यादावपि।

**तथा ''उत्पातेन ज्ञापिते च'' इत्यनेन उत्पातेन ज्ञापनविषये चतुर्थीत्यर्थकेन 'वाताय कपिला विद्यु द्विद्योतते' इत्यत्र चतुर्थी। तत्त्वेन ज्ञापकत्वं चतुर्थ्यर्थः।**

तादृशं वार्तिकान्तरं व्याचष्टे — **एवमुत्पातेनेति** अत्रापि चशब्दो व्याख्यातृभिर्योजितः। प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः, तेन ज्ञापितेऽर्थे वर्तमानात्प्रातिपदिकाच्चतुर्थीति वार्तिकार्थः। ''उत्पातेन ज्ञाप्यमाने'' इति कात्यायनेन पठितम्, ज्ञाधातोर्ण्यन्तात्कर्मणि 'लटः शानाजादेशः' तत्र शानजर्थो वर्तमानकालो न विवक्षित इत्याशयेन कात्यायनवचनं 'उत्पातेन ज्ञापिते' इत्यानुपूर्व्या व्याख्यातृभिः प्रदर्श्यते, तदाह — **ज्ञापनविषये इति** तत्र वर्तमानत्प्रातिपदिकादित्यर्थः। **विद्युदिति** अयं पद्यैकदेशः, आतपायातिलोहिनी, पीता वर्षाय ''विज्ञेया दुर्भिक्षाय सिता भवे'' दिति तच्छेषः। उत्पातविशेषाश्च मयूरचित्रकादिग्रन्थेषु विस्तरेण निरूपिताः, ते तत एव ज्ञातव्याः, तादर्थ्यचतुर्थ्याऽन्यथासिद्धिं निराकुरुते **तत्त्वेनेति** उत्पातत्वेनेत्यर्थः **ज्ञापकत्वमिति** वातरूपज्ञाप्यज्ञापिका विद्युदित्यर्थः।।

**एवं हितसुखादियोगेपि चतुर्थी, ब्राह्मणाय हितं, सुखं वेत्यादौ। इदं च तद्योगे चतुर्थीसमासविधानरूपज्ञापकवशात्सिद्धम्। संबन्धित्वं चतुर्थ्यर्थः।**

तादृशं वार्तिकसिद्धमर्थमाह **एवं हितसुखेति** 'चतुर्थीसंप्रदान' 2-3-13 इति सूत्रे 'हितयोगे चे' ति चशब्दसहितं वार्तिकम्। तत्र चशब्देन सुखशब्दस्य ग्रहणम्। तेन प्रकृतार्थसिद्धिः, आदिपदं संपातायातम्, इष्टसाधनं हितशब्दार्थः, ब्राह्मणसंबन्धीष्टसाधनमित्यर्थः, एवं च शेषे षष्ठ्या अपवाद इयं चतुर्थीति बोध्यम्, नेदमपूर्ववार्तिकं, किन्तु सूत्रसिद्धार्थानुवादरूपमेवेत्याह **इदं चेति** वार्तिकनिष्पन्नं वस्त्वित्यर्थः। तद्योगे = हितसुखशब्दयोगे **चतुर्थीसमासेति** "चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः" 2-1-36 इति चतुर्थीसमासविधायकरूपात् ज्ञापकादित्यर्थः, गो हितम् गो सुखमित्यादौ चतुर्थ्यन्तस्य हितसुखशब्द-प्रकृतिकसुबन्तेन निरुक्तसूत्रेण चतुर्थीसमासो विधीयते, तद्योगे सूत्रकृता चतुर्थी न विहिता। तथा च तद्योगे चतुर्थीविधायकशास्त्रान्तरानुपलम्भा दिदमेव समासविधानं तद्योगे चतुर्थीप्रवृत्तौ प्रमाणं भवितुमर्हतीति भावः। **सिद्धमिति** तथा च वार्तिकमिदं सूत्रसिद्धार्थानुवादरूपमेव नापूर्वमिति भावः, तादर्थ्यचतुर्थ्या नेदं गतार्थमित्याह — **संबन्धित्वमिति**।

**एवं "क्रियार्थोपपदस्यच कर्मणि स्थानिनः" 2-3-14 इत्यनेन क्रियार्थक्रियावाचि उपपदं यस्य तस्य = तुमुनुण्वुलूरूपस्य स्थानिनःअप्रयुज्यमानस्य कर्मणि चतुर्थीस्या दित्यर्थकेन 'फलेभ्यो याति, नमस्कुर्मो नृसिंहाये' त्यादौ चतुर्थी। फलान्याहर्तुं, नृसिंह मनुकूलयितुमित्यर्थः। इदंच तु मुन्नन्तस्या प्रयोगे। ण्वुलन्तस्याप्रयोगेतु फलान्याहारक इत्यर्थः। द्वितीयापवादार्थं कर्मग्रहणम्। प्रयुज्यमानेतु द्वितीयैव। अत्र प्रयुज्यमानाहरणनिरूपितं कर्मत्वं चतुर्थ्यर्थः। तस्य च स्वनिरूपकाहरण क्रियोद्देश्यकयानानुकूलत्वं कृतौ संसर्गः। संसर्गकोटिप्रविष्टत्वादेवचा-हरणस्या शाब्दत्वेपि न क्षतिः।**

तादृशं पाणिनीय मनुशासनान्तरं व्याचष्टे — **एवं क्रियार्थेति** क्रिया अर्थः = फलं यस्य तत् क्रियार्थम्। उपपदं विशेष्यम्। तदनुरोधात् क्रियार्थशब्दस्तद्वाचकपरः, सोर्थश्च प्रत्यासत्या क्रियारूप एव। क्रियार्थ = क्रियाफलकार्थवाचकम्, उपपदं यस्य तत् क्रियार्थोपपदं, तस्य। तादृशमुपपदं क्रियावाचकमेव, "तुमुनृण्वलौ क्रियायां क्रियार्थायाम्" 3-3-10 इति सूत्रेण तादृशस्यैवोपपदसंज्ञाविधानलाभात्। तथा च तत्सूत्रविहिततुमुन्नन्तण्वुलन्तयोरेवात्र क्रियार्थोपपदस्येत्यनेन ग्रहणम्। तादृशस्या प्रयुज्यमानस्य यत्कर्म तत्र द्वितीयाबाधनेनानेन चतुर्थी विधीयते, फलाहरणं प्रधानक्रिया, तदर्था यानक्रिया तद्वाचकमुपपदं यातीति, तत्र सति, 'तुमूनृण्वुला' वित्यनेन आङ्पूर्वक हृधातो स्तुमुन् ण्वुल् च। आहर्तु, माहारक इति रूपे तयोरप्रयोगे कर्मणि फलेऽनेन चतुर्थी। फलेभ्यो यातीति, तदेतत्सर्वमभिप्रेत्याह — **क्रियार्थेति** सूत्रस्थ क्रियार्थशब्दो लक्षणया तद्वाचकपर इत्याह — **क्रियावाचीति** स चार्थोऽपि क्रियारूप एवेत्याशयः। तस्यचोपपदशब्देन बहुव्रीहिरित्याह — **उपपदं यस्येति** तस्य = तादृशस्य प्रधानाहरणक्रियाफलकयान-क्रियाबोधकमुपपदं — यातीति, तद्वत् आङ्पूर्वकहृञ्धातुरूपम्, तादृशं च "तुमुनृण्वुला" वितिसूत्रविहित तुमुन्नन्तण्वुलन्तरूपमेव संभवतीत्याह — **तुमुनृण्वुलरूपस्येति** तदन्तरूपस्येत्यर्थः। "यत्र गम्यते चार्थो न चप्रयुज्यते शब्दः, स स्थानी" ति वैयाकरणनिकायप्रसिद्धि माश्रित्य स्थानिशब्दार्थमाह — **स्थानिनः अप्रयुज्यमानस्येति** स चाप्रयोगो न शास्त्रकृतः, किंतु प्रयोक्तुरिच्छाधीनः, प्रयोगलाघवपेक्षस्तदप्रयोगः लाघवानादरे तु तत्प्रयोगः। **फलेभ्य इति** गृहेतिष्ठत श्चैत्रस्य फलान्यपेक्षितानि, तत्संपादिकाऽऽहरण-क्रिया सा च यानं विनाऽनुपपन्नासती यानक्रियामपेक्षते, तादृशयानक्रियाबोधके यतीत्यस्मिन्नुपपदे आङ्पूर्वकाद्धरतेस्तुमुन्, ण्वुल् च। तस्याप्रयोगात्तत्कर्मणि चतुर्थीति भावः। तुमुन्नन्तं प्रयोगार्हं प्रदर्शयति **आहर्तुमिति** इदं च = निरुक्तोदाहरणद्वयंच, तुमुन्नन्तस्य = 'तुमुनृण्वुला' विति विहिततमुन्नन्तस्य, अय च तुमुन् भावे। ण्वुलन्तस्य = तत्सूत्रविहित ण्वुलन्तस्य, अयं ण्वुल् कर्तरि, अस्यापि 'फलेभ्यो याती' त्येवोदाहरणम्

तद्भेदश्च चतुर्थीविषये विवरणवाक्यादवसेयः। **फलान्याहारक इति** चतुर्थी विधानस्य फलमाह – **द्वितीयापवादार्थमिति** तुमुन्नन्तस्य प्रयोग इव तदप्रयोगेपि गम्यमानक्रियामादाय द्वितीया प्राप्ता, तद्बाधनार्थमित्यर्थः। कर्मग्रहणम् = कर्मणि चतुर्थीविधानम्। कर्मग्रहणस्य प्रयोजनं तु फलेभ्यो याति शकटेनेत्यादौ करणादौ चतुर्थी वारणं बोध्यम्। यदि तु "मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्" इति न्यायेन द्वितीयामेव इयं चतुर्थी बाधिष्यते न करण तृतीयामित्युच्यते, तदा ब्राह्मणस्य फलेभ्यो यातीति प्रत्युदाहार्यम्। कर्मग्रहणाभावे इतरोपपदविभक्ति वदियमपि शेषविषयैव स्यादिति बोध्यम्। स्थानिन इत्यस्य प्रयोजनमाह – **प्रयुज्यमानेत्विति** आहर्तुम् आहारक इत्यादौ प्रयुज्यमानेत्वित्यर्थः **द्वितीयैवेति** फलान्याहर्तु याति, फलान्याहारको यातीति द्वितीयान्तप्रयोग एव साधुरिति भावः। कर्मत्वे प्राप्तद्वितीयाबाधनेन विहितायाश्चतुर्थ्या अपि कर्मत्वमेवार्थः, तच्च कर्मत्वमाहरणादिक्रियानिरूपित-मित्याह – **अत्रेति** एतत्सूत्रोदाहरणेष्वित्यर्थः। गम्यमानक्रियापेक्ष मत्रकर्मत्वमित्याह – **अप्रयुज्यमानेति** आहरणस्यापदार्थत्वात्कथं शाब्दे भानमित्याशङ्कां परिहरति – **संसर्गेति**।

**एवं "तुमर्थाच्च भाववचनात्" 2-3-15 इति सूत्रेण "भाववचनाश्च" 3-3-1(1) इति सूत्रेण विहितो यस्तुमुना समानार्थकः प्रत्यय, स्तदन्ता च्चतुर्थी स्यादित्यर्थकेन 'यागाय याती' त्यादौ चतुर्थी। यष्टुं यातीति तदर्थः। स च प्रकृते घञ्। नच "तादर्थ्येचतुर्थी" त्यनेन गतार्थत्वम्। तुमुनेव तादर्थ्यस्यापि घञोक्ततया साधुत्वार्थं प्रथमातिक्रमणे कारणाभावेन प्रथमाप्राप्तौ चतुर्थीविधिसार्थक्यात्। नच शुद्धभाव एव घञं व्युत्पाद्य तादर्थ्यचतुर्थ्युपपत्ते "र्भाववचनाश्चे" 3-3-11 तिसूत्रवैयर्थ्यम्। क्रियार्थायां क्रियायां विशेषविहितेन तुमुना घञो बाधापत्ते स्तदन्तोपरि तादर्थ्यचतुर्थ्यप्रसक्तेः। अत स्तद्बाधनार्थं घञादेरपि तदर्थे विधाने कृते प्रथमाबाधार्थं चतुर्थीविधिसार्थक्यात्।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं तुमर्थाच्चेति** सूत्रे तुम्शब्देन तदर्थो लक्ष्यते, तुम् = तुमर्थः, अर्थो यस्य सः = तुमर्थः, तस्मात्। तुमुनो योऽर्थः तदर्थकप्रत्ययान्तादित्यर्थः, 'अव्ययकृतो भावे' इति कात्यायनस्मरणात्तुमुनो भावोऽर्थः। एवं हि तुमुनोभाववाचित्वाव्यभिचारा त्पुनरतिरिच्यमानं भाववचना, दिति पदं स्वरितत्वप्रतिज्ञया "भाववचनाश्चे" 3-3-11 ति सूत्रपरिग्रहार्थ मित्याशयेनाह **भाववचनाश्चेति सूत्रेणेति** 'भावे' 3-3-18 इत्यधिकारे ये प्रत्ययाः विधीयन्ते घञ् अच् अप् क्तिन् प्रभृतयः, ते क्रियार्थायां क्रियायामुपपदे भविष्यति स्युरिति तत्सूत्रार्थः। अत्र 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायां' 3-3-10 मित्यतः क्रियार्थायां क्रियायामित्यनुवर्तते पाकः जयः लवः भरः भूतिरित्यादीन्युदाहरणानि। तुमर्थादित्येतद्विवृणोति **तुमुना समानार्थक इति** प्रत्ययः = घञ् अप् अच् इत्यादि प्रत्ययः। **यागायेति** यज धातोः 'भावे' 3-3-18 इत्यनेन घञ्, स च "भाववचनाश्चे" 3-3-11 तिसूत्रेण क्रियार्थायां क्रियायां यातीत्येतस्मिन्नुपपदे दर्शितः, आदिपदेन जयाय याति भूतये यातीत्यादेर्ग्रहणम्। 'भाववचनाश्चे' त्यत्र क्रियार्थायां क्रियायामित्यनुवृत्तेराह – **यष्टुमिति** भविष्यद्यागफलकं यानमिति बोधः। क्रियार्थकक्रियाया अभावे तु शुद्धभाव एव घञादेरर्थः, तत्र नेयं चतुर्थी, भाववचनादिति वचनात्, किंतु यथायथं प्रवर्तते विभक्तिः, यागो भवति, यागं करोति, यागेन तृप्तः, यागान्निवर्तते यागस्य द्रव्यम्। ननु यानस्य यागार्थतया यूपाय दार्वित्यादाविव यागाय यातीत्यादावपि तादर्थ्ये चतुर्थ्याः सिद्धत्वात्सूत्रमिदं व्यर्थमिति शङ्कते – **नचेति** गतार्थत्वम् प्रकृतसूत्रस्य। समाधत्ते – **तुमुनेवेति** तुमुन उद्देश्यत्वलक्षणतादर्थ्यद्योतकत्वमिति सर्वसमतत्वा दंतद्दृष्टान्तोपन्यासः। **घञोक्ततयेति** तुमुनस्तदर्थकत्वे तदपवादभूतस्य घञादेरपि तदर्थकत्वेन तेन तादर्थ्यस्योक्तत्वेन "उक्तार्थानामप्रयोग" इति न्यायेन तादर्थ्यचतुर्थी न प्रवर्तत इति भावः। ततः किमायात?

मत आह — **साधुत्वार्थमिति** "न केवला प्रकृतिः प्रयोक्तव्या" इति नियमेन प्रत्ययं विना केवलप्रकृतेः प्रयोगानर्हतया तत्प्रयोगसंपत्तये विभक्तिरपेक्ष्यतं इति भावः। तर्हि का विभक्तिः स्यात् इत्यत आह **प्रथमातिक्रमे इति** विभक्तीनां मध्ये प्रथमायाः प्रथमत उपात्तत्वात्सैव प्रवर्तते, तावता न केवला प्रकृतिरिति नियमः पालितो भवतीति भावः। तथाप्राप्तप्रथमाबाधनेन चतुर्थी विधानाय प्रकृतसूत्रमारब्धमित्याह — **चतुर्थीविधीति** अयमर्थः — एतत्सूत्रानारम्भे यागाय यातीति चतुर्थी न सिध्द्यति, तादर्थ्यचतुर्थी तु न प्रवर्तते तादर्थ्यस्य घञोक्तत्वात् "उक्तार्थानामप्रयोगः" इति न्यायात्, किंतु प्रथमा प्राप्ता, तद्बाधनेन चतुर्थीविधानाय सूत्रमिदमावश्यक-मिति। मूल एव कुठार इति शङ्कते — **नचेति शुद्धभाव एवेति** क्रियार्थक्रियासम्बन्धमनपेक्ष्य ओदनस्य पाक इत्यादाविव धात्वर्थमात्र एव घञ् विधेय इति भावः। **तादर्थ्यचतुर्थीति** निरुक्तरीत्याश्रयणे घञा तादर्थ्यस्यानुक्ततया 'तादर्थ्ये चतुर्थी' ति वार्तिकेन चतुर्थी उपपद्यत इति भावः। **सूत्रवैयर्थ्यमिति** इदमुपलक्षणं "तुमर्थाच्च भाववचना" दिति चतुर्थीविधायकस्यापि, निरुक्तरीत्या यागाय यातीत्यादेः सिद्धत्वात्क्रियार्थायां क्रियायामुपपदे घञ्विधायकं 'भाववचनाश्चे' 3-3-11 तिसूत्रं, तदुपजीवनेन चतुर्थीविधायकं प्रकृतसूत्रं च नारम्भणीयमेवेति महल्लाघवमिति भावः। समाधत्ते **क्रियार्थायामिति विशेषविहितेनेति** "तुमुन्ण्वुलौ क्रियायां क्रियार्थाया" 3-3-10 मितिसूत्रविहितेनेत्यर्थः, तुमुना = तेन ण्वुला च। घञः = धात्वर्थमात्रे विहितस्य घञादेः। **बाधापत्तेरिति** शुद्धभावमादाय घञादेश्चरितार्थतया क्रियार्थायां क्रियायामुपपदे विधीयमानौ तुमन्ण्वुलौ सामान्यस्य घञादेर्बाधकौ **स्याताम्, तथा च** तावेव प्रवर्तेयाताम् एवं च यष्टुं याजक इत्येव प्रयोगः स्यादिति भावः। याग इति **घञन्तरूपस्यैवासिध्द्या ततस्तादर्थ्य**चतुर्थ्याः प्रसक्तिरेव नास्तीत्याह — **तदन्तोपरीति** याग इत्यादिघञन्तस्योपरीत्यर्थः, **तादर्थ्येति** **याग** इति शब्दस्यैवाभावे एतच्चतुर्थीप्रत्याशैव न कार्येति भावः। एवं च क्रियार्थायां क्रियायामुपपदेपि याग इत्यादीनां सिद्धये "भाववचनश्चे" 3-3-11 तिसूत्रमारब्धव्यम्। तास्मिंश्चारब्धे निरुक्तरीत्या तादर्थ्यचतुर्थ्याः प्रवृत्त्ययोगेन प्रथमायाः प्राप्तौ तद्बाधनेन चतुर्थीविधानाय प्रकृतसूत्रमप्यावश्यकमिति भावः।तदाह **अत इति** तद्बाधार्थम् = क्रियार्थायां क्रियायामुपपदे तुमुन्ण्वुलो र्बाधनार्थम् घञादेरपि = घञ् अच् अप् क्तिन् रूपस्य, तदर्थे = क्रियार्थाया क्रियायाम्। **विधाने कृते** = '**भाववचनाश्चे**' 3-3-11 त्यनेन, प्रथमाबाधनार्थम् = निरुक्तरीत्या प्राप्तप्रथमाबाधानार्थम्। **चतुर्थीविधीति** तुमर्थाच्च भाववचना 2-3-15 दिति प्रकृतचतुर्थीविधायक सूत्रस्य सार्थकत्वादित्यर्थः। तुमर्थात्किम् — पचनं वर्तते, भाववचनात्किम् — पाकः, रागः।

**एवं "नमः स्वस्ति स्वाहा स्वधालंवषड्योगाच्च", 2-3-16 इति शास्त्रेणैभिः शब्दै र्योगे चतुर्थीस्याविस्यर्थकेन 'हरये नम' इत्यादौ चतुर्थी। उद्देश्यत्वं चतुर्थ्यर्थः। तस्य च स्वनिरूपकनमनास्तित्ववैशिष्ट्य माख्यातार्थे संसर्गः। उपपदस्य संसर्गघटकत्वे तात्पर्यग्राह-कत्वा च्चोपपदविभक्तित्वम्। न च तादर्थ्यचतुर्थ्यैव ब्राह्मणायदधीत्यादाविव गतार्थत्वम्, नमः पदप्रयोगे षष्ठीव्यावृत्त्यर्थत्वेन नमनार्थकपदान्तरयोगे वा चतुर्थीव्यावर्तकत्वेन च सार्थक्यात्।**

**यदातु नमनस्यधात्वर्थत्वं, तदा धातोः संसर्गघटकत्वे तात्पर्यग्राहकत्वात्कारकविभक्तित्वेन 'देवान् नमस्करोती' त्यादौ कर्मत्वार्थिका द्वितीयापि नानुपपन्ना। प्रजाभ्यः स्वस्ति, अग्नये स्वाहा, पितृभ्यः स्वधा, दैत्येभ्यो हरि रलम्। पर्याप्त्यर्थकश्चायमलंशब्द उपलक्षणं प्रभुसमर्थशक्तादि-शब्दानाम्। अत एव "तस्मै प्रभवति" 5-1-101 इति प्रयोगः। नत्वत्र षष्ठीव्यावृत्तिः, तेन**

**"प्रभुर्बुभूषुर्भुवनत्रयस्य"**

**इति न विरोधः। वषडिन्द्राय चकारः षष्ठीनिषेधार्थकः**

तादृशं सूत्रान्तरं व्याचष्टे — **एवं नमः स्वस्तीति** सूत्रमिदमुपपदविभक्तिविधायकम्। तदर्थस्यापि **भावनायामेवान्वय इति स्वसिद्धान्तरीत्याह — तस्य चेति** उपपदविभक्त्यर्थस्यापीत्यर्थः। स्वम् = **उद्देश्यत्वम्। ननूपपदविभक्त्यर्थस्यापि भावनायामेवान्वयेऽस्या** अपि कारकविभक्तित्वापत्या "उपपदविभक्तेः **कारकविभक्तिर्बलीयसी**" ति **शाब्दिकपरिभाषाया भङ्गः**, क्रियान्वयनिमित्तिका-**विभक्तिः** कारकविभक्तिः, **समीपस्थक्रियातिरिक्तपदनिमित्तिका** उपपदविभक्तिरिति तैः स्वीकारा, दत आह — **उपपदस्येति नम इत्यादेश्चतुर्थी** विभक्तिनिमित्तस्योपपदस्येत्यर्थः। संसर्गघटकत्वे = चतुर्थ्यर्थस्य आख्यातार्थान्वये यः संसर्ग, स्तद्घटकत्वे इत्यर्थः **तात्पर्यग्राहकत्वाविति** अयमर्थः — उपपदविभक्त्यर्थस्य न क्रियान्वयित्वम्, किंतु **संनिहितानामार्थान्वयित्वमेव**, कारकविभक्त्यर्थस्तु क्रियायामेवान्वेतीति **शाब्दिकोक्तमयक्तम्, सर्वेषामपि पदार्थाना** माख्यातार्थभावनायामन्वयसंभवेन द्वैराश्येनान्वयनियमा-योगत्। उपपदस्य भावनान्वये तस्य संसर्गघटकत्वे तात्पर्यग्राहकत्वे उपपदविभक्तित्वमिति व्यवहारः, एवं **धातोः संसर्गघटकत्वे तात्पर्यग्राहकत्वे** कारकविभक्तित्वमिति व्यवहारः, एतन्मूलिकैव शाब्दिकैरादृता परिभाषे-ति **तादर्थ्यचतुर्थ्यासिद्धे नमश्शब्दयोगे** चतुर्थीविधानं व्यर्थमिति शङ्कते — **नचेति** परम्परासम्बन्धेनोपकारकत्वेपि चतुर्थीप्रवृत्तौ दृष्टान्तमाह — **ब्राह्मणाय दधीत्यादाविवेति** तत्र हि **द्रव्यद्वारकक्रियासम्बन्धेऽपि तादर्थ्यचतुर्थी स्वीकृता, तद्वदत्रापि हरे** भक्तहस्तद्वारकास्तिक्रियासम्बन्धेपि सा सिध्यतीति भावः। समाधत्ते — **नमः पदप्रयोगे इति षष्ठी व्यावृत्त्यर्थत्वेनेति** तादर्थ्यस्य संवन्धत्वेन **विवक्षायां गुरो रिदं = गुर्वर्थमित्यादाविव प्राप्तषष्ठीव्यावर्तनेन चतुर्थीविधानाय** नमः पदमिति भावः। ननु **विवक्षायाः प्रयोगानुसारितया गुर्वर्थमित्यादौ तथाविवक्षा सत्त्वेऽपि** नमश्शब्दयोगे तादर्थ्यस्य संबन्धत्वेन **विवक्षा नास्ति, प्रयोगाभावा दत आह — नमनार्थकेति** तदर्थकस्य प्रह्वभाव इत्यादेः शब्दस्य प्रयोगेपीत्यर्थः। **चतुर्थीव्यावर्तकत्वेनेति** एतत्पदाभावे तादर्थ्ये चतुर्थी प्राप्ता, तद्वारणार्थं नमःपदम्। **नमनार्थकशब्दयोगे तादर्थ्ये यदि चतुर्थी** तर्हि **नमश्शब्दयोग** एवेति अनेन नियम्यत इति भावः। ननु **नमस्करोति देवानित्यादावपि नमश्शब्दयोगेन** चतुर्थीस्यादत आह — **यत्रात्विति** यत्रत्वित्यर्थः। नमस्करोतीत्यादाविति भावः। तदा = तत्र। संसर्गघटकत्वे = नमनादे स्तद्घटकत्वे, **कारकविभक्तित्वेनेति** एतावतैव कारकविभक्तित्वमिति भावः। **कर्मत्वार्थिकेति** तस्य धात्वर्थत्वे धात्वर्थफलशालितया देवानां कर्मत्वादिति भावः। **द्वितीयेति** "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" ति परिभाषया उपपदविभक्तिं चतुर्थी बाधित्वा द्वितीया भवतीति भावः। **नानुपपन्नेति** एवं च नमनस्य धात्वर्थत्वे निरुक्तरीत्या द्वितीयान्तत्वम्, अन्यथा तु चतुर्थ्यन्तत्वमिति व्यवस्थयोभयमपि साध्विति भावः।

**प्रजाभ्यः स्वस्तीति** स्वस्तिशब्दो मङ्गलार्थः। सम्बन्धश्चतुर्थ्यर्थः प्रजासम्बन्धि मङ्गलमिति बोधः। स्वाहास्वधावषट्शब्दा स्त्यागार्थकाः **दैत्येभ्य इति** मारणादिसंबन्धित्वरूपः **सम्बन्धश्चतुर्थ्यर्थः।** अलमाद्यर्थः सामर्थ्यवान्, दैत्यमारणादिसंबन्धिसामर्थ्यवानिति बोधः। ननु अलंकुरुते कन्याम् अल रोदनेनेत्यादावपि अलंशब्दयोगे चतुर्थ्यापत्तिः। किं च प्रभवतिमल्लो मल्लायेत्यादौ **चतुर्थ्यनापत्तिः**, सूत्रे प्रभ्वादिशब्दस्या पाठादत आह — **पर्याप्त्यर्थक इति** तेन अलंकुरुते कन्याम्, अलं रोदनेनेत्यादौ नातिव्याप्तिः। अयं = सूत्रोपात्तः, अव्याप्तिं वारयति **उपलक्षणमिति** अत्र च अलमिति पर्याप्त्यर्थग्रहण मिति प्रकृतसूत्रस्थं वार्तिकं प्रमाणम्। अलमित्यर्थग्रहणं, तत्रापि पर्याप्त्यर्थग्रहणमिति वार्तिकार्थः। **उक्तार्थे** सूत्रकारसंमतिमपि दर्शयति **अत एवेति** प्रभ्वादियोगे चतुर्थ्या इष्टत्वादेवेत्यर्थः। '**तस्मै प्रभवति** सन्तापादिभ्यः' 5-1-10 इति सूत्रम्, सन्तापादिभ्य श्चतुर्थ्यन्तेभ्यः प्रभवतीत्यर्थे ठञ् स्यादिति तदर्थः। संतापाय प्रभवति = सान्तापिकः, संग्रामाय प्रभवति = सांग्रामिको रथः। प्रयोगः = सौत्रः, सङ्गच्छत **इति** शेषः। अन्यथा तद्योगे चतुर्थीविधायकशास्त्रान्तराभावात्तदनुपपत्तिः स्पष्टैवेति बोध्यम्। नन्वेवं प्रभ्वादियोगे षष्ट्यनापत्तिरत आह — **नत्विति** अत्र = प्रभ्वादियोगे, अत्र च 'स एषां ग्रामणीः' 5-2-78 इति

सौत्रोनिर्देशः प्रमाणम्, प्रथमान्तात् एषां ग्रामणीरित्यर्थे कन् स्यादिति सूत्रार्थः। देवदत्तः ग्रामणीः = मख्यः एषां = देवदत्तकाः, एवं त्वत्काः मत्काः तेन = षष्ट्या अनिवर्तनेन, तत्प्रवृत्तिस्वीकारेण। माघकवेः **प्रयोग** दर्शयति – **प्रभुरिति** इति = इति प्रयोगस्य, न विरोधः = न व्याकरणविरोधः। सूत्रे चशब्दं सफलयति – **चकार इति षष्ठीनिषेधार्थक इति** षष्ट्या निषेधः = अप्रवृत्तिः। अर्थः = फलं यस्य सः, अयमर्थः – अनेन सूत्रेण नमः प्रभृतिभिर्योगे चतुर्थी विधीयते। तत्समुच्चयार्थकश्चकारः, तेन स एवार्थः पुनर्विधीयते, तेन पुनर्विधानात् "चतुर्थीचाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" 2-3-73 इत्यनेन आशीर्विवक्षायां पक्षे या षष्ठी विहिता, तामपि बाधित्वाऽनेन चतुर्थ्येव प्रवर्तते, स्वस्ति गोभ्यो भूयादित्यादौ/चशब्दाभावे तु परत्वात् "चतुर्थी चाशिषी" त्यनेन षष्ठीसमुच्चिता चतुर्थी प्रवर्तेत। सा मा भूत्, नित्यैव चतुर्थीयथा स्यादित्येवमर्थं च ग्रहण-मिति।

**एवं "मन्यकर्मण्यनादरे विभाषाऽप्राणिषु" 2-3-17 इत्यनेन प्राणिवर्जिते मन्यतेः कर्मणि तिरस्काररूपानादरे विवक्षिते चतुर्थी वास्यादित्यर्थकेन 'न त्वां तृणं, तृणाय वा मन्ये इत्यत्र वैकल्पिकी चतुर्थी। अत्र कर्मत्वं चतुर्थ्यर्थः। अत्र च तृणपदं तृणसदृशपरम्। तथाच तृणसदृशकर्मकभिन्नं त्वत्कर्मकं ज्ञानमित्यर्थः त्वत्कर्मकज्ञाने तृणसदृशकर्मकभेदश्चात्रत्वाय तृणसदृशभेदे पर्यवस्यति। तत्र चा नादरविवक्षायां 'त्वां तृणसदृशमपि न मन्ये' इत्यर्थः फलितः। अतो नोत्कृष्टत्वविवक्षायां चतुर्थी प्रयोगः।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं मन्यकर्मणीति** कर्मणि द्वितीया सिद्धा, तया सह विकल्पेन चतुर्थीविधानायेदमारब्धम्, अनादर इत्यनेन आदराभावमात्रस्य न ग्रहणम्, किं त्वधर्म इत्यादाविव नञो विरोध्यर्थकतया तिरस्कारस्य ग्रहणम्। अनादरः = आदरविरोधी, स च तिरस्कार एवेत्याशयेनाह – **तिरस्काररूपानादरे इति** तिरस्कारश्च "मन्यकर्मणि प्रकृष्य कुत्सितग्रहणं कर्तव्य" मिति प्रकृत सूत्रस्थवार्तिकबलादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप एवोपमेये गृह्यते, न त्वपकृष्टसादृश्यरूपः वार्तिके प्रकृष्येत्यत्र "परावर योगेचे" 3-4-20 ति क्त्वा, अतिशयविशिष्टकुत्सितत्वे प्रतिपाद्ये चतुर्थीति तदर्थः। तत्प्रतीतिश्च नञ्समभिव्याहार एव, एवं च प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानं संपद्यत इत्याशयेन नञ्घटितमुदाहरति– **न त्वां तृणमिति** "तृणाय मत्वा रघुनन्दनोपि बाणेन रक्षः प्रधना न्निरास्थत्" इति भट्टिपद्ये नञोध्याहारो बोध्यः, समन्वयायाह – **अत्रेति** उदाहरणे इत्यर्थः।'तृणसदृशपरम' तृणसदृशज्ञानपरम्, वाक्यार्थमाह – **तथा चेति** लक्षणया तत्पदस्य तृणसदृशज्ञानपरत्वेचेत्यर्थः विभक्त्यर्थस्य नञर्थे तस्य च धात्वर्थे अन्वय इत्याह – **तृणसदृशकर्मकभिन्नमिति** तृणसदृश **कर्म यस्य** ज्ञानस्य तत् तृणसदृश कर्मकम् तद्भिन्नमित्यर्थः। प्रकृतार्थसिद्धये आह **त्वत्कर्मकज्ञान इति** त्वत्कर्मक **ज्ञानं** तृणसदृशकर्मकज्ञानभिन्नमिति प्राथमिकः शाब्द बोधः। तत्र त्वत्कर्मकज्ञाने तृणसदृशकर्मकज्ञानभेदो भासते, स च युष्मदर्थे तृणसदृशभेदं गमयतीत्यर्थः। ज्ञानभेदाद्विषये विशेषावगतिरिति भावः। **भवान्** तृणसदृशभिन्नं इति ज्ञानं जायत इति यावत्। प्रकृतार्थमाह – **तत्र चेति** तस्य तत्र पर्यवसानेचेत्यर्थः। नञर्थबलोनाह – **तृणसदृशमपीति** अत एव = अनादरे इत्युक्तेरेव **उत्कृष्टत्वेति** त्वां बृहस्पतिं **मन्ये** इत्यादौ न चतुर्थी, किं तु द्वितीयैवेति भावः, न त्वां तृणं चिन्तयामीत्यादौ चतुर्थीवारणाय मन्यकर्मणीति।

**अत्र मन्ये इत्युपादानाद् 'मन्वे' इत्यत्र न चतुर्थी। तेन न त्वां तृणं मन्वे इत्येव प्रयोगः। अत्र 'अप्राणिष्वि' त्यपनीय "नौ काकान्न शुकसृगालवर्जेष्वि" ति वाच्यम्। तेनाप्राणित्वेपि नत्वा नाव**

**मन्नं वा मन्ये इत्यादौ न चतुथी। प्राणित्वेपिच न त्वाशुने मन्ये इतयादौ भवत्येव चतुर्थी। नचैवं मन्यतिकर्मत्वाविशेषा द्युष्मच्छब्दादपि चतुर्थ्यापत्तिः, अनादरे इत्यस्य कर्मविशेषणत्वेनाऽनादरव्यञ्जके कर्मणि चतुर्थीविधिप्रतीते स्तदप्रसङ्गात्। तत्सिद्धं सर्वत्र चतुर्थ्या भावनान्वय-इति।**

## इति चतुर्थ्यर्थनिरूपणं समाप्तम्

ननु मनिकर्मणीत्युक्तावपि चिन्तयतीत्यादीनामग्रहणलाभान्मन्येतिविकरणविशिष्टस्योच्चारणं व्यर्थ मित्यत आह – **अत्र मन्ये इत्युपादानादिति** सूत्रे मन्येति श्यन् विकरण विशिष्टस्य स्वीकारादित्यर्थः। मन ज्ञाने इति दैवादिको धातुः। तस्य च श्यन् विकरणः कर्त्रर्थकसार्वधातुके परे। अतस्तेन सह निर्देशात्तस्यैव ग्रहणमत्रेति भावः। तद्व्यावर्त्यमाह – **मन्वे इति** मनु अवबोधने इति तानादिको धातुः, तस्य न ग्रहणम् यथाः – "अनुप्रतिगृणश्चे" I-4-4I ति सूत्रे गृण इति श्नाप्रत्ययान्तेन निर्देशात् गॄ शब्दे इति क्रैयादिकस्यैव ग्रहणं न तु गॄ निगरणे इति तौदादिकस्य, तद्वत्। एवं च मन्येति श्यान्विकरणान्तस्यानुकरणमिति बोध्यम् **इत्येव प्रयोग इति** द्वितीयान्तघटित एवेत्यर्थः, एवशब्देन चतुर्थ्यन्तव्यावृत्तिः। सूत्रे श्यनग्रहणमुपलक्षणम् तेन दैवादिकस्य लिटचपीदं सूत्रं प्रवर्तते, तानादिकयोगे न, दैवादिकयोगे भवतीत्येव सूत्रतात्पर्यम्।

ननु नत्वां नावं मन्ये इत्यत्राप्राणित्वा च्चतर्थ्यापत्तिः, नत्वां शुने मन्ये इत्यत्र प्राणित्वात्तदनापत्तिश्चेत्यत आह – **अत्रेति** सूत्रे इत्यर्थः। अपनीय = निष्कास्य, **नौकाकेति** अप्राणिष्वित्यस्य स्थाने नौकाकेत्यादि वाच्यमित्यर्थः। एतया आनुपूर्व्या वचनमिदं भाष्ये नास्ति किंतु भाष्यार्थपर्यालोचनेन लब्धम्, तथाहि यदेतदप्राणिष्विति, एतत् अनावादिष्विति वक्ष्यामि, एते च नावादयो भविष्यन्ति। न त्वां नावं मन्ये यावत्तीर्ण न नाव्यम्, न त्वा अन्नं मन्ये, यावद्भुक्तं न श्राद्धम्" इति भाष्यम्। अनेन नौ अन्नशब्दयोगे चतुर्थ्या अनिष्टत्वं लभ्यते। यदेतदप्राणिष्विति, एतदनावादिष्विति वक्ष्यामी" त्युक्त्या अप्राणिष्वित्यपनीयेति लभ्यते। ततः येषु प्राणिषु नेष्यते, ते नावादयो भविष्यन्ति। न त्वा काकं मन्ये, न त्वा शुकं मन्ये" इत्युक्तम्। अनेन काकशुकशब्दप्रयोगे चतुर्थ्या अनिष्टत्वमुक्तम्। भाष्ये "प्राणिष्विति" बहुवचनेनान्यस्यापि ग्रहणं ध्वन्यते। अन्योपि प्राणिवाचको वृत्त्युदाहरणबलेन शृगालशब्द इति लभ्यते। अत एतेषु चतुर्थ्या अप्रवृत्ति-रिति। तेन = निरुक्तार्थस्वीकारेण। अतिव्याप्तिं परिहरति – **अप्राणित्वेपीति न त्वा नावमिति** अयमर्थः – कश्चिद् बृहत्या नावा जलं तरीतुकाम आसीत्, पर तु महत्यपि सातारणे ऽसमर्थाऽऽसीत्। तदा स एवं तां निन्दति – नत्वा नावं मन्ये-इति बृहती नौ युष्मदर्थः, उडुपरूपाऽल्पानौ नाव शब्दार्थः। अल्प-या नौकया तार्य यज्जलं तीर्ण, तदपि बृहत्यापि त्वया न तीर्णमिति तदाशयः। तेन ह्यनादरो गम्यते-इति। न त्वां तृणं मन्ये इत्यत्रेवात्रापि पदार्थवाक्यार्थौ बोध्यौ। **न त्वाऽन्नं मन्ये इति** अयमर्थः – कश्चिद् बहुव्यञ्जनयुक्तं श्राद्धमन्नं भोक्तुमुपचक्रमे, परं तु तस्य तद्भोजनात् तृप्तिर्न जाता। तदा स तदन्नमेवं निन्दति – न त्वा अन्नं मन्ये-इति। बहुव्यञ्जनयुक्तं श्राद्धमन्नं युष्मदर्थः। अपूपरूपं स्वल्पमन्न शब्दार्थः। अपूपरूपमन्नं स्वल्पमपि भुक्तं सत् तृप्तिं जनयामास, तादृशी तृप्तिर्महतापि त्वया न जनिता, यतः श्राद्धमन्नं श्राद्धीयै ब्राह्मणै र्नभुक्तमिति तदाशयः, तेन ह्यनादरो महत्यन्ने व्यज्यते-इति अव्याप्तिं वारयति – **प्राणित्वेपीति**

न त्वां तृणाय मन्ये इत्यादौ मन्यकर्मत्वाविशेषाद्युष्मच्छब्दादपि चतुर्थ्यापत्तिरिति शङ्कते **नचेति** एवम् = अनादरे गम्यमाने सति मन्यतेः कर्मणि चतुर्थी विधाने। **युष्मच्छब्दादपीति** यथा – गोषु दह्यमानासु गत

इत्यादावुभयत्र सप्तमी, तथात्रोभयत्रापि चतुर्थीस्यादिति भावः। समाधत्ते – **अनादर इत्यस्येति विशेषणत्वेनेति** अनादरद्योतकं यत्कर्म मन्यते, स्तत्र चतुर्थीति सूत्रार्थः। न तु कर्मणि चतुर्थी, अनादरे द्योत्ये इति, अतो न दोषः, अनादरद्योतकं च तृणादिकमेव न तु युष्मच्छब्दार्थ इति भावः। तदप्रसङ्गात् = युष्मच्छब्दाच्चतुर्थ्या अप्रसङ्गात्। प्रकरणार्थमुपसंहरति – **अतः सिद्धमिति**।

इति चतुर्थ्यर्थनिरूपणम्।

# अथ पञ्चम्यर्थनिरूपणम्

**(नव्यनैयायिकमतेनापादानत्वनिर्वचनम्।)**

**एवं पञ्चम्यपि तत्रैवान्वेति। तदर्थश्च "अपादाने पञ्चमी" 2-3-28 तिसूत्रा दपादानत्वरूपः। तच्च "ध्रुवमपायेऽपादान" 1-4-24 मितिसूत्रनिरुक्तम्। तथाहि अपाये = विभागे। ध्रुवं = निश्चलं, क्रियानाश्रयं यत्, तदपादानसंज्ञंस्यादिति सूत्रार्थः। तथाच क्रियानाश्रयत्वे सति क्रियाजन्यविभागाश्रयत्व मपादानत्वम्। अस्तिचेदं 'वृक्षात्पर्ण पतती' त्यत्र वृक्षे, पतन क्रियानाश्रयत्वात्, पतनक्रियाजन्यविभागाश्रयत्वाच्च। अत्र चोदासीने घटे पर्णेचातिप्रसङ्गवारणार्थं दलद्वयम्।**

अथ पञ्चम्यर्थनिरूपणम्

तृतीयाचतुर्थ्यर्थयोरिव पञ्चम्यर्थस्यापि भावनायामेवान्वय इत्याह – **एवमिति** पूर्वोक्तविभक्त्यर्थ-वदित्यर्थः। पूर्ववदत्रापि अपादानशब्दो धर्मपर इत्याह – **अपादानत्वरूप इति** ध्रु गतिस्थैर्ययोरिति तौदादिकात्पचाद्यचि ध्रुवधातोरिगुपधलक्षणेकेवा ध्रुवमिति रूपम्, ध्रु स्थैर्ये इत्युक्तेराह – **निश्चलमिति** ध्रुवमस्य शीलम्, निश्चलाबुद्धिरित्यादावेकरूपतार्थ प्रतीत्या तद्व्यावृत्यर्थमाह – **क्रियानाश्रयमिति**, निष्कृष्टार्थमाह – **तथाचेति** लक्ष्ये योजयति **अस्ति चेदमिति** दलसार्थक्यं दर्शयति – **अत्र चेति दलद्वयमिति** उदासीनस्य व्यावृत्यर्थं विशेष्यम्, प्रथमान्तार्थे पर्णे तदर्थं विशेषणमिति भावः,

**क्रियानाश्रयत्वं च यद्यपि सामान्यतो न क्रियावन्निष्ठभेदप्रतियोगित्वम्, प्रतियोगितासामान्य-प्रवेशे पतनवत्यपि पर्णे द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदसत्त्वात् 'स्वस्मात्पतती' ति प्रयोगापत्तेः। प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताप्रवेशे च 'द्रव्यात्पतती' त्यस्या नापत्तेः। पतनवतिपर्णे द्रव्यत्वावच्छिन्नभेदाभावात्, तथापि प्रकृत्यर्थतावच्छेदकाश्रययत्किञ्चिद् व्यक्तित्वावच्छिन्नप्रतियोगितानिवेशेनैव क्रियावन्निष्ठभेदप्रतियोगित्वं निर्वाच्यम्। तच्च पतमानपर्णव्यक्तिनिष्ठभेदनिरूपितयत्किञ्चित्पर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकत्व मुदा-सीनेपर्णेपि, अतः क्रियाजन्यविभागाश्रयत्वोपादानमिति न वृक्षात्पतति पर्णे 'पर्णात्पर्ण पतती' ति प्रयोगः।**

क्रियानाश्रयत्वं निर्दुष्टं परिष्कर्तुमुपक्रमते, **क्रियानाश्रयत्वं च यद्यपीति क्रियावन्निष्ठेति**, क्रियावत् = पर्णं, तन्निष्ठो भेदः = वृक्षो नेति भेद, स्तत्प्रतियोगित्वं वृक्षे इति प्रकृते समन्वयः। प्रतियोगित्वं = प्रतियोगितावत्त्वम्, तत्र प्रतियोगिता सामान्यरूपेण यदि गृह्यते, तदा वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्न प्रतियोगिता मादायातिव्याप्तिरित्याह – **प्रतियोगितासामान्यनिवेशे इति** द्वित्वाद्यवच्छिन्नेत्यत्रादिपदेन वैशिष्ट्यस्य ग्रहणम्, **सत्त्वादिति,** द्वित्वादिरूपव्यासज्यवृत्तिधर्मावच्छिन्न प्रतियोगिताकभेदस्य वैशिष्ट्यावच्छिन्नप्रतियोगिताकभेदस्य च पतमानपर्णेपि सत्त्वादित्यर्थः, **प्रयोगापत्तेरिति**, अयमर्थः – क्रियावत् = पर्णं, तन्निष्ठो भेदः = स्व घट उभयं नेति प्रतीतिसिद्धो भेदः, तत्प्रतियोगित्वस्य वृक्ष इव स्वस्मिन्नपि सत्त्वात्स्वस्याप्यपादानत्वे निरुक्तप्रयोगापत्तिः, तथा आकाशवृत्तित्वविशिष्टपर्णं नेति भेद आकाशवृत्तित्ववैशिष्ट्यावच्छिन्न प्रतियोगिताकः तादृशभेदस्य पर्णे सत्त्वात्तत्प्रतियोगित्वान्निरुक्त प्रयोगापत्तिरि-ति। क्रियावन्निष्ठभेदप्रतियोगित्वमित्यत्रान्यादृशप्रतियोगितानिवेशेन नेयमापत्तिरित्याह – **प्रकृत्यर्थतावच्छेदकेति** क्रियावन्निष्ठभेदीयप्रतियोगितायां प्रकृत्यर्थतावच्छेदकावच्छिन्नत्वं निवेश्यते, तेना

भयत्व-वैशिष्ट्यावच्छिन्नप्रतियोगितानिरासान्नोक्तप्रयोगापत्तिरिति भावः। एवं निवेशेऽव्याप्तिर्लक्षण-स्येत्याह — **द्रव्यात्पततीत्यस्यानापत्तेरिति** क्रियावति पर्णे द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदस्यासत्त्वेन क्रियावन्निष्ठभेदीय द्रव्यत्वावच्छिन्न प्रतियोगित्वस्य द्रव्येऽसत्त्वेन क्रियानाश्रयत्वाभावादिति भावः। तदाह — **पतनवति पर्णे द्रव्यत्वावच्छिन्नप्रतिप्रतियोगिताकभेदाभावादिति** पर्णस्यापि द्रव्यत्वावच्छिन्नत्वेन तत्प्रतियोगिताक भेदाभावादित्यर्थः, **प्रकृत्यर्थतावच्छेदकेति** प्रकृते प्रकृत्यर्थतावच्छेदक वृक्षत्व — तदाश्रया या यत्किञ्चिद्व्यक्तिः, तत्वावच्छिन्ना या प्रतियोगिता तन्निवेशेनैवेत्यर्थः, एवशब्देन प्रतियोगिता सामान्यनिवेशस्य प्रकृत्यर्थतावच्छेदकावच्छिन्न प्रतियोगितानिवेशस्य च व्यावृत्तिः, क्रियावत् = पर्णम्, तन्निष्ठोभेदः, प्रकृत्यर्थतावच्छेदकवृक्षत्वाश्रय तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकः (स वृक्षो नेति) भेदः, तत्प्रतियोगित्वस्य वृक्षे सत्वाल्लक्षणसमन्वयः, तद्व्यक्तिर्नेति भेदस्य स्वस्मिन्नसत्त्वात् स्वस्मात्पर्णं पततीति न प्रयोगः, द्रव्यात्पर्णं पततीत्यत्र क्रियावति पर्णे द्रव्यत्वाश्रय यत्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगिताक (तद्द्रव्य नेति) भेदस्य पर्णे सत्त्वा न्नाव्याप्तिरिति बोध्यम्, तच्च = तादृशक्रियावन्निष्ठभेदप्रतियोगित्वं च. **पतमानेति** पतनक्रियावती या पर्णव्यक्तिः, तन्निष्ठो भेदः उदासीन पर्णव्यक्तिर्नेति भेदः, तन्निरूपित यत्किञ्चित्पर्णव्यक्तित्वावच्छिन्ना या प्रतियोगिता तद्वत्त्वमित्यर्थः, **पर्णेपीति** अतस्तत्रातिव्याप्तिरिति भावः, पतति = पतति सति, उदासीन पर्णे पतनक्रियाजन्यविभागाश्रयत्वाभावान्नातिव्याप्तिरिति भावः। तथाच क्रियावन्निष्ठ भेदनिरूपित प्रकृत्यर्थतावच्छेदकाश्रय यत्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगितावत्त्वे सति क्रियाजन्यविभागाश्रयत्व मपादानत्वमिति लक्षण पर्यवस्यतीति बोध्यम

## (पञ्चम्यर्थनिरूपणम्।)

**अत्र विभागः परसमवेतत्वं च विभक्तिशक्यम्। तत्र च प्रकृत्यर्थो वृक्षो विभागे परपदार्थैकदेशे भेदेच समवेतत्व-प्रकृत्यर्थतावच्छेदकाश्रयविभागाश्रयीभूतव्यक्तित्वावच्छिन्न-प्रतियोगिताकत्वसंसर्गाभ्या मन्वेति। विभागः परसमवेतत्वं च जनकत्व-स्वरूपसंबन्धाभ्यां पतनाख्यधात्वर्थेन्वेति। तथाच वृक्षसमवेतविभागजनकं वृक्षत्वरूपप्रकृत्यर्थतावच्छेदकाश्रय-विभागाश्रयीभूतव्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेण वृक्षवद्भेदाश्रयसमवेतं च यत्पतन तदाश्रयः पर्णमिति शाब्दबोधः।**

निष्कृष्ट पञ्चम्यर्थमाह — **अत्रेति** एतदुदाहरणेष्वित्यर्थः, **परपदार्थेति** भेदावान् परशब्दार्थः, तदेकदेशे भेद इत्यर्थः, **प्रकृत्यर्थतेति**, प्रकृत्यर्थतावच्छेदकवृक्षत्वाश्रयः, पतनजन्य विभागाश्रयीभूता च या व्यक्तिस्तत्त्वावच्छिन्ना या प्रतियोगिता, तद्वत्वसंसर्गेणेत्यर्थः, अन्वेति = विभागेसमवेतत्वसंबन्धेन, भेदे निरुक्तसंबन्धेन चान्वेति, विभक्त्यर्थस्य धात्वर्थान्वयमुपपादयति — **विभागः परसमवेतत्वं चेति** पर्यवसितं शाब्दबोधं दर्शयति **वृक्षसमवेतविभागजनकमिति** अस्य पतनमित्यत्रान्वयः, **वृक्षत्वरूपेति**. वृक्षत्वरूपप्रकृत्यर्थतावच्छेदकाश्रयः विभागाश्रयीभूता च या व्यक्ति, स्तत्वावच्छिन्न प्रतियोगिताकत्व-ससर्गेण वृक्षवद्भेदाश्रयः = पर्णं, तत्समवेतं च यत्पतनं तदाश्रय इत्यर्थः।

**अत्र प्रकृत्यर्थतावच्छेदकाश्रययत्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वस्यैव प्रकृत्यर्थ-स्य वृक्षस्य पञ्चम्यर्थेभेदे संसर्गत्वोक्तौ वृक्षात्पतति पर्णे 'पर्णात्पतती' तिप्रयोगापतिः, तत्पतनस्यापि प्रकृत्यर्थतावच्छेदकपर्णत्वाश्रययत्किञ्चिदुदासीनपर्णव्यक्तित्वावच्छिन्नप्रति-योगिताक भेदवत्पतमानपर्णवृत्तित्वात्, पतमानपर्णवृत्तिविभागजनकत्वाञ्च। अतस्तद्व्या-वृत्त्यर्थं प्रकृत्यर्थस्य भेदेन सहान्वये संसर्गघटकव्यक्तौ पतनजन्यविभागाश्रयत्वं विशेषणमिति केचिन्नैयायिकनव्याः।**

संसर्गघटकव्यक्तौ विभागाश्रयीभूतेति विशेषणस्य फलं दर्शयति, **अत्रेति** प्रकृत्यर्थस्य प्रत्ययार्थेन्वय प्रदर्शने इत्यर्थः, प्रतियोगिताकत्वस्यैवेत्येवशब्देन विभागाश्रयीभूतेत्यस्य व्यावृत्तिः, **पततीति** सप्तम्यन्त-मिदम्, अतिव्याप्तिमुपपादयति, **तत्पतनस्यापीति, प्रकृत्यर्थतेति।** भेदः = तत्पर्णव्यक्तिर्नेति भेदः, तद्वत् पतमानं पर्णं तद्वृत्तित्वादित्यर्थः, **पतमानपर्णेति** तत्पतनस्य पतमान पर्णं विभागजनकत्वाच्चेत्यर्थः, एवं च क्रियाजन्यविभागाश्रयत्वदलेन न व्यावृत्तिः, अतस्तद्व्यावृत्यर्थं संसर्गघटकव्यक्तौ विभागाश्रयीभूतेति विशेषणं देयमेव, तत्रोदासीनपर्णे विभागाश्रयत्वाभावान्नातिव्याप्तिरिति भावः,

## (अन्येषां नैयायिकानां मतम्।)

**अन्येतु – गुरुभूतसंसर्गघटितव्युत्पत्तिविशेषकल्पनायां गौरवापत्तेः क्रियानाश्रयत्वं न क्रियावन्निष्ठभेदप्रतियोगित्वम्। अपितु क्रियावत्प्रतियोगिकभेदाश्रयत्वम्। तदा क्रिया प्रतियोगितावच्छेदिका। भेदश्चाऽभावीयविशेषणता संबन्धेनैवा पादानवृत्तिः। तच्चो दासीनपर्णादावपीति तद्व्यावृत्त्यर्थं विशेष्यदलम्। तथाचास्मिन् पक्षे विभागो भेदश्च पञ्चम्यर्थः। तत्र चाधेयतया प्रकृत्यर्थान्वयः। तयोश्च जनकत्वप्रतियोगितावच्छेदकत्वोभय-संसर्गेण धात्वर्थान्वयः। वृक्षवृत्तिविभागजनकवृक्षनिष्ठभेदप्रतियोगितावच्छेदकपतनेत्यादि-शाब्दबोधः।**

निरुक्तार्थस्य गौरवग्रस्तत्वान्मतान्तरं लघुभूतमाह – **अन्येत्विति गुरुभूतेति** – प्रकृत्यर्थस्य परपदार्थैकदेशे प्रत्ययार्थेन्वये प्रकृत्यर्थतावच्छेदकेत्यादिः संसर्गो गुरुभूतः, प्रकृत्यर्थस्य प्रत्ययार्थान्वये संसर्गद्वयं, प्रत्ययार्थस्य धात्वर्थान्वये तद्द्वयं च कल्प्यम्, अतोयं पक्षो गुरुभूत इति भावः, **क्रियावत्प्रतियोगिकेति** क्रियावत् = पर्णम्, तत्प्रतियोगिकोभेदः पर्णं नेति भेदः, तदाश्रयत्वं वृक्ष इति लक्षणसमन्वयः, तदा = तस्मिन्नर्थे, अभावीयविशेषणतासंबन्धेन = स्वरूप सम्बन्धेन, तच्च = तादृशं क्रियानाश्रयत्वं च, विशेष्यदलं = क्रियाजन्यविभागाश्रयत्वम्, अत्र पक्षे विभक्त्यर्थं दर्शयति, **तथा चेति** अस्मिन् पक्षे = क्रियावन्निष्ठभेदप्रतियोगित्वमिति मते, अत्र पक्षे संसर्गांशेपि लाघवमित्याह – **तत्र चेति**, तयोश्च = विभक्त्यर्थयोश्च, बोधं दर्शयति – **वृक्षवृत्तीति**,

**अत्रच 'ग्रामादागच्छतो श्वात्पतती' त्यत्र श्वग्रामयो र्गमनपतनापादानत्वव्यावृत्त्यर्थं लक्षणे क्रियाविशेषविवक्षा द्रष्टव्या। तेन यन्निष्ठविभागजनकत्वेन यन्निष्ठभेदप्रतियोगितावच्छेद-कत्वेन च यत्क्रिया विवक्षिता, तत्त्वं तत्क्रियापादानत्वमिति निष्कर्षः। ततश्च पतनस्याऽश्व एव गमनस्य च ग्राम एवा पादानत्वमिति सिध्यति। अत एव 'परस्परस्मान्मेषावपसरत' इत्यत्रो भयकर्मजविभागस्थले विभागस्यैकत्वेपि या या क्रिया विवक्षिता, तत्तत्क्रियाविशेषानादायैव तदनाश्रयस्य तदपादानत्वं निर्वचनीयम्। विवक्षापदोपादानेन च यदा नोक्तरूपेण विवक्षा, अपित्ववयवावयविभावस्यैव विवक्षा तत्र 'वृक्षस्य पर्णंपतती' त्येव प्रयोग इति न तत्रा पादानत्वप्रसङ्गः। यत्पदं च यत्पदाभिधेयपरम्, तेन वृक्षात्तस्मिन्नेव वृक्षे पर्णं पततीत्यत्र सप्तम्यन्तपदाभिधेयत्वविशिष्टस्य ना पादानत्वम्।**

क्रियाद्वयसमभिव्याहारे साङ्कर्यं वारयति – **अत्र चेति** प्रकृतलक्षण इत्यर्थः, विवक्षामेव दर्शयति – **तेनेति** ततश्च = निरुक्तार्थस्वीकारात्, अश्वे एवेत्येवशब्देन ग्रामस्य व्यावृत्तिः, निष्कृष्टार्थस्वीकारस्य प्रयोजनान्तरमप्यस्तीत्याह – **अत एवेति** क्रियाविशेषापेक्षणेन निरुक्तार्थ स्वीकारादेवेत्यर्थः। उभयकर्मजविभागस्थले = उभयनिष्ठक्रियाजन्यविभागस्थले, **तदपादानत्वं निर्वचनीयमिति** अत्र विभाग

एक एव, तथापि आश्रयभेदेन क्रियाया भेदो विवक्ष्यते, तथाच एकमेषनिष्ठ क्रियानाश्रयत्वेन द्वितीयस्य, द्वितीयमेषनिष्ठ क्रियानाश्रयत्वेनान्यस्य चापादानत्वं सिध्यति, आख्यातोपात्तकृत्याश्रयत्वेनोभयोः कर्तृत्वं च निर्वहति अत एव ग्रामादागच्छतीत्यादिप्रयोगे ग्रामादेरिव धावतोऽश्वात्पततीत्यादौ कुड्यात्पततो श्वात्पततीत्यादौ च क्रियाश्रयत्वेप्यश्वस्यापादानत्वमिति भावः, वृक्षस्य पर्णं पततीति प्रयोगस्योपपत्तिं दर्शयति – **विवक्षापदोपादानेनेति**, उक्तरूपेण = यन्निष्ठविभागजनकत्वेन रूपेण, अवयवावयविभावस्य = वृक्षपर्णयोः, ननु वृक्षात्पतत् पर्णं तस्मिन्नेव वृक्षे पततीत्यर्थके, वृक्षात्तस्मिन्नेव वृक्षे पर्णं पततीत्यत्र सप्तम्या अनुपपत्तिः, तत्रापि निरुक्तापादानत्वसंभवा, दत आह – **यत्पदं चेति** यन्निष्ठेत्यत्र विद्यमानं यत्पदमित्यर्थः, **नापादानत्वमिति** वृक्षस्यैकत्वेपि तदुपस्थापकवृक्षपदयोर्भिन्नत्वात्सप्तम्यन्तपदोपस्थाप्येऽपादानत्वं नेति भावः।

**नचैवमपि वृक्षं त्यजतीत्यत्र 'स्पन्दते पर्ण' मित्यत्र च वृक्षे पादानत्वापत्तिः, क्रियाजन्य-विभागाश्रयत्वात् क्रियानाश्रयत्वा च्चेति वाच्यम्। वृक्षेऽपादानत्वसत्त्वेपि बलीयस्याकर्मसंज्ञया धात्वर्थतावच्छेदकफलाश्रयत्वसत्त्वेन त्यागकर्मत्वस्यापि सत्त्वाद् दितीयोत्पत्तेः पञ्चम्य-प्रयोगात्। 'स्पन्दते पर्ण' मित्यत्र 'आसना च्चलितः, 'राज्या च्चलितः, इतिवद् 'वृक्षात् स्पन्दते' इत्यस्यापीष्टत्वात्। अत एव स्पन्दते इत्यत्रा पादानत्वव्यावृत्त्यर्थं 'क्रियापदं सकर्मक धातुपदार्थपर' मिति केषाञ्चित्समाधान मपास्तम्, 'वृक्षं त्यजती' त्यत्र एवमप्यनिवारणाच्च।**

एवमपि = निरुक्तापत्तिवारणेपि, **स्पन्दते पर्णमिति** वृक्षपदानुसन्धानेन वृक्षे स्पन्दत इत्यत्राप्य-पादानत्वप्रसङ्ग इति बोध्यम्। **क्रियाजन्येति**, पर्णनिष्ठक्रिया पतनस्पन्दनरूपा, तज्जन्यविभागाश्रयत्वा-दित्यर्थः। **बलीयस्येति**, अपादानसंज्ञाविधायकसूत्रापेक्षया कर्मसंज्ञाविधायक सूत्रस्य परत्वेन तस्या बलीयस्त्वमिति भावः। **कर्मसंज्ञयेति**, अस्य, अपादानत्वबाधादिति शेषः, एवं च वृक्षेऽपादानत्वसत्वेपि निरुक्तरीत्या त्यागकर्मत्वस्यापि सत्त्वात्परत्वेन बलीयस्याकर्मसंज्ञयाऽअपादानसंज्ञाया बाधात्कर्मत्वनि-मित्तिका द्वितीयैव प्रवर्तते, नत्वपादानत्वनिमित्तिका पञ्चमीति भावः। स्पन्दति योगे पादानत्वमिष्टमेवे– त्याह, **स्पन्दत इति** उभयवादिसमतं प्रयोगं दृष्टान्तयति, **आसनाच्चलित इति, इत्यस्यापीति** अपिना वृक्षं स्पन्दत इत्यस्य सग्रहः, अत एव = आसनाच्चलित इतिवत् स्पन्दतियोगे पादानत्वस्यापीष्टत्वादेव, क्रिया पदम् = अपादानत्वघटकं क्रियापदम्, केषाञ्चित् = नैयायिकानाम्, **अपास्तमिति**, आसनाच्चलितः, राज्या-च्चलित इति सर्वसमतप्रयोगानिर्वाहात्तन्मतमयुक्तमित्याशयः, तन्मतेऽतिव्याप्तिरपि न निवार्यत इत्याह – **वृक्षं त्यजतीति अनिवारणादिति** अत्र क्रियायाः सकर्मक धातुपदार्थतयाऽपादानत्वापत्त्याऽतिव्याप्ति-रनिवारितैवेति भावः,

**अथवा उभयत्रा पादानत्वव्यावृत्त्यर्थं धात्वर्थतावच्छेदकफलभिन्नत्वं विभागविशेषणं वाच्यम्। त्यजेर्हि विभागानुकूलोव्यापारो वाच्यः, अतो विभागस्य धात्वर्थतावच्छेदकत्वा तद्भिन्नविभागाश्रयत्वाभावेन न वृक्षे पादानत्वप्रसङ्गः। स्पन्दतेश्च धात्वर्थतावच्छेदक-फलाभावेन तद्भेदस्या प्रसिध्द्या तादृशविभागाप्रसिद्धे र्ना पादानत्वप्रसक्तिः।**

वस्तुतस्तु चैत्रोहं स्वात्मानं जानामीत्यादौ संज्ञाद्वयप्रयुक्तकार्यद्वयदर्शनात्परत्वस्य व्यवस्थापकत्वा-योगाद्विवक्षाभेदेन ग्रामं गच्छति ग्रामे गच्छतीतिव त्प्रयोगद्वयापत्तिः, किंच स्पन्दतियोगे विभागाभाना-द्वृक्षादेरपादानत्वस्य प्राप्तिरेव नेत्याशयेनाह – **अथवेति** विभागविशेषणम् = क्रियाजन्यविभागाश्रयत्व-दलघटकविभागस्य विशेषणम्, **नापादानत्वप्रसक्तिरिति** तथाच वृक्षे स्पन्दते पर्णमित्येव प्रयोगो, न तु

पञ्चम्यन्तघटित इति भावः। चलतेस्तु आसनाच्चलित इत्यादि प्रयोगाद्विभागार्थकत्वान्न दोष इति तात्पर्यम्,

**अथवा यन्निष्ठविभागेत्यपहाय यन्निरूपितेति लक्षणे विवक्षितम्। 'वृक्षंत्यजती' त्यत्र वृक्षनिष्ठो विभागो विवक्षितः, नतु वृक्षनिरूपित इति नातिप्रसङ्गः। वृक्षात्पर्णमित्यत्र च प्रकृत्यर्थस्य निरूपितत्वं विभागे संसर्गः। तथाच वृक्षनिरूपितविभागजनकं वृक्षनिष्ठभेदप्रति-योगितावच्छेदकं य त्पतन मित्यादिशाब्दबोधः। स्पन्दते इत्यत्रा पादानत्ववारणाय क्रिया सकर्मिकैवलक्षणे विवक्षिता। आसनाच्चलितः, 'सार्थाद्धीयते पशु' रित्यादयः प्रयोगास्तु वक्ष्यमाणावधित्वरूपं पञ्चम्यर्थमादाय नेया इत्याहुः। वैयाकरणनव्या अपि केचिदेवम्।**

तर्हि नैयायिकमतमेवाद्रियताम्, वृक्षं त्यजतीत्यत्रान्यैव रीतिः स्वीक्रियतामित्यनुशयवानाह – **अथवेति यन्निष्ठेति** यन्निष्ठविभागाश्रयत्वेनेति निष्कर्षे यन्निष्ठेत्यपहाय तत्स्थाने यन्निरूपितेति विवक्षितमित्यर्थः, आसनाच्चलित इत्यस्य का गति, रत आह – **आसनादिति सार्थाद्धीयत इति** धनुषा विध्यतीत्यत्र शरनिस्सरणं प्रति धनुषि अवधित्वस्य तन्निस्सरणं प्रति अवधिभावोपगमेनैव व्यथने करणत्वस्य च प्राप्तौ "अपादानमुत्ताराणि कारकाणि बाधन्ते" इति भाष्योक्त्या परत्वात् करणत्वात् तृतीयैव प्रवर्तते। तृतीयायामपि धनुषोऽवधित्वं भासत एव। तथा प्रकृतेऽपि सार्थस्योभयप्राप्तौ कर्तृत्वमेव गम्येत, न त्वपादानत्वम्। अपायस्य ततोऽप्रतीतेः। सार्थेन हि पथिको हीयते, यावच्चासावपि ततोऽनपेतस्तावत् सार्थस्य कुतस्तं प्रत्यपादानत्वमिति तदभिधातुमपादाने पञ्चम्येवात्र न्याय्या। परन्तु तत्रोपपत्तिर्नास्तीति शङ्कितुराशयः। स्पष्टमधिक मन्यत्र। **वक्ष्यमाणेति** लक्षणया स्वरूपसम्बन्धविशेषरूपमवधित्वं पञ्चम्यर्थ इति समनन्तर वक्ष्यमाणेत्यर्थः. वैयाकरणनव्याः = दीक्षित भूषण कृदादयः।

## (अपादानत्वमखण्डोपाधिरूपमितिस्वसिद्धान्तः।)

**वस्तुतस्तु – गुरुभूतशक्यतावच्छेदकभेदेना नेकशक्तिकल्पनापेक्षया प्रकृत्यर्थस्य पञ्चम्यर्थ द्वयान्वये व्युत्पत्तिद्वयम्, पञ्चम्यर्थद्वयस्य च धात्वर्थान्वये व्युत्पत्तिद्वयमिति कल्पनापेक्षया चा नुगतव्यवहारसाक्षिकतया पादानत्व मखण्डोपाधिरूप मेकंधर्म निरुक्तापादानत्वसमव्यापकं कल्पयित्वा तत्रैव पञ्चम्याः शक्तिं कल्पयित्वा तस्मिंश्च प्रकृत्यर्थान्वयाय एकाम्, तस्य चाख्यातार्थान्वयाय एकां व्युत्पत्तिं कल्पयितु मुचितम्। प्रकृत्यर्थस्य च तत्राधेयतयान्वयः तस्य च स्वनिरूपकधात्वर्थानुकूलत्वसंसर्गेण कृतावन्वयः।**

**तदेवं प्रचुरप्रयोगा दपादानत्वं पञ्चम्याः शक्यम्। यत्रतु 'वृक्षाद्विभजते' इत्यादौ विभागजन्यविभागाश्रयत्वा भावान्नोक्तापादानत्वसंभव, स्तत्र लक्षणया स्वरूपसंबन्धविशेष-रूपमवधित्वं पञ्चम्यर्थः।**

अपादानत्वस्य सखण्डत्वं नोचितं, कित्वखण्डत्वमेवेत्याह – **वस्तुतस्त्विति गुरुभूतेति** क्रियानाश्रयत्वं क्रियावन्निष्ठ भेदप्रतियोगित्वमिति पक्षे क्रियावत्प्रतियोगिकभेदाश्रयत्वमिति पक्षे च तस्य तत्वं दुर्वारमिति भावः। कल्पनान्तरस्याप्यावश्यकत्वाद्गौरवमित्याह – **प्रकृत्यर्थस्येति पञ्चम्यर्थ-द्वयान्वय इति** आद्यपक्षे विभागे परपदार्थैकदेशे भेदे चान्वयः, द्वितीयपक्षे विभागे भेदे चान्वयः, अतः कार्यकारणभावद्वयं कल्प्यम्, **व्युत्पत्तिद्वयमिति** आद्ये विभागस्य धात्वर्थे जनकत्वेन भेदस्य स्वरूप सम्बन्धेन धात्वर्थेन्वयः, द्वितीये पञ्चम्यर्थयोर्जनकत्वप्रतियोगितावच्छेदकत्वोभयसंसर्गेण धात्वर्थेन्वयः। अतस्तत्रापि कार्यकारणभावद्वयं कल्प्यमिति भावः। अनुगतव्यवहारः = अपादानमपादानमिति व्यवहारः,

स्वमते व्युत्पत्तिलाघवं दर्शयति **प्रकृत्यर्थान्वयायेति,** आधेयतासंबन्धेनान्वयायेत्यर्थः, अपादानत्वस्य "ध्रुवमपायेऽपादान" मिति धर्मिग्राहकप्रमाणेन ससंबन्धिकत्वकल्पनान्निरूपकापेक्षाया मपायस्यैव तत्वावगतेराह – **स्वनिरूपकधात्वर्थेति** तदेव = पदार्थान्तररूपमपादानत्वमेव,विभागार्थकधातुयोगे निरुक्तापादानत्वासंभवादन्यैव रीतिस्तत्राश्रयणीयेत्याह –**यत्रत्विति** आदिपदेन आसनाच्चलित इत्यादेर्ग्रहणम्, **स्वरूपसम्बन्धेति** तत्तत्संबन्धरूपेत्यर्थः।

**तत्रापि अपाये = विभागे ध्रुवम् = अवधिभूत मपादानसंज्ञं स्यादिति वाक्यपदीयादौ सूत्रं व्याख्यातम्। तस्यापि धात्वर्थघटितसंसर्गेण भावनान्वयः। वृक्षनिष्ठावधितानिरूपक-विभागानुकूलकृतिः कर्तृवृत्तिरिति शाब्दबोधः। स्वनिष्ठविभागावधित्वस्य स्वस्मिन्न भावाच्च न 'स्वस्माद्विभजते' इति प्रयोगः।**

**सर्वेष्वपि पूर्वोक्तेषु अवधित्वमेव पञ्चम्यर्थः, तस्य च क्वचिद्धातुजन्यविभागद्वारकोन्वयः, क्वचिद्धात्वर्थद्वारक इत्यपि वा सुवचम्।**

तत्रापि पञ्चमी शक्यार्थबोधिकैवेति मतान्तरमाह – **तत्रापीत्यादिना – इत्यपि सुवचमित्यन्तेन ग्रन्थेन ध्रुवमवधि भूतमिति**, अपाये = विश्लेषे साध्ये, ध्रुव = मेकरूप (ध्रुवमस्य शीलमित्यादौ तथा दर्शनात्) मित्युक्ते प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तदुपयोगीति लभ्यते, तच्चार्थादवधिभूतमेव पर्यवस्यतीति भावः। **वाक्यपदीयादाविति –**

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवा,ऽतदावेशात्तदपादानमुच्यते।।
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ।
तस्याप्यश्वस्य पतने कुडचादि ध्रुवमुच्यते।।
उभावप्यध्रुवौमेषौ यद्याप्यभयकर्मजे।
विभागे, प्रविभक्ते तु क्रिये तत्र व्यवस्थिते।।
मेषान्तरक्रियपेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्।।

एते भतृहरेः श्लोकाः, आदिपदेन कैयट – शब्दकौस्तुभवैयाकरणभूषणानां ग्रहणम्, तस्यापि = अवधित्वस्यापि, अनुकूलकृतिः = अनुकूल भावना, अतिप्रसङ्गं वारयति – **स्वनिष्ठेति** – वृक्षात्पततीत्यादावपि पञ्चम्यर्थोऽवधित्वमेवेति वक्तुं शक्यमित्याह – **सर्वेष्वपि पूर्वोक्तेष्विति** क्वचित् = वृक्षात्पर्णं पततीत्यादौ, **धात्वर्थजन्येति**, पतनक्रियाजन्येत्यर्थः। क्वचित् = वृक्षाद्विभजते इत्यादौ, धात्वर्थद्वारकः = विपूर्वकभजधात्वर्थद्वारकः।

**'वलाहका द्विद्योतते विद्यु' दित्यत्र तु निस्सरणजन्यं विद्योतनं लक्षणया द्युतेरर्थः। तत्रैकदेशे निस्सरणे पञ्चम्यर्थान्वयः। एवं 'कूसूलात्पचती' त्यत्राप्यादानजन्यः पाकः पच्यर्थः। आदाने च पञ्चम्यर्थान्वय इति परकीयाः। स्वमतेतु लक्षणाया मेकदेशान्वये च प्रमाणाभावा त्पञ्चम्यथोऽपादानत्वादिरेव स्वनिरूपकनिस्सरणादिजन्यविद्योतनानुकूलत्वसंसर्गेण कृत्यन्वयी। 'कुतो भवान्' इत्यादौ प्रश्ने पाटलीपुत्रा दित्युतरे च आगत इत्यध्याहारेणान्वयो बोध्यः।**

ननु बलाहकाद्विद्योतते विद्युदिति प्रयोगानुपपत्तिः, धूमज्योतिस्सलिलमरुत्समुदायरूपस्य मेघस्य

विद्युतश्च विभागासंभवादित्याशङ्कां वैयाकरणमतेन समाधत्ते – **वलाहकादिति**, द्युतधातोः प्रकाशनार्थत्वादाह – **लक्षणयेति** द्युतेः = द्युतधातोः अयं भावः – समुदायस्य तेजोरूपविद्युतश्च भेदविवक्षया विभागविवक्षणाद्वलाहकोऽवधिः। वलाहकापादानक विभागजन्य संयोगानुकूलनिस्सरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति बोधः, इदमपादानमुपात्तविषयमित्युच्यते – यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह – तदुपात्तविषयम्, प्रकृते निस्सरणरूपेतर धात्वर्थाङ्गकं प्रकाशनं धातुराह। **यदातु** तेजस आधारत्वेन समुदायो विवक्ष्यते, तदा वलाहके विद्योतते इति सप्तमी, अभेदविवक्षायां तु तेजोमयत्वात्प्रकाशनसामर्थ्यमुदक धूमादेस्तत्प्रतिबन्धकत्वाविवक्षणाद् वलाहको विद्योतत इति प्रथमैवेति, तादृशमुदाहरणान्तरं दर्शयति **एवं कुसूलात्पचतीति** यत्र साक्षाद्गतिर्धातुना निर्दिश्यते – यथा वृक्षात्पर्णं पततीति, तदनिर्दिष्टविषयमपादानम्, यदा तु प्रत्यक्षसिद्धमागमनं मनसि निधाय, कुतो भवानिति प्रश्ने पाटलीपुत्रादित्युत्तरयति, तदा आगत इति क्रियाध्याहारेणान्वयः, तद् अपेक्षितक्रियमपादानम्, उक्तं च वाक्यपदीये तृतीयकाण्डे साधनसमुद्देशे –

"निर्दिष्टविषयं किञ्चि, दुपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधापादनमुच्यते।।136 इति

परकीयाः = वैयाकरणाः

उपात्तविषयापादानत्वविषये वैयाकरणोक्तमसहमानः स्वमतमाह – **स्वमतेत्विति** – कृत्यन्वयी = भावनान्वयी, एवं चात्र निसृज्य आदायेति पदाध्याहारेण तदर्थान्तर्भाविण संसर्गः पञ्चम्यर्थाख्यातार्थयोः स्वीकार्य इति भावः अपेक्षितक्रियमपादानं दर्शयति – **कुतो भवानिति अध्याहारेणेति**, नन्वध्याहारस्योभयसाधारणत्वादुपात्त विषया – पेक्षित क्रिययोरपादानत्वयोः को विशेष इति चे, दत्राहुः – यत्रापादानत्वनिर्वाहार्थमेव क्रियाध्याहारः, यथा – बलाहकाद्विद्योतत इत्यादौ निसृज्येत्यध्याहारः, तदपादानमुपात्तविषयम्, यत्र वाक्यसमाप्त्यर्थं क्रियापदाध्याहारः तत एव चापादानत्वनिर्वाहः, यथा कुतो भवान्? पाटलीपुत्रात्, माथुराः पाटलिपुत्रकेभ्य आढ्यतराः, इत्यादौ तदपादानमपेक्षित क्रियमिति भेदो बोध्यः, स्पष्टमधिकमन्यत्रेति।

**यत्तु "जुगुप्साविरामप्रमादार्थानामुपसंख्यान" मिति वार्तिकम् एतेषां योगे पञ्चमी वाच्येत्यर्थकम्, तल्लाक्षणिकानुशासनम्। अतः 'पापाज्जुगुप्सते' विरमति, 'धर्मात्प्रमाद्यती' त्यादौ पञ्चमी। अत्राद्ये निन्दाधात्वर्थः। तच्च इह विगानम्। पञ्चम्यर्थोविषयित्वम्। प्रकृत्यर्थश्च निरूपितत्वसंसर्गेण तत्रान्वेति। तच्च स्वाश्रयविगानवत्त्वसंबन्धेना ख्यातार्थे आश्रयत्वे। द्वितीये करणानन्तरमकरणं धात्वर्थः। पञ्चम्यर्थः पूर्ववत्। आख्यातार्थ आश्रयत्वम्। पञ्चम्यर्थस्य च कृतिद्वारकोन्वयः। पापविषयककृत्यनन्तरकालीनपापविषयककृत्यभावाश्रयत्वमिति शाब्दबोधः। तृतीये पञ्चम्यर्थो विषयत्वमेव। अनवधानं धात्वर्थः। आख्यातार्थ आश्रयत्वमेव। स्वाश्रयानवधानवत्त्व माश्रयत्वे पञ्चम्यर्थस्य संसर्गः।**

लाक्षणिकं कात्यायनवचनं व्याचष्टे – **यत्तु जुगुप्सेति पञ्चमीवाच्येत्यर्थकमिति**, अनेनापादानत्वे बोधिते तन्निमित्तिका पञ्चमी प्रवर्तत इति फलितार्थकथनमिदम्, विगानम् = बलवदनिष्टानुबन्धित्वज्ञानम्, **स्वाश्रयेति**, स्वं = विषयित्वम् तदाश्रयो यद्विगानं तद्वत्त्वसंबन्धेनेत्यर्थः, द्वितीये = पापाद्विरमतीत्यत्र, पूर्ववत् = विषयित्वम्, कृतिद्वारकः = धात्वर्थैकदेशकृतिद्वारकः, संश्लेषपूर्वको विश्लेषोऽपायः, प्रकृते तस्या भावात्सूत्रेणापादानत्वासिध्या कात्यायनेन वार्तिकमारब्धम्, भाष्यकृता तु वचनमिदं प्रत्याख्यातम् – "अधर्माज्जुगुप्सते, य एष मनुष्यः प्रेक्षा पूर्वकारी भवति स पश्यति दुःखोऽधर्मः, नानेन कृत्यमस्तीति।

स बुध्या संप्राप्य निवर्तते, तत्र ध्रुवमपायेऽपादान'' मित्येव सिद्ध मिति, बुद्धिकल्पितं सश्लेषं तादृशं विभागं चाश्रित्य सूत्रेणैव संज्ञां प्रसाध्य सूत्रमतमेव प्रबलमिति मत्वा वार्तिकं प्रत्याख्यातवान् भाष्यकारः, भाष्यसंमत एवार्थे शब्दानां साधुत्वं यथोत्तरं मुनीना प्रामाण्य मितिसिद्धान्तात्।

**एवं ''भीत्रार्थानां भयहेतुः'' 1-4-25 इत्यनुशासनाद्भयार्थानां त्राणार्थानां च धातूनां योगे भयहेतु रपादानसंज्ञः स्यादित्यर्थकात् 'चोराद् बिभेति, 'चोराद्धनिकं त्रायते' इत्यत्र पञ्चमी। अत्र हेतुमत्त्वं पञ्चम्यर्थः। आद्ये भयं धात्वर्थः। द्वितीये भयाभावानुकूलोव्यापारः, नतु भयाभावमात्रं कैश्चिदुक्तम्। तथात्वे धनिकस्य त्वन्मते धात्वर्थतावच्छेदकफलाभावेन तदाश्रयस्य कर्मत्वानुपपत्तेः। अस्मन्मतेतु व्यापारस्य भयाभाव एव फलमिति तदुपपत्तिः। आख्यातार्थ आश्रयत्वम्। स्वाश्रयधात्वर्थवत्त्वमुभयत्र संसर्गः। चोरहेतुक भयाश्रयत्वं चोरहेतुकभयाभावानुकूलव्यापाराश्रयत्व मिति शाब्दबोधः।**

**''कस्यबिभ्यति देवाश्च जातरोषस्य संयुगे'' इत्यादौतु कस्यसंयुगे इत्येवं संयुगघटितसंबन्धेन भावनान्वयात् षष्ठी। नचैवं संयुगस्यैवापादानत्वापत्तिः, परयाऽधिकरणसंज्ञया बाधात्। अधिकरणत्वाविवक्षाया मिष्टापत्तेः।**

लाक्षणिकं पाणिनीयं सूत्रं व्याचष्टे – **एवं भीत्रार्थानामिति** भीति = भीः, त्राणं = त्राः संपदादित्वात् क्विप्, भीश्च त्राश्च भीत्रौ, भीत्रावर्थौ येषां ते – भीत्रार्थाः। ते च बिभेति उद्विजते, त्रायते, अवति रक्षतीत्यादयः, तदाह – **भयार्थानां त्राणार्थानां चेति** भयमनिष्टज्ञानम्, तदेकदेशोऽनिष्टं सूत्रे भयशब्देनोच्यते, अत उभयसाधारण्येन विशेषणं भयहेतु' रिति। कैश्चित् = कैश्चिद्वैयाकरणैः, तथात्वे = भयाभावमात्रस्य त्राधात्वर्थत्वे, त्वन्मते = भयाभावमात्रार्थकत्वं वदतस्तवमते, तन्मते इति क्वचित् पाठः, तदुपपत्तिः = भयाभावरूपफलाश्रयत्वेन कर्मत्वोपपत्तिः, **स्वाश्रयेति** स्वं = हेतुमत्त्वं, तदाश्रयो यद्भयं तदाश्रयत्व-मित्यर्थः, हेतुश्चोरः, तद्वत् = भयम्, तदाह **चोरहेतुकेति** रामायणप्रयोगेऽनुपपत्तिमाशंक्य परिहरति – **कस्येति**, नारदं प्रति वाल्मीकेर्वचनमिदम्, बिभ्यतीति लट् प्रथमपुरुषबहुवचनान्तम्, अत्रभी धातुयोगात् कस्मादिति पञ्चम्यन्तेन भाव्यमिति शङ्कितुराशयः, किमो धातुना न योगः, किन्तु संयुगेन अतो न पञ्चमीत्याह – **कस्य संयुग इति नचैवमिति** संयुगस्य धातुना योगात् संयुगादिति पञ्चम्यन्तेन भाव्यमिति भावः, समाधत्ते **परयेति इष्टापत्तेरिति** स्पष्टं चेदं प्रकृतसूत्रे प्रौढमनोरमायाम्। तदा कस्य संयुगाद् बिभ्यतीत्येव प्रयोगः, अधिकरणत्वविवक्षया रामायण प्रयोग इति भावः।

केचित्तु – कस्य संयुगे इत्येवमन्वये भयहेतुविषयकत्वं जिज्ञासायां स्पष्टतया न लभ्यते, अत, स्तस्य धात्वर्थान्वय एव विवक्षितः। प्रकृतसूत्रे भयहेतु रित्युक्तेर्हेतुहेतुमद्भावेनान्वयो त्रापादानत्वनिमित्तमिति हेतुतृतीया पवादोऽयं, न तु शेषषष्ठ्यपवादः, अतो हेतुत्वाविवक्षायां शेषषष्ठ्या कस्य बिभ्यतीति धात्वर्थान्वयेपि न दोषः। ध्वनितं चेदं ''हेतुमत्त्वं पञ्चम्यर्थ'' इति वदता श्रीमता खण्डदेवेने-ति वदन्ति।

इदमपि सूत्रं भाष्ये प्रत्याख्यातम् ''य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद्भवति, स पश्यति यदीमं चोराः पश्यन्ति, नूनमस्य वधबन्धनादि परिक्लेशा, इति, सबुध्या संप्राप्य निवर्तयति, तत्र ''ध्रुवमपायेपादानमित-येव सिद्ध'' मिति भाष्यम्।

**एवं ''पराजे रसोढः'' 1-4-26 इतिसूत्रात् पराजेर्धातोर्योगेऽसह्योर्थो पादानसंज्ञः स्यादित्यर्थकाद् 'अध्ययनात्पराजयते' इत्यत्र पञ्चमी। अत्र धात्वर्थोऽनिष्टम्। पञ्चम्यर्थो जन्यत्वम्। अध्ययनजन्यानिष्टाश्रयत्व मिति शाब्दबोधः। 'शत्रून् पराजयते' इत्यत्रतु**

**शत्रुनिष्ठानिष्टसाधनानुकूलकृत्याश्रयत्वमिति बोधाद् द्वितीया। केचित्तु — असहनं धात्वर्थः। अध्ययनं न सहते इति विवरणादित्याहुः।**

तादृशं पाणिनीयं व्याचष्टे — **एवं पराजेरिति पराजेर्धातोरिति**, परा इत्युपसर्गपूर्वक ज़ि धातोरित्यर्थः। असह्यः = सोढुमशक्यः। अर्थः = अध्ययनादिविषयः, अत्र = उदाहरणे, अनिष्टं = दुःख, दुर्धरत्व-परिभवादि, जन्यत्वं = लक्षणया, **शत्रुनिष्ठेति** राज्यनाशादिदुःखरूपफलाश्रयत्वाच्छत्रूणां कर्मत्वाद् द्वितीयेति भावः। एवं चानिष्टमात्रार्थकत्वेऽकर्मको धातुरिति उदाहरणम्, त्रायतेरिव तत्साधनानुकूलव्यापारार्थकत्वे सकर्मकत्वे प्रत्युदाहरणम्। आत्मनेपदं तूभयत्रापि। "विपराभ्यां जे" 1-3-19 रित्यत्रात्मनेपदविधायकेऽविशेषादुभयोरपि ग्रहणादिति बोध्यम्, **केचित्त्विति** अत्र मते पञ्चम्यर्थो विषयत्वम्, अध्ययन विषयकसहनाभावाश्रयत्वं चैत्रीयमिति बोधः।

इदमपि सूत्रं भाष्ये प्रत्याख्यातम् — इत्थं हि तद्भाष्यम् — "य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति — दुःख मध्ययनं दुर्धरं च गुरवश्च दुरुपचारा — इति — सबुध्यासंप्राप्यनिवर्तते, तत्र "ध्रुवमपाये पादान" मित्येव सिद्धमिति।

**एवं "वारणार्थाना मीप्सितः" 1-4-27 इतिसूत्राद् वारणार्थानां योगे ईप्सितोर्थो पादानसंज्ञः स्यादित्यर्थकाद् 'यवेभ्योगां वारयति' इत्यादौ पञ्चमी। अत्र पञ्चम्यर्थः प्रतियोगित्वम्। द्वितीयार्थो वृत्तित्वम्, धात्वर्थश्च विनाशानुकूलव्यापाराभावानुकूलव्यापारः, यत्नश्चाख्यातार्थः। पञ्चम्यर्थस्य स्वनिरूपकविनाशघटितः संसर्गः। द्वितीयार्थस्य धात्वर्थतावच्छेदकीभूतव्यापाराभावद्वारकः। तथाच यवप्रतियोगिक विनाशानुकूलो भक्षणादिरूपो यो व्यापारः, तस्य गोवृत्तिर्योऽभाव, स्तदनुकूलव्यापारानुकूलकृति र्देवदत्तवृत्तिरिति बोधः पर्यवसितः। अत्र च यवानां वस्तुत ईप्सितत्वा त्पञ्चमी। नचैवं गो रीप्सितत्वा त्पञ्चम्यापत्तिः, तस्या ईप्सिततमत्वेन कर्मत्वोपपत्तेः। एतदर्थमेवहि "कर्तुरीप्सिततमः" मित्यत्र तमब्ग्रहण मित्युक्तं कौस्तुभे। धात्वर्थतावच्छेदकीभूतस्य विनाशानुकूलव्यापारध्वंसस्य गोमात्रवृत्तित्वात्तत्रैव द्वितीया।**

लाक्षणिकं पाणिनीयमनुशासनान्तरं व्याचष्टे — **एवं वारणार्थानामिति** वारणार्थकानां धातूनामित्यर्थः, ते च वारयति, निवर्तयतीत्यादयः, वृञ् आवरणे इति चौरादिको धातुः, वृतुवर्तने इति धातोर्निपूर्वकाद् हेतुमण्णिच्। अत्र = प्रकृतोदाहरणे, प्रतियोगित्वं = लक्षणया, **विनाशानुकूलेति** विनाशानुकूलव्यापारो गवादिनिष्ठः, स चाप्रधानम्, तदभावानुकूलव्यापार = श्चैत्रादिनिष्ठः, स च प्रधानम्, **स्वनिरूपकेति**, स्वं = प्रतियोगित्वं, द्वितीयार्थस्य = वृत्तित्वस्य। व्यापाराभावद्वारकः = गोनिष्ठाभावद्वारकः, शाब्दबोधं दर्शयति **तथा चेति** गोनिष्ठव्यापारं दर्शयति, **भक्षणादिरूप इति** देवदत्तनिष्ठव्यापारं दर्शयति **तदनुकूलेति**, अभावानुकूलो दण्डोद्यमनताडनादिरूपो व्यापार इत्यर्थः, अत्र च = प्रकृतोदाहरणे, वस्तुतः = वस्तुगत्या, ईप्सितत्वात् = गोनिष्ठभक्षणरूपव्यापारजन्य नाशरूपफलशालित्वात्, सूत्रे ईप्सितशब्दस्य यौगिकत्वादिति भावः, **न चैवमिति**, तद्धात्वर्थ चैत्रीयव्यापारजन्याभावरूपफलशालित्वाद्गोरपि तत्त्वापत्तिरिति भावः। समाधत्ते — **तस्या इति कर्मत्वोपपत्तेरिति**, कर्मसंज्ञासूत्रे तमपो ग्रहणेन प्रधानक्रियाया एव ग्रहणम्, प्रकृतसूत्रे तमपोऽभावेन क्रियामात्रस्य ग्रहणम्, तेन गोनिष्ठाप्रधानक्रियाजन्यफलाश्रये यवादावपादानत्वस्य चरितार्थतया चैत्रनिष्ठप्रधानव्यापारजन्याभावरूपफलाश्रये गवादौ परत्वात्कर्मत्वमेव प्रवर्तत इति भावः, **एतदर्थमेवेति**, अपादानत्वकर्मत्वयोर्विषयव्यवस्था सिध्द्यर्थमेवेत्यर्थः, अन्यथा गमिपच्यादौ चरितार्थं कर्मत्वं वारयतियोगे विशेष विहितेनापादानत्वेन बाध्येत। तथाच गवादावप्यपादानत्वात्पञ्चमी

स्यादिति भावः। **कौस्तुभे इति** द्वितीयाध्याये प्रथमपादे पञ्चमे संमार्गाधिकरण इत्यर्थः, स च कौस्तुभग्रन्थोऽत्र द्वितीयाप्रकरणे "यथा चैवं सति न सूत्रद्वय वैयर्थ्यं तथा कौस्तुभे विस्तर" इति ग्रन्थव्याख्यावसरेऽस्माभिः प्रदर्शितः, कर्मसंज्ञासूत्रे तमपो ग्रहणस्य प्रयोजनान्तरमप्यत्रैव ग्रन्थे "स्पृहेरीप्सितः" 1-4-36 इति सूत्रे प्रतिपादितम्, एनमेवार्थं विशदयति **धात्वर्थतेति विनाशानुकूलेति** तदनुकूलव्यापारो गोनिष्ठो भक्षणरूपः, तद्ध्वंसरूपफलस्येत्यर्थः, **गोमात्रेति** चैत्रनिष्ठव्यापारस्य प्रधानतया तज्जन्यध्वंसरूपफलस्य तन्मात्रवृत्तित्वादित्यर्थः, एवशब्देन यवादेर्व्यावृत्तिः, तत्र गोनिष्ठ-भक्षणरूपाप्रधानव्यापारजन्यनाशरूपफलाश्रयत्वस्यैव सत्त्वात्, तत्रैव = गवादावेव, यवादौ तु निरुक्तरीत्या पादानत्वात्पञ्चम्येवेति भावः।

**एवं 'कूपादन्धं वारयती' त्यत्र वृत्तित्वं पञ्चम्यर्थः। पतनानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः। तथाच कूपवृत्ति अधः प्रदेशावच्छिन्नसंयोगानुकूलक्रियारूपं यत्पतनं, तदनुकूलो-योऽन्धवृत्तिव्यापार, स्तदभावानुकूलो योव्यापार, स्तदनुकूलकृति श्चैत्रवृत्ति रितिबोधः पर्यवसितः।**

उदाहरणान्तरं दर्शयति – **एवं कूपादन्धमिति** अत्र पूर्वापेक्षया वैलक्षण्यं दर्शयति, **वृत्तित्वं पञ्चम्यर्थ इति** पतनपदार्थमाह – **अधः प्रदेशेति** अन्धवृत्तिव्यापारः = कूपाभिमुखगमनम्।

**एवं 'पुष्पेभ्य आतपं वारयती' त्यत्रापि शुष्कीभावानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः। पुष्पवृत्तिशुष्कीभावानुकूलव्यापाराभावो य आतपनिष्ट, स्तदनुकूलेत्यादिः पूर्ववद् बोधः।**

**'अग्ने र्माणवकं वारयती' त्यादौ जन्यत्वं पञ्चम्यर्थः। दाहानुकूलेत्यादि र्धात्वर्थः।**

उदाहरणान्तरं दर्शयति – **एवं पुष्पेभ्य इति** अत्रोदाहरणे धात्वर्थे विशेषमाह – **शुष्कीभावेति**, उदाहरणान्तरमाह – **अग्नेरिति** अत्र वैलक्षण्यमाह – **जन्यत्वं पञ्चम्यर्थ इति** धात्वर्थेपि तद्दर्शयति, **दाहेति**,

**न चैव मननुगमः, अनुभवानुरोधेन लक्षणाया मननुगमस्या दोषत्वात्, यवेभ्यो गां वारयति अन्यथा भक्षयिष्यतीति, कूपादन्धं वारयति पतिष्यतीति, पुष्पेभ्य आतपं वारयति शुष्काणि भविष्यन्तीती, अग्ने र्माणवकं वारयति दग्धोभविष्यतीति प्रयोजनस्य भेदेन विवरणात्।**

**न चैवमिति** एतत्सूत्रोदाहरणेषु धातोस्तदनुरोधेन विभक्तेश्च भिन्नभिन्नार्थकत्वस्वीकारेऽननुगमः, शक्यतावच्छेदकस्यैकस्य वक्तुमशक्यत्वादिति शङ्कितुराशयः, नेदं शक्यार्थबोधकं सूत्रं, किंतु लक्ष्यार्थबोधकम्, तत्र च यथानुभवं लक्षणा स्वीकर्तव्यैव, एतादृशे स्थलेऽननुगमो न दोषायेत्याशयेन समाधत्ते – **अनुभवानुरोधेनेति** प्रयोजनानुरोधेनेत्यर्थः। तमेव दर्शयति, **यवेभ्य इत्यादिना प्रयोजनस्य भेदेन विवरणादित्यन्तेन ग्रन्थेन**।

**अन्येत्वनुगमरसिकाः – सर्वत्र संयोगजनकव्यापाराभावस्य कर्मकारकवृत्ते रनुकूलो यो व्यापारः, स एव धात्वर्थः। वृत्तित्वं च पञ्चम्यर्थ-इत्याहुः, तन्न, यवेभ्यो गोसंयोगं वारयति, यवेभ्यः कार्मणिकं वारयतीत्यादा वनुगमानुपपत्तेः।**

**अनुगमरसिका इति** सोल्लुण्ठनमिदं वचनम्। धात्वर्थस्या नुगतिं दर्शयति – **संयोगेति** विभक्त्यर्थस्य तं दर्शयति, **वृत्तित्वं च पञ्चम्यर्थ इति** रसिकपदेन सूचितामरुचिं दर्शयति, **गोसंयोगमिति**, संयोगवृत्तिसंयोगस्यासंभवादत्र प्रकारान्तरस्यावश्यकत्वादननुगमापत्तिस्तदवस्थैवेति भावः।

**कार्मणिकमिति** ''मूलकर्म तु कार्मण'' मित्यमरः, मूलैः क्रियमाणं कर्म = कार्मणम्, ''कार्मणं मन्त्रतन्त्रादियोजने कर्मणि स्मृत'' मिति विश्वप्रकाशः, कार्मणेन जीवतीत्यर्थे'' ''वेतनादिभ्यो जीवती'' 4-4-12 त्यनेनं ठक्, कार्मणिकः, तं यवेभ्यो वारयतीत्युदाहरणवाक्यार्थः, यवान् विहायैवान्यत्र भवता कार्यं कर्तव्यमित्यर्थलाभादत्र · संयोगस्य प्रसक्तेरेवाभावात्प्रकारान्तरस्यावश्यकत्वादननुगमापत्ति तादवस्थ्य-मिति भावः।

**ननु ''वारणार्थाना मीप्सितः'' इतिसूत्रे न तावदीप्सिते वारयतिक्रियायोग एवा पादानत्व-नियमः। 'इष्टा दन्ना दंशं ददाती' त्यादौ तदभावेपि दर्शनात्। नापि वारयत्यर्थयोगे ईप्सित एवेति नियमः, सर्पाद्वारयति, गङ्गास्नानाद्वारयतीत्यादा वनीप्सितेपि दर्शना, दितिः, चेत् न, निवार्यनिवारकान्यतरस्ये प्सित इति तदर्थात्। सर्पादयो हि निवारकस्याऽनिष्टा अपि पुरोवृत्तित्वादिना निवार्यस्येष्टा एवा 'पुष्पेभ्य आतपं वारयती' त्यादौ निवार्यस्या चेतनत्वा न्निवारकग्रहणम्।**

ईप्सितशब्दस्य निष्कृष्टमर्थं प्रतिपादयितुमुपक्रमते – **नन्विति** तदभावेपि = वारयति धातुयोगाभावेपि, तदर्थात् = ईप्सितशब्दस्यार्थात्, सर्पादीनामीप्सितत्वं दर्शयति – **सर्पादय इति पुरोवृत्तित्वादिनेति** अत एव विषाद्वारयतीति प्रयोगसंगतिः, विषस्य विषत्वेनाऽनीप्सितत्वेपि भक्ष्यत्वेनेप्सितत्वात्, निवार्यपदस्य प्रयोजनमाह – **पुष्पेभ्य इति** निवार्यस्य = आतपस्य।

**अथवा धात्वर्थतावच्छेदकीभूतस्य विनाशानुकूलव्यापाराभावरूपस्य फलस्य यत्फलं विनाशादि तत्संबन्धित्वेन प्रसक्तस्य यवादे स्तद्विपरीतत्वेन निवारकेच्छाविषय इति तदर्थ इति न कश्चिद्दोषः।**

उभयनिवेशे गौरवात्कल्पान्तरमाह – **अथवेति** फलस्य = प्रधानफलस्य, व्यापारस्य प्रधानत्वा-त्तज्जन्यस्यापि प्रधानत्वम्, यत् फलम् – अप्रधानफलम्, तद्विपरीतत्वेन = विनाशाद्यसंबन्धित्वेन, शुष्कीभावासंबन्धित्वेन पुष्पाणां चैत्रीयेच्छाविषयत्वापादानत्वं सिद्धम्, इष्टादन्नादंशं ददातीत्यत्र पृथक् कृत्येति क्रियाध्याहारेणान्नस्योपात्त विषयरूपमपादानत्वं च सिध्यतीति भावः। तदाह – **न कश्चिद्दोष इति।**

## (सूत्राणां प्रत्याख्यानाभिप्रायः।)

**वस्तुतस्तु – बहुधैतानिसर्वाणि सूत्राणि भाष्यकारेण प्रत्याख्यातानि। तस्यायमाशयः – 'ध्रुवमपाये'' इति सूत्रेहि न वस्तुत एव क्रियाजन्यो विभागो भिप्रेतः, अपितु तर्कितोपि, यदी यं क्रिया न स्या त्तदाकर्मकारकेणा पादानस्य संबन्धः स्यात्, क्रिययातु सनिवारित इति तदभावो जनित इति। तदभिप्रायमेव चापायपदम्। आवश्यकं चैतादृशं व्याख्यानम्। 'असंयूक्तादेव चोरा त्पलायित' इत्येतदर्थम्। ततश्च तत्सूत्रेणैव यवादेरप्यपादानत्वसिध्या सूत्रान्तरवैयर्थ्य-मिति। नचैवं गवादेरपि तादृशाभावाश्रयत्वा दपादानत्वापत्तिः, ईप्सिततमत्वादिप्रयुक्तकर्मसंज्ञया परत्वेना पादानत्वसंज्ञाया बाधात्। वैपरीत्येन विवक्षायामिष्टापत्ते श्च। न च विवक्षायामुभयोरप्य पादानत्वापत्तिः। वारयतेः सकर्मकत्वेनान्यतरस्य कर्मत्वविवक्षाया आवश्यकत्वात्।**

एवमपि सूत्रारम्भपक्षे, असंयुक्तादेव चोरात्पलायित इति वक्ष्यमाणप्रयोगानिर्वाहात्तदर्थं भाष्यकारीय व्याख्यानस्यावश्यकत्वात्तन्मतमेव युक्तमित्याशयेन भाष्यानुसारेण सूत्र प्रत्याख्यान प्रकारं दर्शयति — **वस्तुतस्त्विति** बहुधा = बहुभिः प्रकारैः, सर्वाणि सूत्राणि = "भीत्रार्थानां भयहेतु" रित्यादीनि सप्त सूत्राणि, इदमुपलक्षणम्, जुगुप्साविराम — यतश्चाध्वकाल इति वार्तिकयोरपि, वारणार्थानाम्, आख्यातोपयोगे. इति सूत्रद्वयप्रत्याख्यान प्रकारो मूले दर्शितः, इतरेषां तत्प्रकारो मया दर्शितः, दर्शयिष्यते च, भाष्यकारेण = भगवता पतञ्जलिना महाभाष्यकारेण, तस्य = प्रत्याख्यातु भाष्यकारस्य, वस्तुत एव = वास्तव एव, यथा वृक्षपर्णयोः संयुक्तयोः पतनक्रियया जातो विभागः। तर्कितोपि = बुद्धिकल्पितोपि, तत्स्वरूपं दर्शयति — **यदीयं क्रियेति** चैत्रीय क्रिया यदि न स्यादित्यर्थः, कर्मकारकेण = गवादिना, अपादानस्य = यवादेः, क्रियया तु = चैत्रीय क्रियया तु, सः = सम्बन्धः। तदभावः = यवनाशाभावः, इत्थं हि प्रत्याख्यानभाष्यम् — "स पश्यति — यदीमा गावस्तत्र गच्छन्ति ध्रुवं सस्य नाशः, सस्य विनाशेऽधर्मश्चैव, राजभयं च — सबुध्द्या संप्राप्य निवर्तयति, तत्र ध्रुवमपाये पादान" मित्येवसिद्ध, मिति, भाष्यमतमेव ज्याय इत्याह — **आवश्यकं चेति** एतादृशं व्याख्यानम् = न बाह्यविभाग एवापाय शब्दार्थः, किंतु बुध्द्योत्प्रेक्षितोपि, एवं रूपं व्याख्यानम्। **इत्येतदर्थमिति**, एवं च भाष्यमतेन अप्रवृत्तवारणेपि यवेभ्यो गां वारयतीति, कदापि धर्मानाचरणेपि धर्माद्विरमतीति, अध्ययनाभावेपि अध्ययनात्पराजयते इति प्रयोगाणां साधुत्वं सिध्यतीति बोध्यम्, तत्सूत्रेणैव = "ध्रुवमपाये पादान" मिति सामान्यसूत्रेणैव, **सूत्रान्तरेति** भीत्रार्थानामित्यादि सप्तसूत्र्या जुगुप्साविरामेत्यादि वार्तिकयोश्च वैयर्थ्यमित्यर्थः, इति शब्दो भाष्याशयसमाप्तिसूचकः, **न चैवमिति**, तादृशापायस्य गवादावपि सत्त्वादिति भावः, समाधत्ते — **ईप्सिततमत्वेति** वैपरीत्येन = गवादेरेव प्रधानव्यापारजन्यफलाश्रयत्वेन विवक्षायाम्, **न चेति** यवादीनां गवादेश्चैकस्वामिकत्वे इयं शङ्का।

**एवम् "अन्तर्धौ येनादर्शन मिच्छती" 1-4-28 त्यनेन अन्तर्धौ = व्यवधाने सति यत्कर्तृकस्यात्मनो दर्शनस्या भावमिच्छति, तदपादानं स्यादित्यर्थकेन 'मातु र्निलीयते कृष्णः' इत्यादौ पञ्चमी। अत्र च प्रत्यक्षाभावेच्छापूर्वकः प्रत्यक्षविरोधिव्यापारो धात्वर्थः, वृत्तित्वं पञ्चम्यर्थो धात्वर्थ तावच्छेदके प्रत्यक्षेन्वेति, विरोधित्वं तज्जनकलौकिकसंनिकर्षाभावानुकूलत्वम्। कृति राख्यातार्थः। तथाच मातृवृत्तिस्वविषयकप्रत्यक्षाभावेच्छापूर्वको यः प्रत्यक्षजनकलौकिकसंनिकर्षा भावानुकूलव्यापार, स्तदनुकूलकृतिः कृष्णवृत्ति रिति शाब्दबोधः, व्युत्पत्तिबलेन च प्रत्यक्षे कृष्णविषयत्वस्य बोधः पार्ष्टिकः।**

तादृशं सूत्रान्तरं व्याचष्टे — **एवमन्तर्धाविति** अन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलव्यवहितदेशस्थितिरन्तर्धिः। तद्दर्शनकर्तुरनेनापादानत्वम्, येनेति कर्तरि तृतीया, "कर्तृकर्मणोः कृती" 2-3-65 ति षष्ठी तु न, सौत्रत्वात्, तद् '= दर्शनकर्तृ, **निलीयत इति** लीङ्श्लेषणे, दैवादिकः, एव मन्तर्धत्ते इत्यादियोगेप्यपादानत्वात्पञ्चमी, प्रत्यक्षाभावेच्छापूर्वकः = मा मां माता द्राक्षीदितीच्छापूर्वकः, विरोधिव्यापारः = व्यवहितदेशस्थितिरूपः, **मातृवृत्तीति** मातृवृत्ति यत् स्वविषयकं प्रत्यक्षं स्वं = कृष्णः, तदभावेत्यर्थः, चौरा न्न दिदृक्षते इत्यत्र चौराणामपादानत्ववारणाय सूत्रे "अन्तर्धा" विति, चैत्रादिस्तैरात्मनोऽदर्शनमिच्छति, न त्वन्तर्धिनिमित्तम्, किन्तूपघातनिवृत्यर्थम्, सूत्रे येनेत्यस्याभावे स्वकर्मकदर्शनाभावं य इच्छतीत्यर्थे कर्तुरेवापादानत्वप्रसङ्गः। तद्वारणाय येनेति, अदर्शनेच्छया तदनुकूलव्यापार करणे दैववशाद् दर्शने सत्यपि अपादानत्वसिद्धये 'इच्छति' ग्रहणम्, अन्यथा यत्र दर्शनाभाव स्तत्रैव स्यात्,

इदमपि सूत्रं भाष्ये प्रत्याख्यातम्, "पश्यत्ययम्, यदिमामुपाध्यायः पश्यति, ध्रुवं मे प्रेषणमुपालम्भोवेति, सबुध्द्या संप्राप्य निवर्तते, तत्र "ध्रुवमपाये पादानमित्येव सिद्धमिति भाष्यम्।

**एवं नियमपूर्वकविद्यास्वीकारे वक्ता पादानसंज्ञः स्यादित्यर्थकेन "आख्यातो पयोगे" 1-4-29 इतिसूत्रेण 'उपाध्याया दधीते' इत्यत्र पञ्चमी। अत्रोच्चारणोत्तरकालीन मनभ्यस्तोच्चारणं धात्वर्थः। वृत्तित्वं पञ्चम्यर्थः।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं नियमपूर्वकेति** उपयोगशब्दस्तत्रैव रूढ इति भावः, नियमः = ब्रह्मचर्यादिः, आख्यातृशब्दार्थमाह – **वक्तेति**, प्रतिपादयितेत्यर्थः, आङ्पूर्वकात् चक्षिङ् (व्यक्तायां वाचि) इति धातोः कर्तरि तृचि धातोः ख्याञादेशे आख्यातेति रूपम्, अत्र = उदाहरणे, **उच्चारणोत्तरेति** उपाध्यायकर्तृकोच्चारणोत्तरकालिकमित्यर्थः,

**इदमपि सूत्रं भाष्यकारेण प्रत्याख्यातम्। उच्चारण क्रियाजन्यशब्दजनकस्वसमानजातीय-शब्दाना मुपाध्यायमुखा न्निस्सृतत्वेनो पाध्यायस्य क्रियाजन्यविभागाश्रयत्वात् "ध्रुवमपाये" इति सूत्रेणैव तत्सिद्धेः।**

**प्रत्याख्यातमिति** इत्थं हि तद्भाष्यम् "अयमपियोगः शक्योऽकर्तुम्, कथम् उपाध्यादधीत इति" अपक्रामति तस्मात्तदध्ययनम्, यद्यपक्रामति, किं नात्यन्तायापक्रामति? सन्ततत्वात् इति। तद्भाष्यार्थमादाय प्रकृते समन्वयं दर्शयति – **उच्चारणेति** शिष्योच्चारण क्रियया जन्या ये शब्दा, स्तज्जनकाः, स्वसमानजातीयाश्च ये शब्दास्तेषामित्यर्थः, अत्र निस्सरणक्रियाध्याहारेणोपाध्यायस्यापादानत्वं "ध्रुवमपाये पादान" मिति सूत्रेणेत्याशयेनाह – **निस्सृतत्वेनेति क्रियाजन्येति** निस्सरण क्रियाजन्येत्यर्थः।

**न चैवंविधस्य विभागस्य मुख्यविभागत्वाभावाद् न एकविधत्व मपादानत्वस्येति वाच्यम्। नानाविधानामेवंजातीयकाना मपादानत्वानां व्यापकीभूताखण्डोपाधिरूपापादानत्व एव तात्पर्यात्। अत एव एवंविधाः प्रयोगाः सर्वे शक्ता एवेत्यपि शक्यं वक्तुम्। तज्ज्ञापनमेव च प्रत्याख्यानफलम्। उक्तविधतत्तद्रूपेण निरूढलक्षणया बोधसिध्द्यर्थं तत्तत्सूत्राणीति मत्वाऽस्मा-भि रन्यैश्च तत्तत्सूत्राणि व्याख्यायन्ते।**

यत्तु शब्दकौस्तुभे प्रथमाध्यायचतुर्थपादे तृतीयाह्निके "भुवः प्रभवः" 1-4-31 इति सूत्रे भट्टोजिदीक्षिताः – चोराद् बिभेति उपाध्यायादधीते इत्यादौ निवृत्तिनिस्सरणादि धात्वन्तरार्थविशिष्टे स्वार्थे धातोर्वृत्तिमाश्रित्य यथाकथञ्चिदुक्तप्रयोगाणां समर्थनेपि मुख्यार्थपुरस्कारेण षष्ठी प्रयोगो दुर्वारः, नटस्य शृणोतीतिवत्। न ह्युपाध्यायनटयोः क्रियानुकूलव्यापारांशे विशेषो वक्तुं शक्यः, अनभिधान ब्रह्मास्त्रमाश्रित्य प्रत्याख्यानं तु नातीव मनोरमम्, एवं च "जुगुप्साविरामे" त्यादि वार्तिकमप्यारम्भ-णीयम्, तथा च सूत्रवार्तिकमतमेवेह प्रबल" मिति निरणैषुः।

तन्न युक्तम्, अपादानत्वमखण्डोपाधिरूपम्, चोराद्बिभेतीत्यादयः प्रयोगाः शक्ता एवेत्याशयकं प्रत्याख्यानपरभाष्यम्। निरूढलक्षणाश्रयणेन प्रयोगो बोधश्च, उक्त प्रयोगा लाक्षणिका एवेत्याशयकं सूत्रं वार्तिकं चेतिव्यवस्थया समन्वेतुं शक्यत्वादित्याशयेन प्रथमतो भाष्यकारस्याशयं प्रकटयति – **न चैवं विधस्येत्यादिना प्रत्याख्यानफलमित्यन्तेन ग्रन्थेन**, एवं विधस्य = बुद्धिपरिकल्पितस्य, **मुख्यत्वाभावादिति** वृक्षात्पर्णं पततीत्यादिसाधारण्येनापादानत्वस्यैकरूप्यं न सिध्यति, विभागजनकनिवर्तनादि क्रियाणां नानात्वेन तस्यापि भिन्नरूपत्वावगतेरिति भावः। तथाच "ध्रुवमपाये पादान" मिति सूत्रावष्टम्भेन तत्तत्सूत्रप्रत्याख्यानं न घटत इति तात्पर्यम्। नानाविधानाम् = गौणमुख्यविभागाश्रयत्वरूपाणाम्, **तात्पर्यादिति** अपादानत्वस्य सखण्डत्वे निरुक्तरीत्या तस्याननुगतत्वादनुगतापादानत्वबोधकेन "ध्रुवम-पाये पादान" मिति सूत्रेण सिद्धिमाश्रित्य तत्तत्सूत्रप्रत्याख्यानं भाष्यकारस्य न संगच्छेत, अतः प्रत्याख्याना

न्यथानुपपत्त्या भगवतः पतञ्जलेरपादानत्वस्याखण्डत्व एव तात्पर्यमवगम्यत इति भावः। अत एव = अपादानत्वस्याखण्डत्वस्वीकारेण चोराद्बिभेतीत्यादावपि सामान्यसूत्रेण पञ्चम्याः समर्थनादेव, एवं विधाः प्रयोगाः = बुद्धिकृतविभागाश्रयणेन समर्थिताः प्रयोगाः, शक्ता एव = तत्सूत्रस्य प्रचुरप्रयोगाच्छक्यार्थबोधकत्वात्, तज्ज्ञापनमेव = अपादानत्वाखण्डत्वज्ञापनं, तद्द्वारा चोराद्बिभेतीत्यादीनां शक्तत्वज्ञापनं च, एवं भाष्याशयमुपवर्ण्य सूत्रवार्तिककारयोराशयं विशदयति — **उक्तविधत-त्तद्रूपेणेति** विषयित्वहेतुमत्त्वजन्यत्व प्रतियोगित्व वृत्तित्वादिरूपेणेत्यर्थः, प्रचुरप्रयोगाभावादेषां लाक्षणिकानुशासनत्वमित्याह — **निरुढलक्षणयेति** तत्तत्सूत्राणि = "भीत्रार्थानां भयहेतु" रित्यादीनि सप्तसूत्राणि, जुगुप्सेत्यादिवार्तिकद्वयं च,। संवादार्थमाह — **अन्यैश्चेति** नैयायिकैश्चेत्यर्थः, एवं चोत्तमाधिकार्युद्देशेन भाष्यं सूत्रवार्तिकानि प्रत्याचष्टे, अत एवोक्तं भाष्यकृता — य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति।। यदीमं चौराः पश्यन्ति, इत्यादि। मध्याधिकार्युद्देशेन सूत्रवार्तिकारम्भः, तथाच यथोत्तरं मुनीनां प्रामाण्यवादिन इव सूत्रवार्तिकयो रप्रामाण्यं, भट्टोजिदीक्षिता इव महाभाष्यस्याप्रामाण्यं न वयं स्वीकुर्मः, किंतु निरुक्तव्यवस्थयाऽऽरम्भप्रत्याख्यानपक्षयोरुभयोरपि प्रामाण्यमुपपादयाम. इति ग्रन्थकृतो, निगूढाशयः, तदेतत्सर्वमभिप्रेत्य सोत्साहमाह — **व्याख्यायन्त इति**

**एवं जायमानस्य हेतु रपादानसंज्ञः स्यादित्यर्थकेन "जनिकर्तुः प्रकृतिः" 1-4-30 इतिसूत्रेण 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यत्र पञ्चमी। अत्र जन्यत्वं पञ्चम्यर्थः। स च स्वाश्रयवृत्त्युत्पत्तिकत्वसंबन्धेना ख्यातार्थे आश्रयत्वेऽन्वेति। अत्र हेतुत्व मुपादान-निमित्तो-भयसाधारण्येन विवक्षितम्। तेन 'पुत्रात्प्रमोदोजायते' 'मृदोघटो जायते' इत्यादौ पञ्चमी। ब्रह्मणस्तूभयरूपत्वा त्पञ्चमी।**

लाक्षणिकं सूत्रान्तरं व्याचष्टे — **एवं जायमानस्येति** अयमर्थः — सूत्रे जननं जनि = रुत्पत्तिः, "जनिरुत्पत्तिरुद्भवः" इत्यमरः, "इञ्जादिभ्यः" इति जनीधातोर्भावे इञ् "जनिघसिभ्यामिण्" इत्युणादिसूत्रेण वा इण् "जनिवध्योश्चे" 7-3-35 ति वृद्धिनिषेधः, तस्याः कर्तेति शेषषष्ठ्यन्तेन समासः, तथा चार्थमात्रस्य ग्रहणाद्धात्वन्तरयोगेपि भवति "अङ्गादङ्गात्संभवसी" ति यथा-इति। एतेन इक् श्तिपौ धातुनिर्देशे" ति इका निर्देशमश्रित्य "गमहने" 6-4-98 त्युपधालोपमर्थासंगतिं चोद्भावयन्तो मीमांसावार्तिककाराः समाहिताः, प्रकृतिशब्दार्थमाह — **हेतुरिति** पञ्चम्यर्थः = लक्षणया, **स्वाश्रयेति** स्वं = जन्यत्वम्, तस्याश्रयः = प्रजाः, तद्वृत्तिर्या उत्पत्तिः, तद्वत्वसंबन्धेनेत्यर्थः, "सूत्रे प्रकृतिग्रहणं हेतुमात्रपरम्। अत एव प्रकृतिः = कारणं हेतु" रित्येव काशिकाकारैरुक्तम् न तूपादानकारणमिती" ति केचिदभिप्रयन्ति, तन्मतेनाह — **अत्र हेतुत्वमिति उभयसाधारण्येनेति** उपादानरूपमेवेति नाग्रह इति भावः, तेन = उभयसाधारणहेतुत्वस्वीकारेण **पुत्रादिति,** पुत्रो निमित्तकारणं, न तूपादानम्, **मृद इति** मृद् उपादानं न तु निमित्तम्, ब्रह्मणः प्रजाः प्रजायन्ते इति तूभयसाधारणमित्याह — **ब्रह्मणस्त्विति उभयरूपत्वादिति** ब्रह्मा = चतुर्मुखः स च निमित्तमेव, न तूपादानम्। ब्रह्म = मायाशबलं निर्गुणं, तद्धि सर्वकार्योपादानम्, यद्वा ब्रह्म = निर्गुणमेव तस्य उभयरूपत्वात् = अभिन्ननिमित्तोपादनरूपत्वात्, ब्रह्मणस्त्विति तु नाऽरुचिर्बोधिता, तद्बीजं तु सूत्रे प्रकृतिशब्द उपादानकारणपरमेव, न तूभयसाधारणम्, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा" 1-4-23 दिति ब्रह्ममीमांसायां यथा। "यत इतीयं पञ्चमी, यतो वा इमानि भूतानि जायन्ते" इत्यत्र "जनिकर्तुः प्रकृतिः" 1-4-30 इति विशेषस्मरणात्प्रकृतिलक्षण एवापादाने द्रष्टव्या" इति तत्सूत्रे श्रीमच्छङ्करभगवत्पादानां भाष्यम्। किं चान्यमते "कारके" 1-3-23 इत्यधिकृतस्य कारणसामान्यवाचिनो निर्धारण सप्तम्यन्तस्यान्वयोऽसंभवी, न हि कारणानां मध्ये उपादानकारणम-पादानमितिवत् कारणानां मध्ये कारणमपादानमित्यन्वयः संभवति, काशिकावृत्तौ हेतुपदमपि

उपादानकारणपरमेव, तथैव व्याख्यातं पदमञ्जर्यां हरदत्तमिश्रैः। पुत्रात्प्रमोदो जायते इत्यादिस्तु उपादानत्वारोपेणोपपादनीयः। दण्डात् घटो जायते इत्यादौ हेतौ पञ्चमी, किं चेदमपि सूत्रं भाष्ये प्रत्याख्यातम् अयमपि योगः शक्योऽकर्तुम्, कथं गोमयाद् वृश्चिको जायते, गोमाविलोमभ्यो दूर्वा जायन्त इति, अपक्रामन्तितास्ताभ्यः, यद्यपक्रामन्ति, किं नात्यन्तायापक्रामन्ति? सन्ततत्वादिति तद्भाष्यम्, जायमानस्योत्पत्तिपूर्वकविभागाश्रयणेन विभागस्यावधित्वेन "ध्रुवमपाये पादान" मित्यनेनैव संज्ञा सिद्धिरिति तदाशयः। प्रकृतिशब्दस्य निमित्तकारणपरत्वे तद्विषये निरुक्तरीत्या विभागासंभवेन प्रत्याख्यानपरभाष्यस्य तदर्थप्रतिपादनपरकैयटस्य चा साङ्गत्यं स्पष्टमेवे-ति।

**एवं "भुवः प्रभवः" 1-4-31 इत्यनेन भवनस्य प्रकर्षविशिष्टस्य यःकर्ता, तस्य यः प्रभवनप्रतियोगी सो पादानसंज्ञः स्यादित्यर्थकेन 'हिमवतो गङ्गा प्रभवती' त्यत्र पञ्चमी। अत्र प्रकर्षः संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वम्। धात्वर्थश्चै तत्सर्गीयभारतवर्षस्थ भूसंयोगध्वंसासमानकालीन स्तादृशभूसंयोगः। प्रतियोगित्वं पञ्चम्यर्थः। तस्यच प्रकर्षार्थसंयोगद्वारक आख्यातार्थान्वयः। आख्यातार्थ आश्रयत्वम्। धातूपसर्गार्थभूतसर्व-संयोगेषु गङ्गावृत्तित्वं च व्युत्पत्तिबललभ्यम्। तथाच हिमवत्प्रतियोगिकगङ्गासंयोगध्वंस-क्षणाव्यवहितोत्तरक्षणवृत्त्येतत्सर्गीय भारतवर्षस्थभूगङ्गासंयोगध्वंसासमानकालीनतादृश भू-संयोगाश्रयत्वं गङ्गावृत्तिति बोधः पर्यवसितः।**

तादृशं सूत्रान्तरं व्याचष्टे – **एवं भुव इति** भवनं भूः, संपदादित्वाद्भावे क्विप्, प्रपूर्वकाद् भूधातोः "ऋदोरप्" 3-3-57 इति अप् प्रत्ययः, पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमत्रानुवर्तते, स्वरितत्वप्रतिज्ञानात्, प्रभवत्यस्मादिति प्रभवः = प्रथमप्रकाशहेतुः, प्रशब्दग्रहणात्, हेतोरधिकरणत्वविवक्षयां प्रथमप्रकाशा-धिकरणमिति लभ्यते।। तथाच भवनकर्तुर्यः प्रभवः = प्रथमप्रकाश, स्तदधिकरणं कारकमपादानसंज्ञं स्यादिति सूत्रार्थः, तदाह – **भवनस्येति** सूत्रे भुव इत्यत्रापि प्रशब्दो द्रष्टव्यः, न हि केवलस्य भवत्यर्थस्य प्रभवनेन योगः, किं तु सोपसर्गस्य भुवः इत्याशयेनाह – **प्रकर्षविशिष्टस्येति**, तथाच प्रकर्षविशिष्टस्य भवनस्य = उपलब्धेः यः कर्ता गङ्गादिः, तस्य यः प्रभवनप्रतियोगी = प्रथमप्रकाशप्रतियोगी = हिमवदादिरित्यर्थः, **प्रभवनप्रतियोगीति** अनेन "जनिकर्तुः प्रकृति" रिति पूर्वसूत्रेणास्यागतार्थत्वं सूचयति, न हि हिमवान् गङ्गायाः कारणम्, सा हि अन्येभ्य एव कारणेभ्य उत्पन्ना, हिमवति तु केवलं सा प्रथमत उपलभ्यते, **हिमवत इति** एवं काश्मीरेभ्यो वितस्ता प्रभवति, "वल्मीकाग्रा त्प्रभवति धनुः खण्डमाखण्डलस्ये" त्याद्युदाहरणम्, वितस्ता = अशोष्या ऋग्वेदप्रसिद्धा काचन नदी, वल्मीकः = सातपोमेघः, प्रभवति = प्रथमतः प्रकाशते, "प्रकाशते" इत्यनेन योगे तु नेयम्, तस्य प्रथमप्रकाशार्थकत्वाभावात्, अत्र = प्रकृतस्थले, **संयोगेति** संयोगः = भूगङ्गासंयोगः, तद्ध्वंसक्षणादित्यर्थः सर्गान्तरीय संयोगमादायातिप्रसङ्गवारणायाह – **एतत्सर्गीयेति ध्वंसासमानकालीन इति** आद्य इत्यर्थः, तादृशभूसंयोगः = एतत्सर्गीय भारतवर्षस्थ भूसंयोगः, आश्रयत्वं = लक्षणया, **धातूपसर्गेति**, **भू**-प्र एतद्धातूपसर्गेत्यर्थः, **व्युत्पत्तिबललभ्यमिति** व्युत्पत्तिः कार्यकारणभावः, अस्य प्रयोगस्य एतादृशार्थबोध एव हेतुत्वरूपः, आख्यातार्थाश्रयत्वस्य गङ्गावृत्तित्वबोधेन तद्बलात्संयोगेषु तत्त्वलाभ इति भावः। **हिमवत्प्रतियोगिकेति** तत्प्रतियोगिको यो गङ्गासंयोगस्तद्ध्वंसाव्यवहितोत्तरक्षणवृत्तीत्यर्थः, **एतत्सर्गी-येति** एतत्सर्गीय भारतवर्षस्थो यो भूगङ्गासंयोगः, (वैकुण्ठादागताया गङ्गायाः संयोगः) तद्ध्वंसासमान-कालीनः = आद्यः, य एतत्सर्गीयभारतवर्षस्थ भूसंयोगः, तादृशत्वमित्यर्थः,

**अत्र वैकुण्ठसंयोगध्वंसक्षणोत्तरं तादृशभूगङ्गासंयोगस्या द्यस्य जायमानतया 'वैकुण्ठाद्भुवि-**

**प्रभवति गङ्गे' ति प्रयोगापत्तिः, अतोऽ'व्यवहिते' ति। काशीसंयोगध्वंसाव्यवहितोत्तरक्षणे उक्तविधभूगङ्गासंयोगानां केषाञ्चिज्जायमानत्वात् 'काशीतो गङ्गा भुवि प्रभवती' ति प्रयोगापत्ते स्तादृशसंयोगध्वंसासमानकालीनेति, एवं चा द्यस्यापि संयोगस्य तदव्यवहितपूर्व-क्षणवृत्तिवैकुण्ठसंयोगध्वंसाद्यव्यवहितोत्तरत्वा द्वैकुण्ठा त्प्रभवतीति प्रयोगापत्ते रनिवारणात् प्रकर्षार्थसंयोगध्वंसक्षणस्या प्याद्यत्वविशेषणं देयम्।**

**वस्तुतस्तु 'वैकुण्ठाद् भुवि प्रभवती' ति प्रयोगस्येष्टापत्त्यैव परिहर्तुं शक्यत्वा न्न तन्निवार-णाय पदद्वयदानम्।**

प्रकषशरीरनिविष्टस्य "अव्यवहिते" त्यस्य प्रयोजनमाह – **अत्रेति** प्रकर्षशरीरे इत्यर्थः। **वैकुण्ठसंयोगेति** वैकुण्ठेस्थिता गङ्गा भुवं प्रत्यागता, तदा तस्या वैकुण्ठसंयोगो ध्वस्तः, तद्ध्वंसानन्तरं तस्या भुवा संयोगो जातः, एतत्संयोगस्य वैकुण्ठसंयोगध्वंसक्षणोत्तरक्षणवृत्तित्वाद् वैकुण्ठादिति निरुक्तप्रयोगा-पत्तिः, अतस्तद्विशेषणम्, भूसंयोगस्य वैकुण्ठसंयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वं नास्ति, अनेकै र्व्यवहितत्वात्, अतो नेयमापत्तिरिति भावः। **काशीसंयोगेति** वैकुण्ठादागताया गङ्गायाः काश्या संयोगे जाते तद्ध्वसाव्यवहितोत्तरक्षणेऽनेकसंयोगानां जायमानत्वात् काशीतो गङ्गा प्रभवतीति प्रयोगापत्तिरिति भावः, **ध्वंसासमानकालीनेति**, तादृशः भूगङ्गासंयोगानां ध्वंससमानकालिकत्वान्नेयमापत्तिः, तस्य तस्य संयोगस्याद्यत्वा भावादिति भावः, एवं च = एवमपि, **आद्यस्यापीति,** आद्येभूगङ्गासंयोगे जाते तदव्यवहितपूर्वक्षणे वैकुण्ठसंयोगध्वंसस्य विद्यमानत्वात्तदव्यवहितक्षणवृत्तित्वस्याऽऽद्यसंयोगे सत्त्वा-द्वैकुण्ठाद् गङ्गा प्रभवतीति प्रयोगो दुर्वार इति भावः, **आद्यत्वविशेषणमिति** तादृशश्च क्षणः प्राथमिकगङ्गा वैकुण्ठसंयोगध्वंसक्षण एव भवति न तु भूगङ्गाद्यसंयोगपूर्ववृत्तिक्षण इति न तदापत्तिरिति भावः, पदद्वयदानम् = अव्यवहित, आद्य इति पदद्वयदानम्।

इदमपि सूत्रं भाष्यकृता प्रत्याख्यातम् "अयमपि योगः शक्योऽकर्तुम्, कथं हिमवतो गङ्गा प्रभवतीति? अपक्रामन्ति ता स्तस्मादापः, यद्यपक्रामन्ति, किं नात्यन्तायापक्रामन्ति "सन्ततत्वा" दिति तद्भाष्यम्।

**एवं "ल्यब्लोपे कर्मण्यधिकरणे चे" त्यनेन वार्तिकेन अर्थाध्याहारादिना गम्यमाने ल्यबन्तकर्मणि अधिकरणे च पञ्चमीस्यादित्यर्थकेन 'प्रासादात्प्रेक्षते' इत्यादौ पञ्चमी। प्रासादमारुह्य प्रेक्षते, प्रासादे स्थित्वा प्रेक्षते इत्यर्थः। अत्र कर्मत्व मधिकरणत्वं वा पञ्चम्यर्थः। तस्य च स्वनिरूपकारोहणादिभावनोत्तरकालिकत्वादिसंसर्गेण प्रेक्षणभावनाया मन्वयः। न च गम्यमानक्रियायाः कथं संसर्गघटकत्वम्, 'कस्मात् त्वम्, नद्या' इत्यादा वागतादिपदाध्याहारेण गम्यमानक्रियादे र्विशेष्यत्वाद्युपपत्तौ संसर्ग घटकत्वस्य सुतरामुपपत्तेः।**

लाक्षणिकं कात्यायनवचनं व्याचष्टे – **एवं ल्यब्लोप इति** इति वार्तिकेन = इत्यर्थकेन वार्तिकेन, 'पञ्चमी विधाने ल्यब्लोपे कर्मण्युपसंख्यानम्" "अधिकरणे च" इति वचनद्वयं कात्यायनेन पठितम्, तच्च व्याख्यातृभिरेकवाक्यतया लाघवानुरोधेन प्रदर्श्यते, ननु शास्त्रे ल्यपो लोपस्याविधानात् "ल्यब् लोपे" इत्ययुक्तं स्यादत आह – **अर्थाध्याहारादिनेति, गम्यमाने इति** एतदेवात्र लोपशब्दार्थ इति भावः, अधिकरणे = प्रत्यासत्त्या ल्यबन्तार्थाधिकरणे, उभयसाधारणमुदाहरणमाह – **प्रासादादिति** कर्मणि पञ्चम्या योजयति – **अधिरुह्येति** रुहधातोः "समानकर्तृकयोः पूर्वकाले" 3-4-21 इति क्त्वा प्रत्ययः। अधिशब्दस्य क्त्वान्तेन "कुगतिप्रादयः" 2-2-18 इति गति समासः, "समासेऽनञ् पूर्वे क्त्वो ल्यप्" 7-1-37 इति क्त्वो ल्यबादेशः, कर्मणि द्वितीया बाधनेन पञ्चमी, तदेवोदाहरणं अधिकरणे सप्तम्यां योजयति,

**स्थित्वेति**, वार्तिके ल्यपो ग्रहणं स्वस्थानिनः क्त्व उपलक्षणम्, तेन प्रकृतोदाहरणसंगतिः, स्पष्टं चेद प्रकृतवार्तिके भाष्यप्रदीपोद्द्योते, उपविश्येत्येतदपेक्षया स्थित्वेत्यध्याहारेऽर्थसंगतिर्बोध्या, अधिकरणे सप्तमीबाधनेनानेन पञ्चमी। पञ्चम्या अवधित्वार्थकत्व भ्रमवारणायाह – **अत्रेति** प्रकृतवार्तिकोदाहरणे इत्यर्थः, प्रकरणानुरोधेनार्थनिर्णय इत्याह – **कर्मत्वमधिकरणत्वं वेति** प्रकरणवशेन अधिरुह्येत्यध्याहारे कर्मत्वंस्थित्वेत्यध्याहारेऽधिकरणत्वमित्यर्थः, अत्रैव तात्पर्यग्राहको "वा शब्दः, श्वशुराज्जिह्रेति, आसनात्प्रेक्षत" इति विविक्ते उदाहरणे, श्वशुरं वीक्ष्य, आसने उपविश्येति तदर्थः, प्रत्ययार्थस्याख्यातार्थ-भावनायामन्वये संसर्गमाह – **तस्य चेति** – पञ्चम्यर्थस्योभयविधस्यापीत्यर्थः। कर्मत्वाभिप्रायेणाह – **आरोहणेति**, अधिकरणत्वाभिप्रायेणाह – **आदीति**, तेन स्थितेर्ग्रहणम्।

**एवं "यतश्चाध्वकालनिर्माणं तत्र पञ्चमी, तद्युक्तादध्वनः प्रथमासप्तम्यौ, कालात्यप्तमी च वक्तव्या" इति वार्तिकाद् 'वनाद् ग्रामो योजनम्, योजने वा, कार्तिक्या आग्रहायणी मासे' इत्यादौ पञ्चमी। अत्रा वधित्वं पञ्चम्यर्थः। वनावधिकयोजनपरिमितदेशवृत्ति ग्राम इति बोधः फलितः। प्रथमार्थो प्यधिकरणत्वमेव।**

वार्तिकान्तरं व्याचष्टे – **एवं यतश्चेति** कात्यायनेन १. यतश्चाध्वकालनिर्माणम्, २. तद्युक्तात्काले सप्तमी, ३. अध्वनः प्रथमा चे" ति वचनत्रयमुक्तम्, तृतीयवाक्ये चेन प्रथमानुकृष्यते, तदा अनुवृत्तौ क्लेशः, द्वितीये तद्युक्तादित्यनुरोधेन काला दित्युचितम् अन्यथा काले इति विषयसप्तम्याश्रयणीया, अतः पाठकानां सौकर्याय वचनत्रयार्थो द्वितीय तृतीययो र्व्यत्यासेन दर्शितः, निर्माणमित्येव वार्तिकपाठः। तत इति भाष्यपाठः, तत्रेति व्याख्यानं कैयटीये, यत इति द्वितीयान्तात्तसिः, यद् अवधित्वेनाश्रित्य अध्वकालयोः, निर्माणं = निमानं परिच्छेदः क्रियते, तत्र वर्तमाना त्प्रातिपदिकात्पञ्च-मीति प्रथमवाक्यार्थः, तद्युक्तात् = पञ्चम्यन्तार्थयुक्तात् अध्वनः = मार्गवाचकात्, प्रथमासप्तम्याविति द्वितीयवाक्यार्थः, तृतीये "तद्युक्ता" दिति संबध्यते, पञ्चम्यन्तार्थेन युक्तो यः कालस्तद्वाचकात् सप्तमी च = सप्तम्येवेति तदर्थः, **पञ्चमीति** अवधिबोधकाद्वनादेः पञ्चमी, अध्ववाचकात्प्रथमासप्तम्यौ, कालात्तु सप्तम्येव, निरुक्तवार्तिकादिति भावः, कृत्तिकाभिर्युक्ता पौर्णमासी = कार्तिकी, अग्रे हायनमस्या आग्रहायणी = मार्गशीर्षपौर्णमासी, कार्तिक्या मासे आग्रहायणीत्यन्वयः, कार्तिक्या इत्यत्र स्वावयवकत्व पञ्चम्यर्थः, स्वाव्यवहितोत्तर कालवृत्तित्वं सप्तम्यर्थः, कार्तिक्यवयवकत्रिं शत्तिथ्यात्मक मासाव्यवहितोत्तरकाल-वृत्तिराग्रहायणीत्यर्थः। अत्र = सूत्रोदाहरणे, **परिमितेति** तत्परिमिताव्यवहितोत्तरदेशवृत्तिरित्यर्थः। ननु योजनशब्दात्प्रथमायां तदर्थस्य ग्रामे कथमन्वयः, न ह्यभेदेन, बाधितत्वात्, द्वयोर्नामार्थयोर्भेदेनान्वयस्या-व्युत्पन्नत्वाच्च। अत आह – **प्रथमार्थोपीति** –

उदाहरणेषु निःसृत्य, प्रभृति, गते इत्येतेषामध्याहारेण तत्रापि विभागप्रतीत्या "ध्रुवमपाये पादान" मिति सूत्रेणैवापादानपञ्चम्याः सिद्धत्वाद्वार्तिकं नारम्भणीयमिति भाष्ये प्रतिपादितम्।

**एवम् "अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" 2-3-29 इत्यनेन एभिः शब्दैर्योगे पञ्चमीस्या दित्यर्थकेन 'कृष्णादन्यः' इत्यादौ पञ्चमी। प्रतियोगित्वं चात्र पञ्चम्यर्थः। तस्य च स्वनिरूपकान्योन्याभावद्वारकपरम्परयाऽध्याहृताख्यातार्थे न्वयः। अन्य इत्यर्थग्रहण मिति सूचनार्थं पृथ गितरपदोपन्यासः। अत एव 'कृष्णादितरः, कृष्णात्पृथ गि' त्यपि द्रष्टव्यम्।**

लाक्षणिकं सूत्रं व्याचष्टे – **एवमन्येति** अन्य आरात् इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि एषां द्वन्द्वः, तस्य युक्तशब्देन तृतीया तत्पुरुषः, "अपादाने पञ्चमी" 2-3-28 इत्यतः पञ्चमीत्यनुवर्तते,

तदाह – **एभिर्योग इति पञ्चम्यर्थ इति** कृष्णप्रतियोगिकभेदवानित्यर्थः, ''अन्य इत्यर्थ ग्रहणम्, इतरग्रहणं प्रपञ्चार्थ'' मिति दीक्षिताद्युक्तमयुक्त मिति ध्वनयन्नाह – **अन्य इत्यर्थग्रहणमितीति'' पृथक्** = अन्य शब्दात्पार्थक्येन, पदोपादानम् = सूत्रे इतरपदग्रहणम्। अयं भावः – आकृतिगणेषु केचनशब्दा उपलक्षणार्थं पठ्यन्ते, तेन तद्गणेऽपठितेभ्योप्यन्येभ्यस्तज्जातीयेभ्यः शब्देभ्यस्तद्गणप्रयुक्तं कार्यं प्रवर्तते, तद्वदत्रापि। स्वरूपपरावेव अन्येतर शब्दावुपलक्षणार्थं पठितौ – एवमर्थकानां शब्दानामिति। एवं च सूत्रे अन्येतरशब्दौ शब्दपरावेव, अत एव तयोः शब्दयोः न विरूपैकशेषः, अन्य इत्यर्थग्रहणमिति मूलस्य अन्य इत्यर्थकशब्दानामुपलक्षणमिति बोधनार्थमित्यर्थः। वक्ष्यति च षष्ठीप्रकरणे ''निमित्तकारणहेतुष्वि'' ति वार्तिकव्याख्यावसरे ''निमित्तादिशब्दानामेकार्थकत्वेपि पृथगुपादानमुपलक्षणार्थ'' मिति, एवमेव ''चतुर्थी चाशिषी'' 2-3-73 त्यादिसूत्रेपि मद्रभद्रोभयोपादानमुपलक्षणार्थम्। इयांस्तु विशेषः, यत् – अत्र सूत्रेऽन्यार्थकशब्दानामेव ग्रहणम्, ''चतुर्थी चाशिषी,'' त्यत्र तु तत्सूत्रोपात्तशब्दैः सर्वैरपि पर्यायशब्दग्रहणमिति, दीक्षिताद्युक्तं तु न युक्तम् – भाष्यानुक्तत्वात्, स्वोक्तार्थे तु सूत्रे पार्थक्येन इतरग्रहणं मानं भवितुमर्हति-इति। अत एव = उपलक्षणत्वस्वीकारादेव, असाधारणं फलमाह – **कृष्णात्पृथगिति** एवं कृष्णाद्भिन्नः विलक्षणः, अर्थान्तरमित्याद्यपि प्रयोजनं बोध्यम्।

**नचैवं 'घटः पटो न, घटस्यान्योन्याभावः, घटस्य संयोगाभावः, घटस्य तादात्म्याभावः' इत्यादावपि पञ्चम्यापत्तिः। घटा द्विभागः, घटाद्भेदः पटस्येत्यादाविव धर्ममात्रवाचित्वेपि पञ्चम्यापत्ते र्दुवारत्वात्। धर्मिविवक्षायामपि घटस्या न्योन्याभाववा नित्यादौ तदापत्ते र्दुर्वारत्वा च्चेति वाच्यम्। पञ्चम्यर्थो हि प्रतियोगित्वं स्वनिरूपक भेदादिघटितसंसर्गेणा स्मन्मते आख्यातार्थान्वयी। तत्र चान्यादिपदं संसर्ग तात्पर्यग्राहकम्। परमतेतु तदुपस्थापितेभेदादावे वान्वय इति विशेषः। तदिहान्यादिपदै र्भेदादे र्विशिष्य भेदत्वादिनो पस्थापितत्वा द्युक्ता तद्योगे पञ्चमी। अन्योन्याभावादिपदै स्तु अन्योन्यादिपदवाच्यतादात्म्याद्य भावत्वेन बोधा न्न तद्योगे पञ्चमी। नञोपि लाघवेना भावत्वेनैव वाचकता, न तु भेदत्वादिना, अनेकशक्तिकल्पनापत्तेः। अत एव ''तदन्य तद्विरुद्धतदभावेषु नञ्'' इत्यनुशासनमपि न वृत्तिपरम्, अन्यलभ्यत्वात्। अतो विशेषबोधः समभिव्याहारविशेषादिनेति न तत्रापि पञ्चमीप्रसक्तिः। अत एव 'घटात्पृथकत्व' मित्यादिप्रयोगा निरपवादाः।**

**नचैवमिति** आकृतिगणेष्विवा त्रोपलक्षणार्थत्वाङ्गीकारेणान्यपर्याययोगेपि पञ्चमी स्वीकार इत्यर्थः, अन्यशब्दस्य धर्मपरत्वेऽति प्रसक्तिं दर्शयति – **घटः पटो न, घटस्यान्योन्याभाव इति**, अत्र दृष्टान्तः – घटाद्भेदः पटस्येति।घटस्य तादात्म्याभाव इत्यस्याप्ययमेव दृष्टान्तः, **घटस्य संयोगाभाव इति** संयोगाभावो विभागरूप एवेत्याशयः, अत्र दृष्टान्तः, घटाद्विभाग इति। ननु अन्यशब्देन धर्मिणो विवक्षणा न्नेयमापत्तिरत आह – **धर्मिविवक्षायामपीति** – अन्यशब्देन तद्विवक्षायामपीत्यर्थः, आदिपदेन घटस्य संयोगाभाववानित्यादेर्ग्रहणम्, अन्येतरादियोगे एव पञ्चमी, तैरेव भेदत्वादिना भेदादेर्बोधनात्, अन्योन्याभावादिपदैस्तेन रूपेण भेदस्याबोधना न्न तद्योगे पञ्चमीत्याशयेन समाधत्ते – **पञ्चम्यर्थो हीति**, स्वं = प्रतियोगित्वम्। तत्र = पञ्चम्यर्थान्वये, परमते तु = नैयायिकमते तु, तदुपस्थापिते = अन्यशब्दोपस्थापिते, अन्यादीत्यादिपदेन इतर इत्यादेर्ग्रहणम्। तद्योगे = अन्यादियोगे, **अन्योन्यपदवाच्येति** अन्योन्यपदवाच्यं यत् तादात्म्यादि तदभावत्वेन रूपेणेत्यर्थः। न तु भेदत्वादिनेति भावः। ननु नञा भेदत्वेन भेदबोधात्तद्योगे पञ्चम्यापत्ति, रत आह – **नञोपीति**, अत एव = अनेकशक्तिकल्पनाभयादेव, वृत्तिपरम् = शक्तिपरम्, अन्यलभ्यत्वात् = तत्तत्समभिव्याहारलभ्यत्वात्,

विशेषबोधः = भेदादिबोधः, तत्रापि = नञा योगेऽपि, अत एव = आकृतिगण तौल्येन पर्यायशब्दयोगेऽपि पञ्चमी स्वीकारादेव, पृथक्त्वं = भेदः।

**न चैवं 'घटः पटो ने' त्यादौ पञ्चम्यनापत्तावपि षष्ठ्यापत्ति र्दुर्वारेति वाच्यम्। 'नियतप्रयोगा हि केचिदव्ययाः'' इत्यनुशासनान्तरेण तदनापत्तेः। ''ने यं विभाषा'' इत्यादि भाष्यप्रयोगाच्च।**

एवम् = निरुक्तरीत्याश्रयणे, नियतप्रयोगाः = अत्र लक्ष्यदर्शनमेव मानम्, तदनापत्तेः = षष्ठ्या अनापत्ते अप्रवृत्तेः, सर्वैं निरुक्तार्थस्य दुर्ज्ञेयत्वादाह – **नेयं विभाषेति**, ''स्वरति सूति सूयति धूञूदितो वे'' 7-2-44 ति सूत्रे स्वरति रुदात्तः, अनुदात्तोवेति विचारावसरे अनुदात्त इति पक्षे दोषवारणाय भाष्यकृता ''अथवा आचार्यप्रवृत्तिर्ज्ञापयति नेयं विभाषा उरलक्षणस्य प्रतिषेधस्य विषये भवती-ति यदय ''सनीवन्तर्ध भ्रस्जदम्भुश्रिस्वृयूर्णु भरज्ञपिसनाम्'' 7-2-49 इति स्वृग्रहणं करोती'' त्युक्तम्, अत्र नञोयोगे विभाषाया इति षष्ठी भाष्ये न प्रयुक्ता, अतो ज्ञायते – न शब्दयोगे षष्ठी न भवती-ति भावः।

**'वनादाराद् ग्रामः, 'ऋते कृष्णा न्न किञ्चित्' अत्रापि प्रतियोगित्वं पञ्चम्यर्थः। यस्तु ''पुरुषाराधन मृते'' इति प्रयोगः, स ''ऋते द्वितीया च'' इति चान्द्रसूत्रादवगन्तव्यः। दिशिदृष्टः शब्दो दिक्शब्दः। तेनात्र लक्षणया देशकालवाचिना योगे पञ्चमीत्यर्थः। पूर्वो ग्रामाद्देशः चैत्रात्पूर्वः फाल्गुन इत्यादौ। अत एवा वयववाचिनायोगेन, 'पूर्वं कायस्य। अञ्चूत्तरपदयोगेऽपि – प्राक्, प्रत्यग् वा ग्रामात्। आच् योगेऽपि – दक्षिणा ग्रामात्। आहियोगेऽपि – दक्षिणाहि ग्रामात्।**

आरात् = दूरसमीपयोः। ऋतेशब्दो विनार्थकः, ''क्व कर्म प्रध्वस्त फलति पुरुषाराधनमृते'' इति महिम्नस्तोत्रे ऋते शब्दयोगे द्वितीया न साध्वी, तद्बाधनेनानेन पञ्चम्या एव युक्तत्वादिति केचिद्, तन्न युक्तम्, सत्या गता वसाधुत्वकल्पनाया अन्याय्यत्वादित्याह – **यस्त्विति**, प्रयोगः = महिम्नस्तोत्रे, अवगन्तव्यः = साधुत्वे नावगन्तव्यः, यद्यपि पाणिनीयव्याकरणेनापि ''ततोन्यत्रापि दृश्यते'' इति वार्तिकशेषेण ''चैत्रं यावच्छीतम्'' आरभ्य तस्या दशमीं तु यावत्प्रपूजयत्पर्वतराजपुत्रीम्'' इत्यादौ यावच्छब्दयोग इवात्रापि ऋते शब्दयोगे द्वितीया सुसाधा, अत एव ''यत्किञ्चिद्राजसूयमृते सोमम्'' न मामृते राम रमेत वाली'' त्यादौ द्वितीया सिद्धा, तथापि चान्द्रैर्विशिष्य ऋते शब्दयोगे द्वितीयाया विधानात्तत्सूत्रमदृतं ग्रन्थकृता, ऋतेशब्दयोगे द्वितीया, चात्पञ्चमीति तत्सूत्रार्थः, सूत्रे दिक् शब्द इत्यत्र शब्दग्रहणलब्धमर्थमाह – **दिशि दृष्टः शब्दः = दिक्शब्द इति**, शब्दपदग्रहणान्निरुक्तरीत्या मध्यमपदलोपीसमासो लभ्यते, तेन यदाकदाचिद्दिशिदृष्टेन सम्प्रति देशकालवाचिनापि योगे पञ्चमी सिध्यतीति भावः तेन = तादृशसमासाश्रयणेन, नन्वेवमपि अवयववाचिपूर्वादियोगेऽपि पञ्चम्यापत्ति, रत आह – **लक्षणयेति** ''तस्य परमाम्रेडित'' 8-1-2 मित्यादि निर्देशोऽप्यत्र तात्पर्यग्राहकः। अत एव = निरुक्तरीत्या प्रसिद्धदेशकाल वाचिनामेव ग्रहणादेव, **अञ्चूत्तरपदेति** अञ्चुधात्तूत्तरपदकदिक्शब्दयोगे पीत्यर्थः, **प्रागिति**, प्राची शब्दात् सप्तम्यन्तात्पञ्चम्यन्तात्प्रथमान्ताद्वा, ''दिक् शब्देभ्यः सप्तमी पञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः, 5-3-27 इत्यनेन अस्तातिप्रत्ययः, ''अञ्चेर्लुक्'' 5-3-30 इत्यनेन तस्य लुक्, ''लुक् तद्धितलुकि'' 1-2-49 इत्यनेन स्त्रीप्रत्ययस्य लुक्, प्राक् इति रूपम्, एव प्रतीचीशब्दात् प्रत्यक् इति रूपम्, आभ्यामञ्चूत्तरपदाभ्यां योगेऽनेन ग्रामादित्यत्र पञ्चमी, ग्रामस्य प्राच्यां दिशि प्राच्या दिशः, प्राची दिगितिवार्थः, अञ्चूत्तरपदस्य दिक् शब्दत्वादेव सिद्धे पृथक् तन्न कार्यमिति षष्ठीप्रकरणे ''षष्ठ्यतसर्थप्रत्ययेने'' 2-3-30 त्यत्र वक्ष्यते। **आच् योगेपीति** ''दक्षिणा दाच्'' 5-3-36

इत्यनेन दक्षिणशब्दादस्ताति प्रत्ययविषये आच् प्रत्ययः, अयं पञ्चम्यन्ता न भवति, दक्षिणा = दक्षिणदिशि, एतच्चाव्ययम्, ''षष्ठ्यतसर्थप्रत्ययेने'' त्यनेन विहिता षष्ठी एतद्बाधिका। तद्बाधनेन पुनरनेन पञ्चमी विधीयते, एव माहियोगेपि, **आहियोगेपीति** = आहि च दूरे'' 5-3-37 इत्यनेन दक्षिणशब्दात् आहि, प्रत्ययो विहितः तदन्तेन योगेपि, अर्थः प्राग्वत्, इदमप्यव्ययम्।

**एवं ''कार्तिक्याः प्रभृती'' ति भाष्ये प्रयोगात्प्रभृत्यर्थकयोगेपि पञ्चमी। भवात्प्रभृति सेव्यो हरिः। एवम् ''अपपरिबहिरञ्चवः पञ्चम्या'' 2-1-12 इति समासविधिसामर्थ्याद् बहिर्योगेपि सा ''ग्रामाद्बहिः''**

एवम् = सूत्रात्पञ्चमीप्रवृत्तिवत्, भाष्ये = ''अपादाने पञ्चमी'' 2-3-28 ति सूत्र, **प्रयोगादिति** ''तद्युक्तात्काले सप्तमी'' ति वार्तिकप्रत्याख्यानायेदं भाष्यं प्रवृत्तम्। तत्र प्रभृतिशब्द योगेन कार्तिक्या इति पञ्चमी, तद्योगे पञ्चम्यनुशासनान्तरस्या भावादेतत्प्रयोगान्यथानुपपत्त्या तद्योगे पञ्चम्यनुशासनमनुमीयत इति भावः, तददाहरणं-भवात्प्रभृतीति, एवं = भाष्यप्रयोगात्पञ्चमीवत्, **समासविधिसामर्थ्यादिति**, अयं भावः — समासविधायके अपपरि अनयोर्वर्जनार्थयोः कर्मप्रवचनीययोर्ग्रहणम्, तद्योगे ''पञ्चम्यपाङ्परिभिः'' 2-3-30 इत्यनेन पञ्चमीविधानात्तयोः पञ्चम्यन्तेनैव समासः सिद्धः, अपपरिसाहचर्यादञ्चूत्तरपदेनापि पञ्चम्यन्तेनैव समासः सिद्धः। एवं सूत्रे पञ्चमीपदाभावेपि पञ्चम्यन्तेनैव समासस्य सिद्धत्वादतिरिच्यमानं पञ्चमीग्रहणं पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञापक-मिति स्पष्टं चेदम् ''अपपरिबहिरञ्चवः पञ्चम्या'' 2-1-12 इत्यत्र भाष्ये, ''तस्मात् षष्ठी विषये पञ्चमी बहिर्योगेऽनुमीयते इति कैयटः, सा = सापि, अपिना षष्ठी, तेन करस्य करभोबहि'' रिति सिद्धम्।

**एवं ''पञ्चम्य पाङ्परिभिः'' 2-3-10 इति सूत्रा देतैः कर्मप्रवचनीयसंज्ञकै र्योगे पञ्चमीत्यर्थकात् 'अपहरे संसारः, परिहरेः संसारः, आ मुक्तेः संसारः' इत्यादौ पञ्चमी। अत्र ''अपपरीवर्जने'' 1-4-88 इति सूत्रा दनयोः कर्मप्रवचनीय संज्ञा। अत एव वर्जनार्थकापपरियोग एव पञ्चमी, लक्षणाद्यर्थयोगेतु द्वितीयैवेत्युक्तम्। आङस्तु ''आङ्मर्यादावचने'' 1-4-89 इत्यनेन कर्मप्रवचनीयसंज्ञा। वचनग्रहणादभिविधावपि।**

तादृशं सूत्रान्तरं व्याचष्टे — **एवं पञ्चम्यपेति** — ''कर्मप्रवचनीययुक्ते द्वितीये'' 2-3-8 ति सूत्रात्कर्मप्रवचनीयशब्दोनुवर्तते, तदाह — **कर्मप्रवचनीयसंज्ञकैरिति अपहरेःसंसार इति** अपशब्द ऋतेशब्दसमानार्थकः हरिशब्दस्तद्भक्तिः परः, तद्भक्त्यभावसमानाधिकरणं संसारवृत्तिसत्ताश्रयत्वमिति बोधः, **परिहरेरिति** ''परेर्वर्जने'' 8-1-5 इति सूत्रे ''परेर्वर्जने वा वचन'' मिति वार्तिकाद् द्विर्भावाभावः, अपपर्योः कर्मप्रवचनीयत्वं कथमित्याकाङ्क्षायामाह — **अत्रेति** अत एव = वर्जने तयोस्तत्संज्ञाविधानादेव **वर्जनार्थकेति** अत्र पञ्चमीविधायके परस्परसाहचर्याद्वर्जनार्थकयोरेव ग्रहणात्तद्योग एवेत्यर्थः, उक्तम् = द्वितीयाप्रकरणे ''लक्षणेत्थं भूते'' त्यादि सूत्रार्थविवरणावसरे। सूत्रे मर्यादाग्रहणादभिविधौ कर्मप्रवचनीयसंज्ञा नेति भ्रमवारणायाह — **वचनग्रहणादिति** कर्मप्रवचनीयत्वविधायके तद्ग्रहणादित्यर्थः, **अभिविधावपीति**, अयमर्थः ''आङ्मर्यादाया'' मित्येव सिद्धेऽतिरिक्तवचनग्रहण सामर्थ्यात् ''तेन विनेति मर्यादा, तेन सहेत्यभिविधि'' रिति वृद्धोक्ताववान्तरभेदो न विवक्ष्यते, अवधिमात्रं गृह्यते, तेन सूत्रेऽभिविधिरपि स्वीक्रियते, यद्वा उच्यतेऽस्मिन्निति वचनम्, मर्यादाया वचनं = मर्यादावचनं कर्म षष्ठ्या समासः, तथाच मर्यादा = मर्यादाशब्दो यस्मिन् सूत्रे उच्यते तद्

मर्यादावचनम्, तच्च ''आङ् मर्यादाभिविध्यो'' 2-1-13 रिति सूत्रम्। तत्र दृष्ट आङ्कर्मप्रवचनीय इति सूत्रार्थः। तत्सूत्रे आङ् अभिविध्यर्थकोपीति कृत्वाऽभिविधावपि स तत्संज्ञक इति लभ्यते-इति, तदुदाहरणम्-आसकलाद्ब्रह्मेत्यादि।।

**एवं ''प्रतिनिधिप्रतिदाने च यस्मात्'' 2-3-11 इति सूत्रादेतदर्थककर्मप्रवचनीययोगे पञ्चमीत्यर्थकात्पञ्चमी। स च ''प्रतिः प्रतिनिधिप्रतिदानयोः'' 1-4-92 इति सूत्रात्प्रतिरेव। 'प्रद्युम्नः कृष्णात्प्रति' कृष्णप्रतिनिधिरित्यर्थः। मुख्याभावे य स्तत्सदृश उपादीयते, स प्रतिनिधिः। प्रतियोगित्वं चात्र पञ्चम्यर्थः। प्रतिदानं = दत्तस्य प्रतिनिर्यातनम्। दानजन्योपकारप्रत्युपकार इति यावत्। 'तिलेभ्यः प्रतियच्छतिमाषान्' अत्रकर्मत्वं पञ्चम्यर्थः। तस्य च निपातोपात्त भावनायामन्वयः। तथाच तिलकर्मकदान भावनाजन्योपकारप्रत्युपकारजनकीभूता माषकर्मिका दानभावना चैत्रवृत्ति रिति शाब्दबोधः।**

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **एवं प्रतिनिधीति** – प्रति निपूर्वकाद् धाधातोः ''उपसर्गे घोः किः'' 3-3-92 इत्यनेन कर्मणि किप्रत्ययः, प्रतिनिधीयतेऽसाविति प्रतिनिधिः प्रतिदानशब्दो भावल्युडन्तः अस्मादेव निपातनात् यस्मादित्यत्र षष्ठ्यर्थे पञ्चमी, तेन पञ्चम्यर्थः संबन्धः। कर्मप्रवचनीययुक्ते इति पञ्चमी इति चानुवर्तते, तथाच यत्संबन्धिनी प्रतिनिधिप्रतिदाने, तद्वाचकात्कर्म प्रवचनीययुक्तात्पञ्चमीति सूत्रार्थः, तत्फलितार्थमाह – **एतदर्थकेति** प्रतिनिधिप्रतिदानार्थकेन कर्मप्रवचनीयसंज्ञकेन शब्देन योग इत्यर्थः। एवं च दानक्रिया प्रतिशब्दार्थः, तन्निरूपितं तिलादीनां कर्मत्वमिति द्योत्यते, एतच्च मूलेऽनुपदमेव स्पष्टम्। **पञ्चमीति** यत्संबन्धिनावेतावर्थौ, तद्वाचकात्पञ्चमीत्यर्थः, सूत्रे कर्मप्रवचनीयक शब्दस्यानुपादानादाह – **स चेति** एतदर्थककर्मप्रवचनीय शब्दश्चेत्यर्थः, **सूत्रादिति** एतयोरर्थयोः प्रतिः कर्मप्रवचनीयसंज्ञः स्यादिति तदर्थः, **प्रतिरेवेति** प्रकृतसूत्रे प्रतिनिधिप्रतिदानयोरित्यर्थविशेष निर्देशात् कर्मप्रवचनीययुक्ते इत्यनुवृत्तेश्च प्रतिरेव गृह्यते, नान्य इति भावः। **कृष्णादिति**, अस्मात्पञ्चम्यन्तात् ''प्रतियोगे पञ्चम्यास्तसिः'' 5-4-44 रिति तसिप्रत्यये कृष्णतः प्रतीत्यपि साधु, प्रतिनिधिशब्दार्थमाह – **मुख्याभाव इति** मुख्यस्य रूढस्य प्रधानस्य क्वचित्कार्ये शत्रुवधादौ दृष्टसामर्थ्यस्य कृष्णादेः, अभावे = अलाभे, **तत्सदृश इति,** सादृश्यं च तत्कार्यकारित्वेन। प्रतिनिधिशब्दः कर्मप्रत्ययान्त इत्याशयेनाह – **उपादीयत इति** स्वीक्रियत इत्यर्थः। कृष्णेन जय्यान् शत्रूंस्तदभावे तत्स्थाने स्थित्वा प्रद्युम्नो जयति, अतः कृष्णसदृशः प्रद्युम्नः, यथा वा सोमाभावे पूतीक उपादीयते, बन्धनसमर्थस्य खदिरस्याभावे कदरादिकं प्रतिनिधीयत इति बोध्यम्। प्रतिदानशब्दार्थमाह – **दत्तस्येति** दत्ततुल्यमूल्यकस्य वस्तुन इत्यर्थः। प्रतिनिर्यातनं = परावृत्यदानम्। अन्यदत्तवस्तूनि गृहीत्वा तत्स्थाने स्वेन वस्त्वन्तर प्रतिपादनमिति भावः, तेन च परस्परमुपकारो भवतीति निगूढाशयः, तदाह – **दानजन्येति** स्वीय वस्तुदानजन्यः परस्योपकारः, स्वस्य परदत्तवस्त्वन्तरजन्यः प्रत्युपकार इत्यर्थः, यथा-चैत्रः प्रथमं मैत्राय तिलान् ददाति, तेन मैत्रस्योपकारो भवति मैत्रस्तु तत्परिमितान् माषांश्चैत्राय प्रतिददाति, तेन चैत्रस्य प्रत्युपकारो भवति, चैत्रस्य तिला एव सन्ति, न माषाः, मैत्रस्य तु माषा एव सन्ति न तिलाः चैत्रमैत्राभ्यामुभयमप्यपेक्षते, तदा मैत्रः चैत्र दत्तां स्तिलान् गृहीत्वा तस्मै माषान् ददाति, सार्वलौकिकोयमर्थः। दानग्रहणक्रियाजनितो यमुपकारप्रत्युपकार इति बोधयम्। **प्रतियच्छतीति** प्रतिपूर्वकाद् दाण्दाने इति धातोः ''पाघ्राध्मा'' 7-3-78 इत्यादिना यच्छादेशे इदं रूपम्, तत्राख्यातोपात्तभावनान्वयित्वेन माषाणां कर्मत्वम्। प्रतीतिनिपातेन दानभावना लक्षणया बोध्यते, तन्निरूपितं तिलानां कर्मत्वे तत्र द्वितीया बाधनेनात्र पञ्चमी। तदाह – **अत्र कर्मत्वं पञ्चम्यर्थ इति,** अत्र = प्रकृतद्वितीयोदाहरणे, तस्य च = पञ्चम्यर्थस्य कर्मत्वस्य, कारकाणा

निपाताद्युपात्त भावनायामप्यन्वय इति स्वसिद्धान्तानुसारेणाह – **निपातोपात्तेति** प्रतिरूप निपातोपात्तेत्यर्थः, बोधप्रकारमाह – **तथा चेति** निपातोपात्तभावनाया कर्मत्वान्वयस्वीकारे चेत्यर्थः, **तिलकर्मकेति** मैत्रकर्तृका या तिलकर्मिका दानभावना, तज्जन्यो यश्चैत्रस्योपकारः, तस्य यः प्रत्युपकारो मैत्रस्य तज्जनकीभूता दानभावनेत्यर्थः।

**एवम् "अकर्तर्यृणे पञ्चमी" 2-3-24 इतिसूत्रात् कर्तृवर्जितं यद् ऋणं हेतु भूतं, ततः पञ्चमीत्यर्थकात् 'ऋणाद्बद्धः' 'शताद्बद्ध' इत्यादौ पञ्चमी। अत्र हेतुत्वं पञ्चम्यर्थः। शतमिह उत्तमर्णाय धार्यमाणत्वा दृणरूपमेव। तस्य कर्तृत्वेतु शतेनबन्धित इत्येवं तृतीयैव। अत्र हि णिजन्तत्वाद् बन्धनप्रयोजके ऋणे हेतुत्ववत् 'तत्प्रयोजको हेतुश्च" 1-4-55 इतिचकारेण कर्तृसंज्ञाया अपि करणात् कर्तृत्वावश्यकतया तृतीयान्तत्वमेव।**

लाक्षणिकमनुशासनान्तर व्याचष्टे – **एवमकर्तरीति** कर्तृवर्जितं = कर्तृसंज्ञारहितम्, अत्र "हेतौ" इति सूत्रमनुवर्तते तदाह – **हेतुभूतमिति पञ्चमीति** तृतीयापवाद इयम्। ऋणत्वं वस्तु सन्निमित्तं, न तु विभक्तिवाच्यकोटि प्रविष्टमित्याशयेनाह – **हेतुत्वं पञ्चम्यर्थ इति** द्वितीयोदाहरणे शतस्य ऋणत्वमुपपादयति – **शतमिति** इह = प्रकृत सूत्रोदाहरणे, धार्यमाणत्वात् = प्रतिनिर्यातयितव्यत्वात्। एवं च स्वरूपेण शतं न ऋणम्, किंत्वनेन रूपेणेति भावः। अकर्तरीत्यस्य प्रयोजनं दर्शयति – **तस्येति** शतस्येत्यर्थः। तस्य कर्तृत्वं समर्थयते – **अत्र हीति** प्रत्युदाहरण इत्यर्थः, **णिजन्तत्वादिति** बन्धधातो र्हेतुमर्ण्णिजन्तात्कर्मणि क्तः, बन्धनप्रयोजके = प्रयोज्यकर्तृरूपचैत्रनिष्ठा स्वातन्त्र्यप्रयोजके, ऋणे = शते, हेतुत्ववत् = हेतुसंज्ञावत्, **तत्प्रयोजक इति**, सूत्रे तच्छब्देन "स्वतन्त्रः कर्ते" 1-4-54 ति सूत्रोक्तः कर्ता परामृश्यते, तत्प्रयोजकः = कर्तुः प्रयोजकः, हेतुः = हेतुसंज्ञःचकारेण कर्तृसंज्ञकश्च स्यादिति तदर्थः, तदाह – **इति चकारेणेति** इति सूत्रघटकेन चकारेणेत्यर्थः, करणात् = विधानात् **कर्तृत्वावश्यकतयेति** शतस्य प्रयोजककर्तृत्वस्यावश्यकतयेत्यर्थः, तृतीयान्तत्वमेव = कर्तृ तृतीयान्तत्वमेव।

अयमर्थः – उदाहरणे केवलबन्धधातोः कर्मणि क्तः, बन्धने शतस्य हेतुत्वम्। बन्धनं चात्राऽस्वातन्त्र्यम्, तथा च चैत्रः शताद् मैत्रेण बद्ध इति संपूर्ण वाक्यम्।अधमर्णस्य क्तेनाभिधानात्ततः प्रथमा। प्रत्युदाहरणे तु बन्धधातो र्हेतुमण्ण्यन्तात्कर्मणि क्तः, चैत्रः शतेन मैत्रेण बन्धित इति संपूर्णं वाक्यम्, उत्तमर्णः प्रयोज्यकर्ता, शतं प्रयोजककर्तृ, उत्तमाय धार्यमाणत्वादृणं च, उभयोरपि कर्त्रोः क्तेनानभिधानादुभयत्रापि तृतीया, शताद् अकर्तरीत्यनेन पञ्चमी वार्यते-इति, रज्वा बद्ध इत्यादौ पञ्चमी वारणाय, ऋण, ग्रहणम्।

**एवं "विभाषागुणेऽस्त्रियाम्" 2-3-25 इतिसूत्रात् गुणे हेता वस्त्रीलिङ्गे पञ्चमीस्या दित्यर्थकात् 'जाड्यात्जाड्योन वा बद्ध' इत्यत्र विकल्पेन पञ्चमी। गुणत्वाभावे स्त्रीलिङ्गे वा 'धनेन कुलम्' 'बुध्या मुक्तः' इत्यादौ तृतीयैव, "हेता" वितिपूर्वोदाहृतसूत्रात्। गुणत्वं चेह परतन्त्रत्वमात्रम्। तेन "वह्निमान् धूमा" दित्यादौ पञ्चमी। "नास्तीह घटोऽनुपलब्धे" रित्यादौ तु पञ्चमी "बाहुलकं प्रकृते स्तनुदृष्टे" रिति वार्तिकप्रयोगादनुसन्धेया।**

तादृशं लक्षणान्तरं व्याचष्टे – **एवं विभाषेति** अत्रापि हेतावित्यनुवर्तते, तदाह – **हेताविति**, पञ्चम्या अभावे तृतीया स्यादित्याशयेनाह – **जाड्येनेति** गुणेऽस्त्रियामित्यनयो र्व्यावर्त्यं दर्शयति – **गुणत्वाभावे स्त्रीलिङ्गेवेति**, धनेन कुलमित्यत्र वर्धत इत्यस्य मुक्त इत्यत्र भवतीत्यस्य च शेषो बोध्यः, ननु वह्निमान् धूमादित्यादौ पञ्चम्यनुपपत्तिः, धूमस्यागुणत्वात्, वैशेषिकपरिभाषितेषु रूपादिष्वस्याऽपाठादत आह –

**गुणत्वं चेति** प्रकृतसूत्रे गुणशब्दग्राह्यत्वं त्वित्यर्थः। **परतन्त्रत्वमात्रमिति** मात्रशब्देन काणादोक्तरूपादे र्व्यावृत्तिः, रूपादीनामपि मदुक्तलक्षणाक्रान्तत्वे त्विष्टत्वमेव, उक्तं च हरिणा –

संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते।।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम्।। इति

"लोकेपि परतन्त्रो गुण इत्युच्यते, तथाच लौकिकस्यैवास्य लक्षणस्य वैशेषिकप्रसिध्द्यपाकरणायानुवाद" इति हेलाराजः, "गुणानां च परार्थत्वा" 3-1-22 दित्यत्राप्यस्यैव ग्रहणम्, तत्प्रयोजनमाह – **वह्निमानिति** धूमस्य वह्निपरतन्त्रत्वाद्गुणत्वम्, बुध्यादेरात्मपरतन्त्रत्वात्तत्त्वम्। नन्वेवमपि नास्ति इह घटोऽनुपलब्धे" रित्यादौ स्त्रीलिङ्गे पञ्चम्यनुपपत्ति, रत आह – **नास्तीति पञ्चमीति** अस्य, अनुसन्धेये, त्यत्रान्वयः, **बाहुलकमिति** बहून् अर्थान् लाति = अद्दत्त इति बहुलम्, तस्य भावः बाहुलकम्, मनोज्ञादित्वाद्वुञ् "तनु दृष्टे" रित्यत्र तनुशब्दस्य वृत्तिविषये तनुत्वमात्रवाचित्वम्, प्रकृतेरिति जातावेक वचनम्। प्रकृतीनां तनुत्वस्य दर्शनादित्यर्थः, सापेक्षत्वेपि गमकत्वात्समासः, शाकटायनादिभिः प्रणीते व्याकरणशास्त्रे प्रकृतीनां तनुत्व = मल्पत्वं दृश्यते, तेन सकलनामनिर्वचनं तच्छास्त्रेण नैव सुकरम्, अत स्तच्छास्त्रशेषत्वेन बहुलग्रहणं कर्तव्यमिति प्रकृतवार्तिकार्थः' इदं च वार्तिकम् "उणादयो बहुल" 3-3-1 मिति सूत्रे, तत्सूत्रार्थ एव वार्तिकेन प्रदर्शितः। **प्रयोगादिति**, तनुदृष्टे रिति पञ्चम्यन्तस्त्रीलिङ्ग शब्द प्रयोगादित्यर्थः, यद्यपि "हेतुमनुष्येभ्योन्यतरस्यां रूप्य" 4-3-81 इति सूत्रे हरदत्तेन "विभाषा गुणेऽस्त्रिया" 2-3-25 मित्यत्र विभाषेति योगो विभक्तः, तेन च धूमादग्निमान्, नास्तीह घटोऽनुपलब्धे" रित्युभयमपि सिध्यति, तथापि तद्योग विभागस्य भाष्यानुक्तत्वात्तदुपेक्षितं महानुभावेन ग्रन्थकृता। एवं "शब्देनार्थगते" रिति "स्वं रूपं शब्दस्याशब्दसंज्ञे" 1-1-68 ति सूत्रस्थ वार्तिक प्रयोगादपि प्रकृतार्थसिद्धिर्बोध्या, कैयटेन च स्पष्टीकृतो यमर्थः।

**एवं "पृथग्विनानानाभि स्तृतीयाऽन्यतरस्याम्" 2-3-32 इतिसूत्रा देभिर्योगे तृतीया स्यात्पञ्चमीद्वितीये चेत्यर्थकात् 'पृथग् रामेण रामात् रामंवे' त्यादौ द्वितीयातृतीभ्यां विकल्पेन पञ्चमी। एवं विनानानायोगेपि। अत्र प्रतियोगित्वं सर्वविभक्त्यर्थः, तत्र द्वितीया संनिहितत्वादेवानुवर्तते, पञ्चमीतु मण्डूकप्लुत्या नुवर्तनीया, भाष्यकृता तथैव व्याख्यातत्वात्।**

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **एवं प्रथगिति,** सूत्रे श्रुतत्वादाह – **तृतीयेति** "अपादाने पञ्चमी" 2-3-28 इत्यतो नुवृते राह – **पञ्चमीति** "एनपा द्वितीया" 2-3-31 इत्यतो नुवृत्तिमाश्रित्याह – **द्वितीयेति**, अत एव "विनारामं महारथम्"

"विना वातं विना वृष्टिं विद्युत्प्रतपनं विना।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ।।

"नाना नारी निष्फला लोकयात्रा" इत्यादौ विना – नाना शब्दयोगे द्वितीया सिद्धा, "हिरुक् नाना च वर्जने" इत्यमरः, सूत्रेऽन्यतरस्यां ग्रहणं चशब्दसमानार्थकमित्याह **चेति विकल्पेनेति** समुच्चयेनेत्यर्थः, एवं च विभक्तित्रयस्यापि समावेश एवेति भावः।

अत्रसूत्रे द्वितीयापञ्चम्योरनुवृत्तौ प्रमाणं दर्शयति – **तत्रेति** – निरुक्तविभक्तिद्वयमध्य इत्यर्थः, **संनिहितत्वादेवेति** "एनपा द्वितीया" 2-3-31 "पृथग्विना" 2-3-32 इत्यष्टा ध्याय्यां प्रकृतसूत्रस्य "एनपे" ति सूत्रादव्यवहितमेव पाठादित्यर्थः, एवं च "पृथग्विना नानाभि" रिति योग विभागेन तद्योगे द्वितीया साधनं वृत्तिकाराणामयुक्तमेवेति भावः। इदं च "संनिहितत्वादेवे" त्येव शब्देन ध्वन्यते, ननु "अपादाने पञ्चमी" 2-3-28 इति सूत्रात्पञ्चमीत्यस्यानुवृतिर्न संभवति, "षष्ठचतसर्थप्रत्ययेन" 2-3-30 "एनपा द्वितीया" 2-

3-31 इति सूत्रे तस्या अननुवर्तना, दत आह – **पञ्चमीत्विति**, भाष्यकृता = प्रकृतसूत्रे तथैव = पञ्चमीग्रहणस्य मण्डूकप्लुत्याऽनुवर्तनेनैव, **व्याख्यातत्वादिति**, इत्थं हि तत्र भाष्यम् – "अथवा मण्डूकप्लुतयोऽधिकारा भवन्ति, तद्यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वदधिकाराः, इति, सूत्रद्वये मध्यवर्तिनि संबन्धराहित्येनात्र पञ्चमीग्रहणं संबध्यत इति तदर्थः, न चानुवृत्त्यैव द्वितीयापञ्चम्योः सिद्धत्वात्सूत्रेऽन्यतरस्यांग्रहणं व्यर्थमेवेति वाच्यम्। तद्विना तयो र्दुर्ज्ञेयत्वात्तद्बोधनायैव तद्ग्रहणस्य सत्त्वात्, एतदर्थबोधनायैव निरुक्तभाष्यादनन्तरं पक्षान्तरद्वयमुपन्यस्तं भाष्यकृतेति बोध्यम्।

**एवं "करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य" 2-3-33 इतिसूत्रा देभ्यः करणे तृतीयापञ्चम्यौ स्यातामित्यर्थकात् 'स्तोकेन स्तोकाद्वामुक्त' इत्यादौ तृतीयया सह पञ्चमी। करणत्वं पञ्चम्यर्थः। द्रव्यरूपसत्त्ववचने तु 'स्तोकेन विषेण हत' इत्यादौ तृतीयैव।**

तादृशं लक्षणान्तरं व्याचष्टे – **एवं करणे चेति** करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थमिदं सूत्रम्। सूत्रे चकारः "तृतीयान्यतरस्या" मित्यनुकर्षणार्थः सौत्रत्वात्सूत्रे पञ्चम्यर्थे षष्ठी, लिङ्गसंख्यान्वययोग्यं वस्तु सत्त्वम् तदेव द्रव्यम्, सत्त्वमुच्यतेऽनेनति सत्त्ववचनम्। तस्य, तथाच असत्त्ववचनस्य द्रव्यभिन्नवचनेभ्यः स्तोक इत्यादिभ्यश्चतुर्भ्यः करणे तृतीया पञ्चम्यौ स्त इति सूत्रार्थः, तदाह **एभ्य इति** उदाहरणे स्तोकादयः शब्दाः स्तोकत्वादिरूपधर्मवाचिनः, अत एव "असत्त्ववचनस्ये" ति पर्युदास सङ्गतिः। स्तोकेन = अल्पेन, अनायासेन मुक्त इत्युदाहरणार्थः, पञ्चम्या अपि करण एव विधानादाह – **करणत्वं पञ्चम्यर्थ इति** पर्युदासफलमाह – **द्रव्यरूपेति**, विषस्य द्रव्यत्वात्तत्सामानाधिकरणयात् स्तोकशब्दः स्तोकत्वविशिष्ट द्रव्यबोधकः, अतो न पञ्चमी, तृतीया तु "कर्तृकरणयोस्तृतीये" त्यनेन प्रवर्तते।।

**एवं "दूरान्तिकार्थेभ्यो द्वितीया च" 2-3-35 इति सूत्रादेभ्यो द्वितीया, चा त्पञ्चमीतृतीये इत्यर्थकाद् ग्रामस्य दूरं दूरात् दूरेण वेत्यादौ द्वितीयातृतीयाभ्यां सहपञ्चमी। प्रातिपदिकमात्रार्थे विधिरयम्। नत्वत्र विभक्त्यर्थोन्यः कश्चित्। इह सप्तम्यपि, "सप्तम्यधिकरणे च" 2-3-36 इतिसूत्रे चकारेण 'दूरान्तिकार्थेभ्य' इत्यनुकर्षणात्। तेनग्रामस्य दूरेऽस्तीति प्रयोगोपि नानुपपन्नः। अत्रा "सत्त्व वचनस्य" अनुवर्तनात् सत्त्ववचनत्वे नैतद्विभक्तिचतुष्टयनियमः, सत्त्ववचनत्वं चेह सामानाधिकरण्ये न प्रातिपदिकार्थविशेषणत्वम्। तेन 'दूरः पन्था' इत्यादौ दूरशब्दस्य पथोविशेषणत्वेन तद्विभक्त्यैव विभक्तिः।**

तादृशमनुशासनान्तरं व्याचष्टे – **एवं दूरान्तिकेति** एभ्यः = दूरार्थकेभ्यः,अन्तिकार्थकेभ्यश्च, "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" 2-3-34 इत्यत्र पञ्चम्या अनुवृत्तिसत्त्वेन, तत्सूत्रात् समुच्चयार्थकान्यतरस्यां ग्रहणानु वृत्यैवा र्थाधिकारात्पञ्चम्याः सिद्धौ पुनश्चकारग्रहण सामर्थ्यात् तेन व्यवहितापि तृतीया पृथग्विनेति सूत्रात् समुच्चीयते, इत्याशयेनाह – **चात्पञ्चमीतृतीये इति** चग्रहणाभावे पञ्चम्येव प्रवर्तेतेति भावः। **प्रातिपदिकमात्रार्थे इति**, अर्थान्तरस्यानिर्देशादयं विधिः प्रातिपदिकार्थमात्र एव। किंच "दूरान्तिकार्थैः षष्ठ्यन्यतरस्या" 2-3-34 मित्यस्यानन्तरं "तेभ्यो द्वितीया चे" ति लघुन्यासेनैव सिद्धे एतादृशगुरुनिर्देशेन पूर्वसूत्रविहितविभक्त्यपेक्षया अस्या वैलक्षण्यं बोध्यते, तेन प्रकृतार्थसिद्धिः, इह = दूरान्तिकार्थेषु **सप्तम्यपीति**, अपिना उक्तविभक्तित्रयम्, सप्तमीं प्रमाणयति – **सप्तम्यधिकरणे चेति** – अनुकर्षकणात् = अनुवृत्तेः, इयं सप्तम्यपि प्रातिपदिकार्थमात्रे, सप्तम्यधिकरणे चे" त्यत्र "दूरान्तिकार्थेभ्य" इत्यस्यानुवर्तनाद् दूरान्तिकार्थेभ्योधिकरणेपि विभक्तिचतुष्टयं प्रवर्तते, तत्र च "असत्वव चनस्ये" ति नानुवर्तते, तेन सत्त्ववचनत्त्वेपि तत्प्रवर्तते, तथाच भाष्योदाहृता स्मृतिः –

"दूरादावसथान्मूत्रं दूरात्पादावसेचनम्।।
दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपिताद्गुरोः।। इति"

आवसथस्य दूरे इत्यर्थः।

नन्वेवं दूरः पन्थाः, दूराय पथे देहि, दूरस्य पथः स्वमित्यादयः, प्रयोगा न सिध्यन्ति, अत आह — **अत्रेति** दूरान्तिकार्थेभ्यो द्वितीया चे" ति सूत्रे इत्यर्थः, असत्व वचनस्य = तत्पदस्य, अनुवर्तनात् = करणे चे" 2-3-33 त्यादि सूत्रात्, **विभक्तिचतुष्टयनियम इति**, द्वितीयादिनिरुक्तविभक्ति चतुष्टयमेवेति नियमो नेत्यर्थः, तथाच यथायथं प्रथमादयोपि प्रवर्तन्ते, एवं चैतेभ्योऽसत्त्व वचनतायां निरुक्तविभक्ति चतुष्टयमेव, सत्त्ववचनताया यथायथं प्रथमादयोपि, तत्राप्यधिकरणत्वे निरुक्तं द्वितीयादि चतुष्टयमेवेति व्यवस्था बोध्या, ननु सतो भावः — सत्त्वम्, तच्च सार्वत्रिकमिति लक्ष्यासंभवोऽत आह — **सत्त्ववचनेति** इह = प्रकृतसूत्रे, सामानाधिकरण्येन = अभेदेन, विशेषणत्वम् = प्रातिपदिकार्थे विशेषणत्वम्, तेन = सत्त्ववचनशब्देनैतादृशार्थविवक्षणेन, इत्यादावित्यादिपदेन दूराय पथे, दूरस्य पथः स्वमित्यादे ग्रहणम्, विशेषणत्वेन = अभेदेन विशेषणत्वेन, तद्विभक्त्यैव = विशेष्योत्तर विभक्त्यैव, उदाहरणेषु दूरादित्यादीनां क्रियाविशेषणत्वेन निरुक्तसत्त्ववचनत्वाभावात्सूत्र प्रवृत्तिरिति न दोषः।

**यद्यपि चा स्मन्मते विशेषणाना मप्याख्यातेनैवान्वयः, तथापि यत्र दूरत्वविशिष्ठाभेदः संसर्गघटक, स्तत्र प्रथमा। यत्र दूरत्वाधारता संसर्गघटिका, तत्र विभक्तिचतुष्टयमिति न कोपि विरोधः। तत्सिद्धं पञ्चम्यर्थः सर्वत्र भावनान्वयी-ति।**

**इति पञ्चम्यर्थनिरूपणं समाप्तम्**

नन्विदमयुक्तम्, भवन्मते द्वितीयान्तातिरिक्तस्थले विशेषणाना मप्याख्यातार्थे एवा न्वय-स्वीकारा दित्याशङ्कां परिहर्तुमाह — **यद्यपीति**।

इति पञ्चम्यर्थनिरूपणम्।

## अथ षष्ट्यर्थनिरूपणम्।

**एवं षष्ठ्यर्थोपि तत्रैवान्वेति। सच "षष्ठी शेषे" 2-3-50 इतिसूत्रानुशिष्टः। तथाहि उक्तादन्यः = शेषः, उक्तानि च पूर्वकर्मत्वा दीनि। तद्भिन्नाश्च सजातीयत्वात् स्वस्वामि भावादयः संबन्धाः, तेषु षष्ठी स्यादिति सूत्रार्थः। तेषु च न प्रत्येकं शक्तिः, अनेकशक्तिकल्पनापत्तेः। अपितु संबन्धत्वेन, संबन्धत्वं च 'संबद्धा' वितिप्रतीतिसाक्षिको धर्मविशेषः। एवंच शक्यतावच्छेदकस्य संबन्धत्वस्य कर्तृत्वकर्मत्वादिष्वपि सत्त्वा तेषामपि संबन्धत्वेन रूपेण षष्ठ्यर्थता स्त्येव।**

षष्ठ्यर्थस्यापि भावनायामेवान्वय इत्याह – **एवमिति** तत्रैव = भावनायामेव, स च = षष्ठ्यर्थश्च। सूत्रानुशिष्टः = तदुपदिष्टः। ननु शिष्लृ विशेषणे इति रुधादिधातोर्घञा निष्पन्नस्य शेषशब्दस्याऽ– प्रधानार्थकतया शेषे = अप्रधाने, षष्ठीति सूत्रार्थलाभेन नीलो घट इत्यादौ प्रातिपदिकार्थमात्रे विशेषणे षष्ठीप्रसङ्गः, न च प्रथमया बाधः, प्रधाने तस्याश्चरितार्थत्वात्, किं च सर्वेषां कारकाणां क्रियार्थत्वेन शेषत्वात् "ज्ञोऽविदर्थस्य करणे" इत्यादिषु शेष इत्यनुवृत्तेस्तद्विषये सर्पिरादीनां करणत्वत्वादिना विवक्षायामपि परत्वात् षष्ठी प्रसङ्ग इत्यतः स्वाशयं प्रकटयितुमाह – **तथाहीति** अत्रसूत्रे शिष्लृ विशेषणे इति धातो र्निष्पन्नस्य शेषशब्दस्य न ग्रहणं, किं तु शिष असर्वोपयोगे इति चुरादि धातोर्घञा निष्पन्नस्य शेष शब्दस्य। कर्माद्यनन्तरं शेषशब्दस्योच्चारणा,दतो न पूर्वोक्तदोष इत्याशयेनाह – **उक्तादन्यः शेष इति** एवं च शेषशब्दस्यान्यार्थवाचितया तस्य प्रतियोग्याकाङ्क्षायामुपस्थितकर्मत्वादय एव प्रकरणाद् गृह्यन्त इत्याह – **उक्तानि च पूर्व कर्मत्वादीनीति** पूर्वम् = षष्ठी शेषे इति सूत्रात्पूर्वम्, कर्मत्व करणत्वसंप्रदानत्वापादानत्वाधिकरणत्व कर्तृत्वानि पूर्वमुक्तानि, ततोन्यः शेषपदार्थः, शेषपदेन स्वस्वामिभावादीनां ग्रहणे बीजमाह – **सजातीयत्वादिति** कर्मत्वादीनां संबन्धरूपत्वेन पर्युदासन्यायेन तद्भिन्ना अपि संबन्धरूपा एव गृह्यन्त इत्याशयः, तदाह – **स्वस्वामिभावादयः संबन्धा इति** सूत्रार्थमाह –**तेष्विति** स्वस्वामिभावादि संबन्धेष्वित्यर्थः। ननु संबन्धानां नानात्वाच्छक्तेर्नानात्वापत्तिरत आह – **तेष्विति, प्रत्येकमिति**, एकस्मिन्नेकस्मिन्निति वीप्सायामव्ययी भावः, स्वस्वामिभावत्वादिना स्वस्वामि– भावादिषु सर्वेषु षष्ठ्या न शक्तिरिति भावः, **संबन्धत्वेनेति** तत्वेन संबन्धे शक्ति स्वीकारान्न शक्त्यानन्त्यमिति, भावः। संबन्धत्वं प्रमाणायति – **संबन्धत्वं चेति धर्मविशेष इति** एतेन – "चैत्रस्य धनम्, वृक्षस्य शाखा, स्फटिकस्य लौहित्यमित्यादौ स्वत्वसमवेतत्वादिकं प्रातिस्विकरूपेणैव षष्ठ्यर्थः, संबन्धत्वेन न तथात्वं, संबन्धत्वस्यानुगतस्य दुर्वचत्वादिति केषाञ्चिदुक्तिः परास्ता, एवं च = संबन्धत्वेन संबन्धानां शक्यत्वे च, शक्यतावच्छेदकस्य = षष्ठी शक्यतावच्छेदकस्य, **सत्त्वादिति**, तेषामपि संबन्धरूपत्वादिति भावः, तेषामपि = कर्तृत्वकर्मत्वादीनामपि

**अत एव 'सतांगतम्' 'सर्पिषो जानीते' 'मातुः स्मरति' 'एधोदकस्यो पस्कुरुते' 'शम्भो र्भजे चरणयोः' 'फलानां तृप्तः' इत्यादयः प्रयोगाः। अत एवो क्तशक्यतावच्छेदकातिरिक्त शक्यतावच्छेदकावच्छिन्नसंबन्ध एव शेषपदार्थः।**

**अत एवेति** कर्तृत्वादीनामपि षष्ठ्यर्थतासत्त्वादेवेत्यर्थः। **सतामिति** कर्तृत्वं षष्ठ्यर्थः, गतमिति भावक्तान्तम्, **सर्पिष इति** करणत्वं षष्ठ्यर्थः, ज्ञानपूर्विका प्रवृत्ति र्धात्वर्थः। **मातुरिति** कर्मत्वं संबन्धत्वेन षष्ठ्यर्थः, **एध इति** एधशब्दो न पुंसकलिङ्गः, अकारान्तः पुंलिङ्गो वा काष्टवाची, दकशब्दउदकपर्यायः, उपस्कुरुते = गुणमाधत्ते, **फलानामिति** करणत्वं षष्ठ्यर्थः, **प्रयोगा इति** उपपद्यन्त इति शेषः। नन्वेवमपि कर्मत्वादीनां षष्ठ्यर्थत्वं न घटते, कर्मत्वादीनामर्थानां पूर्वमुक्तत्वेन तद्भिन्नानां

स्वस्वामिभावादिसबन्धानामेव शेषपदार्थतालाभा दत आह – **अत एवेति** कर्मत्वादीनामपि षष्ठयर्थताया इष्टत्वादेवेत्यर्थः। **उक्तशक्यतावच्छेदकेति** उक्तानि यानि शक्यतावच्छेदकानि कर्तृत्वत्व कर्मत्वत्वादीनि तेभ्योऽतिरिक्तं यच्छक्यतावच्छेदकं संबन्धत्वरूपं, तदवच्छिन्नाः संबन्धा इत्यर्थः। एवशब्देन वाच्यार्थानां कर्मत्वादीनां व्यावृत्तिः। अयं भावः – उक्ता ये कर्मत्वादयो र्था, स्तद्भिन्नो न शेषपदार्थः, निरुक्तरीत्या कर्मत्वादीनां शेषपदेन ग्रहणायोगात्, किंतु कर्मत्वत्व-कर्तृत्वत्वादीनि यान्युक्तानि शक्यतावच्छेदकानि तद्भिन्नं यच्छक्यतावच्छेदकं संबन्धत्वं, तदवच्छिन्नः शेषपदार्थः। तथा च कर्मत्वादीनामर्थानामपि संबन्धत्वरूप शक्यतावच्छेदकावच्छिन्नत्वेन शेषपदार्थतया तेषामपि षष्ठयर्थत्वसिद्धि-रिति।

**स च यथैव 'राज्ञः पुरुष' इत्यादौ स्वस्वामिभावः, तथैव सतांगत मित्यादौ कर्तृत्वादिकमपि। संबन्धत्वं च सर्वत्र शक्यतावच्छेदकम्। अत एव कर्तृत्वत्वादिना तद्बोधे लक्षणेतिवक्ष्यते। न चैवं संबन्धत्वेन रूपेण सर्वसंबन्धानां शक्यत्वे "एकशतं षष्ठयर्था" इति महाभाष्यकारीय वचनानुपपत्तिः, पार्थशब्दस्य अर्जुन इव प्रचुरप्रयोगेण तत्संबन्धग्रहणे संभवति अन्यसंबन्ध-ग्रहणस्यान्याय्यत्व मिति सूचनार्थत्वात्।**

एनमेवार्थं विशदयति – **स चेति** तादृश शक्यतावच्छेदकावच्छिन्नश्चेत्यर्थः। दार्ष्टान्तिके योजयति **तथैव सतागिति कर्तृत्वादिकमपीति** कर्तृत्वत्वादिकं शक्यतावच्छेदकं पूर्वमुक्तं, तद्भिन्नं शक्यता-वच्छेदकं संबन्धत्वं तदवच्छिन्नत्वं कर्तृत्वस्यापीति तस्यापि शेषपदार्थतया षष्ठयर्थत्वं नानुपपन्नं मिति भावः। सर्वेषां षष्ठयर्थसंबन्धानामनुगमकं धर्मं दर्शयति – **संबन्धत्वं चेति** सर्वेषु षष्ठयर्थसंबन्धेषु विद्यमानं संबन्धत्वं षष्ठीशक्यतावच्छेदकमित्यर्थः। स्वस्वामिभावत्वादिकं तु नावच्छेदकं, तस्याननु-गतत्वादिति भावः, अत एव = संबन्धत्वस्य शक्यतावच्छेदकत्वादेव, **कर्तृत्वत्वादिनेति** कृष्णस्य कृतिरित्यादौ कर्तृत्वत्वेन, जगतः कर्ता कृष्ण इत्यादौ कर्मत्वत्वादिनेत्यर्थः। तद्बोधे = कर्तृत्वकर्मत्वबोधे। लक्षणा = आनुशासनिकी लक्षणा। वक्ष्यते = कर्तृकर्मणोः कृती ति सूत्र व्याख्यावसरे, कर्तृत्वत्वकर्मत्वत्वादीनां पूर्वमुक्तत्वेन तेषां शेषपदार्थत्वायोगेन प्रकृतसूत्राप्रवृत्या कर्तृत्वत्वादिना कर्तृत्वादेर्बोधो लक्षणया, तादृश लक्षणा तात्पर्यग्राहकमेव "कर्तृकर्मणोः कृती" ति सूत्रमिति भावः। एवं च संबन्धत्वेन कर्तृत्वबोधः शक्त्या, कर्तृत्वत्वादिना कर्तृत्वादिबोधो लक्षणयेति भावः।

"षष्ठी स्थाने योगे" 1-1-49 ति सूत्रस्थ भाष्यविरोधं शङ्कते – **न चेति, एकशतमिति,** षष्ठीदण्डकपाठो नाम कश्चन ग्रन्थविशेषः, तमाश्रित्य भाष्यकृता इदमुक्तम्। **वचनानुपपत्तिरिति** भाष्यकारेण एकशतं षष्ठयर्था इति निर्णयेन कथितम्, भवता तु ततोधिकानामपि संबन्धानां संबन्धत्वेन षष्ठयर्थत्वकथना त्तद्विरोधापत्तिरिति भावः। एकशतं षष्ठयर्थाः सन्ति, "इको यणची" 6-1-77 त्यादौ षष्ठयुच्चारणे तेषां सर्वेषां बोधः प्राप्नोति। स च नेष्टः,स्थानपदाध्याहारेण स्थानपदार्थनिरूपितसंबन्धार्थ-कत्वमेवव्याकरणे षष्ठयाः संमतम्। तदर्थं "षष्ठी स्थाने योगे" ति सूत्रमारब्धमिति प्रकृतभाष्य प्रघट्टकार्थः। **पार्थशब्दस्येति** पृथापत्यत्वस्य धर्मजभीमार्जुनेषु त्रिष्वपि सत्त्वेपि पार्थशब्दस्यार्जुने प्राचुर्येण प्रयोगो दृश्यते, तद्वत् षष्ठया एकशताधिकसंबन्धार्थकत्वेपि एकशतसंबन्धेषु तस्याः प्राचुर्येण प्रयोगो दृश्यते, अतस्तावत्संबन्धग्रहणे संभवति तदतिरिक्तसंबन्धानां षष्ठयर्थत्वेन ग्रहणमन्याय्यमित्येव भाष्यकाराणामाशयः न तु तावदर्थकत्वमेव षष्ठया इति। युक्तं चैतद्भाष्याशय वर्णनम्, अत एव "एकशतं षष्ठयर्थाः" इति कथनान्तरं "यावन्तो वा सन्ति ते" इति भाष्यकृता उक्तम्। अनेन ततोप्यधिक संबन्धार्थकत्वं षष्ठया इति स्पष्टमेवावगम्यत इति बोध्यम्।

**(शेषषष्ठ्यन्तार्थस्य न भावनान्वय इति मतम्)**

**तदिह राज्ञः पुरुष इत्यत्र सेवकत्वं षष्ठ्यर्थः। तत्र निरूपकतासंसर्गेण राज्ञोन्वयः। आधेयत्वसंसर्गेण च तस्य पुरुषेन्वयः। सर्पिषो जानीते इत्यत्र वक्ष्यमाणरीत्या संबन्धत्वेन करणत्वं षष्ठ्यर्थः। तस्य धात्वर्थे इत्येवं तत्रतत्र योग्यतानुसारेण समभिव्याहृतमात्र एवान्वय इति नात्र कारकविभक्तिवत् क्रियान्वयनियम इति तार्किकाः शाब्दिका मीमांसकाश्च**

बोधप्रकारमाह – **तदिति** संबन्धत्वेन संबन्धानां षष्ठ्यर्थत्वादित्यर्थः। इह = एतत्सूत्रोदाहरणभूते, तत्र = षष्ठ्यर्थे निरूपकतासंसर्गेण = स्वनिष्ठनिरूपकतानिरूपितनिरूपितत्वसंबन्धेन, स्वनिरूपितत्वसंबन्धेनेति यावत्, आधेयत्वसंसर्गेण = स्वनिष्ठाधेयतानिरूपकतासंसर्गेण, आश्रयता संबन्धेनेति यावत्। तथा च राजनिरूपित स्वत्वाश्रयः पुरुष इति ततो बोधः, षष्ठ्यर्थस्य नामार्थ एवान्वय इति नियमो न, सति संभवेधात्वर्थेपीत्याशयेनाह – **सर्पिष इति** वक्ष्यमाणरीत्या = ज्ञोऽविदर्थस्य करणे इति समनन्तरसूत्रव्याख्यायाम्। **समभिव्याहृतेति** स च नामार्थो भवतु, धात्वर्थो वा योग्यतामात्रमपेक्ष्यत इति भावः, तदेवाह – **मात्रेति** क्रियान्वयनियमः = क्रियायामेवान्वय इति नियमः, एवं च संबन्धार्थिकायाः षष्ठ्याः कारकविभक्तित्वाभावाद् भावनां विनाप्यन्येनान्वयो न विरुध्यते। मूलोक्तरीत्या क्वचित्संभवे धात्वर्थेन, अन्यथा नामार्थेन चान्वयो वाच्यः षष्ठ्यर्थस्येति भावः।

**(तस्यापि भावनायामेवान्वय इति स्वसिद्धान्तः।)**

**वस्तुतस्तु-योग्यताद्यनुसारेण साक्षात्परम्परासाधारण्येन षष्ठ्यर्थस्यापि क्रियाया मेवान्वयः। सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारण मित्येकेनैव कार्यकारण भावेना न्वयोपपत्तेः। इतरथा षष्ठीभिन्नसुबर्थस्थले एका व्युत्पत्तिः, षष्ठीस्थले चान्येति व्युत्पत्तिद्वयकल्पनापत्तेः। इष्यते च परै रपि 'स्थाल्यां तण्डुलं पचति' 'गृहे चैत्रः पचती' त्यादौ सप्तम्यर्थस्य तण्डुलचैत्रद्वारकः क्रियान्वयो न तु तण्डुलादावेव। ततश्च राज्ञः षष्ठ्यर्थे तस्य च पुरुषद्वारकोऽस्त्यादिक्रियाया मित्येव युक्तमुत्पश्यामः।**

ननु षष्ठ्यर्थस्यान्यत्रान्वयोपगमे "एवं षष्ठ्यर्थोपि तत्रैवान्वेती" ति प्रतिज्ञा न निर्व्यूढा स्यादित्याशङ्क्य तस्यापि भावनायामेवान्वयः। प्रधानान्वयस्याभ्यर्हितत्वादिति स्वसिद्धान्तमाह – **वस्तुतस्त्विति** कृद्योगषष्ठीविषये आह – **साक्षादिति** शेषषष्ठीविषये आह – **परम्परेति** क्रियायामेव = भावनायामेव, उक्तार्थे कार्यकारण भाव लाघवमेव नियामकमित्याह – **सुबर्थेति, भावनाविशेष्यतेति** तन्निष्ठविशेष्यतेत्यर्थः। **लिङ्गानन्वयीति**, तेन वस्त्वादिपदजन्योपस्थितिविषयस्य व्यावृत्तिः। इतरथा = षष्ठ्यर्थस्यापि भावनायामेवानन्वये, एका = निरुक्तरीत्या एकाव्युत्पत्तिः। अन्या = षष्ठ्यर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुनामान्यतरपदजन्योपस्थितीविशेष्यतया हेतुरित्यन्या व्युत्पत्तिः। एतादृशी रीतिः परैरपि स्वीकृतैवेत्याह – **इष्यते चेत्यादिना न तण्डुलादावेवेत्यन्तेन,** "आधारोधिकरण" 1-4-45 मित्यनेन कर्तृकर्मद्वारा तन्निष्ठक्रियाया 'आधारस्य कारकस्याधिकरणसंज्ञाविधानस्य परैरपि स्वीकृतत्वादित्याशयः। **स्थाल्यामिति,** अत्र कर्मद्वारा स्थाल्याः पाकाधिकरणत्वम्। **गृह इति** अत्र कर्तृद्वारा गृहस्य तदधिकरणत्वम्। परैरपि एतादृशस्थले तद्द्वारकः क्रियान्वय इष्यते, न तु तण्डुलादावेवेति योजना। एवं हि सति षष्ठ्या किमपराद्धमित्याशयेनाह – **ततश्चेति, अस्त्यादिक्रियायामिति,** अध्याहृततदर्थ क्रियायामित्यर्थः। एवं च "एवं षष्ठ्यर्थोपि तत्रैवान्वेती" ति प्रतिज्ञा निर्व्यूढा भवति।

**एवं करणत्वादिकमपि यत्र संबन्धत्वेन षष्ठचर्थः, तत्र धात्वर्थद्वारकः। अत एव तत्प्रतिपादकं "ज्ञोऽविदर्थस्य करणे" 2-3-51 इति सूत्रम्। अत्र भाष्य व्याख्यानात् 'शेषे' इत्यनुवर्तते। तेन ज्ञानभिन्नार्थस्य जानातेर्धातोः करणे शेषत्वेन विवक्षिते षष्ठी स्यादिति सूत्रार्थः। सर्पिषो जानीते, सर्पिषो ज्ञानम्। अत्र लक्षणया ज्ञानपूर्विका प्रवृत्तिर्धात्वर्थः। तस्यां यत्र सर्पिषः करणत्वमेव शेषत्वेन विवक्षितम्, तदा सर्पिष इति षष्ठी। करणत्वत्वेन करणत्वविवक्षायां तृतीयैव। ज्ञानार्थके तु विषयत्वार्थिका द्वितीया। तस्य संबन्धत्वेन बोधेत् षष्ठचेव।**

राज्ञः पुरुष इत्यादौ षष्ठचर्थस्य भावनायामेवान्वय इत्युपपाद्य सर्पिषो जानीत इत्यादावपि तस्या मेवान्वयो, न धात्वर्थे इत्याह – **एवमिति** राज्ञः पुरुष इत्यादौ षष्ठचर्थवदित्यर्थः **करणत्वादिकमिति**, आदिना कर्मत्वाधिकरणत्वयोर्ग्रहणम्। धात्वर्थद्वारकः = तद्वारको भावनान्वयः, अत्र पाणिनि संमतिं दर्शयति – **अत एवेति** निरुक्तार्थस्वीकारादेवेत्यर्थः, तत्प्रतिपादकं = करणत्वस्य संबन्धत्वेन षष्ठचर्थत्वप्रतिपादकम्। अत्र = निरुक्तसूत्रे, **भाष्यव्याख्यानादिति** "अधीगर्थदयेशां कर्मणी" 2-3-52 त्यनन्तरसूत्रस्थात् "शेष इति वर्तते" इति भाष्यरूपाद् व्याख्यानादित्यर्थः। "ज्ञोऽविदर्थस्य करणे" 2-3-51 इति सूत्रे शेषपदस्यानुवृत्तावेव तदनन्तरसूत्रे "अधीगर्थे" त्यत्रापि तदनुवृत्तिः सिध्यति। अन्यथा मण्डुकानुवृत्तेरयुक्ततया तद्भाष्यमसंगतं स्यात्। अतो त्रापि शेषपदानुवृत्तिर्भाष्यकृत्संमतैवेति भावः। सूत्रेऽविदर्थस्येति च्छेदः, अन्यथाऽसन्देहाय "विदर्थस्य ज्ञः करणे" इत्येव सूत्रयेदित्याशयेनाह – **ज्ञानभिन्नार्थस्येति** यद्यपि विद ज्ञाने वेत्ति, विद सत्तायाम् विद्यते, विद विचारणे विन्ते, विद्लृ लाभे विन्दति विद। चेतनाख्यानिवासेषु वेदयते इति बहवो विदधातवः सन्ति, तथापि प्रकृतसूत्रे यस्यार्थे जानातेर्वृत्तिः संभवति, तस्यैव विदेः प्रतिषेधकरणं युक्तम्, विद ज्ञाने इत्यस्यैवार्थे जानातेर्वृत्तिः, नान्यस्यार्थे, अतस्तस्यैवात्रग्रहणमित्याशयेन "ज्ञानभिन्नार्थस्ये" ति व्याख्यातम्। ननु ज्ञा अवबोधने इत्यभियुक्तोक्ते-र्जानातेस्तदर्थकत्वमेव, कथं तद्भिन्नार्थकत्वमत आह – **अत्रेति** प्रकृतोदाहरणे इत्यर्थः। **लक्षणयेति** धातूनामनेकार्थकत्वा ज्जानातिरिह प्रवृत्तिवाचक इत्यन्ये। **प्रवृत्तिर्धात्वर्थ इति** अत एवात्रार्थे जानातेरकर्मकत्वाद् "अपह्नवे ज्ञः" इत्यनुवृत्तौ "अकर्मकाच्चे" 1-3-45 त्यनेनात्मनेपदम्। तस्यां = प्रवृत्तौ, यत्र = यदा। **करणत्वमेवेति** यस्य प्रियतमं सर्पि स्तस्य प्रवृत्तौ सर्पिषः करणत्वमेवेत्यर्थः, एवं च नात्र सर्पिरादिकं ज्ञेयत्वेन विवक्षितमिति भावः। षष्ठी = प्रकृतसूत्रेण। विवक्षितमित्यस्य प्रयोजनमाह – **करणत्वत्वेनेति-तृतीयैवेति** करणत्वत्वरूप शक्यतावच्छेदकस्य पूर्वमुक्तत्वेन तस्य शेष पदेन ग्रहीतुमशक्यत्वात्, "कर्तृकरणयोस्तृतीये" 2-3-18 त्यनेन तृतीयैव स्यादिति भावः, धात्वर्थो ज्ञानपूर्विका प्रवृत्तिरेव, सर्पिषा जानीते सर्पिषा ज्ञानमित्युदाहरणम्, अविदर्थस्येति विशेषणस्य फलमाह – **ज्ञानार्थकेत्विति** द्वितीया प्रकरणस्थ नैयायिकमतेनाह – **विषयत्वार्थिकेति** लक्षणया तदर्थिकेत्यर्थः, एवं च जानाते र्ज्ञानार्थकत्वे सकर्मकत्वात्तद्योगे द्वितीयान्तोपि प्रयोगः, सकर्मकत्वाच्च नात्मनेपदम्, प्रकृतनिषेधात् करणत्वेन विवक्षापि नास्ति, तथा च स्वरेण पुत्रं जानातीत्येव प्रयोगः, स्वरकरणक पुत्र विषयकज्ञानाश्रयत्वं चैत्रीयमिति बोधः, आख्यातस्याश्रयत्वे लक्षणा, द्वितीया = सापि, कर्मवाचकात् सापि प्रयोज्या, करणात्तु तृतीयैव, न षष्ठीति भावः। तस्य = सर्पिरादेः, **षष्ठचेवेति** तथा च पुत्रस्य जानातीति प्रयोग इति भावः।

**नचैवं "षष्ठी शेषे" इत्यनेनैव सिद्धेः पृथक्सूत्रवैयर्थ्यम्। षष्ठीपुनर्विधिः 'षष्ठचेव, न तु तल्लुक्' इत्येवंपरः, तेन तद्व्याप्यः समासो निवर्तते। ततश्च संबन्धत्वेन उक्त धात्वर्थकरणत्वविवक्षायां न षष्ठीसमासः।**

ननु "ज्ञोऽविदर्थस्ये" त्यत्र शेषपदानुवृत्तिर्न कार्या। अनुवृत्तौ हि शेषे एवानेन षष्ठी विधानेन तत्र च "षष्ठी शेषे" इत्यनेनैव तस्याः सिद्धतया एतत्सूत्रारम्भवैयर्थ्या पत्तिरित्याशयेन शङ्कते – **न चेति** एवं = शेषपदानुवृत्त्या शेषे एवानेन षष्ठीप्रवृत्तौ, **सिद्धेरिति** "षष्ठी शेषे" इति सामान्यसूत्रेणैव शेषे षष्ठ्याः सिद्धेरित्यर्थः। **पृथक् सूत्रेति** "ज्ञोऽविदर्थस्ये" ति सूत्रान्तर प्रणयनस्य वैयर्थ्यमित्यर्थः। समाधत्ते – **षष्ठीपुनर्विधिरिति** षष्ठी शेषे इत्येव सिद्धे अनेन षष्ठ्याः पुनर्विधानमित्यर्थः। अस्य "इत्येवं पर" इत्यत्रान्वयः, इत्येतादृशनियमफलक इत्यर्थः, नियमाकारं दर्शयति – **षष्ठ्येवेति** षष्ठी भवत्येव श्रूयत एवेत्यर्थः, एतन्नियमव्यावर्त्यं दर्शयति – **न तु तल्लुगिति** न कदापि तस्याः षष्ठ्या लुगित्यर्थः। ननु लुकःकः प्रसङ्गः यो नियमेन वार्यत इत्यत आह – **तेनेति** लुङ्निवारण फलकनियमस्वीकारेणेत्यर्थः। तद्व्याप्यः = लुको व्याप्यः। कृदन्त तद्धितान्त समासरूप प्रातिपदिकावयवसुपः क्यजन्तादि धात्ववयव सुपश्च लुग्विधानेन लुको व्यापकत्वं, समासस्य तद्व्याप्यत्वं स्पष्टमेव, **निवर्तत इति** न भवतीत्यर्थः। प्रकृतनियमेन व्यापकस्य लुकोऽभावे बोधिते तद्व्याप्यः समासोपि न भवतीति भावः, लुक्प्रयोजकः समासो नेति यावत्। अयं भावः-षष्ठी श्रूयत एवेति प्रकृतसूत्रेण नियम्यते, तस्य च लुगभावमात्रे न तात्पर्यम्। किं तु लुक्प्रयोजक समासाभावेपि, अन्यथा लुगभावकल्पनेपि समासप्रवृत्तौ तत्प्रयोज्यस्य लुकः "सुपो धातुप्रातिपदिकयो" 2-4-71 रित्यनेन दुर्वारतया षष्ठ्याः श्रवणानापत्त्या श्रूयत एवेति नियमस्य वैयर्थ्यापत्त्या प्रकृतसूत्रारम्भस्य वैयर्थ्यं दुर्निवारमेव स्यात्। अत एतत्सूत्रेण सामर्थ्यात् "सुपो धातुप्रातिपदिकयो" रिति लुक्शास्त्रं "षष्ठी" ति षष्ठीसमासविधायक शास्त्रं चेत्युभयमपि बाध्यते-इति। फलितार्थमाह – **ततश्चेति उक्तधात्वर्थेति** ज्ञानभिन्नार्थक जानातिकरणत्वस्य सर्पिरादिनिष्ठस्य संबन्धत्वेन विवक्षायामित्यर्थः, **न षष्ठीसमास इति** प्रकृतसूत्रप्रणयनान्यथानुपपत्या समासशास्त्रस्यापि बाधकल्पनात्समासो न प्रवर्तते, तेन सर्पिषो ज्ञानमित्यसमस्तमेव साध्विति भावः।

अत्रेदं बोध्यम् – षष्ठी शेषे इत्येव सिद्धे सूत्रमिदं षष्ठीसमासाभावमात्रफलकम्। तथा च समासप्रवृत्तियोग्यं सर्पिषो ज्ञानमित्यादि कृदन्तघटितमेवास्य मुख्यमुदाहरणं भवितुमर्हति, न तिङन्त-घटितम्, तत्र समासप्रवृत्त्ययोगात्। एवं प्रत्युदाहरणान्यपि कृदन्तघटितान्येव समासरूपाणि, तथैवोदाहृतं प्रत्युदाहृतं च सिद्धान्तकौमुद्यां भट्टोजि दीक्षितैः, यद्यपि काशिकाकारै स्तिङन्तघटितानि प्रदर्शितानि। तत् कृदन्तोपलक्षणमिति व्याख्यातं हरदत्तेन। संभवमात्रेण तु प्रकृतग्रन्थकृता तिङन्तघटितान्यपि प्रदर्शितानि-इति

**एवमुत्तरेष्वपि सप्तसु सूत्रेषु षष्ठीपुनर्विधिः मातुः स्मरण, मित्यादौ शेषषष्ठीसमासनिषेधार्थ एव। तत्र हि "अधीगर्थदयेशां कर्मणि" 2-3-52 इति सूत्रा देषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'मातुः स्मरति' 'मातुः स्मरणम्' 'सर्पिषो दयते' 'सर्पिषो दयनम्' 'जगतामीष्टे' 'जगतामीशन' मित्यादौ षष्ठी। अधीगर्थाः = स्मृत्यर्थाः। अत्र शेषत्वादेव षष्ठीप्राप्तौ पुनः षष्ठीविधिः षष्ठीसमासप्रतिषेधार्थः।**

"ज्ञोऽविदर्थस्य करणे" इति सूत्रमिवान्यत्सूत्रसप्तकमपि समासाभावफलकमित्याह – **एवमिति** प्रकृत सूत्र इवेत्यर्थः। सप्तसु – अधीगर्थ, कृञः प्रति, रुजर्थानां, आशिषिनाथः। जासिनि प्र, व्यवहृपणोः, कृत्वोर्थप्रयोगे, एषु सप्तसु। मातुः स्मरणमित्यादावित्यादिपदेन एधोदकस्योपस्करणमित्यादेर्ग्रहणम्। **निषेधार्थ एवेति** शेषे सामान्य सूत्रेणैव षष्ठ्याः सिद्धतया पुनरारभ्यमाणमिदं सप्तकं निरुक्तरीत्या नियमबोधकया समासाप्रवृत्ति फलकमेवेत्यर्थः। तत्र = सप्तानां सूत्राणां मध्ये। कर्मणि = कर्मत्वे, "शेष इति वर्तते इति प्रकृतसूत्रस्थ भाष्यादाह – **शेषत्वेन विवक्षित इति** इक् स्मरणे इत्यादादिको धातुः,

इगर्थेत्येव वक्तव्ये अधिपूर्वकस्योच्चारणम्, अधिपूर्वक एवायं प्रयोक्तव्यः, न तु केवलः इति ज्ञापनार्थम्, अधीक् इत्यनेन समानार्थाः अधीगर्थाः स्मृत्यर्थका इत्यर्थः, तदाह — **अधीगर्थाः = स्मृत्यर्था इति** दय = दानगति रक्षणेषु इति भौवादिकः, ईश = ऐश्वर्ये इत्यादादिकः। अत्र = एतत्सूत्रोदाहरणेषु शेषत्वादेव = मात्रादिषु कर्मत्वस्य शेषत्वादेव, शेषपदार्थत्वादेव। षष्ठी प्राप्तौ = षष्ठी शेषे इत्यनेन षष्ठ्याः सिद्धौ, पूर्वोक्तप्रक्रियानुसारेणाह — **षष्ठीसमासप्रतिषेधार्थ इति** एवं च मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनीति भावः।

**न चैवं 'हरिस्मरण' मितिप्रयोगानुपपत्तिः। तस्य कृद्योगे कर्मत्वत्वेन कर्मत्वबोधकषष्ठी-समासत्वेनोपपत्तेः। तत्फलं च कारकपूर्वकत्वात् कृदुत्तरपदप्रकृतिस्वरो मकारोत्तराकारस्योदात्तः। शेषषष्ठीसमासत्वे अन्तोदात्तत्वापत्तेः। तथाच स्वरार्थेय मष्टसूत्रीति फलितम्।**

निरुक्तार्थस्वीकारे प्रयोगासिद्धिमाशङ्कते — **न चेति** एवं प्रकृतसूत्रेण सामर्थ्यात् षष्ठीसमासाभाव-कल्पने, **हरिस्मरणमितीति** इत्यादिप्रयोगाणामनुपपत्तिरित्यर्थः, आद्यर्थकेतिशब्देन "विशेषस्मृति हेतवः" "पदात्पदार्थस्मरण" मित्यादेर्ग्रहणम्। समाधत्ते — **तस्येति** प्रयोगस्येत्यर्थः, अस्य "उपपत्तेरित्य-त्रान्वयः, **कर्मत्वत्वेनेति** कर्मत्वस्य कर्मत्वत्वेन विवक्षायां "कर्तृकर्मणोः कृती" 3-2-65 त्यनेन कृद्योगे षष्ठ्यां तदन्तेन षष्ठीसमासः सिध्यतीत्यर्थः। स च समासो महाविभाषाधिकाराद्वैकल्पिकः तेन हरेः स्मरणमित्यपि भवतीति भावः, ननु शेषत्वाविवक्षायां कृद्योगषष्ठ्यन्तेन वैकल्पिकसमासस्वीकारे "अधीगर्थे" त्यादीनां वैयर्थ्यमेव, तत्साध्यसमासाभावरूपफलस्याऽसिद्धेरित्यत आह — **तत्फलं चेति** कृद्योगषष्ठ्यन्तेन समासस्य फलं त्वित्यर्थः। **कृदुत्तरपदेति** कृदन्तोत्तरपदस्य विधीयमानः प्रकृतिस्वरः कारकपूर्वकत्वात्प्रवर्तत इत्यर्थः। अयमर्थः — स्मरणशब्दो ल्युडन्ततया "लिति" 6-1-193 इत्यनेन आद्युदात्तः, तेन कर्मषष्ठ्यन्तस्य समासे "गतिकारकोपपदात्कृत्" 6-2-139 इत्यनेन स्मरण शब्दः प्रकृतिस्वरं लभते, गतेः कारकादुपपदाच्च परं कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे इति तत्सूत्रार्थः, समासात्पूर्वं स्मरणशब्दस्य निरुक्तरीत्या आद्युदात्ततया तत्पुरुषसमासेपि तस्यानेन तत्स्वरकत्वं सिध्यति, हरेरस्मिन् पक्षे कारकत्वात्प्रकृत स्वरः प्रवर्तते, एवं च हरिस्मरणशब्दस्य मध्योदात्तत्वं सिध्यति-इति। तदाह — **मकारोत्तराकारस्योदात्त इति।** नन्वेवमपि "अधीगर्थे" त्यादीनां फलं नोपपादितं स्या, दत आह — **शेषषष्ठी समासत्वे इति** कर्मत्वस्य शेषत्वविवक्षया तदन्तेन षष्ठीसमासे इत्यर्थः, **अन्तोदात्तत्वापत्तेरिति,** अन्तोदात्तत्वस्यानिष्टस्यापत्तेरित्यर्थः। अयमर्थः — अधीगर्थेत्यादीनामनारम्भे कर्मत्वस्य शेषत्वेन षष्ठ्यां तदन्तेन समासे कारकपूर्वकत्वाभावात्कृत्स्वरस्याप्राप्त्या "समासस्य" 6-1-123 ति सामान्यसूत्रेण समासान्तोदात्तत्वं स्यात्, तच्चानिष्टम्, तद्वारणाय "अधीगर्थे" त्यारब्धम्। आरब्धे तु तस्मिन् तेन निरुक्तरीत्या सामर्थ्यात्समासाभावज्ञापनात् समासान्तोदात्तत्वं न भवति। एवं च समासाभावज्ञापनद्वारा समासान्तोदात्तत्ववारणमस्य प्रकरणस्य प्रधानं फलमिति निष्कर्षः, एषामुदाहरणेषु समासस्तु प्रकारान्तरेण प्रवर्तत एवे-ति। तदाह — **तथा च स्वरार्थेयमष्टसूत्रीति फलितमिति**, एवं च कर्मषष्ठ्यन्तेन समासे कृदुत्तर पदप्रकृतिस्वरेण मध्योदात्तत्वमेव, शेष षष्ठ्यन्तेन समासे प्राप्तसमासान्तोदात्तत्ववारणाय "अधीगर्थे" त्यादि प्रकरणम्, तत्र तद्बलात्समासाभाव एव, एतद् व्यवस्था बोधनार्थमेव इयमष्टसूत्री षष्ठीविधायकप्रकरणे द्वितीयाध्याय तृतीयपादे पठिता, न तु षष्ठीसमासनिषेधप्रकरणे द्वितीयाध्यायद्वितीय-पादे। तथा सति कारकषष्ठ्यामपि समासनिषेधापत्तेरिति बोध्यम्

**किंच यत्र 'मातुः स्मृत' मित्यादौ "न लोकाव्यये" त्यनेन कर्मषष्ठी प्रतिषिद्धा, तत्र शेषषष्ठ्या समासप्रसक्तौ तन्निषेधार्थं षष्ठीपुनर्विधिः।**

यत्र "कर्तृकर्मणो" रिति षष्ठी निषिद्धा, शेषत्वेन विवक्षायां षष्ठी प्राप्ता, तत्र समासवारणमपि प्रकृतसूत्रस्य प्रयोजनमित्याह — **किञ्चेति मातुः स्मृतमिति**, अत्र न कर्मणि क्तः, क्तेन कर्मण उक्ततया "अधीगर्थे" ति सूत्रस्याविषयत्वात्, नापि भावे, धातोः सकर्मकत्वात्, नापि कर्तरि, गत्याद्यर्थकत्वाभावात्, किंत्वादिकर्मणि, यद्वा कर्मणः शेषत्वेन विवक्षयाऽकर्मकत्वाद्भावे क्तः, द्वितीयान्तं चेदं, पश्येत्यादेः शेषो बोध्यः, **निषिद्धेति**, प्रकृते स्मृतशब्दस्य निष्ठाप्रत्ययान्ततया "न लोके" त्यादिना षष्ठी निषिद्धा, क्त — क्तवतोर्निष्ठा संज्ञा पाणिनिना कृता "क्त क्तवतूनिष्ठे" 1-1-26 ति, **तन्निषेधार्थमिति**, उक्तं च भर्तृहरिणा —

निष्ठाया कर्मविषया षष्ठी च प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते।। इति।

मातुर्गुण स्मरणमित्यादौ करणे गुणे शेषत्वेन विवक्षिते एतदप्रवृत्यर्थं "सूत्रे" कर्मणी" ति। गुणेन करणेन मातुः स्मरणमित्यर्थः. अत्रैतदप्रवृत्या शेषे षष्ठ्या समासः सिध्यति।

**एवं "कृञः प्रतियत्ने" 2-3-53 इतिसूत्राद् गुणाधाने विद्यमानस्य करोतेः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकाद् 'एधोदकस्यो पस्कुरुते' एधोदकस्योपस्करण' मित्यत्र षष्ठी। प्रयोजनं पूर्ववत्।**

सप्तसु सूत्रेषु द्वितीयं व्याचष्टे -- **एवमिति** प्रतियत्न शब्दार्थमाह — **गुणाधाने इति**, उदकस्य औष्ण्य संपादनं गुणाधानम्। **एधोदकस्येति**, एधांसि च दकानि च एषां समाहारः एधोदकम्, तस्येत्यर्थ इति हरदत्तदीक्षितादयः। चैत्रः काष्टानामुदकानां च गुणमाधत्ते इत्यर्थः। "गन्धनावक्षेपणसेवनसाहसिक्य-प्रतियत्नप्रकथनोपयोगेषु कृञः" 1-3-32 इत्यात्मनेपदम्, "उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च" 6-1-139 त्यनेन सुडागमः, एधोदकस्योपस्करण मित्यस्य चैत्रादिना तस्य गुणाधानं क्रियत इत्यर्थो बोध्यः, "एध इति पृथक् पद" मिति शब्देन्दुशेखरे नागेशः, तन्मते एध इति कर्तृपदम्, उपस्करणमिति कर्तृल्युप्रत्ययान्तम्। कर्तरि ल्युप्रत्ययः पुंस्येवेति नियमो नास्ति, अत एव "नन्दने" ति टाबन्तप्रयोगो "गाङ्लिटी" 2-4-45 ति सूत्रे भाष्ये इति बोध्यम्।

पदवाक्यरत्नाकर व्याख्यातारस्तु "गुणाधानमुपकरणं संनिधापनम्, एधोदककर्मक संनिधापनप्रयत्ना-श्रयश्चैत्र इति बोधः। तदनन्तरं सतः पाकस्य क्षिप्रसंपत्तिरूपगुणाधानक मेधोदकसंनिधापनमिति वैयञ्जनिकोबोध" इति व्याचक्षते।

प्रयोजनम् = षष्ठी शेषे" इत्यनेनैव सिद्धे एतत्सूत्रारम्भस्य प्रयोजनम्, पूर्ववत् = समास स्वराप्रवृत्ति, रेतदारम्भसामर्थ्यादिति पूर्वोक्तरीत्यैव।

**एवं "रूजार्थानां भाववचनाना मज्वरेः" 2-3-54 इतिसूत्रात् रूजा = व्याधिः, तदर्थानां भाव एव यत्र कर्ता तेषां ज्वरिवर्जितानां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'चोरस्य रूजति रोगः' 'चोरस्य रोगस्य रूजा' इत्यादौ चोरे षष्ठी। अत्र रोगाख्यव्याधेरेव व्याध्यन्तरं प्रति कर्तृत्वाद्भावकर्तृत्वम्। तस्य कर्मणिचोरे संबन्धत्वेन विवक्षिते कर्मत्वे षष्ठी। कर्मत्वत्वेन विवक्षितेतु तिङन्ते द्वितीयैव, कृदन्तेतु षष्ठीसमासोपि, संबन्धत्वेन विवक्षायां न षष्ठीसमास इत्यादि पूर्ववत्। अत्र "अज्वरिसंताप्योरिति वाच्य" मिति वार्तिकात् 'रोगस्य चौरज्वरः, चौरसन्ताप' इत्यादौ समासो भवत्येव। भावकर्तृकत्वग्रहणाच्च 'नद्याः कूलरूजा, नदी कूलं रूजतीत्यादिप्रयोगः।**

तृतीयं व्याचष्टे – **एवं रुजार्थानामिति**, रूजो भङ्गे इति धातोः "षिद्भिदादिभ्योऽङ्" 3-3-104 इति भिदादिपाठादङ् प्रत्ययः, अस्मादेव निपातनाद्वा अङ्। ङित्वान्नोपधागुणः स्त्रियामदन्तत्वाट्टापि रूजेति रूपमित्याशयेनाह – **रूजा = व्याधिरिति** भाववचनानामित्येतद् विवृणोति – **भाव एव यत्र कर्ता तेषामिति** अयमर्थः – भाववचनानामित्यस्य भावबोधकानामिति नार्थः, रूजादि धातूनां भाववाचित्वाव्यभिचारेण व्यर्थत्वात्, अतो भावशब्दो धञाद्यन्तोपस्थाप्यार्थपरः, वचनशब्दो बाहुलकात्कर्तृल्युडन्तः, वक्तीति वचनः, अत्र प्रकृत्यर्थो न विवक्षितः, असंभवात्, न हि रूजार्थानां भावो वक्ता प्रतिपादयिता उच्चारयिता वा उपपद्यते, अतः प्रत्ययार्थ एव विवक्षितः, प्रत्ययस्य साधुत्वनिर्वाहाय वचि धातुः प्रयुक्तः। तथा च भावः = घञादिवाच्यक्रियारूपो भावः, वचनः = कर्ता येषामिति विग्रहेण भावकर्तृकाणामित्यर्थः सिध्यती-ति **रूजति रोग इति** तिङा कर्तृत्वस्योक्तत्वाद्रोगपदान्न तृतीया किंतु प्रथमा, रोगस्य रूजेत्यत्र "कर्तृकर्मणो" रिति कर्तरिषष्ठी, रूजतेर्भाव कर्तृकत्वमुपपादयति – **अत्रेति** उदाहरणेष्वित्यर्थः, व्याधेरेव = क्षयाख्यव्याधेरेव। व्याध्यन्तरं प्रति = रोगान्तरं प्रति। **कर्तृत्वादिति** क्षयरोगः सर्वेषां रोगाणां मूलमिति वैद्यकशास्त्रप्रसिध्द्या तस्य रोगान्तरं प्रति कर्तृत्वमिति भावः, "षष्ठी शेषे" इत्येव सिद्धे सूत्रारम्भस्य प्रयोजनं पूर्ववत्प्रतिपादयति, **तस्येति** – भावकर्तृकरूज धातोरित्यर्थः, **कर्मत्वे षष्ठीति**, परंतु प्रकृतसूत्रेण सामर्थ्यात्समासाभावबोधनान्न समासः, अतश्चोरस्य रूजेति व्यस्तमेव साध्विति बोध्यम्, **द्वितीयैवेति** कृद्योगाभावात् "कर्तृकर्मणो" रित्यस्याप्राप्त्या "कर्मणि द्वितीये" ति द्वितीयैव भवतीत्यर्थः, कृद्योगे तु "कर्तृकर्मणोः कृती" ति षष्ठी प्रवर्तते, परंतु प्रकृतसूत्रस्याऽविषयत्वात् षष्ठीसमासो भवत्येवेत्याह – **कृदन्तेत्विति** सूत्रारम्भस्य प्रयोजनं विशदयति – **संबन्धत्वेनेति** कर्मत्वस्य शेषत्वेन विवक्षायामित्यर्थः। अत्र = सूत्रे, **समास इति** प्रकृतसूत्रस्याप्रवृत्या "शेषे" इति षष्ठ्यां राजपुरुष इत्यादाविव षष्ठीसमासो भवत्येव। सूत्रे ज्वरिरेव पर्युदस्तः, वार्तिके तु सन्तापिरपि, भाववचनानामित्यस्य प्रयोजनमाह – **भावकर्तृकत्वेति कूलरूजेति** रूजिरत्र द्रव्यकर्तृकः, न भावकर्तृकः, नद्या द्रव्यत्वात्, ननु नेदं प्रत्युदाहरणं युक्तम्, रूजा शब्दो हि रूढिशब्दत्वात् व्याधिमेवाचष्टे, न चात्र रूजिर्व्याधिवचनः, किन्तु भङ्गवाची, इति, चेत् सत्यम्, प्रत्युदाहरणदिगियं दर्शिता मूलकृता, श्लेष्मा पुरुष रुजतीति प्रत्युदाहरणं देयम्, व्याधिना कासादिना पुरुषं ग्राहयतीत्यर्थः। श्लेष्मात्र न भाव इति प्रत्युदाहरणम्।

**एवम्-"आशिषिनाथः" 2-3-55 इतिसूत्रात् आशीरर्थकस्य नाथतेः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'सर्पिषोनाथते, सर्पिषोनाथन' मित्यादौ षष्ठी। सर्पि स्तेबहुलं भूया दित्याशास्ते इत्यर्थः। आशीरर्थकत्वाभावेतु माणवकनाथन मिति समासः।**

चतुर्थ व्याचष्टे **एव माशिषिनाथ इति** नाथृ याञ्चोपतापैश्वर्याशीष्षु इति अभियुक्तैः पठ्यते। तत्रान्यव्यावृत्यर्थ सूत्रे "आशिषी" ति।तदाह – **आशीरर्थस्येति नाथते इति** अस्य धातोरनुदात्तेत्त्वेपि "आशिषि नाथ" इति वार्तिकेन आशिष्येव नाथं इति नियमनादन्यत्र नात्मनेपदम्। **सर्पिस्ते भूयादिति** यस्य सर्पिर्नास्ति, तं प्रतीयमुक्तिः, आशिषी त्यस्य कृत्यमाह – **अनाशीर्थकत्वे त्विति माणवकनाथनमिति** अत्र याञ्चा धात्वर्थः, एवं चोदाहरणे न समासः, प्रत्युदाहरणे समासः, समासान्तोदात्तत्वं याञ्चादावेव, न त्वा शिषि "इदं भूया" दितीच्छा आशीः, तत्प्रयुक्तः परादित्सानुकूलो व्यापारो याञ्चेति तयोर्भेद इति बोध्यम्,

**एवं "जासिनिप्रहणनाटक्राथपिषां हिंसायाम्" 2-3-56 इतिसूत्रा द्धिंसार्थाना मेषां कर्मणि शेषत्वेन विवक्षिते षष्ठीस्यादित्यर्थकात् चौरस्योज्जासनम्, निप्राभ्यामुपसर्गाभ्यां समस्ताभ्यां विपर्यस्ताभ्यां व्यस्ताभ्यां वा युक्तोहनः = निप्रहणः। चौरस्य निप्रहणनम्, प्रणिहननम्, निहननम्,**

**प्रहणनं वा, चौरस्यो न्नाटनम्, चौरस्य क्राथनम्। चौरस्यपेषण मित्यादौ षष्ठी, हिंसात्वाभावेतु धानापेषणमिति समासः पूर्ववत्।**

पञ्चमं व्याचष्टे — **एवं जासीति** सूत्रादित्यस्य इत्यादौ षष्ठी ति व्यवहितेन संबन्धः। सूत्रे जासीत्यनेन जसु ताडने, जसु हिंसायामिति चौरादिकयोर्ग्रहणम्, जासिति दीर्घनिर्देशात्'' नतु जसु मोक्षणे इति दैवादिकस्य, तस्य दीर्घरूपायोगात्, निप्रहण इति धातूपसर्गनिर्देशमात्रमिह विवक्षितं, न तूपसर्गयोः संघातः, नाप्यानुपूर्वी, तयोरविवक्षितत्वादित्याशयेन व्याचष्टे **निप्राभ्यामुपसर्गाभ्यामिति समस्ताभ्यामिति** निप्र इति प्रनि इति वा समस्ताभ्यामित्यर्थः, एवं च निप्राभ्यां युक्तः हनः = हन धातुः = निप्रहण इति लब्धम्, सूत्रे ''हन्तेरत्पूर्वस्ये'' 8-4-22 ति णत्वम्। एवं च चत्वारि रूपाणि उदाहरणानि भवन्ति, तान्येव दर्शयति — **चौरस्य निप्रहणनमिति** प्रनि इति विपर्यासे द्वितीयमुदाहरणम्, व्यस्तयोः केवलयोः नि, प्र अनयोर्ग्रहणे उदाहरणद्वयम्। **उन्नाटनमिति** नट अवस्कन्दने इति चौरादिकस्य ग्रहणम्, न तु नट नृत्ताविति भौवादिकस्य, नाट इति दीर्घनिर्देशात्, **क्राथनमिति** क्रथ हिंसायामिति भ्वादौ पठ्यते, तस्येह निपातनाद् वृद्धिरिति वृत्तिकारः। **पेषणमिति** पिष्लृ संचूर्णने इति रौधादिकः, एषूदहरणेषु न समासः। हिंसायामित्यस्य कृत्यं दर्शयति — **हिंसात्वाभावेत्विति धानापेषणमिति** नात्र हिंसा, तस्याः प्राणिधर्मत्वात्। धानानाम-प्राणित्वात्, अत्र समासान्तोदात्तत्वं फलम्।

**एवं ''व्यवहृपणोः समर्थयोः'' 2-3-57 इतिसूत्रादेकार्थयो रनयोः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'शतस्यव्यवहरणम्, शतस्य पणन' मित्यादौ षष्ठी। अत्र हि व्यवहृधातोः पणनापरपर्यायं द्यूतमप्यर्थः। पणधातोश्च क्रयविक्रयव्यवहारोपि। अतोद्वयो स्तुल्यार्थकत्वम्। अर्थान्तरत्वेतु षष्ठीविध्यभावा न्न समासप्रतिषेधः। शलाकाव्यवहारः, गणनेत्यर्थः ब्राह्मणपणनम्, स्तुति रित्यर्थः।**

षष्ठं व्याचष्टे — **एवं व्यवहृ इति** सूत्रे समर्थयोरित्यत्र समपर्याय सम् शब्दस्य अर्थशब्देन समासः, यद्वा समशब्देन समासः, सम + अर्थ = समर्थ — शकन्ध्वादित्वात्पररूपम्, इत्याशयेन व्याचष्टे — **एकार्थयोरिति व्यवहरणमिति** क्रयविक्रयेण शतस्य विनियोग इत्यर्थः, पणनमित्यस्यापि स एवार्थः, अनयोर्धात्वोस्तुल्यार्थत्वमुपपादयति — **अत्रेति** — प्रकृतसूत्रोदाहरणेष्वित्यर्थः, व्यवहृधातोः = वि + अव पूर्वकहृधातोः अनेन केवलस्य हृधातो र्व्यावृत्तिः, **व्यवहारोपीति**, तथा चाभियुक्तैः पठ्यते — पण = व्यवहारे स्तुतौ चेति, द्वयोः = व्यवहृपण धात्वोः, एवं च क्रयविक्रय व्यवहारे द्यूते चानयोस्तुल्यार्थ कत्वात्तत्रैवास्य प्रवृत्तिः, नान्यत्रार्थे इति भावः, समर्थयोरित्यस्य प्रयोजनमाह — **अर्थान्तरत्वेत्विति** क्रयविक्रयाद् द्यूताच्च भिन्नो योर्थ, स्तदर्थकत्वेत्वित्यर्थः, **षष्ठीविध्यभावादिति** निरुक्तार्थस्या भानात् प्रकृतसूत्रेण षष्ठीविधानस्या भावादित्यर्थः, एवं च प्रकृत सूत्राविषयत्वेन न समासनिषेधः, केवलशेषषष्ठ्यन्तेन समासः प्रवर्तत एवेति भावः।

**एवं ''कृत्वोर्थप्रयोगे कालेधिकरणे'' 2-3-64 इतिसूत्रात् कृत्वोर्थानां शब्दानां प्रयोगे कालवाचिन्यधिकरणे शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् पञ्चकृत्वोऽह्नो भुङ्क्ते, पञ्चकृत्वोऽह्नो भोजनम्, 'द्विरह्नो भोजन' मित्यत्र षष्ठी। अत्र षट्सूत्या विच्छिन्नमपि शेषग्रहणं व्याख्यानतो मण्डूकप्लुत्या नुवर्तते। अधिकरणत्वेन विवक्षायां तु 'द्विरहनिभुङ्क्ते' इतिसप्तम्येव, तत्सिद्ध-मियमष्टसूत्री शेषत्वविवक्षायां समासप्रतिषेधार्थे-ति**

सप्तमं व्याचष्टे — **एवं कृत्वोर्थेति** ''संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'' 5-4-17 इत्यनेन

संख्यावाचकात् क्रियाजन्मगणनवृत्तेः कृत्वसुच् प्रत्ययो विहितः, एवं "द्वित्रि चतुर्थ्यः सुच्" 5-4-18 इत्यनेन द्वि, त्रि, चतुर, एभ्यः तस्मिन्नर्थे सुच् प्रत्ययः, एवं "बहो र्धाऽविप्रकृष्टकाले" 5-4-20 इत्यनेन बहुशब्दात् धा प्रत्ययः, एवं च त्रयः प्रत्ययाः कृत्वोर्थशब्देन गृह्यन्ते, कृत्वः = कृत्वसुचः, योर्थः क्रियाजन्मगणनरूपः, स येषां ते = कृत्वोर्थाः, तेषां प्रयोग इत्यर्थः, तदाह – **कृत्वोर्थानां शब्दानामिति** पञ्चकृत्वः, द्विः, त्रिः, बहुधा एतादृशानां शब्दानामित्यर्थः, सुच् धा प्रत्ययान्तानां संग्रहाय सूत्रे कृत्वोर्थ इत्यर्थग्रहणम्। अधिकरणे = अधिकरणत्वे, कृत्वसुच् प्रत्ययान्ते उदाहरति – **पञ्चकृत्व इति**, सुच् प्रत्ययान्ते उदाहरति **द्विरिति** एवं त्रि रह्नो भोजनं, बहुधाऽह्नो भोजनमित्यादि बोध्यम्।

नन्वत्र शेष इति न संबध्यते, षड्भिः सूत्रैर्विच्छेदादित्याशङ्क्याह – **अत्रेति** कृत्वोर्थ प्रयोग इति प्रकृतसूत्र इत्यर्थः अस्य, शेषग्रहणमनुवर्तत, इत्यत्रान्वयः, षट्सूत्त्र्या = दिवस्तदर्थस्य" 2-3-58 "विभाषोपसर्गे" 2-3-59 "द्वितीया ब्राह्मणे" 2-3-60 "प्रेष्यब्रुवोर्हविषो देवता संप्रदाने" 2-3-61 "चतुर्थ्यर्थे बहुलं छन्दसि" 2-3-62 "यजेश्च करणे" 2-3-63 इति षड्भिः सूत्रैः। **विच्छिन्नमिति** एतच्च "दिवस्तदर्थस्ये" ति सूत्रव्याख्यावसरे ग्रन्थकृता प्रदर्शयिष्यते, **व्याख्यानत इति** "अधीगर्थे" ति सूत्रे "कर्मादीना मविवक्षाशेषः" इति भाष्ये कर्मादीनामिति बहुवचनान्तप्रयोगरूपाद् व्याख्यानादित्यर्थः। कर्मादीनामित्यादिपदेन "ज्ञोऽविदर्थस्य करणे" इति सूत्रस्थस्य करणस्य "कृत्वोर्थप्रयोगे काले धिकरणे" इति सूत्रस्थस्य अधिकरणस्य च ग्रहणे बहुवचन मुपपद्यते, नान्यथा, अत एव वृत्तिकृताप्यत्र शेषपदसंबन्धः प्रदर्शित इति भावः, एतदाशयेनैव "व्यवहृपणो" रिति सूत्रानन्तरमेव व्यवहितमपि एतत्सूत्रमत्रव्याख्यातं रहस्यकृता, शेषपदानुवृत्तेः फलमाह – **अधिकरणत्वेनेति** अह्नि शेते इत्यादावेतदप्रवृत्तये "कृत्वोर्थ ग्रहणम्, अहनि भुक्तमित्यादौ प्रकरणादिना कृत्वोर्थस्य गम्यत्वेपि एतदप्रवृत्तये "प्रयोगे" इति। द्विः कांस्यपात्र्यां भुङ्क्ते इत्यादावप्रवृत्तये काल ग्रहणम्, प्रकरणार्थ मुपसंहरति – **तत्सिद्धम् इयमष्टसूत्री शेषत्वविवक्षायां समासप्रतिषेधार्थे ती ति** स्पष्टं चेदं "षष्ठी" 2-2-8 ति सूत्रे कैयटे "न निर्धारणे" 2-2-10 इति सूत्रे हरदत्तग्रन्थे शब्दकौस्तुभे च। "न निर्धारणे" इति सूत्रे "प्रतिपदविधाना षष्ठी न समस्यते" इति वचनं कात्यायनेनारब्धम्, साक्षात्तद्धातु कारकोपादानेन विहिताषष्ठी प्रतिपदविह्निा षष्ठीत्युच्यते, सा न समस्यते इति वार्तिकार्थः, "ज्ञोऽविदर्थस्ये" त्यादि "कृत्वोर्थप्रयोगे" इत्येतदन्तविहिता षष्ठ्येव प्रतिपदविधाना षष्ठी, तत्सूत्रोदाहरणान्येव समासनिषेध-वार्तिकोदाहरणानि। एवं स्थिते "षष्ठी शेषे" इत्येव सिद्धे तत्तत्सूत्रारम्भसामर्थ्यात्समासाभावः कल्प्यते, एतत्सिद्धार्थकथनपरमेवेदं कात्यायनस्य वचनं, नापूर्वमिति कैयटादिग्रन्थेषु प्रतिपादितम्, तदेवात्र रहस्यकृता निरुपितम्,

वस्तुतस्तु – इदमयुक्तम्, जानात्यादि तत्ताद्धातुयोगे उपात्तकारकाति रिक्तकारकाणां शेषत्वविवक्षा-ऽभावज्ञापनेनापि "ज्ञोऽविदर्थस्य करणे" इत्यादि सूत्राणां चारितार्थ्यसंभवेन निरुक्तार्थकल्पनाया असंभवात्, अतोऽपूर्वतया "प्रतिपदविधाना षष्ठी न समस्यते" इति वार्तिकं वाच्यमेव, अत एव अक्षाणां देवितेत्यादौ तृन्नन्ते "न लोके" ति निषेधात् "कर्तृकर्मणोः कृती" त्यस्याप्रवृत्त्या "दिवस्तदर्थस्ये" त्यनेन षष्ठ्यां "प्रतिपदविधाने" ति निषेधप्रवृत्या समासाभावः सिद्धः, कैयटादिमते तु "दिवस्तदर्थस्ये" त्यत्र शेषपदस्य निवृत्या समासो दुर्वारः। अत एव भगवाता नेदं वार्तिकं प्रत्याख्यातम्, स्पष्टमधिकमन्यत्रेति बोध्यम्।

**यानितु "षष्ठीहेतुप्रयोगे" 2-3-26 इत्यादीन्यनुशासनानि, तानि लाक्षणिकानुशासनानि। तथाहि – "षष्ठीहेतुप्रयोगे" इति सूत्रा द्धेतुशब्दप्रयोगे हेतुत्वत्वेन हेतौ बोध्ये षष्ठी स्यादित्यर्थकाद् 'अन्नस्य हेतो र्वसती' त्यत्र षष्ठी। अत्र हेतुत्वत्वेन हेतुत्वं लक्षणया षष्ठ्यर्थः। तच्च पूर्वं निरुक्तम्। हेतुशब्दप्रयोग स्तात्पर्यग्राहकः। तदुत्तरषष्ठ्याः सामानाधिकरण्यसिध्यर्थ**

**स एवार्थः। अन्नहेतुकवासाश्रयत्व मित्यादि शाब्दबोधः। अत्र हेतुप्रयोगाभावे तत्त्वेन हेतुत्वविवक्षायां पूर्वोक्तविधया तृतीयैव, शेषत्वेन हेतुत्वविवक्षायांतु हेतुशब्दप्रयोगाभावेपि शक्त्यैव षष्ठ्यन्तः प्रयोगः। सर्वनाम्नस्तु हेतुशब्दप्रयोगे हेतुत्वत्वेन हेतुत्वविवक्षायां षष्ठी** वैकल्पिकी, "सर्वनाम्न स्तृतीया च" 2-3-27 इति सूत्रात्। 'केन हेतुना वसति' कस्य हेतो र्वसति, **तृतीयेत्युपलक्षणम्। "निमित्तकारणहेतुषु सर्वासांप्रायदर्शन" मिति वार्तिकात्। तेन 'को हेतु र्वसति चैत्रः, कं हेतुं वसति, कस्मै हेतवे वसति, कस्माद्धेतोर्वसति, कस्मिन् हेतौ वसति' इत्यादयोपि प्रयोगाः साधवः। अत्र सर्वत्र हेतुत्वमेव विभक्त्यर्थः, अनुशासनबलात्। कीदृशहेतुकं वासाश्रयत्वमित्यादिरेव च शाब्दबोधः। 'वसति चैत्र' इत्यत्र कोहेतुः, कं हेतु मुररीकृत्य वसतीत्यादियोग्यपदाध्याहारेण व्याख्यानेतु विभक्तीनां तत्तदर्थकत्व मेवेतिध्येयम्।**

**एवं 'किं निमित्तं वसति, 'केन निमित्तेन वसति, कस्मै निमित्ताये' त्यादि। किं कारणं वसति, केन कारणेनेत्यादि। निमित्तादिशब्दाना मेकार्थकत्वेपि पृथगुपादान मुपलक्षणार्थम्। तेन प्रयोजनादिपदप्रयोगेपि सर्वा विभक्तयो भवन्ति। असर्वनाम्नोपि हेत्वादिशब्दप्रयोगे सर्वा-विभक्तयः। 'अन्नाद्धेतोर्वसति, अन्नेन कारणेन वसति' इत्यादयः। वृत्तिकारेण "सर्वनाम्न स्तृतीया चे" 2-3-27 ति सूत्रे पठितस्याप्यस्य वार्तिकस्य "हेता" 2-3-23 विति सूत्रे भाष्यकारेण पाठात्। प्रायग्रहणम् 'असर्वनाम्नः प्रथमाद्वितीये न स्तः' इत्येतदर्थम्। तेन 'अन्नं कारणं वसती' त्यप्रयोगः।**

एवं शक्यार्थबोधकानि सूत्राणि व्याख्याय लक्ष्यार्थबोधकानि तानि व्याचष्टे — **यानि त्विति-लाक्षणिकेति** अनुगतैकशक्यतावच्छेदका लाभा बहुलक्ष्यासाधकत्वाच्च न शक्यार्थबोधकानि, किं तु लाक्षणिकानुशासनीत्यर्थः, "हेतौ" 2-3-23 इति सूत्रमनुवर्तते इत्याशयेनाह — **हेतौ बोध्ये इति लक्षणयेति** तत्रैव तात्पर्यग्राहकमिदं सूत्रमिति भावः। तच्च = हेतुत्वं च। **पूर्वनिरुक्तमिति** द्रव्यादिनिरूपितत्वघटित-संसर्गेण क्रियान्वयि हेतुत्वमिति तृतीयाप्रकरणे. "हेता" 2-3-23 विति सूत्रव्याख्यावसरे पूर्वमेव निरुक्तमित्यर्थः, नन्वेवं हेतुशब्दप्रयोगो व्यर्थः स्यादित्यत आह — **हेतुशब्देति तदुत्तरेति** हेतुशब्दोत्तरेत्यर्थः, **सामानाधिकरण्येति** अन्नस्येत्यादिना सामानाधिकरण्येत्यर्थः, **स एवेति** हेतुरेवेत्यर्थः, यथा पाणिनिमते चैत्र इत्यादौ चैत्रादि प्रातिपदिकं तात्पर्यग्राहकम्, चैत्रादिरेव प्रथमार्थ, स्तद्वदिति भावः, लक्षणया आश्रयत्वमाख्यातार्थ इत्याह — **वासाश्रयत्वमिति** अत्र = उदाहरणे, तत्त्वेन = हेतुत्वत्वेन, पूर्वोक्तविधया = करणत्वत्वेन करणत्वविवक्षायां तृतीयैवे" ति "ज्ञोऽविदर्थस्य करणे" 2-3-51 इति सूत्रोक्तरीत्या। शेषत्वेन = संबन्धत्वेन, "षष्ठी शेषे" इति सूत्रस्य शक्यार्थानुशासनत्वादाह — **शक्त्यैवेति** सर्वनाम्नस्तु = सर्वनाम्नः प्रयोगे तु **सूत्रादिति** सूत्रे सर्वनाम्न इति षष्ठ्यन्तम्। सर्वनाम्नो हेतुशब्दस्य च प्रयोगे तृतीया स्यात् चात् षष्ठी चेति सूत्रार्थः। वार्तिकमवतारयति, **तृतीयेत्युपलक्षणमिति** एषु प्रयुज्यमानेषु तेभ्यस्तत्समानाधिकरणशब्देभ्यश्च सर्वासां विभक्तीनां प्रायेण दर्शनं संमतमिति वार्तिकार्थः। अत्र = उदाहरणेषु। सर्वत्र = प्रथमा-द्वितीयादि साधारण्येन सर्वविभक्त्यन्तेषु, अनुशासनबलात् = वार्तिकबलात्। प्रयोगग्रहणस्य फलमाह — **वसति चैत्र इति** निमित्तशब्दयोगे उदाहरति — **एवं किं निमित्तमिति**, कारणशब्दयोगे उदाहरति **किं कारणमिति**, वार्तिके निमित्तादिपर्यायशब्दोपादनस्य फलमाह — **निमित्तादिशब्दानामिति उपलक्षणार्थमिति** तदर्थकशब्द-मात्रग्रहणार्थमित्यर्थः, निरूपितं चैतत्पञ्चमीप्रकरणे "अन्यारा त्सूत्रव्याख्यावसरे। तत्प्रयोजनमाह — **तेनेति** उपलक्षणार्थत्वेनेत्यर्थः। **प्रयोजनादि पदेति** किं प्रयोजनं वसति, केन प्रयोजनेन वसति, कस्मै प्रयोजनाय वसतीत्यादयः प्रयोगाः सिध्यन्तीत्याशयः, "सर्वनाम्नस्तृतीया चे" त्येतत्सूत्रप्रसङ्गे

''निमित्तकारणेत्यादि वार्तिकस्य प्रदर्शितत्वात्सर्वनाम्नः प्रयोग एव प्रकृतवार्तिकप्रवृत्ति रिति भ्रमं निरस्यति — **असर्वनाम्नोपीति**, सर्वनामभिन्नस्यापीत्यर्थः, उदाहरति, **अन्नाद्धेतोरिति** ननु वृत्तिकारेणास्य वार्तिकस्य ''सर्वनाम्नस्तृतीया चे'' ति सूत्रे पठितत्वात्सर्वनामप्रयोगे एवास्य प्रवृत्तिरिति युक्तैवेत्यत आह — **वृत्तिकारेणेति पाठादिति** एवं च भाष्यप्रामाण्यादसर्वनाम्नोपि सर्वा विभक्तयो जायन्त इत्येव युक्तमिति भावः, नन्वसर्वनाम्नः प्रथमाद्वितीये प्रसज्येयाता-मत आह — **प्रायग्रहणमिति इत्येतदर्थमिति** एवं च प्रायग्रहणादेव तद्वारणमिति भावः।

**एवं ''षष्ठ्यतसर्थप्रत्ययेन'' 2-3-30 इतिसूत्रात् अतसर्थप्रत्ययः = अतसुच्प्रत्ययरादिः ''दक्षिणोत्तराभ्या मतसुच्'' 5-3-28 इत्यादिसूत्रविहितः, तेन योगे षष्ठीस्यादित्यर्थकाद् 'ग्रामस्य दक्षिणतः, ग्रामस्योत्तरतः, 'ग्रामस्यो परि, 'ग्रामस्योपरिष्टात्' इत्यादौ षष्ठी। अत्र प्रतियोगित्वं षष्ठ्यर्थः।**

लाक्षणिकमुशासनान्तरं व्याचष्टे — **एवं षष्ठ्यतसर्थेति** अतसः = अतसुच् प्रत्ययस्य अर्थ इवार्थो यस्य सः अतसर्थः, स चासौ प्रत्ययश्चेति कर्मधारयः। एते च प्रत्यया नव — १. अस्तातिः, पुरस्तात्, २. असिः पुरः उभयत्रापि पूर्वशब्दस्य पुर् आदेशः, ३. अतसुच्, दक्षिणतः उत्तरतः, ४. रिल्, उपरि, ५. रिष्टातिल्-उपरिष्टात्, उभयत्रापि ऊर्ध्वशब्दस्य ''उप'' इत्यादेशः, ६. आति, पश्चात्, अत्र अपरशब्दस्य पश्चादेशः, ७. एनप्, दक्षिणेन, ८. आच्, दक्षिणा, ९. आहि, दक्षिणाहि। एते दिग्देशकालवृत्तिभ्यः सप्तमी पञ्चमी प्रथमान्तेभ्यो विधीयन्ते, एभिर्योगे अनेन सूत्रेण षष्ठी विधीयते, तत्रान्त्यप्रत्ययत्रययोगे द्वितीयापञ्चमौ षष्ठ्या बाधिके, आतिप्रत्यये भाष्यकारवचनात्पञ्चमी, परिशेषात् आद्यप्रत्ययपञ्चकेन योगेऽनेन षष्ठी प्रवर्तते, तदेतदाह — **अतसर्थ प्रत्ययः = अतसुच् प्रत्ययादिरिति** आदिशब्देन अस्ताति, असि, रिल् रिष्टातिल् एतेषां ग्रहणम्। **इत्यादिसूत्रेति** आदिशब्देन ''दिक् शब्देभ्यः सप्तमी 5-3-27 'पूर्वाधर'' 5-3-39 ''उपर्युपरिष्टात्'' 5-3-31 इत्येषां सूत्राणां ग्रहणम्। **ग्रामस्य दक्षिणत इति** ग्रामस्य दक्षिणे देशे वसति, ग्रामस्य दषिणाद्देशादागतः, ग्रामस्य दक्षिणो देशः शोभते इत्युदाहरणवाक्यार्थः, एवं दिक्कालवाचि दक्षिणादियोगेप्यर्थो बोध्यः, **इत्यादौ षष्ठीति** आदिना ग्रामस्य पुरस्तात्, ग्रामस्य पुर इत्यादीनां ग्रहणम्। अत्र = सूत्रोदाहरणेषु। **प्रतियोगित्वमिति** लक्षणया तत् षष्ठ्यर्थ इत्यर्थः।

**तत्त्वेन बोधार्थं पृथगनुशासनम्। न तु पञ्चम्यपवादार्थम्। 'विन्ध्याद् दक्षिणतः' इत्यादिप्रयोगस्य दृष्टत्वात्। अत एव ''ततः पश्चात् स्रंस्यतेध्वंस्यते'' इत्यादि भाष्यप्रयोगः सामान्येन ज्ञापक इति केचित्। तन्न, ''प्रकृतायाः पञ्चम्या द्वितीयाषष्ठ्यौ बाधिके भविष्यतः'' इति ''पृथग्विने'' 2-3-32 तिसूत्र भाष्यविरोधात्। अतः पञ्चम्यपवादार्थमप्येतदनुशासनम्। ''विन्ध्या'' दित्यादिप्रयोग स्त्वपप्रयोगः। ज्ञापकं च पश्चाद्योगमात्रविषयम्।**

केषाञ्चिन्मतमुपक्षिपति — **तत्त्वनेति**, प्रतियोगित्वत्वेनेत्यर्थः, **पृथगनुशासनमिति** ''अन्यारादितिसू—त्रीय दिक्शब्दग्रहणापेक्षया भिन्नसूत्रप्रणयनम्। इयं दिग्योगपञ्चम्यपवाद इति मतं दूषयति, **न तु पञ्चम्यपवादार्थमिति**, एवं चातसर्थप्रत्यययोगे ग्रामस्य दक्षिणतः, ग्रामाद्दक्षिणत इति विभक्तिद्वयमपि साध्विति भावः। अत्रोपपत्तिं दर्शयति — **विन्ध्यादिति** ''विन्ध्याद्दक्षिणतोऽखिलैरपि बुधैः कृष्णादिको नेष्यते'' इति क्वाचित्कः प्रयोगः। **दृष्टत्वादिति** एतद्विहितषष्ठ्याः पञ्चम्यपवादत्वे तत्प्रयोगो नोपपद्येतेत्याशयः, अत्रार्थे महाभाष्यमपि प्रमाणयति **अत एवेति** अतसर्थक प्रत्यययोगे पञ्चम्या अपीष्टत्वादेवेत्यर्थः। **ततः पश्चादिति** तच्छब्दात्पञ्चम्यन्तात् ''पञ्चम्यास्तसिल्'' 5-3-7 इति तसिल्

प्रत्ययः, पञ्चम्या लुक्, त्यदाद्यत्वे रुत्वविसर्गयोः 'तत' इति रूपम्, अपरशब्दात् "पश्चात्" 5-3-32 इत्यनेन आतिप्रत्यये अपरशब्दस्य पश्चादेशे च पश्चादिति रूपम्। पश्चाच्छब्दस्य अतसर्थकप्रत्यया—न्ततया तद्योगेऽनेन पञ्चमीबाधनेन षष्ठ्या एव प्रवृत्तौ तत इति पञ्चम्यन्तप्रकृतिकतसिलन्तप्रयोगो भाष्ये नोपपद्येत, अस्मन्मते तु पश्चाच्छब्दस्य दिक्शब्दत्वेन तद्योगे तच्छब्दात्पञ्चम्या अपि प्रवृत्त्या तत्सङ्गतिः स्पष्टैवेति भावः **भाष्यप्रयोग इति** "अचः परस्मिन् पूर्वविधौ" 1-1-57 इति सूत्रे अयं प्रयोगः, ननु पश्चाच्छब्दमात्रप्रयोगे पञ्चमीति स्वीकारेपि भाष्यमुपपद्यत एवेत्यत आह — **सामान्यत इति** अतसर्थकप्रत्ययान्तेन योगे पञ्चमीति सामान्यत एव ज्ञापकं, न तु पश्चाच्छब्दयोग एवेति विशेषरूपेणेति भावः, **ज्ञापक इति** प्रकृतसूत्रविहित षष्ठ्या दिग्योगलक्षण पञ्चम्यबाधकत्वं इत्यर्थः, "असति बाधके प्रमाणानां सामान्ये पक्षपात" इति न्यायेनोक्तार्थ ज्ञापनमेव युक्तमिति भावः।।

तन्मतं दूषयति — **तन्नेति** प्रकृतायाः = प्रक्रान्तायाः "अन्यारा" दिति सूत्रविहित दिग्योगलक्षणप—ञ्चम्याः। **भाष्येति** तत्र हि "पृथगादिषु पञ्चमीविधानम्" (पृथक् देवदत्तात्) इति कात्यायनेन वचनमारब्धम्। तच्च "अपादाने पञ्चमी" 2-3-38 त्यतः पञ्चमीग्रहणानुवृत्त्या पञ्चमीं संसाध्य भाष्यकृता प्रत्याख्यातम्। तत्पक्षे "षष्ठ्यतसर्थप्रत्ययेन" 2-3-30 "एनपा द्वितीया" 2-3-31 इति सूत्रद्वयेपि पञ्चमी विधीयेतेति दोषमभिधाय तत्परिहाराय "प्रकृतायाः पञ्चम्याः" इत्यादिभाष्यं प्रवृत्तम्। एवं च 'षष्ठ्यतसर्थे' ति षष्ठी 'एनपेति' सूत्रविहिता द्वितीया च पञ्चमीं बाधेते इति तद्भाष्यार्थः। **विरोधादिति** अनेन पञ्चम्यपवादत्वेन षष्ठ्या लाभात्तद्विरोध इत्यर्थः। तर्हि "विन्ध्याद्दक्षिणत" इति प्रयोगस्य कागतिरत आह — **विन्ध्यादिति** अपप्रयोगः = अपशब्दः, भाष्यमपि प्रकृतार्थसाधकं नेत्याह — **ज्ञापकं चेति** ज्ञापकं त्वित्यर्थः, **पश्चाद्योगमात्रविषयकमिति** निरुक्त पृथग्विनेत्यादि सूत्रस्थभाष्यानुरोधेन "ततः पश्चा" दिति भाष्यं पश्चाच्छब्दयोग एव पञ्चम्या ज्ञापकं, न तु अतसर्थक प्रत्ययान्तयोगसाधा—रण्येनेतयर्थः।

**श्रुतस्यैव चात्रातसुच्प्रत्ययस्य निमित्तता, न तु लुप्तस्य-प्राग् वनादित्यादौ। प्रत्ययलोपे षष्ठ्यभावस्य भाष्यकैयटसिद्धत्वात्।**

"षष्ठ्यतसर्थेने" त्येव सिद्धे सूत्रे प्रत्ययग्रहणं चिन्त्यप्रयोजनम्। न च यत्र प्रत्ययः श्रूयते तत्रैव षष्ठीत्यर्थसिद्ध्यर्थं तत्। अत एव प्राग् ग्रामादित्यादौ अतसर्थस्य लुकि नैतत्प्रवृत्तिरिति वाच्यम्। एतद्विहितषष्ठ्यपवादतया "अन्यारा" दिति सूत्रे अञ्चूत्तरपदग्रहणेन पञ्चम्या विधानात्, अन्यथा दिक्शब्दत्वेनैव सिद्धे अञ्चूत्तरपदग्रहणं व्यर्थमेव स्यादिति भट्टोजि दीक्षितादयो वैयाकरणाः, तन्मतं दूषयति — **श्रुतस्यैवेति** प्रयोगे श्रूयमाणस्यैवेत्यर्थः। अत्र = एतत्सूत्रप्रवृत्तौ। अतसुच् प्रत्ययस्य = तदर्थकप्रत्ययस्य।

एवशब्दव्यावर्त्यमाह — **न तु लुप्तस्येति,** शास्त्रेण योऽतसर्थप्रत्ययो लुप्यते, तस्येत्यर्थः, लुप्तप्रत्ययस्थलमुदाहरति — **प्राग् ग्रामादिति** अयमर्थः — प्राच् इति शब्दात् स्त्रियाम् "उगितश्चे" 4-1-6 ति ङीपि प्राची इति रूपम्, ततो दिग्वाचकात् "दिक्शब्देभ्यः सप्तमी पञ्चमीप्रथमाभ्यो दिग्देशकाले ष्वस्तातिः" 5-3-27 इति अस्तातिप्रत्ययः, प्राची + अस्तात् इति जाते, तस्य च "अञ्चेर्लुक्" 5-3-30 इत्यनेन अञ्चत्यन्त दिक्शब्दात्परस्य लुक्, प्राची इति जाते "लुक् तद्धितलुकि" 1-2-49 इत्यनेन स्त्रीप्रत्ययस्य लुकि प्राक् इति भवति, तस्य प्राच्यां दिशि, प्राच्यादिशः प्राची दिक् इति वाऽर्थः, अत्र अतसर्थप्रत्ययस्य अस्तातेर्लुप्ततया न ग्रामशब्दादनेन षष्ठी, किंतु दिक्शब्दयोगे "अन्यारा" दिति पञ्चम्येव, अत्र प्रत्ययग्रहणाभावे प्रागित्यादेरपि प्रत्ययलक्षणेन अतसर्थप्रत्ययान्ततया षष्ठी प्रवर्तेत, ग्रामस्य दक्षिणत इत्यादौ प्रत्ययस्य श्रुतत्वात् षष्ठी प्रवर्तते-इति। एवं च प्रकृतसूत्रे प्रत्ययग्रहणेनैव प्राग् ग्रामादित्यादौ षष्ठीवारणा द्दिक्शब्दप्रयोगे पञ्चम्या निरपवादं प्रवृत्त्या "अन्यारा" दित्यादिसूत्रे

अञ्चूत्तरपदं चिन्त्यप्रयोजनमित्येव युक्तमिति ग्रन्थकृतो गूढाभिसन्धिः, आदिपदेन प्रत्यक् ग्रामात्, उदक् ग्रामादित्यादेर्ग्रहणम्। ननु दीक्षिताद्युक्तरीत्या प्राग् ग्रामादित्यादौ अञ्चूत्तरपदेनैव पञ्चमीं साधयित्वा अत्र प्रत्ययग्रहणस्यैवाकर्तव्यत्वमस्त्वत आह – **प्रत्ययलोपे इति** अस्तातिप्रत्ययस्य लुक्शब्देन लोप इत्यर्थः। **भाष्येति** तथा च प्रकृतसूत्रे भाष्यम् – ''अथ प्रत्ययग्रहणं किमर्थम्? इह मा भूत्, प्राग् ग्रामात्, प्रत्यग् ग्रामात्'' इति। अत्र प्रत्ययग्रहणेन षष्ठी वारितेति स्पष्टमेव लभ्यत इत्याशयः। ननु प्रदर्शित भाष्यादनन्तरम् ''अञ्चूत्तरपदस्याप्येतत्प्रयोजनमुक्तम्, तत्रान्यतरच्छक्यमकर्तु'' मित्युक्तं भाष्यकृता, दिक्शब्दत्वादेव सिद्धे पुनः ''अन्यारा'' त्सूत्रे अञ्चूत्तरपदग्रहणं ''षष्ठ्यतसर्थे'' ति षष्ठी बाधनेन पञ्चमी विधानार्थम्। तेन प्राग् ग्रामादित्यादौ पञ्चम्येव न षष्ठीति ''अन्यारा'' त्सूत्रे उक्तम्। अत्र प्रत्यय ग्रहणस्यापि तदेव प्रयोजनमुच्यते। एवं चैकप्रयोजनकमेव सूत्रद्वयेपि पदद्वयमित्याक्षेपाभिप्रायकः ''अञ्चूत्तरपदस्याप्येतत्प्रयोजनमुक्त'' मिति भाष्यग्रन्थः, तत्समाधानपरः ''अन्यतरच्छक्यमकर्तु'' मिति ग्रन्थः। अत्र भाष्यकृता प्रत्ययपदाञ्चूत्तरपदयोरन्यतरस्याकर्तव्यत्वप्रतिपादनादन्यतरेण षष्ठीवारण-मित्यर्थलाभात् प्रत्ययग्रहणेनैव षष्ठीवारणे किं वा विनिगमकमिति चेत्-श्रृणु-लाघवात् अञ्चूत्तरपद-ग्रहणस्यैवाकर्तव्यत्वं भगवतो भाष्यकारस्याभिमतम्। तथाहि – दिग्योगलक्षणपञ्चम्याः ''षष्ठ्यतसर्थे'' ति षष्ठी बाधिकेति निर्विवादम्। प्राग् ग्रामादित्यादौ प्रत्ययस्य लोपेपि प्रत्ययलक्षणेन षष्ठी प्राप्ता, सा चात्र प्रत्ययग्रहणेन वार्यते। एवं हि ''अन्यारा'' त्सूत्रे अञ्चूत्तरपदग्रहणस्याकर्तव्यत्वं स्पष्टमेवेति लाघवम्। अत्र प्रत्ययग्रहणाभावे तु प्राग् ग्रामादित्यत्र दिग्योग लक्षण पञ्चमीबाधनेना नेन षष्ठी प्राप्ता, तद्बाधनेन पञ्चमीसिद्धये अञ्चूत्तरपदग्रहणेन पुनरपि पञ्चम्या विधाने गौरवं स्पष्टमेव। अत्र प्रत्ययग्रहणे तु तत्र षष्ठ्याः प्राप्तेरेवाभावेन निरपवादं दिग्योगलक्षणपञ्चमी प्रवर्तते। एवं चान्यारात्सूत्रे अञ्चूत्तरपदग्रहण-प्रत्याख्यानमेव साधीयः। नागेशभट्टा अपि अन्यारात्सूत्रे शब्देन्दुशेखरे एवमेव भाष्याशयं प्रत्यपीपदन्। एवं च ''प्रत्ययग्रहण चिन्त्यप्रयोजन'' मिति मनोरमाकाराः परास्ताः। तदेतत्सर्वं मनसि कृत्वा आह – **सिद्धत्वादिति।**

**एवम् ''एनपाद्वितीया'' 2-3-31 इतिसूत्रा देनबन्तेन योगे द्वितीया योगविभागात् षष्ठी चेत्यर्थकाद् 'दक्षिणेन ग्रामम्, ग्रामस्य वे' त्यत्र द्वितीया षष्ठी च, प्रतियोगित्वं विभक्तिद्वयार्थः। पञ्चम्यपवादः, पूर्वलिखित भाष्यात्। अत एव –**

**''तत्रा गारं धनपतिगृहा दुत्तरेणास्मदीयम्''**

**इत्यादिरपप्रयोगः। हरदत्तादयोप्येवम्।**

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **एवमेनपेति**, एनप् प्रत्ययोऽतसर्थकः, तदन्तेन योगे पूर्वसूत्रेण षष्ठ्यां प्राप्तायामनेन द्वितीया विधीयते, क्वचित्तद्योगे षष्ठ्या अपीष्टत्वात्तत्सिद्धये वृत्तिकारोक्तमुपायमाह – **योगविभागादिति** अयमर्थः – एनपा इत्येकं सूत्रम्, तत्र षष्ठीत्यनुवर्तते, एनबन्तेनयोगे षष्ठी स्यादित्येको वाक्यार्थः, ''द्वितीये'' ति द्वितीयं सूत्रम्, एनपेत्यनुवर्तते, एनबन्तेन योगे द्वितीया स्यादिति द्वितीयो वाक्यार्थः, विधानसामर्थ्याद् विभक्तिद्वयमपि प्रवर्तते-इति तदाह – **षष्ठी चेति पूर्वलिखितेति** षष्ठ्यतसर्थेति समनन्तरपूर्वसूत्रे लिखितात् ''प्रकृतायाः पञ्चम्या द्वितीयाषष्ठ्यौ बाधिके भविष्यतः'' इति ''पृथग्विने''त्यादि सूत्रस्थाद् भाष्यादित्यर्थः, **अत एवेति**, एतद्विहितविभक्तेः पञ्चम्यपवादत्वादेवेत्यर्थः, **तत्रागारमिति**, मेघदूते द्वितीयसर्गे कालिदासपद्यैकदेशोयम्, मूले आदिपदेन ''स्त्र्यधिकारात्परेण वासरूपविधि र्न भवति'' ''ततः परेण नायमनुवर्तते'' इति महाभाष्यकारवचनयो र्ग्रहणम्, उत्तरशब्दात् उत्तराधरदक्षिणादित्यनुवृत्तौ ''एनबन्यतरस्यामदूरेऽपञ्चम्याः'' 5-3-35 इत्यनेन एनप्, तद्योगे

प्रकृतसूत्रप्रवृत्या दिग्योगलक्षणपञ्चम्ययोगा दस्य प्रयोगस्या साधुत्वम्, एनबन्यतरस्यामित्यत्र उत्तराधरदक्षिणग्रहणस्याननुवर्तनमत्ते परशब्दादपि एनपः प्रवृत्या षष्ठ्या एव प्राप्त्या स्त्र्यधिकारात्, ततः इति पञ्चम्यन्तयो र्भाष्यकारीययोरसाधुत्वमित्याशयः, अपप्रयोगः = अपशब्दः, **हरदत्तेति**, इत्थं हि प्रकृतसूत्रे तदीयोग्रन्थः "तत्रागारं धनपतिगृहादुत्तरेणास्मदीयम्" "स्त्र्यधिकारात्परेण वासवरूपविधिर्न" "ततः परेण नायमनुवर्तते" इत्यादीनां साधुत्वं चिन्त्यम्" इति।।

अत्रेदं बोध्यम् – कालिदासपद्ये धनपतिगृहानिति शसन्तः पाठः। अत एव "उत्तरेणेत्येनबन्तमव्ययम्" "एनपा द्वितीये" 2-3-31 ति द्वितीये ति मल्लिनाथो व्याख्यत्, हरदत्तेनतु पञ्चम्यन्तः पाठ उपलब्धः स्यात्, किं च तत्पाठेपि उत्तरेणेति न एनबन्तम्, किंतु तोरणेनेत्यनेन समानाधिकरणं तृतीयैकवचनान्तम्; तथाच "अन्यारा" दित्यादिना दिक्शब्दयोगे धनपतिगृहादिति पञ्चमी सुलभा।

"स्त्र्यधिकारात्परेणे" ति भाष्यप्रयोगे परेणेत्यत्र "सहयुक्तेऽप्रधाने" 2-3-19 इति तृतीया, स्त्र्यधिकारात्परेण शास्त्रेण सह वासरूपसंबन्धो नेति तदर्थः, "ततः परेणे" ति वाक्ये एनपेति योगविभागविहित षष्ठ्यन्तात्तच्छब्दात् सार्वविभक्तिस्तसिः, न तु पञ्चम्यन्तात्तसिलिति न दोषः।

वस्तुतस्तु एनपेति योगविभागो न भाष्यरूढः अतस्तद्योगे षष्ठी न भवत्येव, प्रत्युत "षष्ठ्यतसर्थे" 2-3-30 तिसूत्रात्पूर्वमेव "एनपा द्वितीये" ति सूत्रस्या ष्टाध्याय्यां पाठ इति "पृथग्विनानाने" 2-3- ति सूत्रस्थ भाष्याल्लाभेन क्लृप्तस्वरितकत्वादधिकाराच्च एनपेत्यत्र पञ्चम्याः संबन्धो न्याय्यः। एवं च उत्तरेण परेणेत्यादेरेनबन्तत्वेपि तद्योगे पञ्चम्याः साधुत्वं लभ्यत एव, अदूरे एनपो विधानेन धनपति गृहाणा मदूरवर्तित्वं यक्षगृहस्येत्यर्थलाभोपि प्रयोजन-मिति।

**एवं "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" 2-3-34 इतिसूत्रा देतैर्योगे षष्ठी वा स्यात्पञ्चमी चेत्यर्थकाद् 'दूरमन्तिकं वा ग्रामस्य ग्रामाद्वा' इत्यत्र पञ्चम्या सह वैकल्पिकी षष्ठी। अत्र प्रतियोगित्वमेव तदर्थः।**

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **एवं दूरान्तिकेति** एतैः = दूरार्थकैरन्तिकार्थकैश्च, **पञ्चमी चेति** अयमर्थः – सूत्रे साक्षात् षष्ठी उपात्ता, ततो तिरिक्तं विभक्तित्रयमत्रप्रकृतम्, "अपादाने पञ्चमी" 2-3-28 ति पञ्चमी, "एनपाद्वितीये" 2-3-31 ति द्वितीया, "पृथग्विनानानाभिस्तृतीयान्यतरस्या" 2-3-32 मिति तृतीया च, तत्र पञ्चम्या एव समुच्चयो, न द्वितीयातृतीययोरपि, अन्यथा "पृथग्विनानानाभिस्तृतीयान्य-तरस्या" 2-3-32 मित्यतोन्यतरस्यांग्रहणे नुवर्तमाने पुनस्तत्सूत्रे न्यतरस्यांग्रहणं व्यर्थमेव स्यात्, न चात्रान्यतरस्यांग्रहणे कृतेपि तयोः कुतो न समुच्चय इति वाच्यम्, "पृथग्विने" त्यादि सूत्रेऽन्यतरस्यां ग्रहणेन पञ्चमीसमुच्चयस्योक्तत्वेन इहा प्येकप्रघट्टकत्वेन तस्या एव समुच्चयस्यौचित्या-दिति। **दूरमन्तिकमिति** एवं विप्रकृष्टमभ्याशमित्यादियोगेपि पञ्चमीषष्ठ्यौ ज्ञेये। तदर्थः = विभक्तिद्वयार्थः।

**एवं "दिवस्तदर्थस्य" 2-3-58 इतिसूत्रात् "व्यवहृपणोः समर्थयोः" इतिपूर्वसूत्रोक्तपरा-मर्शितच्छब्दबलेन द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थका 'शतस्य दीव्यती' त्यादौ षष्ठी। स्तुत्यादिरूपार्थान्तरपरत्वेतु 'ब्राह्मणं दीव्यती' त्यत्र द्वितीयैव। अत्र न शेषत्वेन कर्मत्वविवक्षा, अन्यथा दिवः पूर्वसूत्र एव पाठापत्तौ पृथक्सूत्रारम्भवैयर्थ्यात्।**

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **एवं दिव इति** सूत्रे तदर्थस्येत्यत्र तच्छब्देन "व्यवहृपणोः समर्थयोः" 2-3-5 इति सूत्रोक्तौ व्यहृपणौ परामृश्येते, तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे

गृहीतौ, अतोत्रापि तदर्थकस्य दिवु धातोर्ग्रहणमित्याशयेन "तदर्थस्ये" ति व्याचष्टे – **व्यवहृपणोरित्यादिना व्यहारार्थस्य चेत्यन्तेन** दिवः = दिवुधातोः। तदर्थस्येत्यस्य कृत्यमाह – **स्तुत्यादिरूपेति** अत्र समासवारणफलाभावात्तिङन्तमेवोदाहृतं, न कृदन्तमपीति बोध्यम्। ननु "व्यवहृपणोः समर्थयो" रित्यत्र व्यवहिते "कृत्वोर्थप्रयोगे" इत्यत्र च शेषपदसंबन्धात् मध्यस्थेऽत्रापि सूत्रे तत्संबन्धस्यावश्यकतया कर्मणि शेषत्वेन विवक्षिते इत्यर्थो वाच्यः स्यादत आह – **अत्रेति** – दिवस्तदर्थस्येत्यादि षट् सूत्र्यामित्यर्थः। **न शेषत्वेनेति** अत्र शेषदानुवृत्तेरभावान्न शेषत्वेन विवक्षेत्यर्थः, अननुवृत्तौ प्रमाणमाह– **अन्यथेति** अत्रापि तदनुवृत्तावित्यर्थः। दिवः = दिवु धातोरपि। पाठापत्तौ = पाठस्य कर्तव्यतायाम्, "व्यवहृपणदिवां समर्थाना" मित्येकसूत्र एवकर्तव्ये। **पृथक् सूत्रेति** भिन्नसूत्रारम्भस्य वैयर्थ्यादित्यर्थः, अत्रापि शेषपदसंबन्धे तु निरुक्तरीत्या एकसूत्रकरणेनैवोपपत्तौ योगविभागो व्यर्थः स्यात्, एक योगे तदर्थस्येति पदस्या कर्तव्यत्वेन लाघवमप्यस्ति, परं तु ऋषिणा तथा न कृतम्, अतो योगविभागरूपाद् व्याख्यानादत्र शेषपदासंबन्ध इति भावः।

**दिवे रुपसर्गयोगेतु विकल्पेन षष्ठी, "विभाषोपसर्गे" 2-3-59 इतिसूत्रात्, 'शतस्य शतंवा प्रतिदीव्यति' इदं च लोके, ब्राह्मणेतु "द्वितीया ब्राह्मणे" 2-3-60 इतिसूत्रा च्छन्दस्युपसर्गयोगाभावेपि द्वितीयैव "गामस्य तदहः सभायां दीव्येयुः – (शत. ब्रा – 13 का) इत्यादौ।**

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **दिवेरूपसर्गयोगे त्विति** पूर्वेण नित्यं षष्ठ्यां प्राप्तायामिदं विकल्पेन तद्विधायकमित्याह – **विकल्पेनेति** उपसर्गग्रहणस्य शतस्य दीव्यतीति तदर्थस्येत्यस्य शलाकां प्रतिदीव्यतीति च व्यावर्त्यं बोध्यम्। उत्तरसूत्रबलादाह – **इदं चेति** – प्रकृतसूत्रमित्यर्थः।

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **ब्राह्मणेत्विति** ब्राह्मणं = वेदभागः, ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कर्मत्वत्वेन विवक्षिते द्वितीया स्यादिति सूत्रार्थः, सोपसर्गस्य दिवेः "विभाषोपसर्गे" इत्यत्र व्यवस्थितविभाषाश्रयणेनापि च्छन्दसि नित्यं द्वितीयायाः सिद्धतया निरुपसर्गार्थोऽय मारम्भ इत्याह – **उपसर्गयोगाभावेपीति गामस्येति** सभायामित्येतदपेक्षया गामस्येति शेष षष्ठी। गामस्य सभायामित्यन्वयः, तदहः, इत्युदाहरणमिति न्यासकारहरदत्तौ, अहन् शन्दस्य नपुंसकस्य द्वितीयैकवचनान्तम् अहरिति।

**एवं "प्रेष्यब्रुवो र्हविषो देवतासंप्रदाने" 2-3-61 इतिसूत्राद् देवतासंप्रदानेर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकात् षष्ठीत्यर्थकाद् 'अग्नये छागस्य हविषो वपाया मेदसो नुब्रूहि, प्रेष्य, वेत्यत्र कर्मत्वत्वेन विवक्षिते षष्ठी। अत्र शेषग्रहणं न संबध्यते, प्रेष्येति लोडन्तेन समासस्या प्रसक्तत्वेन तन्निषेधार्थत्वानुपपत्तेः। हविषः "प्रस्थितत्वेन विशेषणे प्रतिषेधो-वक्तव्यः" इति वार्तिकात् प्रस्थितत्वेन विशेषणे द्वितीयैव। अत एव "इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्ये" ति प्रयोगः। इदं च लोकवेदसाधारणम्, उत्तरत्र च्छन्दोग्रहणात्।**

लाक्षणिकमनुशासनान्तरं व्याचष्टे – **एवं प्रेष्येति देवतेति** देवता सम्प्रदानं यस्यार्थस्य, तादृशेर्थे वर्तमानयोरित्यर्थः। **प्रेष्यब्रुवोरिति** प्र पूवकात् इष गताविति दिवादि धातोः कर्तरि लोटि मध्यमपुरुषैकवचने प्रेष्येति रूपम्, तत्साहचर्याद् ब्रूधातुरपि लोण्मध्यमपुरुषैकवचनान्त एव गृह्यते, ब्रूहीति तद्रूपम्, उदाहरणे छागस्य विकार श्छाग इत्यर्थः, तत्राग्निर्देवता संप्रदानम्, छागविकारो वपादि संप्रदेयं हविः कर्म, सूत्रे प्रेष्येति श्यना निर्देश इच्छतीति तौदादिकस्य, इष्णातीति रौधादिकस्य च व्यावृत्तये। तथा प्रेष्येति निर्देशो लकारान्तरस्य पुरुषान्तरस्य वचनान्तरस्य व्यावृत्तये, सूत्रे प्रेष्यब्रुवोरित्यनेन अग्नये छागं हविर्वपांमेदो

जुहुधीत्यत्र, हविष इत्यनेन "अग्नये गोमयानि प्रेष्येत्यत्र देवतासंप्रदान इत्यनेन माणवकाय पुरोडाश प्रेष्येत्यत्र च, नैतत्प्रवृत्तिः, गोमयं हविष्ट्वेन न क्वापि श्रुतमिति तद्व्यावृत्तिः, अत्रापि शेषपद नानुवर्तत इत्याह – **अत्रेति** उपपत्तिमाह – **प्रेष्येती-ति** समासे सुप् सुपे त्यधिकारसत्त्वात्तिङन्तेन तत्प्रसक्तिर्नास्तीत्याशयः, **तन्निषेधेति** ज्ञोऽविदर्थस्येत्यादिषु शेषपदसंबन्धस्य षष्ठीसमासनिषेधः फलमुक्तं प्राक्, तत्फलस्याभावेन न तत्पदसंबन्धोत्रेति भावः, **इति वार्तिकादिति** इत्यर्थकात्, "हविषोऽप्रस्थितस्ये" ति वार्तिकादित्यर्थः। हविषः प्रस्थानासंभवादाह – **प्रस्थितत्वेन विशेषण इति इदं चेति** स्पष्टं चेदं हरदत्तादिग्रन्थेषु।

**यत्तु "चतुर्थ्यर्थे बहुलं छन्दसि" 2-3-62 इत्यनुशासनं 'दार्वाघाट स्ते वनस्पतीनाम्" (मा. का-सं 24-35-26-39) इत्यादौ वनस्पतिभ्य इत्यर्थे षष्ठीविधायकं तद्व्यत्ययवचनादेव सिद्धेः प्रत्याख्यातम्।**

लाक्षणिकमनुशासनान्तरमाह – **यत्तु चतुर्थ्यर्थे इति** यत्तु इत्यस्य "षष्ठी विधायक" मित्यत्रान्वयः तस्य च तत्प्रत्याख्यातमित्यत्रान्वयः। छन्दसि चतुर्थ्यर्थे षष्ठी बहुलं स्यादिति सूत्रार्थः, तदाह – **वनस्पतिभ्य इति व्यत्ययानुशासनेति** "व्यत्ययो बहुल" 3-1-85 मित्यत्र बहुलमिति योगविभागेन सुप्तिङादीनां व्यत्ययो बोधितः, तस्मादेव सिद्धे रित्यर्थः, द्वितीया प्रकरणे निरूपितमिदम्, एवं च तस्यैवायं प्रपञ्च इति भावः। दारूणि आहन्तीति दार्वाघाटः = पक्षिविशेषः। स चञ्च्वा दारूणि हन्ति। "दारा वाहन' इत्यादिवार्तिकेन अण् टकार श्चान्तादेशः। "शतपत्रको दार्वाघाट" इत्यमरः।

**एवं "यजेश्च करणे" 2-3-63 इति सूत्रमपि च्छन्दसि बहुलमित्यनुवृत्त्या "घृतस्य, घृतेन वा यजेते' त्यादौ षष्ठीविधायकं प्रत्याख्यातमेव।**

तादृशमन्यदपि व्याचष्टे – **एवं यजेरिति**, यजेः करणे छन्दमि बहुलं षष्ठीति सूत्रार्थः, पक्षे तृतीया भवति, उदाहरणे यजिर्देवपूजायां वर्तते, तत्र च घृतस्य करणत्वम्।

**एवं "कर्तृकर्मणोः कृति" 2-3-65 इतिसूत्रात् कृद्योगे कर्तरि कर्मणि च षष्ठी स्यादित्यर्थकात् 'कृष्णस्य कृतिः' 'जगतः कर्ता कृष्ण' इत्यादौ षष्ठी। अत्र कर्तृत्वत्वेन कर्तृत्वं कर्मत्वत्वेन कर्मत्वं च लक्षणया षष्ठ्यर्थः, नतु शेषत्वेन, व्याख्यानवशेन 'शेष' इत्यस्य निवृत्तिप्रतीतेः। अत्रो भयत्र कर्तृत्वकर्मत्वयोः कृदुपात्तकृतावेवान्वयः, ओदनस्य पक्तेत्यादिवत्, नतु धात्वर्थे प्रधानक्रियायां वा। एतच्चा नुपदमेव स्पष्टी करिष्यते। धातुस्तु साधुत्वार्थः। 'औदनस्य पाक' इत्यादौत् धात्वर्थस्य कृदर्थकृतावेवान्वय इत्यपि वक्ष्यते।**

तादृशमन्यदपि व्याचष्टे – **एवं कर्तृकर्मणोरिति** व्याकरणे "इको यणची" 6-1-77 त्यादौ सर्वत्रापि अ-चीत्यादि "यस्य च भावेने" त्यादि सूत्रविहित सत्सप्तम्यन्तमित्याशयेनाह – **कृद्योगे इति** तव्यत् ण्वुल घञ् इत्यादयः प्रायेण शतसंख्याकाः कृत्प्रत्ययाः, तद्योगे इत्यर्थः, कर्तर्युदाहरति – **कृष्णस्येति** कर्मण्युदाहरति **जगत इति** कर्तरि तृतीया कर्मणि द्वितीया च प्राप्ता, तद्बाधनेनेदं षष्ठी विधायकमित्याह – **अत्रेति** एतत्सूत्रविषय इत्यर्थः, लक्षणया = लक्षणयैव, एवशब्देन शक्तेर्व्यवच्छेदः, "कृद्योगेपि हि षष्ठी संबन्धत्वेनैव बोधयतीति नैयायिकोक्तं दूषयति – **न तु शेषत्वेनेति** ननु नैयायिकोक्तं युक्तमेव, अत्रापि शेषपदानुवर्तनादत आह – **व्याख्यानवशेनेति** "कर्तरि च कृती" त्येव वक्तव्ये पुनः कर्मग्रहण मूलकव्याख्यावशेनेत्यर्थः, अयमर्थः – "कर्तरि च कृती" त्युक्तौ शेष इत्यनुवृत्तौ चकारेण कर्मणीत्यस्यानुवृत्तिः संभवति – अतः कर्मग्रहणं शेषाधिकारनिवृत्त्यर्थमिति सिध्यति, पुनः कर्मग्रहणेन

पूर्वस्थकर्मग्रहणस्य निवृत्तिर्बोध्यते, तन्निवृत्तौ तत्सबद्धमनुवृत्तमपि 'शेषग्रहणं निवर्तते इति वृत्यनुसारिणः, वस्तुतस्तु एतत्सूत्रारम्भमूलकव्याख्यानेनेत्युचितम्, शेषे इत्यस्यानुवृत्तौ शेषषष्ठ्यैव सिद्धे एतत्सूत्रारम्भस्य वैयर्थ्यं स्पष्टमेव। न च "अधीगर्थदयेशां कर्मणी" त्यादिवत्समासाभावार्थं प्रकृतसूत्रं सार्थकमिति वाच्यम्, "कृद्योगाय षष्ठी समस्यते" इति वार्तिकेन तत्र समासस्येष्टत्वादिति बोध्यम्, अत्रोभयत्र = निरुक्तोदाहरणद्वये, **कृदुपात्तकृतावेति** लक्षणया कृदुपात्तायां कृतावेवेत्यर्थः, **पक्तेत्यादिवदिति**, पक्तेत्यत्र कर्तरि तृच्, कारकान्वयार्थं तस्य कृतौ लक्षणा स्वीक्रियते तद्वदित्यर्थः, वैयाकरणमतं निराकरोति – **न तु धात्वर्थे इति** धात्वर्थस्यापि कर्मत्वकरणत्वान्यतररूपेण कृतावन्वयात्तत्र कर्तृत्वादिकारकाणामन्वयस्या योग्यत्वादिति भावः, निरूपितं चेतत्प्राक्। तर्हि अध्याहृतास्तिरूपप्रधानक्रियायामन्वयोस्त्वत आह – **प्रधानक्रियायां वेति** तत्रान्वये कृद्योगाभावादनेन षष्ठ्येव न स्यादिति भावः, एतच्च = कृदर्थ कृतावान्वय इत्येतत्, अनुपदमेव = अत्रैव सूत्रे "नन्वेवमोदनस्य पाक" इत्यादिग्रन्थेन। ननूदाहरणयोः कृत्प्रत्ययस्य कृतिलक्षकत्वे तद्बोधककृधातु प्रयोगस्य वैयर्थ्यं प्रसज्यत, इत्यत आह – **धातुस्त्विति** निरुक्तोदाहरणद्वये कृञ् धातुस्त्वित्यर्थः, **साधुत्वार्थ इति** प्रत्यय एव कृति बोधकः, परंतु "न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः इति नियमेन केवल प्रत्ययस्य प्रयोगानर्हतया तन्नियमपरिपालनाय धातुः प्रयुज्यते, अतो न तस्य वैयर्थ्यमिति भावः। ननु कृत्यबोधक धातुसमभिव्याहारे धातोः साधुत्वार्थकत्वायोगात्तदर्थस्य प्रधानक्रियायामन्वयस्य स्वीकारे व्युत्पत्यन्तर कल्पनापत्ति, रित्यत आह – **ओदनस्य पाक इति** कृदर्थकृतावेवेत्येव शब्देन प्रधानक्रियाया व्यावृत्तिः। शस्त्रेण भेत्तेत्यादौ करणत्वादौ षष्ठीवारणाय सूत्रे कर्तृकर्मणोरिति पदम्, अत्र "अनभिहिते" इति संबध्यते, तेन चैत्रः पाचकः, कृतः कट इत्यादौ न षष्ठी।

## (कृतीत्यस्य वैयर्थ्याशङ्का, तत्समाधानं च।)

**नचैवमपि सूत्रे कृद्ग्रहणवैयर्थ्यम्, "न लोकाव्यये" तिवक्ष्यमाणसूत्रेण लादेशरूपतिङ्योगे षष्ठीनिषेधेन परिशेषादेव कृद्योगे षष्ठीविधिप्राप्ते रिति वाच्यम्। "कृतपूर्वी कट" मित्यादौ पूर्वीतितद्धितयोगे षष्ठीव्यावृत्त्यर्थं तदुपपत्तेः। अत्र कृतः पूर्वं कटोऽनेनेति कृपूर्वी देवदत्तः, 'सपूर्वाच्च' 5-2-87 इति सूत्रेण सोपपदात् पूर्वशब्दात् कर्त्रर्थे इनि प्रत्ययविधानात्। अतस्तत्र षष्ठीव्यावृत्त्यर्थं कृद्ग्रहणमर्थवत्।**

सूत्रस्थकृद्ग्रहणस्य वैयर्थ्यमाशङ्कते – **नचेति** एवम् = कर्तृत्वकर्मत्वयोः कृदुपात्तकृतावन्वयस्वीकारे, एवमपीति पाठेपि स एवार्थः, एवमपि = एवञ्चेत्, **कृद्ग्रहणवैयर्थ्यमिति** अयमर्थः कर्तृत्वकर्मत्वनिरूपकत्वं कृतेरित्यविवादम्, सा च कृतिः कृत्तिङुपस्थाप्या, तत्र तिङ्योगे "न लोकाव्यये" 2-3-69 त्यादिसूत्रेण षष्ठ्या निषिध्यमानतया परिशेषात् कृद्योग एव षष्ठ्याः प्रवृत्त्या कृद्ग्रहणं व्यर्थ-मिति तदाह – **न लोकेति** केवलस्य लकारस्य क्वाप्यप्रयोगेण तत्र लशब्दस्तदादेशपर इत्याह – **लादेशरूपतिङ्योग इति** इत्यादावित्यादिना भुक्तपूर्वी ओदनमित्यस्य ग्रहणम्, **पूर्वीति तद्धितयोग इति** पुर्वीत्यत्रत्यतद्धितोपस्थाप्यकृत्यन्वये इत्यर्थः, एतच्च "अतोत्रैवं समाधेमित्यादिनानुपदमेव स्पष्टं भविष्यति, अत्र = प्रत्युदाहरणे, इति = इत्यर्थे, **सूत्रेणेति** "श्राद्धमनेन भुक्तमिनिठनौ" 5-2-85 इत्यतः अनेने, ति "पूर्वादिनिः" 5-2-86 इति सूत्रं चात्रानुवर्तते, सपूर्वादित्यस्य विद्यमानपूर्वादित्यर्थः, तदाह – **सोपपदादिति**, अनुवृत्तमनेनेति पदं कर्तृबोधकमित्याशयेनाह – **कर्त्रर्थे इति** तथाच सोपपदात्पूर्वशब्दादनेनेत्यर्थे इनिः स्यादिति सूत्रार्थः, एवं च कर्तात्र तद्धितेनोक्त इति देवदत्तान्न षष्ठी प्रसङ्गः, कटात्तु कर्मणः षष्ठी मा भूदित्येतदर्थं कृद्ग्रहणमिति भावः। **अत इति** कर्त्रर्थे प्रत्ययविधानादित्यर्थः, तथाच कर्त्रर्थकप्रत्ययेन कृतिर्लक्ष्यते इति भावः, तत्र = तादृशतद्धितयोगे, अर्थवत् = सप्रयोजनम्। कृद्ग्रहणाभावेत्वत्रापि

कृतेर्भानात्तत्रकटस्यान्वयात् षष्ठ्यापत्तिः, अतः कृद्ग्रहणम्, कृतेतु कृद्ग्रहणे कृदुपस्थाप्यकृत्यन्वये षष्ठी विधानलाभादत्र षष्ठी वार्यत इति भावः।

## (कृतपूर्वीकट मितिप्रयोगानुपपत्तिशङ्का।)

**नन्वेवं न तत्र द्वितीयापि, निष्ठप्रत्ययेन कर्मकारकस्याभिहितत्वेन तस्या अप्राप्तेः, अत एवा न भिहिताधिकरविहित षष्ठ्या अपि तत्रा प्रसक्तत्वेन तद्व्यावृत्त्यर्थं कृद्ग्रहणवैयर्थ्याच्च, किंच कृतादिपदस्य कटादिरूपविशेषणवत्त्वेन पूर्वशब्देन समासानुपपत्तिः, ''सविशेषणानां वृत्ति-र्नेष्यते'' इति निषेधा-दिति चेत्।**

ननु कृद्ग्रहणं व्यर्थम्, न च ''कृतपूर्वी कटं देवदत्त'' इत्यत्र षष्ठीवारणं तत्प्रयोजनमिति वाच्यम्, तादृश वाक्यस्यैवा संभवेन तत्र तस्य तद्व्यावर्तकत्वायोगादित्याशयेन शङ्कते — **नन्विति** एवं = निरुक्तवाक्यस्य कृतः कटं पूर्वमनेनेत्यर्थकत्वे, अयमर्थः — अनभिहिताधिकारे द्वितीया विहिता, प्रकृते कृत इति क्तप्रत्ययेन कर्मणोभिधानात्कटशब्दाद् द्वितीयया न भाव्यम्। तथा कृतशब्दार्थस्य बहिर्भूतकटसापेक्षत्वेनासामर्थ्यात् कृतशब्देन पूर्वशब्दस्य समासेन न भाव्यम्, तदभावे तद्धितेन न भाव्यम्। एवं च द्वेधास्याऽसंभव-इति। तदेतदुपपादयति — **न तत्र द्वितीयापीति** तत्र = प्रत्युदाहरण वाक्ये, निष्ठाप्रत्ययेन = कृत इत्यत्र क्त प्रत्ययेन, अभिहितत्वेन = अनभिहिते कर्मणि तस्य विधानेन, तस्याः = कटाद् द्वितीयायाः अप्राप्तेः = अनभिहिताधिकारीयत्वात्। अत एव = द्वितीयाया अप्राप्तत्वादेव, ''कर्तृकर्मणोः कृती'' त्यत्रापि ''अनभिहिते'' इत्यधिकारस्य संबन्धादाह — **अनभिहिताधिकारीयेति** द्वितीयापवाद भूत षष्ठ्या अपीत्यर्थः, **तद्व्यावृत्त्यर्थमिति** तदर्थं क्रियमाण कृद्ग्रहणस्य वैयर्थ्याच्चेत्यर्थः, द्वितीयदोषमुद्भावयति — **किञ्चेति** कृतादिशब्दस्य = तदर्थस्य, **निषेधादिति** ततश्च तद्धितस्यानुपपत्तिरिति भावः। एवं चास्य वाक्यस्यैवासंभवात्तत्र षष्ठीवारणार्थं कृद्ग्रहणमनावश्यकम्, अयं शब्दोऽसाधुरेवे-ति भावः। महाभाष्ये एवं पूर्वपक्षः प्रदर्शितः — ''ननु च वाक्येनैवानेन न भवितव्यम्, द्वितीयया तावन्न भवितव्यम्, किं कारणम्? क्तेनाभिहितं कर्मेति कृत्वा। इनि प्रत्ययेन चापि नोत्पत्तव्यम्, किं कारणम्? असामर्थ्यात्, कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति'' इति।असामर्थ्ये समासस्याप्रवृत्त्या तन्मूलकस्तद्धितोपि न स्यात्, सपूर्वात्खलुपूर्व-शब्दादिनिर्विहितः, सपूर्वत्वं च समास एव संभवतीत्याशयः।

## (अत्र वैयाकरणसमाधानम्।)

**अत्र वैयाकरणाः — पूर्वं कृतशब्दः कर्मविशेषरूपकटान्वय मप्रतिपद्यमान एव कर्मसामान्यवाचिक्तप्रत्ययान्ततया भावार्थकक्तप्रत्ययान्ततया वा व्युत्पादितः पूर्वशब्देन समस्यत इति न तावत्समासानुपपत्तिः। पश्चात् कटं कृतवानितिवत्कटं कृतपूर्वीत्यत्रापि द्वितीयान्तस्य कृञर्थेन्वयः। कृत्प्रत्ययेन तस्यानभिधानाच्च द्वितीयोपपत्ति-रिति।**

एतत्पूर्वपक्षभाष्यावलम्बनेन ''कृतपूर्वी कटमित्यस्यासाधुत्वप्रतिपादने वैयाकरणानां ग्रन्थकृतश्चैकैव रीतिः, नाभिप्रायभेदः, परं त्वेतत्समाधानपरभाष्यमवलम्ब्य तस्य साधुत्वसम्पादने तेषां ग्रन्थकृतश्चाशया भिद्यन्ते, सर्वेषामपि महाभाष्यमेव मूलम्। तद्व्याख्याने एतेषां भिन्नैव रीतिः, अतः प्रथमं तद्भाष्यमुदाहरामः — १. यत्तावदुच्यते ''द्वितीयया तावन्न भाव्यम्, किं कारणम्? क्तेनाभिहितं कर्मेति कृत्वेति, योऽसौ कृतकटयोरभिसंबन्धः, स उत्पन्ने प्रत्यये निवर्तते, अस्ति च करोतेः कटेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति, २. यदप्युच्यते इनिप्रत्ययेन चापि नोत्पत्तव्यम्, किं कारणम्? असामर्थ्यात्, कथमसामर्थ्यम्? सापेक्षमसमर्थं भवती-ति नेदमुभयं युगपद्भवति, वाक्यं प्रत्ययश्च, यदा वाक्यं न तदा

प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्तिः, तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः, कृतपूर्वी, किं, कटम्, भुक्तपूर्वी, किम् ओदनमिति, इति। एतद्भाष्यं व्याचक्षाणानां वैयाकरणानामाशयं प्रदर्शयति — **अत्र वैयाकरणा इति** अत्र = कृतपूर्वीकटमित्यस्य साधुत्वविषये। अयमर्थः — कृञ् धातोः कर्मसामान्ये क्त प्रत्यय उत्पद्यते, तस्यामवस्थायां सापेक्षत्वाभावात्सुप् सुपेति समासः, ततस्तद्धितः, न च कटस्य क्तेनाभिधानम्, करोतेरुत्पद्यमानः क्तप्रत्ययः कर्मसामान्यमेवाह, विशेषकर्मसंबन्धात्तु तस्याभिधानम्, तद्धितोत्पत्यनन्तरं तदर्थेनैकार्थीभूतस्य कर्मणो निष्कृष्य कटेन संबन्धाभावान्नाभिधानम्, गुणीभूतयापि करोत्यर्थक्रियया कटस्यान्वयाद् द्वितीया, यद्वा अविवक्षितकर्मतयाऽकर्मकत्वाद्भावे क्तप्रत्ययः, अतः कटस्य क्तर्थेनान्वयाभावान्नाभिधानम्, अतो द्वितीया निराबाधा, तद्धितोत्पत्यनन्तरं कर्मविशेषापेक्षायां कृञर्थफलस्याश्रयाकाङ्क्षायां वा कटस्य कृञर्थेन्वयः, अतो द्वितीयायाः समासस्य चोपपन्नतया कृतपूर्वी कटमित्यस्य साधुत्वात्तत्र षष्ठीवारणाय सूत्रे कृद्ग्रहणम्, एतदाशयकमेव समाधानभाष्यम्। कृतकटयोरभिसंबन्धो निवर्तते, इत्युक्त्या कटस्य क्तार्थेऽनन्वयः प्रतिपाद्यते, अत एव तत्र हेतुत्वेन क्तस्य भावार्थकत्वमित्यपि लभ्यते, "अस्ति च करोतेः कटेन सामर्थ्य" मितिश्तिपा निर्देशेन कटस्य धात्वर्थेऽन्वयः प्रतिपादितः, पूर्वमविवक्षितस्यापि कटस्य कर्मणो वृत्त्यनन्तरं "विशेषार्थिना च विशेषोनुप्रयोक्तव्यः" इत्यनेनान्वयः प्रदर्शित-इति, तदेतदाह — **पूर्वमिति** प्रथममित्यर्थः, **कृतशब्द इति** अस्य "पूर्वशब्देन समस्यते" इत्यत्रान्वयः। अप्रतिपद्यमान एव = अलभमान एव **कर्मसामान्यवाचीति** अनेन कटस्य क्तप्रत्ययेनाभिधानाभावं सूचयति, कर्मविशेषसंबन्धे खलु तस्याभिधानमिति भावः। नन्विदमयुक्तम्, विशेषातिरिक्तसामान्यसद्भावे मानाभावात्। कृधात्वर्थफलाश्रयः क्तेनाभिहित इति ज्ञानकाले तदर्थफलेऽन्वितस्य कटस्यानभिहिततया वक्तुमशक्यत्वाच्चेत्यत आह — **भावार्थकक्तप्रत्ययान्ततयावेति** धात्वर्थफलांशे आहार्यभावारोप मात्रेण कृञोऽकर्मकत्वं स्वीकृत्य भावे क्तः स्वीकार्यः, यद्वा कर्मविशेषस्य तत्तद्रूपेण प्रागन्वया विवक्षयाऽकर्मकत्वाद्भावे क्तः, **व्युत्पादित इति** एवं च कृतशब्दस्य भावक्तान्ततया कटेनासंबद्धतयाऽसामर्थ्याभावात्समासोपपत्तिरिति भावः। तदाह — **न तावत्समासेति** सापेक्षत्वाभावादत एव सविशेषणत्वाभावा न्न समासानुपपत्तिरिति भावः, पश्चात् = तद्धितोत्पत्यनन्तरम्। गुणीभूतयापि क्रियया कारकाणामन्वये दृष्टान्तमाह — **कटं कृतवानितिवदिति** "अस्ति च करोतेः कटेन सामर्थ्य" मिति भाष्यबललब्धमाह — **कृञर्थेन्वय इति** एतद्भाष्येण कटस्य धात्वर्थान्वयो बोधितः, न तु क्तार्थे, अत एवाह — **कृत्प्रत्ययेनेति** वृत्तिघटक कृतशब्दे विद्यमानेन क्तप्रत्ययेनेत्यर्थः, तस्य = कटादेः कर्मणः, अनभिधानात् = क्तस्य कर्मसामान्यार्थकत्वात् भावार्थकत्वाद्वा।।

## (वैयाकरणोक्तसमाधाननिरासः)

**तन्न, तथात्वे राजपदस्यापि ऋद्धपदानपेक्षस्य पुरुषपदेन समासे कृते पश्चादेव तस्मिन् ऋद्धपदान्वयापत्तेः। क्तप्रत्ययस्य कर्मसामान्याभिधानमात्रेण कटानभिधानाद् द्वितीयान्तत्वोपपादने 'ओदनः पच्यतेतमाम्' "गुरु धरित्रीक्रियतेतरां त्वया" इत्यादावपि द्वितीयान्तत्वापत्तेश्च। क्तप्रत्ययस्य भावार्थकत्वे कृञोऽविवक्षितकर्मतया पश्चादपि कर्मान्वयानुपपत्तेश्च। इतरथा 'ओदनः पच्यते' इति भावाख्याते कृते द्वितीयापत्तेश्च। अनयैव दिशा 'ओदनं पाचकतमः, ओदनं पाकग्रहण' मित्यादिप्रयोगाणा मप्यापत्तेश्च। क्तविशेषणत्वेन षष्ठ्यन्तप्रयोगस्या प्यनापत्तेश्च। अतश्च कटमित्यस्य कथमपि न धात्वर्थान्वयः संभवी। एतेन कारकाणां धात्वर्थान्वयवादिनो नैयायिका अपि परास्ताः।**

न वयं महाभाष्यं पर्यनुयुञ्ज्महे, तस्य सर्वप्रमाणभूतत्वात्, वयमपि तदेवानुसरामः। किंतु व्याख्यातृभिः

कृते तद्व्याख्याने दोषमुद्घाटयाम इत्याशयेन तन्मतं दूषयति – **तन्नेति** तथात्वे = तदुक्तरीत्याश्रयणे। कृतशब्दस्य कटानपेक्षया पूर्वशब्देन समासः, अनन्तरं कटसंबन्ध इत्यर्थस्वीकारेऽति प्रसङ्गं दर्शयति – **राजपदस्यापीति** सिद्धान्ते ऋद्धस्य राजपुरुष इति प्रयोगो नेष्यते, राज्ञः सविशेषणत्वेनासामर्थ्येन समासायोगात्, त्वदुक्तदिशा तु ऋद्धपदार्थानपेक्षया प्रथमं राजपदपुरुषपदयोः समासः स्वीक्रियते, तदाऽसामर्थ्याभावात्। अनन्तरं राजपदार्थविशेषणतया ऋद्धपदप्रयोगे कटं कृतपूर्वीत्यत्रेव बाधकाभावेन तदर्थेतस्य प्रयोगार्हत्वापत्तिरिति भावः। पश्चादेव = तयोः समासानन्तरमेव, तस्मिन् = वृत्तिघटकराजपदार्थे, क्तप्रत्ययस्य कर्मसामान्यवाचितया तेन विशेषकर्मणः कटादेरनभिधानमित्यर्थ-स्वीकारे दोषमाह – **क्तप्रत्ययस्येति** कटानभिधानात् = तद्रूपविशेकर्मणोऽन भिधानात्। द्वितीयान्तत्वोप-पादने = कृतपूर्वीकटमिति भाष्यप्रयोगेतदुपपादने, **पच्यतेतमामिति** पच धातोः कर्मणि लकारे ''तिङश्चे'' 5-3-56 त्यनेन ततस्तमप्प्रत्यये, तदन्तात्, ''किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे'' 5-4-11 इत्यनेन तद्धित आमुप्रत्ययः। एवं क्रियतेतरामित्यपि, अत्रापि तिङः कर्मसामान्यबोधकतया ओदनधरित्त्र्यादेर्विशेष कर्मणो नभिधानात्तत्र द्वितीयान्तत्वापत्तिः। तद्धितवृत्यनन्तरं तद्धितार्थेनैकार्थी भूतस्य प्रत्ययार्थस्य कर्मणो निष्कृष्यौदनेन संबन्धाभावाद्धात्वर्थेनैवान्वयात्कृतपूर्वीकटमित्यत्रेव द्वितीयान्तत्वापत्तिरिति भावः, तिङर्थस्य बहिर्भूतौदनादिनाऽन्वयायोग्यत्व प्रदर्शनाय. तरबन्तपर्यन्तानुधावनम्। ''गुरुर्धरित्री क्रियतेतरा'' मिति माघकवेः प्रयोगः, कृञोऽकर्मकत्वाद्भावे क्त इति स्वीकारे दोषमाह – **भावार्थकत्वे इति** अविवक्षितकर्मतया = अविवक्षितं कर्म यस्य, तस्य भावः तया। पश्चादपि = तद्धितवृत्यनन्तरमपि, **कर्मान्वयेति** भावे क्तप्रत्यय साधनलोभेन प्रथमतः कर्मणोऽविवक्षा स्वीकृता, तर्हि स धातुरकर्मक एव संवृत्तः, तथा च तद्धितोत्पत्यनन्तरं तत्र कटादेरन्वयो नोपपद्यत इति भावः, इतरथा = प्रथमतः कर्मणोऽविवक्षया धातोरकर्मकत्वं, पश्चात् तत्र कर्मणोन्वय इत्यङ्गीकारे। **ओदन इति** चैत्रेण ओदनः पच्यते इति कर्मणि प्रयोगः, इति = इत्यत्र। **भावाख्याते कृते इति** भावे लकारे कृत इत्यर्थः। कर्मणि लकारे तस्याभिहितत्वात्प्रथमा, स प्रयोगो भावाख्याततया यदि विपरिणमयितव्यः, तदा ओदनस्य कर्मणोऽविवक्ष-या धातोरकर्मकत्वात्स सेत्स्यति, तदा पच्यते चैत्रेणेति प्रयोगः सिध्यति, त्वदुक्तरीत्याश्रयणे भावाख्यातकरणानन्तरमपि ओदनस्य धात्वर्थेऽन्वयस्योपपत्त्या तस्य कर्मणोऽनभिधानादोदनं पच्यते चैत्रेणेति प्रयोगापत्तिरिति भावः। तदाह – **द्वितीयापत्तेश्चेति** कर्तृकृदन्तात्तद्धिते दोषमुद्भावयति – **अनयैव दिशेति –** कृतपूर्वीकटमित्यत्रत्यया रीत्येत्यर्थः। **ओदनं पाचकतम इति** पाचकशब्दः कर्तृण्वुलन्तः, ततस्तमप्, अत्र कृद्योगे प्रकृतसूत्रेणाऽनभिहिते ओदने कर्मणि षष्ठ्याम् ओदनस्य पाचकतम इति षष्ठ्यन्तप्रयोग इष्टः, भावघञन्तपाकशब्दस्य भाव ल्युडन्तग्रहणशब्देन समासे पाकग्रहणमिति शब्दः सिद्धः, तत्रापि कर्मणोनभिधानात्प्रकृतसूत्रेण षष्ठी इष्टा, परंतु त्वदुक्तरीत्या प्रत्ययार्थसंबन्धपरित्यागेन केवल धात्वर्थेन संबन्धे कृद्योगाभावादनेन षष्ठ्या अप्राप्त्या धात्वर्थकर्मणि द्वितीयापत्तिरिति भावः। तदाह – **प्रयोगाणामापत्तेश्चेति** एतेषामपि कृतपूर्वीकटमितिप्रयोगतुल्यत्वात्तत्रेवात्रापि द्वितीयापत्तिरिति भावः। कटादेर्धात्वर्थेनान्वये मूल एव कुठार इत्याह – **क्तविशेषणत्वेनेति** कटादेः क्तप्रत्ययप्रकृतिभूत धात्वर्थविशेषणत्वेन तदन्वयेनेत्यर्थः, एवं च ''न लोकाव्ययनिष्ठे'' 2-3-69 त्यादिनानिष्ठायोगेन षष्ठीनिषेधापत्तिः, निष्ठान्त धातूपात्त क्रियायोगे षष्ठीनेति तदर्थादिति भावः। तदाह – **षष्ठ्यन्तप्रयोगस्याप्यनापत्तेश्चेति** ''न लोकाव्ययनिष्ठे'' ति सूत्रेण निषेधात् षष्ठ्यन्त प्रयोगोपि नोपपद्यते। तथा च कृतपूर्वीकटमित्यत्र निषेधात् षष्ठ्याः प्राप्तेरेवाभावात्तत्र तद्व्यावृत्यर्थं क्रियमाणं कृद्ग्रहणं वैयर्थ्यमापद्येतेति मूल एव कुठारपात इति भावः। दूषणमुपसंहरति **अतश्चेति** निरुक्तानेकदोष प्रसङ्गादित्यर्थः। **न धात्वर्थान्वयः संभवीति** कृतपूर्वी कटमिति प्रयोगोपपत्तये वैयाकरणैः कटाद्यर्थस्य क्तप्रत्ययार्थेन्वयः परित्यक्तः स साधीयान्, परंतु धात्वर्थेन्वयः स्वीकृतः, स चोक्तरीत्यानेक दोषदुष्टः। अतः

सोपि परित्याज्य इति निगूढाशयः। ननु नैयायिकाः कारकाणां धात्वर्थेऽन्वयमभ्युपगच्छन्तीत्यत आह — **एतेनेति** तत्र तदन्वये निरुक्तदोषजातेनेत्यर्थः। **परास्ता इति** "बाधेऽदृढेऽन्यसाम्यात्किं, दृढेऽन्यदपि बाध्यता" मिति न्यायेनाऽयुक्ताभिधायिनो नैयायिका अपि निराकरणीया एवेति भावः। एवं च कृतपूर्वी कटमित्यत्र क्तस्य कर्मसामान्यार्थकत्वं भावार्थकत्वं वाऽऽश्रित्यव्याख्यातृभिः कृतं महाभाष्यव्याख्यानं न सम्यगेवेति प्रकृतग्रन्थार्थः।

## (स्वसिद्धान्तप्रदर्शनम्।)

**अतो त्र एवं समाधेयम्-न कटस्य कृञर्थेन्वयः। धात्वर्थान्वयस्य कारकाणामव्युत्पन्नत्वात्। नापि क्ताद्यर्थे, प्रथमान्तत्वापत्तेः, असमर्थसमासापत्तेश्च। अपितु तद्धितार्थ एव। कर्तृत्वं हि अत्र तद्धितार्थः। अतश्च पाचकादिकृत्स्विव विशेषणत्वेन स्वातन्त्र्येण वा लक्षणया कृतिरपि तद्धितार्थः। तस्यां च लिङ्गानन्वयिन्यां विशेष्यवाचकपदोपस्थाप्यायां वान्वयः। व्युत्पत्त्यन्तराभावेन गौरवाभावात्। तद्वाचकपदेन कर्मकारकस्या नुक्तत्वेन प्रथमाया अप्रसक्तेः। विशेष्यवाचकपदोपस्थाप्याया मन्वयाच्च ओदनस्य पाचक इतिवत् न समासभङ्गः।**

अतः = वैयाकरणैः कृतस्य समन्वयस्यायुक्तत्वात्। अत्र = कृतपूर्वीकट मित्येतद्विषये। वैयाकरणैः कटस्य क्तार्थान्वयः परित्यक्तः। न तावतेष्टसिद्धिः। किंतु तस्य धात्वर्थान्वयोपि त्याज्य इत्याह — **न कटस्य कृञर्थेन्वय इति अव्युत्पन्नत्वादिति** एतच्च बहुषु स्थलेषूपपादितम्। प्रथमान्तत्वापत्तेः = क्तेनकर्मत्वस्याभिधानात्, द्वितीयदोष तादवस्थ्यमपीत्याह — **असमर्थेति** भाष्यसंमतमर्थमादायतं प्रयोगं समर्थयति **अपित्विति** तद्धितार्थ एवेत्येवशब्देन धात्वर्थकृदर्थयो व्यवच्छेदः। ननु कटस्य कर्मकारकस्य तद्धितार्थे कर्तर्यन्वयो नोपपद्यते। कारकद्वयस्य तदयोगादत आह — **कर्तृत्वं हीति** कर्तृत्वं = कृत्याश्रयत्वं, तच्च कृतिरेव। अत्र = कृतपूर्वीत्यत्र, कर्तरि तद्धितो विधीयते, विशेषणतया कृतिरपि तदर्थ इति भावः। अतश्च = तद्धितस्य कर्तरि विधानात्, **पाचकादीति** पचिधातोः कर्तरि अकः, कृत्याश्रयः कर्ता अतो विशेषणतया कृतिरपि कृदर्थः तद्वदित्यर्थः। तदाह — **विशेषणत्वेनेति** प्रत्ययार्थस्याश्रयस्य विशेष्यत्वम्। विशेषणे कारकान्वयमसहमान आह — **स्वातन्त्र्येणेति** पाचक इत्यत्र कृत्याश्रयरूपो धर्मी प्रत्ययार्थः,लक्षणया कृतिस्तदर्थः, तद्वदत्रापीत्यर्थः, तदाह — **कृतिरपि लक्षणया तद्धितार्थ इति** तस्यां च = विशेषणभूतकृतौ। प्रधानान्वयस्य न्याय्यत्वादाह — **विशेष्यवाचकपदोपस्थाप्यायामिति** विशेष्यः = कर्ता, तद्वाचकं पदम् = इनिस्तद्धितप्रत्ययः, तेन लक्षणयोपस्थापितायामित्यर्थः। सर्वेषां पदार्थानां कृतावेवान्वय इति स्वमतरीत्या लाघवमप्यस्ति, मतान्तरे तु व्युत्पत्यन्तरकल्पनाया आवश्यकत्वेन गौरवमित्याह — **व्युत्पत्यन्तरेति** कार्यकारणभावान्तरेत्यर्थः। **तद्वाचकेति** विशेष्यवाचक प्रत्ययेनेत्यर्थः। कर्मकारकस्य = कटादेः, अनुक्तत्वेन = अनभिहितत्वेन, अप्रसक्तेः = अभिहितत्वनिमित्तकप्रथमाया अप्रसक्तेः। एवं च कटस्य तद्धितलक्ष्यकृतावन्वयात्तत्र तस्यानभिहितत्वाद् द्वितीया सुलभेति भावः। अत एव समासस्यापि नानुपपत्तिरित्याह — **विशेष्यवाचकेति** कर्तृरूपविशेष्यवाचकेनिप्रत्ययेन लक्षणयोपस्थापितायां कृतौ कटस्यान्वयादेवेत्यर्थः। **ओदनस्य पाचक इति** ओदनस्य धात्वर्थान्वये सविशेषणत्वात्पाचक इति कृद्वृत्तिरनुपपन्ना, अतस्तन्निष्ठस्य कर्मत्वस्य स्वनिरूपकविक्लित्यनुकूल व्यापारानुकूलत्वसंबन्धेन कृत्प्रत्ययलक्षितकृतावन्वयः स्वीक्रियते। एवं च समुदायेन संबन्धात्कृद्वृत्तिः सूपपादा, तद्वदत्रापि समासोपपत्तिरितिभावः। **न समासभङ्ग इति** तदुपपत्तौ तद्धितोपि सूपपाद एवेति भावः, एवं च तद्धितार्थकृत्यन्वयात्तन्निरूपितकर्मत्वं कटे, तच्च क्तप्रत्ययेनानभिहितमिति तत्र द्वितीया सूपपन्ना, कटस्य प्रधानकृत्यन्वयात्सविशेषणत्वाभावात्समासस्य निराबाधतया तन्मूलक तद्धितोपि सूपपादः, कृत-

शब्दस्तात्पर्यग्राहकः। तथा च कृतपूर्वीकटमिति प्रयोगस्य साधुत्वात्तत्र कटात् षष्ठी वारणाय कृद्ग्रहणम्। कटस्य कृधात्वर्थेन क्तार्थेन वान्वया भावाद् "नलोकाव्ययनिष्ठे" 2-3-69 त्यादि निषेधस्य प्रसक्तिरेव नास्तीति प्रकृतग्रन्थार्थः। एष एवाशयः समाधानपरपूर्वप्रदर्शितमहाभाष्यग्रन्थस्यापि। तथाहि-योऽसौ-कृतकटयोरभिसंबन्धो वाक्ये कृतः कटोऽनेनेत्यत्र सामानाधिकरण्यलक्षणः, स तद्धितप्रत्यये उत्पन्ने निवर्तते, तद्धित प्रत्यये कृते कटस्य कृतशब्दार्थ संबन्धो नेति तदर्थः कृत इत्यत्र प्रत्ययार्थेन प्रकृत्यर्थेन चान्वयः कटस्य न कार्य इति तदर्थः। तर्हि कटस्य कुत्रान्वयः, कथं वा द्वितीयेत्यत उक्तम्-अस्ति च करोतेः कटेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यतीति करोतेः = कृञ्धात्वर्थस्य = कृतेः। अर्थपरत्वेपि "ईक्षतेर्नाऽशब्दम्" 1-1-5 इत्यादाविव श्तिप्। तद्धितलक्ष्यकृतेरित्यर्थः। तद्धितेन कर्मत्वस्यानभिधानाद् द्वितीया सिद्धा, तदाह – द्वितीया भविष्यती ति। क्तेनाभिहितमिति द्वितीया न प्राप्नोती" ति पूर्वपक्षस्य समाधानमिदम्। अत एव समासोपि संगच्छत इति भाष्याशयः। एनमेवार्थं विशदयति तदुत्तर-भाष्यम्-यदा वाक्यम् = कृतः कटोऽनेनेति, न तदा प्रत्ययः = इनिस्तद्धितप्रत्ययो न, तदा कृतकटयोः सामानाधिकरण्यरूपसंबन्धसत्वान्न तद्धितस्तस्मिन्नर्थे उत्पद्यते, यदाप्रत्ययः = इतिस्तद्धितप्रत्ययः, तदा सामान्येन = तद्धितलक्ष्यकृतिरूपार्थेन, पाकगमनादयो विशेषाः, कृतिस्तु सामान्यरूपा। अतः सामान्यशब्दो भाष्ये कृतिपरः वृत्तिः = कटस्य संबन्धोऽन्वयः। एवं तद्धितवृत्तौ तदर्थकृतावेव कटस्यान्वय इति तदर्थः। कृतेस्सविषयक पदार्थतया तस्या विषयापेक्षायां कटादिरन्वेति-तदुक्तम् विशेषार्थिना च विशेषोनुप्रयोक्तव्यः, कृतपूर्वी किम्? कटम्, भुक्तपूर्वी, किम्? ओदनमिति।एतादृशभाष्यार्थ एव श्रीमता खण्डदेवेनात्र प्रदर्शित इति बोध्यम्।

**यत्रतु 'ओदनः पच्यतेतरा' मित्यादौ तद्धितेना तिशयमात्राभिधाना न्न कृते रभिधानम्, तत्र लकारार्थकृतावेव कारकान्वयात्तेन च कर्मत्वस्यो क्तत्वेन न द्वितीयापत्तिः। पचतिकल्पमित्या-विवच्च तरामित्यस्य तात्पर्यग्राहकत्वाङ्गीकारात् पचिधातुनैव विशिष्टपाकलक्षणा तरा-मित्यस्य निरर्थकत्वेन विशेषणसापेक्षस्यापि तेन सह वृत्त्युपपत्तिः। 'अस्माकं गुरुकुल' मितिवद्वा नित्यसापेक्षत्वात्तदुपपत्तिः। एव मोदनस्य पाचकतमः, ओदनस्य पाचकग्रहण मित्यत्रापि द्रष्टव्यम्।**

ननु कृतपूर्वी कटमित्यत्रेव ओदनः पच्यतेतमामित्यादावपि तद्धितेन तमपाकृतिलक्षणायां तदर्थान्वयेन ओदनादेर्द्वितीयान्तत्वापत्ति रत आह – **यत्रेति** तमबादेः स्वार्थिकप्रत्ययत्वादाह – **अतिशयमात्राभिधाना-दिति** तमबादयः प्रकृत्यर्थगतमतिशयादिरूपमर्थं द्योतयन्ति न तु इन्यादय इव प्रकृत्यर्था द्भिन्नमर्थं बोधयन्ति, अतस्ते लक्षणया कृतिं न बोधयन्ति, एतच्चानुपदमेव मूले स्पष्टम्। तदाह – **न कृतेरभिधानमिति** तेन = लकारेण, ननु तमबादीभां तदलक्षकत्वं शपथमात्रमूलकमेवे? त्याशङ्क्य तत्रोपपत्तिमाह – **पचतिकल्पमिति** – ईषदसमाप्तिविशिष्टप्रकृत्यर्थे कल्पप् विधीयते, तत्र धातुरेव तमर्थं बोधयति-तादृशलक्षणायां तात्पर्यग्राहकः कल्पप्। निरूपितं चैतत्कर्त्रादेरभिधानानभिधानविचारावसरे। तद्वदित्यर्थः, **तरामिति** अत्र प्रत्ययद्वयम्। तिङन्तात्तरब्। तत आमुः, **तात्पर्यग्राहकत्वेनेति** तस्य विशिष्यार्थवत्वाभावाल्लक्षणा नोचितेति भावः, विशेषणसापेक्षस्यापि = ओदनरूपकर्मसापेक्षस्यापि पच्यते इत्यस्य, तेन सह = तरबादिना सह **वृत्त्युपपत्तिरिति** यत्सापेक्षं तिङन्तं न तस्य ओदनादिना वृत्तिः। तस्य येन वृत्तिः तरबादिना न तस्यार्थवत्त्वम्। अतो न सापेक्षस्यावृत्तिरिति निषेध इति भावः। अत्र समाधानेऽपरिष्यन् समाध्यन्तरमाह – **अस्माकं गुरुकुलमिति नित्यसापेक्षत्वादिति** क्रियायाः कारकांशे नित्यसापेक्षत्वादित्यर्थः। इदं चौत्सर्गिकींरीतिमाश्रित्योक्तम्। वस्तुतस्तु न नित्यसापेक्षत्वं **वृत्तौ**

प्रयोजकम्। किन्तु गमकत्वम्, तत्वं चेष्टबोधजनकत्वम्, स्पष्टं चेदं "समर्थः पदविधिः" 2-1-1 इति सूत्रे "सुप आत्मनःक्यच्" 3-1-8 इति सूत्रे च भाष्ये सूक्ष्मदृशामित्यन्यत्र विस्तरः। अत एव अकुम्भं कुम्भं करोति कुम्भीकरोति मृदमित्यत्रच्व्यन्ते उपपदे न कर्मण्यण्, अन्यथा विकृतेः प्रकृत्यंशे नित्यसापेक्षत्वात्तदर्थप्रतिपादनपरस्योपपदसंज्ञा सूत्रस्थ भाष्यस्यासाङ्गत्यं स्पष्टमेवेति बोध्यम्। यत्तु "कृत्येव षष्ठी यथा स्यात्, तद्धिताधिक्ये माभूदिति कृद्ग्रहणम्, एवं वदतां मते ओदनस्य पाचकतम इत्यादावपि षष्ठी नेति लभ्यते, भाष्यं त्विहोदासीनमेवेत्यभियुक्तप्रयोगा अन्वेषणीयाः" इति शब्दकौस्तुभे दीक्षिताः, तद्दूषयति **एवमोदनस्येति** ओदनः पच्यतेतमामितिवत्, पाचकतम इत्यत्रापि तमपा कृतिर्नलक्ष्यते किंतु पाचक इति कर्त्रर्थकाकप्रत्ययेन। तत्र ओदनस्यान्वयः। तेन कर्मणो नभिधानात्कृद्योगे षष्ठी निराबाधा। अत्र भाष्यमौदासीन्यं नावललम्बे, कृदुपात्तकृतावन्वये कर्तृकर्मणोः षष्ठी, तद्धितलक्ष्यकृतावन्वये नेति स्पष्टं ब्रवीति भाष्यकारः। तदाह — **इत्यत्रापि द्रष्टव्यमिति** अत्र तद्धितोपात्तकृतेरभावात्तन्निमित्तिका द्वितीया न, कृदुपात्तकृतावन्वयात्तन्निमित्तिका षष्ठी भवति, अतो महाभाष्य। मत्र निर्णायकमेवेति भावः।

**कृतपूर्वी कटमित्यादौ तु कर्तृत्वस्ये निप्रत्ययेनैवोक्ते स्तदुक्तकृतौ कटमित्यस्यान्वयाद् द्वितीयोपपत्तिः। एवं 'व्याकरणं प्राज्ञः' इत्यत्रापि। तद्धितेन स्वार्थविहितेन कृदर्थकृतेरप्युपादानेन तत्रान्वयोपपत्तेः।**

कृतपूर्वी कटमित्यत्र तमबादितो वैलक्षण्यं प्रतिपादयं स्तस्योपपत्तिं दर्शयति — **कृतपूर्वी कटमित्यादौ त्विति** तु शब्दस्तमबादेर्वैलक्षण्यद्योतकः। उक्तेः = लक्षणया बोधनात्। **द्वितीयान्तत्वोपपत्तिरिति** तद्धितेन कर्मत्वस्यानभिधानात्तदुपपत्तिः, कृत्यन्वयात्तन्निरूपितं कर्मत्वं कटे इति भावः। एवम् = कृतपूर्वीकटमितिवत्। **प्राज्ञ इति** प्रकर्षेण जानातीति प्रज्ञः, प्रज्ञ एव प्राज्ञः, "प्रज्ञादिभ्यश्चे" 5-4-38 ति अत्यन्तस्वार्थिकोऽण् प्रत्ययः, तद्धितेन = अत्यन्तस्वार्थिकेना णा। स्वार्थविहितेन = स्वस्याः स्वप्रकृतेरर्थः। तत्र विहितेन **कृदर्थकृतेरपीति** प्रज्ञशब्दघटकः कप्रत्ययः कृतिलक्षकः, कप्रत्ययलक्षितकृतेरपीत्यर्थः, **उपादानेनेति** स्वीकारेणेत्यर्थः। प्रज्ञशब्दबोध्यार्थबोधक एवात्राण् प्रत्ययः, तेन प्रज्ञप्राज्ञशब्दौ समानार्थकौ, एतदाशयेनैव "प्रज्ञ एव प्राज्ञ" इति विग्रहे एवशब्दं प्रयुञ्जते वृद्धाः। स तयोरभेदार्थकत्वं सूचयति।अतः कृदर्थकृतेस्तद्धितेनोपादानात्तत्र व्याकरणस्यान्वयाद् द्वितीयान्तत्वमेव, तमबादिस्तु नैवं विधः, तस्यातिशयादिमात्राभिधानेन तात्पर्यग्राहकत्वादिति भावः। तत्र = तद्धितार्थे अन्वयोपपत्तेः = व्याकरणस्य,

**अत एवोक्तं हरिणा—**

**"ततः क्रियावताकर्त्रा योगो भवति कर्मणाम्।**
**अविग्रहागतादिस्था यथाग्रामादिकर्मभिः**
**क्रियासंबध्यते तद्वत्कृतपूर्व्यादिषु स्थिते"-ति**

**अविग्रहा = विशेष्यत्वेनानुपस्थितापीत्यर्थः। गतादिस्था = गतमित्यादिकृत्पदस्था। धात्वर्थान्वयमादाय तच्छब्दबोधोपपादनं वैयाकरणनव्याना मसंगतमेव। कारकाणां धात्वर्थान्वयस्य क्वाप्य व्युत्पन्नत्वात्।**

ननु भाष्यव्याख्यात्रा भर्तृहरिणा कृतपूर्वीकटमित्यत्र कृतशब्दो भावक्तान्त इत्येवोक्तम्, यथा—

"विशेषकर्मसंबन्धे निर्भुक्तेपि कृतादिभिः।
विशेषनिरपेक्षोन्यः कृतशब्दः प्रवर्तते।।
अकर्मकत्वे सत्येवं क्तान्तं भावाभिधायि तत्।।

इति तदीयो ग्रन्थः, कर्मसामान्यवाचकः क्त इति प्रथमं प्रतिपाद्य ततो भावाभिधायि वृत्तिघटकं क्तान्तमिति निरूपितम् स एव भाष्यार्थोऽपि इति चेत् सत्यम्। तद्व्याख्यानेऽपरिष्यन् हरिः कल्पान्तरं प्रतिपादयामास, तदेवास्माभिरनुस्रियते। अतो नास्माकं तद्विरोध इत्याशयेन भर्तृहरिणानुसृतं कल्पान्तरमाह — **अत एवेति** कृतपूर्वीकटमित्यत्र मदुक्तरीतेरेवयुक्तत्वादेवेत्यर्थः, हरिकारिकायाम् — **तत इति** तद्धितोत्पत्तेरनन्तरमित्यर्थः। क्रियावता = कृतिमता, कर्त्रा = इनिप्रत्ययवाच्य कर्त्रा, कर्मणां = कटादीनां, योगः = संबन्धः, अन्वयः विशेषणभूतया कृत्या कर्मणोन्वय इति भावः। तत्र दृष्टान्तमाह — **अविग्रहेत्यादिना क्रिया संबध्यते इत्यन्तेन** अविग्रहेत्यस्य विग्रहरहितेर्थभ्रमवारणायाह — **अविग्रहा = विशेष्यत्वेनानुपस्थितापीति** न विच्यग्रहः = ग्रहणं यस्याः सा अविग्रहा, विशेषणभूतापीत्यर्थः। गतादिस्थेत्यनेन गमिधातूपात्तेत्यर्थ भ्रमवारणायाह — **गतमित्यादि कृत्पदस्थेति** गत इत्यत्र क्तप्रत्ययेन लक्षणयोपस्थितेत्यर्थः। क्रिया = कृतिः। संबध्यते = गतो ग्रामो देवदत्तेनेत्यादौ, धात्वर्थ क्रिया कर्मणा संबध्यत इत्यर्थ इति वैयाकरणमतं दूषयति **धात्वर्थान्वयमिति** शाब्दबोधोपपादनम् = गतो ग्रामः, कृतपूर्वी कटमित्यादौ तदुपपादनम्, **अव्युत्पन्नत्वादिति** निरूपितं चैतत्प्राक्, एवं च भर्तृहरिणा प्रतिपादितोऽर्थोऽस्माकमनुकूल एवेति प्रकृत ग्रन्थार्थः।

## (ओदनस्य पाक इत्यत्रान्वये आक्षेपः।)

**नन्वेव मोदनस्य पाकः 'कृष्णस्य कृति' रित्यादौ क्व कारकान्वयः? न तावद्धात्वर्थेपाके, तस्मिं स्तवा व्युत्पन्नत्वात्। नापि घञर्थे। तस्य लिङ्गान्वयित्वात्। लिङ्गान्वयिन्यामप्यन्वये वस्तुपदाभिधेयस्या मप्यन्वयापत्ते रिति चेत्। पक्तेत्यादिवत् तत्रापि कारकान्वयार्थं घञैव कृतिविशिष्टपाकस्य स्वातन्त्र्येण शक्तिलक्षणाभ्यां कृतिपाकयोर्वा भिधानेन कृतौ कारकान्वयोपपत्तेः। पाकानुकूलकृतिसाध्यः पाक इति च शाब्दबोधः।**

शुद्धभाव घञन्तस्थले कृतेर्बोधायोगात्तत्रानुपपत्तिरित्याशङ्कते — **नन्विति** — एवम् = कर्तृवाचि कृदन्ते कृतेर्लक्षणयोपस्थितत्वात्तत्र कारकाणामन्वयेपि **कृतिरिति** अत्रधातुनैव कृतेर्लाभात्प्रत्ययेन तदलाभात्कारकान्वयानुपपत्तिरिति भावः। तस्य = घञर्थस्य, पुंसि विधानादाह — **लिङ्गान्वयित्वादिति** पक्तिरित्यत्रापि स्त्रियां क्तिनो विधानात्तत्वं बोध्यम्। तत्र = भावकृदन्तेपि, **कृतिविशिष्टेति** प्रत्यये लक्षणा स्वीकारादिति भावः, विशेषणान्वयमसहमान आह — **स्वातन्त्र्येणेति शक्तिलक्षणाभ्यामिति** शक्त्या पाकः, लक्षणया कृतिरित्याशयः, **कारकान्वयेति** ओदनकर्मत्वस्य स्वनिरूपकपाकानुकूलव्यापारानुकूलत्वसंबन्धेन कर्तृत्वस्य स्वनिरूपक व्यापारानुकूलत्वसंबन्धेन चान्वय इति भावः, लक्ष्यायाः कृतेर्न लिङ्गान्वयित्वमिति भावः

## (अत्रैव मतान्तरेण समाधानम्।)

**केचित्तु-न घञाकृते र्लक्षणा। तद्योगे षष्ठीच न कारकपरा। अपितु शेषषष्ठ्येव। तस्या अपि अध्याहृतास्तिरूपप्रधानक्रियायामन्वयः परम्परासंबन्धेनेति न कश्चि द्दोषः। एवं च कृष्णस्य कृति रित्यत्रापि बोधाञ्जस्यम्। नचैवं कृद्योगनिमित्तकषष्ठीविधिवैयर्थ्यम्। तस्य तृजादिकृद्विषयत्वेनाप्युपपत्ते-रित्याहुः।**

घञाद्यन्तस्थले मतान्तरमाह — **केचित्त्विति घञेति** इदमुपलक्षणम्-क्तिनादेरपि। तद्योगे = भावघञन्तपाकादिशब्दयोगे। शेषषष्ठ्या अपि परम्परया भावनायामेवान्वय इति स्वसिद्धान्तानुसारेणाह — **तस्या अपीति न कश्चिद्दोष इति** धात्वर्थे कारकाणामन्वये व्युत्पत्ति विरोधा त्प्रत्ययार्थस्य

लिङ्गानन्वयित्वात्तत्रान्वयो न घटत इत्यादि र्न कश्चिदपि दोष इति भावः। **न चैवमिति।** सर्वत्राप्येवमेवापत्तौ कृद्योगे कर्तृकर्मणोः षष्ठी विधिर्व्यर्थ एव स्यात्, लक्ष्याभावादिति भावः। समाधत्ते — **तस्येति** कृद्योगषष्ठीविधेरित्यर्थः। **तृजादीति** तत्र लक्षितायाः कृतेर्लिङ्गानन्वयित्वात्तत्र सूत्रं चरितार्थमित्याशयः।

**अतः सिद्धं कृद्योग एव कर्तृकर्मणोः षष्ठी, न तु स्वार्थकतद्धितयोगे कारकवाचितद्धितयोगे-वेत्येतदर्थकं कृद्ग्रहणमिति। अत एव कृतपूर्वीत्यत्र नित्यसापेक्षत्वात् कृत्प्रत्ययार्थेनान्वय-मङ्गीकृत्य 'कृतपूर्वीकट' इत्यस्याप्यापत्तिरपास्ता। 'उक्ततद्धितयोगे कारकाणां कृतावेवान्वय' इत्येवं विधज्ञापनप्रयोजनकत्वात् कृद्ग्रहणस्य। अतः सिद्धं तादृशतद्धितासमभिव्याहृतकृद्योग एव षष्ठी, न तु तादृशतद्धितयोगेपी-ति।**

एवं भाष्यसंमतमर्थं प्रतिपाद्य कृद्ग्रहणप्रयोजनं विशदयति — **अतः सिद्धमिति** अतः = एतादृशार्थस्वीकारात्, सिद्धशब्दस्य कृद्ग्रहणमितीत्यत्रान्वयः। **कृद्योग एवेति** कृत्प्रत्ययोपात्तकृतावन्वय एवेत्यर्थः, यथा भवतःशायिका, भवत आसिका अपां स्रष्टा, पुरां भेत्ता, वज्रस्य भर्ता, कर्तृकर्मणोः = कर्तृत्वकर्मत्वयोः। तमबादिव्यावृत्तये आह — **सार्थकतद्धितेति** गार्ग्यः वामदैव्यमित्यादावपि तद्धितस्य सार्थकत्वाद् तद्व्यावृत्तयेऽभिमतस्थलसिद्धये चाह — **कारकवाचीति** कृतपूर्वी कटमित्यत्र कर्तृकारकवाची तद्धितः, शतेन क्रीतः = शत्योऽश्वः, इत्यत्र क्रीत इत्यर्थे तद्धितो यत् "अक्षै दीव्यति = आक्षिकः। इत्येतदर्थकम् = इत्येतत्प्रयोजनकम्। अत एव = कटादेस्तद्धितलक्ष्यकृत्यन्वयस्वीकारादेव, नित्यसापेक्षत्वात् = कारकाणां क्रियया नित्यसापेक्षत्वात्। ननु कारकाणां तद्धितार्थान्वयस्यैवासिद्धत्वेन कथं तत्र षष्ठी वारकतया कृद्ग्रहणस्य प्रयोजनकथन मत आह — **उक्ततद्धितयोगे इति** एतादृशार्थ ज्ञापनद्वारा कृद्ग्रहणस्य तद्व्यावृत्तिः प्रयोजनमिति भावः। प्रकरणार्थमुपसंहरति — **अतः सिद्धमिति तादृशतद्धितासमभिव्याहृतेति** कारकवाचितद्धितासमभिव्याहृतेत्यर्थः। तेन ओदनस्य पाचक इत्यादौ केवलकृदन्तेपि षष्ठी, कारकाबोधकतमबाद्यन्तकृदन्तयोगेपि षष्ठी-ओदनस्य पाचकतमः, तण्डुलानां पाचकतरः। **न तु तादृशेति** कारकवाचीत्यर्थः-कृतपूर्वी कटम्। व्याकरणं प्राज्ञः। उक्तं च महाभाष्ये — "कृतो ये कर्तृकर्मणी तत्र यथा स्यात्, तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत् कृतपूर्वी कटम्, भुक्तपूर्वी ओदन" मिति कृतः = कृदर्थकृतेः। ये कर्तृत्वकर्मत्वे तत्रैव षष्ठी, तद्धितस्य = तद्धितार्थकृतेः। ये कर्तृत्वकर्मत्वे तत्र माभूत् इति तदर्थः, कृतपूर्वीति कर्तृवाचितद्धितान्तस्य प्रत्युदाहरणदानेन कारकवाचितद्धितयोगे षष्ठी नेति लभ्यते, अत एव तण्डुलानां पाचकतम इत्यादौ षष्ठीति बोध्यम्।

कृतपूर्वी कटमित्यत्र कृतशब्दः कर्मसामान्यवचनो भावक्तान्तो वेति व्याचष्टे कैयटः, तत्र ओदनः पच्यतेतमामित्यादौ ग्रन्थकृता दोषाः प्रदर्शिताः, तथैव व्याचक्षाणो हरदत्तः कृतशब्दस्य निष्ठान्तत्वेन "न लोकाव्ययनिष्ठे" त्यादिना षष्ठ्या निषिद्धत्वात् तस्याः प्राप्तेरेवाभावात् कृद्ग्रहणं चिन्त्यप्रयोजनमिति व्याचष्टे, तमनुरुन्धानो भट्टोजिदीक्षितस्तु "न लोकाव्ययनिष्ठे" ति निषेधाविषयं कर्तव्यपूर्वीकटमिति प्रत्युदाहरणं प्रदर्श्य अन्ततः कृत्येव यथास्या त्तद्धिताधिक्ये मा भूदिति व्याख्याय तद्धितान्तपाचकतमादि-योगे षष्ठी भवति वा न वेत्यत्र भाष्यमुदासीनमेवेति व्याचख्यौ एते सर्वेपि भाष्यार्थं सम्यग् नाग्रहीषुरेव, मदुक्तरीत्या महाभाष्यस्य सुयोजत्वात्। अतश्चिन्त्योक्तिरेव चिन्त्येति ग्रन्थकृतो निगूढाशयः, तदेतत्सर्वं मनसि कृत्वैवोक्तम् — "अतः सिद्धं तादृश तद्धितासमभिव्याहृतकृद्योग एव षष्ठी, न तादृश तद्धितयोगेपीती" ति।।

**कर्तृत्वं-स्वतन्त्रकर्तृत्वं प्रयोजककर्तृत्वं चेत्युभयं विवक्षितम्। तेन राज्ञो याजकः, 'चैत्रस्य**

**पचनी स्थालीत्यादावुभयत्र षष्ठी' द्विकर्मकेतु मुख्यकर्मणि षष्ठी नियता। द्वितीये गुण भूते-त्व नियता। अत एव 'नेताऽश्वस्य ग्रामं ग्रामस्य वे' त्युभयथापि प्रयोग इत्यन्यत्र विस्तरः।**

गौणमुख्यन्यायेन स्वतन्त्रकर्तृत्वे एव षष्ठीति भ्रमवारणायाह — **कर्तृत्वमिति उभयं विवक्षितमिति** "साधकतमं करण" 1-4-42 मिति तमपो ग्रहणेन कारकप्रकरणे गौणार्थस्यापि ग्रहणमित्यर्थज्ञापनादुभय-विधस्यापि कर्तृत्वस्य विवक्षेति भावः। द्वितीये उदाहरति — **चैत्रस्य पचनीति** पचतीति = पचनी = पाककर्त्री, तत्प्रयोजकत्वं चैत्रे, अतस्तत्राप्यनेन षष्ठीति भावः, द्विकर्मकधातुयोगे व्यवस्थां दर्शयति **द्विकर्मकेत्विति** मुख्यकर्मणि — "कर्तुरीप्सिततमं कर्म" 1-4-49 इति सूत्रविहितं कर्म मुख्यकर्मेत्युच्यते, तत्र। "गुणकर्मणि वेष्यते" इति वार्तिकादाह — **द्वितीये गुणभूतेत्विति** "अकथितं चे" 1-4-51 ति सूत्रविहित कर्म गुणकर्म तत्र। **नेताऽश्वस्येति** नी धातोः कर्मणा श्वेन संबद्धस्य ग्रामस्य अकथितसूत्रेण कर्मत्वाद्ग्रामो गौणं कर्म, अतस्तत्र वा षष्ठी, पक्षे द्वितीयेति भावः।

**अयं च षष्ठीविधि रनित्यः, "तदर्हम्" 5-1-117 इति निर्देशात्। अत एव "धायै रामोदमुत्तमम्"**
**इति भट्टि रिति केचित्**

ननु—

> ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्।
> लिम्पैरिव तनोर्वातैश्चेतयन् स्याज्ज्वलो न कः।।

इति भट्टिपद्ये "आमोद" मिति द्वितीयानुपपत्तिः, धायैरिति कृद्योगे द्वितीयाबाधनेन प्रकृतसूत्रेण षष्ठ्या प्राप्ते रित्यत आह — **अयं चेति** अनित्यः = क्वचिन्न **तदर्हमिति** द्वितीयान्तादर्हमित्यर्थे वतिः स्यादिति सूत्रार्थः, विधिमर्हति-विधिवत् पूज्यते इत्युदाहरणम्। **निर्देशादिति** उच्चारणादित्यर्थः, सूत्रे अर्हशब्दस्य कृदन्ततया तद्योगे तच्छब्दाद् द्वितीयाबाधनेन प्रकृतसूत्रेण षष्ठ्यां तन्निर्देशोऽसंगतः स्यात्। अतस्तत्सामर्थ्यादस्यानित्यत्वं कल्प्यते, अन्यत्रास्य प्रयोजनं धायैरामोदमित्यादौ षष्ठ्यभावः, धायैरित्यत्र "ददातिदधात्योर्विभाषा" 3-2-132 इति णः "अतो युक् चिण् कृतोः" 7-3-33 इति युगागमः, उत्तमं = पुष्पादिसंबन्धि, आमोदं धायैः = धारयद्भिरिति तदर्थः, तदाह — **अत एवेति** अस्य विधेरनित्यत्वादेवेत्यर्थः, **धायैरिति** भट्टिकाव्ये धयैरिति पाठो लेखकप्रमादात्। **केचिदिति,** अनेनारुचिः सूचिता, तद्बीजं तु—अस्यानित्यत्वकथनमयुक्तम्। भाष्यानुक्तत्वात्, तदर्हमिति न द्विपदं सूत्रम्, किन्तु समस्तपदम्, कर्मोपपदादर्हधातो रण्प्रत्यये उपपदसमासः। तेन द्वितीयासमर्थात्प्रत्यय इत्यर्थलाभः, एतदर्थमेव चात्र तच्छब्दोपादानं सार्थकम्, अन्यथा "तत्रेव" "तस्य" "अर्ह" मिति सूत्रत्रयमेव लघुभूतं कृतं स्यात्। भट्टिपद्ये धायैरिति धारयद्भिरित्यर्थकं न, आमोदं धारयद्भिरिति नार्थः, किन्तु गृहीत्वेत्यध्याहियते, तद्योगे कर्मणि द्वितीया, षष्ठी तु "न लोकाव्यये" 2-3-69 त्यादिना निषिद्धा। तदयमर्थः — मादृग्भ्यो दुःखं ददद्भिः, उत्तममामोदं पुष्पादीनां गृहीत्वा, मादृशां दत्तस्य दुःखस्य, धायैः = पोषकैः मादृशां शरीरे लिम्पद्भिरिव वातैः कः मादृक् विरहाग्निव्याप्तः चेतयन् ज्वलः = ज्वलन्निव न स्यादिति, पद्यमिदं जयमङ्गलायामप्येवमेव व्याख्यातम्, साप्येतज्जतीयैवे-ति।।

अयमत्र संग्रहः — कर्मणोऽविवक्षया कृञोऽकर्मकत्वात्ततो भावे क्तप्रत्ययः, तस्यामवस्थायां कृतपदार्थस्य बाह्यकटादिसंबन्धाभावेनासामर्थ्याभावात्समासतद्धितवृत्त्योर्नानुपपत्तिः, भावे क्तेन कर्मणो-ऽनभिधानादनभिहिताधिकारीया द्वितीयाप्युपपन्ना, तद्धितवृत्तेरनन्तरं कृञर्थफलस्याश्रयाकाङ्क्षायां कटस्य कृञ् धात्वर्थेऽन्वयः, भाष्यकृता कृद्ग्रहणस्य कृतपूर्वीकटमित्यस्य प्रत्युदाहरणतया प्रदर्शितत्वा त्तदन्यथानुपपत्या कल्पनैषा समाश्रिता, अयमेव समाधानपर भाष्याशय-इति वैयाकरणानामाशयः।

खण्डदेवस्य त्वयमाशयः – कर्मणोऽविवक्षयाऽकर्मकत्वे करोतेस्तत्र प्रयोगेऽकर्मकत्वमेव स्यात्, न तु सकर्मकत्वम्, अन्यथा गुरुर्धरित्री क्रियतेतरा मित्यादावपि निरुक्तरीत्याश्रयणे धरित्र्यादीनां द्वितीयान्तत्वापत्तेः, ऋद्धस्य राजपुरुष इत्यादेस्तद्रीत्या साधुत्वापत्तेश्च, अविवक्षितकर्मकेभ्यो भावे लकारे पुनरपि कर्मणो विवक्षया द्वितीयान्तपदघटितवाक्यस्य प्रयोगापत्तेश्च, किं च भाष्ये भावे क्त इति नोक्तम्, अतः कृतशब्दः कर्मक्तान्त एव, परं तु कटादीनां धात्वर्थे क्तार्थेवान्वयो न स्वीक्रियते, कर्त्रर्थकेनिप्रत्ययलक्षितायां कृतावेवान्वयः, तेन कटादेः कर्मणो नभिधानाद् द्वितीया निराबाधा, कटसापेक्षत्वाभावाद् वृत्तिरपि सूपपादा, अयमेव समाधानपर भाष्यार्थः-इति।।

**एवम् – "उभयप्राप्तौ कर्मणि" 2-3-66 इति सूत्रात् यस्मिन् कृति उभयोः प्राप्ति, स्तद्योगे कर्मण्येव षष्ठीस्यात्, कर्तरितु तृतीयैवेत्यर्थकात् 'आश्चर्यो गवां दोहोऽगोपेने' त्यादौ कर्तरि षष्ठी न। अत्र दोह इत्ययं भावे कृत्। सच सकर्मकाकर्मकधातु साधारणः। न तु लकारनिष्टादिव दकर्मकधातुपर एवेति तत्रो भयप्राप्तिः। अत स्तत्र पूर्वोक्तप्रकारेणैव कृतिबोधो नुसन्धेयः। शेषेषष्ठीप्रकारस्तु कृष्णस्य कृतिरित्यादावेवेति ध्येयम्।**

तादृश मनुशासनान्तर व्याचष्टे – **एवमुभयप्राप्ताविति** उभयोःप्राप्तिः उभयप्राप्तिरिति यद्यपि लाघवात् षष्टीतत्पुरुष एव स्वीकार्यः, तथापि "कतृकर्मणोः कृती" 2-3-65 त्यतोऽनुवर्तमानस्य कृतीत्यस्यान्यपदार्थस्य स्पष्टत्वात्तदनुरोधेनात्र बहुव्रीहिराश्रयणीय इत्याशयेन व्याचष्टे **यस्मिन् कृति उभयोःप्राप्तिरिति** तेन एक कृदन्तयोगे उभयोर्यत्र षष्ट्याः प्राप्तिस्तत्रैव एत न्नियमस्य प्रवृत्तिः, तेन कर्तरि षष्टी न। भिन्न कृदन्तयोगेत्वस्या प्रवृत्या कर्तृकर्मणोरुभयत्रापि षष्टी प्रवर्तते।यथा – आश्चर्यमिदं वृत्तम्, ओदनस्य पाकः, ब्राह्मणानां च प्रादुर्भावः इति। उभयोः = कर्तृत्वकर्मत्वयोः। "कर्तृ कर्मणोः कृती" त्येव सिद्धत्वादिदं नियमसूत्रमित्याह **कर्मण्येवेति** एवेन कर्तृत्वे षष्ठी वार्यते। तदाह – **कर्तरि तु तृतीयैवेति दोह इति** दुह धातो र्भावे घञ्, दोहने गवां कर्मत्वम् गोपस्य कर्तृत्वं चास्ति, कृत्प्रत्ययेनोभयोरप्यनभिधानादुभयत्र षष्टीप्राप्ता, अनेन कर्मण्येवेति नियमनात्तत्रैव षष्टी। नियमेन कर्तृवारणात्तत्राऽनभिहिताधिकारीया तृतीया प्रवर्तते इति भावः। तदेतदाह – **अत्रेति** उदाहरण इत्यर्थः।दोह इति = दोह इत्यत्र। अयं + कृत् = अयकृत् प्रत्ययः। भावे = भावे विहितः। अत उभय प्राप्तिः। ननूदाहरणें कथं भावे प्रत्ययः, तस्या कर्मकादेव प्रवृत्तेः, दुहिश्च सकर्मक इत्यत आह **सचेति** घञ् प्रत्यय इत्यर्थः। सकर्मकादिति अकर्मकादिति वा विशिष्या विधानादाह **सकर्मकाकर्मकधातु साधारण इति** यथा ण्वुल् तृजादयोऽविशेषेण विधानात्सकर्माकाकर्मक धातु साधारण्येन प्रवर्तन्ते – पक्ता पाचकः शयिता शायकः इति तद्वदयमपीति भावः, व्यतिरेकें दृष्टान्तमाह – **नत्विति लकारनिष्टादिवदिति** लकारोभावेऽकर्मकादेव प्रवर्तते "भावेचाकर्मकेभ्यः" 3-4-69 इति विशिष्य वचनात्। भूयते, शय्यते चैत्रेण, न तु पच्यादिभ्यः सकर्मकेभ्यः प्रवर्तते, तथा निष्ठा = क्तः क्तवतु। अनयोः क्त प्रत्ययो भावेऽकर्मकादेव प्रवर्तते।आदिना खलर्थ प्रत्ययानां कृत्यप्रत्यानां च ग्रहणम्। तेपि भावेऽकर्मकादेव, "तयोरेव कृत्य क्तखलर्थाः" 3-4-70 इति विशिष्य विधानात्, तद्वद् घञादिरकर्मक धातुपर एवेति नास्ति नियमः। इति = इत्यतः।तत्र = भाव घञन्त घटितोदाहरणे। अन्यथा कर्मण्येव तत्प्रत्ययोत्पत्तौ तेन कर्मणोऽभिहितत्वात् तत्र षष्ट्याः प्राप्तेरभावा "दुभयप्राप्तौ" इति नियमाप्रवृत्त्यापत्तिरिति भावः। अतः = घञन्त योगेपि प्रकृत सूत्रस्य प्रवृत्तेः। तत्र = दोह इत्यत्र। पूर्वोक्त प्रकारेणैव = स्वातन्त्र्येण घञः कृतौ लक्षणयैव। अनुसन्धेयः = कारकाणामन्वयाय। तर्हिघञन्तयोगे शेष षष्ट्येवेति कल्पन्तरा साङ्गत्यमत आह – **शेषे षष्टी प्रकारस्त्विति कृष्णस्य कृतिरित्यादावेवेति** कृति वाचि धातूत्तरक्तिन्नादि विषय एवेत्यर्थः। एवेन तदवाचक धात्वन्तर घञादि व्यावृत्ति एव चात्र षष्टी कारक परैवेति भावः इयमेवारुचिः "केचित्त्वि" त्यनेन सूचितेति बोध्यम्।

**अथवा सर्वत्रैव घञन्ते धात्वर्थेनैव कर्माद्यन्वयः, नचैवं व्युत्पत्त्यन्तरकल्पनाभिया सर्वत्रैव तदापत्तिः, कृतपूर्वीकट मित्यादौ तत्र तदनन्वयस्यो पपादितत्वात्। नचैवं व्युत्पत्त्यन्तरकल्पना, तिबर्थ धात्वर्थाद्यनेकसाधारण्येन लिङ्गानन्वयि भावनाविशेष्यतासंबन्धेन पदजन्योपस्थिते र्हेतुत्वमित्येकयैव तत्सिद्धेः। तत्पदंच यथा ख्यातकृन्निपातादि, तथाघञन्तो धातुरपीतियुक्त स्तस्यामपि तत्र कर्माद्यन्वयः, अत्र हि भावनापदं फलप्रयोजककारकभिन्नव्यापारपरम्, नातो लडाद्यर्थे लिङाद्यर्थे वा विशेष्यत्वापत्तिः, स चा ख्यातादौ कृत्यादिरूपा भावना, घञन्तादौतु धात्वर्थ एव, उभयोः फलप्रयोजकत्वात्, कारकभिन्नेत्युपादानाद्यत्र घञन्तभिन्ने आख्यातादौ धात्वर्थस्य कारकत्वं विवरणसिद्धं, तत्र धात्वर्थे कारकान्वयवारणम्, तत्रा नन्वये च पचत्योदनमित्यस्य पाकेनोदनं करोतीति विवरणे द्वितीयान्तौदनपदस्य करोत्यर्थान्वय एव बीजम्, करोत्यर्थस्या ख्यातार्थत्वेन स्थापितत्वात्। अत्रापि धात्वर्थान्वये "ओदनं पचती" त्यस्य ओदनस्य पाकं करोतीत्येव नियमेन विवरणापत्तिः, घञन्तस्थले च धात्वर्थस्या कारकत्वा ल्लिङ्गानन्वया च्च सत्यपि घञा भिहितस्य तस्यो भयरूपत्वे धात्वभिहिते तस्मिन् कारकान्वयो न विरुद्धः, धातुप्रत्ययाभ्यां पाकाभिन्नः पाक इति बोधात्, अतश्चो भयानुरोधेनैकयैव व्युत्पत्त्या तत्र तत्रा ख्यातार्थेधात्वर्थे वा व्यवस्थया कारकान्वयोपपत्तेः। 'आश्चर्योगवां दोहोऽगोपेने' त्यत्रापि धात्वर्थे कारकान्वयो निराबाधः।**

घञन्ते कारकान्वयार्थं न कृतिलक्षणा, धात्वर्थ एव कारकाणामन्वय इति मतान्तरमाह — **अथ वेत्यादिना धात्वर्थे कारकान्वयो निराबाध इत्यन्तेन ग्रन्थेन** सर्वत्र = पाकः दोह इत्यादौ सर्वत्र। एव शब्देन लक्षित कृति व्यवच्छेदः। एवं = घञन्ते कारकाणां धात्वर्थान्वये। **व्युत्पत्त्यन्तरेति** तण्डुलं पचति, चैत्रेण तण्डुल पच्यते इत्यादौ तिङ्समभिव्याहारे, अलम्, असान्प्रतमित्यादि निपात समभिव्याहारे च कारकाणां कृतमन्वयः स्वीकृतः, दोहः पाक इत्यादौ धात्वर्थे तदन्वय स्वीकारे कार्यकारण भावन्तरं कल्प्यं स्यात् तद्भियेत्यर्थः। लाघवायाह, **सर्वत्रैवेति** तिङ्निपात समभिव्याहारे पीत्यर्थः तदापत्तिः = कारकाणां धात्वर्थान्वयापात्तिः। समाधत्ते **कृतपूर्वीति** तत्र= धात्वर्थे। तदनन्वयस्य = कारकाणामनन्वयस्य। तथात्वे ओदनः पच्यते तमामित्यादौ द्वितीयान्तत्वापत्ति रित्यादि दोषाणामुक्तत्वादाह — **उपपादितत्वादिति** सर्वसाधारण्येनाह **तिबर्थधात्वर्थादीति** आदिना निपातग्रहणम्। एकयैव = व्युत्पत्त्या। तत्सिद्धेः = कारकान्वयसिद्धेः। तत्पदं च = भावना बोधकं पदं च। **आख्यात कृदिति** पचतीत्यत्राख्यातम् ओदनस्य पाचक इत्यत्र लक्षणया भावनाबोधकः कृत् "विषवृक्षोपि संवर्ध्यस्वयं च्छेतुमसाम्प्रतम् अलं श्रमेणे" त्यादौ तद्बोधको निपातः कृतपूर्वीकटमित्यत्र तद्बोधक स्तद्धित इनि प्रत्ययः। शुद्धधातोस्तदभावादाह — **घञन्तो धातुरपीति** तस्यामपि = भावनारूपायामपि। तत्र = धात्वर्थे। ननु ओदनं पचतीत्यत्रापि धात्वर्थे तदन्वयापात्तिः, किं च धात्वर्थे भावना व्यवहाराभावादिदमयुक्तमत आह **अत्र हीति** संबन्ध घटकं येत्यर्थः, **फलप्रयोजकेति** फल प्रयोजकः कारक भिन्नश्च यो व्यापारस्तत्परमित्यर्थः, अत = निरुक्तार्थ विवक्षणात्, स च = तादृश व्यापारश्च, उभयोः = कृति धात्वर्थयोः। विवरण सिद्धम् = पचति = पाकं करोतीति विवरण सिद्धम्। तत्र = ओदनं पचतीत्यत्र धात्वर्थे। अनन्वये = कारकाणाम्, भावनान्वययोग्यस्यौदनस्य द्वितीयस्योपादानाद्धात्वर्थस्य न कर्मत्वम् किंतु करणत्वमेवेत्याशयेनाह — **पाकेनौदनमिति बीजमिति** विवरणे तथान्वया द्विव्रियमाणेपि तथात्वस्यो चितत्वादिति भावः। ननु विवरणस्य करोतेराख्यातस्य च कः सम्बन्धोऽत आह — **करोत्यर्थस्येति** निरूपितं चैतत्पाक्। विवक्षे बाधक माह — **अत्रापीति** ओदनं पचतीत्यादावपीत्यर्थः **नियमेनेति** ओदनस्य पाके कर्मत्वेनान्वयः कार्यः, तथा सति विवरणे पाकमिति कृदन्तेन योगे ओदनात् "कर्तृकर्मणोः कृती" ति षष्ट्येव स्यात्। प्रकृते योजयति **घञन्तस्थलेचेति**

**लिङ्गानन्वयाच्येति** अस्य धात्वभिहिते तस्मिन् कारकान्वयो न विरुद्ध इत्यत्रान्वयः, तस्य = भावस्य। **उभयरूपत्वे इति** घञा शक्त्या बोधितस्य लिङ्गान्वयित्वम्, तेन लक्षितस्य तदनन्वयित्वं, तस्मिन् सत्यपीत्यर्थः। अतस्तस्योभय रूपत्वेपि न तत्र कारकान्वय इति भावः। प्रस्तुतार्थमुपसंहरति **अतश्चेति** उभयानुरोधेन = तिङ्घञन्त धातूभयसाधारण्येन। तत्र तत्र = तत्तल्लक्ष्ये। व्यवस्थया = लिङादि समभिव्याहारे आख्यातार्थ्यर्थ भावनायाम्, घञन्त धातुस्थले धात्वर्थे इति व्यवस्थया।

**वस्तुतस्तु लिङ्गानन्वयित्वं न कारणतावच्छेदककोटि प्रविष्टम्, अपितु प्रत्ययजन्योपस्थितित्वम्, अतश्च घञर्थकृतावेवान्वयः, वस्तुपदाभिधेयायां चानन्वयः कारकाणामिति न कोपि विरोधः।**

ननु स्वमतासंमतस्य काष्टैः पाक इति प्रयोगस्यापत्तिः कर्तृत्वकर्मत्वयोरेव धात्वर्थान्वयो, न कारकान्तरस्येत्यत्र न किञ्चिन्नियामकमस्ति। ओदनः पच्यते तमामित्यापादित दोषतादावस्थ्य च धात्वर्थान्वये, इत्यतः सिद्धान्तमाह **वस्तुतस्त्विति न कारणतेति** येन घञन्तस्थले भावस्य प्रत्ययार्थस्य लिङ्गान्वयित्वा न्न कारकान्वय इत्याशङ्का जायेतेति भावः। **प्रत्ययजन्येति** प्रत्ययपदं निपातस्याप्युपलक्षणम्। **घञर्थ कृतावेवेति** "कर्तृकर्मणोः कृती" ति सूत्र बलात्तत्सूत्र विहित षष्टयर्थस्य कर्तृत्वकर्मत्व रूपस्यैव घञर्थान्वय स्वीकारेण काष्टैः पाक इत्यादे र्नापत्तिरिति बोध्यम्।

**अयं चो भयप्राप्तौ कर्तरि षष्टया निषेधः अकप्रत्ययाकारप्रत्ययरूपयोः स्त्रीप्रत्यययोर्योगे न भवति, "अकाकारयोः प्रयोगे प्रतिषेधो ने ति वक्तव्यमिति वचनात्, 'भेदिका बिभित्सा वा रुद्रस्य जगतः। भेदिका = भेदनम्, भावे अकः, बिभित्सेत्यत्र भावे अकारः, यात्तु — "सुटा सीयुटो बाधो ने" ति काशिका, तस्यां सुटेति करणत्वे तृतीया उभयविधप्रत्यय भिन्न कृतितु उभयप्राप्तौतु विकल्पः कर्तरि, "शेषे विभाषे" ति वचनात्। शोभना व्याकरणस्य कृतिः पाणिनेः, पाणिनिना वा, स्त्रीप्रत्ययविषयमेवेदम्। केचिदविशेषेण विकल्पमिच्छन्ति, 'शब्दाना मनुशासन माचार्यस्य' आचार्येण वा। तन्मते आश्चर्यो गवांदोहोऽगोपेन, अगोपस्येत्यपि भवतीति ध्येयम्।**

विशेषमाह — **अयंचेति** अस्य नियमस्य कर्तरि षष्टी निषेध फलकत्वादाह — **षष्टया निषेध इति** कर्तृ वाचकाकादि व्यावृत्तये आह — **स्त्रीप्रत्यययोरिति** "स्त्रियां क्तिन्" 3-3-94 इत्यधिकारविहितयोरित्यर्थः, भेदने रुद्रस्य कर्तृत्वं जगतः कर्मत्वं च। **भावे अक इति** भावे "धात्वर्थनिर्देशेण्वुल् वक्तव्यः" इति ण्वुल् "युवोरनाकौ" 7-1-1 इति वु शब्दस्य अकादेशः। **भावे अकार इति** भिदेः सन्नन्तात् "अप्रत्ययात्" 3-3-112 इत्यनेन अप्रत्ययः स्त्रियाम्। प्रत्ययात् = प्रत्ययान्त धातोः, स्त्रियाम् अः स्यादिति सूत्रार्थः,

काशिका कारस्य प्रयोगे अति प्रसङ्ग माशङ्कते **यात्त्विति** अस्य काशिका इत्यत्रान्वयः। **सुटा सीयुटो बाधो नेति** "सुट् तिथोः" 3-4-107 इति विशेषविहितेन सुडागमेन सामान्येन लिङो विहितस्य सीयुडागमस्य बाधोनेति तदर्थः। अत्र बाध इति कृदन्तयोगे "कर्तृकर्मणो" रित्यनेन कर्तरि षष्टयां सुट इति प्रयोगेण भाव्यमिति शङ्कितुराशयः। काशिका = "सुट् तिथोः" 3-4-107 रिति सूत्रे। **करणत्वे तृतीयेति** एवमेव "क्तिनाबाधामाभू" दिति "स्थागापापचो भावे" 3-3-95 इति सूत्रे काशिकाप्रयोगोपि समर्थनीयः। भाष्येऽस्य वार्तिकस्य "शोभना खलु" इत्यादि स्त्री प्रत्यय एवोदाहरणदाना त्तन्मात्रविषयकमेवेदमित्यभिप्रयतां मतमाह **स्त्रीप्रत्यय विषयमेवेदमिति** "नचोदाहरणमादरणीय" मिति भाष्योक्त्याऽकाकारभिन्न कृन्मात्र विषयकमेवेदमिति सिद्धान्त पक्षमाह **केचिदिति** अविशेषेण = अक अकाररूप एव कृदिति नियमानादरेण कृत्प्रत्यया विशेषण। तन्मते = सिद्धान्तभूते केचिदितिमते,

**एवं ''क्तस्य च वर्तमाने'' 2-3-67 इतिसूत्रा द्वर्तमानार्थकक्तस्य योगे षष्ठी स्यादित्यर्थकाद् 'राज्ञां मतः, बुद्धः, पूजितो वे' त्यत्र षष्ठी। अत्र ''मतिबुद्धिपूजार्थेभ्यश्च'' 3-2-188 इत्यनेन वर्तमाने क्तः, तद्योगा द्राज्ञामिति कर्तरि षष्ठी। कर्मणः क्तप्रत्ययेना भिहितत्वात्। राज्ञोमतमित्येवं नपुंसकेभावेपिचानेनैव सूत्रेण षष्ठी।**

लाक्षणिकं प्रतिप्रसवरूपं सूत्रान्तर व्याचष्टे – **एवं क्तस्येति राज्ञांमत इति** तैरिष्यमाण इत्यर्थः। अत्र = उदाहरणेषु। मति बुद्धीत्यादि सूत्रे मतिशब्देन इच्छा गृह्यते, बुद्धेः प्रथगुपादानात्, **वर्तमान इति** ''वर्तमाने लट्'' 3-2-123 इत्यतो वर्तमाने इति ''ञीतः क्तः'' 3-2-187 इति सूत्रात् क्त इति चानुवर्तते इति भावः। भूताधिकारे निष्ठा प्रत्ययो यद्यपि विहितः, तथापि प्रत्येकमनेन सूत्रेण क्तोवर्तमाने विहित इति बोध्यम्। **कर्मण इति** राज्ञां मतः पण्डित इत्यादौ कर्मणः क्तेनाभिधाना न्न तत्र षष्टी। अत्रापि ''अनभिहिते'' इत्यधिकारात्, किंतु कर्तरि षष्टीऽनेनेति भावः। इदं च सूत्रं न केवलं वर्तमाने कर्मणि क्तान्त एव प्रवर्तते, किंतु वर्तमाने भावे क्तेपि, अविशेषादित्याह – **राज्ञोमतमिति** तत्कर्तृकेच्छेत्यर्थः। **अनेनैव सूत्रेणेति** एवं चैतदर्थं ''क्तस्य च वर्तमाने नपुंसके भावे उपसंख्यान'' मिति वार्तिकं नारब्धव्यं सूत्रेणैव सिद्धेरिति एव शब्देन ध्वन्यत इति बोध्यम्।

**नच ''कर्तृकर्मणोः कृती'' त्यनेन गतार्थत्वम्, ''नलोकाव्ययनिष्टे'' ति वक्ष्यमाणवचनेन निष्ठाविषये पर्युदस्ताया निष्टाविशेषे प्रतिप्रसवार्थत्वात्। नचैवम्–**

**''पूजितो यः सुरासुरैः'' (वि – पु)**

**इति तृतीयानापत्तिः, तत्रत्यक्तप्रत्ययस्य भूतार्थकत्वेनोपपत्तेः। न हि मतिबुद्धिपूजार्थेभ्योवर्तमान एव क्तः, अतीते धात्वर्थे उक्तधातुनां क्तान्तानां लोके प्रयोगदर्शनेन तद्वचनस्य भूतार्थकक्तबाधकत्वायोगात्। नचैवं वर्तमानार्थकमत्यादिधातूत्तरक्तप्रत्ययभिन्नप्रत्यययोगे 'छात्रस्य हसित' मित्यादौ षष्टचनापत्तिः, तस्याः शेषषष्टीत्वेनो पपत्तेः। अत एव कर्तृत्वत्वेन कर्तृत्व विवक्षायां तृतीयैव।**

सूत्रवैयर्थ्यमाशङ्कते **नचेति गतार्थत्वमिति** क्तप्रत्यस्यापि कृत्प्रत्ययत्वेन ''कर्तृकर्मणोः कृती'' त्यनेनैव गतार्थत्वमित्याशयः। समाधत्ते **न लोकाव्ययेति** वचनेन = निषेध सूत्रेण। **निष्ठा विषये इति** ''क्त क्तवतूनिष्ठा'' 1-1-26 इति सूत्रेण क्त प्रत्ययस्य क्तवतु प्रत्ययस्य च निष्टासंज्ञा विहिता। तद्योगे 'नलोके' ति सूत्रेण षष्टीपर्युदस्ता, तद्बाधनेन पुनः षष्टी निष्ठाविशेष योगेऽनेन विधीयत इति भावः। **निष्टाविशेष इति** निष्ठा प्रत्ययो भूताधिकारे विहितःतथापि मति बद्धी त्यादिना वर्तमाने क्तो विहितः, तद्योगे इत्यर्थः।

प्रयोगासिद्धिमाशङ्कते **नचेति** एवं = न लोकेति निष्ठा योगे निषिद्ध षष्टचा अनेन प्रतिप्रसवे। **तृतीयानापत्तिरिति** पूजित इति क्तान्तेन योगे ''कर्तृकर्मणोः'' रिति प्राप्त षष्टचा ''न लोके'' ति निषेधे ''कर्तृकरणयोस्तृतीये'' त्यनेन तृतीयया भाव्यम्, परं तु पूजित इत्यस्य ''मतिबुद्धी'' त्यादि सूत्र विहित वर्तमानर्थक क्तान्तस्ययोगे प्रकृत सूत्रेण निषेध बाधनेन, षष्टचा दुर्वारतया तृतीया नोपपद्येतेति भावः। समाधत्ते **तत्रत्येति** प्रदर्शित प्रयोग घटकेत्यर्थः। **भूतार्थकतयेति** ''निष्ठा'' 3-2-102 इति सूत्रेण भूते निष्ठा प्रत्ययो विहितः, प्रकृतेपि तेनैव क्तप्रत्ययो, न वर्तमाने इति भावः **उपपत्तेरिति** वर्तमानार्थकक्तान्त प्रयोग एव प्रकृत सूत्रेण षष्टीविधीयते, प्रकृते क्तस्य सूत्रार्थकतया प्रकृत सूत्रस्याप्रवृत्या ''**न लोक व्यये**'' ति षष्टी निषेधात् कर्तरि षष्टचाः प्रवृत्य योगात् कर्तरि तृतीया उपपद्यत इति भावः। नन्विदमयुक्तम्, ''मतिबुद्धी'' ति वर्तमाने क्तस्य भूते क्तस्यापवादत्वादत आह **नहीति वर्तमान एवेति** भूते क्तस्यापवाद इति

भावः। तत्रोपपत्तिमाह **अतीते इति** भूते इत्यर्थः। उक्त धातूनाम् = मति बुद्धि पूजार्थक धातूनाम्। तद्वचनस्य = मतिबुद्धित्यादि सूत्रस्य। एवं च मतिबुद्धि पूजार्थकेभ्यो भूते प्रकृत सूत्रेण वर्तमाने च क्तो भवति प्रयोगानुसारेण व्यवस्थेति भावः। **बाधकत्वायोगादिति** अत एव "तेनैकदिक्" 4-3-112 इति तेनेत्यधिकारे "उपज्ञाते" 4-3-115 इत्यस्य पाठः संगच्छते। तृतीयान्तादुपज्ञाते इत्यर्थे छ प्रत्यय इति सूत्रार्थः। पाणिनिनोपज्ञातं पाणिनीयम्। वर्तमाने क्तस्य मतिबुध्यादिभ्यो भूते क्तस्या पवादत्वे प्रकृत सूत्रेण षष्ट्या एवापत्तौ तदसंगतिः स्पष्टैवेति बोध्यम्।

सूत्रे "मति बुद्धिपूजार्थेभ्यश्चेति" सूत्र विहित क्त प्रत्ययस्यैव ग्रहणेऽव्याप्तिमाशङ्कते – **नचेति** एवं = मत्याद्यर्थक धातूत्तर वर्तमानार्थक क्त प्रत्यययोग एव षष्ट्याः स्वीकारे, **वर्तमानार्थकेति** वर्तमानार्थकः यो मत्यादि धातूत्तर क्त प्रत्यय भिन्नः प्रत्ययः = क्तः तद्योगे इत्यर्थः। **छात्रस्य हसितमिति** अत्र हस धातो भावे क्तः सूत्रेणाप्राप्तौ "क्तस्य च वर्तमाने नपुंसके भावे उपसंख्यान" मिति वार्तिकमारब्धम् इत्यादावित्यादि शब्देन मयूरस्य नृत्तम्, कोकिलस्य व्याहृतम्, नटस्य भुक्तमित्यादे र्ग्रहणम्, वार्तिक प्रत्याख्यातृ भाष्यरीत्या समाधत्ते – **तस्याः शेष षष्टीत्वेनेति** तस्याः = निरुक्तोदाहरणे षष्ट्याः। तथाच भाष्यम् "शेष विज्ञानाद्वासिद्ध" मिति "छात्रादिगत कर्तृत्वस्य शेषत्वेन विवक्षायां षष्टीशेषे" इति सूत्रेण षष्टी सिद्धचतीति भावः, भाष्यमतमेव ज्याय इत्याह **अत एवेति** शेषत्व विवक्षया षष्टी समर्थनादेवेत्यर्थः तृतीयैव = कर्तृकरणयोस्तृतीया" इत्यनेन। वार्तिकमतेतु अत्र तृतीया न सिध्यति।

**भूतार्थकक्तप्रत्ययस्या प्यधिकरणवाचित्वे पूर्ववत् षष्ठीप्रतिप्रसवः, "अधिकरणवाचिनश्च" 2-3-68 इतिसूत्रात्। तत्राप्यकर्मकेभ्यः कर्तर्येव षष्ठी। 'इदमेषां शयित' मिति। शयितम् = शयनाधिकरणम्। क्तप्रत्ययेनोक्तत्वा दिदमिति प्रथमा। सकर्मकेभ्यस्तु अधिकरणेक्तप्रत्यये कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी। अनभिहितत्वाविशेषात्। इदमेषां भुक्तमोदनस्य, भुक्तम् = भोजनस्थानम्। न तु कर्मण्येव, "उभयप्राप्तौ कर्मणी" त्यस्य "कर्तृकर्मणोः कृती" त्येतदुत्तरपाठेन तत्सूत्रविहित षष्ठ्या एव तेन नियमात्।**

एतत्सजातीयं प्रति प्रसवरूपं लक्षणान्तर व्याचष्टे -- **भूतार्थकेति** पूर्ववत् = "क्तस्य च वर्तमाने" इति सूत्रवत्। 'क्तस्य च वर्तमाने' इति सूत्रात् क्तस्येत्यनुवर्तते। अधिकरणार्थकस्य क्तप्रत्ययस्य योगे षष्टी स्यादिति सूत्रार्थः। प्रति प्रसवः = न लोकेति निषेधे प्राप्तेऽनेन षष्ट्याः प्रति प्रसवः। तत्रापि = अधिकरणार्थक क्तप्रत्ययान्तयोगेऽपि। **कर्तर्येवेति** असंभवात् न कर्मणि, उक्तत्वान्नाधिकरणे, परिशेषात्कर्तर्येव षष्टीति भावः। उदाहरति **इदमेषामति** "क्तोऽधिकरणे च ध्रौव्यगति प्रत्यवसानार्थेभ्यः" 3-4-76 इति सूत्रेण ध्रौव्याद्यर्थकेभ्यो धातुभ्योऽधिकरणे क्तो विहितः। ध्रौव्यं = स्थैर्यम्। प्रत्यवसानं = भक्षणम्। आसन शयनादीनि स्थिराणि। प्रकृते स्थैर्यार्थक शीङ्धातोरधिकरणे क्तः। एषामिति कर्तरि षष्टी तदाह **शयितं = शयनाधिकरणमिति** इदमिति शयितमित्यनेन समानाधिकरणं स्थानवाचकम्। तत्राधिकरणे सप्तमी माशङ्क्य वारयति – **क्तप्रत्ययेनेति** उक्तत्वात् = अधिकरणस्योक्तत्वात् शीङ्धातोरकर्मकत्वात्पक्षे भावे कर्तरि च क्तो भवति, भावे क्तेशयितमस्मिन्नेभिरिति। कर्तरि क्ते अस्मिन्नेते शयिता इति च प्रयोगाः साधवः। सकर्मकेभ्यस्तु = गमिभुजि प्रभृतिभ्यस्तु, क्ते कृते = "क्तोधिकरणेचे" त्यादिना क्त प्रत्यये कृते। **द्वयोरपीति** अस्य "न तु कर्मण्येवे" त्यत्रान्वयः। क्तेनाधिकरणत्वस्याभिधानात्कर्तृत्व कर्मत्वयो रनभिधानादुभयत्रापि षष्टी प्रवर्तत इत्यर्थः, तदाह **अनभिहितत्वा विशेषादिति** भुक्तमिति अधिकरण क्तान्तमित्याह **भुक्तं = भोजनस्थानमिति** भुजेः कर्मणि क्ते तु अस्मिन्नेभिर्भुक्त ओदन इति प्रयोगः। ननु द्वयोरपि, न तु कर्मण्येवेत्ययुक्तम् "उभय प्राप्तौ कर्मणी" 2-3-66 इत्यनेन कर्मण्येव

षष्ट्या नियमितत्वादत आह **उभयप्राप्तावितीति उत्तरपाठेनेति** "कर्तृकर्मणोः कृती" 2-3-65 "उभय प्राप्तौ कर्मणि" 2-3-66 "क्तस्य च वर्तमाने" 2-3-67 "अधिकरण वाचिनश्च" 2-3-68 इत्यष्टाध्यायी पाठे अपवादभूतस्य उभयप्राप्तावित्यस्य बाध्ययोः "कर्तृकर्मणोः" "अधिकरण वाचिनश्चे" त्यनयोर्मध्ये पठितत्वेन "मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानि" ति परिभाषया उभय प्राप्ताविति सूत्रेण कर्तृकर्मणोरिति सूत्रमेव बाध्यते न तु अधिकरण वाचिनश्चेति सूत्रमिति भावः। तेन = उभय प्राप्तावित्यनेन,

**तदेवं कृद्योगे सर्वत्र "कर्तृकर्मणोः कृती" त्यनेन षष्ठीप्राप्तौ "नलोकाव्ययनिष्ठाखलर्थतृनाम्" 2-3-69 इतिसूत्रेण तत्पर्युदासः। लः = तदादेशाः तेच कृत्संज्ञकाः शतृशानजादय एवेह गृह्यन्ते, तिङः कृद्ग्रहणेनैव निवृत्तत्वात्। तेन 'ओदनं पचन् पचमान' इत्यादौ न षष्ठी। अपितु द्वितीयैव।**

"न लोकाव्यये" त्यादि निषेध सूत्रमवतारयति – **तदेवमिति** सर्वत्र = कृत्प्रत्यय सामान्ये। तत्पर्युदासः = षष्टी प्रतिषेधः। ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन् एभिर्योगे प्रत्यासत्त्या तदन्तोपस्थाप्य क्रियायाः कर्तृकर्मणोः षष्टी नेति सूत्रार्थः। उश्च उकश्च ऊकौ, लश्च ऊकौच लोकाः, लोकाश्च अव्ययं चेत्यादि क्रमेण द्वन्द्वः। ल शब्देन लडादि लकाराणां ग्रहणम्, लकारस्य केवलस्य क्वापि प्रयोगाभावाल्लग्रहणं तत्सम्बन्धि परमित्याह – **लः = तदादेशा इति**। कृत्तिङो र्लादिशत्वा विशेषेपि प्रकृते कृतामेव ग्रहणमित्याह **तेचेति** लादेशाश्चेत्यर्थः **शानजादय इति** "लटः शतृ शानचाव प्रथमा सामानाधिकरणे" 3-2-124 लृटः सद्वा 3-3-14 इति विहितयोः शतृशानचोर्ग्रहणम्, आदिना "लिटः कानज्वाः" 3-2-106 क्वशुश्च" 3-2-107 इति लिडादेशयोः क्वसुकानचोर्ग्रहणम्। तिङोऽग्रहणे हेतुमाह **कृद्ग्रहणे नैवेति** "कर्तृकर्मणोः कृती" ति विधिसूत्रेण कृद्योगे षष्टी विधानात्तिङ्योगे प्राप्तेरेवाभावात्तिङां व्यावर्तनमिति भावः। **निवृत्तत्वादिति** एवं च सूत्रे लपदेन तिङोग्रहणम् न कार्यं, फलाभावादिति भावः। तेन = लपदेन लादेश ग्रहणेन। इत्यादावित्यादिपदेन ओदनं पक्ष्यन्, ओदनं पक्ष्यमाण इत्यादेर्ग्रहणम्, **द्वितीयैवेति** कृताकर्मणो नभिधानादिति भावः,

**अत्र च लकारग्रहणेन तत्कार्यापन्नानामपि ग्रहणम्। तेन किकिनोलीदेशत्वाभावेपि तत्कार्यापन्नत्वात्, विशेषातिदेशेच सामान्यातिदेशस्या वश्यकत्वात् तयोरपि ग्रहणम्। अत एव च 'बभ्रिर्वज्रं' मित्यादिप्रयोगा अपि संगच्छन्ते। उ-कटं चिकीर्षुः, कन्यामलंकरिष्णुः। उक-दैत्यान् घातुकः। "कमेर्भाषाया मनिषेधः" इतिवाचनात्तु 'लक्ष्म्याः कामुको हरि' रित्यत्र षष्ठी। अव्ययम्-कटं कृत्वा। "तोसुन् कसुनोरप्रतिषेधः" इति वचनाच्च "पुरावत्साना मपाकर्तोः" "पुराक्रूरस्य विसृपोविरप्शिन्" (तै. सं. 1-3-5, मा. स. 1-26 का. स. 1-55) इत्यादौ षष्ठी। निष्ठा – ओदनं भुक्तवान्। चैत्रेण कृतम्" खलर्थः – सुकरः प्रपञ्चो हरिणा।**

ननु "आदृगमहनजनः कि किनौ लिट् च" 3-2-171 इत्यनेन आदन्तादृदन्ताच्च धातोः गमहनजन एतेभ्यश्चुछन्दसि कि प्रत्ययः किन् प्रत्ययश्च विधीयते, तयो र्लिट्त्वं चातिदिश्यते, लिटत्वातिदेशेन "लिटिधातोरनभ्यासस्ये" 6-1-8 त्यनेन द्विर्वचनं धातोर्भवति, पपिः सोमम्, ददिर्गाः, बभ्रिर्वज्रम्, जग्मिः, जघ्निः, जज्ञिः, इति तत्सूत्रोदाहरणानि, अत्र कि किनोर्योगेपि "न लोकेति" प्रकृत निषधेन भाव्यम् परंतु तयोरलादेशत्वा त्प्रकृतसूत्रे लादेश पदेना ग्रहणादप्रवृत्त्यापत्तिरत आह – **लकारग्रहणेनेति** सूत्रे लशब्देनेत्यर्थः। **तत्कार्यापन्नानामपीति** तच्छब्देन लकार निमित्तक कार्यस्य द्वित्वस्य ग्रहणम्। कार्यशब्द स्तत्कारित्वपरः, तथाच लकारनिमित्तककार्यकारित्वमापान्नानां = प्राप्तानामित्यर्थः। लकारनिमित्तक

द्वित्वादिकार्यसंपादकानामपीति यावत्। तेन = लपदेन तत्कार्यापन्नानामपि ग्रहणेन। **किकिनोरिति** रूपभेदाभावेपि स्वर भेदाभिप्रायेण प्रत्यय द्वयं विहितम्। किन्त्वात्.पपि रित्यादौ "आतो लोप इति चे" 6-4-64 त्याकारलोपः, बभ्रिरित्यादौ गुणाभावः, जग्मिरित्यादावुपधा लोपश्च सिध्यति। **लादेशत्वाभावेपीति** न च शतृ शानजादीनामिव किकिनोरपि लादेशत्वमेवास्तु किं तद्वदतिदेशेनेति वाच्यम्। तयोर्लादेशत्वे "लःपरस्मैपद" 1-4-99 मित्यनेन परस्मैपद संज्ञापत्तौ देङ्दृङ् प्रभृतिभ्य आदन्त ऋदन्तेभ्य आत्मनेपदिभ्यस्तयोरप्रवृत्त्यापत्तेः। अतिदेशेतु लादेशानामेव परस्मैपद संज्ञा, न लकारत्येत्यदोषात्। लिट् कार्यापन्नत्वात् = द्विर्वचनरूप लिट् कार्य संपादकत्वात्। ननु लिट्त्वातिदेशेपि लत्व सत्त्वं कथमत आह — **विशेषातिदेशेचेति** कि किनौ लिट्चे" त्यनेन लिट्त्वरूप विशेषधर्मातिदेशे इत्यर्थः। सामान्यातिदेशस्य = लत्वरूप सामान्य धर्मातिदेशस्य। **आवश्यकत्वादिति** विशेषे सामान्यस्य नान्तरीयकतया सत्वादिति भावः, तयोरपि = कि किनोरपि। ग्रहणम् = सूत्रेलपदेन ग्रहणम्। तत्र प्रयोजनमाह **अत एवेति** तयोरपि लपदेन ग्रहणादेवेत्यर्थः। **बभ्रिरिति** भृञ् धातोः कि प्रत्यये द्वित्वे कित्त्वाद्गुण निषेधे यणादेशः। इत्यादावित्यादिशब्देन पपिः सोमम्, ददि गाः, जघ्नि वृत्र ममित्रियम् इत्यादीनां ग्रहणम्, एवं च लादेशा इत्यस्य लसंबन्धिन इत्यर्थः कार्य इति बोध्यम्।

सूत्रे ल उ उक इतिच्छेद इत्याशयेनाह — **उ इति** उक्तं च भाष्य कृता — "उकारोप्यत्र निर्दिश्यते, उ उक = ऊक, ल ऊक = लोक" इति। तत्र उ शब्देन उकारान्तस्य कृत्प्रत्ययस्य ग्रहणम्। **कटं चिकीर्षुरिति** कृञ् धातोः सन्नन्तात् "सनाशंसभिक्ष उः" 3-2-108 इत्यनेन उ प्रत्ययः। तस्य उकारान्तत्वं व्यपदेशि वद्भावेन बोध्यम्। **अलङ्करिष्णुरिति** अलंपूर्वकात् कृञ् धातोः "अलंकृञ् निराकृञ्" 3-2-136 इत्यादिना इष्णुच् प्रत्ययः। अयं स्वत उकारान्तः। **घातुक इति** हन धातोः "लषपत पदस्था भूवृष हन कमगमशॄभ्य उकञ्" 3-2-154 इत्यनेन उकञ् प्रत्ययः। उपधा वृद्धिः, कुत्वेन हकारस्य घकारः, नस्य तकारः। उकप्रत्ययान्तेन योगे निषेधस्यापवादमाह **कमेर्भाषायामिति** वचनात् = कात्यायनस्य वचनात् वार्तिकादित्यर्थः। **कामुक इति** कम्धातोः "लषपत" इत्यादिना उकञ् प्रत्ययः, तदन्तेन योगे भाषायां सूत्रेण निषेधः प्राप्तोऽनेन निषिध्यते, तेन "कर्तृकर्मणो" रिति सूत्रेण षष्ठी प्रवर्तते कम् धातु प्रकृतिकेन उकप्रत्ययान्तेन योगे भाषायां षष्ठीनिषेधो नेति वार्तिकार्थः। षष्ठी = "कर्तृकर्मणो" रिति सूत्रेण। **अव्ययमिति** अत्र कृदन्तमेवाव्ययं गृह्यते, अव्ययार्थस्य ये कर्तृकर्मणि इति व्याख्यानात्, अकृदन्ताव्ययस्य क्रियावाचित्वाभावेन तत्र कर्मणो रसंभवात्। तेन उच्चैः कटानां स्रष्टेत्यादौ न निषेधः। अव्यययोगे निषेधस्यापवाद वार्तिकमाह **तोसुन् कसुनो रिति** एतौ छान्दसौ कृत्प्रत्ययौ। "क्त्वातोसुन्कसुनः" 1-1-26 इत्यनेन एतदन्तस्याव्यय संज्ञा विधानात्सूत्रेण प्रतिषेधः प्राप्नोति। वचनात् = वार्तिकात्। **अपाकर्तोरिति** सोपसर्गात् कृञ् धातोः भावलक्षणे "स्थेण् कृञ्वदि चरिहु तमिजनिभ्यस्तोसुन्" 3-4-16 इत्यनेन भावे तो सुन् प्रत्ययः, धातोर्गुणः रुत्वे विसर्गे च अपाकर्तोरिति रूपम्। अपाकर्तृमित्यर्थः, **विसृप इति** सोपसर्गात्, सृप्लृगतावित्ति धातोः "सृपितृदोः" 3-4-17 इत्यनेन कसुन् प्रत्ययः कित्त्वाध्दातोर्गुणो न। निष्ठा = क्त क्तवतु प्रत्यययोर्निष्ठेति संज्ञा "क्त क्तवतू निष्ठे" 1-1-26 त्यनेन विहिता **भुक्तवानिति** भुज धातोः क्तवतुः, स च "कर्तरिकृत्" 3-4-67 इति सूत्रात् कर्तरि। कृतमित्यत्र क्तः, स च "तयोरेव कृत्यक्त खलार्थाः 3-4-70 इति सूत्रात् कर्मणि। **खलर्थ इति** "ईषद्दुः सुषु कृच्छ्राकृच्छ्रार्थेषु खल्" 3-3-126 इत्यनेन भावे कर्मणि च खल् प्रत्ययः। "आतोयुच्" 3-3-127 इत्यनेन आदन्ताद्धातोरीषदादिषूपपदेषु खलं बाधित्व युच्। युचोपि संग्रहार्थं खलर्थ इत्यर्थ ग्रहणम्। **सुकर इति** कृञ् धातोः कर्मणि खल्। कृत्प्रत्ययेन कर्मणोऽभि धानात्प्रथमा, तेन कर्तुरनभिधानात् "कर्तृकर्मणो" रिति प्राप्ता षष्ठी निषिद्धा, "कर्तृकरणयो स्तृतीये" ति अनभिहिते कर्तरि तृतीया हरिणेति, एवं मीषत्पानः सोमो भवतेत्यत्र कर्मणि युच्।

"तृन्" इति प्रत्याहारः। **स च 'शतृशानचा विति तृशब्दादारभ्य आतृनो नकारात्। तेन 'शाननुप्रभृतीनामपि ग्रहणम्। शानन् - सोमं पवमानः, चानश् - 'आत्मानं मण्डयमानः। 'शतृ-वेदमधीयन्। तृन्-लोकान् कर्ता। द्विष धातूत्तरशतृयोगेतु विकल्पेन षष्ठी। 'द्विषः शतुर्वे' ति वचनात्। 'मुरस्य मुरं वा द्विषन्। सर्वश्चायं कारकषष्ठ्याः पर्युदासः, नतु शेषषष्ठ्याः। आनन्तर्येण तदेकवाक्यतायाः एव न्याय्यत्वात्। अत एव 'ब्राह्मणस्य कुर्वन्' नरकस्य जिष्णुः 'छात्रस्य हसित ' मित्यादिप्रयोगा अपि संगच्छन्ते।**

"न लोके" ति सूत्र लादेशयोगे षष्ठी निषिद्धा, शानन् चानश् "इङ्धार्योः शत्र कृच्छिणि" 3-2-30 इति सूत्र विहितः शता एषा मलादेशत्वात्तद्योगे निषेधो न प्राप्नोति, तत्रापि निषेध इष्टः, इत्याशयेन "शान श्चानश्शतृणामुपसख्यानं" मिति कात्यायनेन वचनमारब्धम् तत्प्रत्याख्यानाय भाष्यकृता "तृन्निति नेदं प्रत्यय ग्रहणम्, किं तर्हि? प्रत्याहार ग्रहणम्, क्व संनिविष्ठानां प्रत्याहारः "लटः शतृशानचा" 3-2-124 वित्यत्र तृशब्दादारभ्य "तृन्" 3-2-135 आतृनो न कारात् इत्युक्तम्।"तृन्" 3-2-135 इति सूत्रेण ताच्छील्यादिषु तृन् प्रत्ययोविहितः तस्यैव नलोके तिसूत्रे तृन् शब्देन ग्रहणमित्याशयेन वार्तिक मारब्धम्, तृन्नित्यनेन तृन् प्रत्ययस्य न ग्रहणं, किंतु प्रत्याहार ग्रहणम्। तेन सूत्रेणैव सिद्धतया वार्तिकमपूर्वतया नारब्धव्यमिति भाष्यकारस्याशयः, तद्भाष्यार्थं मनसि कृत्वाऽऽह – **तृन् प्रत्याहार इति** एवं च "न लोके" ति सूत्रे तृन् पदेन प्रत्ययस्य न ग्रहणम्, किंतु प्रत्याहारस्येति भावः। स च = स प्रत्याहारश्च। **शतृ शानचाविति** लटः शतृशानचाव प्रथमा समानाधिकरणे" 3-2-135 इति सूत्रस्थतृशब्दा दारभ्येत्यर्थः। **आतृन इति** "तृन्" 3-2-135 इति सूत्रस्थादानकारादित्यर्थः। "लटः शतृशानचौ " 3-2-135 "संबोधनेच" 125 तौ सत् 127 "पूङ्यजोः शानन्" 128 ताच्छील्यवयोवचन शक्तिषु चानश्" 129 "इङ् धार्योः शत्र कृच्छ्रिणि" 130 "तृन्" 135 इत्यष्टाध्यायी सूत्रपाठः। तेन = प्रत्याहाराश्रयणेन। शानन् प्रभृतीनामित्यत्र प्रभृतिपदेन चानश् शतृतृनां ग्रहणम्। ग्रहणं = सूत्रे तृन् शब्देन ग्रहणम् **पवमान इति** पूङ्धातोः "पूङ् यजो शानन्" 3-2-128 इत्यनेन शानन्। एवं यजमान शब्द योगेपि निषेधः। **मण्डयमान इति** मडिभूषाया मित्यस्माद्धातोर्ण्यन्तात् ताच्छील्य वयोवचन शक्तिषुचानश् 3-2-129 इत्यनेन ताच्छील्येद्योत्ये कर्तरि चानश्। एव कवचं बिभ्राणः, शत्रून् निघ्नान इत्यादौ वयसि शक्तौ य चानश्। **अधीयन्निति** अधिपूर्वकात् इङ् अध्ययने इति धातोः "इङ् धार्योः शत्र कृच्छ्रिणि" 3-2-130 इत्यनेन शतृ प्रत्ययोऽकृच्छ्रिणि कर्तरि। एवं धारयन् इत्यनेनापि योगे निषेधः **कर्ता कटानिति** कृञ् धातोः "तृन्" 3-2-135 इत्यनेन तृन् प्रत्ययः। अस्यापवादमाह **द्विषधात्विति वचनादिति** वार्तिकादित्यर्थः। 'न लोके' ति सूत्रे तृन् शब्देन तृन् प्रत्ययस्य ग्रहणमिति वार्तिक मते मुरस्य द्विषन्नित्यादौ प्रकृतनिषेधा प्रवृत्त्या "कर्तृकर्मणोः कृती" त्यनेन षष्ठ्याः सिद्धत्वेन पक्षे प्रति षेधमात्र फलकमिदं वार्तिकम्। प्रत्याहारस्य ग्रहणमिति भाष्यमतेतु निषेधस्य सिद्धतयापक्षे षष्ठी विधान फलकमिति बोधयम्।

ननु ब्राह्मणस्य कुर्वन्नित्यादीनामसिद्धिः शतुलदिशतयाः "न लोके" ति निषेधा, दत आह **सर्व इति** न लोके, त्यादिना प्रदर्शित इत्यर्थः। कारक षष्ट्याः = "कर्तृ कर्मणोः कृती" ति सूत्र विहितायाः। तत्र हेतुमाह **आनन्तर्येणेति** "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वे" ति न्यायेनेति भावः। निषेधस्य विधिसापेक्षत्वादाह – **तदेक वाक्यताया एवेति** तत्प्रयोजनमाह **अत एवेति** इत्यादीत्यादि पदेन "इक्ष्वाकूणां दुरापेर्थेत्वदधीना हि सिद्धयः" अपि वार्गाधिपस्य दुर्वचं वचनं तद्विदधीत विस्मय मित्यादेर्ग्रहणम्, एतदभि प्रायेणैव "क्तस्य च वर्तमाने" इती सूत्र व्याख्यावसरे छात्रस्य हसित मित्यस्योपपत्तिरुक्ता मूले। **संगच्छन्ते इति** अन्यथा कुर्वन्नित्यस्य लादेशान्तत्वेन जिष्णुरित्यस्य उप्रत्ययान्ततया हसितमित्यस्य निष्ठान्ततया दुरापं दुर्वचमित्यनयोः खल् प्रत्ययान्ततया च "न लोके" ति निषेधे तदसिद्धिः स्पष्टैवेति भावः।

**एवम्** – "अकेनोर्भविष्यदाधमर्ण्ययोः" 2-3-70 इति सूत्राद्भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यादित्यर्थकाद् 'एधानाहारको व्रजति, व्रजं गामी शतं दायी' त्यादौ द्वितीयैव, न षष्ठी। अत्र भविष्यत्कालविहिताकस्यैव ग्रहणा न्न कालसामान्यविहिताके 'ओदनस्य पाचक' इत्यादौ द्वितीया। अत्र च व्याख्यानवशा न्न यथासंख्य मन्वयः। अपितुअकस्य भविष्यत्येव। इनस्तूभयोः। तेन गामीत्ययं भविष्यतीनिः। दायीत्यय माधमर्ण्ये णिनिः।

षष्ठी निषेधकं सूत्रान्तरं व्याचष्टे – **एवमकेनोरिति** व्याकरणे ण्वुल् वुञ् वुन् एतादृशाः प्रत्यया विहिताः तेषु इत्सञ्ज्ञक वर्णानामपह्नामे वु इत्यवशिष्यते। तस्य "युवोरनाकौ" 7-1-1 इत्यनेन "अक" इत्यादेशो विहितः सोत्र सूत्रे अक इति व्यवहृतः। तथैव तेन सूत्रेण यु इति प्रत्ययस्य अनादेशो विहितः। सूत्रे इन् शब्देन, इनि णिनि अनयोर्ग्रहणम्। तत्र अकप्रत्ययो भविष्यत्येव सभवति, न आधमर्ण्ये अतस्तस्य नोभयत्र संबन्धः। इन् प्रत्ययस्तु भविष्यति आधमर्ण्ये च संभवति। अतस्तस्यो भयत्रापि संबन्ध इत्याशयेन सूत्रं व्याचष्टे – **भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्चेति एधानिति** एधशब्दोऽकारान्तः पुंसि "एधाः पक्ष्यन्ते" इति "कारके" 1-4-23 इति सूत्रे भाष्यात्। **आहारक इति** आङ् पूर्वात् हृञ् धातोः "भविष्यति गम्यदयः 3-3-3 इत्यतो भविष्यतीत्यनुवर्तमाने "तुमन् ण्वुलौक्रियायां क्रियार्थायाम्" 3-3-10 इत्यनेन भविष्यति ण्वुल्। एध कर्मक भविष्यत्कालिकाहरण कर्तृवृत्ति व्रजन कृतिरिति ततो बोधः। भविष्यत्कालिके इनावुदाहरति **व्रजं गमीति** गम्लृगताविति धातोः "गमेरिनिः" इत्यनेन औणादिक इनिः स च "भविष्यति गम्यादयः" 3-3-3 इति पाणिनि सूत्राद्भविष्यति काले। गामीति दीर्घ पाठेतु "कृत्यल्युटो बहुलम्" 3-4-11 इति सूत्रे बहुल ग्रहणात् वृद्धिः। आधमर्ण्ये इनावुदाहरति **शतं दायीति** दाधातोः "आवश्यका धमर्ण्ययोर्णिनिः" 3-3-70 इत्यनेन णिनिः। इत्यादावित्यादि पदेन कृष्णं दर्शको याति, व्रजं प्रस्थायी, सहस्रंदायी, इत्यादेर्ग्रहणम्। ननु ओदनस्य पाचक इत्यत्रापि भविष्यदर्थकाकप्रत्ययान्तेन योगा न्निषेधापत्तिः, अत्रापि प्रकरणादिना पाके भविष्यत्वप्रतीतेरत आह – **अत्रेति** अस्मिन् सूत्रे इत्यर्थः। **भविष्यत्काल विहितेति** अत्र सूत्रे भविष्यच्छब्दे स्वरितत्व प्रतिज्ञानादधिकार्थावगतिः, तेन भविष्यदधिकारे विहितस्या कस्य ग्रहणं सिध्यति। तादृशश्च "तुमुन् ण्वुलौ क्रियायां क्रियार्थाया" 3-3-10 मितिसूत्रविहित एव भवति। तत्र "भविष्यति गम्यादयः" 3-3-3 इति सूत्राद् भविष्यतीत्यस्यानुवृत्तत्वात्, तथाच "तुमुन् ण्वुला" विति सूत्र विहिता कप्रत्ययान्तयोग एवानेन निषेध इति भावः। तत्प्रयोजनमाह – **न कालसामान्येति** नञो द्वितीयेत्यत्रान्वयः, काल सामान्ये विहितो यः अकः = अक प्रत्ययो ण्वुल् स्थानिकः, तत्रेत्यर्थः, ओदनस्य पाचक इत्यत्र "ण्वुल् तृचौ" 3-1-133 इत्यनेन काल विशेषानादरेण कर्तृमात्रेण्वुल्, पदान्तर संनिधानेन भविष्यत्त्वं प्रतीयते, न तु स सूत्रेण भविष्यत्काले विहितः। अतस्तत्रास्य निषेधस्याप्रवृत्त्या "कर्तृकर्मणोः कृती" त्यनेन षष्ट्येव भवति अन्यथात्रापि निषेध प्रवृत्या द्वितीयैव स्यात्। इत्यादावित्यादि पदेन वर्षशतस्य पूरकः, पुत्र पौत्राणां दर्शकः इत्यादेर्ग्रहणम्। ननु प्रकृत सूत्रे यथासंख्यसूत्र प्रवृत्त्या भविष्यत्यकस्य आधमर्ण्येनश्च योगे षष्टी नेत्यर्थदिधानाहारको याति शतं दायीत्यादौ निषेधस्य सिद्धावपि व्रजं गमीत्यादौ तदनापत्तिरत आह – **अत्र चेति** प्रकृत सूत्र इत्यर्थः। **व्याख्यानवशादिति,** "यथासंख्यमनुदेशः समानाम्" 1-3-10 इति सूत्रे स्वरितेनाधिकारः 1-3-11 इति सूत्रात् स्वरितेनेत्यपकृष्यते। तेन यत्र स्वरितत्वं प्रतिज्ञायते तत्रैव यथासंख्यसूत्रं प्रवर्तते, नान्यत्र। प्रकृत सूत्रे स्वरितत्वं न प्रतिज्ञायते। अतोत्रा प्रवृत्तिर्यथा संख्य सूत्रस्य। अत एव "अकस्य भविष्यति" "इन आधमर्ण्ये चे" ति योगविभागेन व्याख्यातं भाष्ये। स्वरितत्वा प्रति ज्ञानाद्यथा संख्याभाव बोधनपरमेवेदं भाष्यव्याख्यानम्। अत एव "ख्यात्यात्परस्ये" 6-1-112 त्यत्र न यथा संख्यम्। एवं च व्याख्यान वशादिति

मन्नस्य र्व्वान्नन्वा प्रति ज्ञान रूपाद् व्याख्यानवशादित्यर्थः। यथा संख्यम् = भविष्यत्यकस्य आधमर्ण्ये-नश्चोन यथा सख्यम्। नाप्युभयोरुभयत्रान्वय इत्याह – **अपित्विति तेनेति** यथा संख्यान्वयस्याकरणे-नन्वय **भविष्यतीनिरिति** यथा संख्यमन्वयेत्वस्यासंग्रहो दोष इति भावः। **आधमर्ण्येणिनिरिति।** तत्र च भविष्यदर्थका कप्रत्ययेन तदर्थकेनि प्रत्ययेन आधमर्ण्यार्थकेनि प्रत्ययेन च योगे षष्ठी निषेधः प्रवर्तत यथा सख्यमन्वये द्वाभ्यामेवयोगे निषेधः प्रवर्तेतेति भावः।

**एवं "कृत्यानां कर्तरि वा" 2-3-71 इतिसूत्रे भाष्यकारेण योगविभागकरणात् 'कृत्याना' मित्यस्य भिन्नसूत्रत्वप्रतीते स्तत्रच 'उभयप्राप्तौ' न इति पूर्वसूत्रस्थपदद्वयानुकर्षणाद् उभयोः = कर्तृकर्मणो रनभिधानप्रयुक्तषष्ठीप्रसक्तौ कृत्यानां योगे षष्ठी नेत्यर्थकात् 'नेतव्या व्रजं गावः कृष्णेने' त्यत्र न षष्ठी। अपितु द्वितीया, तृतीया च। अत्र हिनयते र्द्विकर्मकत्वान्मुख्यकर्मणः कृत्येनाभिधानाद् गोषु प्रथमा। अमुख्यकर्मणो व्रजस्य त्वनभिधाना त्तत्र द्वितीया।**

षष्ठी निषेधक सूत्रान्तरं व्याचष्टे – **एवं कृत्यानामिति** तव्यत् तव्य अनीयर् केलिमर् यत् ण्यत् कयप् एते सप्त कृत्यसंज्ञकाः कृत्प्रत्यय विशेषाः, एतेषां प्रयोगे कर्तरि वा षष्ठी नेति सूत्रार्थः स्यात्, निषेध विकल्पे विधिविकल्पस्य पर्यवसन्नत्वा त्तद्योगे षष्ठी विकल्पः सूत्रार्थः स्यात्। तथा सति कर्तव्य मिदं कृष्णस्य कृष्णेन वेत्यादेः सिद्धावपि नेतव्या व्रजं गावः कृष्णेनेत्यादि न सिध्यति व्रजादौ कर्मणि "कर्तृकर्मणोः कृती" त्यनेन षष्ठ्या दुर्वारत्वादि त्याशयेन भाष्यकृता सूत्रमिदं विभज्य व्याख्यातम्, तदेतन्मनसि निधायाह – **भाष्यकारेणेति** प्रकृत सूत्रे इत्यर्थः। **योग विभागेति** कृत्यानामित्येको योगः, कर्तरि वेति द्वितीयो योग इति भावः। तदाह – **कृत्यानामित्यस्य पृथक् सूत्रत्वप्रतीतेरिति** तत्र = विभक्ते कृत्यानामिति प्रथम सूत्रे **पूर्वसूत्रस्थेति** "उभयप्राप्तौ कर्मणि" "न लोकाव्ये" ति पूर्व सूत्र द्वये स्थितस्यद्वयस्यानुवृत्तेरित्यर्थः। उभयोरित्यस्य विवरणं-कर्तृ कर्मणोरिति। अत्राप्यनभिहिताधिकार सत्त्वादाह – **अनभिधानेति** उभयप्राप्तावित्यत्रत्य प्राप्ति शब्दार्थमाह – **षष्टी प्रसक्ताविति** इत्यर्थकात् = इत्यर्थकात् कृत्यानामिति प्रथम सूत्रात्। एवं चोभय प्राप्तौ कृत्यानां योगे कर्तृकर्मणोरुभयोरपि षष्टी नेति सूत्रार्थ इति भावः। **नेतव्या इति** णीञ् प्रापणे इति द्विकर्मकाद्धातोः "प्रधाने नीहृकृष्वहा" मिति अकथित सूत्रस्थ भाष्योक्त्या प्रधाने गोरूपे कर्मणि तव्यः कृत्यप्रत्ययः। तत्र व्रजे कर्मणि, कृष्णे कर्तरिचो भयत्रापि प्राप्ता षष्टी वार्यतेऽनेन। योगविभागाभावे, "उभयप्राप्तौ कर्मणी" ति नियमेन कर्तरि कृष्णे षष्टचा वारणेपि व्रजे कर्मणि सा दुर्वारेति भावः। न षष्ठी = उभयत्रापि न षष्टी। षष्टचा निषेधे किं स्यादत आह – **अपित्विति** द्वितीया = कर्मणि। तृतीया = कर्तरि। ननु गोव्रजयो रुभयोरपि कर्मणो र्द्वितीयायाः प्रवृत्तावस्य वाक्यस्यासंभव एवेत्यतो द्वितीयाविषये व्यवस्थां दर्शयति – **अत्र हीति** निरुक्त प्रयोग इत्यर्थः। **द्विकर्मकत्वाविति** "कर्तुरीप्सिततमं कर्म" 1-4-49 त्यनेन गोः कर्मत्वम्, तत्सम्बन्धिनो व्रजस्य "अकथितं चे" 1-4-51 नेन कर्मत्वम्। नयतेर्दुहादिषु पाठात्। अनयारीत्याऽस्य द्विकर्मकत्वं सिध्यति। **मुख्य कर्मण इति** "कर्तुरीप्सिततमं कर्म" 1-4-49 "तथायुक्तं चानीप्सित" मिति सूत्र द्वय विहितं कर्म मुख्य कर्मेत्युच्यते, तत्सूत्रद्वयस्य शास्त्रार्थ बोधकत्वात्। प्रकृते तादृशस्य कर्मणो गोः कृत्येनाभिधानमिति भावः। कृत्येन = कृत्यप्रत्ययेन तव्येन। **अभिधानादिति** "प्रधाने नीहृ कृष्वहाम्" ति भाष्योक्तेः प्रधाने कर्मणि कृत्यप्रत्ययस्य प्रवृत्त्या तेन कर्मणो भिधानमिति भावः। गोषु = तद्बोधक पदात्। **अमुख्य कर्मण इति** गौण कर्मण इत्यर्थः। "कर्तुरीप्सितं" तथायुक्त" मिति सूत्र द्वयातिरिक्त सूत्र विहितं कर्म अप्रधान कर्मेत्युच्यते, तदतिरिक्ताना "मकथितं चे" त्यादीनां लाक्षणिकानुशासनत्वात्। अनभिधानात् = कृत्य प्रत्ययेनानभिधानात्। द्वितीया = अनेन षष्ठ्या निषिद्धत्वाद् द्वितीया "कर्मणि द्वितीये" त्यनेन। एवं च प्रधान कर्मणोभिधाना त्तत्र प्रथमैव, अप्रधान कर्मणः कर्तुश्च कृत्प्रत्ययेनानभिधानादुभयत्रापि प्राप्ता षष्टी अनेन निषिद्धा, अतः कर्मणि द्वितीया, कर्तरि तृतीया च प्रवर्तते, एतत्सिध्यर्थ "कृत्याना" मिति पृथक्सूत्र मिति भावः।

**यत्रतु कर्तृकर्मणोर्मध्येन्यतरस्य कृत्येना भिधाना न्नो भयत्र प्राप्ति स्तादृशकृत्यस्य योगे कृद्योगनिमित्तकषष्ठ्या नियमेन प्रसक्तौ 'कृत्यानां कर्तरि वे' ति सूत्रेण कर्तृषष्ठ्या विकल्पविधानम्। कर्तव्यमिदं कृष्णेन, कृष्णस्य वा, न च भावकर्मणोरेव कृत्यविधाना त्तत्र च कर्मणः कृत्येना भिधानादेव परिशेषात्कर्तर्येव विकल्पविध्युपपत्तेः कर्तृग्रहणवैयर्थ्यम्। "भव्यगेये" 3-4-68 त्यादिसूत्रेण कर्तर्यपि यत्प्रत्ययाख्यकृत्यविधाना। तद्योगे कर्मण्यनभिहितत्वेन षष्ठीप्राप्ते स्तत्र विकल्पव्यावृत्त्यर्थं कर्तृग्रहणोपपत्तेः। यथा—गेयो माणवकः साम्नाम्। अत्र गेयेति कर्तरि कृत्यः। सामकर्मक गानकर्ता माणवक इति शाब्दबोधः।**

विभक्तं "कर्तरि वे" ति द्वितीयं सूत्रं त्वनुभयविषय मित्याशयेन व्याचष्टे **यत्रत्विति** यत्रतु = कृत्यप्रत्यये इत्यर्थः। उभयत्र = कर्तरि कर्मणि च। प्राप्तिः = षष्टयाः। तादृशकृत्यस्य = तादृशकृत्यप्रत्ययस्य। कृद्योगनिमित्तकषष्ठ्याः = "कर्तृकर्मणोः कृती" ति सूत्र विहितायाः षष्टयाः। नियमेन = नैयत्येन। **कर्तरि वेति सूत्रेणेति** "कर्तरिवे" ति विभक्तेन द्वितीय सूत्रेणेत्यर्थः। "कर्तरि वेति" ति द्वितीय सूत्रे षष्टीत्येवानुवर्तते, उभय प्राप्तावििति नेति च नानुवर्तते, कृत्यानामिति पूर्वसूत्रमनुवर्तते, कृत्यानां = कृत्यप्रत्ययानां योगे कर्तरि षष्टी वा स्यादिति सूत्रार्थः। कर्तृकर्मणो रिति नित्यं षष्टी प्राप्ता, साऽनेन विकल्प्यते। कृत्यानां कर्तरिवेति सूत्रेणेति पाठे तु द्वितीय सूत्रे ऽनुवृत्ति प्रदर्शन परं कृत्यानामिति पदम्। सूत्रं तु कर्तरि वेत्येवेति बोध्यम्। **कर्तव्यमिति** कृञ् धातोः सकर्मकतया ततः कर्मणितव्यप्रत्ययः, तेन कर्मणोऽभिधानात्तत्र न षष्टयाः प्राप्तिः, तेन कर्तुरनभिधानात्तत्र षष्टी प्राप्ता, एवं चात्रानुभय प्राप्ति रिति प्रकृतसूत्रं प्रवर्तते।

सूत्रस्थस्य कर्तरीत्यस्य वैयर्थ्या माशङ्कते — **नचेति भावकर्मणोरेवेति** "कर्तरिकृत्" 3-4-67 इत्यस्यापवादतया "तयोरेव कृत्यक्त खलर्थाः" 3-4-70 इति सूत्रेण भावकर्मणोरेव कृत्य प्रत्यया विधीयन्ते, तत्राकर्मकेभ्यो भावे, सकर्मकेभ्यः कर्मणि प्रवर्तन्ते, तत्र च = कृत्यप्रत्यये च। **अभिधानादेवेति** तत एव तत्रसा न प्रवर्तते। भावेत्वकर्मकादेव विधानेन कर्मणोऽभाव एव। अतः परिशेषात्कर्तर्येव विकल्पस्य प्रवृत्ति सिध्या सूत्रे कर्तृग्रहणं व्यर्थमिति भावः। समाधत्ते — **भव्यगेयेति**, "भाव्यगेय प्रवचनीयोपस्थानीय जन्या प्लाव्यापात्या वे"3-4-68 त्यनेन भव्यादयः सप्त कृत्य प्रत्ययान्ताः कर्तरि वा निपात्यन्ते, पक्षे "तयोरेवे" ति सूत्रेणा कर्मकाद्भावे सकर्मकात्कर्मणि ज्ञेयाः। भवतीति = भव्यः, गायतीति = गेयः, तदाह — **कर्तर्यपीति** अपिनाभावकर्मणोरपि। **विधानादिति** निपातनेन विधिलाभः, तद्योगे = कर्त्रर्थक यत्प्रत्यय रूप कृत्य प्रत्ययान्तेन योगे। अनभिहितत्वेन = कर्तरि प्रत्ययविधानेन कर्तुरेवाभि धानात्कर्मणो ऽनभिहितत्वेन षष्टी प्राप्ता, साचेष्टैव, परंतु तत्र = अनभिहिते कर्मणि। **विकल्पव्यावृत्यर्थमिति** सूत्रे कर्तृग्रहणाभावे तादृशे कर्मण्यपि विकल्पेन षष्टी प्रसज्यते, तद्व्यावृत्यर्थमित्यर्थः, **कर्तृग्रहणोपपत्तेरिति** — तद्ग्रहणस्य चारितार्थ्योपपत्तेरित्यर्थः। तादृशं कृत्य प्रत्ययान्त मुदाहरति **यथेति** अत्र = उदाहरणे। **कर्तरीति** गायतीति गेय इति तदर्थः। कृत्यः= यत्प्रत्ययः। तत्र बोधमाह — **सामकर्मकेति** एवं चात्रकर्तरि यत्प्रत्यये तेन कर्मणो नभिधानात्तत्र "कर्तृकर्मणो" रिति नित्यमेव षष्टी प्रवर्तते, कर्तुरभिधानात्प्रथमैव। सूत्रे कर्तरीत्यस्या भावे कर्मण्यपि विकल्पेन षष्टी प्रवर्तेत सा मा भूदिति कर्तृ ग्रहणमिति भावः। गाधातोः कर्मणि यत्प्रत्यये तु गेयं सामा नेनेति प्रयोगः, कर्मणो भिधानात्प्रथमा। अत्रान्यतरस्याभिधानात् "कर्तरि वे" ति द्वितीय सूत्रेण वा षष्टी अस्येति।

**एवं "तुल्यार्थै रतुलोपमाभ्यां तृतीयान्यतरस्याम्" 2-3-72 इतिसूत्रात् तुल्यार्थकै स्तुलोपमाशब्दभिन्ने शशब्दैर्योगे तृतीया स्यात् पक्षे षष्ठीत्यर्थकात् तुल्यः सदृशः समोवा कृष्णेन**

**कृष्णस्यवेत्यत्र पक्षे षष्ठी। अत्रा तुलो पमाभ्यामिति द्विवचनं छान्दसम्। अन्यथा विशेषणविभक्तित्वेन बहुवचनापत्तेः।**

**अयं च मण्डूकप्लुत्त्या शेषषष्ठ्या एव पाक्षिकत्व कल्पको विधिः। न तु कारकषष्ठ्याः। तुल्यशब्दस्य तद्धितान्तत्वेन कारकषष्ठ्या अप्राप्तेः। तुलोपमाशब्दयोगेतु शेषषष्ठ्येव। अत एव तुला उपमा वा कृष्णस्य नास्तीत्यत्र शेषे तृतीयाया अविधाना न्न तृतीया। कथं तर्हि—**

**"तुलां यदारोहतिदन्तवाससा" कुमार 5-35**
**"स्फुटोपमं भूतिसितेन शम्भुना" शिशु-1-4**

**इत्यादिकाव्ये तुलादिशब्दयोगे तृतीयेति चेत्। तस्या स्तोलनो पमानादिरूप धात्वर्थं प्रति करणत्वेनोपपत्तेः। सहयोग निमित्तिका। वा इयं तृतीया। साहित्यं च निरूपकत्वम्। तस्य च तत्त्वेन तृतीयातोबोधः। प्रकृतेतु शेषत्वार्थकतृतीयायाः पर्युदास इति न कश्चिद्विरोधः।**

शेष षष्ठ्या सह विकल्पेन तृतीया विधायकं सूत्रं व्याचष्टे — **एवं तुल्यार्थैरिति** शेष षष्ट्यां प्राप्तायां विकल्पेनानेन तृतीया विधीयते, तया मुक्ते शेष षष्ट्येव भवतीत्याह — **पक्षे षष्टीति** ननु तुल्यार्थै रिति विशेष्यानुरोधेन विशेषणे "अतुलोपमाभ्या" मित्यत्रापि बहुवचनेन भाव्य, मित्याशङ्क्याह — **अत्रेति** सूत्रे इत्यर्थः। इति = इत्यत्र। **छान्दसमिति** "छन्दोवत्सूत्राणि भवन्ती" ति वृद्धि सूत्रस्थ भाष्येण सूत्राणां वेदाङ्गत्वेनच्छन्दस्त्वमति दिश्यते। तेन व्यत्ययेन द्विवचनमिति भावः। अन्यथा = छान्दसत्वानाश्रयणे। विशेषण विभक्तित्वेन = अतुलोपमाभ्यामित्यस्य विशेषण विभक्त्यत्वेन, बहुवचनापत्तेः = विशेष्यानुरोधेन तत्वापत्तेः। अनेन शेष षष्ट्या एव विकल्प इत्याह — **अयं चेति** अयं विधिरित्यर्थ **तद्धितान्तत्वेनेति** नौवयोधर्म विषमल मूल सीतातुलाभ्य स्तार्य तुल्य प्राप्य बध्यानाम्य सममसमित संमितेषु" 4-4-91 इति सूत्रेण तुला शब्दात्संमित मित्यर्थे यत् तद्धितप्रत्ययः, तुलया संमितं = तुल्यम्। **अप्राप्तेरिति** कृद्योग एव तद्विधानात्तद्धितयोगेऽप्राप्तिरिति भावः। अतुलोपमाभ्यामिति पर्युदास फलमाह — **तुलोपमेति** अत एव = पर्युदासादेव। **अविधानादिति** प्रकृत पर्युदासेन तृतीयायाः सूत्रेण विधानाभावादित्यर्थः। प्रयोगासिद्धिमाशङ्कते **कथमिति** अतुलोपमाभ्यामिति निषेधा त्तृतीया न सिध्येदित्याशयः। तुलादिशाब्दयोग इत्यादि पदेनोपमा पदस्य ग्रहणम्। प्रथमः प्रयोगः कुमारसंभवे काळिदासस्य। द्वितीयः शिशुपालवधे माघस्य। आभ्यां योगे शेषे षष्टी भवत्येव, पर्युदासा त्तृतीया विषये आक्षेपः। समाधत्ते — **तस्या इति** तृतीयाया इत्यर्थः। अस्य 'उपपत्ते' रित्यत्रान्वयः। **तोलनेति** तुल उन्माने इति चौरादि काद्धातो र्णिचि अस्मिन्नेव सूत्रे णेर्लुक् भावे अङ्प्रत्ययश्च निपात्येते। तोलनं-तुला। स्पष्टं चेदं माधवग्रन्थे। तथा उपपूर्वकात् माङ्माने इति धातोः "आतश्चोपसर्गे" 3-3-106 इत्यनेन भावे अङ् उपमितिः = उपमा तादृश तोलनोपमिति रूप धात्वर्थं प्रतीत्यर्थः। करणत्वेन = दन्तवाससः शम्भोश्च। यथा-उपमीयतेऽनेनेत्यादौ। ननु न तत्र धात्वर्थानुगमः किंतु सादृश्य मात्र मेवावगम्यते, तत्कथं तृतीयेत्यतः प्रकारान्तरमाह — **सह योगेति** "सहयुक्तेऽप्रधाने" 2-3-19 इत्यनेन सहशब्द योगा तृतीया। विनापि तद्योगं तृतीया वृद्धो यूनेति निर्देशादिति "सहयुक्ते इति सूत्रे मूल एवोक्तम्। तृतीया = "स्व वालभारस्य तदुत्तमाङ्गजैः समं चमर्येव तुलाभिलाषिणः" इति श्रीहर्ष पद्य इवेति भावः। योग्यतानुसारेणाह — **साहित्यं चेति** निरूपकत्वं = स्व निष्टनिरूपकता निरूपितनिरूपितत्वम्। ननूक्तरीत्या तुलोपमाशब्दयोगेपि तृतीयाया उपपादने, अतुलोपमाभ्या मिति पर्युदासस्य वैयर्थ्यमेवेत्यत आह — **प्रकृतेत्विति** पर्युदासः = अतुलोपमाभ्यामिति पर्युदासः। शेषत्वे प्राप्त तृतीयावारणं पर्युदासस्य प्रयोजनमिति भावः। **न कश्चिदिति** न प्रयोग विरोधो, नापि सूत्र विरोध इत्यर्थः।

**अत्र तुल्यार्थैरिति बहुवचननिर्देशेनैव तुल्यपर्यायाणां ग्रहणोपपत्त्या वर्थग्रहणं पदान्तरनैर-पेक्ष्येण बोधकपरम्। तेन गौ रिव गवयः, यथा गौ, स्तथागवय इत्यादौ न षष्ठ्यादिः। प्रथमोत्पत्तिप्रयोजकं तु पूर्वमेवोक्तम्।**

ननु अतुलोपमाभ्या मिति पर्युदासानुरोधेन सूत्रे तुल्यार्थै रित्यस्य तुल्यत्वार्थैरित्यर्थकतया तदर्थके वादि शब्द योगेपि तृतीया षष्ठी च स्याताम्। अन्यथा तुलोपमा शब्दयोः सादृश्यार्थकत्वेन प्रकृत सूत्रा विषयतया पर्युदासो विफल एव स्यादत आह — **अत्रेति** सूत्रे इत्यर्थः **बहुवचन निर्देशेनैवेति** अर्थग्रहणं बिना तुल्यैरिति बहुवचन निर्देशेनैवेत्यर्थः अयमर्थः = तुल्यैरिति बहुवचन निर्देशेन तत्पर्यायाणामपि ग्रहणं सिध्यति। अन्यथा तुल्य शब्दस्य एकत्वादेकवचने कर्तव्ये तन्निर्देशासिद्धिः, अतः तत्पर्यायाणामपि ग्रहणं कार्यम्। तथा सति तद्गत बहुत्वापेक्षो बहुवचन निर्देशः छत्रिणो यान्तीत्यादाविवोपपद्यते-इति। तुल्य पर्यायाणां = तच्छब्दपर्यायाणां सम सदृश सदृक्ष इत्यादीनामपि। ग्रहणोपपत्तौ = ग्रहणसिद्धौ। अर्थ ग्रहणम् = निरुक्तरीत्या तुल्यैरित्येव सिद्धे अतिरिच्यमानमर्थपदग्रहणम्। पदान्तरनैपेक्ष्येण = इतरपदसमभि-व्याहारानपेक्षया। **बोधक परमिति** सादृश्य बोधक शब्दपरमित्यर्थः। तथाच पदान्तरसमभिव्याहारान-पेक्षया सादृश्य बोधक पदैर्योगे तृतीयेति सूत्रार्थः सिध्यति, तादृशाश्च शब्दा स्तुल्य-सम-सदृश इत्यादय एव, तेषां तादृशत्वात्। एवं च सादृश्य वाचक शब्द योगे तृतीयेत्यर्थस्य पर्यवसन्नतया न द्योतकेवादि शब्दयोगे तृतीयादिः, तेषां तात्पर्यग्राहकत्वरूप द्योतकत्वेन पदान्तरसभिव्याहान पेक्षया सादृश्य बोधकत्वाभावात्। अतो नोक्त दोष इति भावः। तदाह — **तेनेति** निरुक्तार्थ स्वीकारेणेत्यर्थः। **गौरिवेति** गोशब्द एव गो सादृश्य वाचकः तस्य तदर्थ कत्वमिवशब्दो द्योतयति। तथाच निपातानां द्योतक तानये तेषां निरुक्त सादृश्य बोधकत्वाभावान्नतद्योगे तृतीयादिरिति भावः। समभिव्याहृत पदनिष्टशक्त्युद्बोधकत्वं च द्योतकत्वम्। षष्टयादिरित्यादिपदेन तृतीयायाग्रहणम्। ननु तृतीयादीनामप्य प्रवृत्तावपि कथं प्रथमायाः प्रवृत्तिः, आख्यातेन तत्कर्तृत्वस्यानभिधाना दत आह — **प्रथमेति पूर्वमेवोक्तमिति** "यद्वृत्तिकारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते, तत्वं प्रथमा प्रयोजकी भूताभिहितत्वम् "चैत्र इवेत्यादावपि इव शब्देन गमन कर्तृत्वरूपं सादृश्याभिधानात्कर्तृत्वाभिधान" मिति प्रथमान्तार्थ मुख्य विशेष्यक शाब्दबोध निराकरणावसरे उक्तम्, प्रकृतेपि गमन धावनास्त्यादि कर्तृत्व रूप सादृश्यस्ये व शब्देनाभिधानाद् गवादेरभिधानात्प्रथमेति भावः।

न्पिातानां वाचकतानये त्विवादियोगे तृतीयादिरेवं वारणीया - "नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थावगति" रिति परिभाषया अब्राह्मणमानयेत्यादौ पर्युदासे ब्राह्मण भिन्नस्य तत्सदृशस्य क्षत्रियादे रानयन कर्मत्वमवभासते, न लोष्टादेः। तथा प्रकृतेपि "अतुलोपमाभ्या" मिति पर्युदासेन तुलोपमा भिन्ना स्तत्सदृशाश्च शब्दा गृह्यन्ते, सादृश्यं चानव्ययत्वेन, तथा च तुल्यत्वार्थकै स्तुलोपमा भिन्नैरनव्ययैः शब्दैर्योगे तृतीया स्यादिति सूत्रार्थस्य लाभेन यथे वादियोगे नैतत्प्रवृत्तिः। सूचितश्चायमर्थः "तुलोपमाशब्द भिन्नै" रिति पर्युदास परतया व्यचक्षाणेन ग्रन्थकृते-ति,

**एवं "चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः" 2-3-73 इतिसूत्रा दायुष्याद्यर्थक-शब्दयोगे आशिषिशेषे चतुर्थी, पक्षे षष्ठीत्यर्थकाद् 'आयुष्यादि अस्मै अस्य वाभूयादिति चतुर्थी' पक्षे षष्ठी। आयुष्यं = चिरंजीवितम्। मद्रं = भद्रमेव। उभयोः पर्यायत्वेपि आयुष्यादिपदाना मर्थपरत्वख्यापनायो भयोपादानम्।**

शेष षष्ठ्या सह चतुर्थी विधायकं सूत्रं व्याचष्टे — **एवं चतुर्थीति — आयुष्याद्यर्थकेति** अत्रायुष्यादि शब्दा न स्वरूप पराः, किंत्वर्थपरा इति भावः, अत्र च मानमनुपदमेव मूले प्रदर्श्यते। **पक्षे षष्ठीति** अयमर्थः

— कृत्यानां कर्तरिवा'' 2-3-71 इति सूत्राद् ''वा'' इत्यनुवर्तमाने पुनः ''तुल्यार्थैरतुलोपमाभ्या मन्यंरतरस्याम्'' 2-3-72 इति सूत्रेऽन्यतरस्यां ग्रहणं कृतम्, तस्य च प्रयोजनं ''चतुर्थी चाशिष्यायुष्यमद्रे'' 2-3-73 त्यादि सूत्रे च शब्देन, अन्यतरस्या'' मित्यस्यानुकर्षणम्, तेन आयुष्यादि योगे च अन्यतरस्यां चतुर्थीस्यादिति सूत्रार्थात् चतुर्थ्यामुक्ते शेषे षष्टी प्रवर्तते, तुल्यार्थै रित्यत्रान्यतरस्यां ग्रहणाभावे तु अत्र च शब्देन पूर्वसूत्रे श्रुतत्वा तृतीया नुकृष्येत, तथा सति चतुर्थी स्यात् चात् तृतीयेति सूत्रार्थः सपद्येत, तुल्यार्थै रित्यत्रान्यतरस्यांग्रहणे - सति तु तस्य प्रयोजनान्तरा भावात्तदेवात्र सूत्रे चकारेणा नुकृष्यते, तदेतत्सर्वमभिप्रेत्य ''पक्षे षष्टी'' ति मूले (च) शब्दार्थो दर्शित-इति। आयुष्याद्यर्थकान् दर्शयति — **आयुष्यं चिरंजीवितमित्यादिना** ननु आयुष्यादीना मर्थपरत्वे मद्रभद्रयो रन्यतस्य वैयर्थ्य मुभयोरपि मङ्गलार्थकत्वा दत आह — **उभयोः पर्यायत्वेपीति** उभयोरपि मङ्गलार्थकत्वात्पर्यायत्वम्, ''मद्रात्परिवापणे'' 5-4-67 इत्यत्र मद्रशब्दस्य तदर्थकत्वं बोध्यम्। **उभयोपादानमिति** अन्यतरेण सिद्धे उभयोपादानेन लिङ्गेन तद्ग्रहणस्योपलक्षणार्थत्वात् प्रकृतार्थ सिद्धिः। निरूपितं चैतद् ''अन्यारादितरर्ते इत्यादि सूत्र व्याख्यावसरे पञ्चमी प्रकरणे,

**यत्तु — व्याख्यानात्सर्वत्रार्थग्रहणोपपत्ते र्मद्रभद्रयोरन्यतरद् न पठनीयमितिकैश्चि दुक्तम्, तद् भाष्यकारेण एतत्सूत्रस्या व्याख्याना दुपेक्षितम्।**

**कुशलम् = निरामयम्, सुखम् = शम्। अर्थः = प्रयोजनम्। हितम्=पथ्यम्। नच ''हितयोगेचतुर्थीवक्तव्ये'' ति वार्तिकादेव तत्सिद्धे र्हितग्रहणवैयर्थ्यम्, अनाशिषि तेन तन्नियमेपि एतस्या शिषि विकल्पविधायकत्वोपपत्तेः। अत एवा युष्यादा वनाशिषि षष्ठ्येव, चैत्रस्यायुष्यमस्तीति, सर्वथा षष्ठ्यर्थः सर्वोप्या ख्यातार्थे न्वेतीति सिद्धम्।**

## इति षष्ठ्यर्थनिरूपणम्।

सर्वत्रार्थग्रहणे हरदत्त दीक्षितादि शाब्दिकोक्तां युक्तिं निराकर्तुमनुवदति — **यत्विति व्याख्यानादिति** आयुष्यादिभिरिव तत्पर्याय शब्दैरपि योगे चतुर्थी षष्टी दर्शनरूपाद् व्याख्यानादित्यर्थः। मद्र भद्रयोः = अनयोर्मध्ये। अन्यतरत् = मद्र इति भद्र इति वा शब्दस्वरूपम्। कैश्चित् = हरदत्त दीक्षितादिभि, शाब्दिकैः। उक्तम् = पदमञ्जरी शब्दकौस्तुभा दावुक्तम्। **तदिति** अस्य ''उपेक्षित मित्यत्रान्वयः उपेक्षायां बीज माह — **भाष्यकारेण एतत्सूत्रस्या व्याख्यानादिति** भाष्यकृता सूत्रमेव न व्याख्यातम्, का गति र्मद्रभद्रयोरन्यतरानुपादान विषये भाष्यानुग्रहे, अतो निष्प्रमाणेयं शाब्दिक कल्पनेति भावः। ननु भाष्य कृता सूत्रस्या व्याव्यानं प्रकृत ग्रन्थकृतोपि मते समानमेवेति कथं तस्य ग्राह्यत्वमिति चेत्, न, मद्रभद्रो भयोपदानेन लिङ्गेन ग्रन्थकृता प्रकृतार्थानुमानात्, एवं च प्रकृतार्थः सूत्रकार संमत इत्यदोषः। शाब्दिकोक्तस्तु नैतादृश इति वैषम्यमिति बोध्यम्।

क्रम प्राप्तं कुशलशब्दमधिकृत्याह — **कुशलं निरामयमिति** हितग्रहणस्य वैयर्थ्य माशङ्कते **नचेति** तत्सिद्धेः = चतुर्थी सिद्धेः। समाधत्ते — **अनाशिषीति** तेन = वार्तिकेन। एतस्य = सूत्रे हितशब्दस्य। अनेन प्रसङ्गेन सूत्रे ''अनाशिषी'' ति निषेधस्य फलमपि बोधयति **अत एवेति**, प्रकरणार्थ मुपसंहरति — **सर्वथेति**

इति षष्ठ्यर्थनिरूपणं समाप्तम्।

# अथ सप्तम्यर्थनिरूपणम्।

**एवं सप्तम्यर्थोपि तत्रैवान्वेति। सच "सप्तम्यधिकरणे चे" 2-3-36 तिसूत्रानुशिष्ट मधिकरणत्वम्। तच्च "आधारोधिकरण" 1-4-45 मितिसूत्रनिरुक्तम्।**

अथ सप्तम्यर्थनिरूपणम्

सप्तम्यर्थस्यापि भावनायामेवान्वय इत्याह – **एवमिति** विभक्त्यन्तरार्थवदित्यर्थः। तत्रैव – भावनायामेव। स च = सप्तम्यर्थश्च। **सप्तम्यधिकरणे चेति** चशब्दस्य प्रयोजन मधिकरणत्व त्रैविध्य प्रदर्शनावसरे वक्ष्यति। सूत्रेऽधिकरण शब्दो न धर्मिपरः किंतु धर्मपर इत्याह – **अधिकरणत्वमिति** तच्च = अधिकरणत्वं च।

## (अधिकरणत्वनिर्वचनाय पूर्वपक्षः।)

**ननु अधिकरणत्वं नाम न येनकेनचित्संबन्धेन संबन्धित्वम्। रूपरसादीनामपि परस्पराश्रयत्वापत्तेः। नापि स्वाधेयसंबन्धित्वम्। आधेयत्वस्यैव निर्वक्तुमशक्तेः, तस्य स्वाश्रयसंबन्धित्वरूपत्वे न्योन्याश्रयप्रसङ्गा च्च। नापि कारणत्वम्, निमित्तकारणादा वतिव्याप्तेः, नापि समवायिकारणत्वम्, संयोगेन घटाद्याश्रये जात्याश्रये समवायाश्रये च भूतलादा वव्याप्तेः।**

अधिकरणत्वं न सखण्डं, निर्वक्तुमशक्तेः, किं त्वखण्डोपाधि रूप मिति वक्तुमुपक्रमते –**नन्विति** अस्य इति चे न्नेत्यत्रान्वयः। अधिकरण माधेयेन संबध्नाति, न ह्यसंबद्धयो राधाराधेयभावो युज्यत इत्यविवादम्, परं तु स संबन्धः क इति विचारयति – **अधिकरणत्वं नामेति येन केनचित्संबन्धेन न संबन्धित्वमिति** संबन्धित्वं नाम संबन्धानुयोगित्वम्, तदेकदेशे संबन्धे तृतीयान्तार्थस्य यत्किञ्चित्संबन्धाभेदस्यान्वये यत्किञ्चित्संबन्धानुयोगित्वमित्यर्थः पर्यवस्यति अभेद स्तृतीयार्थः। **रूपरसादीनामपीति** आदिना गन्धादि परिग्रहः, अपिना तदभावः प्रसिद्ध इति व्यञ्जयति। **परस्पराश्रयत्वापत्तेरिति** भूतलस्य घटादिना संयोगेन संबन्धित्ववद् रूपस्य रसेन रसस्य रूपेण च कालिकादि संबन्धेन संबन्धित्वात्परस्परमधिकरणत्वापत्तिः। तथाच भूतले घट इतिवद् रूपे रसः, रसे रूप मित्यापद्येतेति भावः। प्रकारान्तरं दूषयति – **नापीति स्वाधेयेति** रसादीनां रूपाद्याधेयत्वा संभवान्न दोष इत्याशयः, तस्य = आधेयत्वस्य। **अन्योन्याश्रयेति** आश्रयत्वे ज्ञाते तत्संबन्धित्वरूपाधेयत्व ज्ञानम्, ज्ञाते आधेयत्वे तत्संबन्धित्वरूपाश्रयत्व ज्ञान मित्योन्याश्रयः स्पष्ट इति भावः। प्रकारान्तरं निराचष्टे **नापीति कारणत्व मिति** मृदि घटः घटे रूपमित्यादौ मृद्घटादीनां घट-रूपादिकारणत्वं प्रसिद्धम्। रूपरसादीनां परस्परं कार्यकारण भावाभावा न्न दोष इति भावः, **निमित्तकारणादाविति** आदिनाऽसमवायिकारणस्य परिग्रहः, तथाच मृदि घट इति वत् कुलाले घटः, कपाल द्वयसंयोगे घट इत्यापद्येत, कुलाल संयोगादेरपि घट कारणत्वादिति भावः। भूतले द्रव्यत्वम्, भूतले रूप समवाय इत्यादावस्य लक्षणस्याव्याप्ति, रपि, जाति समवाययोर्नित्यत्वेनाकारणकत्वात्। प्रकारान्तरं निराकरोति **नापीति समवायि कारणत्वमिति रूपरसादीनां** परस्परं कारणत्वाभावा न्न दोषः, कुलालादीनां समवायिकारणत्वा भावा न्न दोषः, मृदि घटः कपाले घटः घटे रूप मित्यादौ मृदादीनां घटादिकं प्रति समवायिकारणत्वा ल्लक्षण संगति रिति भावः, **घटाद्याश्रये** = भूतले घट इत्यादौ। जात्याश्रये = भूतले द्रव्यत्व मित्यादौ। समवायाश्रये = भूतले **रूपसमवाय** इत्यादौ। सप्तम्यन्त त्रयस्य प्रत्येकं भूतलादावित्यत्रान्वयः। **अव्याप्तेरिति** आद्ये भूतलस्य घटं **प्रति न** समवायिकारणत्वम्, तयोर्हि संयोगः संबन्धः, जातिसमवाययोर्नित्य पदार्थत्वेन न तत्र भूतलस्य **समवायिकारणत्वम्**। अतस्तत्राव्याप्ति र्लक्षणस्येति भावः। एवं चाधिकरणत्वं दुर्वच मेवेति तात्पर्यम्।

## (केषां चिन्मतेना धिकरणत्वनिरुक्तिः।)

**यत्तु — तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवन्मूर्तत्वं पतनवन्निरूपिताधिकरणत्वम्। पतमानपर्णादा वाश्रयत्ववारणाय सत्यन्तम्। ब्रह्माण्डादिधारकसंयोगाश्रयेश्वर वारणाय मूर्तपदोपादानम्। वस्तुतस्तु "यस्मिन् सर्व प्रतिष्ठितम्" "येनेदं धार्यते जग" दित्यादिवचनादीश्वरे प्यस्त्येवाधिकरणत्वम्। इतरथा ब्रह्माण्डादिधारकत्व स्यैवा नुपपत्तेः। अतो मूर्तपदं नैव देयम्। लक्ष्यं द्रव्यनिरूपिताधिकरणत्वम्। आकाशादीनां तु प्रमाणा भावादेव न द्रव्याधारत्व, माधेयत्ववत्। ईश्वरेतु उक्तवचना दाधारत्वव दाधेयत्वेपि "यः पृथिव्यां तिष्ठन् प्रथिवीमन्तरो यमयति" (बृ उप अन्तर्यामिब्रा) "ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति" (गीता 18-61)इत्यादिश्रुति स्मृतिवशा न्न क्षतिः। गुणादिनिरूपिता धिकरणत्वं समवायित्वम्, समवायादिनिरूपितं च तत्तत्स्वरूपसंबन्धित्वमिति मतम्।**

अधिकरणत्वं प्रकारान्तरेण सुवचमेवेति केषाञ्चिद्वादिनां मत मुपक्षिपति **यत्त्विति तद्भिन्नत्वेतीति** तत्पदग्राह्यमाधेयं पर्ण घटादि। **पतन प्रतिबन्धकेति** पतन प्रतिबन्धको यः संयोगो घट भूतलादि संयोग, स्तद्वन्मूर्तत्व मित्यर्थः। "परिच्छिन्न परिमाणवत्त्वं क्रियावत्त्वं वा मूर्तत्वम्। **पतनवदिति** भूतले पर्णं पतति, भूतले घट इत्यादौ पतनवत् — पर्णघटादिकं, तन्निरूपिताधिकत्वं भूतलादाविति भावः। **पतमानेति** पतनधर्मकमित्यर्थः, "ताच्छील्यवयोवचन शक्तिषु चानश्" 3-2-131 इत्यनेन पत धातोः चानश् प्रत्ययः, मूर्तपदस्य प्रयोजनमाह **ब्रह्माण्डादीति** तद्धारको यः संयोग स्तदाश्रये ईश्वरे अधिकरणत्व वारणायेत्यर्थः। ईश्वरस्य विभुत्वेनाऽमूर्तत्वान्नातिव्याप्तिरिति भावः, ईश्वरेऽधिकरणत्वस्य श्रुतिसिद्धत्वेने ष्टत्वान्मूर्त-पदमनावश्यक मेवेत्याह **वस्तुतस्त्विति** इतरथा = तत्राधिकरण त्वाभावे, **धारकत्व स्यैवेति**, "यस्मिन्सर्वं प्रतिष्ठितम्" "यस्मिन् द्यौः पृथिवीयान्तरिक्षम्" सूर्याचन्द्रमसौ वि धृतौ तिष्टतः, इत्यादि श्रुतिसिद्धस्येत्यर्थः कुण्डे बदरमित्यादौ बदरादौ कुण्डादि निरूपिताधिकरणत्व वारणाय पतन प्रतिबन्धके-ति संयोगविशेषणम्। कुण्डादि पतनप्रतिबन्धक संयोगवत्त्वस्य बदरादाव भाव न्न दोषः। तत्संयोग सत्त्वेपि कुण्डादेः पतनात्। संयोग घटित लक्षणस्वीकारेण द्रव्यनिरूपिताधिकरणत्वमेवास्य लक्ष्यं, न गुणादि निरूपित मित्याह **लक्ष्यमिति** अस्य, एवं चेत्यादिः। नन्वाकाश संयोगस्य घटादिपतन प्रतिबन्धकत्वा भावात्तस्या धारत्वानापत्तिरित्याशङ्कायां तस्याऽलक्ष्यत्वादिष्टापत्ति रेवेत्याह — **आकाशादीनामिति प्रमाणभावा-दिति** ईश्वरे तादृश संयोग सत्त्वे श्रुतयः प्रमाणम्। आकाशे तत्सत्त्वे न मानमतस्तस्या लक्ष्यत्वा न्नाति व्याप्ति शङ्का। एतेन मूर्तत्व विशेषणाभावे आकाशेऽव्याप्ति शङ्कापि परास्ता। **आधेयत्ववदिति** आकाशस्या वृत्ति पदार्थत्वात्तत्राधेयत्वं नास्ति, तद्वदाधारत्व मपि नास्ति, सर्व वादि संमतत्वा दस्य दृष्टान्तत्वेनो पन्यासः। आकाशापेक्षया ईश्वरे विशेषो स्तीत्याह — **ईश्वरे त्विति उक्तेति** "यस्मिन् सर्वं प्रतिष्ठित" मित्याद्युक्तवचनादित्यर्थः। **आधेयत्वेपीति** अस्य "न क्षति" रित्यत्रान्वयः। एवं चेश्वरे आधारत्वम्, आधेयत्वं च प्रमाणवत्, न त्वाकाशे तत्वमिति भावः। अनेन लक्षणेन घटे रूपमित्यादीना मसंग्रहाल्लक्षणान्तरमाह — **गुणा दीति समवायित्वमिति** समवाय संबन्धानु योगित्व मधिकरणत्वमिति भावः। घटे रूपसमवायः, घटे पटाभाव इत्यादिसंग्रहाय लक्षणान्तर माह **समवायादीति** आदिनाऽभावस्य परिग्रहः, **तत्तस्वरूपेति** समवायादीनां घटादौ स्वरूपसंबन्धेन सत्त्वा त्तदनुयोगित्व मधिकरणत्वमित्यर्थः एवं च त्रेधाऽधिकरणत्वं निर्वाच्य मित्याशयः।

## (तन्मतनिराकरणम्।)

**तदपि न, अननुगमात्, सप्तम्या नानार्थकत्वापत्तेश्च, इति चेत्,**

तदपि न युज्यत इत्याह – **तदपिनेति अननुगमादिति** भूतले घटः, घटे रूपम् घटे रूप समवाय इत्यादि सकल साधारणाधिकरणत्वस्यैकस्याऽकथनेनानुगमानापत्तिरिति भावः। ननु लक्ष्यभेदेन लक्षणाननुगमो न दोषाय,अत आह **सप्तम्या इति** अधिकरणत्वार्थक सप्तम्या इत्यर्थः। **नानार्थकत्वेति** हर्यादि पदवदिति भावः, सा चानुभवविरुद्धेत्याशयः, पतन प्रतिबन्धक संयोगवत्व मिति लक्षणं "यस्य पतन मप्रसिद्धम्, तदाधारासंग्रहा" दित्यादिना व्युत्पत्ति वादे भट्टाचार्यैरपि निराकृतम्,

## (अधिकरणत्व मखण्डोपाधिरूपमितिसिद्धान्त निरूपणम्।)

**न, अनुगताकारप्रतीत्या प्रतियोगित्वादिव दधिकरणत्वा धेयत्वयो रधिकरणत्वत्वा धेयत्वत्वयोश्चा खण्डोपाधित्वस्यैव स्वीकारात्। शक्यतावच्छेदकैक्यानुरोधेनापि करणत्वादिव त्पदार्थान्तरकल्पने बाधकाभावाच्च। यत्र हि सखण्डपदार्थस्यैव शक्यतावच्छेदकविधया प्रतीतिरानुभविकी, न तत्र कल्पनम्। यथा-विश्वादिपदेषु। यत्र तु तद्घटकपदार्थाप्रतीतावपि तत्प्रतीति स्तत्र शाब्दव्यवहारानुरोधादपि तत्कल्पनमसकृदावेदितम्।**

एव मधिकरणत्वं सखण्डं निरूपयितु मशक्य मित्याक्षेप मुखेन प्रदर्श्य, तस्या खण्डोपाधिरूपत्व मेव स्वीकार्यमित्याह **अनुगतेति** इदमधिकरणमिदमधिकरण मित्यनुगत प्रतीत्या तत्सिद्धिरिति भावः। प्राचीनैक देशिभि रङ्गीकृतत्वाद् दृष्टान्ततया ऽह – **प्रतियोगित्वादिवदिति** आदिना विषयत्वादे ग्रहणम्, किं च प्रतियोगित्वमतिरिक्तः पदार्थः, सखण्डस्य निर्वक्तुमशक्तेः तथाहि – प्रतियोगित्वं प्रतियोगिस्वरूप? मुता भावरूपम्, आद्ये घटत्व द्रव्यत्वादिरूप धर्मभेदेपि घटादिनिष्ठ प्रतियोगिताना मेकरूपतया वैलक्षण्यानापत्त्याऽभाववैलक्षण्यानापत्तिः, तथाच घटत्वावच्छिन्न प्रतियोगिताया द्रव्यत्वावच्छिन्न प्रतियोगिताया श्चैकरूपत्वेन पटवति भूतले घटो नास्तीतिवत् द्रव्यं नास्तीति प्रतीत्त्यापत्तिः, तथा घटादि निष्ठायाः संयोग संबन्धावच्छिन्न प्रतियोगितायाः समवायसंबन्धावच्छिन्न प्रतियोगिताया श्चैकरूपतया-ऽभाव वैलक्षण्यं नोपपद्येत, तथाच संयोगेन कपाले घटो नस्तीतिवत् समवायेन कपाले घटो नास्तीति प्रतीत्यापत्तिः। द्वितीये घटाभावीय घटत्वावच्छिन्न प्रतियोगितायाः पूर्वक्षण वृत्तित्व विशिष्ठघटाभावा-भावत्वावच्छिन्न प्रतियोगितायाश्च घटाभावरूपत्वेन तयोरवैलक्षण्यापत्तिः, पूर्वक्षणवृत्तित्व विशिष्ट-घटाभावाभावत्वावच्छिन्न प्रतियोगितया अपि घटाभाव रूपत्वात्, तृतीया भावस्य प्रथमा भाव रूपत्वात्, विशिष्टस्य शुद्धानतिरेकात्, किंच घटत्वस्य प्रतियोगितावच्छेदकत्वानापत्तिः, घटत्वस्य घटमात्र वृत्तित्वेन न्यूनवृत्तित्वात्, प्रतियोगितया घटे किञ्चिद्विशिष्ट घटाभावाभावेपि सत्वेनाधिकदेश वृत्तित्वात्। अन्यूनातिरिक्त वृत्ति धर्मस्यैवा वच्छेदकत्व नियमात्, किञ्च घटाभावस्य पटादावपि सत्वेन घटाभाव प्रतियोगित्वं पटस्याप्यापद्येत, अतः प्रतियोगित्व मखण्डोपाधिरूप मित्येव न्याय्य-मिति बोध्यम्।

**अधिकरणत्वेति** इदमधिकरणमिदमधिकरणमित्यनुगताकारप्रतीत्याऽधिकरणत्वमतिरिक्तः पदार्थः, किञ्च किमधिकरणत्व मधिकरणस्वरूप? मुत संसर्गरूपम्, नाद्यः, भूतले घटसंयुक्ततादशायामिव परस्परा-संयुक्त घट भूतल सत्तादशायामपि इदानीं भूतलं घटवदिति प्रतीतिप्रसङ्गः, नान्त्यः आधेयत्वस्यापियुक्तिसाम्या त्संसर्ग रूपत्वे आधारत्वाधेयत्वयो रभेदापत्त्या भूतले घट इति वद् घटे भूतल मिति विपरीताधाराधेयभाव प्रसङ्गः, अत स्तस्यातिरिक्तपदार्थत्वमेव वाच्यम्, एव मन्यत्रापि बोध्यम्, उक्त च सिद्धान्तलक्षण शेषे दीधिति कृद्भिः – "विषयतातत्त्वादिवत्प्रतियोगित्वाधिकरणत्व तत्त्वसंबन्धत्वादयोप्यतिरिक्ता एव पदार्था इत्येकदेशिनः" इति। न न्वाधारत्वं नातिरिक्तः पदार्थः, किंतु तत्तत्संबन्धरूपमेव। नच कुण्डे बदरम्, भूतले घट इत्यादौ कुण्ड भूतलादि संयोगिनो बदरघटादेरपि कुण्डभूतलाद्याधारता प्रसङ्ग इति वाच्यम्, आधारताया आधारेऽनुयोगित्वं संबन्धः, आधेये च प्रतियोगित्व मिति संबन्ध वैलक्षण्येन कुण्ड

भूतल बदरघट संयोगानां कुण्ड भूतलाद्यनुयोगि, न बदरघटादीत्यदोषात्, युक्तं चैतत्, अत एव पटे रूपमित्यादौ रूपादेः पटाद्यधिकरणत्वं न, अन्यथा समवायस्य द्विष्ठतया रूपादे स्तत्त्वं दुर्वार मेव स्यात्, एवं चा धिकरणत्वस्य तत्तत्संबन्धरूपत्वे, न कश्चिद्दोषः। स्पष्टमधिकं सप्तमीप्रकरणे व्युत्पत्तिवादे, इत्यतो हेत्वन्तरमाह – **शक्यतावच्छेदकेति** आधारत्वस्य संबन्धरूपत्वे भूतले घट इत्यादौ संयोगत्वं मृदि घट इत्यादौ समवायत्वं च शक्यतावच्छेदकं स्वीकार्यम्, तद्भेदेच शक्ति नानात्वापत्तिः, अतस्त द्वारणाया धारत्वस्यातिरिक्त पदार्थत्व मेव युक्तमिति भावः। **करणत्वेति** तृतीयाप्रकरणे कारणत्व दृष्टान्तेन करणत्वस्या खण्डोपाधिरूपत्वं स्वीकृतम्। करणत्व दृष्टान्तेनाधिकरणत्वस्यापि तत्वं स्वीकार्यमिति भावः। ननु सर्वस्यापि पदार्थान्तर कल्पनापत्ति, र्विनिगमकाभावा, दत आह – **यत्र हीति** हि शब्दः प्रसिद्धिद्योतकः। कल्पनम् = अतिरिक्तपदार्थ कल्पनम्, **विश्वादीति** उद्धेश्यतावच्छेदक व्यापक विधेयत्याप्य समुदायत्वावच्छिन्ने विश्वशब्दस्य शक्तिः। तादृश समुदायः शक्यः, समुदायत्वं शक्यतावच्छेदकम्, तेन विश्वे ब्राह्मणा इत्यादि प्रतीते रनुभवसिद्धतया विश्व शब्दार्थस्या खण्डत्व कल्पना न कार्येति भावः। तर्हि कुत्र तत्कल्पना कार्येत्यत आह – **यत्रत्विति** संप्रदानत्व कर्तृत्वादावित्यर्थः, **तद्घटकेति** यथा-त्यज्यमान द्रव्योद्धेश्यत्वे सति स्वीकारवत्वं संप्रदानत्वम् तत्पदार्य घटका द्रव्यत्यागोद्देश्यत्वादयः, तदप्रतीतावपि ब्राह्मणाय गां ददातीत्यादितो ब्राह्मणसंप्रदानकं गोकर्मकं दानमिति बोधोदयात् संप्रदानत्वस्या खण्डत्वमेव स्वीकार्यम्, एतदेवाह – **शाब्दव्यवहारेति** शाब्दबोधः शब्दप्रयोगश्च, एतदनुरोधादपीत्यर्थः।

## (तार्किकमतेना धिकरणत्वनिर्वचनं, तन्निराकरणं च।)

**तत्रा धेयत्व माधेयत्वत्वेन सप्तम्यर्थः, तत्र च निरूपकतासंबन्धेन प्रातिपदिकार्थस्य भूतलादेरन्वयः। तस्य चानुयोगितासंबन्धेन घटादावन्वयः, तेन "भूतले घट" इत्यत्र भूतलवृत्तिर्घट इत्येवं शाब्दबोध-इति तार्किकाः।**

**तन्न, "सप्तम्यधिकरणे चे" 2-3-36 त्यनुशासनविरोधात्। भूतले घटः, गृहे पचतीत्यादौ सर्वत्रै करूप्येणा न्वयानङ्गीकारेणा नेकव्युत्पत्तिकल्पनापत्तेश्च।**

**अतो धिकरणत्वमेव सप्तम्यर्थः, यद्यपि संयोगसंमवायाद्यवच्छिन्नाधिकरणत्वानि नाना, तथाप्यधिकरणत्वत्वस्य शक्यतावच्छेदकस्यैकत्वा न्न नानार्थकत्वम्।**

नैयायिकमतेन सप्तम्यर्थ माह – **तत्रेति** "सप्तम्यधिकरणे चे" 2-3-36 ति सूत्रोदाहरणेष्वित्यर्थः, निरूपकतासंबधेन = स्वनिष्ठनिरूपकताकत्व संबन्धेन। तस्य = सप्तम्यर्थस्य। तथाच स्वनिरूपकताकत्व संबन्धेन भूतल विशिष्टं यदाधेयत्वम्, अनुयोगिता संबन्धेन तद्वान् घट इति बोधः सिध्यति, फलितमाह – **तेनेति अनुशासनविरोधादिति** पाणिनिसूत्रेणाधिकरणत्वे सप्तम्या अनुशिष्टत्वा त्तद्विरोध इत्यर्थः। सप्तम्या अधिकरणत्वार्थकत्वेपि सूत्र विरोधोस्ति, यथा श्रुते तेन धर्मिणि शक्तिबोधनात्, तथापि लाघव सहकृत तर्केण सप्तम्या धर्मबोधकताया एवानुशासनेनलाभान्न विरोधः नैयायिकानामपि एतत्परिहारः समान एव, परं तु पूर्वोक्त विरोधोतिरिच्यत इति भावः। ननु सप्तम्या आधेयत्वार्थकत्वमेव स्वीकार्यम्, तस्या अधिकरणत्वार्थकत्वे तस्य निरूपकता संबन्धेनान्वयस्य वाच्यतया भूतले न घट इत्यादौ नञ् समभिव्याहारस्थले निरूपकता संबन्धस्य वृत्त्य नियामकतया तत्संबन्धावच्छिन्न प्रतियोगिताकतदभावस्य बोधयितुमशक्यत्वात्, आधेयत्वस्यैव सप्तम्यर्थताया वक्तव्यतया प्रतियोग्यभावान्वयतुल्ययोगक्षेमता नियमानुरोधात् सर्वत्रापि अधेयत्वमेव सप्तम्यर्थ इत्यभ्युपेयम्, सप्तम्या धर्मबोधकत्व इवात्रापि न्याय सहकृत तर्केण सूत्रविरोधः सुपरिहर एवेत्यत आह – **भूतले घट इति** अत्र घटे साक्षादेवान्वयः,

**गृहेपचतीत्यादाविति** अत्र गृहसंबन्धि स्थाली द्वाराऽन्वयः। आदिना आकाशे पक्षी गच्छतीत्यादे र्ग्रहणम्, तदेतदाह – **सर्वत्रैक रूप्येणान्वयानङ्गीकारेणेति** स्व सिद्धान्तमुपसंहरति **अतोधिकरणत्वमेव सप्तम्यर्थ इति** द्रव्यं गच्छति नाऽभाव मित्यादि प्रयोगानुरोधेन वृत्त्यनियामक संबन्धस्याप्यभाव प्रतियोगिता-वच्छेदकत्वस्याङ्गीकारा न्नञ् समभिव्याहारस्थलेभूतले न घट इत्यादौ न दोष इति बोध्यम्। **संयोगेति** भूतले घटः कपाले घट इत्यादौ संबन्ध भेदेनाधिकरणत्व नानात्वात्सप्तम्या नानार्थकतापत्तिरिति भावः। नाना = भिन्नानि,

## (सप्तम्यर्थस्य कर्तृकर्मान्यतर द्वारक एव भावनान्वयः।)

**तत्र 'भूतले घट' इत्यत्रा स्तीत्यध्याहारा त्सप्तम्यर्थाधिकरणत्वस्य स्वनिरूपकघटवृत्तित्व-संसर्गेणा ख्यातार्थे सत्ताश्रयत्वेन्वयः। भूतलनिष्ठा धिकरणत्वनिरूपक घटवृत्तिवर्तमानसत्ता-श्रयत्वं घटवृत्तीति च शाब्दबोधः। नच पूर्व घटे भूतलस्थे संप्रतिचाधिकरणान्तरस्थे "भूतले घटो स्ती" ति प्रयोगापत्तिः, यादृशकालबोधकप्रत्ययबोध्यक्रियायां सप्तम्यर्थाधिकरणत्वान्वय, स्तद्बलेन तादृशकालावच्छिन्नाधिकरणत्वस्यैव व्युत्पत्तिविशेषेण सप्तम्या बोधनात्। 'गृहे चैत्रः पचती' त्यत्र स्वनिरूपकचैत्रवृत्तित्वसंसर्गेण तस्यामेव, स्थाल्यामोदनं पचतीत्यत्र स्वनिरूपकौदनकर्मत्वसंसर्गेण तस्यामेव। अत एव सर्वत्र सप्तम्यर्थस्य स्वनिरूपककर्तृकर्मान्य-तरद्वार एवा ख्यातार्थान्वयः, नतु कारकान्तरद्वारकः, साक्षाद्वा। 'काश्यां ब्राह्मणेभ्यः प्रयच्छती' त्युक्ते कर्तुरेव झटिति काशीस्थत्वप्रतीतेः, यत्रतु पाटलिपुत्रे स्थितो राजा काश्यां ब्राह्मणेभ्यः प्रयच्छती, त्यादौ ब्राह्मणेषु काशीवृत्तित्वप्रतीति, स्तत्र स्थितेभ्य इतिपदाध्या-हारेण स्थितिकर्तृद्वारैवेति न विरोधः। अत एव 'भूभृतिवृक्षात्पर्णं पतती' त्यत्र स्थितादिति पदाध्याहारं विना न झटिति भूभृद्वृत्तित्वप्रतीतिः। साक्षात्तु सप्तम्यर्थस्य भावनान्वयो गृहादौ बाधित एव, चैत्रादौ तु परयाकर्तृसंज्ञया बाधितः। अतः सिद्धं कर्तृकर्मान्यतरद्वारक एव सप्तम्यर्थान्वय-इति।**

ननु "सप्तम्यर्थोपि तत्रैवान्वेती" त्ययुक्तम्, भूतले घट इत्यादौ तस्य घटादावन्वय संभवा,त्परैस्तथैव स्वीकाराच्चेत्यत आह – **तत्रेति** सप्तम्यर्थान्वय विषय इत्यर्थः। "अस्तिर्भवन्तीपरो प्रयुज्यमानोप्यस्ती" ति कात्यायनवचन प्रामाण्यादाह – **अस्तीत्यध्याहारादिति सत्ताश्रयत्व इति** धात्वर्थः सत्ता, लक्षणया आश्रयत्व माख्यातार्थ इति भावः,

अधिकरणत्व रूप शक्यार्थस्य भावनायां न साक्षादन्वयः, किंतु कर्तृकर्मद्वारकः, न कारकान्तर द्वारक इत्याह – **गृहे चैत्र इति** इदं कर्तृ द्वारकान्वयस्योदाहरणम्, तस्यामेव = भावनायामेव। तथाच स्वनिरूपक चैत्र वृत्तित्व संबन्धेन गृहनिष्टाधिकरणत्व वती पाकाभावना चैत्रनिष्टेति बोधः। कर्म द्वारक स्योदाहरण माह – **स्थाल्यामिति** तस्यामेव = भावनायामेव, अत एव = सप्तम्यर्थस्य भावनायामेवान्वयादेव, **सर्वत्रेति** शक्त्याऽधिकरणत्व बोधक स्थलेष्वित्यर्थः। तेन लक्ष्यार्थ बोधक सप्तम्यन्त स्थले साक्षात्संबन्धे नैवान्वयः। ग्रन्थकारः समनन्तरमेवैतद्विशदयिष्यति। सप्तम्यर्थस्य = तच्छक्यार्थस्य, **कर्तृकर्मान्यतरेति** साधन समुद्देशे भर्तृहरिणाप्युक्तम् – 148

"कर्तृकर्मव्यवहिता मसाक्षाद्धारयत्क्रियाम्,
उपकुर्वत्क्रियासिद्धौ शास्त्रेधिकरणं स्मृतम्" इति

"कटे आस्ते स्थाल्यां पचतीति कर्तृकर्मधारणात्तत्समवेतायां क्रियायामुपकारक मधिकरणं पारम्पर्येण।

अस्मिन् ह्याधारे कर्तृकर्मणी क्रियोपकारं न प्रतिपद्येयातामिति तयोराधार उपकुर्वन् क्रियामपि तत्स्थामुपकरोति। व्यवहितामित्युक्तेपि असाक्षादिति वचनं लोकानुसारेणापि पदार्थ व्यवस्थाया मधिकरणस्य क्रियाधारणं प्रति व्यवधानपोषणार्थ "मिति तदव्याख्याने हेलाराजः"। एव शब्द व्यवच्छेद्यं दर्शयन्नाह – **नत्विति** संप्रदानत्वादि कारक द्वारकः साक्षाद्वा सप्तम्यर्थस्य न भावनान्वय इति भावः। **काश्यामिति** काश्यधिकरणकेभ्यो ब्राह्मणेभ्य इत्यर्थस्या मुखे प्रतीतावपि न तत्र वाक्यस्य विश्रान्ति रित्याह – **कर्तुरिव झटितीति** काश्यां स्थितो राजा ब्राह्मणेभ्यः प्रयच्छतीत्यर्थस्यैव स्वारसिकत्वमिति भावः। **प्रतीतेरिति** तथाच नोक्तनियम व्याघात इति तात्पर्यम्, **यत्रत्विति** अत्र वाक्येधिकरणत्वस्यान्वय योग्यस्य कर्तृवाचकपदस्योपादानेन तत्र तद्वारकान्वय स्वीकारेपि काश्यानिति सप्तम्यन्तार्थान्वययोग्य कर्तृवाचकपदा भावात्तस्य संप्रदानकारक द्वारैवान्वयः स्वीकार्य इति भ्राम्येयुः, तद्व्युदासायाह **स्थितेभ्य इति पदाध्याहारेणेति स्थिति कर्तृ द्वारैवेति** स्था धातोरकर्मकतया "गत्यर्था कर्मक श्लिष स्थासवस जन रुह जीर्यतिभ्यश्च" 3-4-72 इति सूत्रेण कर्तरिक्तः, तेननिरुक्तार्थ लाभ इति भावः, न विरोधः = सप्तमीवाच्यार्थस्य कर्तृकर्म द्वारैव भावनान्वय इति नियमस्य न व्यभिचारः। अत एव = तद्वारकान्वयस्य स्वीकारदेव। **झटितीति** अनध्याहारे वृक्षात्पर्णं भूभृति पततीति प्रतीयते, तत्तु नेष्टमिति भावः। एवं कारकान्तर द्वारको नान्वय इत्ये तदुपपाद्य न साक्षादित्येत दुपपादयति **साक्षात्विति गृहादाविति** गृहादौ अधिकरणत्वेन विवक्षित इत्यर्थः। **बाधित एवेति** चैत्र वृत्ते भावनाया गृहादौ वृत्त्यसंभवाद् गृहनिष्ठाधिकरणत्व निरुपकत्वं भावनाया न भवतीति भावः। ननु चैत्रस्य भावनाश्रयत्वादधिकरण संज्ञायां ततः सप्तम्या तदर्थस्य साक्षाद्भावनान्वयो निराबाध इत्यत आह – **चैत्रादाविति** आदिना कर्मणो ग्रहणम्। ओदनस्याप्यधिकरणत्वे तस्यापि तथान्वयसंभवदिति बोध्यम्। **परयेति** कारकाधिकारे तरतम-योगस्या नाश्रयणात्परम्परया क्रियाधारकेऽधिकरण संज्ञायाः सावकाशत्वात्साक्षात्क्रिया धारकयोः परत्वात् कर्तृसंज्ञा कर्मसंज्ञा च बाधिकेति भावः, **कर्तृ संज्ञाचेति** इदमुपलक्षणं कर्मसंज्ञाया अपि, बाधितम् = अधिकरणत्वं चैत्रादौ प्राप्तं बाधितम्, सप्तम्यर्थान्वयः = सप्तमी वाच्यार्थान्वयः

**नन्वेवं कर्माविवक्षायां 'ग्रामे गच्छति, ग्रामे गम्यते' इतिप्रयोगानापत्तिः, ग्रामाधिकरणत्वस्य कर्तृकर्मद्वारकत्वासंभवात्। लक्षणयो द्देश्यत्वं तत्र सप्तम्यर्थ इति चेत्, ओदने पचतीति प्रयोगापत्तिः। अत एव धात्वर्थतावच्छेदकफलद्वारक एवान्वय इत्यप्यपास्तम्। ओदनस्यापि तदापत्ते रिति चेत्।**

**तत्रापि कर्तृद्वारकत्वस्य संभवात्। ग्रामाधिकरणकचैत्रवृत्ति गमनानुकूलकृतिमत्त्वस्य चैत्रे संभवात्, अन्यावच्छेदेन ग्रामप्राप्तिफलकक्रियावत्यपि चैत्रे ग्रामाधिकरणत्वस्य भावित्वाद् ग्रामाधिकरणचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे नानुपपत्तिः। पाककर्तु स्तु ओदनाधि-करणत्वाभावा न्न तथा प्रयोगः।**

कर्तृकर्मद्वारक एव सप्तम्यर्थान्वय इति नियमेऽव्याप्ति माशङ्कते – **नन्विति** एवम् = उक्त नियम स्वीकारे। कर्मा विवक्षायाम् = ग्रामादेः कर्मत्वेनाविवक्षायाम्। अविवक्षित कर्मतयाऽकर्मकत्वात्ततो भावे लकारं दर्शयति **ग्रामे गम्यत इति द्वारकत्वा सम्भवादिति** कर्मणोऽभावात्कर्तृवाचक पदाप्रयोगा त्तद्द्वारकत्वा संभवादित्यर्थः। **लक्षणयेति** अधिकरणत्वरूप शक्यार्थान्वय विषयक एव कर्तृकर्मान्यतर द्वारक इति नियमः, अतो लाक्षणिकार्थस्योद्देश्यत्वस्य साक्षादेव भावानायामन्वयः संभवतीति शङ्कितु राशयः। एतच्चानुपदमेव मूले व्यक्ती भविष्यति। **प्रयोगापत्तिरिति** तत्रापि सप्तम्या लक्षितस्योद्देश्यत्वस्य साक्षाद्भावनान्वय संभवादित्यर्थः। अत एव = निरूक्तयोगापत्तेरेव। **फल द्वारक इति** धात्वर्थ फलस्यापि

व्यपदेशिवद्भावेन फलाश्रयत्वेन कर्मत्वात्तादृशकर्मत्व द्वारक इत्यर्थः, यद्वा कर्तृकर्मान्यतर द्वारक इत्यत्र कर्मपदेन तत्प्रयोजक फलस्यापि ग्रहणात्प्रकृते फलद्वारकोन्वयः स्वीक्रियत इत्यर्थः। अत एवेत्यस्यार्थं विशदयति, **ओदनस्यापि तदापत्तेरिति** पूर्वत्र धात्वर्थतावच्छेदकं फलं संयोगः, अत्र तु विक्लित्ति रिति भावः। प्रकरणादिना गमन कर्तुश्चैत्रादे र्भान संभवाभिप्रायेण चैत्रादि कर्तृपदाप्रयोगेपि तत्प्रयोगस्य नैयत्येन सत्त्वात्तद्द्वारकोन्वयः सेत्स्यतीत्याशयेन समाधत्ते **तत्रापीति** ग्रामे गच्छतीत्यत्रापीत्यर्थः, **कर्तृद्वारकत्वस्येति** ग्रामाधिकरणत्वस्य कर्तृद्वारकत्वस्येत्यर्थः, तदेवोपपादयति **ग्रामाधिकरणकेति** तदधिकरणको यश्चैत्र स्तद्वृत्तिर्या गमनानुकूला कृति स्तद्वत्त्वस्येत्यर्थः, ननु ग्रामप्राप्त्यनन्तरं चैत्रे ग्रामाधिकरणत्वसत्त्वेपि ततः प्राङ् मार्गमध्ये स्थिते चैत्रे तत्वाभावा न्निरुक्त प्रयोगो नोपपद्यत एवेत्यत आह **अन्यावच्छेदेनेति** मार्गावच्छेदेनेत्यर्थः। **भावित्वादिति** ग्रामप्राप्त्युद्देशेनैव चैत्रस्य यान संभवादिति भावः। ओदने पचतीति प्रयोगापत्तिं वारयति, **पाककर्तुस्त्विति** न तथा प्रयोगः = ओदने पचतीति न प्रयोगः, एवं च गृहे चैत्रः पचतीत्यत्र गृहाधिकरणत्वस्य कर्तृद्वारकत्वम्, स्थाल्यमोदनं पचतीत्यत्र स्थाल्यधिकरणत्वस्य ओदनरूपकर्मद्वारकत्वम्, तद्वद् ग्रामे गच्छतीत्यत्र चैत्रस्य ग्रामाधिकरणकत्वात्तद्वारकत्वं ग्रामाधिकरणत्वस्येति नाव्याप्तिरिति बोध्यम्,

**नन्वेवमपि 'अग्नौ पचति' आतपेतिष्ठति आकाशे पक्षी गच्छति "आकाशेतिष्ठन्नाकाश मन्तरो यमयति" इत्यादिप्रयोगानुपपत्तिः, अग्न्याधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकत्वायोगात्। नच 'अग्नौ पचती' ति प्रयोगो नास्त्येवेति केषाञ्चिदुक्तं युक्तम्—**

**"यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमोविधीयते"**

**इति बहुतरप्रयोगदर्शनात्। नहि वृत्त्यनियामकसंयुक्त संयोगादिसंबन्धस्याधिकरणतानिरूपकत्वं संभवति। अन्यथा आकाशे मनुष्य स्तिष्ठति 'चैत्रो मैत्रात्मनितिष्ठती' त्यादिप्रयोगापत्ते, रितिचेत्।**

सप्तम्यर्थान्वयः कर्तृकर्मद्वारक इति नियमस्य स्थलान्तरेऽव्याप्ति माशङ्कते **नन्विति** एवमपि = ग्रामे गच्छतीत्यत्र ग्रामाधिकरणत्वस्य कर्तृद्वारकत्वोपपादनेपि, **कर्तृकर्मान्यतरेति** कर्तुश्चैत्रादेः कर्मणस्तण्डुलादेश्चाग्नि वृत्तित्वा संभवेनान्यतर द्वारकत्वं न युज्यते, आतपस्य प्रभारूपस्य द्रव्यत्वेपि कटचैत्रादेरिव चैत्रातपयोगधाराधेय भावा संभवा दातपाधिकरणत्वस्य कर्तृ द्वारकत्व मसंभवि, एवं चन्द्रिकायां विहरति वने विहरतीत्यादावपि तदसंभवो बोध्यः। नीरूपस्याकशस्याप्यधिकरणत्वं पक्ष्यादि कर्तृद्वारकत्वं न संभवतीति भावः, **नचेति** पाकादिफल विक्लित्यधिकरणौदनाद्यधिकरणस्थाल्यादीना मेवाधिकरणत्वं न्याय्यम् न त्व ग्न्यादीना, मत ईदृश प्रयोगस्योपपत्यभाव एवेत्याशयः, शिष्ट प्रयोग सत्वेन तदनुरोधेना ग्न्यादेरधिकरणत्वमिष्टमेवेत्याशयेन समाधत्ते — **यस्मिन्नग्नाविति** अयं श्लोकपादः स्मृतिरत्नाकरे। ननु अग्नि संयुक्ता स्थाली, तत्संयोग स्तण्डुलस्येति स्वयुक्त संयोग संबन्धेनाग्न्यधिकरणत्वस्य तण्डुलकर्मकत्वं निर्वहतीत्याशङ्कां परिहरति **नहीति** घट भूतलयोः संयोगस्याविशिष्टत्वेपि भूतले घट इत्यत्र संयोगो भूतलानुयोगिको वृत्ति नियामकः, घटे भूतल मिति घटानुयोगिकस्तु न तन्नियामकः, संयुक्त संयोगादिस्तु सर्वदा वृत्यनियामक एवेति न तस्याधिकरणत्व नियामकत्वमिति भावः, अन्यथा = तस्यापि तन्नियामकत्वे, **प्रयोगापत्तेरिति** आकाशस्यात्मनश्च विभुत्वेन (सर्वमूर्त द्रव्य संयोगितया) आत्म संयुक्त घटादि संयोगितया काशस्याधारतापत्तिः, एवं चैत्रात्ममैत्रात्मनो रपि घटादि द्वारक संबन्धवत्तया तथा प्रयोगापत्तिरिति भावः,

**तादृशस्थले गङ्गायां घोष इतिवदग्न्यादिपदे तत्संबन्धिस्थाल्यादिलक्षणया तन्निष्ठाधिकरणत्वस्य कर्तृकर्मान्यतरद्वारा न्वयोपपत्तेः। तेन 'अग्नौ पचती' त्यादे रग्निसंयुक्तस्थाल्यां पचति, आतपसंयुक्ते गृहे तिष्ठतीत्यर्थः।**

**गङ्गायां घोष इति** घोषस्य शक्य प्रवाह वृत्तित्वा संभवेन तदधिकरणत्वस्य कर्तृद्वारकत्वानापत्तिः, अतस्तत्रगङ्गापदे तीर लक्षणया तन्निष्टाधिकरणत्वस्य घोष रूपकर्तृद्वारकत्वं स्वीकृतम् तद्वदित्यर्थः। **स्थाल्यादि लक्षणयेति** साक्षादग्न्यधिकरणकत्वस्य तण्डुलादौ बाधितत्वा ल्लक्षणाश्रयणम्, प्रकृते तण्डुल रूपकर्म द्वारकत्वम्, आतपे तिष्टतीत्यादौ कर्तृद्वारकत्वं च सिध्यति। तदाह **कर्तृकर्मान्यतरेति** फलितार्थमाह — **तेनेति गृह इति** इदमुपलक्षणम्, निरावरण देशस्य, अन्यथा देवदत्तस्य गृहे सत्ता दशायामपि निरुक्त प्रयोगापत्तिः एवमेव चन्द्रिकायां विहरति, वने विहरतीत्यादे रप्युपपत्तिः। ''भवतु वा परम्परया वह्न्याधेयत्व मेव सप्तम्यर्थः, अत एव (यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते) तच्छब्देन वह्नेः परामर्शोपि संगच्छते'' इति तु पद वाक्य रत्नाकरकृतः।

**आकाशपदेन गमनप्रतिबन्धक भूप्रदेशानवच्छिन्नप्रदेशोलक्ष्यते, य मन्तरिक्ष मिति व्यवहरन्ति। सप्तम्या अवच्छेदकत्वम्, विषयत्वादिवत् तस्य विभक्त्या लक्षणाया मपि नदोषः, तस्यो द्देश्यत्वादिव त्सप्तम्यर्थस्यापि साक्षात्संबन्धेनैव गमनसंबन्धित्वम्। नहि सप्तम्यर्थमात्रे तन्नियमः। अपितु सप्तमीवाच्य एव। तच्च प्रचुरप्रयोगा दधिकरणत्वमेवेति तत्रैवायं नियमः। धातुना च निराधारं गमनम्। तथाचो क्तविधभूप्रदेशानवच्छिन्नप्रदेशावच्छिन्न निराधारगमनानुकूलकृतिः पक्षिनिष्टेति शाब्दबोधः।**

आकाशे पक्षी गच्छतीत्यस्योपपत्तिं दर्शयति, **आकाशपदेनेति गमनप्रतिबन्धकेति** गमन प्रतिबन्धको यो भूप्रदेशः = भूतल वृक्षपाषाणादिः, तदनवच्छिन्न इत्यर्थः, कोसावित्याकाङ्क्षायामाह — **यमिति** अवच्छेदकत्वम् = लक्ष्यत इत्यस्यानुषङ्गः, ननु प्रातिपदिके लक्षणास्तु, विभक्तौ सा नोचिता ''विभक्तौ न लक्षणे'' ति वृद्धोक्ति विरोधादत आह — **विषयत्वादिवदिति**, सविषयक धातु समभिव्याहारे घटं जानातीत्यादौ द्वितीयाया विषयत्वे लक्षणा स्वीकृता। स्तोकं पचतीत्यावौ स्तोकत्वस्य स्तोक पदार्थत्वनये द्वितीयाया आश्रयत्वे स्तोकत्व विशिष्टस्य तदर्थत्वनयेऽभेदे लक्षणा स्वीकृता, तद्वदित्यर्थः। तस्य = अवच्छेदकत्वस्य, विभक्त्या = आकाशे इत्यत्र सप्तम्या। **न दोष इति** विभक्तौ न लक्षणेति प्रवादः ''सुपां कर्मादयोत्यर्थाः'' इत्यादि कात्यायन वार्तिकमूलकः। तस्य च शास्त्र निर्दिष्ट विभक्त्यन्तरार्थे विभक्त्यन्तरस्य न लक्षणेत्येतदाशयकतया शास्त्रानिर्दिष्टेर्थे तस्याऽप्रसरा त्तद्विरोध रूपो दोषो नेत्यर्थः। उपपादितं चेदं द्वितीया प्रकरणे नैयायिकरीत्या घटं जानातीत्येत दुपपादनावसरे ग्रन्थकृता। सप्तम्यर्थस्य कर्तृद्वारकत्वासंभवादाह **तस्येति** अवच्छेदकस्येत्यर्थः। गमन संबन्धित्वम् = गमनान्वयित्वम्। ननु सर्वत्र सप्तम्यर्थस्य कर्तृकर्मान्यतर द्वारक एवा ख्यातार्थान्वय इति प्रागुक्तनियम भङ्ग इत्यत आह — **नहीति सप्तम्यर्थ मात्रे इति** मात्रशब्दः कृत्स्नार्थकः। तन्नियमः = सप्तम्यर्थस्य कर्तृकर्मान्यतर द्वारक एव भावनान्वय इति नियमः। सप्तमीवाच्य एव = सप्तम्या वाच्यं यत् तत्रैव। तच्च= सप्तमीवाच्यं च। तत्रैव = सप्तमीवाच्यार्थ एव। प्रकृतेऽवच्छेदकत्वस्य सप्तमीलक्ष्यार्थतया तत्र तन्नियमाप्रवृत्त्या साक्षाद्गमनान्वये न किञ्चिद्बाधकमिति भावः, धातुना च = गमिधातुना च, गमनं = लक्ष्यत इत्यस्या त्राप्यनुषङ्गः, पर्यवसन्नं बोधं दर्शयति — **तथा चेति** आकाशप्रातिपदिके सप्तम्यां धातौ च लक्षणास्वीकारे चेत्यर्थः। **उक्त विधेति** गमन प्रतिबन्धकेत्यर्थः। तादृशो भूप्रदेशानवच्छिन्नः प्रदेशो = न्तरिक्षाख्यः, तदवच्छिन्नेत्यर्थः,

**'आकाशे तिष्ठन्नि' त्यादौ संयुक्तसंयोगावच्छिन्न संबन्धित्वं लक्षणया सप्तम्यर्थः। षष्ठ्यर्थस्यापि ''सुपां सुलुक्'' 7-1-39 इत्येवं लक्षणा। तस्यापि पूर्ववद्धात्वर्थद्वारकः कर्तृद्वारक एव वा संसर्गः।**

आकाशे तिष्ठन्नित्यत्रो पपत्तिमाह **आकाशे तिष्टन्नित्यादाविति** आदिना पृथिव्यां तिष्टन्नि त्यादेर्ग्रहणम्, **संयुक्तेति** संयुक्त संयोगावच्छिन्नं संबन्धित्वमित्यर्थः। संबन्धित्वं = संबन्धानु योगित्वम्। स च संबन्धः संयुक्त संयोगरूप इति भावः। ननु सप्तम्या लक्षणयापि कथं संबंन्धित्वार्थकत्वम्। तदर्थस्य 'शास्त्रनिर्दिष्टत्वेन विभक्तौ न लक्षणे'' ति निषेध विषयत्वा दत आहे **षष्टचर्थस्यापीति सुपां सुलगिति** ''सुपां सुलुक्'' 7-1-39 इत्यादि पाणिनि सूत्रे ''सुपां सुपो भवन्ती'' ति महा भाष्यकार वचनेनेत्यर्थः। तच्च लक्षणा प्रति प्रसवरूपं व्यत्ययानुशासनमिति भावः। तस्यापि = सप्तम्यर्थस्यापि। **पूर्ववदेवेति** आकाशे पक्षी गच्छतीत्यत्रा वच्छेदकत्वस्य लक्ष्यार्थस्येवेत्यर्थः। लक्ष्यार्थस्य साक्षाद्धात्वर्थान्वयः, न तु कर्तृ कर्मान्यतर द्वारक एवेत्याशयेनाह **धात्वर्थद्वारक इति** सति संभवे लक्ष्यार्थस्यापि कर्तृ द्वारको न्वयो स्त्वित्याह – **कर्तृद्वारक इति**

**वस्तुतस्तु आकाशस्यापि ईश्वरोपादानकत्वा दुपादानत्व मेव सप्तम्यर्थ उपादानकर्तृद्वारको न्वेति, आकाशे उपादानकारणत्वा दनुगत स्तिष्ठन्नित्यर्थः। अस्तु वा एतद्वचनबलादेवा काशेपि शब्दनिरूपिता धारत्वव दन्तर्यामिनिरूपिताधिकरणत्वमपीति न तत्र लक्षणापि।**

व्यत्ययानु शासनाश्रयणेन सप्तम्याः षष्टचर्थकत्वं मास्तु, शास्त्रानिर्दिष्टेऽर्थे लक्षणाश्रयणेन तदुपपत्ति रित्याशयेनाह **वस्तुतस्त्विति ईश्वरेति** इश्वर उपादानं यस्य सः, शैषिकः कप् समासान्तः। स्वाभिन्न कार्य जनकत्व मुपादानत्वम्, शास्त्रे बहुत्रैक विज्ञानेन सर्वविज्ञानस्य प्रति ज्ञातत्वात् मृत्पिण्डादि दृष्टान्तो पन्यासाच्चेश्वरस्य जगदुपादान कारणत्वं सिध्यति। जगदन्तः पातित्वाच्चा काशस्यापि तदुपादानकत्व मिति भावः। निरूपितं चैत द्विस्तरेण प्रथमाध्याय चतुर्थपादान्ते प्रकृत्यधिकरणे उत्तर मीमांसायाम्। लक्षणानाश्रयणेप्युपपत्तिं दर्शयति **अस्तुवेति शब्दनिरूपिते** इदं नैयायिक वासनया। ईश्वरोपादानकत्वं वेदान्ति वासनयेति बोध्यम्, तत्र = आकाशे तिष्टन्निति श्रुतिवाक्ये।

**नचैव 'मग्नौ पचती' त्यादिप्रयोगाणां लक्षणयो पपादने 'आकाशे मनुष्य स्तिष्ठती' ति प्रयोगापत्तिः, यत्र प्रयोग, स्तत्र लक्षणयो पपादनं नतु क्वचि ल्लक्षणाङ्गीकरणमात्रेण प्रयोगापत्तिः। तथात्वे 'गङ्गायां घोष' इत्यादौ गङ्गापदेन गङ्गासंबन्धितीरलक्षणायाः सर्वसंमतत्वेन भवदुक्तप्रयोगापत्ते रनिवारणात्। अतः सिद्धं सप्तम्यर्थाधिकरणत्वस्य कर्तृकर्मान्यतरद्वारको न्वय-इति**

लक्षणाश्रयणेन प्रयोग समर्थने तिप्रसङ्गमाशङ्कते **नचेति** लक्षणया = अग्न्यादि प्रातिपदिके तत्संबन्धि स्थाल्यादि लक्षणया, **आकाशे मनुष्य इति** संयुक्त संयोगादि संबन्धस्याधिकरणता निरूपकत्वायोगेपि आकाश प्रातिपदिके तत्संयुक्त लक्षणया तत्प्रयोगो दुर्वार इति भावः। ''सत्यारोपे निमित्तानु सरणं, न तु निमित्तमस्तीत्यारोप'' इति न्याय मवलम्ब्य समाधत्ते – **यत्र प्रयोग इति** यस्मिन्नर्थे प्रयोग इत्यर्थः। तत्र = तदुपपत्ति विषये। उपपादनम् = अर्थस्य। **प्रयोगापत्तिरिति** प्रमित प्रयोगाभावेपि लक्षणामाश्रित्य प्रयोगापत्तिर्न कार्येति भावः। तथात्वे = तदापादने। **सर्वसंमतत्वेति** मया अग्नौ पचतीति प्रामाणिक प्रयोगो लक्षणाश्रयणेन समर्थितः, तदनुसारेण भवतातिप्रसङ्ग उद्भाव्यते, सा वार्ता आस्ताम्, गङ्गायां घोष इत्यत्र लक्षणा सर्ववादि संमता, तामुपजीव्याति प्रसङ्गोऽनिवारित एव स्यात्, अत एतादृशे लक्षणां निषिद्ध लक्षणां

वदन्ति। यथा-रूपं वस्त्र मिति, अन्यथा मत्वर्थ लक्षणा केन वार्यताम्, उपपादितं चेदं द्वितीया प्रकरणे ग्रन्थ कृता प्रकरणार्थ मुपसंहरति **अतः सिद्धमिति सप्तम्यर्थाधिकरणत्वस्येति**, तदेव शक्यं सप्तम्याः अतस्तद्विषयक एवायं नियमः लक्ष्यार्थस्य तु नायं नियम इति भावः,

**यस्तु गृहाद्बहिः स्थितेन कर्त्रा दीर्घदण्डादिना काष्टचलनद्वारा गृहमध्ये पाककरणे 'गृहे पचती' तिप्रयोगः, स कर्मकारकस्य तण्डुलादेः परम्परया गृहा धिकरणत्वा न्ना नुपपन्नः।**

ननु चैत्रस्य गेहवृत्तिता दशायां तदधिकरणत्वस्य कर्तृद्वारकत्व संभवेपि चैत्रस्य गृहाद् बहिःस्थिति दशायां तस्य तद् द्वारकत्वासंभवाद् गृहे पचतीति प्रयोगानापत्ति, रत आह — **यस्त्विति** अस्य प्रयोग, इत्यत्र संबन्धः। **परम्परयेति** चैत्रस्य दूरस्थत्वेपि तण्डुलरूप कर्मद्वारकत्व माश्रित्याधिकरणत्वोपपत्तिः, गृह संयुक्त चुल्लीवृत्ति स्थाली वृत्तित्वात्तण्डुलस्येति भावः,

**(भूतले घटो नास्तीत्यादौ नञ्समभिव्याहारेधिकरणत्वानुपपत्तिरिति महापूर्वपक्षः।)**

**नन्वेवमपि 'भूतले घटो नास्ति, 'चैत्रो गृहे न पचती' त्यादौ कथं कर्तृकर्मान्यतरद्वारको न्वयः? नहि तत्र भूतलनिष्टाधिकरणत्वनिरूपक घटवृत्तिसत्ताश्रयत्व मभावप्रतियोगीत्येवं शाब्दबोधः संभवति। भूतले घटदशायामपि तथा प्रयोगापत्तेः। उक्ताश्रयत्वस्य घटातिरिक्तवृत्त्यभाव प्रतियोगित्वा, न्नञा घटनिष्टा भावलक्षणायामपि प्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिनोऽ-**प्रसिद्धेश्च, तद्वाक्या दनुभूयमानघटत्वावच्छिन्न प्रतियोगिताक भूतलनिष्टाभावबोधस्यापलापा-पत्तेश्च। नहि उक्तविधाभावो स्तीत्येतादृश एव बोधो नेन जनयितुं शक्यः। भूतलनिष्ठाधि-करणत्वस्य सप्तम्यर्थस्याऽ**भावद्वारकत्वा पत्त्या कर्तृकर्मान्यतर द्वारकत्वनियमभङ्गापत्तेः। घटस्य प्रतियोगितासंसर्गेणान्वये धात्वर्थाश्रयत्वाभावेन कर्तृत्वाभावा त्प्रथमानुपपत्तेश्च। भूतलवृत्तिघटप्रतियोगिताका भावस्य कर्तृत्वोक्तौ तस्यैकत्वाद् 'घटौ न स्तः' इति द्विवचनानुपपत्तेश्च। घटौ नास्तीति प्रयोगापत्तेश्च। घट एव प्रतियोगितासंबन्धेना भावान्वये अभावेच भूतलाधिकरणत्व मङ्गीकृत्य भूतलवृत्त्यभावप्रतियोगी घटोस्तीति शाब्दबोधाङ्गी-कारेतु अतीते भाविनि वा घटे अस्तीतिवर्तमानकालान्वयानुपपत्ते 'र्घटो नास्ती' ति प्रयोगानुपपत्तिः। एतेन — भूतलाधेयत्वा भाववान् घटोस्तीत्यपि शाब्दबोधः प्रत्युक्तः।**

नञ् समभिव्याहार स्थले कर्तृ कर्मान्यतर द्वारकत्वं सप्तम्यर्थान्वयस्य न घटत इत्याक्षिपति — **नन्विति** एव मपि = नञ समभिव्याहारे तस्य तद् द्वारकत्व संभवेपि, अन्वयः = सप्तम्यर्थस्य, ननु सत्ता धात्वर्थः, लक्षणया श्रयत्वमाख्यातार्थः, आख्यातार्थे घटस्यान्वयः, तद् द्वारको भूतल निष्टाधिकरणत्वस्यान्वयः संभवत्येव, आख्यातार्थेनञर्थान्वय इत्यत आह — **नहीति** तत्र = निरुक्त वाक्ये, **भूतल निष्ठेति** भूतल निष्टं यदधिकरणत्वं, तन्निरूपको यो घट, स्तद्वृत्तीत्यर्थः, **संभवतीति** एतादृश बोधसंभवे युज्येत तस्य तद् द्वारकोन्वयः, स एव न संभवतीति भावः। तथा बोध स्वीकारे बाधकमाह **भूतल इति** घट दशायामपि = तत्सत्ता दशायामपि। तथा प्रयोगापत्तेः = भूतले घटो नास्तीति प्रयोगापत्तेः। तामुपपादयति — **उक्ताश्रयत्व स्येति** भूतलनिष्टाधिकरणत्व निरूपक घटवृत्ति सत्ताश्रयत्वस्येत्यर्थः, **घटातिरिक्तेति**, घटादतिरिक्तो यः पटादिस्तन्निष्टेत्यर्थः, घटे भूतल निष्टाधिकरणत्व निरूपक घट वृत्ति सत्ताश्रयत्वं नास्तीत्यभावः प्रसिद्धः, तथाच घटातिरिक्त पटनिष्ठतादृशाभाव प्रतियोगित्वस्य घटे सत्वाद् घट सत्तादशायामपि भतले घटो

नास्तीति प्रयोगापत्तिः। नञा सामान्याभावस्य बोधनादिति भावः, **घटादिनिष्ठा भावेति** अभाव सामान्य बोधकस्य नञ स्तत्तत्पद समभिव्याहारे तत्तत्पदार्थनिष्ठाभावं बोधकत्वं लक्षणया स्वीक्रियते, तथाच निरुक्त घट वृत्ति सत्ताश्रयत्वं घट निष्टाभाव प्रतियोगीति तद्वाक्या द्बोधेन न निरुक्ताति प्रसङ्गः। घट निष्ठ सत्ताश्रयत्वे घट निष्टा भाव प्रतियोगित्वाभावादिति भावः, तर्हि तथैव स्वीक्रियता मत आह — **प्रतियोगितावच्छेदकेति** अभाव प्रतियोगि वृत्ति, प्रतियोगितावच्छेदकं वृत्तित्वम्, तदवच्छिन्न प्रतियोगिनः सत्ताश्रयत्वस्या प्रसिद्धिः, भूतले घटस्या भावादित्यर्थः,

किंचैव मनुभव विरोधोपीत्याह — **तद्वाक्यादिति बोधस्येति** भूतल वृत्तिर्घट प्रतियोगिताकोऽभाव इति बोधस्येत्यर्थः, ननु घटस्य प्रतियोगितया नञर्थेऽन्वयः स्वीक्रियते। तथाच घटत्वावच्छिन्नप्रतियोगिका भावो भूतल वृत्तिरित्यनु भवोपपत्ति,रत आह — **नहीति** उक्तविधाभावः = अधिकरणत्व निरूपक घटा भावः,। ननु कुतस्तद्बोधस्याशक्यत्व, मत आह — **भूतलनिष्टाधिकरणत्वस्येति** भूतल वृत्ति र्घटाभाव इति बोध स्वीकारादाह, **अभाव द्वारकत्वापत्त्येति** ननु तादृश नियमोनास्माभिः स्वीक्रियत एवे,त्यत आह — **घटस्येति** अन्वये = नञर्थान्वये, धात्वर्थ व्यापाराश्रयस्य कर्तृत्व मित्यङ्गीकारादाह — **धात्वर्थाश्रयत्वाभावेनेति प्रथमानुपपत्तेश्चेति** सति कर्तृत्वे तस्याभिहितत्वात्प्रथमया भाव्यम्, कर्तृत्वस्यैवाभावे प्रथमाया अनुपपत्तिरेवेति भावः। **भूतल वृत्तीति** सप्तम्यान्तार्थस्याधेयतया घटे, तस्य च प्रतियोगितयाऽभावे अभावस्य क्रियायामन्वयः, तथाच तादृशाभावस्या स्तिक्रियाकर्तृत्व, मतो न कश्चिद्दोष इति भावः, तस्य = अभावस्य। **द्विवचनानुपपत्तेरिति** विशेष्यगत संख्यामादाय तिङोत्पत्तव्यम्, प्रकृते विशेष्येऽभावे द्वित्वाभावाद् 'न स्त' इति द्विवचनं नोपपद्यत इति भावः, अत एवाह — **नास्तीति प्रयोगापत्तेश्चेति घट एवेति** घटस्य प्रतियोगिता संबन्धेनाभावेऽन्वयो न,किंतु नञर्थाभावस्यैव घटेन्वयः, अभावे च भूतलाधिकरणत्वस्यान्वयः, तथाच प्रतियोगिनो घटस्य विशेष्यत्वा त्तद्गतसंख्यामादाय तिङा मुत्पत्ते र्नदोष इति भावः। तदाह **भूतल वृत्त्यभावेति वर्तमानकालान्वयेति** भूते भाविनिवा घटे विरोधात् तिङुपात्त वर्तमानकालान्वयो नोपपद्यते, अभावस्य विशेष्यत्वेतु तस्य सार्वदिकत्वात्तदुपपत्तिः, परंतु पूर्वोक्त दोष तादावस्थ्यम्, अतः सेयमुभयत स्पाशा रज्जुरिव बाधत इति भावः, एतेन = चरमदोषेण,

**अथ-एतद्दोषपरिहारार्थं सप्तम्यर्थाधिकरणत्वस्य निरूपकतासंबन्धेन धात्वर्थे कालसंबन्धेन्वयः, तत्रैव लडर्थान्वयोपि, तस्य चाश्रयत्वे आख्यातार्थे, तस्य च प्रतियोगितासंसर्गेण नञर्थेऽभावे तस्य च प्रथमान्तार्थे घटादाविति भूतलनिष्टाधिकरणतानिरूपकवर्तमानकालसंबन्धाश्रयत्वप्रतियोगिका भाववान् घट इति शाब्दबोधः, भावनान्वय्य भावानुयोगिनि च संख्यान्वयो नञः समभिव्याहारस्थल-इति मतम्।**

**तदपि न, सप्तम्यर्थस्य साक्षाद्धात्वर्थान्वया व्युत्पत्तेः। अन्यथा कर्तृत्वाविवक्षायां चैत्रे पच्यते इति भावे प्रयोगापत्तेः। अत एव सप्तम्यर्थस्य धात्वर्थान्वये परम्परोपादानं कर्तृकर्मान्यतरद्वारकत्वोपादानं वा प्रामाणिकानाम्,**

प्रकारान्तर मवतारयति, **अथेति** एतद्दोष परिहारार्थम् = वचन भेदरूपदोष परिहारार्थम्। तस्य च = काल संबन्धस्य, तस्य च = आख्यातार्थाश्रयत्वस्य च। फलितं शाब्द बोधं दर्शयति **भूतलनिष्ठेति** घटौ स्तः, इत्यत्र द्विवचनस्य घटौ नास्तीत्येक वचनस्य सिद्ध्यसिद्धी निरूपयति। **भावानन्वयीति** भावनान्वयी योऽभाव स्तदनुयोगिनीत्यर्थः। अस्य सार्वत्रिकत्वा भावायाह — **नञः समभिव्याहारेति**

व्युत्पत्ति विरोधोत्र कल्पे इत्याह **सप्तम्यर्थस्येति** अन्यथा = तस्य साक्षाद्धात्वर्थान्वये। ननु परया कर्तृ संज्ञयाधिकरणत्वस्य बाधः स्यादित्यत आह — **कर्तृत्वाविवक्षायामिति** प्रयोगापत्तेः = साक्षात्क्रियाश्रयस्यापि

अधिकरणत्वात्। अत एव = एतद्दोषस्य वारणीयत्वादेव। पारम्पर्यमपि न येन केनापीत्याह — **कर्तृकर्मान्यतरेति** प्रामाणिकानां = भर्तृहरि प्रभृतीनाम्। यदाहुः — वाक्य पदीये तृतीय काण्डे साधन समुद्देशे—

कर्तृकर्मव्यवहिता मसाक्षाद्धारयत्क्रियाम्।
उपकुर्वत्क्रियसिद्धौ शास्त्रेधिकरणं स्मृतम्'' इति

**नच नञ्समभिव्याहारस्थले साक्षात्संबन्धेनान्वय व्युत्पत्तिकल्पनमिति केषाञ्चिदुक्तं युक्तम्, चैत्रे न पच्यत इति प्रयोगस्यैवमपि निवारयितु मशक्यत्वात्। आख्यातार्थ भावनासंख्यादे नञ्समभिव्याहारसत्त्वे न्यान्वय बोधकव्युत्पन्तरकल्पनापत्तेश्च**

**नचेति** सप्तम्यर्थस्य कर्तृकर्मान्यतर द्वारकत्वमेव क्रियान्वय इति नियम मङ्गीकुर्मः, परंतु लक्ष्यानुरोधात् नञ् समभिव्याहारे साक्षाद्धात्वर्थेन्वयं स्वीकुर्म इत्याशयः, तद्दूषणेनैवे दमपि दूषयति — **चैत्रे न पचतीति** एवमपि = नञ् समभिव्याहारे व्युत्पत्त्यान्तकल्पनेपि, व्युत्पत्त्यानन्त्यमपि स्यादित्याह **आख्यातार्थ भावनेति** आख्यातार्थ भावनायाः प्रतियोगिता संसर्गेण नञर्था भावान्वयं प्रति, संख्यायाश्च भावनान्वय्यभाव प्रतियोगिनि अन्वयं प्रति च भिन्नान्वय प्रयोजकस्य व्युत्पत्यन्तरस्य कल्पनापत्तिरिति भावः,

**एतेन — नञ्समभिव्याहारस्थले धातुना शक्यार्थाभावो लक्ष्यते, नञस्तु द्योतकत्वात्तात्पर्य-ग्राहकत्वमेव। सप्तम्यर्थस्य च व्युत्पत्तिविशेषकल्पनया धात्वर्थभूताभावप्रतियोगिनि शक्यार्थे कालसंबन्धादावन्वयः। भूतलनिष्ठाधिकरणतानिरूपकवर्तमानकालसंबन्धप्रतियोगिका भावाश्रयत्वं घटवृत्तीत्यादिकश्च शाब्दबोधः। भावनासंख्यादेश्च न व्युत्पत्त्यन्तरकल्पन-मिति केषाञ्चि दुक्त मपास्तम्। कल्पनागौरवस्य तदवस्थत्वात्, चैत्रे न पच्यते इति प्रयोगापत्तेश्च, गृहे न पचतीति प्रयोगानापत्तेश्च, गृहस्य साक्षात्पाकाधिकरणत्वा भावात्।**

एतेन = वक्ष्यमाण गौरवतादावस्थ्यदोषेण **शक्यार्थाभाव इति** अस्तेः काल संबन्धः शक्यार्थः तदभाव इत्यर्थः, तर्हि नञो वैयर्थ्यमत आह **नञस्त्विति व्युत्पत्तिविशेषेति** कार्य कारण भावान्तरेत्यर्थः, पर्यवसितं बोधं दर्शयति **भूतलनिष्ठेति** भावनाया नञर्थान्वयाय कार्यकारण भावान्तरा स्वीकारेण मम न गौरवमपीत्याह — **भावना संख्यादेश्चेति** एतेनेत्यस्यार्थमाह **कल्पना गौरवस्यतदवस्थत्वादिति** ननु लक्ष्यसिद्धये गौरवमपि सोढमेवेत्यत आह — **चैत्रे न पच्यत इति** इष्टप्रयोगा सिद्धिरपि दोष इत्याह — **गृहे न पचतीति** अयं च दोषः पूर्वोक्तेषु सर्वेष्वपि पक्षेषु बोध्यः,

**अथ तत्र कर्तृद्वारकान्वयस्वीकारेपि 'भूतले घटो नास्ती' त्यत्रैव सप्तम्यर्थस्य धात्वर्थभूता-भावप्रतियोगिकालसंबन्धेन्वय इति मतम्। ततो स्त्याख्यधातुघटितव्युत्पत्तिकल्पना दति-गौरवम्। गृहे न पचतीत्यादौ च गृहाधिकरणकचैत्रवृत्तिपाकस्या प्रसिद्धे र्न तदभावो धातुना बोधयितुं शक्यत इति तत्र शाब्दबोधानुपपत्ति स्तदवस्थैवे, तिचेत्।**

कल्पान्तरमाह — **अचेति कर्तृद्वारकेति** इदं च नञ समभिव्याहारे। तत्समभिव्याहारे आह **भूतले घटो नास्तीति** एव शब्देन तदसमभि व्याहृतस्य व्यावृत्तिः। वज्रलेपायितं दोष माह — **गृहे न पचतीति** अप्रसिद्धेः तादृशपाकस्याजननात्

**(महापूर्वपक्षस्य समाधानम्।)**

**न, 'इदानीं भूतले घटो नास्ती' त्यादावपि भूतलाधिकरणकघटवृत्तिसत्ताश्रयत्वं**

**घटनिष्ठाभावप्रतियोगीत्येव शाब्दबोधात्। प्रसिद्धं हि घटस्य भूतलाधिकरणत्वं कालान्तरे। अतो न प्रतियोगिनोऽप्रसिद्धिः,।न वा व्युत्पत्त्यन्तरकल्पनम्। तथाहि – सप्तम्यर्थस्य तावन्निरुक्तसंसर्गेणाख्यातार्थेन्वयः, प्रथमार्थस्यापि क्लृप्तसंसर्गेण तत्रैव, नञा परं लडाद्यर्थकालावच्छिन्नघटनिष्ठाभावलक्षणा, लडादिश्च तात्पर्यग्राहकमात्रम्। इदानींपदस्य च निपातत्वान्नञर्थान्वयेपि न क्षतिः। संभवतिहि उक्तसत्ताश्रयत्वाभाव एतत्कालावच्छेदेन घटे। एतस्मिन् काले एतद्भूतले घटाभावात्, अत एव भूतल वृत्तिघटाभावस्याप्यर्था दनुभूयमानस्य नापलापः।**

एवं बहुमुखेन पदार्थं परिशोध्य समादधाति – **नेति घटनिष्ठाभावेति** तेन भूतले घटसत्तादशायामपि भूतले घटो नास्तीति प्रयोगापत्तिर्नेति भावः। इदानीं पद संयोजनेन प्रतियोगिनोऽप्रसिद्धि र्वार्यत इत्याह – **प्रसिद्धं हीति** तदेतदाह – **अतो न प्रतियोगिनोऽप्रसिद्धिरिति** व्युत्पत्यन्तरकल्पनापि नेति लाघव मित्याह **न वा व्युत्पत्यन्तर कल्पनमिति** तदेवोपपादयति **तथाहीति** निरुक्त संसर्गेण = स्वनिरूपक घटवृत्तित्व संसर्गेण, क्लृप्तसंसर्गेण = कर्तृत्व संसर्गेण, तत्रैव = आख्यातार्थ एव। पूर्वस्माद्विशेष माह – **नञापरमिति लडाद्यर्थेति** पूर्वं नञा घटनिष्टाभावमात्रं लक्षितम्। तेन घट सत्तादशयां भूतले घटो नास्तीति प्रयोगो वारितः, परंतु प्रतियोग्यप्रसिद्धि स्तदवस्था, अतो नञा लकारार्थ वर्तमानत्वावच्छिन्नघटनिष्टाभावो लक्ष्यते। तेन सापि वारितेति भावः, नन्वेवं लडादि प्रयोग वैयर्थ्य मत आह – **लडादिश्चेति उक्त सत्ताश्रयत्वाभाव इति** भूतल निष्टाधिकरणत्व निरूपक घटवृत्ति सत्तश्रयत्वीय वर्तमान कालावच्छिन्न घटनिष्टाभाव इत्यर्थः, कालान्तर व्यावृत्तये आह **एतस्मिन् काले इति।** भूतलान्तरव्यावृत्तये आह – **एतद्भूतले इति** एतद्रीत्याश्रयणेनानुभवस्यापि नापलाप इत्याह – **अत एवेति** निरुक्तार्थ स्वीकारादेवेत्यर्थः,

**यत्रत्वधिकरणे कदापि न कर्त्रादिसत्ता प्रसिद्धा, तत्रापि न कर्तृ र्घटत्वादिना संसर्गघटकता, येन प्रतियोग्यप्रसिद्धिराशङ्क्येत, अपितु प्रकृत क्रियाश्रयत्वेनैव तथाच भूतलनिष्ठा धिकरणतानिरूपकवृत्तिवर्तमानसत्ताश्रयत्वं भूतलवृत्तिपरमाण्वादावेव प्रसिद्धम्। अयमेव प्रकारः पूर्वत्रानुसन्धेयः, एवं लडाद्यर्थस्यापि धात्वर्थान्वयो न त्यक्तो भवति, तात्पर्यग्राहकत्वस्यापि च स्वीकारात्, तत्कालावच्छिन्नघट निष्ठाभावप्रतियोगित्व मुक्तविधाश्रयत्वेऽव्याहृतम्।**

ननु यदा कदापि भूतले घट सत्वे तत्र कालान्तरे तदभावोबोधयितुं सुशकः, प्रतियोगिनः प्रसिद्धत्वात्, यत्रतु कदापि घट सत्ता न प्रसिद्धा, तत्र प्रतियोग्य प्रसिद्धितादवस्थ्य मेवेत्यत आह – **यत्रत्वधिकरणे इति** कर्त्रादि सत्ता = अधिकरणत्व निरूपक घटादिरूपकर्त्रादिसत्ता, कर्तुः = अधिकरणत्व निरूपकस्य कर्तुः, प्रकृतक्रिया = सत्तादिः प्रकृते योजयति – **तथाचेति भूतलनिष्टेति** तादृशाधिकरणत्व निरूपको यः परमाण्वादिः, घटादिरेवेतिनियमो न, योऽधिकरणत्व निरूपकः स एव गृह्यते, भूतले घट सत्ताया अप्रसिद्धत्वेपि परमाण्वादेः सत्ता त्तस्या अधिकरणत्व निरूपकत्व मक्षतमेव। तथाच भूतल निष्टाधिकरणत्व निरूपक वृत्ति सत्वाश्रयत्वं घट निष्टा भाव प्रतियोगीति बोधः संभवत्येवेति भावः, परमाण्वादावेवेत्येव शब्दः प्रसिद्ध मित्यनन्तरं योज्यः, तादृशसत्ताश्रयत्वं परमाण्वादौ प्रसिद्ध मेवेत्याशयः, अयमेव प्रकारः = घटत्वादिना संसर्गघटकत्व मस्वीकृत्य प्रकृत क्रियाश्रयत्वेनैव तत्वं स्वीकार्य मित्येष प्रकार एव, पूर्वत्र = प्रतियोगिनः प्रसिद्धत्व स्थलेपि, एवं हि सर्वत्रैक रूप्यं सिध्यतीति भावः, प्रयोजनान्तरमप्यस्तीत्याह – **एवमिति**, एवं हीत्यर्थः, न त्यक्तो भवति = कालस्य सत्तायामन्वयात्,

**यदितु अस्मिन् पक्षे घटस्या ख्यातार्थे साक्षात्संबन्धेनानन्वयात्कर्तृत्वानुपपत्ति राशङ्क्येत, ततोऽस्त्याख्यातस्यैवो क्ताश्रयत्वप्रतियोगिकोक्तविधाभावे सप्तमी – नञुभयसमभिव्याहारे**

**लक्षणा, नञ्पदं च तात्पर्यग्राहकमात्रम्। तस्मिंश्चा भावे घटस्याधेयत्वसंबन्धेनैवान्वया न्नव्युत्पत्त्यन्तर कल्पना। उक्तविधाश्रयत्वत्वावच्छिन्नप्रतियोगिताकाभावश्च घटे न घटस्य भूतलवृत्तितादशाया मित्यर्था दृभूतलाधिकरण कघटा भावबोधः।**

अत्रापि कल्पेऽपरितुष्यन् कल्पान्तरानुसारणे बीबं प्रदर्शयति **यदित्विति** अधिकरणत्व निरूपकं यत्परमाण्वादि तस्यैव साक्षाद्वात्वर्थाश्रयत्वा दाह — **साक्षात्संबन्धेनान्वयादिति** अस्त्याख्यातस्यैव = अस धातूत्तराख्यातस्यैव, **उक्ताश्रयत्वेति** भूतल निष्टाधिकरणत्व निरूपकं यत् तद्वृत्ति सत्ताश्रयत्व प्रतियोगिक तत्कालावच्छिन्न (घट) निष्टाभावे इत्यर्थः, तस्मिन्नभावे = आख्यात लक्षितेऽभावे। **न व्युत्पत्यन्तर कल्पनेति** आख्यातार्थे सर्वेषां पदार्थानामन्वयनियामक कार्यकारण भावेनैवात्रापि निर्वाहातुकार्य कारणभावोऽतिरिक्तो न कल्पनीय इति न गौरवमिति भावः। अनु भवस्यापलापोपि नास्तीत्याह — **उक्तविधेति** घटस्य भूतल वृत्तितादशायां घटे तादृश प्रतियोगिताका भावो नेत्यत,अर्थात् = फलतः,

**एवं 'वायौरूपं नास्ति, 'ह्रदेवह्निनास्ति, 'जातौसत्ता नास्ती' त्यादिप्रयोगाअप्युपपादनीयाः। नच समवायसंबन्धेन जातिवृत्ते रप्रसिध्द्या समवायसंबन्धावच्छिन्न जातिनिष्ठा धिकरणता-निरूपक वृत्तिविद्यमानकालसंबन्धाश्रयत्वाप्रसिद्धेः कथं तदभावस्य सत्तायां बोध इति वाच्यम्। जातावपि साक्षात्स्वरूपसंबन्धेन वृत्तेः प्रसिद्धत्वात्, सत्तायामपि निरुक्तसामान्याभावोपपत्तेः**

सुतरा मप्रसिद्ध प्रतियोगिक स्थलेषूपपत्तिं दर्शयति — **एवमिति वायौरूपं नास्तीति** वायुनिष्ठाभाव-निरूपित निरूपकता संबन्धावच्छिन्न प्रतियोगितावदित्यर्थः, अन्यथा रूप निष्ठ विद्यमानत्वाश्रयत्वं कदापि वायौ न प्रसक्तमिति वायुनिष्ठा भाव प्रतियोगित्व विधानेऽप्रसक्त प्रतिषेधापत्तिः स्यात्, वायु निष्टाधिकरणता निरूपकं स्पर्शादि तद्वृत्ति सत्ताश्रयत्वं रूपनिष्टाभाव प्रतियोगीति बोधः, **ह्रदे वह्निर्नास्तीति** ह्रद निष्टाधिकरणतानिरूपकं जलादिकं तद्वृत्ति सत्तश्रयत्वं वह्निनिष्टाभाव प्रतियोगीति बोधः, **जातौ सत्ता नास्तीति** सत्ता जातिवृत्ति संबन्धिनी अन्योन्याभावीये समवाय संबन्धावच्छिन्न विद्यमानत्वसंबन्धिनी प्रतियोगित्वाश्रयत्वे इति बोधः, यद्वा सत्तानिष्ठ समवाय संबन्धावच्छिन्न विद्यमानत्वाश्रयत्वं जातिवृत्ति निष्ट भवनाश्रयत्व प्रतियोगिकान्योन्याभाव वदिति बोधः, **नचेति** जातौ सत्ता समवायेन नास्तीत्यर्थाश्रयणेनायं ग्रन्थः, समवायेन सत्ता जातौ नास्तीति नार्थः, किंतु संबन्धान्तर मादायायं प्रयोग इत्याशयेन समाधत्ते, **साक्षात्स्वरूपसंबधेनेति**

**'जातौ समवायेन सत्तानास्ती' तिप्रयोगस्तु निरुक्ताश्रयत्वस्यैव व्यधिकरणसंबन्धावच्छिन्ना भावमादायो पपादनीयः। समवायेनेत्यस्या ख्यातार्थेऽभावे स्वावच्छिन्नत्व संबन्धेनान्वय इति न काप्यनुपपत्तिः,**

ननु समवायेन जातौ सत्ता नास्तीति समवायो ल्लेखन स्थले का गतिः। नचायं प्रयोगोऽयोग्य एवेति वाच्यम्। सर्वै रादृतत्वा दित्यत आह — **जातौ समवायेन सत्ता नास्तीति प्रयोगस्त्विति व्यधिकरण संबन्धावच्छिन्नाभावमिति** अत्राधुनिकाः केचन पण्डिता एवं व्याचक्षते — जाति निष्टाधिकरणता निरूपक वृत्ति विद्यमानकाल संबन्धाश्रयत्व निष्टा या समवायसंबन्धावच्छिन्नाधिकरणता वृत्तिविद्यमानकाल संबन्धाश्रत्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभाव मादायेत्यर्थः, प्रतियोगितावच्छेदककोटौव्यधिकरणस्य समवाय संबन्धस्य घटकत्वा दभावे व्यधिकरण संबन्धावच्छिन्नत्वोक्तिरिति

तदपरे न क्षमन्ते — तथाहि — समवाय रूप व्यधिकरण संबन्धघटित समवाय संबन्धावच्छिन्नाधि-करणतावृत्ति विद्यमान काल संबन्धाश्रयत्वं जातिनिष्टाधिकरणता निरूपक वृत्तिविद्यामान

संबन्धाश्रयत्वरूप प्रतियोग्य वृत्ति धर्मः, अतः समवाय घटित तादृश धर्मावच्छिन्नाभावो व्यधिकरण धर्मावच्छिन्नाभाव एव भवेत्, न तु व्यधिकरण संबन्धावच्छिन्ना भावः। अतो नेयं समन्वय रीतिः साधीयसी,

अत एवं व्याख्येयम्, **स्वावच्छिन्नत्व संबन्धेनेति** अयमार्थः – जति निष्ठाधिकरणता निरूपक सत्ताश्रयत्वं समवायसंबन्धावच्छिन्नाधिकरणतानिरूपकवृत्तिसत्ताश्रयत्व प्रतियोगिकस्वरूपसंबन्धेन नास्तीत्यभावो लक्षणयाऽऽख्यातार्थः, जाति निष्ठाधिकरणता निरूपकं जातौ स्वरूप संबन्धेन वर्तमान (मभावादिकं) भवति, जातौ समवायेन कस्याप्यभावात्, जाति निष्ट समवाय संबन्धावच्छिन्नाधिकरण–तानिरूपकस्या प्रसिद्धेः, तादृश पदार्थ निष्ट सत्ताश्रयत्वं स्वरूप संबन्धावच्छिन्नाधिकरणता निरूपक वृत्ति सत्ताश्रयत्व प्रतियोगिक स्वरूप संबन्धेनैव वर्तेत, नतु समवाय संबन्धावच्छिन्नाधिकरणता घटित पूर्वोक्त संबन्धेन। अतः स व्यधिकरण संबन्धः। स्वावच्छिन्नत्व संबन्धेनेत्यस्य समवायघटित संबन्धावच्छिन्नत्वे नेत्यर्थः। निरुक्त प्रतियोगितावच्छेदक संबन्धे समवायस्यापिघटकतया तादृश प्रतियोगितायाः समवायवच्छिन्नत्वम्, यद्वा जातिनिष्ठाधिकरणतानिरूपकवृत्तिसत्ताश्रयत्वप्रतियोगिकाभाव आख्यातार्थः, तत्र समवायेनेत्यस्य स्वावच्छिन्नत्वसंबन्धेनान्वयः, तादृशाश्रयत्वनिष्ठसमवाय संबन्धावच्छिन्न प्रतियो–गिताका भावः, सत्ता निष्ट आख्यातेन बोध्यते, एवं च यथा श्रुतार्थक एवायं ग्रन्थः इति।

प्रकृतग्रन्थस्याय माशयः – जातौ समावायेन सत्ता नास्तीत्यत्र, यद्यपि जाति निष्टाधिकरणतानि–रूपकसमवायसंबन्धावच्छिन्नाधेयताश्रयत्व सत्तानिष्टाभावप्रतियोगीत्येव शाब्द बोधः स्वीकार्यः, जातौ कस्यापि पदार्थस्य समवायसम्बन्धेना भावेन जाति निष्टाधिकरणता निरूपक समवायसंबन्धावच्छिन्नाधे–यताश्रयत्वं तत्र न प्रसिध्यति, तथापि समवायसबन्धावच्छिन्नत्वमाधेयतायां परित्यज्याभाव प्रतियोगिताया समवायसंबन्धावच्छिन्नाधेयताश्रयत्वप्रतियोगिक स्वरूपसंबन्धावच्छिन्नत्वं निवेश्यते। तथाच जाति निष्टाधिकरणता निरूपकाधेयताश्रयत्व सत्तानिष्टसमवाय संबन्धावच्छिन्नाधेयताश्रयत्वप्रतियोगिकस्व–रूपसंबन्धावाच्छिन्न प्रतियोगिताको योऽभाव, स्तादृशाभाव प्रतियोगि इति शाब्दबोधः, अथवा जातिनिष्टाधिकरणता निरूपकाधेयताश्रयत्व सत्तानिष्टाभावीय समवाय संबन्धावच्छिन्नाधेयताश्रयत्व–प्रतियोगिकस्वरूपसंबन्धावाच्छिन्न प्रतियोगितावदित्याकारको बोधः, मूले "समवायेनेत्यस्याख्यातार्थेऽभावे स्ववच्छिन्नत्वसंबन्धेनान्वयः" इत्यस्यायमेवार्थ इत्युपवर्णयितुं शक्यते-इति,

**एवं 'गृहे चैत्रो न पचती' त्यादावपि पूर्ववदेव सर्वैः प्रकारै र्बोधोपपादनं द्रष्टव्यम्, तत्रत्वयं विशेषः – चैत्रस्यगृहस्थत्वे पाकाश्रयत्वाभाव मादाय, पाकाश्रयत्वे गृहस्थत्वाभाव मादाय, उभया भावे चो भयाभाव मादाय विशिष्टाभावः संपादनीयः। तत्तद भावबोध एवच तात्पर्यभेदेन फलम्।**

पूर्वपक्षे गृहे न पचतीत्यादौ गृहाधिकरणक चैत्र वृत्ति पाकाप्रसिध्या तदभाव बोधनं न घटत इत्युक्तम्, तत्समादधाति, **एवमिति सर्वैः प्रकारैरिति।** पचतीति लड् रूपतात्पर्यग्राहकात् नञा लडाद्यार्थ कालावच्छिन्न चैत्र निष्टाभावो लक्ष्यते, तेन कालान्तरीय चैत्र वृत्ति पाकाश्रयत्व मादाय प्रतियोगिप्रसिद्धिः, तथाच गृहनिष्टाधिकरणता निरूपकवर्तमान कालावच्छिन्न चैत्रवृत्तिपाकाश्रयत्वं चैत्रनिष्टाभाव प्रतियोगिति बोधः, यद्वा गृहनिष्टाधिकरणता निरूपकं यत् स्थाली तण्डुलादि तद्वृत्ति पाकाश्रयत्वं चैत्र निष्टा भाव प्रति योगीति बोधः यद्वा तादृशाभाव पर्यन्त माख्यातस्य लक्षणा, अत्रपक्षे चैत्रस्य कर्तृत्व सिद्धि रविकलेति बोध्यम्, तत्र तु = गृहे चैत्रो न पचतीत्यत्र, तु। विशेषः = वायौ रूपं नास्तीत्याद्यपेक्षया, **गृहस्थत्वे इति** चैत्रो गृहे आस्ते, परंतु स पाककृतिमान् न, **पाकाश्रयत्वे इति** चैत्रः पाकं करोति परंतु गृहे न,

उभयाभावे = चैत्रः पाकं न करोति, गृहेपि नास्ति, विशिष्टा भावः = आद्ये पाकाश्रयत्वा भावमादाय द्वितीये गृहस्थत्वा भाव मादाय तृतीये पाकाश्रयत्वं गृहस्थत्व भावं चादाय गृह निष्ठाधिकरणता निरूपक चैत्र वृत्ति पाकाश्रयत्वाभाव उपपादनीयः। एतादृश विशिष्टाभाव संपादनस्य फलमाह – **तत्तदभावमिति** पाकाश्रयत्वाद्यभाव बोध एवेत्यर्थः। तात्पर्य भेदेन = चैत्रस्य ग्रहस्थत्वेपि पाकाद्यकरण मित्यादि तात्पर्य भेदेन, प्रश्नानुरोधेन तात्पर्यभेदः,

**एवं स्थाल्यां तण्डुलं न पचति चैत्र इत्यत्रापि तण्डुलवृत्तित्वा भावे, तण्डुलस्य पाककर्मत्वाभावे, पाकस्य चैत्र वृत्तित्वाभावे च तात्पर्यभेदो द्रष्टव्यः।**

**तात्पर्यग्राहकान्तराभावे तु स्थालीपदवैयर्थ्यभिया आद्याभाव एव, झटित्यर्था त्प्रतितेः। अत एव–**

**"न जीवपितृकः कुर्या त्तिलैः कृष्णै श्च तर्पणम्" (स्मृत्यर्थसारे)इत्यादौ कृष्णत्वाभाव एव तात्पर्यम्। न तु तिलतर्पणाभावादाविति व्याचक्षते वृद्धाः।**

अधिकरणत्वस्य कर्मत्व द्वारकान्वय स्थले आह – **एवं स्थाल्यामिति तण्डुल वृत्तित्वाभावे इति** शाकादि पचन काले अयं व्यवहारः। **तण्डुलस्य पाक कर्मत्वाभावे इति** तण्डुलस्य गृहस्थापन मात्र दशायामयं व्यवहारः, **पाकस्य चैत्रेति** चैत्रान्यमैत्रादेः पाककर्तृत्व दशायामयं व्यवहारः, अत्रापि प्रश्नानुरोधेन तात्पर्यावगमः, प्रकरणादपि तदवगमः, तात्पर्यग्राहकान्तरा भावे = प्रश्न प्रकरणाद्यभावे। प्रकृत वाक्यानुरोधेनाह – **स्थालीपदेति** आद्याभाव एव = प्राथमिक पदार्थाभाव एव। अत एव = निरुक्तार्थ स्वीकारादेव। इत्यादावित्यादि पदेन – "न जीवपितृकः कृष्णैस्तिलै स्तर्पणमाचरेत्", इत्यादेरेतत्समानार्थकस्य ग्रहणम्, वृद्धाः = निर्णयसिन्धुकाराः।

**"नान्तरिक्षे ग्निश्चेतव्य" इत्यादौतु सप्तम्यर्थस्य कर्तृकर्मद्वारकत्वासंभवेन प्रतियोग्यप्रसिध्द्यापत्ते रगत्या नञ्सप्तम्यन्ताभ्या मन्तरिक्षवृत्त्यभावलक्षणया तत्प्रतियोगित्व माख्यातार्थे नूद्यत इति तस्य नित्यानुवादता। तत्र सप्तम्यर्थस्य स्वातन्त्र्येणा न्वयाभावादेव न व्युत्पत्त्यन्तरकल्पना। अत एवार्थवादवाक्यलक्ष्यप्राशस्त्यस्या प्यनयैव व्युत्पत्त्या ख्यातार्थभावनान्वयः।**

"पृथिव्यामग्निश्चेतव्यो, नान्तरिक्षे न दिवी" ति तैत्तिरीयसंहिता वाक्यं प्रकृतो प्रयोगितयाऽर्थतो दर्शयति **नान्तरिक्षेऽग्निश्चेतव्य इति** अन्तरिक्ष निष्टधिकरणता निरूपकत्वं नाऽग्नेः, कदाप्यग्ने स्तदवृत्तेरिति भावः, आख्यातार्थे = चेतव्य इति पदोपात्त चयन भावनायाम्, तद्भावनायामन्तरिक्ष वृत्त्यभाव प्रतियोगित्वस्य सिद्धत्वादाह, **अनूद्यत इति** तस्य = तत्रत्या ख्यातस्य, तत्र = भावनायाम्, सप्तम्यर्थस्य = अन्तरिक्ष वृत्त्यभावाधिकरणत्वस्य। स्वातन्त्र्येण = साक्षात्,

**'अन्तरिक्षे घटो न पचती' त्यादौ च सप्तम्यन्तनञ् धातुभि रन्तरिक्षवृत्तित्वरूपव्यधिकरण धर्मावच्छिन्नप्रतियोगिताकपाकाभावो लक्ष्यते, आख्यातेन चाश्रयत्वम्। तथाचोक्तविधाभावाश्रयत्वं घटवृत्तीति शाब्दबोधः। अतो त्रापि न सप्तम्यर्थान्वय इति न कुत्रापि सप्तम्यर्थस्य कर्तृकर्मान्यतर द्वारकत्वव्यभिचारः।**

अप्रसिद्धप्रतियोगिकं स्थलान्तरं निर्दिशति, **अन्तरिक्षे घट इति** व्यधिकरण धर्मावच्छिन्न

प्रतियोगिताकाभावं स्वीकुर्वतां सोन्दडादीनामेतेनाह – **अन्तरिक्ष 'वृत्तित्वेति** पाकस्यान्तरिक्ष वृत्तित्वं व्यधिकरण धर्मः, **उक्तविधेति** अन्तरिक्ष वृत्तित्व रूप धर्मावच्छिन्न प्रतियोगिताकाभावाश्रयत्व मित्यर्थः।

**यत्र तु न सप्तम्यन्तपदसमभिव्याहारः, चैत्रो न पचतीत्यादौ, तत्र नञर्थस्य चैत्रवृत्त्यभावस्य चैत्रवृत्तिकृतौ प्रतियोगितासंबन्धेनान्वयः। अथवा वर्तमानपाकानुकूल कृत्यभाव माख्यातेन लक्षयित्वा तस्मिं 'श्चैत्रान्वय इत्यादि बोध्यम्।**

सप्तम्यन्ता समभिव्याहारे बोध प्रक्रियां दर्शयति **यत्रत्विति** लक्षणाश्रयणेनाह – **चैत्र वृत्यभावस्येति अन्वय इति** तथाच चैत्र वृत्ति कृतिः प्रतियोगिता संबन्धेन चैत्र वृत्त्यभाव प्रतियोगिनीति बोधः,। लाघवादाह – **अथवेति**

**एवं लिङादिसमभिव्याहारेपि 'चैत्रो न पचे' दित्यादौ यत्र चैत्रवृत्तिकृतिप्रसिद्धि, स्तत्रतस्यां ''न कलञ्जं भक्षये'' दितिवदेव विध्यर्थस्य स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेणैव नञर्थस्यापि चैत्र वृत्यभावस्य प्रतियोगितासंसर्गेणान्वयः। अप्रसिद्धौ त्वाख्यातेन पाकानुकूलकृत्यभावं लक्षयित्वा तस्मिन् विध्यर्थस्य प्रयोज्यत्वेन चैत्रस्य चाधेयत्वेनान्वय इति सर्व मनवद्यम्।**

नञ् समभिव्याहारे विधिस्थले बोध प्रकारमाह – **एवं लिङादीति** यत्र = स्थले, तस्यां = कृतौ **अन्वय इति** तथाच चैत्रो न पचेदित्यतः, स्वप्रयोज्याभाव प्रतियोगित्व संसर्गेण प्रेरणावती प्रतियोगिता संसर्गेण चैत्र वृत्याभाववती च पाक कृतिरिति शाब्द बोधो जायते, अप्रसिद्धौतु = चैत्र वृत्तिकृते रप्रसिद्धौतु। **अन्वय इति** तथाच प्रयोज्यत्व संबन्धेन प्रेरणावान् पाकानुकूल कृत्य भावश्चैत्र वृत्तिरिति ततो बोधः। बोध प्रक्रियामुपसंहरति – **सर्वमनाकूलमिति**

## (अधिकरणत्वस्य त्रैविध्यम्।)

**तच्चा धिकरणत्वं त्रिविधम् – औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं चेति। कटे आस्ते, घटेज्ञान मस्ति, मोक्षे इच्छास्ति, सर्वस्मिन्नात्मास्ति। तिलेषु तैल मस्ति। उपश्लेषः = सावच्छिन्नवृत्तित्वम्। वैषयिकम् = विषयतासंबन्धावच्छिन्नम्। अभिव्यापकम् = अवच्छेदकावच्छेदेन वृत्तिमत्।**

एवमधिकरणत्वं निरुच्य तद्विभजते – **तच्चाधिकरणत्वमिति त्रिविधमिति** एतच्च ''संहितायाम्'' 6-1-72 इति सूत्रे भाष्ये स्पष्टम्, औपश्लेषिकमुदाहरति' **कटे आस्ते इति** द्वितीयमुदाहरति **घटे ज्ञानमिति** ज्ञानस्य विषयतया घट वृत्तित्वा दिति भावः। सर्व प्रसिद्ध मुदाहरणमाह – **मोक्षे इति** तृतीय मुदाहरति **सर्वस्मिन्निति** सर्वप्रसिद्धं दर्शयति, **तिलेष्विति**, औपश्लेषिकं लक्षयति **उपश्लेष इति** श्लेषस्य = मुख्यस्य सर्वाधारव्याप्तिरूपस्य उप = समीपम्, यत् आधारीययत्किञ्चिदवयवव्याप्तिरूपं, स उपश्लेषः, तदाह **सावच्छिन्न वृत्तित्वमिति** अवच्छिन्ना च सा वृत्तिश्च अवच्छिन्नवृत्तिः, तथा सहिता सावच्छिन्नवृत्तिः, तस्याभावः। तन्निरूपित मधिकरणत्वम्, तत्तन्निरूपकत्व मेवाधिकरणत्वामिति आधेयता त्रैविध्येनाधिकरणताया स्त्रैविध्यंसिध्यतीति भावः। उपश्लेषेण कृत, मौपश्लेषिकम्, यत्किञ्चिदवयवावच्छेदेनाधारस्याधेयेन व्याप्तिः उपश्लेषस्तत्कृतमिति यावत्, अनयारीत्या, ''इकोचणचि'' 6-1-77 इत्यादौ अचीत्यादिकं नौपश्लेषाधिकरण सप्तम्यन्तं, किंतु सत्सप्तम्यन्तं मिति लभ्यते 'एतच्च' यस्यचभावेने,त्यस्य व्याख्याने मूल एवस्पष्टं भविष्यंतिं।

**"सप्तम्यधिकरणे चे" 2-3-36 ति चकाराद् दूरान्तिकार्थेभ्योपि सप्तमी। वनस्य दूरे, अन्तिके वा ग्रामः। दूरे = दूरत्वावच्छिन्नप्रदेशे। प्रतियोगित्वं षष्ठयर्थः। यद्यप्यत्राधिकरणत्वादेव सप्तमी प्राप्यते, तथापि द्वितीयादिविभक्तित्रयेण विशेषविहितेन बाधप्रसक्तौ प्रतिप्रसवार्थश्चकारः**

"सप्तम्यधिकरणे चे" ति सूत्रस्थस्य चशब्दस्य फलमाह — **चकारादिति सप्तमीति** प्रातिपदिकार्थमात्र इति शेषः, सप्तम्युपपत्तये आह, **दूरे =दूरत्वावच्छिन्न प्रदेशे इति** चकारस्य वैयर्थ्य माशङ्कते **यद्यपीति** परिहरति **तथापीति** द्वितीयादीत्यादि पदेन पञ्चमी तृतीययो र्ग्रहणम् "द्वारान्तिकार्येभ्यः" इति सूत्रे विशिष्योपादानादाह — **विशेषविहितेनेति**

**एवं "क्तस्ये न्विषयस्य कर्मण्युपसंख्यान" मिति वार्तिकाद् इन् = इन्नन्तशब्दः, विषयः = वृत्ति भूमिर्यस्य क्तान्तस्य यदुपरि इनुशब्द इत्यर्थः। तादृशक्तप्रत्ययस्य वस्तुतो यत्कर्म, तस्मिन् त्सप्तमी। अधीती व्याकरणे। अधीत मनेनेति विग्रहः। "इष्टादिभ्यश्च" 5-2-88 इति कर्तरि इनिप्रत्ययस्य विधानात्। एतस्य च तद्धितत्वेन 'कृतपूर्वी कट' मितिवद् द्वितीयायां प्राप्तायां कर्मणि सप्तमीविधि स्तद्बाधेन। शाब्दबोधश्च तद्वदेव। कर्मचात्र मुख्यमेव। नतु मासादिः। तेन 'मास मधीती व्याकरणे' इत्यत्र काले द्वितीयैव।**

लाक्षणिकं कात्ययनवचनं व्याचष्टे — **एवं क्तस्येति** वार्तिके इन् शब्दः "प्रत्यय ग्रहणे तदन्तग्रहण" मिति परिभाषया तदन्तपर इत्याशयेनाह — **इन् = इन्नन्त शब्द इति** विषय शब्दार्थमाह — **विषयः = वृत्ति भूमिरिति** अत्र वृत्ति शब्दः "समर्थः पदविधि" 2-1-1 रिति सूत्रे "परार्थाभिधानं वृत्ति" रिति कात्यायन कथित परार्थाभिधायकत्व रूप वृत्तिपरः। भूमिशब्द आश्रयपरः। तथाच यत्क्तान्त निरूपित परार्थाभिधायकत्वाश्रय इन्नन्तः, तत्क्तार्थ कर्मणि सप्तमीति वार्तिकार्थः। अयमर्थः — अधिपूर्वकाद् इङ् अध्ययन इति धातोः क्तप्रत्यये अधीतमिति शब्दो निष्पद्यते, क्तस्य कृत्प्रत्ययतया तत्र परार्थाभिधायकत्वरूप एकार्थी भावः कल्पनीयः। एकार्थी भाव एव वृत्ति शब्देनो च्यते। तथाचा "धीतं व्याकरणमनेने" ति प्रयोगः सिध्यति। अधीत शब्दात्तद्धित इन् प्रत्ययः प्रवर्तितश्चेत् तदा एकार्थी भावो न क्तान्तमात्रे पर्यवस्यति, किंतु तद्धितान्ते। तथाच क्तान्त निरूपित परार्थाभिधायकत्व रूपैकार्थी भावविश्रन्ति स्थान मिन्नन्तः शब्दः, तादृशक्तान्तार्थस्य कर्मणि सप्तमीत्यर्थो वार्तिकस्य। इन् विषयो यस्येति बहुव्रीहिः, क्तान्तो वार्तिकोपात्तोऽन्यपदार्थः-इति। तदाह **यस्येति** वार्तिके क्तशब्दोपि तदन्तपर इत्याह **क्तान्तस्येति** फलितार्थमाह — **यदुपरि इन् शब्द इति** यस्य क्तान्तस्योपरि तद्धित इन् प्रत्यय इत्यर्थः। **तादृशेति** इन्विषयेत्यर्थः। तेन "कृत पूर्वीकट" मित्यादौ नानेन कर्मणि सप्तमी, इन्नन्तघटक क्तान्तार्थस्य कर्मणीति वार्तिकार्थ स्वीकारे तु "कृतपूर्वीकट" मित्यत्रापि सप्तम्यापत्तिरिति भावः। एवं च यदर्थाभिधायकैकार्थी भावरूप वृत्त्याश्रय इन्नन्त स्तथाभूतस्य क्तान्तस्य कर्मणि सप्तमीति निष्कृष्टार्थो वार्तिकस्येति बोध्यम्। अत बहुव्रीह्याश्रयणं हरदत्ताद्यनुरोधेन। वस्तुतस्तु इनो विषयस्येति षष्टी तत्पुरुषः स्वीकार्यः, प्रकृतित्वेन सः (क्तान्तः) इनो विषयः। क्तान्त प्रकृतिकेन्नन्तस्येत्यर्थः। **बहुव्रीहिस्तु** न युक्तः, तत्पर्यन्तानु धावने फला भावात्, विषयशब्दस्य देशवाचकत्वेन प्रसिद्धत्वात्प्रकृति परत्वेन लाघवाच्च। स्पष्टमधिकमन्यत्रे-ति बोध्यम्। उदाहरणे नव्यवैयाकरणोक्तदिशा न भावे क्तः, किंतु कर्मण्येवेत्याशयेनाह — **अधीतमनेनेति विग्रह इति** अनेनेति कर्तृ तृतीयान्त इति भावः, तत्र प्रमाणं दर्शयति **इष्टादिभ्यश्चेति** अत्र सूत्रे "श्राद्ध मनेन भुक्तमिनिठनौ" 5-2-85 इति सूत्रा दनेनेति, "पूर्वादिनि" 5-2-86 इति सूत्राद्, इनिरिति चानुवर्तते। तथाच इष्टादिभ्यश्च = इष्टादिगण पठित शब्देभ्यश्च अनेनेत्यर्थे इनि

प्रत्ययः स्यादिति सूत्रार्थः, तद्गणे अधीत शब्दः पठितः। तदह – **कर्तरि इनि प्रत्ययस्य विधानादिति** ''कर्तृकर्मणोः कृती'' 2-3-65 ति सूत्रे कृद्ग्रहणसामार्थ्यादत्र षष्टचा अप्राप्त्या कर्मणि द्वितीया प्राप्ता तद्बाधकतयानेन सप्तमी विधान मित्याह – **एतस्येति** अधीतीत्यस्येत्यर्थः तद्धितत्वेन = तद्धितान्तत्वेन, कृद्ग्रहणबलात् षष्टचा अप्रवृत्तौ दृष्टान्तमाह **कृत पूर्वी कटमिति वदिति** षष्ठया अप्राप्त्या द्वितीयायां प्राप्तायामित्याशयः, तद्बाधेन = द्वितीयाया बाधेन। **तद्वदेवेति** अत्र कर्मत्वत्वेन कर्मत्वं सप्तम्यर्थः। तस्य च न धात्वर्थेन्वयः, कारकाणां तत्रान्वयस्या व्युत्पन्नत्वात्। नापि क्तार्थे, तेनभिहितत्वात्प्रथमापत्तेः, किंतु तद्धितर्लक्षितायां कृतावन्वयः। तथाच स्वनिरूपक धात्वर्थानुकूलता संबन्धेन व्याकरण कर्मत्व विशिष्टा या कृति, स्तद्वन्निष्टं सत्ताश्रयत्वमिति बोध इति भावः। एवमेव परिगणिती याज्ञिक्ये, आम्नाती च्छन्दसीत्यादावपि बोधः। ननु कालादि कर्मणा सकर्मकाणामपि द्विकर्मकताया भाष्यसंमतत्वाद् द्वितीयावत्सप्तम्यपि काल कर्म वाचका त्कुतो, नेत्यत आह – **कर्मचेति** अत्र = सप्तमी विधायके वार्तिके। **मुख्यमेवेति**, अस्य गृह्यत इति शेषः। **नतु मासादि रिति** अतः कर्मत्वेपि न मासादौ सप्तमी त्याशयः। अत्र चान्तरङ्ग बहिरङ्ग भाव एव बीजम्। तथाहि-कालभावादि कर्म अप्रधानम्, द्रव्यकर्म ओदन व्याकरणादि तु प्रधानम्, 'कालस्याधारत्वेन द्रव्य द्वारा क्रिया संबन्धात्, किंच कठिन पाक्यस्य महापरिमाणस्य बहु संख्यस्य च चिरेण पाकः, अन्यस्याचिरेणेति द्रव्य कर्म पर्यालोच्य क्रियासु काल योग इति स बहिरङ्गः। अपि च साधन संबन्धे जाते क्रियायाः परिच्छेदकबाह्यकालाकाङ्क्षेति स बहिरङ्गः। किंच द्रव्यकर्मणोऽन्त-रङ्गत्वं च धात्वन्तरार्थानङ्ग स्वार्थ कर्मत्वेन। कालादि कर्मतु न तादृश मिति तस्य बहिरङ्गत्वमेवे ति। तेन = प्रकृत वार्तिकेन्तरङ्गत्वाद् द्रव्यरूपमुख्य कर्मण एव ग्रहणेन। **द्वितीयैवेति इदंच** पृकृत वार्तिकस्थ कैयटानुरोधेन। वस्तुतस्तु – मासमधीते इत्यत्र द्वितीयाया इवात्र सप्तम्या अप्रवृत्तौ मानाभावः। अन्तरङ्गबहिरङ्गभावस्तु तयोः कर्मणोः प्राधान्याप्रधान्यबीजभूतो लकारादि व्यवस्थाफलक एव न तु विभक्ति प्रयोजकत्वं तस्य। तथासति कालकर्मवाचकाद् द्वितीयाया अप्यनापत्ति-रिति बोध्यम्।

**एवं ''साध्वसाधुप्रयोगे चे'' ति वार्तिकात् साधुः कृष्णो मातरि भवति, असाधुर्मातुले इत्यत्र सप्तमी। अत्र वैषयिकत्वादिना धिकरणसप्तम्यैव सिद्धौ पुनर्वचनं षष्ठीनिषेधार्थम्।**

तादृशं वार्तिकान्तरं व्याचष्टे – **एवं साध्वसाध्विति वार्तिकादिति** साधुशब्दयोगेऽसाधुशब्दयोगे च सप्तमी वक्तव्येति वार्तिकार्थः। ''अत्र साधुत्वासाधुत्वयो र्मात्रादि विषयत्वेपि क्रियाया अभावा दधिकरणत्वाभावा द्वचन'' मिति हरदत्त दीक्षितादुक्त मयुक्तमिति सूचयन् क्रियापद घटित मुदाहरति, **मातरि भवतीति** असाधुः पितरीति काशिकायामुदाहृतम्। परंतु तन्नयुक्तम्, भाष्येपि, असाधुर्मातुले कृष्णः इति पाठस्यैव प्रायेण दर्शनादित्याशयेनोदाहरति **असाधुर्मातुल इति** अत्र मातुलः कंसः। ''अत्राप्यधिकरण एव सप्तमी। तथाहि, अत्र मात्रादि शब्दा स्तत्स्थासु क्रियासु वर्तन्ते, तासां च क्रियाणां साध्वसाधुतां प्रति विषय भावो स्तीति वैषयिकाधिकरण एव सप्तमी, वक्तव्य शब्दस्तु व्याख्येय इत्यर्थे वर्तते'' इति न्यासकार। एवं च सूत्रेणैव सिद्धत्वा द्वार्तिकमनारम्भणीयमिति तदाशयः। तदयुक्तमिति ध्वनयन् वार्तिकस्य प्रयोजनं दर्शयति – **अत्रेत्यादिना षष्टी निषेधार्थमिति**, असति वार्तिके यद्यपि सूत्रेणाधिकरणत्वात्सिध्यति सप्तमी, परतु सप्तमीं बाधित्वा षष्टी प्राप्नोति, अत स्तद्बाधनेन सप्तमी विधानाया वार्तिक मारम्भणीयमेवेति भावः।

**न च ''साधुनिपुणाभ्या मर्चायां सप्तम्यप्रतेः'' 2-3-43 इति वक्ष्यमाणसूत्रेणैव साधुशब्दप्रयोगे सप्तमीसिद्धेरेतद्वार्तिके साधुशब्द ग्रहणवैयर्थ्यम्। अनर्चायां प्रतिना योगेपि साधुशब्दयोगे सप्तमीत्येवं सार्थक्यात्।**

वार्तिके साधुशब्द ग्रहणस्य वैयर्थ्य माशङ्कते **नचेति** तत्सूत्रे 'अर्चायाम् अप्रते रिति **विशेषणद्वय** मपानम् तयो रविपर्येपि सप्तम्यर्थ मत्रसाधु शब्द ग्रहण मित्याशयेन समाधत्ते – **अनर्चायां, प्रतिनायोगेपीति सार्थक्यादिति** तेना नर्चायां तत्व कथनेपि सप्तमी, राज्ञि साधुर्भृत्यः, प्रतिना योगेपि **भवति** मातरि प्रति साधुः कृष्ण' इतीति भावः।

**नचैवं 'साधुर्भृत्यो राज्ञः' इतिषष्ठीप्रयोगानापत्तिः, तत्र राज्ञो भृत्यद्वारकान्वयाङ्गीकारेण साधुत्वद्वारकान्वयानङ्गीकारात्।**

अनर्चायां तत्त्व कथनेपि सप्तम्याः स्वीकारे प्रयोगासिद्धिमाशङ्कते – **नचेति** एवं = तत्त्व कथनेपि सप्तमी स्वीकारे, **षष्टी प्रयोगानापत्तिरिति**, नचेष्टापत्तिः, "साधुनिपुणाभ्या" मिति सूत्रे "अर्चायामिति किम्-साधुर्भृत्यो राज्ञः," इति प्रत्युदाहरण पर वृत्तिकार संमतत्त्वा त्तत्प्रयोगस्य, अतस्त्वदुक्त रीत्यात्रापि सप्तम्या दुर्वारतया षष्ट्यन्त घटित प्रयोगानापत्ति रिति भावः। समाधत्ते **तत्रेति** निरुक्त वृद्ध संमत प्रयोग इत्यर्थः। **साधुत्व द्वारकान्वया नङ्गीकारादिति** राज्ञो भृत्येन सह शाब्दोन्वयो न साधुना। राज्ञोभृत्यः, स साधुरिति, तत्र साधुत्वं राजनिवान्यत्र वेतितु नै तच्छब्देन स्पृश्यते, प्रत्यासत्त्यातु राजविषयकमेव साधुत्व गम्यत इत्येतावता तदुपपत्तिः, प्रकृत वार्तिके कैयटोप्याह – "साधुर्भृत्यो राज्ञ इति तु भृत्यापेक्षा षष्टी, न तु साध्वपेक्षेति वाक्यार्थज्ञा आहु" रिति। तथाच प्रकृष्ट योगा भावा न्न तत्र वार्तिक प्रवृत्तिः। अत एव **वार्तिके**, प्रयोगे, इत्युक्तम्, प्रकृष्टो योगः = प्रयोगः।

**नचैव मप्यर्चानर्चादिसाधारण्येन साधुशब्दयोगे सप्तमीविधौ वक्ष्यमाणसूत्रेऽर्चाग्रहण-वैयर्थ्यम्। निपुण पदप्रयोगेऽर्चायामेव सप्तमीत्येवं सार्थक्यात्।**

"साधुनिपुणाभ्यामर्चाया" मिति सूत्रस्थस्य 'अर्चाया' मित्यस्य **वैयर्थ्यमाशङ्कते – नचेति एवमपि** = वार्तिके साधुग्रहणस्य सार्थक्यप्रदर्शने। 'सप्तमी विधौ = वार्तिकेन सप्तम्या विधाने' **अर्चाग्रहण वैयर्थ्यमिति** अनर्चायां सप्तमी वारणाय तत्र "अर्चा" ग्रहणं क्रियते, उभयत्राप्यनेनैव सप्तम्यां सिद्धायां व्यावर्त्या भावा दर्चाग्रहणं तत्र व्यर्थमिति भावः। समाधत्ते – **निपुण पदेति सार्थक्यादिति** तत्सूत्रेण साधुनिपुणशब्दाभ्यां योगे सप्तमी विधीयते। तत्रार्चाग्रहणं निपुण विशेषणार्थमेव न तु साधु विशेषणार्थं, प्रकृत वार्तिक बलादिति भावः।

**नचैव मेतद्वार्तिकेनैव साधुशब्दप्रयोगे सप्तमीसिद्धे वक्ष्यमाणसूत्रे साधुशब्दग्रहणवैयर्थ्यम्। उत्तर भाविवार्तिकेन पूर्वभाविसूत्रे वैयर्थ्यशङ्काया अनुक्तिसहत्वात्।**

ननु "साधु निपुणाभ्या" मिति सूत्रे साधुग्रहणं व्यर्थं, प्रकृत वार्तिकेनैव सप्तमी सिद्धेः, न च विनिगमका भावः दत्तोत्तरत्वा, दित्याशङ्कते, **नचेति** एवम् = निरुक्तरीत्या वार्तिके साधुग्रहणस्यावश्यकत्वे। समाधत्ते – **उत्तरभाविवार्तिकेनेति** उत्तरकाल भवनशीलवार्तिकेनेत्यर्थः। पूर्वभाविसूत्रे = पूर्वकाल भवनशील सूत्रे। वैयर्थ्यशङ्कायाः = साधुग्रहण वैयर्थ्य शङ्कायाः, **अनुक्ति सहत्वादिति** न हि पाणिनेः सूत्र करण काले कात्यायनवचनस्य भाव इति भावः। इदंच प्रकृत वार्तिके शब्द कौस्तुभस्थदीक्षितानुरोधेन, केचित्तु वार्तिकाणां सूत्र शेषत्वाद्वार्तिकानुरोधेन सूत्रस्य पद वैयर्थ्य शङ्का युक्तैव। अत एव भट्टोजिदीक्षितैः खण्डदेव महोदयैश्च "तादर्थ्ये चतुर्थी वाच्ये" ति वार्तिकादेव सिद्धे "तुमर्थाच्च भाव वचनात्" 2-3-15 "भाववचनाश्च" 3-3-11 इत्यनयो वैयर्थ्याशङ्का कृता संगच्छते, अत एव भगवता भाष्यकारेणापि "चतुर्थी संप्रदाने" 2-3-13 इति सूत्रे "यदि तादर्थ्ये उपसंख्यानं क्रियते, नार्थ संप्रदान ग्रहणेन, योपिह्युपाध्यायाय गौर्दीयते, उपाध्यायार्थः स भवति, तत्र तादर्थ्य इत्येव सिद्ध" मिति ग्रन्थेन वार्तिकेन

सूत्रस्थ संप्रदान ग्रहणस्य वैयर्थ्य माशङ्कितम्, तत्र दीक्षितैरपि तथैवाशङ्कितम्, अतः प्रकृते वार्तिकेनैव सिद्धे सूत्रे साधुग्रहण वैयर्थ्याशङ्का उक्तिसहैव, शङ्कायां एवं समाधानं वक्तव्यम्, साधु शब्द प्रयोगेपि अर्चायां प्रति योगे सप्तमी निषेधार्थं सूत्रे साधुशब्द ग्रहणम्, नचानेन वार्तिकेन प्रत्यादियोगे सप्तमी दुर्वारेति वाच्यम्, तत्सामर्थ्येन वार्तिकस्यापि तत्राप्रवृत्तेः, अबाधेनोपपत्तौ बाधायोगात् "साधुर्मातरं प्रत्यनुवे" ति भाष्योदाहृत प्रत्युदाहरणविरोधाच्च, एवं चानर्चायां सप्तमी सिध्यर्थमेव वार्तिके साधुग्रहणम्, न तु प्रति नायोगेपि तदर्थम्। प्रत्यादियोगे न केनापि सप्तमी, किंतु द्वितीयैव, अत एव "साधु निपुणाभ्या" मित्येव सिद्धेऽनचार्थमत्र साधु ग्रहण" मित्येव वार्तिके साधुग्रहणस्य प्रयोजन मुक्तं कैयट हरदत्त दीक्षितादिभिरिति-वदन्ति।

**एवं "निमित्तात्कर्मयोगे" इति वार्तिकात्—**

**"चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।**
**केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः"**

**इत्यादौ सप्तमी। अत्र निमित्तं फलत्वादिना क्रियाप्रयोजकम्। अत एव प्रयोज्यत्वं सप्तम्यर्थः साक्षात्संबन्धेन क्रियान्वयी। तस्य च कर्मकारकयोगः संयोगसमवायादि र्वास्तव एवं सप्तमीप्रयोजकः, न तु शाब्दबोधे ज्ञातः। अत एव तदभावे 'वेतनेनधान्यं लुनाती' त्यादौ "हेतौ" 2-3-23 इत्यनेन तृतीयैव। तृतीयापवादत्वेनैव चायं सप्तमीविधिः, तादर्थ्यचतुर्थ्यपवादत्वेन वा, तदा 'वेतनाय धान्यं लुनती' त्यपि प्रयोगः। अत्र त्रिषूदाहरणेषु समवायाख्यः कर्मकारकसंबन्धः, अवयवावयविभावात्। चतुर्थेतु संयोगः, सीम्नो ज्ञानार्थं पुष्कलकः = शङ्कुः, हतः = निरवात इति तदर्थात्।**

तादृशं वार्तिकान्तरं व्याचष्टे — **एवं निमित्तादिति** यत् क्रियाप्रयोजनं यदर्थः क्रियारम्भ स्तत्फलमिह निमित्तम्, तद्वाचकात् सप्तमी भवति तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयि क्रियाकर्मणा योगे इति वार्तिकार्थः' तदेतदाह — **अत्र निमित्तं फलत्वादिना क्रिया प्रयोजकमिति** वार्तिके कर्मशब्दः कर्मकारकपर इत्याह **कर्मकारकेति** यद्यपि भाष्ये "निमित्तात्कर्म संयोगे" इत्येव पठितं, तथापि संयोग शब्दः संबन्धपरः, समवायस्यापि संग्रहाय, एतदाशयेनैव व्याख्यातृभिः 'कर्मयोगे' इत्येव वार्तिकं प्रदर्श्यते, तदेत दाह **संयोग समवायादिरिति** कर्मसंबन्धश्च स्वरूप सन्नेव निमित्तम्, न तु तस्य शाब्दबोध विषयत्व मित्याह — **वास्तव एव सप्तमी प्रयोजक इति** अत एव = स्वरूपसत स्तस्य निमित्तत्वादेव। तदभावे = कर्मकारकेण योगाभावे, **तृतीयैवेति** वेतनस्य धान्येन संयोगाभावन्नानेन सप्तमी किंतु तृतीयैवेति भावः तृतीया प्रवृत्तौ बीजमाह **तृतीयापवादत्वेनैवेति अयं सप्तमीविधिरिति** एवं चापवादभूतसप्तम्या अप्रवृत्तौ बाधकाभावा द्धेतौ तृतीया प्रवर्तत एवेति भावः। चर्माद्यर्थं द्वीप्यादीनां हननात्तादर्थ्ये चतुर्थी प्राप्ता, तद्बाधेनानेन सप्तमीति वदनां मतेनाह — **तादर्थ्येति** तदा = तत्पक्षे, लोके एतदाशयक एव प्रयोगो बाहुल्येन दृश्यते, द्वीपिनं = शार्दूलम्। कुत्र समवायः कुत्र वा संयोगः संबन्ध इति विवेचनायाह — **अत्रेति** — उदाहरणानां मध्ये इत्यर्थः, 'त्रिषु = आद्येषु त्रिषु' चतुर्थेतु = सीम्नि पुष्कलको हत इत्यत्र तु। सीम्नः = ग्राम मर्यादायाः। **निरवात इति** तेन हि निहन्य मानेन शङ्कुना सीम्नः संयोगः संबन्ध इति भावः। इदं च हरदत्तानुरोधेन, वस्तु तस्त्वेवं व्याख्येयम् सीम्नि = अण्डकोशे, पुष्कलकः = गन्धमृगः, कस्तूरिकामृगः। हतः = प्राणेन वियोजितः। उक्तं च मेदिनीकोशे — "सीमाघाटस्थिति क्षेत्रेष्वण्ड कोशेषु च स्त्रियां" मिति "अथ पुष्कलको गन्धमृगे क्षपण कीलयो" रिति च। दुर्गवाक्य प्रबोधे कुलचन्द्रोप्येव मेवाह, किंच हत इत्यस्य निरवात इत्यर्थकत्वे मानाभावः। किं च वाक्य चतुष्टय साधारण्येन हत इत्यस्य मदुक्तार्थकत्व मेवोचितम्, द्वीपचर्मणोरण्डकोश मृगयोश्च समवायः संबन्धः, इतरयोः संयोगः संबन्धः। स्पष्टमधिकमन्यत्रे-ति बोध्यम्।

**एवं "यस्य च भावेन भावलक्षणम्" 2-3-37 इतिसूत्राद् यत्संबन्धिन्या निर्ज्ञातकालया यया क्रिययाऽनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदाख्यं लक्षणं क्रियते तस्याः क्रियायाः कर्तुः कर्मणो वा स्वक्रियाद्वारकेतरक्रियालक्षकत्वे विवक्षिते तद्बोधका त्सप्तमीस्या दित्यर्थकाद् 'ब्राह्मणे ष्वधीयानेषु गतः, 'गोषु दुह्यमानासु गतः' इत्यादौ सप्तमी। अत्र कर्तृत्वकर्मत्वान्यतरसंबन्धेन स्वसंबन्धि क्रियाकालकत्वं सप्तम्यर्थः। तस्य च साक्षात्संबन्धेने तरक्रियाया मन्वयः। पूर्वक्रियायाश्च कर्तृकर्मविशेषणत्वेपि सप्तमीलक्ष्यसंबन्धिसंसर्गघटकत्वमपि नानुपपन्नम्।**

लाक्षणिकं पाणिनीयमनुशासनं व्याचष्टे – **एवं यस्य चेति** सूत्रे भावशब्दः शुद्ध धात्वर्थपरः। ननु ज्ञाप्य ज्ञापक भावरूप लक्ष्यलक्षणभावो भूयो भूयो दर्शनाश्रयो दृष्टः। यथा-अग्निधूमयोः, ततश्च उदिते आदित्ये तमो नष्टम्, उदिते चान्द्रमसि समुद्रः प्रवृद्ध इत्यादावेवानेन सप्तमी स्यात् न तु गोषु दुह्यमानासु गत इत्यादौ, कदाचिद्धि गोषु दुह्यमानास्वसौगत इत्यत आह – **निर्ज्ञात कालयेति** एवं च सूत्रे लक्षण शब्दो नानुमापकत्वेनाभिमत लिङ्गपर्यायः, किंतु क्रिया शब्दः। लक्ष्यतेऽनेनेति लक्षणमिति। तथाच यन्निर्ज्ञात कालं दोहनादि अनिर्ज्ञात कालस्य गमनादेः सकृदपि काल परिच्छेदनिमित्तं, तत्तस्य लक्षणं भवतीति प्रकृतेपि सप्तमी सिध्यतीति भावः। तदाह **अनिर्ज्ञात कालायाः क्रियायाः कालपरिच्छेदाख्यं लक्षणं क्रियते इति** काल ग्रहणं देशस्याप्युपलक्षणम्, तदुदाहरणं 'सतिगुणे द्रव्यत्वमस्ती' ति, क्रियाया इत्यस्यार्थादन्यस्याः क्रियाया इत्यर्थः। अत्र क्रिया शब्दो धात्वर्थ मात्र पर इत्याशयेनाह **कर्तुः कर्मणोवेति तद्बोधकादिति** ज्ञापक क्रियाश्रय बोधकादित्यर्थः, तेनगोप दुह्यमान पदयोरुभयोरपि सप्तमी सिद्धा। उभयोरपि तद्बोधकत्वात्। अन्यथा सूत्रे भाव पदार्थ विशेषणतया यस्येत्यस्योपादाना ल्लक्षकक्रियासंबन्धि वाचका द्गोशब्दा ल्लक्षक क्रियावाचक दुह्यमानादि पदाद्वा सप्तमीस्या, न्न तूभयस्मादपीति बोध्यम्,

कर्तर्युदाहरति **ब्राह्मणेष्वधीयानेष्विति** कर्मण्याह – **गोषुदुह्यमानास्विति**, विभक्त्यर्थमाह, **कर्तृत्वकर्मत्वेति** साक्षात्संबन्धेन = निरूपकत्वं संबन्धेन। ननु दोहनाध्ययनादि क्रियायाः प्रत्ययार्थे धर्मिणि विशेषणत्वा त्कथं तस्याः संबन्धघटकतयेतर परिच्छेदिकत्व मित्याशङ्काया माह – **पूर्वक्रियायाश्चेति** लक्षकाध्ययनादि क्रियाया इत्यर्थः। **कर्तृकर्मविशेषणत्वेपीति** "सत्त्वप्रधानानि नामानी" ति यास्कस्मृत्या कृदन्ते प्रत्ययार्थ कर्तृकर्मणोरेव प्राधान्या त्तत्र क्रियाया विशेषणत्वे पीत्यर्थः, तथा च तादृश क्रियाया संबन्ध घटकत्वं, कथं वा तस्य इतर लक्षकत्वमित्याशयः। **सप्तमीलक्ष्येति** सप्तमी लक्ष्यं गमनादि क्रियान्तरम्, तत्संबन्धी संसर्गः = गवादि निष्ठ दोहन निष्ठ लक्षकत्व निरूपकत्व रूपः संसर्गः तद्घटकत्व मपीत्यर्थः, एकत्र विशेषणत्त्वेनान्वितस्यान्यत्रान्वयोऽव्युत्पन्नः, संसर्गघटकत्वं नाव्युत्पन्न मिति भावः, **नानुपपन्नमिति** अत्राधीयानानां ब्राह्मणानां दुह्यमानां गवां च शब्दतः प्रतीयमानं लक्षकत्वं विशेषणी भूतयोर ध्ययन दोहन क्रियायो विश्राम्यति, शिखीध्वस्त इत्यादौ शिखायां ध्वंस प्रतियोगित्ववत्। अतः क्रियाया लक्षकत्वं नानुपन्नम्। एतदर्थमेव तस्याः संसर्गघटकत्वानु धावनम्। तथाच गोनिष्ट दोहन निष्ट लक्षकतानिरूपक गमनवद्वृत्तिसत्ताश्रयत्वमिति बोधः पर्यवस्यतीति बोध्यम्।

**एवं च यत्र "इको यणचि" 6-1-77 इत्यादौ क्रिया नोपात्ता, तत्र सतीतिसत्तारूपक्रियाध्याहारो बोध्यः। यत्र तु संबन्धिनो लक्षकत्वं न विवक्षितं, तत्र गावो दुह्यन्ते, चैत्रो गत, इति वाक्यद्वयप्रयोगः। अत एव तत्र पूर्वक्रियाया उत्तरक्रियोपलक्षकत्वबोधः कविकाव्यादिव न्मानस एव। अत एव समानार्थकत्वा भावा न्न सप्तमीविधि स्तस्य बाधकः, अपित्वपूर्वविधिः। कथञ्चित् षष्ठीबाधको वेति बोध्यम्।**

ननु ब्राह्मणेष्वधीयानेषु गत इत्यादा वध्ययनादि क्रियाणामुपपात्तत्वा त्तत्र प्रकृत सूत्र प्रवृत्तावापि, "इको यणची" त्यादौ तादृश क्रियाया अनुपादानात्तत्र कथमनेन सप्तमी, नहि तत्राधिकरणत्व सप्तमी युक्ता। कटे चैत्रः शेतेत्यादौ कट चैत्रादेरिव अच इकश्चाधिकरणत्वासंभवात्, तद्बोध्यवर्णयोः पौर्वापर्यस्यैव सर्वसंमत्वात्। अत्रापि लक्षकत्वस्य सप्तम्यर्थतां विना गत्यभावादित्याशङ्कयाह . — **एवं चेति** प्रकृत सूत्रार्थे निरूढे चेत्यर्थः। **क्रियाध्याहार इति** एवं च अचि सति यणस्यादिति सूत्रार्थः, अच् सत्ता लक्ष्यत्वं यण्भवने पर्यवस्यतीति। एवं च व्याकरणे "तस्मिन्निति निर्दिष्टे पूर्वस्ये" ति परिभाषायाः प्रवृत्ति योग्येस्थले "कर्तरिशप्" 3-1-18 सार्वधातुके यक् 3-1-67 "वान्तो यि प्रत्यये" 6-1-79 इत्यादौ सर्वत्रापि सतीत्यध्याहरणे "यस्य च भावने" ति सतिसप्तम्येव, न त्वधिकरण सप्तमीति भावः,

'भाव लक्षण' मित्यस्य प्रयोजन माह — **यत्रेयिति** संबन्धिनः = क्रियावतो गवादेः। वाक्य द्वय प्रयोगः = स एव, न तु सप्तमी। अत एव = भावलक्षण ग्रहणेन सप्तम्या अप्रवृत्तत्वादेव, अत एव = तद्वाक्या ल्लक्ष्यलक्षकभावस्य मानसत्वादेव। तस्य = प्रथमाघटितस्य वाक्यस्य। **अपूर्व विधिरिति** कस्या अपि विभक्ते रप्राप्त्या इतराबाधकत्वेन सप्तमी विधिरनेन सूत्रेणेति भावः। संबन्ध सामान्येशेष षष्टचा अवकाशमभिप्रेत्याह **कथञ्चित् षष्टी बाधको वेति**

**("क्रियार्हाणा" मिति वार्तिकं "यस्य च भावेने" तिसूत्रेण गतार्थमिति वादिनां मतस्योपन्यासः।)**

**यत्तु-क्रियार्हाणां क्रियाकर्तृत्वादौ विवक्षिते, क्रियानर्हाणां च तदभावे विवक्षिते सप्तमी। तथा क्रियार्हाणां तदभावे क्रियानर्हाणां च तस्मिन् विवक्षिते इत्येवं वार्तिकम् — सत्सुतरत्सु पूज्यमानेषु वा असन्त आसते न पूज्यन्ते वा। असत्सुतिष्ठत्सु अपूज्यमानेषु वा सन्त स्तरन्ति, पूज्यन्ते वा। सत्सुतिष्ठत्सु अपूज्यमानेषु वा असन्त स्तरन्ति पूज्यन्ते वा, असत्सु तरत्सु पूज्यमानेषु वा सन्तस्तिष्ठन्ति, न पूज्यन्ते वा इत्यत्र सप्तमीविधायकं, तद् "यस्य च भावेन भावलक्षण" मित्यनेनैव सिद्धेऽनारम्भणीय-मिति केचित्,**

**यत्त्विति** यत् सत्सुतरत्सु इत्यादौ सप्तमी विधायकं वार्तिकं, तत्तु यस्य च भावेनेत्यनेनैव सिद्धेऽनारम्भणीयमिति योजना, क्रियार्हाणां = तत्कर्तृत्व कर्मत्वार्हाणाम् कर्तृत्वादावित्यादि पदेन कर्मत्वस्य ग्रहणम्। तदभावे = कर्तृत्व कर्मत्वाभावे।

**इत्येवं वार्तिकमिति** इत्येवमर्थकं वार्तिक मित्यर्थः। एवं हि "सप्तम्यधिकरणे चे" 2-3-36 ति सूत्रे वार्तिकम् "कारकार्हाणां च कारकत्वे, अकारकार्हाणां चा कारकत्वे, तद्विपर्यासेचे" ति। अत्र कारकशब्दो भावप्रधानः। तेन कारकत्व मर्हन्तीत्यर्थः", इति कैयटः। तत्फलितार्थपरतया व्याख्यातृभिरेवं निर्दिश्यते इति बोध्यम्। एकेन वाक्येन विवक्षितार्थालाभाद्वाक्य चतुष्टयं दर्शितम् कर्तृकर्म समर्पकादकर्तृकर्म-समर्पकाच्च सप्तमीति वार्तिकार्थः, तत्र सप्तम्यां तदन्वयि क्रियावाचकाद्धातोरप्रथमासामानाधि-करण्याच्छतृशानचावेव। **सत्स्विति** सन्तो हि तरणक्रिया कर्तृत्वार्हाः, तरण क्रिया संबन्धि असत्कर्तृ वृत्ति आसनाश्रयत्वमिति बोधः, स्वक्रियाधिकरण काल वृत्तित्वं संबन्धः **पूज्यमानेषु वेति** कर्म समर्पकात्सप्तम्या उदाहरणमिदम्। "यस्य च भावेने" त्यत्रेवा त्रापि क्रियामात्र ग्रहणात्कर्तृकर्म विषयकत्वं संभवतीति भावः। **असत्सु तिष्ठत्स्विति** तरणक्रियाकर्तृत्वानर्हाणां तदकर्तृत्वमत्र। यद्यपि स्थिति क्रिया कर्तृत्वेनेदं सिद्धं तथाप्यसतां तरण क्रियानर्हत्वादिकमपि बोधविषय इति भावः। तृतीयोदाहरणे तरण क्रिया कर्तृत्वार्हाणां तदकर्तृत्वम्। चतुर्थे तरणकर्तृत्वानर्हाणां तत्कर्तृत्वम्, एवं पूज्यमानेष्वित्यादि कर्म सकर्मकेप्येवमेव बोध्यम्। तत् = तत्त वार्तिकम्, **अनारम्भणीय मिति** ऋद्धेषु भुञ्जानेषु दरिद्रा आसते इत्यादौ सवत्रापि "यस्य च भावेने" त्यनेनैव सिद्धासप्तमी। तथाहि ऋद्धादि संबन्धिना भोजक्रियादि लक्षणेनात्र भावेन दरिद्रादि

संबन्ध्यासनादि भावो लक्ष्यत इत्यतो वार्तिकं सूत्रे णैव सिद्धमतो न पृथगारम्भणीयमिति भावः केचित् = प्रकृतवार्तिके न्यासकारा जिनेन्द्रबुद्धिपादाः

**(अत्र कैयटाद्याशयः।)**

**कैयटादयस्तु – लक्ष्यलक्षणभावाविवक्षायां सप्तमीविधानार्थ-मित्याहुः।**

**(कैयटादिमतनिराकरणम्।)**

**तन्न, लक्ष्यलक्षण भावातिरिक्तसंबन्धस्या स्माद्वाक्याद भानेन तस्मिन्नर्थे सप्तमीविधान-वैयर्थ्यापत्तेः**

**(स्वमतप्रदर्शनम्।)**

**अतोऽर्हत्वाद्यवच्छिन्नकर्तृत्वकर्मत्वान्यतरसंबन्धेन स्वसंबन्धिक्रियाकालिकत्वस्य सप्तम्य-र्थत्वद्योतनाया नुशासनान्तरम्। तथाहि – अत्र प्रथमवाक्यद्वये औचित्यं व्यङ्ग्यम्। अन्त्यद्वयेचानौचित्यम्। तदुपपादकत्वं निरुक्तसप्तम्यर्थस्य, तद्विशेषणी भूतार्हत्वाद्युपपादनार्थ च। 'तिष्ठत्सु आसते' इत्येताभ्यां तरणाभावो लक्ष्यते, सदसत्पदाभ्यां च वाच्यव्यङ्ग्यविधया क्रियार्हत्वानर्हत्वे व्यज्येते। अत श्चैतादृशलक्ष्यलक्षण भावस्य गोषुदुह्यमानासुगतः, इत्यादिव्यावृत्तस्यात्र विशिष्यानु भूयमानस्या पह्नोतुमशक्यत्वा त्पृथगनुशासनम्।**

**कैयटादय स्त्विति** आदिपदेन न्यासकारातिरिक्ताः सर्वेव्याख्यातारोगृह्यन्ते, विधानार्थम् = तदर्थं वार्तिकम्। एवं च वार्तिकं सूत्रेणैव सिद्धमिति न्यासकारः, लक्ष्य लक्षण भावस्या विवक्षायामपि सप्तमी विधानार्थं वार्तिकमिति कैयटादयः। अनयारीत्या वैयाकरणानांमध्ये एतद्वार्तिक विषयेऽभिप्रायभेदः प्रति पादित इति बोध्यम्,

प्रथमतः कैयटादीना माशयं निराकरोति, **लक्ष्यलक्षणेति** तस्मिन्नर्थे = लक्ष्यलक्षण भावरूपेर्थे, **सप्तमी विधानेति** वार्तिकेन तद्विधानस्य वैयर्थ्यापत्तिः, सूत्रेण यस्मिन्नर्थे सप्तम्या विधानं, तत्रैव वार्तिकेन तद्विधनादिति भावः। एवं च कैयटाद्युक्त मसम्यगिति तात्पर्यम्। नन्वेवं न्यासकारोक्तं युक्तमेवेत्याशङ्क्य तदपि दूषयति, **अतोर्हत्वा** दीति आदिनाऽनर्हत्वस्य ग्रहणम्। अनुशासनान्तरम् = वार्तिकरूप मनुशासनान्तरम्, तदेवोपपादयति **तथा हीत्यादिना** अत्र = वार्तिकोदाहरणेषु, **प्रथम वाक्य द्वये इति** सतां तरण कर्तृत्व मसतां तत्कर्तृत्वा भाव इत्यर्थ प्रतिपादिके आद्य वाक्यद्वये। एवं पूज्य मानेष्वित्यादि वाक्यद्वये चेत्यर्थः, **औचित्यमिति** सत्पुरुषाणां तरण कर्तृत्वम्, पूज्यमानानां तत्कर्मत्व मुचितम् तद्विपरीतानां तदभाव उचित एव नात्रा श्चर्यमिति भावः। वाच्य वृत्त्याऽलाभादाह **व्यङ्ग्यमिति अनौचित्यमिति** अयोग्यानां कर्तृत्वकर्मत्वे क्रियायाम्, योग्याना तत्र तदभाश्चानुचित इति भावः। एतत्तु लोक विपरीत मित्याशयः, तदुपपादकत्वम् = औचित्यानौचित्योपपादकत्वम्, **तद्विशेषणीभूतेति**, सप्तम्यर्थ विशेषणी भूतेत्यर्थः, **तिष्ठत्सु इति** द्वितीय वाक्ये **आसते इति** प्रथम वाक्ये। आभ्यां पदाभ्या मसतां तरणाभावः कथं प्रतीयत इत्यत आह – **तिष्ठस्वासते इत्येताभ्यां मिति सदसत्पदाभ्यामिति** प्रथम वाक्य द्वये वैपरीत्येनेति भावः, स्वमत मुपसंहरति **अतश्चेति विशिष्यानु भूयमानस्येति** गोषु दुह्यमानासु गत इत्यादौ लक्ष्यलक्षण भाव मात्रं भासते, अत्र तु अर्हत्वानर्हत्वादिकस्यापीति विशिष्यार्थ भेदस्यानु भूयमानस्येत्यर्थः, **पृथगनुशासनमिति** अतो न्यासकारोक्तमपि न सम्यगिति भावः,

**एवं "षष्ठी चानादरे" 2-3-38 इतिसूत्रा दनादरविशिष्टलक्ष्यलक्षण भावविवक्षायां षष्ठीसप्तम्यौ विकल्पेन, रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिक मनादृत्येत्यर्थः।**

तादृश मनशासनान्तरं व्याचष्टे **एवं षष्टी चेति** सत्रे अनादरे इत्यत्र "यस्य च भावने" ति षष्टी, अनादरे गम्यमने सति यस्य क्रियया क्रियान्तरं लक्ष्यते, ततः सप्तमी षष्टी चेति सत्रार्थः, तेनानादराधिक्यं लभ्यते, तदाह – **अनादर विशिष्टेति** अनादराधिक्य विशिष्टेत्यर्थः। अनादरविशिष्टं प्रव्रजनं लक्षणया धात्वर्थः – **पुत्रादिकमिति** "पत्रादिकस्य रोदन मनादृत्य प्रव्रज्यां कृतवानित्यर्थ" इति हरदत्तः, न्यास कारोक्तरीत्या "यस्य च च भावेन" त्यनेनैव सिद्धम्। तथापि षष्टी विधानार्थमिति तदाशय उन्नेयः अत्रोदाहरणे रोदन प्रव्रजनयो र्लक्ष्यलक्षक भावः।

**एवं "स्वामीश्वराधिपतिदायाद साक्षिप्रतिभूप्रसूतैश्च" 2-3-39 इतिसूत्रा देभिः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। गोषु गवां वा स्वामी। निरूपकत्वं विभक्त्यर्थः। तस्य च स्वाम्यादिद्वारको स्तिक्रियान्वयः। समानार्थकस्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम्। "विरूपाणामपि समानार्थाना" मिति वार्तिकाद् 'वक्रदण्डा' वितिवत् पदत्रयैकशेषस्तु शब्दस्वरूपपरत्वा न्नाशङ्क्यः, गवां गोषु वा प्रसूतः। गा एवानु भवितुं जात इत्यर्थ इति हरदत्तः।**

तादृश मनशासनान्तरं व्याचष्टे – **एवं स्वामीश्वरेति अस्तिक्रियान्वय इति** तथाच गो निष्ट स्वत्व निरूपकस्वामित्ववद्वृत्ति सत्ताश्रयत्व मिति बोधः। ननु स्वाम्यर्थे इत्येव वाच्ये ईश्वराधिपतिशब्दयो ग्रहणं व्यर्थं, मत आह **समानार्थकेति पर्यायान्तर निवृत्त्यर्थमिति** अत एव = ग्रामस्य राजे, त्यादौ न सप्तमी अर्थपरत्वेन "अन्यारादितर" त्यादि सत्र इव समानार्थक शब्द द्वय मेवोपाददीत सत्रकार इति भावः। एवं च शब्दत्रय स्वरूप परमेव, नार्थपरमिति भावः। अत एवाह – **विरूपाणामपीति वक्रदण्डाविति** वक्रदण्डश्च कुटिल दण्डश्चेत्यर्थे उभयोः शब्दयोर्विरूपयोरपि समानार्थकत्वा त्प्रकृत वार्तिकेन एकशेषः कृतः, तद्वदत्र स न, समानार्थकत्वाभावादिति भावः। पदत्रयैकशेषः = पदत्रये एकस्य शेषः। ननु देवदत्तादेर्गवा प्रसूति रनुपपन्नेत्यत आह – **गा एवानु भवितुमिति** दीयते इति दायः = अंशः, दाय मादत्ते इति दायादः। सोप सर्गादस्मादेव निपातनात्कः, गवादिकञ्च दीयमानत्वेति, नित्य साकाङ्क्षत्वाद् वृत्तिः,

**एवम् "आयुक्तकुशलाभ्यां चा सेवायाम्" 2-3-40 इति सूत्राद् 'गोषु गवां वा आयुक्तः, कुशलो वा' इत्येवं षष्ठीसप्तम्यौ। आयुक्तः = व्यापारितः। विषयसप्तम्यां प्राप्तायां पक्षे षष्ठी विधीयते। आसेवा = तदेकपरत्वम्। तदभावेन् 'आयुक्तो गौः शकटेन' ईषद्युक्त इत्यर्थः।**

तादृश मनशासनान्तरं व्याचष्टे – **एव मायुक्तेति** आङ ईषदर्थकत्व व्यावर्तनायाह – **व्यापारित इति विषय सप्तम्यामिति** आयुक्तता निपुणता च कर्त्रादिकरण विषयतयैवेति तत्सप्तम्यां प्राप्तायामित्यर्थः, **तदेक परत्वमिति** आसेवापदस्य तात्पर्य मिति भावः। प्रत्युदाहरणं आङ ईषदर्थे ईषद्युक्त इत्यर्थः, शकटेनगस्य सहयोग नतीयाः। कोशकारोक्त यन्थेन शकट इति सप्तम्यन्तपाठः प्रत्युदाहरणं।

**एवं "यतश्च निर्धारणम्" 2-3-41 इतिसूत्रा ज्जातिगुणक्रियासंज्ञाभि र्यतः समुदाया देकदेशस्य पृथक्करणात्मकं निर्धारणं क्रियते, तद्वाचकात् षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा बहुक्षीरा, गच्छताम्, गच्छत्सु वा धावन्तः शीघ्रगामी, छात्राणां छात्रेषु वा मैत्रः पटु रित्यादौ। अत्र विभक्त्यर्थं उक्तविधनिर्धारणम्। तत्र च निरूपकतया प्रकृत्यर्थान्वयः। तस्य च विषयीभूतब्राह्मणादिवृत्तित्वसंसर्गेण क्रियान्वयः। इदंच पदोपात्तस्य निर्धारणप्रतियोगितावच्छेदकस्य मनुष्यत्वगोत्वादे र्निर्धारण विषयीभूत ब्राह्मणादौ सत्त्व एव विकल्पाभिधानम्। यदातु तस्य तत्रासत्त्वं तदा निर्धारण प्रतियोगिवाचकात्पञ्चम्येव,**

तादृशमनुशासनान्तरं व्याचष्टे – **एवं यतश्चेति** निर्धारणस्य सापेक्षत्वादाह – **जातिगुण क्रिया संज्ञाभिरिति** विशिष्टस्येत्यध्याहारः। स च एक देशस्येत्यत्रा न्वेति, जात्यादि विशिष्टस्यैक देशस्येत्यर्थः। नृसमुदायोऽवयवी, स सूत्रे यत श्शब्दार्थ इत्याह – **यतः = समुदायादिति पृथक्करणात्मकमिति** स्व घटित समुदायात् स्वेतर समुदाय घटक व्यावृत्त धर्मकरणकं पृथक्करणं (व्यावृत्त धर्म प्रकारकज्ञान विषयीकरणम्) तदात्मकमित्यर्थः। अस्ति च नृणां ब्राह्मण श्रेष्ट इत्यादौ विप्रत्व विशिष्टस्य विप्रघटित नर समुदाय घटक विप्रेतरक्षत्रियादि व्यावृत्त श्रेष्टत्वादिमत्तया प्रतीतिरिति बोध्यम्। जाति विशिष्टस्य पृथक्करण उदाहरति **नृणामिति** गुण विशिष्टस्य तत्त्वे उदाहरति **गवामिति कृष्णेति** कार्ष्ण्य विशिष्टेत्यर्थः। अत्र. कृष्णाया गोसमुदायात् पृथक्कृत्तिः। कार्ष्ण्यं गुणः। धावन् = धावनक्रिया विशिष्टः, स च गमन वत्समुदाया त्पृथक् क्रियते, मैत्रः = कस्य चिच्छात्रस्येयं संज्ञा, श्रेष्टत्व बहुक्षीरकत्व शीघ्र गमन पटुत्वानि पृथक्करणे कारणानि, एवं चैतादृशैः कारणै र्जात्यादिमतस्तद् घटितात् यस्यात्समुदायात्पृथक्करणरूपं निर्धारणं, तत्समुदाय वाचकात् षष्टी सप्तम्या वनेन सूत्रेण विधीयेते इति बोध्यम्, अत्र = उदाहरणेषु। **उक्तविध निर्धारणमिति** अत एव ''न निर्धारणे'' 2-2-10 इति षष्टी समास निषेध बोधक सूत्र बोधितं निर्धारणस्य विभक्त्यर्थत्वं संगच्छते, **निरूपकतयेति** प्रकृत्यर्थस्य निर्धारण निरूपकत्वादित्यर्थः, हेतुतृतीयान्त मिदम्, प्रकृत्यर्थान्वयः = प्रकृत्यर्थस्य निरूप्यत्वेनान्वयः, **क्रियान्वय इति** तथाच नृनिरूपित निर्धारण विषयीभूतब्राह्मण वृत्तिश्रेष्टत्ववद्वृत्ति सत्ताश्रयत्व मिति बोधः पर्यवस्यति, प्रथमार्थ निरूपणावसरोक्त दिशा प्रथमान्त द्वयार्थस्यार्थं शाब्दं वाऽभेदमाश्रित्य बोध उपपादनीयः, **इदमिति** अस्य विकल्पाभिधान, मित्यत्रान्वयः **सत्वे एवेति** प्रकृतो दाहरणेषु ब्राह्मणादिषु मनुष्यत्वादेः सत्वा द्विभक्तिद्वयं प्रवर्तत एव, तत्प्रयोजन माह, **यदात्विति** यत्रत्वित्यर्थः, **पञ्चम्येवेति** यथा-पशुभ्योब्राह्मणः श्रेष्टः, महिषेभ्यः शीघ्र गामि चैत्र इत्यादौ। एतदाशयेनैवास्माभिः पृथक्करणं स्वेतर समुदाय घटकेत्यादिना विविच्य प्रदर्शितम्।

**एवं ''पञ्चमी विभक्ते'' 2-3-42 इतिसूत्राद् 'माथुराः काशीस्थेभ्य आढ्यतरा' इत्यत्र पञ्चमी।**

तादृश मनुशासनान्तरं व्याचष्टे – **एवं पञ्चमीति सूत्रादिति** ''यतश्च निर्धारण'' मित्यनुवर्तते। विभागोत्र भेदः, तत्र निर्धारणे सर्वत्र यथा कथञ्चि द्भेदस्य सत्त्वेन विभक्त ग्रहणसामार्थ्या द्यत्र निर्धार्य माणस्य भेद एव, न तु केनाप्युपात्त रूपेणा भेद, स्तत्रैव पञ्चमीति सूत्रार्थः, **आढ्यतरा इति** नह्यत्र गवां कृष्णेत्यादाविव सामान्य विशेष भावो माथुराणां काशीस्थानां च किंतु शब्दोपात्त धर्मयो र्विरोधे एव, अतः पञ्चमीति बोध्यम्

**एवं ''साधुनिपुणाभ्या मर्चायां सप्तम्यप्रतेः'' 2-3-43 इतिसूत्रात् मातरि साधु र्निपुणो वेत्यत्र सप्तमी। अर्चाऽभावे 'निपुणो राज्ञो भृत्य' इति षष्ठी। प्रतिग्रहण मुपलक्षणम्। साधु र्निपुणो वा मातरं प्रति परि अनु वा। पूर्वमेव च व्याख्यातप्रायमिदं सूत्रम्।**,

तादृशमनुशासानन्तरं व्याचष्टे – **एवं साधु निपुणेति निपुणो राज्ञो भृत्य इति** पूर्व मेवैत दूषित मुपपादितं च। ''अप्रत्यादिभि रिति वक्तव्य'' मिति वार्तिकानु सारेणाह – **प्रतिग्रहण मुपलक्षणमिति** व्याख्यात प्रायम् = ''साध्वसाधुप्रयोगे चे'' ति वार्तिक व्याख्यावसरे,

**एवं ''प्रसितोत्सुकाभ्यां तृतीया च'' 2-3-44 इति सूत्रादाभ्यां योगे तृतीया स्यात्। चात्सप्तमीचेत्यर्थकात् 'प्रसित उत्सुको वा हरिणा, हरौ वेत्यत्र विकल्पेन सप्तमी' प्रसितः = आसक्तः। न तु प्रकर्षेण शुक्लः। विषयत्वं विभक्त्यर्थः। तृतीयायाः पाक्षिकत्वार्थं वचनम्।**

तादृश मनुशासनान्तरं व्याचष्टे — **एवं प्रसितेति** "तत्परे प्रसिता सक्ता" विति कोशानुसारेणाह — **प्रसितः** = **आसक्त इति** रूढत्वा दस्यैवार्थस्य ग्रहण मिति भावः। **नन्विति** तेन तदर्थक प्रसित शब्द योगे नास्य सूत्रस्य प्रवृत्तिरिति भावः, प्रसितत्व मुत्सुकत्वं च हरिविषयमतो विषयत्वमेव विभक्त्यर्थ इत्याह — **विषयत्वं विभक्त्यर्थ इति** तर्हि वैषयिकी सप्तमी "सप्तम्यधिकरणे च" त्येवेसिद्धे न्यत आह — **तृतीयाया इति**,

**एवं "नक्षत्रे च लुपि" 2-3-45 इतिसूत्रा न्नक्षत्रवाचिप्रकृतेः "नक्षत्रेण युक्तः कालः" 4-2-3 इत्यनेन अण्प्रत्ययस्य "लुबविशेषे" 4-2-4 इति लुपिकृते नक्षत्रयुक्तकालप्रातिपदिका दधिकरणे तृतीयासप्तम्यौ स्त इत्यर्थकात् 'मूलेन मूले वा देवीमावाहये' दित्यादौ। कालिकाधिकरणत्वं सप्तम्यर्थः। अण्प्रत्ययाकरणेन शुद्धनक्षत्रपरत्वे 'पुष्ये शनि' रित्यादौ सप्तम्येव, न तृतीया। कालपरत्वेपि अधिकरणत्वाविवक्षायाम् 'अद्यपुष्यः' इत्यादौ प्रथमापि।**

तादृश मनुशासनान्तरं व्याचष्टे — **एवं नक्षत्रे चेति नक्षत्रेणेति** नक्षत्र वाचका त्तृतीयान्ताद्युक्त इत्यर्थे अण् प्रत्ययः 'स्यात्' यो युक्तः स कालश्चे दिति तत्सूत्रार्थः। उदाहरणम् पुष्येण युक्तं-पौष महः, पौर्णमासी॥ **लुब विशेषे इति** "नक्षत्रेण युक्तः कालः" इति सूत्रेण विहितस्य प्रत्ययस्य लुप् स्यात्, अविशेषे = षष्टि दण्डात्मकस्य कालस्यावान्तर विशेषश्चेन्न गम्येतेति तत्सूत्रार्थः, लोपस्यैव लुप् इति विशेष संज्ञा, कार्य विशेषसंपादनार्था, फलितार्थमाह, **नक्षत्रयुक्तेति** नक्षत्र युक्तकाल बोधक प्रातिपदिकादित्यर्थः। मण्डूकप्लुत्याश्रयणेनाह — **अधिकरणे इति मूलेनेति**,

"मूलेनावाहये द्देवीं पूर्वाषाढे समर्चयेत्।
उत्तराषाढे बलिं दद्यात् श्रवणेन विसर्जयेत्"

मूलेन = मूल नक्षत्र युक्त काले, लुपीत्यस्य प्रयोजनमाह — **अण् प्रत्यया करणेनेति** अण् प्रत्ययाकरणे लब् न, तदित्यर्थः। तदाह **शुद्ध नक्षत्रेति** अधिकरणे इत्यस्य प्रयोजनमाह — **कालपरत्वेपीति** युक्तार्थे अणि लुपि च कृतेपि अधिकरणत्वाविवक्षायां सप्तमी न, किंतु प्रथमेति भावः,

**एवं 'सप्तमीपञ्चम्यौ कारकमध्ये' 2-3-7 इतिसूत्रात् सजातीययो र्विजातीययो र्वा कारकयो र्मध्ये यौ कालाध्वानौ तत्र सप्तमीपञ्चम्यौ स्त इत्यर्थकाद् 'अद्यभुक्त्वा अयं द्व्यहे द्व्यहा द्वा भोक्ता' 'इहस्थोयं क्रोशे क्रोशाद्वा लक्ष्यं विध्ये' दित्यादौ विकल्पेन सप्तमी। अत्र यद्यपि भोजनद्वयेप्येक एव पुरुषः कर्तृकारकम्, तथाप्यद्यतनकालीन भोजनक्रियानिरूपित कर्तृत्वाद् द्व्यहकालीन भोजनक्रियानिरूपित कर्तृत्वस्य भेदात् सजातीयकारकमध्यत्वम्। द्वितीयोदाहरणेतु अयमिति कर्ता, लक्ष्य मिति कर्म, इहेत्यधिकरणमिति विजातीयमध्यत्वम्। सर्वत्राधिकरणत्वं विभक्त्यर्थः। अपादानत्वस्या संभवात्। पक्षे पञ्चमीप्राप्त्यर्थोविधिः।**

तादृशमनुशासनान्तर व्याचष्टे — एवं **सप्तमीति सजातीययोरिति** साजात्यं कर्तृत्वादिना **विजातीययोरिति** तत्वं कर्मत्वाधिकरणत्वादिना। "कालाध्वनोरत्यन्त संयोगे" 2-3-5 इत्यतः 'काल ध्वनोः' इत्यनुवर्तते, तदाह **यौ कालाध्वानाविति** विभक्ति द्वयविधानसामार्थ्य लब्धमर्थमाह — **विकल्पेनेति अद्यभुक्त्वेति** अद्य पदार्थे तद्दिवसाधिकरणकत्वस्या भोजनक्रियाद्यामन्वयः। तदन्वित क्त्वान्त प्रतिपाद्य भोजन क्रियायाः स्वोत्तरकाल वृत्तित्वस्वसमान कर्तृकत्वोभय संबन्धेन भोजने प्रकृत विभक्त्यर्थस्यापि तद् द्वाराप्रधान क्रियायाम्। एवं चैतद्दिवसाधिकरणक भोजनोत्तर कालिकं तथाविध भोजन समान कर्तृकमेतद्दिवसानन्तरव्द्यहानन्तर काल वृत्ति यद्भोजनं तदाश्रयवृत्तिसत्ताश्रयत्वमिति बोधः पर्यवस्यतीति बोध्यम्, इहस्थः = इष्वासः धनुः। अत्र = प्रथमोदाहरणे। **एक एव पुरुषः कर्तृकारकमिति** तथाच

प्रधान इत्याह – **ऐश्वर्ये इति** एतदवष्टम्भेन सूत्रीय द्वितीय भागं व्याचष्टे **तद्युक्ते इति** तत्संज्ञकाधियोगे इत्यर्थः अयमर्थः – सूत्रे यस्येत्यनेन स्वामिनो ग्रहणम्। ईश्वर इत्युच्यते येन, तदीश्वर वचनम् = ऐश्वर्यम्। यद्वा ईश्वर शब्दो भाव प्रधानः तथाच यस्य = स्वामिनः ऐश्वर्यमुच्यते, ततः स्वामिवाचकात्सप्तमीत्येकोर्थः, तदा ऐश्वर्य प्रतियोगिनि सप्तमी। यद्वा यस्येत्येनन स्वंभूम्यादिकं गृह्यते, तथाच यस्य = स्वस्य ईश्वरः = स्वामी उच्यते ततः स्ववाचकात्सप्तमीस्यादिति द्वितीयोर्थः। तदा स्ववाचकाद् भूम्यादेः सप्तमी भवति। एवं च यस्य चेश्वर वचनमित्यस्य व्याख्याभेदेन स्वामि वाचकात् स्ववाचकाच्च पर्यायेण सप्तमी। सा च विशेषणे। विशेष्येतु प्रथमा राज्ञः पुरुष इत्यादाविव। तदेतन्मनसिनिधायाह – **ऐश्वर्य प्रतियोगिनि तदनुयोगिनि च पर्यायेण सप्तमीति** अत्र = उभयोर्मध्ये। **स्वसंबन्धीति** आद्येस्वम् = अनुयोगित्वम् तत्संबन्धि यदैश्वर्यम् तत्संबन्धि यदितरत् भूम्यादिकं तद्वृत्तित्व मित्यर्थः, द्वितीये स्वं = प्रतियोगित्वम् ''एवं सुबर्थस्यापि लिङ्गसंख्या भिन्नस्य तस्यामेवान्वयः प्रकारतये'' त्युपक्रान्तमर्थं सप्रमाणमुपपाद्यप्रकरणार्थमुपसंहरति **तदेवं लिङ्गसंख्येति**

**''नवीनानां नानामननविशदाना मयमहो**
**सुयुक्तीनां पुञ्जैरिह विरचितः कोपि जगति।**
**महानर्क स्तर्कप्रथिततमसंजाततमसां**
**सुधाकृ न्मीमांसामतकुमुदपूरस्य जयतु''।।1 1**

**यद्वद् घनानां पटलो विशालो**
**विलोक्यतेल्पे किलदर्पणेपि।**
**तद्वन्मदीयेपि निबन्धनेस्मि**
**न्नुद्वीक्ष्यतां भाट्टरहस्यसारः।।2**

## इति श्रीखण्डदेवप्रणीतं भाट्टरहस्यं समाप्तम्

एवं प्रतिज्ञातं भट्टतन्त्ररहस्यं विशदीकृत्य ग्रन्थं समापयति **नवीनानामिति नानामननेति** अनेन युक्तीना दाढर्च स्पष्टयति। **अहो इति** नूतनयुक्तिदर्शनात्संजातमानन्दातिरेक मनेन सूचयति, वैयाकरणसिद्धान्तकौ-मुदी लघुमञ्जूषयो ग्रन्थयो रारम्भ एव 'इयं' मिति एषा इति च प्रत्यक्ष विषयकसर्वनाम प्रयुक्तम्, तन्ममर्थनाय बुद्धिस्थत्व पर्यन्त मनुधावितं व्याख्यातृभिः, मम तु तादृशी समवस्था नेति सूचयन् ग्रन्थान्ते इद शब्दं प्रयुङ्क्ते **अयमिति** कोपीत्यनेन स्वग्रन्थार्थस्य निरतिशयं महिमानं व्यनक्ति। इह जगतीति विषयसप्तम्यन्तम्, एतल्लोकविषये – तदर्थं लोकोपकारार्येति यावत्। कोपीत्यनेना भिव्यञ्जितं महिमान विशदयति **महानिति** प्रलयकालीन इति यावत्। सूर्यसादृश्यं केनधर्मेणेत्यत आह – **तर्कप्रथितेति** प्रथिततमाश्च ते तर्काश्च तर्कप्रथिततमाः। ''राजदन्तादिषु परम्'' 2-2-31 इति राजदन्तादित्वात् प्रथिततमशब्दस्य परनिपातः लोकप्रसिद्धि मभिवृद्धिं च गता ये तर्काः = काणादादयः, तैः संजाताना मन्धकाराणामित्यर्थः। ते च तर्का स्तप्तदर्थनिरूपणावसरे मूले प्रदर्शिता एव। नहि केवलं मतान्तरनिराकरणमेव मद्ग्रन्थनिर्मितेः प्रयोजनम्, किंतु तन्निराकरणपूर्वकं स्वीयमीमांसाशास्त्रीय-सिद्धान्तोद्घाटनम् अन्यथा ''परमतमप्रतिषिद्धमनुमतं भवती'' तिन्यायापात इत्याशयेनाह – **सुधाकृदिति** मीमांसामतरूपस्य कुमुदसमुदायस्य, सुधाकृत् = चन्द इत्यर्थः। एवंच परमतखण्डनपूर्वकं स्वमतस्थापन मस्या ग्रन्थस्य परमंप्रयोजनमिति भावः। जयतु = सर्वोत्कर्षेण वर्तताम्। अनेन ग्रन्थान्ते मङ्गल माचरित मिति बोध्यम्।।

नन्वल्पेना नेन ग्रन्थेन **विस्तीर्णभट्टतन्त्रस्य** रहस्यं कथं सुज्ञातं स्यादित्याशङ्का मपनुदति **यद्वदिति** स्पष्ट

प्रधान इत्याह — **ऐश्वर्ये इति** एतदवष्टम्भेन सूत्रीय द्वितीय भागं व्याचष्टे **तद्युक्ते इति** तत्संज्ञकाधियोगे इत्यर्थः अयमर्थः — सूत्रे यस्येत्यनेन स्वामिनो ग्रहणम्। ईश्वर 'इत्युच्यते येन, तदीश्वर वचनम् = ऐश्वर्यम्। यद्वा ईश्वर शब्दो भाव प्रधानः तथाच यस्य = स्वामिनः ऐश्वर्यमुच्यते, ततः स्वामिवाचकात्सप्तमीत्येकोर्थः, तदा ऐश्वर्य प्रतियोगिनि सप्तमी। यद्वा यस्येत्येनन स्वंभूम्यादिकं गृह्यते, तथाच यस्य = स्वस्य ईश्वरः = स्वामी उच्यते ततः स्ववाचकात्सप्तमीस्यादिति द्वितीयोर्थः। तदा स्ववाचकाद् भूम्यादेः सप्तमी भवति। एवं च यस्य चेश्वर वचनमित्यस्य व्याख्याभेदेन स्वामि वाचकात् स्ववाचकाच्च पर्यायेण सप्तमी। सा च विशेषणे। विशेष्येतु प्रथमा राज्ञः पुरुष इत्यादाविव। तदेतन्मनसिनिधायाह — **ऐश्वर्य प्रतियोगिनि तदनुयोगिनि च पर्यायेण सप्तमीति** अत्र = उभयोर्मध्ये। **स्वसंबन्धीति** आद्येस्वम् = अनुयोगित्वम् तत्संबन्धि यदैश्वर्यम् तत्संबन्धि यदितरत् भूम्यादिकं तद्वृत्तित्व मित्यर्थः, द्वितीये स्वं = प्रतियोगित्वम् "एवं सुबर्थस्यापि लिङ्गसंख्या भिन्नस्य तस्यामेवान्वयः प्रकारतये" त्युपक्रान्तमर्थं सप्रमाणमुपपाद्यप्रकरणार्थमुपसंहरति **तदेवं लिङ्गसंख्येति**

**"नवीनानां नानामननविशदाना मयमहो**
**सुयुक्तीनां पुञ्जैरिह विरचितः कोपि जगति।**
**महानर्क स्तर्कप्रथिततमसंजाततमसां**
**सुधाकृ न्मीमांसामतकुमुदपूरस्य जयतु"।।1**

**यद्वद् घनानां पटलो विशालो**
**विलोक्यतेल्पे किलदर्पणेपि।**
**तद्वन्मदीयेपि निबन्धनेस्मि**
**न्नुद्वीक्ष्यतां भाट्टरहस्यसारः।।2**

## इति श्रीखण्डदेवप्रणीतं भाट्टरहस्यं समाप्तम्

एवं प्रतिज्ञातं भट्टतन्त्ररहस्यं विशदीकृत्य ग्रन्थं समापयति **नवीनानामिति नानामननेति** अनेन युक्तीना दार्ढ्यं स्पष्टयति। **अहो इति** नूतनयुक्तिदर्शनात्संजातमानन्दातिरेक मनेन सूचयति, वैयाकरणसिद्धान्तकौमुदी लघुमञ्जूषयो ग्रन्थयो रारम्भ एव 'इय' मिति एषा इति च प्रत्यक्ष विषयकसर्वनाम प्रयुक्तम्, तत्समर्थनाय बुद्धिस्थत्व पर्यन्त मनुधावितं व्याख्यातृभिः, मम तु तादृशी समवस्था नेति सूचयन् ग्रन्थान्ते इद शब्दं प्रयुङ्क्ते **अयमिति** कोपीत्यनेन स्वग्रन्थार्थस्य निरतिशयं महिमानं व्यनक्ति। इह जगतीति विषयसप्तम्यन्तम्, एतल्लोकविषये — तदर्थं लोकोपकारायेति यावत्। कोपीत्यनेना भिव्यञ्जितं महिमान विशदयति **महानिति** प्रलयकालीन इति यावत्। सूर्यसादृश्यं केनधर्मेणेत्यत आह — **तर्कप्रथितेति** प्रथितमाश्च ते तर्काश्च तर्कप्रथिततमाः। "राजदन्तादिषु परम्" 2-2-31 इति राजदन्तादित्वात् प्रथिततमशब्दस्य परनिपातः लोकप्रसिद्धि मभिवृद्धिं च गता ये तर्काः = काणादादयः, तैः संजाताना मन्धकाराणामित्यर्थः। ते च तर्का स्तप्तदर्थनिरूपणावसरे मूले प्रदर्शिता एव। नहि केवलं मतान्तरनिराकरणमेव मद्ग्रन्थनिर्मितेः प्रयोजनम्, किंतु तन्निराकरणपूर्वकं स्वीयमीमांसाशास्त्रीय-सिद्धान्तोद्घाटनम् अन्यथा "परमतमप्रतिषिद्धमनुमतं भवती" तिन्यायापात इत्याशयेनाह — **सुधाकृदिति** मीमांसामतरूपस्य कुमुदसमुदायस्य, सुधाकृत् = चन्द इत्यर्थः। एवंच परमतखण्डनपूर्वकं स्वमतस्थापन मस्या ग्रन्थस्य परमंप्रयोजनमिति भावः। जयतु = सर्वोत्कर्षेण वर्तताम्। अनेन ग्रन्थान्ते मङ्गल माचरित मिति बोध्यम्।।

नन्वल्पेना नेन ग्रन्थेन **विस्तीर्णभट्टतन्त्रस्य** रहस्यं कथं सुज्ञातं स्यादित्याशङ्का मपनुदति **यद्वदिति** स्पष्ट

श्लोकार्थः "भाट्टरहस्य" सार इति पदप्रयोगेणास्य ग्रन्थस्य "भाट्टरहस्य" मित्येवनामेति सुव्यक्तं सचेतनसाम्।।

**इति श्रीमद्गुरुचरणकमलसेवासञ्जात शेमुषीवैशद्येन श्रीमद्विजय**
**नगर राजकीयमहाराजसंस्कृतकालाशाला निवृत्तव्याकरण**
**प्रधानोपाध्यायेन श्रीसोमदेवीसर्वेश्वरतनूजन्मना सोम**
**देवीविभूषितवामभागेन पदवाक्यप्रमाणज्ञेन**
**पेरि सूर्यनारायणशास्त्रिणा विरचिता**
**"खण्डदेवभावप्रकाशा" ख्या**
**भाट्टरहस्यव्याख्या**
**सम्पूर्तिमगमत्।**

सर्वेश्वरार्पणमस्तु
श्रीशृङ्गेरीशारदाम्बासमर्पणमस्तु
इति शम्